कृत्वोऽभ्यासस्य, अन्तर्यामित्वस्याप्राप्तत्वादपूर्वत्वस्य, 'स ब्रह्मवित्' इत्यादिरूपफलस्य, 'तच्चेत् त्वं याज्ञवल्क्य सूत्रमविद्वान् तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यति' इति निन्दारूपार्थवादस्य, 'यस्य पृथिवी शरीरं यं पृथिवी न वेद' इत्याद्युपपत्तेश्च सत्वात् । नचैवम् अन्तर्यामित्वसिद्धावपि न भेदस्य सिद्धिरिति वाच्यम् । नियम्य-नियामकभावस्य विना भेदमनुपपत्तेः । अत एवेदं ब्राह्मणवाक्यं भेदपरमिति सूत्रकृतैव उक्तं 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इति(१)।। अस्य भेदपरत्वं परेणापि स्थापितम् । (भाषितमिति-पा ) ।।

।। इति अन्तर्यामिब्राह्मणात् भेदसाधनम् ।।

## ।। अथ भेदश्रुतीनां प्रक्षिप्तत्वशङ्कापरिहारः ।।

नच 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्' 'सत्य आत्मा, सत्यो जीवः, सत्यं भिदा' इत्यनयोर्वाक्ययोः पठ्यमानवेदेष्वदर्शनेन 'श्रुतित्वे एव मानाभाव' इति वाच्यम् । तथासति 'अम्बुवदग्रहणात्' (ब्र-सू-३-२-१९) इति सूत्रविषयवाक्यत्वेन परभाष्योदाहृतस्य –

**'यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्नो बहुधैको**(वो)**ऽनुगच्छन् ।**
**उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा'**

इत्यस्यापि तथात्वेनाश्रुतित्वापत्तेः । 'विधिर्वा स्यादपूर्वत्वाद्वेदिमात्रं ह्यनर्थकम्' (जै-सू-३-४-१२) इति जैमिनिसूत्रभाष्ये विषयवाक्यत्वेन शबरस्वाम्युदाहृतस्य 'औदुम्बरो यूपो भवति' इत्यादेः 'ऊर्जोऽवरुध्यै' इत्यन्तस्यापि वाक्यस्य प्रसिद्धश्रुतिष्वदर्शनेन अश्रुतित्वा-पाताच्च(पत्तेश्च-पा) । 'छन्दोऽभिधानानान्नेति चेत्' (ब्र-सू-१-१-२५) इति सूत्रभाष्ये विषय-वाक्यत्वेन रामानुजाचार्यैः प्रसिद्धशाखास्वदृष्टस्यापि 'इन्द्र शचीपतिर्बलेन पीडितो दुश्च्यवनो वृषा समिक्षु(सु) सा सद्भिः' इति वाक्यस्य चतुष्पाद्गायत्र्यात्मकश्रुतित्वेनोपात्तत्वाच्च । 'अपि वा यश्चण्डालः शिव इति वाचम् वदेत् तेन सह संवदेत् तेन संवसेत् तेन सह भुञ्जीत' इत्यादिनीलकण्ठभाष्योदाहृतवाक्यस्यपि तथात्वेन अनुपादानप्रसङ्गाच्च, इत्यलं

---

(१) 'इति हि सूत्रम्' इति ताळपत्रस्थ पाठः ।।

प्रयोजकातिशयप्रसङ्गतदसिद्ध्यापादकदूषणेन । नचैवं छान्दोग्ये 'तत्त्वमसि' इत्यादिश्रुतेरुप-क्रमादिषड्विधतापर्त्यलिङ्गवत्वेन निश्चयात्, ततो जीवेश्वराभेदसिद्धिः किं न स्यादिति वाच्यम् । तस्याः सद्वितीयब्रह्मपरत्वस्यैव उपक्रमादिना सिद्ध्या जीवेश्वराभेदपरत्वासिद्धेः । तच्च तथा प्रतिपादयिष्यामः ।।

।। इति भेदश्रुतीनां प्रक्षिप्तत्वशङ्कापरिहारः ।।

## ।।अथ भेदश्रुतीनाम् अननुवादित्वसमर्थनम् ।।

ननु उदाहृतश्रुतिस्मृत्यादीनां प्रत्यक्षादिप्राप्तभेदानुवादित्वमेवेति न भेदे तात्पर्यं सम्भवतीति चेन्न । एवमनुवादित्वेन अपूर्वतारूपतात्पर्यलिङ्गविरहेऽपि लिङ्गान्तरसत्वेन तात्पर्यसम्भवात् । अपूर्वतावदुपक्रमोपसंहाराभ्यां सह फलादीनामपि तल्लिङ्गत्वात् । किञ्च ज्ञातज्ञापकत्वमात्रेण नानुवादित्वम् । अतिप्रसङ्गात् । किन्तु ज्ञातमात्रज्ञापकत्वेन । नचोदा-हृत'द्वासुपर्णा'दिश्रुतयो ज्ञातमात्रं बोधयन्ति ।।

ननु (१)अन्योन्याभावापरनामकस्य ईश्वरप्रतियोगिकभेदस्य तत्तज्जीवरूपाधिकरणभेदेन भिन्नत्वे मानाभावात्, तदावेदक'द्वासुपर्णादि'श्रुतीनां ज्ञातमात्रज्ञापकत्वं स्फुटमिति चेन्न । पृथिवीतरभिन्नत्वसाधकानुमाने घटादावितरभेदस्य प्रत्यक्षसिद्धत्वेऽपि पृथिवीत्वावच्छेदेन तदसिद्ध्या तत्साधकतयेव 'द्वासुपर्णादि'श्रुतिष्वपि देवदत्तरूपजीवस्य स्वात्मनीश्वर प्रतियोगिकस्य 'नाहमीश्वरः' इत्यादिप्रत्यक्षसिद्धत्वेऽपि जीवत्वावच्छेदेनासिद्धतद्बोधकतया नानुवादित्वोपपत्तेः । अत एव 'मा हिंस्यात् सर्वा भूतानि' इत्यादावेकदेशे विधेयसिद्धावपि नानुवादित्वम् । अन्यथा यज्ञदत्तरूपे जीवे तदसिद्धब्रह्माभेदस्य 'अहं सुख्यस्मि' इति प्रत्यक्षसिद्धत्वेन तदावेदकस्य 'तत्त्वमसि' इत्यादेरपि अनुवादकत्वापत्तेः । तत्र जीवत्वा-वच्छेदेन तदभेदस्य तादृशप्रत्यक्षसिद्धत्वाभावेन 'तत्त्वमसि' इत्यादेरननुवादित्वे (इत्यादेर-ननुवादकत्वे-पा) 'द्वासुपर्णादि'वाक्यस्यापि तथैवाननुवादकत्वस्य सुवचत्वात् । नच जीवत्वा-द्यवच्छेदकत्वस्य शब्दवृत्त्यविषयत्वेन न शब्दबोध्यत्वं युक्तमिति वाच्यम् । प्रमाणमात्रस्य बाधकं विना स्वविषयवृत्तिधर्मावच्छेदकत्वविषयकत्वस्वाभाव्येन शाब्दबोधे पदार्थानां मिथः

(१) ननु अन्योन्यन्याभावऽपरनामक इति ताळपत्रस्थपाठः ।।

संसर्गवत् पदप्रवृत्तिनिमित्तभूतधर्माणामपि अन्वयितावच्छेदकत्वस्य भानावश्यम्भावात् । 'स्वर्गकामो यजेत' इत्यादिवाक्यजन्यशाब्दबोधेऽपि व्यभिचाररूपबाधकानुपस्थितिदशायां स्वर्गत्वयागत्वगत कार्यतावच्छेदकत्व-कारणतावच्छेदकत्वयोर्विषयत्वोपगमात् ॥

॥ इति भेदश्रुतीनाम् अननुवादित्वसमर्थनम् ॥

## ॥ अथ पूर्वतन्त्रेण भेदसमर्थनम् ॥

किञ्च येन पुंसा विप्रतिपत्त्यादिना प्रत्यक्षेण जीवेश्वराभेदो न निर्णीतः तं प्रति तद्भेदावेदकश्रुतीनाम् अस्त्येवार्थवत्त्वम् । एकशाखास्थविधिवाक्यैकार्थ शाखान्तरस्थविधि-वाक्यस्य च यथा पुरुषान्तरं प्रत्यर्थवत्वं तद्वत् ॥

इदं च भेदलक्षणे चतुर्थपादे 'नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्राय-श्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात्' (जै-सू-२-४-८) इत्यधिकरणे पुनः श्रुति-लक्षणादभ्यासात् दूरस्थत्वं लक्षणात्प्रकरणाच्च कर्मभिद्यत इति प्राप्ते, पुनःश्रुतेः प्रकरणान्तराच्च कर्मविधेयमित्येवसिद्ध्यति नतु भेदः, विधिवशात् भेदसिद्धिः । अन्यत्र विहितस्य विधानाऽयोगात् । इहतु शाखाभेदानामध्येतृभेदनियतत्वेन विहितस्यापि पुरुषान्तरं प्रति विधिः सम्भवतीति न ताभ्यां भिद्यत इति निर्णीतम् । नचैवमनुवादकत्वं क्वापि लब्धपदं न स्यादिति शङ्क्यम् इत्युक्तम् । सर्वाविवादस्थले एव तस्य लब्धपदत्वात् । अत एव परैरपि बृदहारण्यकभाष्ये देहान्यात्मबोधिकायाः 'अस्तीत्येवोपलब्धव्यः' इति श्रुतेः प्रत्यक्षप्राप्ता-नुवादकत्वमाशङ्क्य वादि-विप्रतिपत्ति-दर्शनादित्यादिना ग्रन्थेन[१] तत् परिहृतम्[२]। अपि च श्रुतेर्वर्तमानमात्रग्राहि-प्रत्यक्षाप्राप्तकालत्रयाबाध्य भेदप्रापकत्वेन नानुवादित्वम् । अन्यथा तादृशप्रत्यक्षप्राप्तभेदस्वरूपमात्रप्रापकत्वाङ्गीकारे भेदश्रुतेः वैयर्थ्यमेव स्यात् । अत एव 'द्वयोः प्रणयन्ति' इति वाक्यस्य अवैयर्थ्याय चातुर्मास्यमध्ये पर्वणोः चोदकाप्राप्तप्रणयनान्तर-प्रापकत्वं स्वीकृतं पूर्वतन्त्रे ॥

---

(१) 'गन्थारम्भे मङ्गलाचरणानन्तरं येऽयं' इत्यादिना ग्रन्थेनपरिहृतम् ॥

(२) 'अत एव इत्यारभ्य तत्परिहृतम्' इत्यन्तं वाक्यं न्यायामृते१-परिच्छेदे-२०-भङ्गवाक्यमनुकरोति ॥

इदं च सप्तमे तृतीयपादे 'सौमिकं हि(तु) प्रणयनमवाच्यं हीतरत्' (जै-सू-७-३-८) इत्यधिकरणे चातुर्मास्येषु 'द्वयोः प्रणयन्ति' इति वैश्वदेव-वरुणप्रघास-साकमेधीय-सुनासीर्याख्यचतुर्णां चातुर्मास्यपर्वणां मध्ये द्वयोः दर्शपर्वणोरग्निप्रणयनमुच्यमानं किम्? पौर्णमासिकधर्मिकमुत सौमिकधर्मिकम् अनेकाङ्गकलापयुक्तम्, उतोभय विलक्षणम् अपूर्वमिति संशये, चातुर्मास्यानां दर्शपूर्णमासप्रकृतितया ज्ञापक(चोदक-पा)प्राप्तत्वेन सन्निधानात् दर्शपौर्णमासिकमित्येकपक्षः, चोदकप्राप्तस्याविधेयत्वात् गुणविध्याद्यभावेन अनुवादानर्थक्याद-र्थवत्त्वात् सौमिकमिति द्वितीयपक्षः, इति पक्षद्वयं प्रदर्श्य, 'प्रणयन्ति' इत्यस्य प्रणयन-सामान्यवाचिनः 'सौमिक'प्रणयनविशेषपरत्वे लक्षणाप्रसङ्गात्, चातुर्मास्येष्वेव किञ्चित्प्रण-यनमस्पृष्टं सौमिकत्वाद्याकारं विधीयते । तच्च तदुभयविलक्षणमपूर्वं पर्यवस्यतीति सिद्धा-न्तितम् । अन्यथा भेदश्रुतीनामेवमेवानुवादकत्वे आत्मन आनन्दत्वश्रुतिः सत्यत्वादि-श्रुतिश्च 'एतावन्तं कालं सुखं सुप्तोऽस्मि' इति प्रत्यक्षप्राप्ततात्विक-आनन्दत्व-सत्यत्वा-द्यनुवादिनी स्यात् । नचैवमनुवादकत्वमलब्धावकाशमेव स्यादिति शङ्क्यम् । अप्राप्त-विषयान्तराभावे तस्य सावकाशत्वात् ॥

किञ्च भेदश्रुतेः प्रत्यक्षेऽनाश्वासनिरासमुखेन दार्ढ्यार्थत्वात् नानुवादकत्वम् । अनु-वादकत्वन्तु यत्र प्रागेव दार्ढ्यं सिद्धं तत्रैव । तदुक्तम् 'बहुप्रमाणसंवादश्च दार्ढ्यहेतुरेव'(१) इति । अन्यथा निगमनस्य, 'तत्त्वमसि तत्त्वमसि' इति नवकृत्वोभ्यासस्य, पिपासितं प्रत्येकजलविषयकशब्द-लिङ्ग-प्रत्यक्षरूपप्रमाणसम्प्लवस्य, त्वत्पक्षे प्रत्यक्षसिद्धभावरूपाज्ञाने 'तम आसीत्' इत्यादिश्रुतिवाक्यस्य, स्वरूपमात्रप्रश्नोत्तररूपाखण्डार्थनिष्ठवेदान्तवाक्यस्य, श्रुतेरैक्ये तात्पर्ये उपक्रमादिषड्विधतात्पर्यलिङ्गस्यच दार्ढ्यार्थत्वादिप्रयोजनरहितस्य (दार्ढ्यार्थ-त्वादन्यप्रयोजन-पा) अनुवादकत्वापत्तेः ॥(२)

किञ्च श्रुतिःप्रत्यक्षप्राप्तस्य भेदसत्वस्य अभेदश्रुत्या(सत्वस्याद्वैतश्रुत्या- पा)ऽपाततोऽपोदितस्य प्रतिप्रसवार्थेति नानुवादिनी अस्तु । यथा 'षड्विंशतिरस्य वंक्रय' इति मन्त्रस्य अश्वमेधे

(१) विष्णुतत्त्वनिर्णये प्रथमपरिच्छेदे उक्तमित्यर्थः ॥

(२) अनुवादकत्वं तु इत्यारभ्य दार्ढ्यार्थत्वाच्च इत्यन्तं वाक्यं न्यायामृते -१- परिच्छेदे- २०- भङ्गवाक्य-मनुकरोति ॥

चोदकप्राप्तस्य 'चतुःत्रिंशद् वाजिनो देवबन्धो' इति वैशेषिकमन्त्रेणापोदितस्य प्रतिप्रसवार्थं 'षड्विंशतिरित्येव ब्रूयात्' इतिवचनं तद्वत् ।।

एतच्च पूर्वतन्त्रे नवमे चतुर्थपादे 'तत्प्रतिषिध्य प्रकृतिर्नियुज्यत सा चतुस्त्रिंशद्वाच्य-त्वात्'(जै.सू. ९.४.१८) इत्यधिकरणे निर्णीतम् । तत्र ह्यग्नीषोमीये पशौ अध्रिगुप्रैषे श्रुतस्य 'षड् विंशतिरस्य वंक्रय' इति मन्त्रस्य अश्वमेधीयाश्वपशुके प्राजापत्ययागे चोदकप्राप्तस्य तत्रत्येन 'चतुस्त्रिंशद्वाजिनो देवबन्धो वंक्रीरश्वरस्य स्वधितिः समा' इति वैशेषिक-मन्त्रेणापोदितस्य सर्वथैव निवृत्तौ प्रसक्तायां तत्रैवेदं समाम्नातं 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्'इति । तत्र किमश्वस्यापठितमेव वैशेषिकमध्रिगुवचनं कर्तव्यमिति प्रकृताध्रिगुवचनस्य सर्वथैव निवृत्तिः उत न निवृत्तिः इति विशये 'न चतुस्त्रिंशदिति' वचनस्य 'चतुस्त्रिंशद्वाजिन' इत्यस्यामृचि 'चतुस्त्रिंशत्'पदं प्रतिबध्य(प्रतिषिध्य) 'षड्-विंशति'पदविधानार्थत्वोपपत्तेः । समस्तायां ऋचःप्रतिबोधकत्वेन(प्रतिषेधकत्वेन-पा) प्रकरण-पठितायाः तस्याः बाधः अभ्युपगन्तुम् अयुक्त इति प्रकृताध्रिगुवचनस्य निवृत्तिरेवेति पूर्वपक्षयित्वा तस्याम् ऋचि चतुस्त्रिंशत्पदं प्रतिषेधे तत्स्थाने षड्विंशति पदप्राप्तौ प्रमाणाभावेन 'षड्विंशतिरित्येव ब्रूयात्' इति तदनुवादासम्भवात्, तस्याऽपि विधौ वाक्य-भेदापत्तेः एकवाक्यत्वनिर्वाहाय 'न चतुस्त्रिंशत्' इति वैशेषिकीम् ऋचं प्रतिषिध्य-'षड्विंशतिरिति' निष्परिपन्थिचोदकप्राप्तप्राकृताध्रिगुवचनम् अनूद्यत इत्यभ्युपेयत्वात् न तस्य निवृत्तिरिति प्रतिपादनात् ।।

व्याकरणेऽपि 'मृडमृदगुधकुशक्लिशवदवसःक्त्वा'(पा-सू-१-२-७(३३२३) इत्याद्याः प्रति-प्रसवार्था विधयो दृश्यन्ते । तत्र हि । सेडनिट्साधारण'क्त्वा'प्रत्ययस्यौपदेशिकं यत् कित्त्वं तस्य सेट्मात्रे 'नक्त्वा सेट्' (पा-सू-१-२-१८(३३२२) इति निषिद्धस्य तद्विशेषभूते 'मृडमृद'-इत्यादिसूत्रोपात्तधातुभ्य उत्पन्ने क्त्वाप्रत्यये 'मृडमृदगुध' इत्यादिसूत्रेण पुनः स्थापनं क्रियते । नहि प्रतिप्रसवार्थानि एतानि सूत्राणि अनुवादकानि ।।

किञ्च प्रत्यक्षमप्रमाणमिति स्वीकुर्वता परेण कथं भेदश्रुतिरनुवादिनीत्युच्यते? तस्याः सदर्थत्वाय अननुवादित्वाय च प्रत्यक्षप्राप्तत्रिकालाबाध्यभेदविषयत्वेनैव स्वीकारार्हत्वात् ।

श्रुतेः नित्यनिर्दोषत्वेन तत्प्रामाण्यस्वतस्त्वस्य अत्यागार्हत्वात् । नहि प्रमाणाप्रमाणयोः एकविषयत्वमुपपद्यते । नच 'यदुक्तं तदयोगात्' इत्याद्यनुवादकत्वनिश्चायकलिङ्गाभावे तन्निश्चयः सम्भवति । नहि भेदश्रुतिषु तल्लिङ्गमेतादृशं पश्यामः ॥

किञ्च सम्भावितदोषतया दुर्बलं भेदप्रत्यक्षं नित्यनिर्दोषश्रुत्यर्थभूतं भेदाभावं यथा नापहरति, तथा तथाविधश्रुत्यर्थभूतं भेदमपि नोपहरेत्, इति कथं तत्प्राप्तार्थमादाय श्रुतेरनुवादिता । नचैवम् 'अग्निर्हिमस्य भेषजम्'(तै-सं-७-४-१८) इत्यादिरप्यनुवादो न स्यादिति वाच्यम् । अग्न्यौष्ण्यप्रत्यक्षस्य प्रामाण्यानिश्चये अननुवादित्वस्येष्टत्वात् । अन्यथा ब्रह्मगतसत्त्वस्य लोकतोभ्रमाधिष्ठानत्वादिलिङ्गेन च, विश्वमिथ्यात्वस्यापि दृश्यत्वाद्यनुमानेन, अवेदमूलकप्रवाहानादिविज्ञानवादादिना(वादादिना च प्राप्तेः-पा) प्राप्तत्वात्, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति च श्रुतिः 'नेह नाना'इत्यादि श्रुतिश्च अनुवादिनी स्यात् ॥

उक्ता हि प्रमाणलक्षणे मन्त्राधिकरणे 'तदर्थशास्त्रात्'(जै-सू १.२.३१) इत्यत्र मन्त्रलिङ्गप्राप्तबोधकस्यापि तदर्थशास्त्रस्यानुवादकता । तत्र हि 'उरुप्रथस्वोरु ते यज्ञपतिः प्रथताम्' इत्यादयो मन्त्राः किमुच्चारणमात्रेण दर्शपूर्णमासादिकर्मसु उपकुर्वन्ति । उत पुरोडाशप्रथनादि तत्कर्मसमवेतार्थाभिधानद्वारेण इति संशय्य अनुच्चारितानामनभिधायकत्वात् प्राथम्यावश्यकत्वाभ्याम् उच्चारणस्यैव द्वारत्वं युक्तमिति तन्मात्रेणोपकुर्वन्ति इति पूर्वपक्षयित्वा कर्मप्रकरणेषु मन्त्राणाम् उच्चारणस्य अविधानात् कर्मविध्यनपेक्षितत्वेन तैरपि अनाक्षेपात् पुंव्यापारस्य तस्य मन्त्रगतव्यापारत्वाभावेन मन्त्राङ्गत्वनिर्वाहकतया तेनाप्यनाक्षेपाच्च मन्त्रोच्चारण कर्तव्यतायामेव न प्रमाणमिति न मन्त्रस्य द्वारत्वं युक्तम् । किन्तु अनुष्ठानाय कर्मविधेरपेक्षिततया मन्त्रगतव्यापारत्वेन मन्त्राङ्गत्वनिर्वाहकतया च अभिधानविध्याक्षेपसम्भवात् अभिधानस्य द्वारत्वं युक्तम् । तादर्थ्येन तु पश्चादुच्चारणस्यापि कर्तव्यतासिद्धिः । तस्मात् अभिधानेन मन्त्रा उपकुर्वन्तीति सिद्धान्तितमिति । अन्यथा प्रत्यक्षप्राप्तार्थत्वेनैवानुवादत्वे परस्य ईक्षत्यधिकरणे 'सदेव' इत्यादिवाक्यस्य प्रधानपरत्वे साङ्ख्यस्मृतिप्राप्तत्वादनुवादित्वोक्तिः असङ्गता स्यात् ॥

किञ्च भेदश्रुतीनां भेदप्रत्यक्षानपेक्षत्वात् न सापेक्षानुवादित्वम् । निरपेक्षानुवादित्वं तु धारावाहिकज्ञानइव नाप्रामाण्यहेतुः । उक्तं हि नयविवेके 'सापेक्षानुवादे हि न प्रमितिः । नतु दैवादनुवादे । धारावाहिकज्ञानवत्' इति । उक्तं च वाचस्पत्ये 'यत्र तु प्रमाणान्तर-संवादः तत्र प्रमाणान्तरादिना अर्थवादादपि सोऽर्थः प्रसिद्ध्यति । द्वयोः परस्परानपेक्षयोः प्रत्यानुक्षानुमानयोरिव एकत्रार्थे प्रवृत्तेः । प्रमात्रपेक्षया त्वननुवादत्वं (त्वनुवादत्वम्-पा) । प्रमाता हि अव्युत्पन्नः प्रथमं यथा प्रत्यक्षादिभ्यो अर्थमवगच्छति न तथा आम्नायते । तत्र व्युत्पत्त्यपेक्षत्वात्' इति ॥

किञ्च वादिविप्रतिपत्तिनिरासार्थत्वात् न भेदश्रुतीनां निष्प्रयोजनानुवादत्वं सप्रयो-जनानुवादत्वं तु विद्वद्वाक्यस्य[१] इव स्वार्थपरत्वाविरोधि । अत एव मीमांसकैः विद्वद्वाक्यस्य समुदायद्वित्वापादनरूपप्रयोजनवत्वेन अनुवाद्यस्वार्थपरत्वात् वाक्यैकवाक्यतोक्ता । स्वार्थ-परत्वाभावे हि अर्थवादवत् पदैकवाक्यतैवोच्येत [२] ॥

इदं च भेदलक्षणे द्वितीयपादे विचारितम् । तत्र 'प्रकरणं पौर्णमास्यां तु रूपावचनात्' (जै-सू-२-२-३) इत्यत्राधिकरणे 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति (तै-सं-२-६-३) तावब्रूताम् अग्नीषोमावाज्यस्यैव न उपांशुपौर्णमास्यां यजेरन्' इति अग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत् । ऐन्द्रं दध्यमावास्यायाम् । ऐन्द्रं पयोऽमा-वास्यायाम्' इति पौर्णमास्यामावास्यकालयुक्तकर्मविधानसन्निधाविदमाम्नातं 'य एवं विद्वान् पौर्णमास्यां यजते, य एवं विद्वानमावास्यां यजते' इति । तत्र किमिमौ यजती प्रकृता-नामाग्नेयादीनां पौर्णमास्यमावास्यकालसम्बन्धलब्धतच्छब्दानामनुवादकौ उत एक(उतैवं-पा)-संज्ञकयोरपूर्वयोः कर्मणोर्विधायकौ इति संशय्य, तत्र विधी पुनः श्रुतिरूपेणाभ्यासेना-पूर्वकर्मविधायकौ, अनुवादमात्रस्यानर्थक्यादिति पूर्वपक्षयित्वा कर्मान्तरविधिपक्षे तयोः 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' इति साधारण्येन विहितस्य ध्रौवाज्यस्य द्रव्यस्य लाभेऽपि देवतायाः कुतोऽप्यलाभात् कर्मान्तरविधायकत्वानुपपत्तेः अनुवादचिह्नयत्

---

(१) जैमिनीसूत्रे 'प्रकरणन्तु पौर्णमास्यां रूपावचनात्' २-२-३ इत्यत्रोक्त न्यायेनेत्यर्थः ॥

(२) 'किञ्च इत्यारभ्य पदैकवाक्यतैवोच्येत' इत्यन्तं वाक्यं न्यायामृते-१-परिच्छेदे-२०-भङ्गवाक्यमनुकरोति॥

पदसमभिव्याहारभावात् (अनुवादचिह्नकर्तृसामानाधिकरणयद्वृत्तसमभिव्याहाराच्च-पा) अनुवादावेव । नचानुवादवैयर्थ्यम् । तस्य 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्याग्नेयादीनां षण्णां फलसम्बन्धबोधकवाक्ये 'भ्या'मिति द्विवचनोपपत्तये अमावास्यानुष्ठेयत्रिकस्य पौर्णमास्यानुष्ठेयत्रिकस्यच समुदायद्वित्वसम्पादनप्रयोजकत्वात् । अन्यथा तेषां बहुत्वेन बहुवचनापत्तेः । नच विद्वद्वाक्यद्वयेन समुदायद्वित्वसम्पादनेऽपि फलवाक्यगतेन दर्शशब्देन पौर्णमासशब्देनच त्रिकस्य त्रिकस्य पृथगुपादानात् समुदायद्वित्वसिध्या द्विवचनोपपत्तिरिति वाच्यम् । द्विवचनान्तस्य प्रागेव नाम्नः सिद्धार्थत्वाभावे(सिद्धयर्थत्वाभावे-पा) राजसूयनाम्न इव यजि परतन्त्रतया यजेश्च सङ्कोचे कारणाभावेन आग्नेयादिष्वेव सान्निध्यविशेषात् प्रयाजादिष्वपि प्रवृत्त्या प्रयाजादीनामपि तेन फलसम्बन्धो बोध्यत इति सर्वेषां समप्राधान्यम् । नामधेयमपि तदनुसारेण द्विवचन प्रतिरूपकं सर्वेषां नामेत्यापत्तेः । तस्मात् विद्वद्वाक्येनाग्नेयादीनां समुदायद्वित्वसम्पादनेन फलवाक्ये द्विवचनान्तं नाम प्रसिद्धार्थमुपपाद्य प्रसिद्धार्थनामावच्छेदेन यजिमपि तावत्स्वेव सङ्कोच्य तेषामेव फलसम्बन्धबोधनेन प्राधान्यं व्यवस्थाप्यत इति नानुवादवैयर्थ्यमिति सिद्धान्तकरणदर्शनादिति । किञ्च अनुवादित्वेऽपि नैष्फल्यमात्रमायाति नत्वप्रामाण्यम् । याथार्थ्यमेव हि प्रामाण्यं नतु अनधिगतार्थगन्तृत्वमित्यन्यत्र विस्तरः ॥

॥ इति पूर्वतन्त्रेण भेदसमर्थनम् ॥

## ॥ अथ भेदश्रुतीनामननुवादित्वसमर्थनम् ॥

किञ्च अयमनुवादो न तावद्वायुक्षेपिष्ठादिवाक्यवत् स्तुत्यर्थः । नापि 'दध्ना जुहोति' इत्यत्र जुहोतिरिव अन्यविधानार्थः । विधानाय प्रमाणेन अनूदितस्य तात्त्विकत्वनियमात् । नहि 'व्रीहीन् प्रोक्षति'इत्यादावारोपित व्रीह्यादीनां धीः । अनुवाद्यस्य असत्वेचाश्रयाऽसिद्धौ धर्मिधर्मसंसर्गः अनुमितिवेद्य इव अनुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितः स्यात्(१)। अस्तिच 'अनश्नन्यो अभिचाकशीति' इत्यादौ 'सत्यं भिदा- सत्यं भिदा- सत्यं भिदा'

---

(१) किञ्च अयमनुवादो इत्यारभ्य बाधितः स्यात् इत्यन्तं वाक्यं न्यायामृत -१-परिच्छेदे-२०-भङ्ग-वाक्यमनुकरोति ॥

'मैवारुवण्यो मैवारुवण्यो मैवारुवण्यो' इत्यादौ च अनुवाद्यभिन्नात्मभिदाविधेयानशनत्व-विशिष्टाभिचकासन, सत्यत्वसंसर्गरूपवाक्यार्थः । नच 'सत्य आत्मा' इत्यादेः श्रुतित्वे मानाभावः । निरस्तत्वात् (१)। नापि 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि निषेधार्थः । तत्रैव 'अतोऽन्यः' इत्यनुवादांशस्य सत्वात् । नहि 'न सुरां पिबेत्' इति निषेधाय 'सुरां पिबेत्' इति वाक्यान्तरमनुवादरूपमपेक्षितम् । नच 'तत्र'इत्यादि निषेधार्थानुवादलिङ्गाभावे तदनुवादत्वमपि अभ्युपगमार्हम् ॥

'तत्सत्यम्' इत्याद्यपि 'असद्वा इदमग्र आसीत्''इदं वा अग्रे नैव किञ्चनासीत्' 'नासदासीत्' 'नेति नेति' 'अलक्षणम्' इत्यादिनिषेधाय ब्रह्मसत्वानुवादकं स्यात् । एवमानन्दश्रुतिरपि 'अदुःखम् असुखं समम्' इत्यादिनिषेधाय 'एतावन्तं कालं सुख-महमस्वाप्सम्' इत्यादिपरामर्शसिद्धप्रत्यक्षप्राप्तानन्दानुवादिनी स्यादिति उक्तमेव । किञ्च एवं 'नेह नाना' इति श्रुतिरेव 'विश्वं सत्यम्' इत्यादिप्रतिपन्नविश्वाबाध्यत्वरूपबाधनिषेधाय च विज्ञानवादादिप्राप्तविश्वबाधानुवादिनी किं न स्यात्?(२)॥

नच 'तत् सत्यम्' इत्यादिवाक्यस्य 'तस्माद् बर्हिषि रजतं न देयम्'(तै-सं-१-५-१-२) इत्यादिवाक्यवत् नञ्समभिव्याहृतत्वेन निषेधकत्वं युक्तम् । स्वप्रतिपाद्यस्य कथञ्चिद-भावरूपत्वमादाय स्वस्यनिषेधकत्वे सर्वस्यापि स्वाभावाभावरूपतया तद्विधिमात्रस्यापि निषेधकत्वापत्त्या 'अयं विधिः,अयं निषेधः'इति सर्वसिद्धव्यवस्थानुपपत्तेरिति वाच्यम् । यत्पदप्रयोगे सति नियमेन भावत्वं प्रकारतयाभासते तत्पदसमभिव्याहृतवाक्यस्यैव निषेध-त्वोपगमेन उक्तातिप्रसङ्गानवकाशात् । अन्यथा 'केवलो निर्गुणश्च' इत्यादेर्नञ्समभि-व्याहृतत्वेनानिषेधकत्वप्रसङ्गात् । नहि केवलशब्दो वा 'निर्'शब्दो वा नञ् । एवं च 'तत्सत्यम्'इत्यादिवाक्यस्य नियमेन बाध्यत्वाभावप्रकारकप्रतीतिजनकसत्यपदसमभि-व्याहृतत्वेन निषेधकत्वं दुर्वारमिति किमनुपपन्नम् ॥

---

(१) नच भिन्नो ....इत्यादिना 'अथ भेदश्रुतीनां प्रक्षिप्तत्वशङ्का परिहारः' इति भागे निरस्तम् ॥

(२) 'किञ्चनासीत् इत्यारभ्य किं न स्यात्' इत्यन्तं वाक्यं न्यायामृते-१-परिच्छेदे-२०-भङ्ग-वाक्यमनु-करोति ॥

किञ्च स्वर्गिनारकादिद्रष्ट्राद्यन्तरस्य न प्रत्यक्षादिना प्राप्तिः । येनोदाहृतभेदवाक्यानि तत्प्राप्तभेदानुवादीनि स्युः । 'सदा पश्यन्ति सूरयः' इत्यादिशब्दप्राप्तस्य 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिशब्देन निषेधायानुवादे च एतच्छाखास्थ अग्नीषोमीयवाक्यस्य 'न हिंस्यात्' इति निषेधाय शाखान्तरस्थाग्नीषोमीयहिंसानुवादित्वं स्यात् ॥

अपि च यत्किञ्चिद्भेदस्य प्रत्यक्षादिप्राप्ततया भेदश्रुतीनामनुवादित्वे यत्किञ्चिदभेदस्यापि प्रत्यक्षादिप्राप्ततया तत्त्वमस्याद्यभेदश्रुतीनामपि अनुवादिता किन्न स्यात्? केनापि न शोधिते 'तत्त्वम्'पदार्थयोरभेदः प्राप्तः इतिचेत्तर्हि केनापि तयोर्भेदः न प्राप्तः इति कथं भेदश्रुतीनाम् अनुवादिता इति न जानीमः ॥

अपि च उपनिषन्मात्रगम्यस्य ईश्वरस्य शास्त्रं विना प्राप्त्यभावेन तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्य कथं शास्त्रनिरपेक्षप्रत्यक्षादिना प्राप्तिः । नहि शास्त्रसापेक्षप्राप्त्या शास्त्रस्य अनुवादिता शक्याभ्युपगमम् । अतिप्रसङ्गात् । तस्मात् नानुवादिन्यो भेदश्रुतयः ॥

॥ इति भेदश्रुतीनामननुवादित्वसमर्थनम् ॥

## ॥ अथ भेदश्रुतीनां व्यावहारिकभेदपरत्वनिरसनम् ॥

ननु उक्तरीत्या भेदश्रुतीनामननुवादित्वेऽपि न तासां पारमार्थिकभेदपरत्वम् । मानाभावात् । किन्तु व्यावहारिकभेदपरत्वमेव । 'नान्योऽतोऽस्ति द्रष्टा' 'नात्र काचन भिदाऽस्ति' 'नैवात्र काचन भिदाऽस्ति' 'तत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः मृत्युमाप्नोति नह्यस्ति द्वैतसिद्धिः' 'आत्मैव सिद्धोऽद्वितीयः मायया ह्यन्यदिव' इत्यादि श्रुतिनिषिद्धभेदविषयत्वात् इति चेन्न । एतच्छ्रुतीनां भेदनिषेधकत्वस्य निराक्रियमाणत्वात् (निरसिष्यमाणत्वात्-पा)। 'सत्यं भिदा सत्यं भिदा' इत्यादिश्रुत्या भेदपारमार्थिकत्वस्य साक्षादेवाऽवेदनाच्च । नच 'सत्यं भिदा' इति प्रत्यक्षादिप्राप्तभेदसत्यत्वमनूद्य 'असत्यं भिदा असत्यं भिदा' इति द्विरुक्त्या भेदसत्यत्वमेव निषिध्यत इति वाच्यम् । श्रुत्यैकसमधिगम्येश्वरे तत्प्रतियोगिकभेदस्य वा शास्त्रनिरपेक्षे निषिध्यत इति वाच्यम् । श्रुत्यैकसमधिगम्येश्वरे तत्-

प्रतियोगिकजीवानुयोगिकभेदस्य वा जीवप्रतियोगिकतादृशेश्वरानुवादकभेदस्य वा शास्त्रनिरपेक्षप्रत्यक्षाद्यप्राप्ततया 'सत्यं भिदा' इत्यस्य तदनुवादित्वायोगस्योक्तत्वात् । बाधकं विना 'असत्यं भिदा' इति भञ्प्रश्लेषेण निषेधपरत्वकल्पनानुपपत्तेश्च । 'सत्यं भिदा सत्यं भिदा' इत्यत्र 'सत्यं भिदा' इति प्रत्यक्षसिद्धपदविभागेन तद्वाक्यस्य शीघ्रं भेदसत्यत्वाऽवेदकत्वेन(वेदनेन-पा) 'अकः सवर्णे दीर्घः'(पा-सू-६-१-१०१-(८५) इति शास्त्रेण नञनुमानस्य विलम्बितप्रवृत्तिकत्वेन दुर्बलतया बाधाच्च । अत एव पूर्वतन्त्रे श्रुत्यालिङ्गबाध उक्तः । नच नञ्प्रश्लेषः सम्भवतीत्येतावता 'असत्यं भिदा' इति पदच्छेदाश्रयणं युक्तम् । तथासति 'आदित्यो यूपः' (तै-ब्रा-२-१-३५) इत्यादाविव 'अयूप' इत्यादिपदविभागाश्रयणापत्तेः । जैमिनिना 'तत्सिद्धिः जातिः सारूप्यप्रशंसाक्रमभूमिलिङ्गसमवायगुणाश्रयाः' (जै-सू-१-४-(२३) इति सूत्रेण यूपे आदित्यशब्दप्रयोगनिमित्तानुक्त्यापत्तेश्च ॥

एतेन 'सत्यं भिदा'इति त्रिवारमुक्तौ प्रथमोक्तसत्यशब्दस्य भूतत्रयपरत्वम् । 'भिदा'-शब्दस्य कर्मव्युत्पत्त्या भिन्नपरत्वं च अङ्गीकृत्य भिन्नं भूतपञ्चकमनूद्य नञ्प्रश्लेषमङ्गीकृत्य 'असत्यं भिदा' इत्यग्रेतनद्विरुक्त्या तस्य असत्यत्वं बोध्यत इति परव्याख्यानमापस्तम् । 'सत्त्यच्छब्दयोः' पञ्चमहाभूतपरत्वेऽपि सत्यशब्दस्य तत्परत्वे मानाभावात् । सत्त्यच्छब्दे दकारस्यानुमानिक-त्यदाद्यत्वाद्याश्रयणापत्तेश्च । नह्यत्र किञ्चिद्बाधकं पश्यामः । येन तदाश्रयणमावश्यकं स्यात् । अन्यथा 'सत्यं ज्ञानम्' इत्यादावपि पञ्चभूतपरत्वापत्तिः ॥

किञ्चोपक्रमे 'सत्य आत्मा, सत्यो जीवः' इत्यादि सत्यशब्दद्वयस्याबाध्यपरत्वेन निर्णयादुत्तरवाक्ये तस्यैव सत्यशब्देन प्रत्यभिज्ञानमुचितम् । नह्युपस्थितार्थपरत्वत्यागेऽनुपस्थिार्थपरत्वस्वीकारेच विशेषहेतुरस्ति । नच तत्रापि 'असत्यो जीव' इत्येव पदविभाग इति साम्प्रतम् । तथासति जीवात्मनोऽसत्यत्त्वापत्तेः । नच जीवपदं जीवत्वपरम् । विशिष्टवाचकस्य विशेषणमात्रपरत्वे लक्षणापत्तेः । नच व्यवहारे भट्टनयमाश्रयतो मम जीवत्वमेव जीवपदवाच्यत्वमिति वाच्यम् । तथासति आत्मत्वमेवात्मापदवाच्यमिति तस्यैव 'सत्य'शब्देन सत्यत्वाऽवेदनप्रसङ्गात् । एवं 'सत्य'शब्दस्यापि सत्यत्वमेवार्थ इति 'सत्य

आत्मा' इति वाक्येन सत्यत्वात्मत्वयोरेव अभेदावेदनापत्त्या आत्मरूपधर्म्यंशे तस्योदासीनतापत्तेरित्यलम् ॥

॥ इति भेदश्रुतीनां व्यावहारिकभेदपरत्वनिरासः ॥

**॥ अथ 'सत्यं ज्ञानम्' इति श्रुत्या भेदसत्यत्वसमर्थनम् ॥**

किञ्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रौतार्थान्यथानुपपत्त्यापि भेदस्य पारमार्थिकसत्यत्वं दुर्वारम् । तथाहि –

**'सत्यं ज्ञानमनन्तं ब्रह्म'**

**'सत्यकामः सत्यसङ्कल्पः'**

**'प्रधान्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्'**

**'सत्यः सो अस्य महिमा'**

इत्यादिश्रुतिभिर्ज्ञानेच्छाकृतीनां सविषयकपदार्थानां 'सत्यवाक्यो दृढव्रत'(१) इत्यादिवत् सत्यत्वं प्रतिपाद्यत इत्यविवादम् । तच्च तत्र प्रतिपाद्यमानं याथार्थ्यरूपमेवेत्यप्यविवादम् । तच्च स्वाश्रयभूतज्ञानेच्छादिविषयाबाध्यत्वमादायैव पर्यवस्यति, नतु स्वाश्रयभूतज्ञानादिस्वरूपाबाध्यत्वरूप सत्यत्वमादाय । व्युत्पत्तिविरोधात् । नहि ज्ञानादिसविषयकपदार्थेषु सत्यशब्दोऽभियुक्तैः प्रयुज्यमानः तत्स्वरूपसत्यत्वमादाय प्रयुज्यते । तथासति –

**'सत्यं वद धर्मं चर'** (तै-उ-१-२३)

**'नानृतं वदेत्'**

इति विधिनिषेधशास्त्रप्रवृत्त्ययोगात् । नहि बाधितार्थकानुवचनं स्वरूपेण असत्यमिति केनाप्यभ्युपगतम् । तथा च वस्तुतो ब्रह्मस्वरूपरूपस्य ज्ञानस्य 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति स्वाभाविकत्वेन प्रमितस्य 'तुरीयं तत्सर्वदृक् सदा' इति श्रुत्या, निर्विषयकत्वे ज्ञानमेव न स्यात् घटवत्, इत्यादि तर्कोपबृंहितया सर्वविषयत्वे सिद्धे, सर्वान्तःपातिनो जीवेशभेदस्य-जडेशभेदस्य-जीवपरस्परभेदस्य-जीवजडपरस्परभेदस्य-

---

(१) 'भूतभव्यभविष्यज्ञ सत्यवादी दृढव्रत' इति महाभारते मोक्षधर्मे अध्याय- १८१-३९ श्लोकम् ॥

जडपरस्परभेदस्य च सङ्कोचे मानाभावेन तद्विषयताया आवश्यकत्वेन तदबाध्यत्वमादायैव तद्विषयकज्ञानादौ श्रौत'सत्य'शब्दस्य प्रयोगो निर्वाह्य इति तत्प्रयोगान्यथानुपपत्ति-(अन्यथानुपपत्तिकत्वस्य-पा) कल्प्यया याथार्थ्यरूपश्रौतसत्यत्वान्यथानुपपत्तिरपि स्वाश्रयभूत-ब्रह्मस्वरूपरूपस्य नित्यनिर्दोषज्ञानविषयभूतजीवेशभेदादिसकलपदार्थाबाध्यत्वे भवत्येव मानमिति ॥

किञ्च–

**'सत्यकामः सत्यसङ्कल्पः'**
**'सत्यास्सत्यस्य करणानि'**
**'सत्यः सोऽस्य महिमा'**

इत्यादिश्रुतीनां न कामादिस्वरूपसत्यत्वपरत्वं शक्यमभ्युपगन्तुम् । तस्य परेण ज्ञानवद् ब्रह्मस्वरूपरूपत्वानभ्युपगमेन अद्वैतहानेः, किन्तु कामसङ्कल्पादिसविषयकपदार्थेषु क्रिय-माणस्य श्रौतस्य सत्य इति व्यवहारस्य व्युत्पत्त्यविरोधाय तद्विषयाबाधप्रयुक्तयाथार्थ्य-परत्वमेव स्वीकार्यम् । प्रकारान्तराभावात् । यद्यप्यद्वैतहानिरेव स्वीकारेऽप्यविशिष्टता । तथाऽपि व्युत्पत्तिविरोधपरिहारलाभेनैवमेव स्वीकारो युक्तः । किञ्च कामादेः ईश्वरधर्मस्य 'केवलो निर्गुणश्च' इतिश्रुत्या निषेधात् 'सत्यकाम' इत्यादिश्रुतिषु सत्यपदं न तत्पार-मार्थिकसत्यत्वपरमङ्गीकर्तुं शक्यम् । किञ्च वेदान्तजन्यचरमवृत्तेरिव वस्तुतो ब्रह्मस्वरूपरूपस्य ज्ञानस्य दोषाजन्यज्ञानत्वेनैव अबाधितविषयकतायां दुर्वारायां कथं तद्विषयभूतजीवेशभेदादिः अपारमार्थिकः परेण स्वीकर्तुं शक्यः?॥

अपि च वस्तुतो ब्रह्मस्वरूपरूपज्ञाने स्वरूपसत्यत्वमादायैव सत्यव्यवहारनिर्वाहे स्वरूपेणासत्यभूतायां चरमवृत्तावभियुक्तानाम् असत्यव्यवहारप्रसङ्गः । तत्र तदीयव्यवहारस्य-निरालम्बनत्वाङ्गीकारे च ब्रह्मण्यपि सत्यव्यवहारस्य तथात्वापत्तेः । तत्र तद्व्यवहारस्य व्यावहारिकसत्यत्वालम्बनत्वस्वीकारे च ब्रह्मण्यपि तस्य तदालम्बनत्वेनैव निरालम्बनत्व-परिहारस्वीकारापत्तेश्च ॥

किञ्च सविषयकपदार्थेषु 'सत्य'पदप्रयोगे कारणस्वरूपसत्यत्वमेवेति स्वीकारे स्वरूपेण-सत्येप्यनृतवचने कथं न सत्यपदप्रयोगः कार्योऽ(कार्ये-पा)भियुक्तानाम्? तत्र 'सत्य'पदप्रयोगो न दृश्यत इति ममापि तत्र तत्प्रयोगाभावे तदेव कारणमिति चेन्न । त्वदुक्तरीत्या तत्प्रयोगकारणसत्वे तत्र तदीय सत्यपदप्रयोगस्य दुर्वारत्वात् । सविषयकपदार्थे 'सत्य'पद-प्रयोगस्य तत्स्वरूपसत्यत्वनिबन्धनत्वे च व्युत्पत्तिविरोधो दुष्परिहरः इत्युक्तमित्यलम् ।।

यत्तु 'सत्यकामः सत्यसङ्कल्पः' इत्यादि श्रुत्या न कामादिधर्माणां पारमार्थिक-सत्यत्वमुच्यते, 'केवलो निर्गुणश्च 'इति ब्रह्मधर्मभूतानां तेषां निषिद्धत्वेन पारमार्थिक-सत्यत्वायोगात् । किन्तु व्यावहारिकसत्यत्वमेवेति नाऽद्वैतहानिः,न वा सत्यपदप्रयोगः इति । तन्न । चरमवृत्तेः निषिद्धत्वेऽपि तत्र विषयाबाधमादायैव कामादीनां निषिद्धत्वेऽपि तत्र विषयाबाधमादायैव सत्यपदप्रयोगस्य निर्वाह्यत्वात् । अन्यथा चरमवृत्तावपि विषया-बाधमादाय तत्पदप्रयोगनिर्वाहो न कार्यः स्यात् ।।

किञ्च 'केवलो निर्गुणश्च'इति सामान्यनिषेधस्य 'सत्यकामः सत्यसङ्कल्पः' 'एको देवः सर्वभूतेषु गूढः' इति विशिष्यविहितेतरधर्मपरत्वात् । अन्यथा 'न हिंस्यात्' इति सामान्य-निषेधस्यापि 'अग्नीषोमीयं पशुमालभेत' इति विशिष्यविहिताग्नीषोमीयहिंसानिषेधत्वा-पातात् । तदीयार्थवादस्यापि विशिष्टनिषेधोपयुक्तप्राशस्त्यरूपविशेषणसमर्पकत्वेनावैयर्थ्यात् । 'नेह नाना' इति विशिष्टवियदादिप्रपञ्चनिषेधोपयुक्तक्रमिकतत्सृष्टिरूपविशेषणसमर्पकवाक्य-वत् ।।

किञ्च 'केवलो निर्गुणश्च' इति न धर्ममात्रनिषेधः । तथासति समुच्चयप्रसिद्ध'च'कारा-नुपपत्तेः । किन्तु धर्मसामान्यवाचि'गुण'शब्दस्य तद्विशेषभूतहेयधर्मपरत्वमङ्गीकृत्य तन्निषेध एव क्रियत इति स्वीकार्यम् ।।

अपि च 'ब्राह्मणो न हन्तव्यः' इत्यादिविशेषनिषेधस्यापि यदा 'ब्राह्मणो ब्राह्मण-मालभेत' इत्यादिविशिष्यविहितेतरपरत्वं स्वीकृतं तदा सामान्यनिषेधस्य विशिष्यविहितेतर-परत्वे विवाद एव अनुचितः ।।

एतेन 'केवलो निर्गुणश्च' इति 'च'कारेण यत्रैकत्व-देवत्वादिधर्मो विहितस्तत्रैव तन्निषेधस्यापि विद्यमानत्वे बाधान्यथानुपपत्त्या तेषां धर्माणां स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वमेवसिद्ध्यतीति निरस्तम् ॥

धर्माणां सर्वथा निषेधे निषेधस्यैव सत्त्वापत्त्या समुच्चेतव्यगुणसत्यत्वस्यैव दुर्लभत्वेन 'च'कारवैयर्थ्यात् । विधिनिषेधयोरुभयोरपि नित्यनिर्दोषत्वेन परस्परबाध्यबाधकत्वं विनैव सम्बन्धभेदेन कालदेशादिरूपावच्छेदकभेदेन वा, स्वप्रतिपाद्यगुणतदभावरूपार्थस्वरूपसत्वमादायैव 'वृक्षे कपिसंयोग' तदभावप्रतिपादकाप्तवाक्यवत् प्रामाण्योपपत्तौ विधेर्निषेधेन सर्वात्मना बाधायोगाच्च । गुणस्य व्याप्यवृत्तित्वनियमः संयोगादावेव व्यभिचारादसिद्धः । केवल नियमस्य श्रुतितो दुर्बलत्वे(दुर्बलत्वेन-पा) तया तस्य बाधो वा । एकत्वादिगुणस्यापि कालरूपावच्छेदकभेदेनाव्याप्यवृत्तित्वमेव । प्रथमे क्षणे निर्गुणस्यैव द्रव्यस्योपगमात् । सम्बन्धादिभेदेनैव सत्ताभेदेन प्रतियोगितदभावयोरविरोधस्याक्लृप्तत्वेन सम्बन्धादिभेदेनैव तद्विरोधपरिहारस्यावश्यकत्वाच्च ॥

॥ इति सत्यं ज्ञानम्' इति श्रुत्या भेदसत्यत्वसमर्थनम् ॥

## ॥ अथ प्रसङ्गात् अनिर्वचनीयख्यातिनिरासः ॥

ननु शुक्तावारोपितरूप्यतदत्यन्ताभावयोरेव सत्ताभेदेनाविरोधकल्पनान्नैवमिति चेन्न । तत्रापि प्रागुपस्थितरजतस्यैव आरोप्यत्वाङ्गीकारे, लाघवेन तस्य च बाधागोचरस्वात्यन्ताभावतुल्यसत्यत्वेनोक्तदोषानुद्धारात् । परोक्षभ्रमस्थले परेणाप्यन्यथाख्यातिस्वीकारात् । क्वचिदन्यथाख्यातिः क्वचिच्च ख्यात्यन्तरमिति वैरूप्याश्रयणे कारणाभावेन, ऐकरूप्याय अपरोक्षभ्रमस्थलेऽपि परोक्षभ्रमस्थलइवान्यथाख्यातेरेव स्वीकार्यत्वाच्च । नह्यननुभूतरजतस्यानुद्बुद्धरजतसंस्कारस्य वा, तत्सदृशशुक्तीन्द्रियसम्प्रयोगेऽपि रजतापरोक्षभ्रमो दृष्टचरः ॥

किञ्च शुक्तावेवापूर्वरजतमुत्पद्यते इत्यङ्गीकुर्वतस्तव तदापरोक्ष्ये कथं पूर्वानुभवजनित संस्कारापेक्षा ? अन्यथाऽपणस्थापूर्वरजताद्यपरोक्षेऽपि तदपेक्षाप्रसङ्गः । नच रजतापरोक्षस्य साक्षिरूपत्वमङ्गीकुर्वतः न तत्र तदपेक्षोच्यते, किन्तु रजतोत्पत्तावेवेति वाच्यम् । तथाऽप्य-

क्लृप्तकल्पना तादवस्थ्यात् । नहि रजतोत्पत्तौ तादृश संस्कारापेक्षा क्वचिद् दृष्टचरी । दोष-संस्कार-संप्रयोगरूपकारणत्रितयजन्यत्वस्य अर्थाध्यास-ज्ञानाध्यास-साधारणाध्यास-मात्रतटस्थलक्षणत्वेन परेण स्वीकाराच्च ॥

ननु क्लृप्तरजतस्यैव प्रागनुभूतस्य परोक्ष(अपरोक्ष-पा)भ्रमविषयत्वं नोपपद्यते । रजत-साक्षात्कारे रजतेन्द्रियसंयोगस्य विशेषसामग्रीत्वेन क्लृप्तस्य तत्राभावात् । सामान्यसामग्र्याः विशेषसामग्रीमादायैव कार्याजनकत्वात्, तां विना तदभावाद्वा । तथा च अक्लृप्तमेव रजतम-परोक्षभ्रमगोचर इत्यकामेनापि स्वीकार्यमिति चेन्न । प्रमास्थल इव भ्रमस्थलेऽपि 'रजतं साक्षात्करोमि' इत्यनुव्यवसायेन रजतत्वविशिष्टापरोक्षज्ञाने सिद्धे यदा प्रथमं तत्रैव रजत-साक्षात्कारं प्रति यत् सामग्रीत्वेनावधारितं तद्विरहात् प्रमास्थले एव रजतत्वविशिष्टापरोक्षज्ञानं न स्यादिति सुवचत्वात् । अन्यत्र क्लृप्तरजतापरोक्षज्ञानविशेषसामग्रीं विना कथं तदुत्पत्तुम् अर्हतीति वक्तुं शक्यत्वात् । अन्यथा प्रमास्थले क्लृप्तसामग्रीविरहाद् भ्रमस्थले रजतत्व-विशिष्टापरोक्षज्ञानमेव नोत्पत्तुमर्हति । इदं रजतमिति ग्रहणस्मरणात्मकं ज्ञानद्वयमेवेत्युक्त्वा आख्यातिवादी विजयी स्यात् । तथाच क्लृप्तकार्यानुसारेणैव सामग्रीकल्पनं नतु तदनुरोधेन कार्यकल्पनमिति वाच्यम् । एवं रजतत्वविशिष्टापरोक्षज्ञानत्वेन रजतेन्द्रियसम्प्रयोगत्वेन कार्यकारणभाव इति अवश्यमङ्गीकार्ये प्रमास्थले सम्प्रयोगस्येव भ्रमस्थले क्लृप्तदोषयैव अति-प्रसङ्गभङ्गाय सम्प्रयोगत्वं कल्प्यते । तच्च कल्प्यमानं प्रमाणसिद्धकार्यनिर्वाहकमुभयसाधारणं पर्यवस्यतीति किमनुपपन्नम्?

सति चैवं अक्लृप्तरजत-तत्सामग्रीस्वीकाराभावेन गौरवदोषाभावोऽधिको लाभः । यद्यप्यन्यथाख्यातिवाद इवानिर्वचनीयख्यातिवादिना न परोक्षज्ञानसामग्री अङ्गीकार्या । (अनिर्वचनीयाख्यातिवादेन,अपरोक्षज्ञानसामग्र्यङ्गीकार्या-पा) एवम्, अनिर्वचनीयख्यातिवाद इवाऽ-न्यथाख्यातिवादे न रजतोत्पत्तिसामग्री अङ्गीकार्येति वादद्वयेऽपि सामग्र्यैक्यं तुल्यम् । तथाऽपि चक्षुरन्वयव्यतिरेकानुविधानेन रजतसाक्षात्कारे सत्यस्थल इव चाक्षुषत्वानुभवेन च रजतापरोक्षभ्रमो जन्य एव स्वीकर्तुमुचितः । अन्यथा सत्यस्थल एव रजतं साक्षिभास्यं-असत्यस्थले चक्षुर्जन्यवृत्तिभास्यमिति वैपरीत्यप्रसङ्गः । आविद्यकरजतस्य चाक्षुषवृत्तिभास्यत्व-

मेव कथमिति चेत्? अनाविद्यकरजतस्यापि तत्कथमिति सुवचत्वात् । नहि चाक्षुषत्वे चक्षुरन्वयव्यतिरेकानुविधानादन्यत् प्रमाणं पश्यामः ॥

किञ्च परोक्षभ्रमस्थल इव अपरोक्षभ्रमस्थलेऽपि अनाविद्यकरजतमेवाञ्जनादिसामर्थ्यात् 'पातालगतनिधिरिव' दोषसामर्थ्याच्चाक्षुषज्ञानविषयोऽस्त्विति किमधिकोक्त्या? तस्माद् भ्रम-बाधगोचररजत-तदत्यन्ताभावयोरपि न भिन्नसत्ताकत्वेनाविरोधः । किन्तु सत्तातौल्येऽप्युक्तरीत्या अधिकरणविशेषरूपावच्छेदकभेदेनैवेति ॥

॥ इति प्रसङ्गादनिर्वचनीयख्याति निरसनम् ॥

## ॥ अथ प्रसङ्गात् 'केवलो निर्गुणश्च' इत्यादि श्रुतीनां धर्मादिमिथ्यात्वपरत्वनिरसनम् ॥

तथा च 'केवलो निर्गुणश्च' इति श्रुतिर्नधर्ममिथ्यात्वे मानमिति सिद्धम् । किञ्च विहितस्य निषिद्धत्वमात्रेण मिथ्यात्वे विहितषोडशिग्रहणकर्तव्यताया अपि 'नातिरात्रे षोडशिनं गृह्णाति' इति निषिद्धत्वेन तच्छ्रुतेर्मिथ्यात्वपरत्वप्रसङ्गः । एवं 'न कलञ्जं भक्षयेत्' इत्यादिश्रुतीनामपि तत्प्रसङ्गः । 'यस्मिन् द्यौः' इत्यादिश्रुतेरिव कलञ्जभक्षणे प्रत्यक्षस्येष्ट-साधनत्वरूपप्रतियोगिसमर्पकत्व(प्रसञ्जकत्व-पा)अविशेषात् । नच कलञ्जभक्षणादौ इष्ट-(कलञ्जभक्षणादीष्ट-पा)साधनत्व-मिथ्यात्वप्रतिपादनं प्रयोजनाभावादेव तच्छ्रुतिभिर्नक्रियत इति वाच्यम् ।'नेह नानाऽस्ति किञ्चन' इति जगन्मिथ्यात्वप्रतिपादकश्रुतेरिव प्रयोजनवत्वस्य कल्प्यत्वात् । कलञ्जभक्षणादिकम् अनिष्टसाधनमिति बोधने निवर्तकत्वेन तासां प्रयोजन-वत्वमस्तीति प्रसज्यप्रतिषेधार्थस्तत्र नञ् न भवतीति चेन्न । बाधकं विना तस्य प्रतिषेध-रूपमुख्यार्थत्वत्यागायोगात् । कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनत्वस्य(साधनेप्रत्यक्षसत्वेऽपि-पा) प्रत्यक्षेण सत्वेऽपि तस्य श्रुतितो दुर्बलत्वेन तदबाधकत्वात् । 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादेरपि षोडशिग्रहणमनिष्टसाधनमित्यर्थाश्रयणापत्तेश्च ॥

किञ्च बाधकं विनाऽपि नञो निषेधार्थत्वं त्यक्त्वा यत्किञ्चित्स्वाभिमतार्थपरत्वाश्रयणे 'नेह नानाऽस्ति किञ्चन' 'एकमेवाद्वितीयम्' 'नान्योऽतोऽस्ति द्रष्टा' 'नात्र काचन भिदाऽस्ति' इत्यादावपि नञो यत्किञ्चित्पराभिमतार्थपरत्वमङ्गीकृत्य तस्य वाक्यस्य मिथ्यात्वपरत्वत्यागप्रसङ्गः ।

नहि 'नेह नानाऽस्ति' 'अद्वितीयम्' इत्यादौ नञः प्रागभावार्थकत्वे तद्वाक्यस्य मिथ्यात्वपरत्वं कथमपि सिद्ध्यति ॥

'नान्योऽतोऽस्ति द्रष्टा' इत्येवं जातीयकवाक्येष्वपि नञो विरुद्धार्थत्वाश्रयणे 'अतः= परमात्मनोऽन्यो द्रष्टा नास्ति, विरुद्धोऽस्ति' इत्याद्यर्थकत्वसम्भवेन तस्याऽपि वाक्यस्य अमिथ्यात्वपरत्ववर्णनसम्भवात् । 'नात्र काचन भिदाऽस्ति' इत्यादिवाक्येष्वपि नञो विरु-द्धार्थत्वमाश्रित्य 'अत्र भिदा, न= विरुद्धा, अस्ति, योग्यतया अभेदाऽसहिष्णुरस्ति (भिदा योग्यतया विरुद्धास्ति न, अभेदाऽसहिष्णुरस्ति-पा) काचन । एवकारो भिन्नक्रमः । 'अत्रैव= ब्रह्मण्येव, न विरुद्धा, अभेदासहिष्णु भिदा काचनास्ति' इत्युक्तस्यैवायमभ्यासः । अत एवोत्तरवाक्ये 'अत्र भिदामिव मन्यमानः' सङ्कोचकाभावात् 'सर्वभिदं जानन्, 'शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति' इति तन्निन्दनमित्यर्थवर्णनसम्भवादिति । अथवा 'नैव विरुद्धैव, न कथमप्यभेदसहिष्णुः' इत्यर्थ इति ॥

एतेन 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' 'न कलञ्जं भक्षयेत्' इत्यादीनां षोडशिग्रहणकलञ्जभक्षणमिथ्यात्वकर्तव्यतयाप्रतिपादनपरत्वाङ्गीकारे 'नेह नानाऽ-स्ति किञ्चन' 'एकमेवाद्वितीयम्' इत्यादि वाक्यानां जगन्मिथ्यात्वप्रतिपादनपरत्वाङ्गीकार इव न प्रयोजनं पश्यामः । नह्येतद्वाक्यानामिव 'अतिरात्रे षोडशिनं गृह्णाति' इत्येवमादीनां ब्रह्मप्रतिपादकत्वमस्ति । येन 'ब्रह्मविदाप्नोति परम्' 'ब्रह्मवेद ब्रह्मैव भवति' 'तरति शोक-मात्मवित्' इत्यादि श्रुतिप्रतिपन्नफलकब्रह्मवेदनजनकत्वेन साफल्यं स्यात् । प्रत्युत 'अन्या-वाचो विमुञ्चथ' इत्यन्यपरवागुपासनाया निषेधेन तद्वाक्यजन्यप्रतिपत्तेः अनिष्टसाधनत्वा-वेदनात् इति निरस्तम् ॥

'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ' 'तमेव धीरो विज्ञाय' '(विज्ञाय प्रज्ञां-पा) प्रज्ञां कुर्वीत' 'तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिसावधारण-श्रुतिभिर्ब्रह्ममात्रावेदकज्ञानस्यैव साफल्यावेदकत्वेन उदाहृतजगन्मिथ्यात्वपरश्रुतीनां च ब्रह्म-मात्रप्रतिपादकत्वाभावात् । नहि सोपाधिकजगन्मिथ्यात्वं निरुपाधिकाखण्डब्रह्ममात्रं शक्य-

मभ्युपगन्तुम् । तेषामपि अखण्डब्रह्ममात्रपरत्वे च बाधकाभावेन प्रत्यक्षादिप्रमाणप्रतिपन्न-जगत्सत्यत्वमनाकुलमापतितमिति जगन्मिथ्यात्वप्रवादस्य दत्तजलाञ्जलित्वापत्तेः ।।

उभयपरत्वे वाक्यभेदप्रसङ्गात् । मिथ्यात्वमात्रपरत्वे च निष्प्रयोजन तादवस्थ्यात् (निष्प्र-योजनवत्ववादरक्षणात्-पा)। मिथ्यात्वविशिष्टब्रह्मपरत्वे तदुपहितब्रह्मपरत्वे तदुपलक्षितब्रह्मपरत्वे वाऽखण्डार्थत्वहानेश्च । नच विशेषणादिभावं प्राप्तस्य मिथ्यात्वस्य जगदत्यन्ताभावरूपस्य ब्रह्ममात्ररूपतया प्रतिपादकोदाहृतवाक्यानां च तद्भिन्नविशेषणादिसंसर्गागोचरप्रमाजनकत्व-(प्रमितज्ञानत्व-पा)रूपाखण्डार्थत्वक्षतिरिति वाच्यम् । एतदत्यन्ताभावस्य वैशेषिकादिनेव सप्तमपदार्थत्वाङ्गीकारे ब्रह्मणो भावरूपत्वक्षतेः । वियदादिप्रपञ्चरूपप्रतियोग्युत्पादकत्वेन तस्य प्रागभावत्वापत्त्या तत्प्रतियोगिनः प्रपञ्चस्यामिथ्यात्वप्रसङ्गाच्च । त्रैकालिकनिषेधप्रति-योगित्वस्यैव मिथ्यात्वरूपत्वात् ।।

किञ्चैवं कार्यप्रपञ्चस्य ब्रह्मनाशत्वप्रसङ्गः । कार्योत्पादकाभावप्रतियोगिन एव तन्नाश-रूपत्वावधारणात् । किञ्च स्वकाले स्वदेशे वा प्रतियोगिसहिष्णोः अत्यन्ताभावस्य मिथ्यात्वव्यवहारप्रयोजकत्वे संयोगाद्यव्याप्यवृत्त्यत्यन्ताभावम् (संयोगाद्यव्याप्यवृत्त्यन्ताभावम्-पा) आदाय आकाशाद्यत्यन्ताभावमादाय च संयोगादौ आकाशादौ च मिथ्यात्वव्यवहारप्रसङ्गः । 'आकाशवत् सर्वगतश्चनित्यः' 'तुरीयं तत्सर्वदृक् सदा' 'अनन्तं ब्रह्म' इत्यादि श्रुत्या जगदत्यन्ताभावत्वेन स्वीकृतस्य ब्रह्मणः सर्वेष्वपि देशकालेषु सम्बन्धावेदनेन तत्रैव प्रति-योगिभूतप्रपञ्चसहिष्णुत्वात् कथं तादृशात्यन्ताभावमादाय प्रपञ्चे मिथ्यात्वव्यवहारः परस्येति न विद्मः?[१] । भ्रमविषयभूतरजतस्याप्युक्तरीत्या देशान्तरस्थप्रसिद्धरजतरूपत्वेन तद्बाध-गोचरात्यन्ताभावस्यापि देशान्तरस्थप्रसिद्धरजतरूपत्वेन तद्बाधगोचरात्यन्ताभावस्य स्वदेश-कालयोः प्रतियोग्यसहिष्णुत्वेनैव मिथ्यात्वव्यवहारप्रयोजकत्वमिति नातिप्रसङ्गः । 'यूस्त्र्याख्यौ नदी'(पा-सू-१-४-३(२६६) इतिवत् अत्यन्ताभावप्रतियोगित्वमात्रेण स्वशास्त्रे परिभाषायाः प्रमाणसिद्धसत्यत्वाविरोधित्वात् । एवं ब्रह्मनिष्ठस्तदतिरिक्तः प्रपञ्चाभावोऽप्येवंविधश्चेन्न प्रपञ्चमिथ्यात्वसिद्धिरिति ।।

---

(१) 'कथं च विद्मः' इति ताळपत्रस्थ पाठः ।।

तदेवं 'नेह नाना' इत्यादिश्रुतिप्रतिपन्न-जगदत्यन्ताभावस्य ब्रह्मातिरिक्तत्वं दुर्वारमिति तद्विशिष्टस्य-तदुपहितस्य-तदुपलक्षितस्य वा ब्रह्मणस्तच्छुतिप्रतिपाद्यत्वे कथं न तासामखण्डार्थत्वक्षतिः ? ॥

एवं च जगन्मिथ्यात्वश्रुतीनां ब्रह्ममात्रप्रतिपादकत्वाभाव तादवस्थ्येन 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतीनां 'तमेवैकं जानथ' इत्यादिसावधारणश्रुत्यनुरोधेन ब्रह्ममात्रगोचरज्ञानस्यैव सप्रयोजनत्वप्रतिपादनपरत्वावश्यम्भावात् तासां ब्रह्मप्राप्त्यादिफलकब्रह्ममात्रविषयकज्ञानानुत्पादकत्वेन सप्रयोजनत्वासम्भवात्, अध्ययनविधिबलात् अवधारितपुरषार्थपर्यवसायित्वनिर्वाहाय श्रौतप्रयोजनादर्शनेनान्यदेव प्रयोजनं कल्प्यम् । एवंविध प्रयोजनकल्पनं च 'नातिरात्रे षोडशिनं गृह्णाति' 'न कलञ्जं भक्षयेत्' इत्यादिश्रुतीनां मिथ्यात्वप्रतिपादनपरत्वस्वीकारेऽपि सुलभमिति, तासामपि मिथ्यात्वपरत्वमेव स्यादिति दुरुत्तरा प्रतिबन्दीति । तस्मात् यत्र प्रतिपन्नं तस्य तत्रैव निषिद्धत्वमात्रेण न मिथ्यात्वमिति सिद्धम् ॥

॥ इति प्रसङ्गात् केवलो निर्गुणश्च इत्यादि श्रुतीनां धर्मादिमिथ्यात्वपरत्वनिरसनम् ॥

**॥ अथ अन्यशेषस्यापि स्वार्थपरत्वसमर्थनं विधेरुपासनार्थत्वसमर्थनञ्च ॥**

एतेनैव 'सत्यकामः सत्यसङ्कल्पः' इत्यादेः उपासनाविधिशेषतया उपासनाप्रकारसमर्पकत्वेन अन्यथासिद्धस्य न कामसङ्कल्पादिपारमार्थिकसत्यत्वपरत्वम् । 'वाचं धेनुमुपासीत' (बृ-उ-७-१०-१) इत्यादिवदविद्यमानार्थमादायापि उपासनाविधिप्रवृत्त्युपपत्तेरिति निरस्तम् ॥

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादेरपि 'ब्रह्मविदाप्नोतिपरम्' इत्यादिब्रह्मवेदनफलसम्बन्धविधिशेषतया वेदनविषयसमर्पकत्वेन अन्यथासिद्धस्य न ब्रह्मपारमार्थिकसत्यत्वादि परत्वमिति सुवचत्वात् । अज्ञात-ज्ञापन-लक्षण-विधित्वस्य प्रवर्तका-प्रवर्तकोभयसाधारण्येन (साधारणत्वेन-पा) तस्यापि विधित्वानपायात् । लाघवेनान्यशेषत्वस्यैव अतत्परत्वे कारणत्वेन तस्योभयत्राप्यविशेषे विशेषपक्षपातस्य निर्मूलत्वात् । 'विज्ञानं ब्रह्म चेद्वेद' इत्यादौ विधेरप्युपासनार्थकत्वदर्शनेन 'ब्रह्मविदाप्नोति परम्' इत्यादावपि तस्य तदर्थकत्वाश्रयणेन

'सत्यं ज्ञानम्' इत्यादेरप्युपासनाविधिविशेषत्वस्य सुवचत्वाच्च । व्याकरणस्याप्यनादिप्रयोगमूलत्वेन 'भुजोऽनवने'(पा.सू.१-३-३-६६) इत्यादिज्ञापकेन च धातोरनेकार्थत्वकल्पनात् । परेणापि 'तद्देहात्मानमनुविद्य व्रजन्त्वन्यांश्च(व्रजन्त्येतांश्च-पा) सत्यान् कामान्' 'तदात्मानमेवाऽवेत्' इत्यादौ विधेरुपासनार्थत्वस्याविगानेन स्वीकाराच्च । 'यत्र दुःखेन सम्भिन्नम्' इत्याद्यर्थवादस्यान्यपरत्वेऽपि(अन्यशेषत्वेऽपि-पा) स्वार्थपरत्वायोगाच्च(स्वार्थपरत्वात्यागाच्च-पा)। अन्यथा 'यतो वा इमानि भूतानि जायन्ते' इत्यादेः 'तद्विजिज्ञासस्व' इति विधिशेषतया स्वार्थपरत्वाभावेन ततो जगज्जन्मादिकारणत्वरूपव्यावहारिकब्रह्मलक्षणासिद्धिप्रसङ्गात् ॥

'सोऽरोदीद् यदरोदीत्'(तै-सं-१-५-१-१) 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यादेः प्रमाणान्तरविरोधेनैव स्वार्थपरत्वस्य त्यागेन अन्यशेषत्वापराधेन तस्यात्यागाच्च । अनन्यशेषस्यापि 'सोमेन यजेत' इत्यादेः सोमयागाभेदपरत्वस्य प्रत्यक्षविरोधेनैव त्यागेन अन्यशेषत्वापराधेन तस्यात्यागाच्च । आवश्यकत्वेन स्वार्थपरत्वत्यागे मानान्तरविरोधस्यैव सर्वत्र सम्भवतः कारणस्य वक्तव्यत्वाच्च(अत्यक्तव्यत्वाच्च-पा) । 'यजमानः प्रस्तरः' इत्यादेः स्वार्थपरत्वत्यागस्य प्रहरणशास्त्रविरोधकारणकत्वेन मानान्तरविरोधकारणत्वानङ्गीकारेऽपि दूरे गत्वा प्रत्यक्षविरोधस्यैव मूलत्वेनाश्रयणीयत्वाच्च । 'सोमेन यजेत' इत्यत्र ध्रौवाज्यसत्वेन सोमस्याद्रव्यत्वेऽपि द्रव्यान्तरकल्पनागौरवरूप श्रुतिमूलकबाधप्रसराच्च(बाधक अप्रसङ्गाच्च-पा)।

॥ इति अन्यशेषस्यापि स्वार्थपरत्वसमर्थनम् । विधेरुपासनार्थत्वसमर्थनश्च ॥

## ॥ अथ जीवेश्वरभेदादिप्रपञ्चस्य पारमार्थिकसत्यत्वे 'सत्यं ज्ञानमनन्तं ब्रह्मेति' वाक्येऽपि श्रौतार्थान्यथाऽनुपपत्तेः प्रमाणत्वव्युत्पादनम् ॥

ननु 'सत्यं ज्ञानम्' इति वाक्ये 'सत्यं ब्रह्म, ज्ञानं ब्रह्म, अनन्तं ब्रह्म' इति सत्यत्वादेः, आरुण्यादेः क्रयभावनायामिव ब्रह्मण्येव साक्षादन्वयात् कथं सत्यपदस्य ज्ञानान्वयरहितस्य याथार्थ्यरूपसत्यत्वपरत्वम्? नच तस्य ज्ञानेऽपि साक्षादन्वये मानमस्ति । तथाऽपि तदङ्गीकारे वाक्यभेदश्च । एवं च ज्ञाने साक्षात् 'सत्य'पदं प्रयुज्यमानं यथावस्थितार्थज्ञेयविषयीकारित्वरूपयाथार्थ्यपरं सत् तदाश्रयभूतज्ञानविषयाबाधमादायैव पर्य-

वस्यति इत्यस्यार्थस्यासिद्ध्या तत्र तत्प्रयोगान्यथानुपपत्तिकल्प्य तादृशयाथार्थ्यरूपस्य सत्यत्वस्य ज्ञानेऽनुपपत्त्यभावेन साधनज्ञानविषयीभूतजीवेश्वरभेदादिरूपप्रपञ्चस्याबाध्यत्वे मानं सम्भवतीति चेन्न। 'ब्रह्म विदाप्नोति परम्' इति पूर्ववाक्येन ब्रह्मवेदनस्य परप्राप्तिसाधनत्वे बोधिते 'किं तद्ब्रह्म' इतिवचनानुसारेण कल्प्य तल्लक्षणप्रश्ने सति तत्प्रतिवचनत्वेन प्रश्ने 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्यस्य प्रवृत्तत्वेन तत्र सत्यज्ञानानन्तशब्दार्थभूता-बाध्यत्वार्थप्रकाशत्वापरिच्छिन्नत्वानां प्रत्येकलक्षणत्वे घटादौ, वृत्तिरूपज्ञाने शून्ये च अतिव्याप्तेः 'सत्यं यत् ज्ञानम् अथ च अनन्तं तद्ब्रह्मेति' विशिष्टस्यैव ब्रह्मलक्षणत्वे वाच्ये सत्यत्वस्य ज्ञान एव साक्षादन्वयस्यावश्यकत्वेन तस्य च सविषयके 'सत्य'पदप्रयोगेण व्युत्पत्तिबललब्धयाथार्थ्यरूपताया व्युत्पत्तिविरोधं परिहरता अङ्गीकार्यत्वात्(अङ्गीकर्तव्यत्वात्-पा) । नह्येवं विधिविषये क्रयभावनायामारुण्यादेरिव अन्वयाङ्गीकारे इष्टसिद्धिः ॥

ननु तथाऽपि 'सत्यं अनन्तं यो ब्रह्म, ज्ञानमनन्तं ब्रह्म' इति लक्षणद्वयाश्रयणेऽपि इष्टसिद्धेः न ज्ञाने सत्यत्वस्य साक्षादन्वय इति चेन्न । बाध्यत्वाभावरूपसत्यत्वस्य त्रिविधपरिच्छेदराहित्यरूपानन्तत्वस्य चासति अतिव्याप्तत्वेन सत्यत्वे सत्यनन्तत्वमात्रस्य ब्रह्मलक्षणत्वस्यासम्भवात् । 'यज्ज्ञानं सत्यमनन्तं च तद्ब्रह्मेति' विशिष्टस्य लक्षणत्वाश्रयणे च ज्ञानेऽन्वितस्य 'सत्य' पदस्योक्तरीत्या प्रमात्वरूप सत्यत्वपरत्वमावश्यकमिति 'यत् ज्ञानं यथार्थमथ च अनन्तं तद्ब्रह्मेति' याथार्थ्यविशिष्टापरिच्छिन्नज्ञानत्वे ब्रह्मलक्षणत्व-पर्यवसानेन उक्तदोषाप्रसरात् । यत्र प्रथमतो विशिष्टस्य प्रधानेनान्वये नियामकाभावः तत्रैव अरुणैकहायनीन्यायेनान्वयोपगमात् । प्रकृते च विशिष्टस्यैव लक्षणत्वेन ब्रह्मण्यन्वये नियामकस्य सत्त्वेन तन्न्यायानवतारात् । अन्यथा 'चित्रा गावो यस्य तमानय', लम्बकर्णौ यस्य तं च, 'अदेयमासीत् त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे' इत्यादिवाक्येष्वपि विशिष्ट-वैशिष्ट्येनान्वयानापत्त्या 'चित्रा यस्य तमानय, गावो यस्य तमानय, लम्बौ यस्य तमानय, कर्णौ यस्य तं चेति, भूपतेः शशिप्रभमदेयमासीत्, छत्रमदेयमासीत्, उभे अदेये आस्तां, चामरे च अदेये आस्तां, त्रयं चादेयमासीत् इत्यन्वयापत्तेः । नह्यत्रैव-मन्वयोऽनुभवसिद्धः, किन्तु विशिष्टवैशिष्ट्येनैवान्वय इति ॥

अस्तु वाऽत्र यथा तथान्वयः । यत्र च विशेषणानां विशेष्यस्य वा न प्रत्येकलक्षणत्वसम्भवः, तत्र विशेषण-विशिष्टस्यैव विशेष्यस्य लक्षणत्वम् । तत्र प्रथमतो विशेष्ये विशेषणानाम् अन्वयानन्तरमेव तस्य लक्ष्येऽन्वय इत्यकामेनापि स्वीकर्तव्यमिति । नच 'सत्यं ज्ञानम्' इति वाक्ये सत्यादीनां प्रत्येकमेव लक्षणत्वं श्रूयते । येन तदन्यथानुपपत्त्या यथाकथञ्चित् प्रत्येकलक्षणत्वं निर्वाह्यं स्यात् । घटादावन्तःकरणवृत्तिविशेषे च सत्यत्वं ज्ञानत्वं च न स्वाभाविकं, किन्तु ब्रह्मसम्बन्धौपाधिकमिति चाश्रयणीयं स्यात् किन्तु कल्प्यम् । कल्पनाच यत्र न बाधकं तत्रैवावतरतीति विशिष्टलक्षणत्वं दुष्परिहरम् ॥

एतेन सत्यत्वादीनां प्रत्येकलक्षणत्वाद् घटादावतिव्याप्तस्य च लक्षणत्वायोगात् तदन्यथानुपपत्त्यैव वियदादिप्रपञ्चो मिथ्या, अन्तःकरणवृत्तिविशेषश्च न ज्ञानमिति सिद्ध्यति । 'घटः सन्' 'पटःसन्' 'घटं जानामि' इति तत्र सत्वज्ञानत्वावगाह्यनुभवस्तु तादृशब्रह्मचैतन्यसम्बन्धादन्यथासिद्ध इति प्रत्यूढम् ॥

अस्याः कल्पनायाः प्रत्येकलक्षणत्वे सिद्ध्यधीनत्वेनान्योन्याश्रयात् । नच घटादौ अन्तःकरणवृत्तिविशेषे च निश्चितातिव्याप्तिकं सत्यत्वादिकं प्रत्येकं लक्षणमिति निश्चयः सम्भवति ॥

यद्यपि 'चैत्रो दण्डी, कुण्डली, पिङ्गाक्षो, वक्रतुण्डः' इत्यादौ विशिष्टलक्षणतात्पर्यकेऽपि वाक्ये विशेषणानामिव 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विशिष्टलक्षणतात्पर्यकवाक्येऽपि सत्यादिविशेषणानां विशेष्ये ब्रह्मण्येव साक्षादन्वयोऽपि सम्भवति । तथाऽपि 'सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वात्' इत्यादिलिङ्गवचने यथा प्रत्येकं व्यभिचारात् विशिष्टस्यैव विवक्षितसाध्यं प्रति हेतुत्वं तथा प्रकृतेऽपि विशिष्टस्यैव लक्षणत्वम् । एकैकस्यातिप्रसक्तत्वेन लक्षणत्वासम्भवात् । लक्षणस्यापि हेतुविशेषणत्वेन तत्राप्यतिप्रसक्तेर्निरस्यत्वाच्च ॥

एवं सत्यत्वे सति अनन्तत्वे च सति ज्ञानत्वं विशिष्टमेव ब्रह्मलक्षणं पर्यवसितमिति ज्ञाने सत्यत्वान्वयो दुर्वारः । नहि सत्यत्वस्य ज्ञानेऽन्वयो ज्ञानत्वसामानाधिकरण्यादतिरिच्यते । अपि च –

'यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते'

इति न्यायेन सत्यत्वस्य प्रथमं ज्ञानत्वसामानाधिकरण्येनान्वयो दुर्वारः । तदनन्तरं सत्यत्व-विशिष्टस्य ज्ञानत्वस्य अनन्तत्वसामानाधिकरण्येन इति । एवं विशिष्टवैशिष्ट्येन सत्यादि-पदानामन्वयः प्रत्येकमेव, ब्रह्मपदेनान्वये ब्रह्मपदावृत्त्या वाक्यभेदप्रसङ्गश्च ।।

किञ्च सत्यज्ञानानन्तशब्दार्थेष्वपि यस्यैवोपस्थितस्य विशेष्याकाङ्क्षानिवृत्तिहेतुत्वं सम्भवति, तदेव विशेष्यत्वेन स्वीकार्यम् । तत्र च ज्ञानस्यैवोपस्थितस्य विशेष्या-काङ्क्षानिवृत्तिहेतुत्वमस्तीति तदेव विशेष्यम्, नतु सत्यानन्तशब्दार्थौ । सत्यानन्त-पदाभ्यामबाध्यापरिच्छिन्नरूपार्थोपस्थितावपि तत्किमिति विशेष्याकाङ्क्षानिवृत्तेरिति । एवं च सत्यपदस्य साक्षादेव 'ज्ञान'पदेन अन्वितस्य कथं न प्रमात्वापरपर्याय याथार्थ्यरूप-सत्यत्वपरत्वम्? तथाच वाक्ये 'सत्यवाक्यो दृढव्रत' इत्यादि सत्यव्यवहार इव ज्ञानादावपि सत्यत्वव्यवहारः तद्विषयाबाधं विना नोपपद्यत इति 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्येऽपि तदन्यथाऽनुपपत्तिरस्तीति तज्ज्ञानविषयीभूत जीवब्रह्मभेदादिप्रपञ्चपारमार्थिकसत्यत्वे भवत्येव सापि मानमिति ।।

।। इति जीवेश्वरभेदादिप्रपञ्चस्य पारमार्थिकसत्यत्वे सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्येऽपि श्रौतार्थान्यथानुपपत्तेः- प्रमाणत्वव्युत्पादनम् ।।

### ।। अथ 'तत्सत्यम्, स आत्मा' इत्यादिश्रुतीनां तदनुवादित्वभावप्रसङ्गप्रतिपादनम् ।।

अपि च जीवेश्वरभेदादिप्रपञ्चपारमार्थिकसत्यत्वे 'विश्वं सत्यम्' इत्यादिश्रुतिः, 'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्' इत्यादिस्मृतिश्च मानम् । नचेयं श्रुतिः प्रत्यक्षादिप्राप्त विश्वसत्यत्वानुवादिनी । भेदश्रुत्यननुवादित्वसमर्थनरीत्यैव अस्याऽपि तत्समर्थनसौलभ्यात् । अन्यथा 'तत्सत्यं स आत्मा' इत्यादिश्रुतिरपि 'अहमिदानीमत्र सुखी अस्मि' इत्यादि प्रत्यक्षप्राप्तात्मसत्यत्वानुवादिनी स्यात् । 'इदं वा अग्रे नैव किञ्चनासीत्' 'असद्वा इदमग्र आसीत्' 'नो सदासीत्' 'अलक्षणम्' इत्यादिश्रुतिश्च तदनूदितात्मसत्यत्वनिषेधिका स्यात्

इत्युक्तम् । प्रपञ्चसत्यत्वग्राहिप्रत्यक्षतन्निषेधकश्रुत्योः त्वद्रीत्यैवात्मसत्यत्वग्राहिप्रत्यक्ष-तन्निषेधकश्रुत्योरपि व्यवहारिकसत्यत्व-पारमार्थिकतन्निषेधविषयत्वेन भिन्नविषयत्वेनाविरोध-वर्णनसम्भवात् । नचात्मप्रत्यक्षस्य देशकालसम्बन्धादिरूपसत्यत्वविषयत्वेऽपि न त्रिकाला-बाध्यत्वरूपसत्यत्वविषयत्वमिति वाच्यम् । अविशेषेण प्रपञ्चप्रत्यक्षस्यापि सामर्थ्याभावान्न त्रिकालाबाध्यत्वरूपसत्यत्वं विषयः किन्तु देशकालसम्बन्धादिरूपसत्यत्वं विषयः । नहि वर्तमानमात्रग्रहणसमर्थस्य प्रत्यक्षस्यातथाभूतदेशकालादिघटितबाध्यत्वग्रहणमस्तीति सुव-चत्वात् । आत्मनि 'तत्सत्यम्' इत्यादिनेव प्रपञ्चेऽपि 'विश्वं सत्यम्' इत्यादिना त्रिकाला-बाध्यत्वरूपसत्यत्वसिद्ध्यवैकल्यस्यापि सुवचत्वाच्च ॥

किञ्च प्रत्यक्षेऽपि कालत्रयसम्बन्धियदसत्त्वं तदभावरूपं त्रिकालाबाध्यत्वं विषय इत्य-वश्यमङ्गीकार्यम् । तस्य वर्तमानकालत्रयसम्बन्धिन्यपि सत्त्वेन सुग्रहत्वात् । यत्किञ्चि-द्विशेषसत्वेऽपि योग्यप्रतियोगिकसामान्याभाववत् ॥

अपि च प्रत्यक्षस्य कालत्रयागोचरत्वेन त्रिकालाबाध्यत्वरूपसत्वाविषयकत्वे शुक्तौ रजतभ्रान्तिमतो विशेषदर्शनानन्तरम् 'इदं रजतं नास्ति नासीन्न भविष्यति, कालत्रयेऽपि असत्, कालत्रयेऽपि इदं रजतं न, न क्वापीदं रजतं, मिथ्यैव रजतमभात्' इत्यादिबाध-प्रत्यक्षस्य त्रिकालसम्बन्ध्यभावविषयत्वेन बाधबुद्धित्वाभावप्रसङ्गात् ॥

किञ्च तादृशबाध्यत्वरूपसत्यत्वस्य कुतोऽप्युपस्थित्यभावे 'सत्य'पदस्य तत्र सङ्गति-ग्रहायोगेन तद्घटितस्य 'तत्सत्यम्' इत्यादि श्रुतिवाक्यस्याबोधकत्वप्रसङ्गः । धूमादौ व्याप्ति-प्रत्यक्षस्यैव भ्रमानन्तरं बाधप्रत्यक्षस्याप्युपनायकसम्भवेन कालत्रयसम्बन्धित्वेन अभाव-विषयत्वं सुलभम् । अन्यथा 'यदा धूमस्तदा वह्नि'रिति व्याप्तिप्रत्यक्षे 'यत्र धूमस्तत्रा-ग्निरिति' तत्प्रत्यक्षे च, सकलधूमदेशकालयोः अनुपस्थितत्वेन तद्घटितमूर्तिकव्याप्त्य-नुपस्थित्या तत्कालीन-तद्देशीय-वह्न्यनुमितिरूपनिश्चयाभावेन तथाविधविषये निष्कम्प-प्रवृत्त्युच्छेदापत्तेः । नच बाधज्ञानम् अभावविषयत्वात् न प्रत्यक्षं, किन्त्वनुपलब्धमिति वाच्यम् । तथाऽपि कालत्रयसम्बन्धोऽभावे सुग्रह इत्यस्यानपायात् । त्वन्मते शुक्त्यादिरूप-(रूप्य-पा)भ्रमाधिष्ठानात्मकत्वेन रूप्याद्यभावस्य चक्षुरादियोग्यत्वाच्च । ततश्च त्रिकाला-

बाध्यत्वरूपमपि सत्यत्वं भवत्येव । प्रत्यक्षादियोग्यमिति तद्विषयेऽपि स्यादेव 'तत्सत्यम्' इत्यादिश्रुतेरनुवादित्वमिति ॥

केचित्तु 'वस्तुतः कालत्रयसम्बन्धी योऽत्यन्ताभावस्तत्प्रतियोगित्वेन प्रमितिविषयत्वमेव बाध्यत्वं, तदभाव एव सत्यत्वम् अबाध्यत्वं नामेति कालत्रयस्य प्रागनुपस्थितावपि तथा-विधाबाध्यत्वरूपसत्यत्वस्य प्रत्यक्षादिविषयत्वं सुलभम्' इत्याहुः ॥

'विश्वं सत्यम्' इतिश्रुतेः 'नेह नानाऽस्ति किञ्चन' इत्यादिनिषेधाय प्रत्यक्षादिसिद्ध-विश्वसत्यत्वानुवादित्वमिति वदन्तं परं प्रति 'इदं वा अग्रे नैव किञ्चनासीत्' 'असद्वा इदमग्र आसीत्' 'नो सदासीत्' 'अलक्षणम्' इत्यादिना निषेधाय 'अहमस्मि' इत्यादि-प्रत्यक्षप्राप्तात्मसत्यत्वानुवादित्वप्रसङ्गः ॥

एवं 'सत्यं भिदा' इत्यादिसत्यभेदानुवादकश्रुतेरपि प्रत्यक्षादिसिद्धभेदानुवादित्वं विशिष्य निरसनीयम् ॥

॥ इति 'तत्सत्यम् स आत्मा'इत्यादिश्रुतीनां तदनुवादित्वभावप्रसङ्गप्रतिपादनम् ॥

**॥ अथ प्रामाण्यस्य स्वतस्त्वात् भेदस्य सत्यत्वम् ॥**

अपि चावयोः प्रामाण्यस्योत्पत्तिज्ञप्त्योः स्वतस्त्वेन बाधकं विना सत्यपदासमभिव्याहृत-'द्वा सुपर्णा' इत्यादिभेदश्रुत्यैव पारमार्थिकभेदसिद्धिरविकला । नच प्रामाण्यमर्थाबाधं विना युज्यते । अन्यथा 'तत्त्वमसि' इत्यादिश्रुत्या तव तात्विकप्रत्यग्ब्रह्माभेदसिद्धिर्न स्यात् । जीवेश्वरभेदपारमार्थिक सत्यत्वस्येव प्रत्यग्ब्रह्माभेदपारमार्थिकसत्यत्वस्य अपदार्थत्वावाक्यार्थ-त्वसाम्यात् । नहि 'तत्सत्यम्' इत्यादिब्रह्मसत्यत्वाऽऽवेदकश्रुतिवत् तत्वंपदार्थभेदः सत्य इत्यपि श्रुत्यन्तरमस्ति । येन तत्सिद्धं प्रति प्रामाण्यस्वतस्त्वम् अकारणमित्युच्येत ॥

एतेन अभेदस्य 'तत्सत्यम्' इत्यादिश्रुतिप्रतिपन्नसत्यब्रह्मस्वरूपरूपत्वाङ्गीकारात् अभेदश्रुतिर्वस्तुतः पारमार्थिकाभेदपरा पर्यवस्यतीति प्रत्युक्तम् ।

भेदस्यापि 'तत्सत्यम्'इत्यादि श्रुतिप्रतिपन्न सत्यब्रह्मस्वरूपरूपत्वाङ्गीकारात् भेदश्रुति-रपि वस्तुतः पारमार्थिक(सत्य-पा)भेदपरा पर्यवस्यतीति सुवचत्वात् । नच तथाऽपि

ईश्वरप्रतियोगिकजीवानुयोगिको भेदः पारमार्थिको न स्यात् । तस्य जीवस्वरूपरूपत्वेन (-रूपत्वेऽपि- पा) जीवस्यैव सत्यत्वे मानाभावादिति वाच्यम् । 'सत्यआत्मा सत्योजीवः सत्यं भिदा' इति श्रुतेरेव जीवस्य सत्यत्वे मानत्वात् । तदनङ्गीकारे चेश्वरप्रतियोगिक-जीवानुयोगिकाभेदोऽपि पारमार्थिको न स्यात् । तस्य जीवस्वरूपरूपत्वेन(पि) जीवस्यैव सत्यत्वे मानाभावात् इत्यपि सुवचत्वात् । नच द्रव्याभिन्नस्य घटस्य द्रव्यत्ववत् सत्यब्रह्मा-भिन्नस्य जीवस्यापि सत्यत्वं दुर्निवारत्वमिति वाच्यम् । तथासति तादृशसत्यब्रह्माभिन्नतया जीवस्येव जडस्यापि पारमार्थिकसत्यत्वापातात् । 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इति जीवब्रह्माभेदश्रुतिवत् 'इदं सर्वं यदयमात्मा' 'स एवेदं सर्वं' 'ब्रह्मैवेदं सर्वम्' इत्यादि-जडब्रह्माभेदश्रुतीनामपि सत्वात् । नच नियामकं विना जीवब्रह्माभेदश्रुतिरेव न बाधायां सामानाधिकरण्यरूपाभेदपरा, किन्तु 'मृद् घटः, एतत् मृदेव घटः, द्रव्यं घट' इत्यादिवत् स्वरूपाभेदपर्यवसायि सामानाधिकरण्यपरा । जडब्रह्माभेदश्रुतिस्तु बाधायामेव सामानाधि-करण्यरूपाभेदपरा नत्वन्यार्थेति शक्याभ्युपगम् । तथा सति वैपरीत्यस्यैवाभ्युपेयत्वात् ।।

ननु 'एकमेवाद्वितीयम्' 'नेह नानाऽस्ति किञ्चन' इत्यादिब्रह्मातिरिक्तजडमात्रमिथ्यात्वाऽ-वेदकश्रुतय एव जीवब्रह्माभेदवत् जडब्रह्माभेदो न श्रुतितात्पर्यगोचर इत्यत्र नियामकाः । नहि सत्यमिथ्यार्थयोः बाधायां सामानाधिकरण्यव्यतिरेकेण स्वरूपेणाभेदो युज्यत इति चेदत्र ब्रूमः । आसां श्रुतीनां ब्रह्मातिरिक्तजडमिथ्यात्वपरत्वं न तावन्मिथ्यामृषालीकादि-शब्दसमभिव्याहारेण सुनिरूपम् । आसु तेषां शब्दानामनुपलम्भात् । 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह'[१] इत्यादिश्रुतीनां मिथ्याशब्दसमभिव्याहृतत्वेऽपि पराभिमतमिथ्यात्वपरत्वाभावेन सत्यपि तत्समभिव्याहारे न तत्परत्वनियमसिद्धिः । नापि निषेधसमभिव्याहारेण तासां तत्परत्वसिद्धिः ।

'अतिरात्रे षोडशिनं गृह्णाति', 'नातिरात्रे षोडशिनं गृह्णाति',
'ब्राह्मणो न हन्तव्यः', 'न कलञ्जं भक्षयेत्', 'नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञं नाप्रज्ञं न प्रज्ञानघनमव्यपदेश्यमलक्षणम्'

(१) शिक्षाग्रन्थे, व्याकरणमहाभाष्ये पस्पशाह्निकोदाहृतवाक्यम् ।।

इत्यादीनां तत्समभिव्याहृतत्वेऽप्यतत्परत्वात् । नाप्युपक्रमादितात्पर्यलिङ्गसत्वेन तासां तत्परत्वसिद्धिः । 'एकमेवाद्वितीयम्' इत्यादिश्रुत्यर्थव्याख्यानावसरसमये तथा तत्परत्वस्य निरसिष्यमाणत्वात् (१) ॥

॥ इति प्रामाण्यस्य स्वतस्त्वात् भेदस्य सत्यत्वम् ॥

## ॥अथ श्रुतिनिषेधस्य जडांशे इव जीवांशेऽपि समानत्वम् ॥

अपि च 'एकमेवाद्वितीयम्' 'नेह नानाऽस्ति किञ्चन' 'नेति नेति' इत्यादिनिषेधस्य जडजीवसाधारणतया प्रवृत्तस्य जडांश एव मिथ्यात्वपरत्वं न जीवांश इत्यत्र न नियामकभावो युज्यते । प्रत्युत 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना विशेषतोऽपि जीवस्यैव निषेधदर्शनेन तस्यैव मिथ्यात्व स्वीकारो युक्तः । नच 'नेह नानाऽस्ति' इत्यादेरविशेषतः प्रवृत्तनिषेधस्य जीवांशे भेदादिरूपविशेषणमात्रविषयत्वम् । जडांशे तु भेदादिरूप विशेषणविशिष्टविषयत्वम् इत्याश्रयणेनाभिनिवेशादन्यत् कारणमस्ति ॥

एतेन जीवस्य नित्यपुरुषार्थरूपमोक्षप्रतिपादनपरशास्त्रप्रामाण्यान्यथाऽनुपपत्तिरेव विशेषतः प्रवृत्तत्वेऽपि निषेधस्य जीवांशे भेदादिरूपविशेषणमात्रविषयत्वं, नतु जडांश इव विशिष्टविषयत्वमित्याश्रयणे कारणं, नत्वभिनिवेशमात्रमिति निरस्तम् ॥

निषिद्धत्वेन मिथ्यात्वेऽपि जीवस्य ब्रह्माभिन्नत्वरूपमोक्षशब्दित नित्यपुरुषार्थस्य सम्भवेन तच्छास्त्रप्रामाण्योपपत्त्या जडांश इव जीवांशेऽपि(जीवात्माऽपि-पा) निषेधस्य विशिष्टविषयत्वायोगात्(विषयत्वात्यागात्-पा )। न च जडस्येव जीवचैतन्यस्य वा तस्य ब्रह्माभिन्नत्वरूपस्य अविद्यानिवृत्तिरूपस्य वा नित्यपुरुषार्थस्य वा मिथ्यात्वे एव किं मानमिति शङ्क्यम् । 'नेह नानाऽस्ति किञ्चन' 'एकमेवाद्वितीयम्' इत्यादिश्रुतीनामेव त्वद्रीत्या तत्र मानत्वात् । नहि वियदादिकमिव जीवचैतन्यं वा, तस्य ब्रह्माभिन्नत्वरूपो वा, अविद्यानिवृत्तिरूपो वा, नित्यपुरुषार्थो वा, न तया श्रुत्या निषिध्यत इत्यस्ति । नच तदभिन्नत्वम्, अविद्यानिवृत्तिजीवचैतन्यं वा न निषेधश्रुतिगत'किञ्चन'शब्दार्थः । नापि यतःकुतश्चित् नाना, न द्वितीयं वा ॥

(१) 'प्रथमपरिच्छेदान्ते एकमेवाद्वितीयम्' इति श्रुत्यर्थविवरणावसरे (पु.३०३) निरसिष्यमाणत्वात् ॥

ननु जीवचैतन्यस्य वा तस्य ब्रह्माभिन्नत्वस्य वाऽविद्यानिवृत्तेर्वा वस्तुतो ब्रह्मभिन्नत्वरूपनानात्वं वा, द्वितीयत्वं वा, नास्ति इति 'एकमेवाद्वितीयम्' इति 'नेह नानाऽस्ति किञ्चन' इत्यादिनिषेधो न तद्विषय इति चेन्न । वस्तुतो नानात्वरूपभिन्नत्वस्य द्वितीयत्वस्य वा परमते जडेऽप्यभावेन निषेधो न तद्विषय इत्यप्यापातात् । तथा तथा प्रतीतत्वरूपप्रसक्तिमात्रस्य निषेधप्रवृत्तिं प्रति प्रयोजकत्वे च तस्य जडेश इव जीव चैतन्यादावपि सत्त्वेन निषेधविषयत्वस्य दुर्निवारतया जडवत् तस्यापि मिथ्यात्वापातात् । नचैवं जीवचैतन्यस्य तस्य ब्रह्माभिन्नत्वरूपस्याविद्यानिवृत्तिरूपस्य वा नित्यपुरुषार्थस्य वा शुक्तिरूप्यवत् वियदादिवच्च मिथ्यात्वे ज्ञाननिवर्त्यत्वप्रसङ्गः । तन्नित्यपुरुषार्थत्वाऽवेदकशास्त्रप्रामाण्यनिर्वाहाय 'यन्मिथ्या तदवश्यं ज्ञाननिवर्त्यमि'ति(ज्ञानेनिवर्त्यमिति-पा) नियमे 'नित्यपुरुषार्थतद्भाग्भ्याम् अन्यत् यन्मिथ्या तत् ज्ञाननिवर्त्यम्' इति सङ्कोचाश्रयणात् । मोक्षापरनामक-पुरुषार्थनित्यत्वप्रतिपादनपरशास्त्रापेक्षया केवलनियमस्य दुर्बलत्वेन तत्रैव सङ्कोचाश्रयणौचित्यात् । अज्ञानादौ अनादित्वस्येव मोक्षापरनामकनित्यपुरुषार्थस्य तद्भाजकस्यानन्तत्वस्यापि मिथ्यात्वाविरोधित्वोपपत्तेः । तस्मान्निषेधस्य जडांश इव जीवचैतन्यांशेऽपि विशिष्टविषयत्वं दुर्वारम् । तथा च त्याज्यं वा जीवचैतन्यादेः सत्यब्रह्माभिन्नत्वेन सत्यत्वं, स्वीकार्यं वा जीवचैतन्यादेरिव जडस्यापि सत्यब्रह्माभिन्नतया सत्यत्वमिति सेयमुभयतः पाशारज्जुः ॥

एतेन जीवब्रह्माभेदरूपस्याविद्यानिवृत्तिरूपस्य वा मोक्षापरनामकनित्यपुरुषार्थस्य ब्रह्मातिरिक्तस्य पारमार्थिकसत्यत्वाङ्गीकारेऽद्वैतश्रुतिविरोधः । मिथ्यात्वाङ्गीकारे च ज्ञाननिवर्त्यत्वापत्त्या नित्यपुरुषार्थत्वानुपपत्तिः । ब्रह्मस्वरूपरूपत्वाङ्गीकारे च श्रवणादिसाध्यज्ञानसाध्यत्वानुपपत्तिरिति प्रत्यूढम् ॥

उक्तरीत्या नित्यपुरुषार्थस्य ब्रह्मातिरिक्तत्वेन मिथ्यात्वेऽपि ज्ञाननिवर्त्यत्वसम्भवात् । एवं च नाद्वैतश्रुतिविरोधोऽपि । परमार्थसत्यद्वितीयवस्त्वङ्गीकारे एव तद्विरोधप्रसरात् । तस्मात् जीवचैतन्यादेरिव जडस्य ब्रह्मातिरिक्तत्वेन प्रत्यक्षादितः प्रसक्तस्य ब्रह्मणि श्रुतिनिषिद्धत्वमात्रेण न मिथ्यात्वविशेषरूपं व्यावहारिकत्वं युज्यते ॥

॥ इति श्रुतिनिषेधस्य जडांशे इव जीवांशेऽपि समानत्वम् ॥

## ।। अथ व्यावहारिकस्वरूपनिरासः ।।

एतेनैव 'नान्योऽतोऽस्तिद्रष्टा' इत्यादिश्रुतिनिषिद्धतया जीवेश्वरभेदस्य मिथ्यात्वविशेष-रूपव्यावहारिकत्वस्य आवश्यकतया तादृशभेदप्रतिपादिकता 'द्वा सुपर्णा'इत्यादिश्रुति-र्व्यावहारिकभेदपरैवापन्ना, न कथमपि पारमार्थिकभेदपरेति निरस्तम् ।।

'न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान् रथयोगान् पथः सृजत' इत्यादिश्रुत्या ईश्वरसृष्टस्यापि स्वप्नपदार्थस्य रथादेः श्रुतिनिषिद्धत्वेन व्यावहारिकत्वापत्तेः । परेण व्यावहारिकत्वस्य ब्रह्मज्ञानमात्रबाध्यत्वाङ्गीकारेण(अङ्गीकारे स्वाप्नपदार्थ-पा) अतथाभूत-स्वाप्नपदार्थस्य व्यावहारिकत्वानुपगमात् । नच व्यावहारिकत्वे ब्रह्मातिरिक्तत्वे सत्या-गन्तुकदोषाजन्यत्वमेव(दोषजन्यं-पा) तन्त्रम्, नतु ब्रह्मज्ञानमात्रबाध्यत्वमिति वाच्यम् । अत्यन्तासतोऽपि तत्त्वेन व्यावहारिकत्वापत्तेः । नचेष्टापत्तिः । प्रतिपत्तिविषयीभूत सकल-सम्बन्धेन सकलप्रतिपन्नोपाधिस्थनिषेधप्रतियोगिन एव परमते मिथ्यात्वात् । असतश्च प्रतिपन्नोपाधेरभावात् । नचागन्तुकदोषजन्यं प्रातिभासिकम्, अनागन्तुकदोषजन्यं तु व्याव-हारिकमिति तद्विवेक इति वाच्यम् । तथासति प्रातिभासिकमात्रे घटादिवदयोग्ये कदापि जन्यत्वाननुभवेन दोषजन्यत्वस्य सुतरामसिद्धत्वेन अप्रातिभासिकत्वापत्तेः । पञ्चमप्रकारा-विद्यानिवृत्तिर्मुक्तिरिति पक्षे तत्राव्यवहारिकेन आगन्तुकदोषरूपाविद्याजन्यत्वस्य सत्त्वात् । व्यावहारिकप्रातिभासिकान्यतरजनकत्वान्यदोषत्वानिरुक्तेश्च ।।

।। इति व्यावहारिकस्वरूपनिरासः ।।

## ।। अथ भ्रमविषयस्य जन्यत्वनिरासः ।।

नच घटादौ दण्डाद्यन्वयव्यतिरेकयोरिव शुक्तिरूप्यादौ यो सादृश्यादिस्तत्तद् दोषान्वय-व्यतिरेकदर्शनेन कादाचित्कत्वदर्शनेन च कार्यत्वं दुर्वारमिति वाच्यम् । तथासति घटजातीय इव तज्जातीये उत्पत्तिविनाशानुभवप्रसङ्गात् । दोषान्वयव्यतिरेकयोः 'मम तत्र भ्रमो जातः' इत्यनुभवसिद्ध एवोपक्षीणत्वेन रजते दोषजन्यत्वाभावात्(दोषजन्यत्वाकल्पकत्वात्-पा)।।

एतेन 'मम तत्र भ्रमो जात' इत्यनुभव एव रजतोत्पत्तौ मानम् । 'भ्राम्यत इति भ्रमः' इति व्युत्पत्त्या रजतस्यापि भ्रमशब्दार्थत्वादिति परास्तम् ।।

भ्रमत्वमगृहीत्वा रजते तत्कर्मत्वग्रहणासम्भवेन लाघवादावश्यकत्वाच्च ।'भ्रमो जातः' इत्यनुभवे भ्रान्तेरेव विषयत्वेन रजतस्य तेन रूपेण तद्विषयत्वे मानाभावात् । 'मम तत्रेदानीं ज्ञानं जातम्' इतिवत् 'तत्रेदानीं घटो जातः' इतिवच्च 'तत्रेदानीं रजतं जातम्' इत्यननुभवाच्च । नच शुक्तिरूप्यस्यापरोक्षप्रतीतिविषयतया अपरोक्षप्रतीतेश्च विषयसत्वाविनाभूतत्वेन, शुक्तौ रजतसत्त्वस्यावश्यकत्वे भ्रमकाले इव तत्पूर्वकालेऽपि तत्र तत्सत्त्वे आपणस्थरजत इव पूर्वमपि तदपरोक्षज्ञानस्य दुर्वारत्वापत्तिपरिहाराय तदा तत्र सत्वं, भ्रमकाले एव सत्वमित्यवश्यमङ्गीकार्ये तत्रोत्पत्तिं विना तत्सत्वायोगेन तदुत्पत्तावनुपपत्तिरेव मानम् । अन्यथा सौरालोकनक्षत्रगत्याद्युत्पत्तिविनाशयोरसिद्धिप्रसङ्ग इति वाच्यम् । ज्ञानस्य विषयाव्यभिचारित्वे जातिरूपतया सामान्यरूपतया च लाघवेन ज्ञानत्वमेव तन्त्रम्, नत्वथाभूतमपरोक्षत्वं गौरवाद् इत्यपरोक्षभ्रमस्थलेऽपि अनिर्वचनीयख्यात्यापत्तेः । सत्ख्यातेरेवानिर्वचनीयख्यातिनामकरणेन स्वीकारापत्तेश्च । नच स्मृतौ व्यभिचारः । पक्षतुल्यत्वात् ॥

किञ्च सन्निकृष्टे मांसपिण्डे 'सोऽयं देवदत्तः'इति प्रत्यभिज्ञानस्यापरोक्षतया तस्य च विषयाऽव्यभिचारित्वनियमेन तत्तारूप तद्देशकालयोरपि तदोत्पत्त्यङ्गीकारप्रसङ्गः । किञ्च 'भूतले घटो नास्ति' 'अत्र भूतले घटो ध्वस्तः' इति प्रतियोगिविशिष्टाभावज्ञानस्यापरोक्षतया तत्काले प्रतियोग्युत्पत्तिप्रसङ्गः । नच प्रत्यभिज्ञानमभावज्ञानं च तत्तांशे प्रतियोग्यंशे स्मरणं, पिण्डांश अभावांशेतु ग्रहणात्मकमिति ज्ञानद्वयमेवेति वाच्यम् । तथासति परेण प्रत्यभिज्ञया क्षणिकवादिनं प्रति अभेदसाधनमुखेन विषयस्थैर्यासमर्थनप्रसङ्गात् । विशेषदर्शनेन व्यवहारस्यैव बाधो नतु ज्ञानस्येति स्वीकुर्वतोऽख्यातिवादिनः प्राभाकरस्य लब्धावसरत्वापत्तेश्च । तन्मतेऽपि 'सोऽयं गकारः' इति प्रत्यभिज्ञया वर्णस्थैर्यासिद्धेश्च(वर्णस्थायित्वासिद्धेश्च-पा) । अभावे प्रसिद्धघटीयत्वासिद्ध्यापत्तेश्च घटतदभावज्ञानयोः परस्परवार्ताऽनभिज्ञत्वात् ॥

नन्वस्तु तत्र ज्ञानमेकम् । किन्तु तत्ता प्रतियोग्यंशयोः तत्स्मरणात्मकं, पिण्डाभावांशयोस्तु ग्रहणात्मकमिति नोक्तदोषावकाश इति चेन्न । भ्रमस्थलेऽपि 'इदं रजतम्' इति ज्ञानस्य तद्वदेव ग्रहणस्मरणात्मकैकज्ञानत्वापत्त्या रजतोत्पत्त्यसिद्धि तादवस्थ्यात् । नहि 'इदं रजतं साक्षात्करोमि' इत्यनुव्यवसायेनेव 'तमिमं देवदत्तं साक्षात्करोमि' इत्यनु-

व्यवसायेन वा 'तद् घटाभावं साक्षात्करोमि' इत्यनुव्यवसायेन वा तत्तांशे प्रतियोग्यंशे वा व्यवसायस्य नाऽपरोक्षत्वं विषयीक्रियते । येन तस्य व्यवसायस्य तदंशे स्मृतिरूपत्वं पिण्डाभावांशे तु अपरोक्षत्वमित्युच्येत । नच तद् द्रव्यसाक्षात्कारे तदिन्द्रियसंयोगस्य विशेष-सामग्रीत्वेन तद्बाधादेव तदंशे तस्यापरोक्षत्वं बाधितमिति वाच्यम् । तदंशेऽप्यनुव्यव-सायसिद्धापरोक्षत्वस्य दुरपह्नवत्वेन तदनुरोधेनैव सामग्रीकल्पनात् । तथाऽपि क्लृप्तरजतस्य तत्र भावे(ने) क्लृप्तसामग्री न कापि सम्भवतीति चेत्, तर्हि उत्पत्तिविनाशरहितमत्यन्ता-सदेव रजतं तत्र विषय इत्यङ्गीक्रियताम् । किमननुभवसिद्धोत्पत्त्यादिकस्य क्लृप्तसामग्री-विनाऽप्यक्लृप्तसामग्री प्रयुक्तोत्पत्त्यादिकस्यानिर्वचनीयस्य रजतस्य विषयतया? उत्पत्त्यादि-विशिष्टाक्लृप्तरजत तद्सामग्री-तदपरोक्षज्ञानसामग्रीकल्पनायां गौरवात् । असत्ख्यातिवादे तु अक्लृप्ततदपरोक्षज्ञानसामग्रीमात्रकल्पनेन लाघवात् । नचानिर्वचनीयख्यातिवादेऽपि अक्लृप्त-रजतोत्पत्तिसामग्रीमात्रं कल्प्यम् । नतु तथाविधापरोक्षज्ञानसामग्र्यपि, तदपरोक्षज्ञानस्य साक्षिरूपत्वाङ्गीकारादिति वाच्यम् । तथाऽप्यनिर्वचनीयरजतनिवृत्तिसामग्रीकल्पनेन गौरव-तादवस्थ्यात् । 'ममेदानीमेव रजतज्ञानमुत्पन्नं विषयान्तरसञ्चारेण च तन्नष्टम्' इति चानु-भवनिर्वाहाय केवलचैतन्यस्यासङ्गैकस्वभावत्वेन विषयाभासकत्वनिर्वाहाय चाविद्यानिवृत्ति-विशिष्टस्य तदुपहितस्य वा तस्यावश्यकत्वेन ज्ञानस्य अनभिषिक्ताविद्यावृत्तिसामग्रीकल्पन-स्याप्यावश्यकत्वाच्च ॥

॥ इति भ्रमविषयस्य जन्यत्वनिरासः ॥

## ॥ अथ रजतज्ञानस्य साक्षिरूपत्वनिरासः ॥

किञ्च रजतज्ञानस्याचाक्षुषत्वे 'चक्षुषा रजतं साक्षात्करोमि' इत्यनुव्यवासायोऽनुपपन्नः । चाक्षुषत्वस्य चक्षुर्जन्यज्ञानगतजातित्वेन साक्षिणश्चातज्जन्यत्वेन तादृशानुव्यवसाया-निर्वाहात् । नच इदमाकारान्तःकरणवृत्तेः चक्षुर्जन्यतया तद्गतचाक्षुषत्वमादायैव तन्निर्वाह इति वाच्यम् । यस्यैव साक्षिणो रजतभासकत्वं तस्य तथाऽपि चाक्षुषत्वासमर्थनात् । नह्यन्यपाण्डित्येनान्यः पण्डितो भवति । नहि तदवच्छिन्नस्य तदुपहितस्य वा चैतन्यस्यैव साक्षित्वेन तद्भासकत्वस्वीकारात् तन्निर्वाहः । अत एव चक्षुरन्वयव्यतिरेकानुविधानम्

अनुभवसिद्धमुपपद्यत इति वाच्यम् । तथाऽपि रजतनाश सामग्र्यङ्गीकारप्रयुक्तगौरवदोषानुद्धारात् ॥

अपि चैवमुत्पादविनाशशून्यत्वेनोभयवादिसम्प्रतिपन्नस्य क्लृप्तरजतविलक्षणत्वेन च तथा सम्प्रतिपन्नस्य रजतस्य अत्यन्तासत्वमङ्गीकृत्य तस्यैव साक्षिभास्यत्वमङ्गीक्रियताम् । तथा सति रजतज्ञानसामग्रीवत् रजतोत्पत्तिविनाशसामग्र्योरपि अक्लृप्तयोरकल्प्यत्वेन लाघवसम्भवात् । अन्यथाख्यातिवादे उपस्थितरजतस्यैवारोप्यत्वेन लाघवसत्वेऽपि क्लृप्तसामग्रीं विना रजतभानार्थं सामग्र्यन्तरकल्पनस्य सत्वेन गौरवाविशेषात् । अन्यथा 'मिथ्यैव रजतमभात्' इति रजतमिथ्यात्वविषयकव्यवसायानुव्यवसायानुपपत्तेः । नहि स्वरूपेण सत्यवस्तुनि तदधिकरणनिष्ठात्यन्ताभावप्रतियोगिकत्वज्ञानमात्रं तन्मिथ्यात्वव्यवहारे कारणमङ्गीकर्तुं शक्यम् । अतिप्रसङ्गात् । किन्तु सर्वत्रप्रतिपन्नोपाधौ प्रतिपत्तिविषयीभूतसकलसम्बन्धेनं स्वरूपेणात्यन्ताभाव प्रतियोगित्वरूपनिःस्वरूपत्वेन ज्ञानमेव । नहि नृशृङ्गादेरपीतोऽन्यत् असत्वमन्विष्यमाणमुपलभ्यते । एवं च बाधावतारानन्तरं 'शुक्तिरूप्ये मिथ्यैव रजतमभात्' 'असदेव रजतं प्रत्यभात्' इत्याद्यनुभवेन तद्रजतज्ञानस्य मिथ्यारजतविषयत्वमावेद्यत इति तस्य निरुक्तनिःस्वरूपत्वरूपमत्यन्तासत्वं मिथ्यात्वापरपर्यायं दुर्वारमिति न तस्यागन्तुकदोषजन्यत्वेन प्रातिभासिकत्वं युज्यत इति ॥

॥ इति रजतज्ञानस्य साक्षिरूपत्वनिरासः ॥

॥ इति प्रसङ्गात्स्वाभिमतासत्ख्याति समर्थनम् ॥

## ॥अथ परोक्तमिथ्यात्वस्य श्रुत्यनभिप्रेतत्वसमर्थनम् ॥

किञ्च एतादृशमिथ्यात्वं 'नेह नानास्ति'इत्यादिनिषेधश्रुत्यनुरोधेन न जडप्रपञ्चेऽङ्गीकर्तुं शक्यम् । तस्य ततः सर्वथाऽप्रतीतेः । अपदार्थत्वात् अवाक्यार्थत्वाच्च । नच प्रत्यक्षादेर्दुर्बलतया सङ्कोचकत्वायोगात् सङ्कोचकान्तराभावाच्च(सङ्कोचकान्तरानुपलम्भाच्च-पा) परिशेषात् तथाविधमेव मिथ्यात्वं 'नेह नाना'इत्यादिश्रुत्यर्थः पर्यवस्यतीति वाच्यम् । एवं हि 'ब्राह्मणो न हन्तव्यः' इत्यादिनिषेधस्याप्युक्तरीत्या ब्राह्मणहननादौ कर्तव्यत्वस्य तादृशमिथ्यात्वमेवार्थ इत्यापातात् ।

अपि चैवंविधमिथ्यात्वस्य 'नेह नाना' इत्यादि श्रुत्यर्थत्वे 'न तत्र रथाः न रथयोगाः न पन्थानो भवन्ति' इत्यादिश्रुतिप्रतिपन्नस्वाप्नपदार्थाविशेषापत्त्या वियदादिप्रपञ्चस्य अव्यावहारिकत्वप्रसङ्गः । नहि जाग्रत्स्वप्नप्रपञ्चयोः उभयोरपीश्वरसृष्टत्वाविशेषे श्रुतिनिषिद्धत्वाविशेषे च तुल्ये सति स्वाप्नप्रपञ्च एव प्रातिभासिको न जाग्रत्प्रपञ्चः इत्यत्र विशेषहेतुरस्ति ॥

अपि च प्रातिभासिकरजतादौ अर्थक्रियासामर्थ्यविरोधितया निश्चितनिरुक्तमिथ्यात्वमेव 'नेह नानाऽस्ति किञ्चन' 'न तत्र रथा' इत्यादिश्रुत्या जाग्रत्प्रपञ्चस्वाप्नप्रपञ्चयोः प्रतिपाद्यते चेत् तद्वदेवानयोरप्यर्थक्रियासामर्थ्याभावप्रसङ्गः ॥

एतेन स्वरूपेण प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्वं मिथ्यात्वं नोदाहृतश्रुत्यर्थः, येन उक्तदोषावकाशः । किन्तु पारमार्थिकत्वाकारेणोक्तनिषेधप्रतियोगित्वमेवेति निरस्तम् । अस्याप्यपदार्थत्वात् अवाक्यार्थत्वाच्च । श्रुत्या स्वस्वरूपेणैव प्रपञ्चस्य निषेधप्रतीतेश्च । पारमार्थिकत्वस्याबाध्यत्वरूपतया बाध्यत्वस्य च तत्र प्रविष्टस्य निषेधप्रतियोगित्वानतिरेकात्, तत्रापि स्वरूपेण निषेधप्रतियोगित्वाङ्गीकारे उक्तदोषप्रसरात् । तत्परिहाराय तत्रापि पारमार्थिकत्वाकारेणेति विवक्षावश्यकत्वेन तद्ज्ञप्तौ तद्ज्ञप्तिः कारणत्वेनापततेति आत्माश्रयादिदोषाच्च । ब्रह्मणोऽपि निर्धर्मकत्वेन पारमार्थिकत्वरूपधर्मविशेषरहिततया प्रपञ्चवन्मिथ्यात्वापत्तेश्च । 'केवलो निर्गुणश्च' इति ब्रह्मणोऽपि गुणशब्दितधर्मवत्तया निषेधात् । स्वरूपदेशकालसम्बन्धातिरेकेण पारमार्थिकत्वप्रतीतौ झटिति भासमानस्य अन्यस्याभावेन तेषामेव पारमार्थिकत्वरूपत्वावश्यम्भावाच्च । बाधाभावस्यापि स्वरूपदेशकालसम्बन्धिष्वेव सत्वेन तेषामेव पारमार्थिकव्यवहारालम्बनत्वात् । प्रथमोपस्थितत्वात्, प्रतीतिबलेन देशकालयोरपि देशकालसम्बन्धित्वोपगमेन तयोरपि पारमार्थिकत्वानपायात् ॥

एतेन आश्रयतया सत्यतया च श्रुतिप्रतिपन्नं ब्रह्मस्वरूपमेव प्रपञ्चे पारमार्थिकत्वव्यवहारालम्भनम्, एकत्वात् सर्वप्रपञ्चसम्बन्धित्वाच्च । नतु तत्तत्पदार्थस्वरूपम् । अनन्तत्वेन गौरवात् । अत एव न देशकालसम्बन्धावपि तदालम्बनम् । अनुगतासम्भव एव तदाश्रयणौचित्यात् । किञ्च देशकालसम्बन्धोऽपि न ब्रह्मसम्बन्धादतिरिच्यते । 'स एवाधस्तात्

स एव उपरिष्टात्' 'कालाय नमः कलविकरणाय नमः' इत्यादिश्रुत्या देशकालयोरपि ब्रह्मस्वरूपत्वाऽवेदनात् इति निरस्तम् ॥

एवमपि अननुगतालम्बनत्वानपायात्, प्रपञ्च इव ब्रह्मणि ब्रह्मभिन्नत्वाभावेन स्वसम्बन्धायोगात्, परमार्थव्यवहारे कचित् ब्रह्मस्वरूपं, कचित् सम्बन्ध इत्यालम्बनानेकत्वात्, ब्रह्मणो जगदुपादानत्वेनोपादेयं प्रत्युपादानस्यैव स्वरूपत्वेन सर्वत्र तद्व्यवहारे ब्रह्मस्वरूपमेकमेवालम्बनमिति चेन्न । तदनुपादेयस्यानाद्यज्ञान जीवब्रह्मविभागादेरपि तद्व्यवहारभाजनेन एकस्यानभ्युपगमात्(भाजोनेकस्याभ्युपगमात्-पा)। तथाऽपि सर्वत्र व्यवहारे ब्रह्मस्वरूपालम्बनत्वमविशिष्टमिति चेन्न । सम्बन्धस्येव ब्रह्मस्वरूपस्य प्रपञ्चे तद्व्यवहारानालम्बनत्वात् । सम्बद्धब्रह्मणो वा ब्रह्मसम्बन्धस्यवा, इत्यत्र विनिगमकाभावाच्च । नहि ब्रह्मीय तद्व्यवहार इव प्रपञ्चीय तद्व्यवहारे ब्रह्मसम्बन्धयोर्न विषयः ॥

किञ्चास्तु सर्वत्र तद्व्यवहारे ब्रह्मस्वरूपमनुगतमेकमेवालम्बनम्(ब्रह्मस्वरूपमेकमेवानुगतमालम्बनम्-पा) । तथाऽपि न प्रपञ्चस्य पारमार्थिकसत्वक्षतिः । नहि सत्ताजातौ 'सतीयम्' इति व्यवहारवत् सम्बद्धद्रव्यगुणकर्मसु 'अयं घटःसन्, परिमाणं सत्, कर्म सत्' इति व्यवहारोऽबाधितो नेत्यस्ति । ब्रह्मणि जगत इव जगत्यपि -

**'सर्वेषु भूतेष्वेतम्'**

**'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः'**

इत्यादिश्रुत्या ब्रह्मणो विद्यमानत्वाऽवेदनात् । नहि नित्यनिर्दोषश्रुत्या 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति'(भ.गी.६.३०) इत्यादिस्मृत्या(स्मृतौ-पा) चाऽवेदितः परस्परसम्बन्धः आध्यासिक इति स्वीकारार्हम् । तथासति ब्रह्मणोऽपि जगत्याध्यासिकसम्बन्धापातात् । अविशेषात् ब्रह्मणि जगत इव जगत्यपि ब्रह्मणो 'नेह नाना' इत्यादिना निषिद्धत्वाविशेषेण 'ब्रह्मणि जगत एवाध्यसो नतु जगति ब्रह्मण' इत्यत्र तस्यानियामकत्वात् । 'एकमेवाद्वितीयम्' इत्यत्र 'न विद्यते द्वितीयं यस्मिन्' इति विग्रहबलेन द्वितीयशब्दितप्रपञ्चं

प्रति ब्रह्मण आधारत्वलाभवत् 'नेह नानाऽस्ति' इत्यत्र 'किञ्चन'शब्दितब्रह्मप्रत्यपि जगत इव शब्देनाधारत्वलाभात् । 'यदेवेह तदमुत्र यदमुत्र तदन्विह' (कठ-उ-२-१) इति पूर्ववाक्ये जगदर्थकत्वेन निश्चितस्यैवेहशब्दस्येति वाक्ये 'इह' इति प्रत्यभिज्ञानात् । तस्मात् पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वरूपमपि मिथ्यात्वं न 'नेह नाना' इत्यादि श्रुत्यर्थः ॥

अपि च स्वरूपेण निषेधप्रतियोगित्वं श्रुतं परित्यज्य पारमार्थिकत्वाकारेण निषेधप्रतियोगित्वं मिथ्यात्वमिति सङ्कोचेन अश्रुतार्थपरत्वाङ्गीकारेऽश्रुतत्वाविशेषेण व्यावहारिकत्वक्षणिकत्वाद्याकारेण जगतो निषेधप्रतियोगित्वाङ्गीकारो युक्तः । तथासति प्रमाणान्तरानुग्रहलाभात् । न च सम्भावितदोषत्वेन प्रत्यक्षादिकमप्रमाणमेव । श्रुतावपि शब्दत्वेन दोषसम्भावनायाः लौकिकशब्द इव सुलभत्वात् । उपक्रमादितात्पर्यलिङ्गस्य प्रत्यक्षेणैव ग्राह्यतया तस्याप्रमाणत्वे उपक्रमादित्वेन गृहीतस्यानुपक्रमादित्वापत्त्या तात्पर्यभ्रमरूपदोषसम्भावनया क्वचिदप्यर्थे वेदस्य प्रामाण्यनिश्चयासम्भवेन पराभिमतवेदार्थनिश्चयानुपपत्तेश्च । शब्दे यो दोषत्वेन क्लृप्तस्तदभावनिश्चयेनैव वेदस्य स्वतः प्रामाण्यनिर्वाहे च प्रत्यक्षादावपि यो दोषत्वेन क्लृप्तस्तदभावनिश्चयेनैव, तस्य स्वतः प्रामाण्यनिर्वाहसम्भवात् ॥

अपि चैवमेव प्रत्यक्षस्य अप्रामाण्याङ्गीकारे पराभिमतार्थेषु साधकत्वेन यावती श्रुतिः श्रुतित्वाभिमता तावत्याऽप्यतच्छ्रुतित्वापत्त्या पराभिमतार्थसिद्धिर्दत्तजलाञ्जलिः स्यात् ॥

एतेन 'स एवाधस्तात्' 'कालाय नमः' इत्यादिश्रुत्या देशकालयोरपि ब्रह्मस्वरूपत्वसिद्धिरपि निरस्ता । एतेनैव स्वरूपेणैव निषेधप्रतियोगित्वं मिथ्यात्वम् । शुक्तिरूप्यादौ तेनैव तत्प्रतीतिव्यवहारदर्शनादिति निरस्तम् ॥

शुक्तिरूप्यादेः तथानिषेधे नृशृङ्गादिवदसत्वापत्त्या पराभ्युपगतापरोक्ष्याभावप्रसङ्गात् । निषेधस्य प्रतियोग्यपेक्षयाधिकसत्त्वेन तत्सहिष्णुत्वेन स्वभावाविरुद्धे घटादाविव शुक्तिरूप्यादौ मिथ्यात्वाव्यवहारप्रसङ्गात् । लाघवेन प्रतियोगिनः अभावविरोधितायां सत्वस्यैव तन्त्रत्वाच्च ॥

किञ्चैवं 'नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्तिद्रष्टृ' इत्यादिश्रुत्या व्यावहारिकत्वाकारेण क्षणिकत्वाद्याकारेण वा जीवब्रह्मभेदो निषिध्यत इति वक्तुं शक्यत्वेन तन्निषिद्धभेदविषयतया 'द्वासुपर्णा' इत्यादि तद्भेदाऽवेदकश्रुतयोऽपि न व्यावहारिकतद्भेदपराः स्युः । नच भेदस्य पारमार्थिकत्वाकारेणैव प्रत्यक्षतः प्राप्तेस्तेनैवाकारेण श्रुत्या निषेधोऽङ्गीक्रियत इति वाच्यम् । पारमार्थिकत्वाकारस्य प्रत्यक्षायोग्यत्वात् । कथञ्चिद्योग्यत्वे वा द्रष्टृमात्रसम्बन्धितया तस्य तदयोग्यत्वात् । अन्यथा रामकृष्णादिकतिपयद्रष्टृषु तादृशभेदनिषेधः श्रुत्या प्रतिपाद्यते इत्यापातात् ॥

अपि च 'नान्योऽतोऽस्ति द्रष्टा'इत्यादिश्रुतयो न जीवब्रह्मभेदमात्रनिषेधिकाः । किन्तु तद्विशिष्टजीवचैतन्यनिषेधिका इति कथं न तस्यापि श्रुतिनिषिद्धभेदवत् व्यावहारिकत्व-प्रगङ्गः ?

किञ्च नित्यनिर्दोषतया स्वरूपप्रामाण्यग्राहकतया(अन्यतरप्रामाण्यग्राहकतया-पा) प्रतियोग्यु-पस्थापकतयोपजीव्यत्वेन च बलवत्परीक्षितसाक्षिप्रत्यक्षसिद्धजीवेश्वरभेदस्य तात्पर्यभ्रमसम्भा-वनाग्रस्ततया भ्रमजनकत्वेन शङ्कास्पदतया दुर्बलया 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्या निषेधो न कर्तुं शक्यः । नहि सति योग्यताव्यतिरेकनिश्चये शब्दः शाब्दबोधजननस्येष्टे ॥

किञ्च तादृशे विषये शब्दतः कथञ्चित् शाब्दबोधोदयेऽपि स न निश्चिताप्रामाण्यतया स्वविषयार्थसत्तानिश्चयरूपः । अपि च नित्यनिर्दोषतया श्रुतेः सामान्यतः प्रमाकरणत्व-रूपप्रामाण्यावधारणसत्त्वेऽपि(प्रत्यक्षार्थविरुद्धविषयस्वीकारेणैव-पा) आप्तवाक्यत्वस्य प्रामाण्योप-पादनवत् प्रामाण्योपपादनस्य सम्भवे निर्निमित्तं प्रमाणान्तरबाधकत्वस्वीकारायोगः । प्रत्यक्षस्याक्लृप्तविषयान्तरस्वीकारेण भिन्नविषयतया श्रुत्यबाध्यत्वाश्रयणेच अप्राप्तवाक्यस्य प्रामाण्योपपादनवत् 'गङ्गायां घोषः' इत्याद्यप्रामाणिकस्वीकारापत्तिः । नहि शुक्तिरूप्यवत् वियदादिप्रपञ्चस्य जीवेशभेदादेश्च प्राङ्मिथ्यात्वसिद्धेः सत्ताभेदः प्रमाणान्तरसिद्धः । येन तथाविधविषयभेदमादाय श्रुतिप्रत्यक्षयोः बाध्यबाधकभाव एव नेत्युच्येत ॥

अपि चैवं 'प्रस्तरो यजमानो न' 'सोमो यागो न' इति प्रत्यक्षयोरपि प्रातिभासिक-तद्भेदविषयत्वाश्रयणेन 'यजमानःप्रस्तरः' 'सोमेन यजेत' इतिश्रुत्या धर्मिसमसत्ताक-तदभेद-

परत्वाश्रयणप्रसङ्गः । नच प्रत्यक्षस्य भिन्नविषयतया श्रुत्यविरुद्धत्वप्रतिपादनाय तस्याप्रामाणिकोभयवाद्यसम्प्रतिपन्नव्यावहारिकशब्दित मिथ्यात्वविशेषभूतस्वदेशकालस्वाभावसहिष्ण्वर्थविषयत्वस्वीकारस्येव श्रुतेर्भिन्नविषयतया प्रत्यक्षाविरुद्धत्वप्रतिपादनाय तस्याप्रामाणिकोभयवाद्यसम्प्रतिपन्नार्थ परत्वस्वीकारस्यावश्यकताऽस्ति । येन पक्षद्वयेऽपि तद्दोषसाम्यमिति स्यात् । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिभेदनिषेधकश्रुतीनामपि, 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' (म-ना-उ-१-५) इत्यादिश्रुतिप्रतिपन्नेषु मर्त्यादिभावापन्नपरमात्मरूपेषु तत्तद्भावानुगुण-द्रष्टृत्व-श्रोतृत्व-मन्तृत्वादि-नियतविलक्षणचेष्टाविशेषदर्शनप्रसञ्जित-परमात्मप्रतियोगिकभेदनिषेधार्थमेव प्रवृत्तिसम्भवेन तत्परतयैव प्रामाण्यनिर्वाहे भेदविधितन्निषेधयोः भिन्नभिन्नसत्ताकाप्रामाणिकार्थपरत्वाश्रयणेन अविरोधस्य अवक्तव्यत्वाच्च।

यद्यपि सत्वं स्वरूपदेशसम्बन्ध-कालसम्बन्ध-सत्ताजाति-प्रामाणिकत्वाबाध्यत्वादिरूपतया अनेकविधम् अविगानेन व्यवह्रियमाणमनुभवसिद्धम् । एवमेतदभावरूपमसत्वमपि अनेकविधम् । तथाऽपि तत्सर्वमबाध्यमेवेति न पराभिमतसत्ताभेदः, उभयवादिसम्प्रतिपन्नो न वा प्रामाणिक इति तमादाय विधिनिषेधयोरविरोधवर्णनं न सर्वथा युक्तमिति ॥

अपि च ययोरन्योन्यं भावाभावत्त्वं प्रमाणसिद्धं तयोः कथञ्चित् विरोध आवश्यकः । अन्यथा लोके विरोधपदार्थस्य दत्तजलाञ्जलित्वापत्तेः । भावाभावयोरपि परस्परविरोधस्य तदभावकृतत्वात् ॥

अपि च प्रपञ्चविधिनिषेधश्रुत्योः नित्यनिर्दोषत्वाविशेषेऽपि तत्र विधेरेव व्यावहारिकार्थपरत्वं न निषेधस्येति कुतः? नचैवं व्यवस्थाश्रयणे विशेषहेतुरस्ति । निषेधस्य व्यावहारिकार्थपरत्वाश्रयणेऽपि अविरोधोपपादनसम्भवात् । नच नित्यनिर्दोषत्वाविशेषे विधेरेव व्यावहारिकपरत्वाश्रयणप्रयुक्तम् अतत्वावेदकत्वं सह्यम्, नतु निषेधस्य इत्यत्राभिनिवेशादन्यत् नियामकमस्ति । नच विधेर्निषेध्यसमर्पकतया निषेधशेषत्वात्तदेव नियामकमिति वाच्यम् । तथासति निषेधस्य पारमार्थिकत्वलाभार्थं तत्र लक्षणायाऽप्याश्रयणप्रसङ्गात् । नहि लक्षणं विना प्रपञ्चाभावः पारमार्थिकः,जीवेश्वरभेदाभावः पारमार्थिकः, इति वाक्यार्थो लभ्यते । नहि 'तत् सत्यं स आत्मा' इतिवत् 'तदभावः सत्यः' इत्यपि श्रुत्यन्तरमस्ति ॥

अपि च निषेध्यसमर्पकत्वेन निषेधशेषत्वमस्तीत्येतावता विधेर्व्यावहारिकार्थपरत्वाश्रयणे 'सत्यं ज्ञानमनन्तं ब्रह्म' 'नित्यं विज्ञानमानन्दं ब्रह्म' इत्यादिसद्रूपत्वज्ञानरूपत्वानन्दरूपत्व-रूपब्रह्मस्वरूपलक्षणविधेरपि –

**'इदं वा अग्रे नैव किञ्चनासीत्'**
**'असद्वा इदमग्र आसीत्'**
**'नोसदासीत्'**
**'नान्तःप्रज्ञं न बहिः प्रज्ञं नोऽभयतः प्रज्ञं नप्रज्ञं नाप्रज्ञं न प्रज्ञानघनम्'**
**'अलक्षणमदुःखमसुखं समम्'**

इत्यादिनिषेधशेषतया व्यावहारिकसद्रूपत्वादिब्रह्मस्वरूपलक्षणपरत्वापत्तेः । नहि ब्रह्मस्वरूपं व्यावहारिकमिति परेण स्वीकृतम् ॥

किञ्च 'अथ कस्मादुच्यते परं ब्रह्मेति' 'एतमेव ब्रह्मेत्याचक्षते' इत्यादिब्रह्मवाच्यत्व-विधायकमपि 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति ब्रह्मवाच्यत्वनिषेधशेष-तया व्यावहारिकतद्वाच्यत्वपरमिति स्यात् । अपि च 'न कलञ्जं भक्षयेत्' इत्यादाविव 'नेह नानाऽस्ति किञ्चन' 'नान्योऽतोऽस्ति द्रष्टा'इत्यादाविव निषेध्यसमर्पकस्य असत्वेन (सत्वेन-पा) अन्यत्र विद्यमानस्य 'यस्मिन् द्यौः' इत्यादि प्रपञ्चविधायकस्य 'द्वा सुपर्णा' 'स तत्त्वतोऽन्यः' 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यादिजीवेश्वरभेदविधायकस्य च निषेध्य-समर्पकत्वेन तन्निषेधशेषत्वे मानाभावः ॥

अपिच प्रपञ्चविधिनिषेधयोः अध्यारोपापवादन्यायेन प्रवृत्त्यभ्युपगमे 'आभासस्य प्रसक्त्या अनाभासस्य निषेधः' इति पक्षे 'पादोऽस्य विश्वा भूतानि' इतिश्रुतिप्रतिपन्न-परमात्मस्वाभाविकप्रदेशविशेषे 'नेह नानाऽस्ति किञ्चन' इत्यादिना स्वरूपेण निषिद्धस्यापि असद्विलक्षणतयाऽङ्गीकृतस्य प्रपञ्चस्य अप्रातिभासिकस्यानाभासत्वं ब्रह्मतुल्यसत्वमादायैव निर्वाह्यमिति साधुसमर्थितं निषेधबलेन प्रपञ्चस्य मिथ्यात्वम् ॥

किञ्च ब्रह्मणि प्रपञ्चस्य प्रसञ्जकान्तराभावेन श्रुत्यैव प्रसक्तस्य न 'नेह नाना' इत्यादिना प्रतिषेधः । तस्यानाभासप्रपञ्चान्तरविषयत्वात् । तथाच अनिषिद्धतया ब्रह्मवत् 'यस्मिन्

द्यौः' इत्यादिवाक्यप्रसक्तस्यापि प्रपञ्चस्य पारमार्थिकत्वं दुर्वारम् । नच 'नेह नाना' इत्यादि-निषेधस्यापि(निषेधस्यैव-पा) पारमार्थिकत्वाकारेण एतत्प्रपञ्चात्यन्ताभाववेदनेऽपि व्यापारो-ङ्गीकर्तुं शक्यः । वाक्यभेदप्रसङ्गात् । नच प्रसक्तस्यैव प्रपञ्चस्य 'नेह नाना' इत्यादिना स्वरूपेणैव निषेधाङ्गीकारात् मिथ्यात्वसिद्धिः । तथाऽपि 'नेह' इति ब्रह्मण्येव निषेधात् प्रपञ्चस्य मिथ्यात्वं दुर्लभम् । सर्वत्र प्रतिपन्नोपाधौ प्रतिपत्तिविषयभूतसकलसम्बन्धेन स्वरूपेण निषेधप्रतियोगित्वस्यैव परेण मिथ्यात्वरूपत्वाङ्गीकारात् । नच 'इह' इति ब्रह्मा-ब्रह्मसाधारणप्रतिपन्नोपाधिमात्रं गृह्यत इति वाच्यम् । मानाभावात् । भावे वा तत्र तथा निषिद्धस्य प्रपञ्चस्य नृशृङ्गादिवत् अत्यन्तासत्त्वापत्त्या जन्मस्थेमध्वंसोक्त्यनुपपत्तिः । 'कथमसतः सज्जायते' इति तस्य जन्मोपपत्तये सत्त्वोक्त्यनुपपत्तिश्च । नच तत्र सत्पदम् असद्विलक्षणपरम् । बाधकंविना मुख्यार्थात्यागात् । अन्यथा 'सदेव सोम्येदमग्रे' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादावपि सत्-सत्यपदयोरपि असद्विलक्षणपरत्वापत्त्या ब्रह्मणोऽबाध्यत्व-रूपं सत्त्वं श्रौतमेव न स्यात् ॥

अपि च एवं भूतं प्रपञ्चे मिथ्यात्वं जानन् सर्वज्ञः ईश्वरो न तज्जन्मस्थितिभङ्गार्थं प्रवर्तेत । एवं वेदान्तश्रद्धावान् 'नेह नाना' इत्यादितो विश्वमिथ्यात्वं तथाभूतं जानन् दुःख-तदापादकहेतूच्छेदनार्थं प्रवृत्तो न स्यात् । नहि बाधावतारानन्तरं शुक्तिरजतं तथा मिथ्येति निश्चिन्वन् तदुचितार्थक्रियार्थं तत्र प्रवर्तमानो दृष्टचरः । नच ब्रह्महत्यादिनिवृत्त्यर्थं सेतुदर्शनादिकं, बन्धनिवर्तकसाक्षात्कारार्थं श्रवणादिकं, दुःखादिनिवृत्त्यर्थं सुहृद्दर्शनादिकं वा अकुर्वन् दृष्टचरः कोऽपि । नच मायावी अपि लोके मायिकपदार्थ वैचित्र्य-प्रदर्शनसाधनभूतमणिमन्त्रादिपदार्थानां वा तद्द्रष्टृप्रसादलब्धसाधनसाध्यादीनां वा (प्रसादलब्ध-साध्यधनधान्यादीनां वा -पा) तथाविधमिथ्यात्वं जानन् तत्प्रयोगादौ तद्ग्रहणादौ वा प्रवर्तत इत्यस्ति कस्याप्यनुभवः, येन तथैव ईश्वरः प्रवर्तत इत्युच्येत ॥

एवं 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिनोक्तं मिथ्यात्वं जीवेश्वरभेदे जानन् न तत् साक्षात्काराद्यर्थं श्रवणादौ प्रवर्तेत, ईश्वरवत् । न ईश्वरः स्वसाक्षात्कारार्थं श्रवणादौ प्रवर्तत इत्यत्र मानमस्ति । नच प्रबलदोषवशात् 'पीतः शङ्खः, न श्वेतः' इति भ्रामयन्नपि 'शङ्खः

श्वेतो न पीतः शङ्खत्वात्' इति परीक्षिताप्रामाण्यशङ्काशून्यप्रत्यक्षसचिवानुमानिकनिश्चयवान् श्वेतार्थमिव पीतार्थं प्रवर्तमानो दृष्टचरः । येनोक्तमिथ्यात्वगोचरश्रुतिजन्यज्ञाने सत्यपि श्रुतिजन्येष्टसाधनत्वगोचरप्रबलदोषाहितभ्रमात् प्रायश्चित्तादौ श्रवणादौ वा लोकस्य निष्कम्प-प्रवृत्तिः अनुभवसिद्धा उपपद्यत इति उच्येत ॥

एतेनैव पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वरूपमेव मिथ्यात्वम् उदाहृत-श्रुत्यर्थ इति निरस्तम् ॥

**'गौरनाद्यन्तवती'**
**'एषोऽश्वत्थः सनातनः'**
**'आकाशवत् सर्वगतश्च नित्यः'**
**'यावद्ब्रह्मविष्ठितं तावती वाक्'**
**'वाचा विरूपा नित्यया'**
**'अनन्ता वै वेदाः'**

इत्यादिश्रुतिप्रतिपन्ननित्यत्वानां प्रकृत्यादीनां पारमार्थिकत्वाकाररहिततया मिथ्याभूतानां मोक्षेऽपि अनुवृत्तिप्रसङ्गात् । 'प्राणा वै सत्यं तेषामेष सत्यः' इत्यादिश्रुत्या ब्रह्मणो निरतिशयितसत्यत्ववत् 'नित्यो नित्यानाम्' इत्यादिश्रुत्या तस्यैव निरतिशयितनित्यत्व-प्रतिपादनात् न प्रकृत्यादीनां तादृशनित्यत्वम् । किन्तु बहुकालावस्थायित्वरूपमेव तदिति वाच्यम् । 'नित्यो नित्यानाम्' इति श्रुतौ प्रथमान्तप्रतिपाद्यचेतनविशेषणभूतनित्यत्वस्य षष्ठ्यन्तप्रतिपाद्य-चेतनविशेषणभूतनित्यत्वे एव सापेक्षत्वेन न्यूनत्वज्ञापकत्वेन वाक्यान्तरा-वगताचेतनविशेषणभूत-नित्यत्वे तदज्ञापकतया बाधकं विना तन्नित्यत्वस्य ब्रह्मनित्यत्वस्येव मुख्यस्यैवाङ्गीकार्यत्वात् । नच 'नित्यानां चेतनानां नित्यश्चेतनः' इत्येकवाक्यतायां किञ्चिद् बाधकमस्ति । येन 'नित्यानां नित्यश्चेतनानां चेतनः' इतिवाक्यभेदाश्रयणमावश्यकं स्यात् ॥

नच 'तस्याभिध्यानात् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः' इति-श्रुत्या 'मायां तु प्रकृतिं विद्यात्' इति मायाशब्दार्थत्वेन प्रतिपन्नप्रकृतेर्निवृत्त्याऽवेदनात्

तन्निर्वाहाय 'गौरनाद्यन्तवती' इत्यादिश्रुतिषु अनन्तत्वनित्यत्वे अमुख्ये स्वीकार्ये । नह्येकत्रैव वस्तुनि नित्यत्वानित्यत्वे द्वे अपि मुख्ये सम्भवत इति वाच्यम् प्रकृत्यादिनित्यत्वप्रतिपादकानेकश्रुत्यबाधाय(नित्यत्वावेदकानेकश्रुत्यबाधाय-पा) प्रकृतिनिवृत्तिप्रतिपादकैकश्रुतेरेव अमुख्यार्थत्वाश्रयणौचित्यात् । बहुबाधस्यान्याय्यत्वात् उत्सर्गसिद्धप्रतीतार्थत्यागस्यैव शब्दे बाधत्वात् ॥

अपि च 'आत्मनः आकाशः सम्भूतः' इति श्रुतिप्रतिपन्नोत्पत्तिकाकाशनित्यत्वान्यथानुपपत्त्यापि तदुपादानभूतप्रकृतिनित्यत्वमावश्यकम् । नच उपादाननाशे उपादेयनाश इति सम्भवति । अपि च मुक्तावपि –

**'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा**
**ज्ञातिभिर्वाऽज्ञातिभिर्वा'** इति;
**'एतत् साम गायन्नास्ते हाउ हाउ हाउ'** इति;
**'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'**

इत्यादिश्रुतिप्रतिपन्नविक्षेपान्यथानुपपत्त्या तत्कारणीभूतमायास्वीकार आवश्यकः । तस्मात् मायानिवृत्तिप्रतिपादकश्रुतेरयमर्थः ॥

## ॥ अथ 'मायां तु प्रकृतिं वियात्' इति श्रुत्यर्थनिरूपणम् ॥

निवृत्तिरिव निवृत्तिः तत्कार्यभूतदुःखादिद्वेष्यार्थप्रतिपादक(द्वेष्यार्थापादक-पा)शक्तिमात्रतिरस्कारः । 'तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'(ब्र-सू-४-१-१३) इति सूत्रात्, 'तदा विद्वान् पुण्यपापे विधूय' इति श्रुतेश्च सञ्चितस्य कर्मणो नाशात् उत्तरस्यानुत्पत्तेः, प्रारब्धस्य च भोगादेव क्षयात् सहकार्यभावेन मुक्तिकाले 'माया'शब्दिता प्रकृतिः स्वयं विद्यमानापि दुःखाद्यनिष्टं नार्जयति' इति ॥

॥ इति 'मायां तु प्रकृतिंवियात्' इति श्रुत्यर्थनिरूपणम् ॥

एतेन 'प्राणा वै सत्यम्' इतिश्रुतौ प्राणशब्दस्य अप्राणोपलक्षणतया तत्सत्यत्वस्य 'तेषामेष सत्यः' इत्युत्तरवाक्येन ब्रह्मसत्यत्वापेक्षया न्यूनत्वप्रतीतेः, बाधकं विना

प्रतीतार्थात्यागात् एतच्छ्रुतिबलेनैव ब्रह्मज्ञानमात्रबाध्यत्वरूपप्रपञ्चमिथ्यात्वविशेषरूप-व्यावहारिकत्वसिद्धेः, तदन्तर्गतजीवेश्वरभेदस्यापि तत्सिद्धिरविकला इति निरस्तम् ।।

**'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति । तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यम् इति । तद् यत्सत् तदमृतम् । अथ यत् ति तन्मर्त्यम् । अथ यत् यं तेनोभे'** (छां-उ-८-३-५)

इति श्रुत्या 'सत्य'शब्दस्य मुक्तामुक्तनियामकत्वार्थकत्वावेदनात् । चित्राज्यादिशब्दानामिव वैदिकसत्यशब्दस्य वैदिकार्थत्वाश्रयणौचित्यात् । प्राणदेवतागतमुक्तामुक्तनियामकत्वे ईश्वर-गतमुक्तामुक्तनियामकत्वापेक्षया न्यूनत्वमेव तयाऽऽवेद्यत इति तच्छ्रुतेः प्रपञ्चव्यवहारिक-सत्यत्वेऽप्रमाणत्वात् । प्राणशब्दस्य अप्राणलक्षकत्वापत्तेश्च । अन्यथा= वैदिकशब्दस्य वैदिकार्थपरत्वसम्भवेऽपि अवैदिकार्थपरत्वाङ्गीकारे, 'यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम्' इति वेदोपात्तस्वर्गशब्दार्थं त्यक्त्वा 'स्वर्गकामो यजेत' इतिवेदवाक्ये स्वर्गपदेन लोक-प्रसिध्यनुसारेण स्रक्चन्दनादिविषयग्रहणमेव स्यात् । चित्राज्यादिपदैरपि तदधिकरणीय-पूर्वपक्षोक्तार्थानामेवच ग्रहणं स्यादिति ।।

एवं 'तत्सत्यं स आत्मा' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादावपि 'सत्य'शब्दस्य मुक्ता-मुक्तनियामकत्वमेव तच्छ्रुत्यभिप्रेतोऽर्थो नतु लोकसिद्धोऽन्यः । 'सत्य आत्मा सत्यो जीवः सत्यं भिदा' इतिश्रुतौ तु 'सत्य'शब्दस्य भिदायां मुक्तामुक्तनियामकत्वरूपवैदिकार्थत्वासम्भवा-देव तत्त्यागः । नियामकत्वस्य कर्तृव्यापारविशेषस्य अचेतनभूतभिदायां सर्वथाऽनुपपत्तेः । प्रयोजकमात्रे नियामकशब्दप्रयोगस्य स्वव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वनिबन्धनत्वेन असम्पूर्णप्रवृत्तिनिमित्तनिबन्धनत्वात् ।।

अपि च सर्वत्र प्रतिपन्नोपाधौ स्वरूपेण असद्विलक्षणस्वरूपानुपमर्देन(स्वरूपानुमर्दनेन-पा) उत पारमार्थिकत्वाकारेण वाऽऽत्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति पक्षद्वयेऽप्यत्यन्ता-भावस्य प्रातिभासिकत्वे व्यावहारिकत्वे च तस्य बाध्यत्वावश्यम्भावेन प्रत्यक्षादिप्रमाण-सिद्धप्रपञ्चसत्यत्वाविरोधित्वं, पारमार्थिकत्वे अद्वैतहानिः । नहि ब्रह्मातिरिक्तपारमार्थिकवस्तु अङ्गीकारेऽद्वैतहानिर्नेत्यस्ति ।।

नचोक्तपक्षद्वयेऽप्यत्यन्ताभावः पारमार्थिक एव । नच तत्र मानाभावः । 'नेह नानाऽस्ती'ति नञर्थे सत्त्वाऽवेदनात् । नचैवमद्वैतहानिः । नञर्थस्य ब्रह्मस्वरूपानतिरिक्तत्वेन उक्तदोषानवकाशादिति वाच्यम् । नञर्थस्योक्तरीत्या सत्वसिद्धावपि ब्रह्मस्वरूपानतिरिक्तत्वे मानाभावात् । प्रत्युत 'इह नाना' इति ब्रह्मनञर्थयोराधाराधेयभावप्रतीत्या तस्य चौत्सर्गिकभेदनियतत्वस्य बाधकं विना त्यागायोगेन तयोर्भेदस्यावश्यकत्वाच्च । 'एकमेवाद्वितीयम्' इत्यन्यपदार्थप्रधान बहुव्रीह्यन्यथानुपपत्त्यापि नञर्थाऽन्यपदार्थभूतब्रह्मणोः भेदस्यौत्सर्गिकत्वेन बाधकं विना त्यागायोगाच्च । नच श्रुतिप्रतिपन्नाद्वैतनिर्वाहाय सत्वेनाऽवेदितस्य नञर्थस्य सद्रूपब्रह्माभेदोऽङ्गीक्रियते । एवं च लाघवमपि । अन्यथा भावाद्वैतपरत्वेन अद्वैतश्रुतिनयनापत्तेर्गौरवापत्तेश्चेति वाच्यम् । एवं हि तदनुपपत्त्या नञर्थस्यैव 'अन्यद्युष्माकमन्तरं बभूव' 'अन्यद्युष्माकमन्तरं भवति' 'तम आसीत्' इति श्रुत्या सत्वेनावेदितस्याज्ञानस्यापि ब्रह्माभेदपरत्वस्वीकारापत्तेः । अस्तिभवत्योः सत्तार्थकत्वस्य सुप्रसिद्धत्वात् । 'अस्ति ब्रह्मेति चेद्वेद' 'अस्तीत्येवोपलब्धव्यः' इत्यादावस्तेः पारमार्थिकत्वपरत्वस्य(पारमार्थिसत्त्वार्थकत्वस्य-पा) परेणापि स्वीकाराच्च ॥

एतेन 'नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ' इत्यादौ नञर्थो व्याख्यातः । अपि च पारमार्थिकत्वाकारेणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति पक्षे 'स्वर्गी ध्वस्तः' 'नीलं नष्टं' 'रक्तमुत्पन्नम्' इत्यादाविव विशेषणेएवाभावान्वयपर्यवसानात्, तत्रापि पारमार्थिकत्वाकारेणाभावान्वयस्वीकारे तत्राप्येवमित्यनवस्थाप्रसङ्गः ॥

एतेन 'गुहायां शब्दो नास्ति' इति निषेधवदध्ययनविधिवच्च पारमार्थिकत्वाकारेण निषेधोऽपि पारमार्थिकत्वाश्रयमन्यमिव पारमार्थिकत्वमपि गोचरयतीति क्वानवस्था? नचैवमात्माश्रयदोषः । तथासति 'गुहायां शब्दो नास्ती'ति निषेधोऽपि शब्दत्वेनेतरशब्दमिव स्वात्मानम्, अध्ययनविधिरपि स्वाध्यायत्वेन स्वान्यं स्वाध्यायभागमिव स्वात्मानं न गोचरयेदिति निरस्तम् ॥

एवं हि शब्दत्वविशिष्टशब्दस्य गुहायामिव पारमार्थिकत्वविशिष्टप्रपञ्चस्य ब्रह्मण्यत्यन्ताभावः सिद्ध्यति । नतु प्रपञ्चस्यापारमार्थिकत्वम् । नहि 'गुहायां शब्दो न' इति निषेधा-

च्छब्दस्याशब्दत्वं कथमपि सिध्यति । नच शब्दे शब्दत्वमिव घटादिप्रपञ्चे पारमार्थिकत्वं न प्रत्यक्षादिप्रमाणगोचरम् इत्यस्ति । येन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति स्यात् । नच पारमार्थिकत्वं प्रपञ्चधर्म एव न भवति । किन्तु ब्रह्ममात्रधर्म इति प्राक्प्रपञ्चमिथ्यात्वसिद्धेः सिद्धम् । येनेदं रजतमिति भ्रमविषयभूतेदंत्ववदधिष्ठानगतं तदिति वचनावकाशः स्यात् ॥

अपि च पारमार्थिकत्वस्य ब्रह्मधर्मत्वेऽपि प्रपञ्चधर्मत्वमप्यस्तु । तन्मात्रधर्मत्वं तु कुतः? नच सत्ताजातिर्द्रव्यमात्रधर्म इत्यस्ति । नहि ग्राहकप्रमाणस्याविशेषेण प्रवृत्तौ पक्षपाते हेतुरस्ति । अन्यथा सत्ताजातिर्द्रव्यमात्रधर्म इति स्यात् । गुणादौ तत्प्रतीतिव्यवहारौ तु शुक्तिरूप्ये इदमिति प्रतीतिव्यवहारवदुपपन्नाविति किं तत्रापि तदङ्गीकारेण? इति सुवचत्वात् । तस्मात् पारमार्थिकत्वं ब्रह्ममात्रधर्म इत्ययुक्तम् ॥

अपि च पारमार्थिकत्वरूपस्य धर्मस्य ब्रह्मातिरिक्तत्वे पारमार्थिकत्वे च अद्वैतहानेः तन्मात्ररूपत्वमावश्यकम् । ब्रह्म च 'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति' इति वेदैकसमधिगम्यत्वेन सिद्धम् । तथा च तद्रूपं पारमार्थिकत्वं प्रत्यक्षादिविषय इत्ययुक्तम् । नच अयोग्यस्य योग्यसम्बन्धाद्योग्यत्वम् इति स्वीकारार्हम् । नच योग्यचन्द्रसम्बन्धादयोग्यस्यापि राहोर्योग्यत्वं दृष्टमिति वाच्यम् । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वेन च राहोरपि प्रत्यक्षयोग्यत्वात् । अन्यथा= योग्यसम्बन्धमात्रस्य प्रयोजकत्वे, नक्षत्रादिगत्यादेरपि योग्यत्वप्रसङ्गात् । देशान्तरस्थत्वान्यथानुपपत्त्यैव नक्षत्रादिगत्यादिकल्पनात् । नच साक्षियोग्यान्तःकरण(साक्षिभास्यान्तःकरण-पा)धर्म इत्येतावता स्मृत्यनुमेयसंस्कारोऽपि साक्षियोग्य इत्यस्ति ॥

एतेन अज्ञानतत्कार्यभूतप्रपञ्चयोर्ब्रह्मवत् पारमार्थिकत्वे निवृत्तिर्नस्यादिति निरस्तम् । अस्य शुष्कतर्कत्वेन तन्निवृत्तिप्रत्यायकश्रुत्या बाधात् । 'भूयश्चान्ते विश्वमाया निवृत्तिः' इति श्रुत्याऽज्ञानस्य निवृत्तिरावेद्यत इति 'माया चाविद्याच स्वयमेव भवति' इति श्रुत्या मायाविद्ययोरभेद आवेद्यत इति च पराभ्युपगमात् ॥

अपि च 'तस्याभिध्यानाद् योजनाद् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुत्या मायानिवृत्तेर्ज्ञानजन्यत्वमावेद्यत इत्यविवादम् । 'माया चाविद्या'(नृ-उ-ता-उ-९)

इत्यपि । तत्र 'निवृत्तिरात्मामोहस्य' इति पक्षो न युज्यते । घटादिवद् ब्रह्मणः कालतः परिच्छिन्नत्वप्रसङ्गात् । प्रागसतः सत्तासम्बन्धस्य कालादिसम्बन्धस्य वा जन्यत्वरूपत्वात् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनन्तशब्देनात्मस्वरूपस्य कालतः परिच्छेदराहित्यावेदनात् । अविद्यानिवृत्तिरात्मस्वरूपातिरिक्तैव ज्ञानजन्या परमार्थसतीत्यङ्गीकारे चाद्वैतश्रुतिविरोधात्, आत्माविद्यानिवृत्त्योः परस्परभेदस्यापि परमार्थ(पारमार्थिक-पा)सत्यत्वापत्तेश्च ॥

मिथ्येतिपक्षे च शुक्तिरूप्यादिवत् ज्ञाननिवर्त्यत्वापत्तिःदुर्वारा । न चेष्टापत्तिः । परेणाविद्यानिवृत्तेः 'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः' इति नित्यपुरुषार्थभूतमोक्ष(स्व)-रूपत्वस्वीकारविरोधात् । तथा च सर्वोऽप्ययं परस्य स्वाभ्युपगमनिबन्धन एवापराधः ॥

नच मोक्षस्य नित्यपुरुषार्थत्वाऽवेदकशास्त्रप्रामाण्याबाधाय मिथ्याभूतापि अविद्यानिवृत्तिः ज्ञानेन न निवर्तत इति स्वीक्रियते । 'यन्मिथ्या तज्ज्ञानेन निवर्तते' इति नियमस्य तदतिरिक्तविषयत्वेन सङ्कोचसम्भवात् । श्रुत्यपेक्षया केवलनियमस्य दुर्बलत्वादिति वाच्यम् । तथासति श्रुतिप्रतिपन्ननित्यत्वनिर्वाहायाकाशादेर्मिथ्यात्वेऽपि तदुपादानभूतमायाऽविद्याशब्दितप्रकृतेर्ज्ञानेन निवृत्तत्वेऽपि अनिवृत्तत्वप्रसङ्गात्(अनिवृत्तिप्रसङ्गात्-पा) । नहि 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिश्रुत्या आकाशादेर्न नित्यत्वमुच्यते ॥

किञ्चोत्पन्नस्य मिथ्याभूतस्य भावस्य मिथ्येतिपक्षे च शुक्तिरूप्यादिवत् ज्ञाननिवर्त्यत्वापत्तिः दुर्वारा(वाभावस्य वा अध्यस्तत्वेन-पा) सोपादानत्वावश्यंभावाद् अविद्यानिवृत्तेरुपादानान्तरस्वीकारप्रसङ्गः । अध्यासस्य भ्रान्तं दोषं च विनाऽनुपपत्त्या मोक्षकालेऽपि तदङ्गीकारप्रसङ्गश्च । नच मिथ्याभूतस्य नाध्यासत्वनियम इति वाच्यम् । तथासत्यविद्यादेरनाद्यध्यासत्वस्वीकारप्रसङ्गात् । अहङ्कारस्य कार्याध्यासेषु प्रथमाध्यासत्वास्वीकारप्रसङ्गाच्च ॥

एतेन –

**'निवृत्तिरात्मामोहस्य ज्ञातत्वेनोपलक्षितः ।**
**उपलक्षणहानेऽपि स्यान्मुक्तिः पाचकादिवत् ॥'**

इति मदभ्युपगमात् चरमवृत्त्युपलक्षितात्मस्वरूपरूप एवाऽविद्यानिवृत्तिर्मोक्षो मम । एवं च नाद्वैतश्रुतिविरोधः । नचैवम् अविद्यानिवृत्तिरूपमोक्षस्य अनाद्यनन्तात्मस्वरूपरूपत्वाङ्गीकारे

तस्य श्रुतश्रवणादिसाध्यज्ञानसाध्यत्वमेव न स्यादिति वाच्यम् । 'ज्ञातत्वेनोपलक्षितात्मा' इत्यनेन चरमवृत्तिनिवृत्तिविशिष्टात्मस्वरूपस्य विवक्षितत्वात् । अस्त्येव तस्य ज्ञान-साध्यत्वमिति नोक्तदोषावकाशः । अत एव वृत्त्युपलक्षितात्मस्वरूपस्याविद्यानिवृत्तिरूपत्वेन मुक्तित्वाङ्गीकारे तादृशात्मस्वरूपस्य वृत्तेः पश्चादिव पूर्वमपि सत्त्वेन तदापि मुक्तत्व-व्यवहारप्रसङ्ग इति प्रत्यूढमिति निरस्तम् ॥

चरमवृत्तिनिवृत्तिरपि सत्यभूतात्मातिरिक्ता चेत् अद्वैतश्रुतिविरोधः । आत्मस्वरूपाया चेत् ज्ञानसाध्यत्वाभावप्रसङ्गः । आत्मातिरिक्ता मिथ्या चेत् ज्ञाननिवर्त्यत्वप्रसङ्ग इत्याद्यु-क्तदोषतादवस्थ्यात् । यस्यात्मस्वरूपस्याज्ञाननिवृत्तिरूपत्वेन नित्यपुरुषार्थत्वमिष्यते तस्यै-वमपि ज्ञानसाध्यत्वासिद्धेश्च । विवक्षितविवेकेन चरवमवृत्तिनिवृत्तावेव चरमवृत्तिरूपज्ञान-साध्यत्वविश्रान्तेः । तथाच 'निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षिते' इति स्वीयवृद्धोक्तेः प्रतीयमानार्थपरित्यागेन उक्तार्थपरत्वाश्रयणमेव फलमेवेति ।

तस्मात् 'नेह नानाऽस्ति' 'नान्योऽतोऽस्ति द्रष्टा' इत्यादौ नञर्थस्य 'अस्ति'शब्दसमभि-व्याहारात् 'अस्ति ब्रह्मेति चेद्वेद' इत्यत्रेव परमार्थसत्त्वाङ्गीकारे 'अन्यद्युष्माकमन्तरं बभूव' 'अन्यद्युष्माकमन्तरं भवति' 'तम आसीत्' इत्यादौ सत्तार्थक-भवति-अस्ति-समभिव्याहार-ज्ञानस्यापि परमार्थसत्त्वाङ्गीकारो दुर्वारः । ततश्च तत्र 'अस्ति'शब्देन परमार्थसत्त्वाभिधायीति न स्वीकार्यमिति किमनुपपन्नम्? तस्मात् 'एकमेवाद्वितीयम्' 'नेह नानाऽस्ति किञ्चन' 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति द्रष्टृ' इत्यादिश्रुतिभिः प्रपञ्चो वा भेदो वा निषिध्यत इत्येव स्वीकार्यम् । एवं च प्रपञ्चजीवेश्वरभेदयोः श्रुतिनिषिद्धत्वेन व्यावहारिकत्वं कथं परेणोच्यत इति न विद्मः ॥

॥ इति परोक्तमिथ्यात्वस्य श्रुत्यनभिप्रेतत्वसमर्थनम् ॥

## ॥ अथ श्रुतेः भेदनिषेधकत्वभङ्गः ॥

अपि च 'नान्योऽतोऽस्ति' इत्यादिश्रुतेः भेदमात्रनिषेधपरत्वे अन्यत्वापरनामकभेद-विशिष्टवाचिनोऽन्यशब्दस्य 'नित्यो घटः'इत्यादौ घटशब्दस्य घटत्व(घट) इव भेदे लक्षणा-प्रसङ्गः । नच तां विना भेदस्य स्वातन्त्र्येणोपस्थितिः सम्भवति(स्वातन्त्र्येणापि स्थितिः सम्भ-

वति-पा) । नच तदभावे आकाङ्क्षा, अभावे च कथं भेदमात्रे निषेधान्वय इति । अत एवान्यावरुद्धतया आकाङ्क्षाविरहेण विवक्षितान्वयासिद्धौ(द्धेः) 'पुरोडाशकपालेन तुषानावपति' इत्यादौ पुरोडाशकपालशब्दस्य विवक्षितान्वयप्रयोजकाकाङ्क्षासिद्ध्यर्थम् अधिष्ठानलक्षकत्वं स्वीकृतम् ॥

अपिच 'नान्योऽतोऽस्ति द्रष्टा' इति 'नेह नानाऽस्ति किञ्चन' इत्यादि श्रुत्याऽन्योन्याभावापरनामकभेदस्य निषेधे तन्निषेधस्य प्रतियोगितावच्छेदकधर्मरूपत्वमावश्यकम् । एवं च 'अतः'शब्दार्थभूतस्य ब्रह्मणः सधर्मकत्वापत्तिः । अत्यन्ताभावात्यन्ताभावस्य प्रतियोगिरूपत्ववदन्योन्याभावापरनामकभेदात्यन्ताभावस्य प्रतियोगिवृत्त्यसाधारणधर्मरूपत्वनियमात् । नचेष्टापत्तिः । ब्रह्मनिर्धर्मकत्वाभ्युपगमविरोधात्, अन्योन्याभावनिषेधस्य व्यावहारिकत्वाङ्गीकारेण निर्धर्मकत्वश्रुत्यविरोधाभ्युपगमेचान्योन्याभावापरनामकस्याप्रातिभासिकत्वेन स्वीकृतस्य भेदस्य ब्रह्मवत् पारमार्थिकत्वप्रसङ्गो दुर्वारः । प्रकारान्तराभावात् ॥

अपि च निर्धर्मकत्वश्रुत्यविरोधाय ब्रह्मासाधारणधर्मत्वेन पर्यवसितस्य ब्रह्मप्रतियोगिकान्योन्याभावनिषेधस्य व्यावहारिकत्वस्वीकारे 'ब्रह्मैवेदं सर्वम्' 'स एवेदं सर्वम्' इत्यादिसर्वब्रह्माभिन्नत्वश्रुत्यविरोधाय ब्रह्मणि 'नेह नाना' इत्यादिश्रुतिप्रतिपन्नप्रपञ्चनिषेधस्यापि व्यावहारिकत्वाङ्गीकारप्रसङ्गः ॥

अपि च निषेधश्रुतित्वाविशेषे धर्मनिषेधश्रुत्यविरोधाय 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिप्रतिपन्नान्योन्याभावनिषेधस्य मिथ्याविशेषरूपव्यावहारिकत्वपरत्वाङ्गीकारे ब्रह्मसधर्मकत्वप्रतिपादनपर्यवसिताऽन्योन्याभावनिषेधश्रुत्यविरोधाय 'केवलो निर्गुणश्च' इति श्रुतिप्रतिपन्नधर्मनिषेधस्यैव तथात्वं किं नाङ्गीकार्यम्?

अपि च अन्योन्याभावनिषेधश्रुत्यपेक्षया 'केवलो निर्गुणश्च' इत्यादिधर्ममात्रनिषेधश्रुतेः सामान्यशास्त्रत्वेन तयैवास्याः 'पदे जुहोति'(तै-सं-६-१-८-१) 'गार्हपत्ये पत्नीसंयाजां जुहोति'(तै-ब्रा-१-१-१०-३९) इत्यादिविशेषशास्त्रेण 'यदाहवनीये जुहोति' इत्यादिसामान्यशास्त्रस्येव बाध एवाभ्युपगमार्हः ॥

नच अन्योन्याभावनिषेधो न प्रतियोगिवृत्तिरसाधारणो धर्मः । किन्तु प्रतियोगिस्वरूपरूप एव, अतो नोक्तदोष इति वाच्यम् । एवं विधान्योन्याभावनिषेधस्य प्रतियोगिवृत्तित्वानङ्गीकारे विरोध्यभावेन प्रतियोगिन्यप्यन्योन्याभावरूपभेदापत्त्या 'घटः पटो न' इतिवद् 'घटो घटो न' इत्यपि प्रतीतिव्यवहारप्रसङ्गात् । प्रतियोगिवृत्तित्वाङ्गीकारेचात्माश्रयदोषः । न्यायनये प्रतियोगित्वरूपधर्मस्य प्रतियोग्यनतिरिक्तस्य प्रतीतिबलेन प्रतियोग्याश्रितत्ववद् ब्रह्मप्रतियोगिकान्योन्याभावनिषेधस्य ब्रह्मस्वरूपानतिरिक्तस्य श्रुतिजन्यप्रतीतिबलेन ब्रह्मवृत्तित्वाङ्गीकारे घटप्रतियोगित्वयोरिव ब्रह्मान्योन्याभावनिषेधयोरपि धर्मधर्मिभावापत्त्या पारमार्थिकसविशेषत्वप्रसङ्गश्च ॥

एवं च निर्धर्मकत्वश्रुतिविरोध तादवस्थ्यम् । नच सा स्वरूपातिरिक्तधर्मनिषेधपरा, अन्योन्याभावनिषेधरूपधर्मस्तु ब्रह्मस्वरूपानतिरिक्त इति न तद्विरोध इति वाच्यम् । वस्तुतो द्रष्ट्रादिजीवचैतन्यस्यैव ब्रह्मचैतन्यप्रतियोगिकान्योन्याभावनिषेधरूप(स्य) ब्रह्मचैतन्यरूपत्वेन 'नाहमीश्वरः' इत्यादिप्रत्यक्षप्रतिपन्नब्रह्मप्रतियोगिकभेदविरोधित्वापातेनासति च तस्मिन् तद्भेदप्रतीतिव्यवहारयोर्विषयाभावेन व्यावहारिकप्रामाण्यस्यापि दुर्लभत्वापातात् । निषेधस्वरूपस्यापि ब्रह्मचैतन्यस्य स्वस्मिन् अन्योन्याभावाविरोधित्वे च तन्निषेधस्वरूपत्वस्य (स्वरूपत्वेन-पा) परिभाषामात्रत्वापत्तेः ॥

एतेन चरमवृत्तिसहितचैतन्यस्वरूपमेव अन्योन्याभावनिषेधरूपतया तद्विरोधीत्यभ्युपगमात् नोक्तातिप्रसङ्ग इति निरस्तम् । इदानीन्तन वेदान्तजन्यवृत्तिरिव चरमवृत्तेरप्यन्योन्याभावविरोधित्वे मानाभावात् । अक्लृप्तकल्पनापत्तेः ।

अपि चैवं प्रपञ्चनिषेधश्रुतिरपि ब्रह्मातिरिक्तप्रपञ्चनिषेधपरेति सुवचत्वात् 'ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतिप्रतिपन्नब्रह्माभिन्नप्रपञ्चनिषेधासिद्धिप्रसङ्गः । नच प्रत्यक्षादिप्रतिपन्नप्रपञ्चं विना ब्रह्मातिरिक्तप्रपञ्चान्तरे मानाभावात् 'नेह नाना' इत्यादिनिषेधो न तद्गोचरः, किन्तु प्रत्यक्षादिप्रतिपन्नप्रपञ्चगोचर एवेति वाच्यम् । एवं हि प्रत्यक्षादिप्रतिपन्नधर्माणामपि प्रपञ्चे ब्रह्माभिन्नत्वप्रतिपादकश्रुत्यैव तदभिन्नत्वसिद्ध्या धर्मनिषेधश्रुतेरपि ब्रह्मातिरिक्तधर्मविषयत्वोक्त्यनुपपत्तेः ॥

किञ्च 'नेह नाना' इत्यादिश्रुतेः 'ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतिप्रतिपन्नब्रह्माभिन्नप्रपञ्च-विषयत्वेन ब्रह्मण एव निषेध इत्यापातेन श्रुतिनिषिद्धभेदवत् तस्यापि व्यावहारिकत्व-प्रसङ्गः । प्रपञ्चत्वाकारेण तस्य व्यवहारिकत्वमिष्टमिति चेत्, प्रपञ्चत्वाकारस्याप्युक्तरीत्या जीवचैतन्यस्यैव ब्रह्ममात्रत्वापत्त्या ब्रह्मस्वरूपमात्रस्यैव निषेध इति पर्यवसानात् । नच प्रपञ्चस्य ब्रह्ममात्रत्वे 'आत्मन आकाशः सम्भूतः' इत्यादिना सृष्ट्याद्युक्त्यनुपपत्तिरिति वाच्यम् । उक्तरीत्या सृष्ट्यादेरपि ब्रह्ममात्रत्वेन पर्यवसितत्वेनाविरोधात् । विरोधा-विरोधयोरप्युक्तन्यायेनैव ब्रह्मरूपत्वापादनेनाव्यवस्थापादनात् ॥

अपि च धर्मनिषेधिका श्रुतिरतिरिक्तधर्मनिषेधपरेति कोऽर्थः? किं ब्रह्मातिरिक्ते वस्तुनि धर्मत्वनिषेधपरेति?। किं वा धर्मत्वविशिष्टे तस्मिन् ब्रह्मातिरिक्तत्वनिषेधपरेति? अथवा ब्रह्मप्रतियोगिकभेदादिविशिष्टवस्तुनिषेधपरेति?। नाद्यः । 'केवलो निर्गुणश्च' इत्यादिश्रुतेः ब्रह्मण्येव धर्मत्वविशिष्टनिषेधकत्वेन तदतिरिक्ते वस्तुनि सधर्मकत्वानिषेधकत्वात् (धर्मत्व-अनिषेधकत्वात्-पा) । गुणत्वस्यैव धर्मत्वरूपत्वात् । अत एव न द्वितीयः । धर्मत्वविशिष्टे वस्तुनि ब्रह्मातिरिक्तत्वाभावस्योक्तरीत्या श्रुतौ अपदार्थत्वादवाक्यार्थत्वाच्च । अत एव न तृतीयोऽपि । यद्यपि, 'एवं धर्मान् पृथक् पश्यन् तानेवानु विधावति' इति श्रुतिर्द्वितीय-विकल्पालम्बनमस्तीति शक्यते वक्तुम् । तथाऽपि धर्मत्वविशिष्टघटत्वपटत्वाद्यनुगतधर्माणां परेणानाद्यनिर्वचनीयाज्ञानरूपत्वाङ्गीकारान्न तेषां ब्रह्माभेदोऽङ्गीकर्तुं शक्यः ॥

यद्यपि चानन्दो विषयानुभवो नित्यत्वश्चेति सन्ति धर्मा इति परोक्त्यनुसारेणानन्दादयो पृथग्भूता धर्मा एवैतच्छ्रुतिगतधर्मशब्दार्था इत्युक्त्यवसरः सम्भवति । तथाऽपि 'नान्योऽ-तोऽस्ति द्रष्टा' इत्यादि श्रुतिनिषिद्धान्योन्याभावविरहभूतद्रष्टृत्व-श्रोतृत्व-मन्तृत्वादिधर्माः न तच्छ्रुतिगतधर्मशब्दार्थत्वेन स्वीकर्तुं शक्यः । नह्यानन्दादीनामिव द्रष्टृत्वश्रोतृत्वादिधर्माणामपि परेण ब्रह्मचैतन्यस्वरूपपरूपत्वमङ्गीक्रियते । नच 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुतौ 'अतः'शब्दार्थभूते ब्रह्मचैतन्ये द्रष्टृत्वश्रोतृत्वादिरूपधर्माङ्गीकारं विना द्रष्ट्रादिपदार्थैक्यसिद्धिः सम्भवति । नच तदतिरिक्तधर्मेषु द्रष्टृत्वादिधर्मावच्छिन्नप्रतियोगिकान्योन्याभावविरोधिरूपत्वं सम्भवति । नह्येवमेव कल्पनायां दृष्टानुसारित्वं वक्तुमुचितम् । नच 'अतः'शब्दार्थभूतब्रह्म-

चैतन्यप्रतियोगिकान्योन्याभावविरहरूपतया पर्यवसितानामेतेषां दर्शनानुकूलव्यापारवत्व-श्रवणानुकूलव्यापारवत्व- मननानुकूलव्यापारवत्वादिरूपद्रष्टृत्व- श्रोतृत्व- मन्तृत्वादीनामनेक पदार्थघटितमूर्तितया सोपाधिकस्वरूपाणां धर्माणामखण्डचिन्मात्रतया निरुपाधिकस्वरूपत्वेन स्वीकृत 'अतः'शब्दार्थभूतब्रह्ममात्रत्वं युज्यते । न वा(च) निरुपाधिकब्रह्मचैतन्यमात्रत्वे तेषां तादृशब्रह्मचैतन्यवृत्तित्वम् ॥

ननु अभावप्रतियोगिनि घटादौ तन्मात्ररूपस्यापि प्रतियोगित्वरूपस्य धर्मस्य तद्-वृत्तित्वदर्शनात् द्रष्टृत्वादिधर्माणां निरुपाधिकब्रह्ममात्रत्वेऽपि तादृशब्रह्मवृत्तित्वस्वीकारो न विरुद्ध इति चेन्न । द्रष्टृत्वादीनां सोपाधिकाध्यासत्वेन परेण स्वीकृततया निरुपाधिकानध्यस्त-ब्रह्ममात्रत्वाऽयोगात् । घटादिनिष्ठप्रतियोगित्वस्य तद्विशेषत्वेन घटादिमात्रत्वासिद्धेः दृष्टान्ता-सम्मतेश्च । नैयायिकादिभिः प्रतियोगित्वादिकं स्वरूपसम्बन्धविशेष इत्येवाभ्युपगमात् । अत एव भूतलनिष्ठान्योन्याभावप्रतियोगिनि घटादौ भूतलाश्रितत्वेऽपि तत्प्रतियोगित्वं न भूतलाश्रितमिति तत्परिपाठी(पर्यपाठी-पा) । अन्यथा प्रतियोगिभूतघटादिवत् तदभिन्नतया तन्निष्ठप्रतियोगित्वस्यापि(प्रतियोगित्वादपि-पा) भूतलाश्रितत्वे 'भूतलं घटो न' इतिवत् 'भूतलं भूतलं न' इत्यपि प्रतीतिव्यवहारप्रसङ्गात् ॥

ननु वस्तुतो द्रष्टृत्व-श्रोतृत्वादीनामन्योन्याभावप्रतियोगिनि 'अतः' शब्दार्थे ब्रह्मणि वृत्तिरेव नास्तीति चेत्, तर्हि वस्तुतो विरोध्यभावेन प्रतियोगिन्यप्यन्योन्याभावो दुर्वार इत्युक्तदोषस्य अनिस्तारः ॥

अपिच ब्रह्मणो मन्तृत्वाङ्गीकारे तस्यापरोक्षैकरसत्वावेदक'यत्साक्षादपरोक्षाद् ब्रह्म' 'तुरीयं तत् सर्वदृक् सदा' इति श्रुतिविरोधः । तस्मात् ब्रह्मणि धर्मनिषेधकश्रुतेर्न स्वरूपा-तिरिक्तधर्मविषयतया सङ्कोचो युक्तः । ।

अपि च धर्मनिषेधकश्रुतेः स्वरूपातिरिक्तधर्मनिषेधपरत्वेन सङ्कोचे 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'न सन्दृशे तिष्ठति रूपमस्य' 'अकाय-मव्रणम्' इत्यादिपाण्यादिनिषेधकश्रुतीनामपि स्वरूपातिरिक्तपाण्यादिविषयतया सङ्कोच-प्रसङ्गः । नचोदाहृतश्रुतिभिः प्रसक्तपाण्यादिप्रतिषेधात्,(निषेधात्-पा) स्वरूपरूपपाण्यादिसद्भावे

मानाभावात् पारिशेष्याद्ब्रह्मणो निराकारत्वमेवास्मदभिमतमप्रत्यूहमिति वाच्यम्। तर्हि धर्म-निषेधकश्रुतिभिः प्रसक्तद्रष्टृत्वादिस्वरूपातिरिक्तधर्मनिषेधात् स्वरूपभूततद्धर्मेषु मानाभावात्, पारिशेष्यात् सर्वथा धर्मशून्यत्वमेवापन्नमिति 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुते-रन्योन्याभावनिषेधपरत्वासम्भवेन तस्य प्रतियोगिवृत्तित्वप्रसङ्गतादवस्थ्यात् । नचान्योन्या-भावनिषेधकश्रुत्यन्यथाऽनुपपत्त्या स्वरूपभूतधर्मसिद्धिः । तर्हि 'जवनो गृहीता पश्यति' इत्यादि श्रुतिप्रतिपन्नजवनत्वाद्यनुपपत्त्या स्वरूपभूतपाणिपादादिसिद्धिरपि कुतो नेष्यते? (किं नेष्यते?-पा) इत्यलम् ॥

एतेन द्रष्टृत्वादिधर्मरूपतया 'नान्योऽतोऽस्तिद्रष्टा' इत्यादि श्रुतिप्रत्यायिताऽन्योन्याभाव-निषेधस्य पर्यवसानेऽपि न निर्धर्मकत्वश्रुतिविरोधः । द्रष्टृत्वादिधर्माणां व्यावहारिकत्वाङ्गी-कारात् । निर्धर्मकत्वस्य च पारमार्थिकत्वाङ्गीकारादिति निरस्तम् ।

पृथिव्यादिनवके यद् द्रव्यत्वं प्रत्यक्षादिसिद्धम् अतोऽन्यद् द्रव्यत्वं नास्ति । सङ्ख्या-परिमाणादिषु यद्गुणत्वं प्रत्यक्षादिसिद्धम् अतोऽन्यद् गुणत्वं नास्ति । यत् एतद् घटे घटत्वं प्रत्यक्षादिसिद्धम् अतोऽन्यद् एतद् घटत्वं नास्तीत्यादौ निषेधबलेन द्रव्यत्व-गुणत्व-एतद् घटत्वानां द्रव्यत्वादिधर्माश्रयप्रतियोगिकाऽन्योन्याभावासामानाधिकरण्यरूपैकव्यक्तित्वसिद्ध्या व्यावहारिक-तद्भेदाभाववत् (भेदाभावात्-पा) 'नान्योऽतोऽस्ति द्रष्टा' इत्यादावपि द्रष्टृत्व-श्रोतृत्वमन्तृत्वादिधर्माणां स्वाश्रयप्रतियोगिकान्योन्याभावासामानाधिकरण्यरूपैकव्यक्तित्वा-श्रयाश्रितत्वसिद्ध्या प्रत्यक्षादिप्रमाणसिद्धतदाश्रयप्रतियोगिकव्यावहारिकभेदस्याप्यभाव-प्रसङ्गात् । नचैवम् । अनुभवविरोधात् । 'सदा पश्यन्ति सूरयः' इत्यादिव्यावहारिकद्रष्टृनेकत्व-प्रतिपादकश्रुतिविरोधाच्च ॥

तस्मात् 'अतः' शब्दार्थभूत ब्रह्मप्रतियोगिकाऽन्योन्याभावस्य द्रष्टृत्व-श्रोतृत्वादिधर्मस्य च तद्विरहात्मकतया पर्यवसितस्य व्यावहारिकत्वे तुल्यसत्ताकत्वेन विरोधापातेन तयो-र्भिन्नसत्ताकत्वे आवश्यके अन्योन्याभावतद्विरहयोः अप्रातिभासिकत्वेन परेण स्वीकृतयोः अन्यतरस्य पारमार्थिकत्वं दुर्वारम् । नच द्रष्टृत्वादिसोपाधिकधर्माणामखण्डाविद्याध्यासा-

धिष्ठानभूत-निरुपाधिक-ब्रह्मचैतन्यमात्रत्वं सम्भवति । येन ब्रह्मनिर्धर्मकत्वाद्वितीयत्वाऽवेदकश्रुत्यविरोधः स्यादित्युक्तम् ॥

एवं 'नेह नानाऽस्ति किञ्चन' इति श्रुतेरपि सङ्कोचकाभावात् इह= ब्रह्मणि, नाना= ब्रह्मभिन्नपरस्परभिन्नं च, किञ्चन= किमपि, नास्तीति ब्रह्मप्रतियोगिकपरस्परप्रतियोगिकभेदमात्रनिषेधपरत्वं तादृशभेदविशिष्टनिषेधपरत्वं वाच्यम् । एवं च सति भेदात्यन्ताभावस्य भेदप्रतियोगिनिष्ठासाधारण(तदप्रतियोगिनिष्ठ-पा)धर्मरूपतया पर्यवसानावश्यम्भावात् अज्ञानत्वविषयत्वाद्यनन्तधर्मविशिष्टाज्ञानाद्यभेदो ब्रह्मणि जीवाभेदवत् दुर्वारः । प्रतिपन्नोपाधौ निषिद्धत्वेन मिथ्याभूताज्ञानवियदादिप्रपञ्चाभिन्नत्वेन मिथ्यात्वं च । नच 'सत्यं ज्ञानम्' इत्यादि श्रुत्या सत्यत्वेन प्रतिपन्ने ब्रह्मणि मिथ्याभूतप्रपञ्चाभेदो न सम्भवतीति वाच्यम् । एवं विधोक्तेरनुमानतया श्रुत्यपेक्षया दुर्बलत्वात् । श्रुतिबलेन सत्यरूपत्वाङ्गीकारे तद्बलेनैव मिथ्यास्वरूपरूपत्वस्यापि स्वीकार आवश्यकः । नहि नित्यनिर्दोषश्रुतिप्रतिपन्नत्वाविशेषे सत्यरूपत्वमिथ्यारूपत्वयोः सत्यरूपत्वमेव ब्रह्मणःस्वीकार्यं नतु मिथ्यारूपत्वमित्यत्र् विशेष -पक्षपातहेतुरस्ति । तस्मादस्याः श्रुतेर्भेदनिषेधपरत्वं तद्विशिष्टनिषेधपरत्वं वा न युक्तम् ॥

एतेन 'नात्र काचन भिदाऽस्ति' 'नैवात्र काचन भिदाऽस्ति'। अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति' इत्यादि भेदनिषेधकश्रुतयो व्याख्याताः ।

अपि च अद्वैतश्रुतिविरोधादन्योन्याभावनिषेधस्य द्वितीयमात्रनिषेधस्यच ब्रह्मस्वरूपरूपत्वाङ्गीकारे तत्प्रतियोगिनोऽन्योन्याभावस्य द्वितीयमात्रस्यच जीवचैतन्यस्येव ब्रह्मस्वरूपरूपत्वं किं नाङ्गीकार्यम्?।

नच जडप्रपञ्चे इव जीवचैतन्योऽपि द्वितीयत्वेन प्रसक्तेः 'एकमेवाद्वितीयम्' इत्यादि निषेधविषयत्वस्य च तौल्ये जडप्रपञ्चस्यैव मिथ्यात्वं नतु जीवचैतन्यस्येति वैरूप्याश्रयणे विशेषहेतुरस्ति । जीवचैतन्यब्रह्मचैतन्ययोश्चित्वादभेदः सम्भवति इति चेन्न । जडब्रह्मणोरपि पदार्थत्वादसद्वैलक्षण्याच्चाभेदः सम्भवतीति सुवचत्वात् । अर्थप्रकाशकत्वरूपचित्वापेक्षया पदार्थत्वस्य सामान्यरूपतया ब्रह्माभिन्नत्वाङ्गीकारे प्रयोजकत्वाच्च । अद्वैतश्रुत्यपेक्षया प्रत्य-

क्षादेः सम्भावितदोषत्वेन दुर्बलतया भेदप्रत्यक्षादिविरोधस्य अनादरणीयत्वात् बाधकान्तरस्यादर्शनाच्च । तस्मान्नान्योन्याभावरूपभेदनिषेधः प्रतियोगिस्वरूपरूपः ॥

एवं द्वितीयमात्रनिषेधोऽपि न ब्रह्मरूपाधिकरणस्वरूपरूपः । तथात्वे ब्रह्मरूपाधिकरणे द्वितीयाभावासिद्धिप्रसङ्गात् । ब्रह्माश्रितत्वरूपधर्मोपहितद्वितीयनिषेधस्य सोपाधिकत्वेन निरुपाधिकब्रह्ममात्रत्वायोगात् ॥

नन्वेवं द्वितीयनिषेधस्याप्रातिभासिकस्य निरुपाधिकब्रह्ममात्रत्वाभावे व्यावहारिकत्वापत्त्या भूतले व्यावहारिकघटतदभावयोरन्यतरसत्वकाले अन्यतराभाववत् द्वितीयतन्निषेधयोरन्यतरसत्वे इदानीमन्यतराभावेन तदुपलम्भस्य व्यावहारिकप्रमात्वमपि न स्यादिति चेत् तर्हि तन्निषेधः श्रुतिप्रतिपन्नः प्रातिभासिकः इत्येवाङ्गीक्रियताम् उक्तबाधकात् । नचैवं निषेधकश्रुतेः अतत्त्वावेदकत्वापत्तिः । निषेधस्य पारमार्थिकत्वपक्षे ब्रह्मणि प्रपञ्चविधायकश्रुतेरिव तस्य सह्यत्वात् । **'परस्परविरोधे हि न प्रकारान्तरस्थितिः'** इति न्यायेन प्रपञ्चविधिनिषेधयोरन्यतरातत्त्वाऽवेदकस्य दुर्निवारत्वात् ॥

ननु निषेधस्य प्रातिभासिकत्वे प्रपञ्चस्य मिथ्यात्वं न सिद्ध्यति इति चेत्, माऽस्तु किं नश्छिन्नम् । ब्रह्मवत्तस्य सत्यत्वेनोपपत्तेः । तस्माद् द्वितीयनिषेधोऽपि तदतिरिक्त एव वाच्यः । एवं च अद्वैतश्रुतिविरोधः ॥

एतेन ब्रह्मद्वितीयनिषेधयोराधाराधेयभावो न वास्तवः किन्तु कल्पितः । तथाचाधारभूतस्यैव ब्रह्मणो निषेधरूपत्वाङ्गीकारान्नाद्वैतश्रुतिविरोध इति निरस्तम् । तथासति वस्तुतो ब्रह्मनिष्ठनिषेधप्रतियोगित्वासिद्ध्या द्वितीयस्य मिथ्यात्वासिद्धिप्रसङ्गात् । भावनिषेधस्य अनुपलब्धसप्तमपदार्थरूपत्वनियमेन ब्रह्मणो वियदादिभावरूपप्रपञ्चनिषेधत्वाङ्गीकारे भावरूपत्वानुपपत्तेश्च । व्यवहारे भट्टनय इति पराभ्युपगमात् ॥

अपि च 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना किं अतः= परमात्मनः अन्यस्मिन् द्रष्टृत्वादिकं निषिध्यते(निषेध्यते-पा) किं? वा द्रष्ट्रादिषु अतोऽन्यत्वम्? नाद्यः । अतोऽन्यत्र जीवमात्रे जडमात्रे वा सर्वत्र द्रष्टृत्वादेः अप्रसक्त्या तन्निषेधस्याप्रसक्तप्रतिषेधत्वापातात् ।

भेदस्यनिषिद्धत्वेन तत्परद्वासुपर्णादिश्रुतेर्व्यावहारिकभेदपरत्वासिद्धेश्च । न द्वितीयः । द्रष्ट्रादिषु अतोऽन्यत्वस्य श्रुतिजन्यप्रतियोग्युपस्थितिं विना प्रत्यक्षतो ज्ञातुमशक्यत्वेन श्रुतिप्राप्तत्वेन पर्यवसितस्य श्रुत्या निषेधायोगात् । नहि 'अतः'शब्दार्थस्य ब्रह्मस्वरूपरूपप्रतियोगिनः श्रुतिं विना उत्पत्तिः(विनोपस्थितिः-पा) सम्भवति । नचाननुष्ठेयार्थेषु विकल्पो युज्यते ।।

किञ्च विशिष्टेषूपहितेषु वा द्रष्ट्रादिषु अतोऽन्यत्वस्य निषेधे 'अतः'शब्दार्थभूतेन ब्रह्मणा विशिष्टस्योपहितस्य वा जीवस्याभेदप्रसङ्गः । तृतीयप्रकाराभावात् । नच पारमार्थिकत्वाकारेणैव भेदो निषिध्यते न स्वरूपेण इति वाच्यम् । निरस्तत्वात् । व्यावहारिकस्य प्रातिभासिकस्य वा भेदस्य पारमार्थिकत्वाभेदाविरोधेन तथाऽपि विशिष्टस्योपहितस्य वा जीवस्याभेदावारणाच्च । पारमार्थिकत्वाकारेणेत्यस्याश्रुतत्वाच्च । अन्यथा 'तत्त्वमसि'इत्यादिना मिथ्यात्वक्षणिकत्वाद्याकारेण तत्त्वंपदार्थभेदो बोध्यत इति स्वीकारप्रसङ्गात् । लक्षणापत्तेश्च । नच प्रत्यक्षादिप्रमाणविरोधात् लक्षणा इष्टा । परेण श्रुतितुल्यतया प्रत्यक्षादिप्रामाण्यानभ्युपगमात् । तथा च अतोऽन्यत्वं स्वरूपेणैव निषिध्यत इत्येव वाच्यम् । एवं चेश्वर एव सर्वज्ञः, सर्वशक्तः, सत्यसङ्कल्पः, सर्वकर्ता, निरनिष्टो, नतु जीव इत्यादि सकलसिद्धव्यवस्थानुपपत्तिः । नच विशिष्टे अनुपहिते वा शोधितचिन्मात्रे अतोऽन्यत्वनिषेधाभ्युपगमात् नोक्तदोष इति वाच्यम् । तथासति मुख्यार्थत्यागप्रसङ्गात्, लक्षणापत्तेः, अप्रसक्तप्रतिषेधत्वापत्तेश्च ।।

किञ्चैवं भेदनिषेधश्रुतिः 'चिन्मात्रं चिन्मात्राद्भिन्नं न' इत्यर्थपरत्वेन जीवेश्वरभेदनिषेधो नार्थ इति स्यात् ।।

किञ्च श्रुत्यैकसमधिगम्ये निर्विशेषे पराभिमते शोधिते 'त्वं'पदार्थे श्रुतिं विना अतोऽन्यत्वस्याप्राप्त्या तन्मात्रप्राप्तस्य तयैव निषेधे कथं न श्रुतेर्व्याहतभाषित्वं, कथं च निर्विकल्पोच्छेदः? ।।

अपि चैवं विशिष्टे उपहिते वा 'त्वं'पदमुख्यार्थे जीवेऽतोऽन्यत्वेन प्रत्यक्षादिप्रतिपन्ने भेदनिषेधश्रुतेः अव्यापारात् अतोऽन्यत्वस्य निषिद्धतया भेदस्य व्यावहारिकत्वाभावप्रसङ्गः ।

नच 'नान्योऽतोऽस्ति' इत्यादिनिषेधस्योभयत्र व्यापारः शक्याभ्युपगमः । तथासति द्रष्ट्रादि-पदेषु युगपद्वृत्तिद्वयाश्रयणापत्तेर्वाक्यभेदापत्तेश्च ॥

अपि चैवं प्रमाणं विना द्रष्ट्रादिपदानां चिन्मात्रलक्षकत्वमङ्गीकृत्य लक्षिते तत्राऽतोऽन्यत्वं निषिद्ध्यत इत्यङ्गीकारे 'द्वासुपर्णा' इत्यादिश्रुतिष्वपि तथैव लक्षणमङ्गीकृत्य जीवेश्वर-चैतन्यमात्रयोर्भेदो बोध्यत इत्यङ्गीकारे को विरोधः? एवं च प्रत्यक्षाद्यप्राप्तभेदपरतया श्रुतेः अवैयर्थ्यलाभोऽधिको गुणः ॥

अपि च शोधितेऽशोधिते वा त्वं पदार्थे द्रष्ट्रादावतोऽन्यत्वस्य श्रुतिनिषिद्धतया व्यावहारिकत्वाभ्युपगमे 'यदभेदो व्यावहारिकः तद्भेदः प्रातिभासिकः, यद्भेदो व्यावहारिकः तदभेदः प्रातिभासिकः' इति नियमेन द्रष्ट्रादिपदार्थेषु 'अतः'शब्दार्थाभेदः प्रातिभासिक इत्यापन्नम् । एवं च 'तत्त्वमसि' इत्यादि 'तत्त्वं'पदार्थभेदः श्रुतेरपिच 'एकत्र निर्णीतः शास्त्रार्थोऽपरत्र' इति न्यायेन प्रातिभासिकतदभेदपरत्वमेव वाच्यमिति साधुसमर्थितं तत्त्वाऽ-वेदकत्वम् ॥

किञ्च श्रुतिमात्रनिषिद्धत्वेन व्यावहारिकत्वे 'नेह घटे किञ्चन द्रव्यम्' इत्याप्तवाक्येन, इह घटे किञ्चन=द्रव्यत्वाकारेण(न) यथा तस्यापि घटस्य निषिद्धत्वम्, एवं 'नेह नानाऽस्ति किञ्चन' 'एकमेवाद्वितीयम्' इत्यादिना 'इह'पदार्थे 'अद्वितीयम्' इत्यन्यपदार्थेच ब्रह्मणि नाना= किञ्चनत्वाकारेण, द्वितीयत्वाकारेण च 'इह'पदार्थान्यपदार्थभूतस्य ब्रह्मणः,तत्त्वं पदार्थभेदस्य, जीवात्मनो, अविद्यानिवृत्तेश्च तदन्येषामिव निषिद्धत्वमस्तीति तेषामपि व्यावहारिकत्वापत्तिः । नहि तत्पदार्थत्वंपदार्थभेदादीनां 'तेभ्यो विलक्षणः साक्षी चिन्मा-त्रोऽहं सदाशिवः' इति श्रुत्या अनुमानेन वा भोक्त्रादितो घटादितो वा भिन्नत्वेन तदपेक्षया द्वितीयत्वेन च न प्रसक्तिरिति(प्रसक्तिरित्यस्ति-पा) वक्तुं शक्यम् । न वा तेषां 'किञ्चन' 'द्वितीय'शब्दार्थत्वं नेति ॥

नच तथाऽपि स्वस्य स्वं प्रति प्रतिपन्नोपाधित्वे मानाभावात् प्रतिपन्नोपाधौ निषिद्धस्य व्यवहारिकत्वप्रयोजकस्य ब्रह्मण्यभावेन न तस्य तत्त्वमिति वाच्यम् । तस्यापि 'य आत्मनि तिष्ठन्' 'स्वे महिम्नि प्रतिष्ठितः' 'आकाशवत् सर्वगतश्च नित्यः' इत्यादि श्रुत्या स्वात्मानं

प्रति प्रतिप्रन्नोपाधित्वाऽवेदनात् । नच 'आकाशवत् सर्वगतश्च नित्यः' इति श्रुतौ 'सर्व'-शब्दस्य ब्रह्मव्यतिरिक्तपरत्वमिति सङ्कोचे मानमस्ति ॥

अपि च 'प्रत्यक्षाद्यपेक्षया श्रुतिर्बलीयसी' इति स्वीकुर्वतो 'नान्योऽतोऽस्ति' इत्यादिना मुख्यार्थत्यागेनैव द्रष्ट्रादिपदार्थेषु अतोऽन्यत्वनिषेधः सम्भवतीति निर्निमित्तमुख्यार्थत्यागो न युक्तः । विशिष्टाकारस्योपहिताकारस्य वा मुख्यार्थस्य 'अतोऽन्यदार्तम्' इत्यादि श्रुत्या मिथ्यात्वाऽवेदनात् मुख्यार्थत्वाकारेण तत्र अतोऽन्यत्वनिषेधो न सम्भवतीति चेन्न । अस्या अपि वचनभङ्ग्याः अनुमानत्वेन श्रुत्यपेक्षया दुर्बलत्वेन तदपरिपन्थित्वात् । **'अतोऽन्य-दार्तम्'** इत्यादिश्रुतेश्च मिथ्या(त्व)परत्वेन पराङ्गीकृत-तदितरश्रुतीनां तत्परत्वनिरासावसरे मिथ्यात्वे प्रमाणाभावस्य निरसिष्यमाणत्वात् ॥(१)

॥ इति श्रुतेः भेदनिषेधकत्वभङ्गः ॥

## ॥ अथ श्रुतौ लक्षणाश्रयणविमर्शः ॥

अपि च 'नान्योऽतोऽस्ति द्रष्टा' इत्यादौ बाधकं विनैव चिन्मात्रे लक्षणामाश्रित्य द्रष्ट्रादिपदार्थे चिन्मात्रेऽतःशब्दार्थभूतचिन्मात्रान्यत्वं निषिध्यत इत्यङ्गीकारे 'नेह नाना' इत्यादावपि 'इह'शब्दार्थभूते चिन्मात्रे नाना= भिन्नं, किञ्चन= किमपि नेति, विशिष्टोप-हितनिषेधानुभवेऽपि अचिन्मात्रप्रतियोगिकभेद एव निषिध्यत इत्यङ्गीक्रियताम् ॥

अपि चैवं बाधकं विना 'तत्त्वमसि' इत्यादिना 'तत्त्वं'पदलक्षितचिन्मात्राभेदबोधन-स्वीकारे 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदं सर्वम्' 'स एवेदं सर्वम्' इत्यादिश्रुत्या 'इदं, सर्व'शब्दादिलक्षिताचिन्मात्रस्य आत्मब्रह्मशब्दलक्षितचिन्मात्राभेदबोधनमपि किं नाङ्गी-कार्यम्? न्यायसाम्यात् ॥

ननु तादृशचिन्मात्रे एव किं मानम् ? येन तस्य चिन्मात्राभेदबोधनस्वीकारः आपाद्यत इति चेन्न । तथाविधचिन्मात्रे एव किं मानम्? येन 'तत्त्वं'पदलक्षितचिन्मात्राभेदबोधनं 'तत्त्वमसि'इत्यादिना क्रियत इति स्वीकारो युक्तः इति सुवचत्वात् ।

---

(१) 'अतोऽन्यदार्तम्' इति श्रुत्यर्थनिरूपणप्रस्तावे १ परिच्छेदे (पु.३३५) निरसिष्यमाणत्वादित्यर्थः ॥

प्रमाणं विनैव नृशृङ्गादितुल्यनिर्विशेषचिन्मात्रस्य स्वतःसिध्यङ्गीकारे तथाविध-चिन्मात्रस्यापि तथासिध्यङ्गीकारस्य सुलभत्वात् । 'अत्राऽयं पुरुषः स्वयं ज्योतिः' इत्यादि श्रुतेः, 'एतावन्तं कालं न किञ्चिदवेदिषम्' 'सुखं सुप्तोऽस्मि' इत्यादिपरामर्शकल्प्य-सौषुप्तिकानुभवस्य च विशिष्टे उपहिते वा चैतन्ये स्वप्रकाशत्वम्, इत्यत्रैव मानत्वेन तुच्छप्रायनिर्विशेषचिन्मात्रे स्वप्रकाशत्वमस्तीत्यत्र अमानत्वात् । अन्यथा 'अत्रायं पुरुषः' इति श्रुतौ 'अत्रे'तिसुषुप्त्यवस्थारूपविशेषोपादानवैयर्थ्यात् । निर्विशेषमुण्डितचिन्मात्रस्य स्वप्रकाशत्वेन स्वतःसिध्यभावेऽपि तस्य 'तमेव भान्तम् अनुभाति सर्वं तस्यभासा सर्वमिदं विभाति' इत्यादिश्रुतिबलात् स्वप्रकाशत्वेन सिद्धेन तथाविधचिन्मात्रेणैव सिद्धिसम्भवेन तादृशचिन्मात्रसिद्धाविव तादृशाचिन्मात्रसिद्धावपि प्रमाणस्यानपेक्षितत्वाच्च । तर्हि तदप्रामा-णिकमित्येवापन्नमिति चेन्न । पराभिमतचिन्मात्रेऽपि तथापन्नत्वस्य तुल्यत्वात् । दोषाजन्य-(दोषजन्य-पा)पराभिमतचिन्मात्ररूपप्रमितेरेव तत्सिद्धत्वसम्भवे गौरवेण तत्र प्रमाणजन्यत्वस्य अतन्त्रत्वाच्च ॥

नच तथाविधचिन्मात्रस्याप्रामाणिकत्वमिष्टम् । तर्हि ममापि तथाविधचिन्मात्रस्या-प्रामाणिकत्वमिष्टमिति सन्तोष्टव्यम् ।

ननु तथाऽपि तथाविधाचिन्मात्रस्य मदभिमतचिन्मात्राभिन्नत्वस्योक्तरीत्या सिद्धेः एक-तरपरिशेषात् अद्वैतसिद्धिरविकला इति चेत्, तथाऽपि प्रत्यक्षादिप्रमाणसिद्धविरुद्धाने-कधर्मविशिष्टोपहितवस्तूनां तद्धर्माणां च अभेदबोधने तच्छुतिव्यापाराभावेन द्वैतसिद्धय-वैकल्यात् । त्वदभिमतचिन्मात्रस्यापि मदभिमतवियदाद्यसङ्ख्याचिन्मात्राभेदबोधनेन(अनेक-त्वस्यैव-पा) एकत्वस्यैवापत्त्या अद्वैतसिद्धेरवैकल्याच्च ॥

नचैवं चिन्मात्रखण्डने –

**'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।**
**तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः'**

इति कैवल्यादिश्रुतिषु चिन्मात्रव्यवहारो नृशृङ्गादिव्यवहारतुल्य आपतित इति वाच्यम् । तत्र भोग्य-भोक्तृ-भोग-विलक्षणत्व-साक्षित्व-अहंत्व-सदाशिवत्वादिविशिष्टे तदुपहिते वा

ईश्वरात्मनि चिन्मात्रशब्देन व्यवहारात् पराभिमतचिन्मात्रालम्बनत्वाभावेन तथाविधश्रौत-व्यवहारस्य नृशृङ्गादितुल्यत्वापादने कारणाभावात् । श्रुतिषु चिन्मात्रपदेन श्रुत्यनुपात्त हेय-धर्मराहित्यबोधनेन तद्वैयर्थ्यशङ्काऽनवकाशात् । निषेधार्थकस्य तस्य विहितेतरपरत्वावश्यं-भावाच्च । अनुष्ठेय एव विषये विधिनिषेधयोर्विकल्पप्रापकत्वेन अतथाविधे अस्मिन्नर्थे तदसम्भवात् ॥

तस्माच्चिन्मात्रस्य अचिन्मात्रवत् अप्रामाणिकतया तत्र बाधकंविना द्रष्ट्रादिपदलक्षिते 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना अतोऽन्यत्वं न निषिध्यते । किन्तु तन्मुख्यार्थ एव अनुभवसिद्धे द्रष्ट्रादौ इति विशिष्टस्योपहितस्य वा जीवस्य 'अतः'शब्दार्थभूतेश्वराभिन्नत्वं दुर्वारम् । एवं विशिष्टस्योपहितस्य वा जडस्य तदभिन्नत्वमिति ॥

॥ इति श्रुतौ लक्षणाश्रयणविमर्शः ॥

एतेनैव तथाऽपि श्रुतिप्रतिपन्नमद्वैतमनाकुलमेव इत्युच्छृङ्खलवादो निरस्तः ।

'जहात्येनां भुक्तभोगामजोऽन्यः',
'कर्मक्षये याति स तत्त्वतोऽन्यः',
'तस्मिंश्चान्यो मायया सन्निरुद्धः',
'अतोऽन्यदार्तम्',
'अन्यद्युष्माकमन्तरं बभूव',
'अविद्यायामन्तरे वर्तमानाः नान्यच्छ्रेयो वेदयन्ते',
'यत्रान्यत् पश्यत्यन्यच्छृणोति अन्यद्विजानाति तन्मर्त्यम्',
'अन्योऽन्तर आत्मा प्राणमयः',
'अन्योऽन्तर आत्मा मनोमयः',
'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे'

इत्यादिश्रुतिषु भिन्नभिन्नत्वेन प्रतिपन्नविशिष्टोपहितासङ्ख्यवस्त्वभिन्नस्यानेकत्वावश्यम्भावेन द्वैतस्यैवानाकुलत्वात् (द्वैतस्यैवानुकूलत्वात् - पा) ॥

एतेनैव 'तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः' इति चिन्मात्रे जडभेद-प्रतिपादनात् 'नेह नाना'इत्यादि श्रुतेर्नतद्भेदनिषेधोऽर्थः । न वा 'इदं सर्वं यदयमात्मा' इत्यादि श्रुतेस्तदभेदार्थ इति च निरस्तम् । 'तेभ्यो विलक्षणः' इति चिन्मात्रे जडभेदस्येव भोक्तृजीवभेदस्यापि प्रतिपादनात् ।

**'भिन्नोऽचिन्त्यो परमो जीवसङ्घात् पूर्णः परो जीवसङ्घोह्यपूर्णः',**
**'सत्य आत्मा, सत्यो जीवः, सत्यं भिदा सत्यं भिदा सत्यं भिदा',**
**'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः',**
**'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्'**

इत्यादि श्रुतिस्मृतिभिः 'भेदव्यपदेशाच्चान्यः' इत्यादिसूत्रैश्च तद्भेदाऽवेदनाच्च । 'परमं साम्य-मुपैति' इति जीवेश्वरयोः सादृश्यप्रतिपादनेनापि तद्भेदसिद्धेश्च । 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यन्यपदार्थप्रधानबहुव्रीह्यन्यथानुपपत्त्यापि तद्भेदसिद्धेश्च ॥

## ॥ अथ 'नान्योऽतोऽस्ति' इति श्रुत्यर्थनिरूपणम् ॥

तथा च 'नान्योऽतोऽस्ति'इत्यादिश्रुतेर्द्रष्ट्रादिपदलक्षिते चिन्मात्रे तन्मुख्यार्थे विशिष्टे उपहिते वा अतोऽन्यत्वनिषेधो नाभिप्रेतार्थः । किन्तु अतोऽन्यो द्रष्टा ना = पुरुषो अस्ति, अतोऽन्यः श्रोता, ना = पुरुषोऽस्ति, अतोऽन्यो मन्ता ना = पुरुषोऽस्ति' अतोऽन्यः विज्ञाता, ना = पुरुषोऽस्ती'त्येवार्थः । नच 'नान्यदऽतोऽस्ति द्रष्टृ, नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ, नान्यदतोऽस्ति विज्ञातृ' इत्यादि श्रुत्यनुसारेण नान्यदतोऽस्ति द्रष्टृ' इति श्रुतेस्त्वदुक्तार्थपरत्वमपि न सम्भवतीति वाच्यम् । 'नान्यदतोऽस्ति द्रष्टृ' इत्यादि श्रुतौ 'नृ'शब्दस्य 'अथ योऽन्यां देवतामुपासते अन्योऽसावन्योऽहमस्मि'इत्यादिश्रुतौ 'अन्य'-शब्दस्येव पुंलिङ्गत्वोपपत्त्या विरोधाभावेन(विरोधाभानात्-पा) श्रुतिद्वयस्याप्यस्मदुक्तार्थे एव तात्पर्यकल्पनात् । अन्यथा उक्तदूषगण(गळ)ग्रासानिस्तारात् । निषेधार्थकनञनेकत्ववत् नृशब्दानेकत्वस्यापि श्रुतिद्वये सह्यत्वात् । निषेधार्थकनञेव अयमिति पक्षे 'नान्योऽतोऽस्ति द्रष्टा'इति श्रुतावभावार्थत्वाश्रयणेन गौरवाच्च । नहि नृशब्दोऽयमिति पक्षे उक्तगौरवाकाशः । तदर्थस्य भावात्मकत्वात् ॥

यद्यपि 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुतौ द्रष्टृत्ववति तत्पुरस्कारेण अतोऽन्यत्वप्रतिपादनमात्रेण जीवेश्वरभेदसिद्धेर्न तच्छ्रुतिविशेषणविशेषकृत्यमस्ति । तथाऽपि श्रोतृत्वमन्तृत्वादिवैधर्म्यान्तरपुरस्कारेणापि तद्भिन्नत्वप्रतिपादनं सुखेन भेदप्रतिपत्त्यर्थमिति बोध्यम् । अत एव 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स श्रुणोत्यकर्णः' इत्यादिश्रुत्यन्तरेऽपीश्वरे जीवव्यावृत्तधर्मप्रतिपादनम् ।

एतेन 'अतो अन्यो द्रष्टा, ना=पुरुषोऽस्ति' इत्युक्तेऽन्यस्मिन् द्रष्टरीश्वरतुल्यत्वेन द्रष्टृत्वप्रसक्तिर्निरस्ता । तथाहि । अन्यस्य द्रष्टुः चक्षुःसापेक्षत्वेन ईश्वरस्य तु तन्निरपेक्षद्रष्टृत्वेन तौल्यासम्भवात् । एवमन्यदपि न तत्तुल्यमिति द्रष्टव्यम् ॥

यद्वा तत्त्वमस्यादिश्रुतितात्पर्यापरिज्ञानात् तद्भ्रमाच्च त्वंपदार्थस्य जीवस्य तत्पदार्थभूतेश्वराभिन्नत्वप्रसक्तिप्रयुक्तश्रोत्राद्यभावप्रयुक्तश्रवणादिविधिवैयर्थ्यं निरसितुमीश्वरातिरिक्तं श्रोतारं-मन्तारं-विज्ञातारं च सत्वेन प्रतिपादयितुं 'नान्योऽतोऽस्ति श्रोता' इत्यादिश्रुतिविशेषो विवक्षितः । अत्र 'विज्ञात'शब्देन निदिध्यासनं विवक्षितमिति 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' इत्यादौ विपूर्वकज्ञाधातोर्निदिध्यासने, तस्यैव प्रपूर्वकस्य साक्षात्कारेच प्रयोगदर्शनात् । 'नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ' इत्यादिश्रुतौ नृशब्दश्च मनुष्यवाचकोऽपि तत्परः ।

**'अव्यक्तात् पुरुषः परः'**
**'पुरुषान्नपरं किञ्चित्'**
**'पुरुषो ह वै नारायणोऽकामयत'**
**'पुरुषो वै रुद्रः'**
**'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च'**

इत्यादौ पुरुषशब्दवत् 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये'(भ-गी-७-३) इत्यादौ मनुष्यशब्दवत्,

'.............. ... ज्ञातुमेवं विधं नरम् ।
मुने वक्षाम्यहं बुध्वा तैर्युक्ताः श्रूयतां नरः ॥'

इत्यादौ नरशब्दवच्चेति न कश्चित् क्षुद्रोपद्रवः ।

एतेन 'नान्योऽतोऽस्ति द्रष्टा' इत्यादेः 'अतोऽन्यो द्रष्टा ना= पुरुषोऽस्ति' इति ईश्वरप्रतियोगिकभेदविशिष्टद्रष्ट्रादेः सत्वप्रतिपादनपरत्वाङ्गीकारे वैयर्थ्यमेव स्यात् । 'नाहमीश्वरोऽस्मि, नाहं सर्वज्ञोऽस्मि, किन्तु यत्किञ्चिद् द्रष्टाऽस्मि' इत्यादिप्रत्यक्षेणैव तस्य निश्चितत्वादिति निरस्तम् । प्रमाणसम्प्लवस्यार्थसत्तादिनिश्चयदार्ढ्यहेतुत्वेन अवैयर्थ्यात् ।

त्रिकालाबाध्यत्वरूपपारमार्थिकसत्वस्य वेदैकसमधिगम्यसद्ब्रह्ममात्रतया प्रत्यक्षगोचरत्वानुपपत्तेश्च ॥

॥ इति 'नान्योऽतोऽस्ति इति श्रुत्यर्थनिरूपणम् ॥

## ॥ अथ 'नात्र काचन भिदास्ती'ति श्रुत्यर्थनिरूपणम् ॥

'नात्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्ति' इति श्रुतेरप्ययमर्थः ।।

अत्र= ब्रह्मणि, काचन भिदा= कापि भिदा,नास्तीति नैव । किन्तु ब्रह्मणि काचन, भिदा= जीवजडप्रतियोगिका सर्वापि भिदा अस्ति । एवं सत्यपि अत्र 'यो भिदामिव मन्यते स शतधा सहस्रधा भिन्नो= विशीर्णः सन्= विशीर्ण इव = नानाविधदुःखभाक् सन्, मृत्योः सकाशान्मृत्युमाप्नोति' इति । अन्यथा 'नात्र काचन भिदास्ति' इत्येतावतैव विवक्षितार्थसिद्धेः 'नैवात्र काचन भिदास्ति' इत्यादिश्रुतिशेषवैयर्थ्यात् । अभ्यासरूपतया तात्पर्यग्राहकतया(अनुग्राहकत्वेन-पा) कथञ्चित् सार्थक्येऽपि(वैयर्थ्येऽपि-पा) उक्तदूषणगणग्रासानिस्तारात् । अत एव 'इति'शब्दाध्याहारोऽत्र न अप्रामाणिकः । यथाश्रुतार्थस्वीकारे उक्तदूषणगणग्रासस्य 'इति' शब्दाध्याहारेणोक्तार्थपरत्वस्वीकारे च तदभावस्य लाभेन तस्यैव तत्र प्रमाणत्वात् ॥

यद्वा 'अत्र'इति सर्वनाम्ना शब्दान्तरसमभिव्याहारासत्वे 'तेन रक्तं रागात्' (पा-सू-४-२-१(१२०२) इत्यादाविव बुद्धिस्थत्वरूपप्रकृतत्वमादाय तथाविधार्थपरत्वस्वभावेन, शब्दान्तरसमभिव्याहारसत्त्वे च तदुपस्थापितार्थत्वरूपप्रकृतत्वमादायैव तत्परत्वस्वभावस्यैव व्युत्पत्तिसिद्धतया तादृशब्रह्मरूपार्थपरेण ब्रह्मोपस्थितेः 'अत्र= ब्रह्मणि काचन भिदा नास्ति । अत्र= ब्रह्मणि, काचन भिदा नैवास्ति' इत्यभ्यासेन सतात्पर्यं भेदमात्र-

निषेधपरत्वप्रतीतावपि उक्तबाधकाद् भिदाशब्दस्य अन्नमय-प्राणमय-मनोमय-विज्ञान-मयादि' तद्रूप-रामकृष्णादिरूप-तदवतारानन्दशक्त्यादि-तद्धर्म-प्रतियोगिकभेदविशेषपरत्वेन सङ्कोचस्यावश्यकत्वात् । तादृशभेदविशेषनिषेध एव एतच्छ्रुत्यर्थः ॥

नच ब्रह्मणि तद्भेदस्य मानान्तराप्रसक्ततया अस्याः श्रुतेरप्रसक्तप्रतिषेधत्वापत्तिरिति वाच्यम् । 'यदेकमव्यक्तमनन्तरूपम्' इत्यन्यपदार्थप्रधानबहुव्रीहिणा 'आनन्दं ब्रह्मणो विद्वान्' 'परास्य शक्तिर्विविधैव श्रूयते' इति सम्बन्धार्थकषष्ठ्या 'उद्धृतासि वराहेण कृष्णेन शतबाहुना'(म-ना-उ-१-३९) 'मृगं न भीममुपहन्तुमुग्रम्'(ऋ-सं-२-३३-११) इति हेयमृग-वराहादिशरीरत्वप्रतीत्या लोक इवांशांशिभावगुणगुण्यादिभावेनच ब्रह्मणि तद्भेदप्रसक्ति-सत्वात् । 'स्रुवेणावद्यति' इत्युक्ते द्रवद्रव्यमितिवत् उक्तरीत्या भेदमात्रनिषेधकत्वानुपपत्तेः । सामर्थ्यादुक्तरीत्याप्रसक्तभेदविशेषनिषेधपरताया एव न्याय्यत्वाच्च । नह्येवं ब्रह्मणि वियदा-द्यनन्तपदार्थप्रतियोगकाऽनन्तभेदप्रसक्तिः केनाऽप्यस्ति । येनेयं श्रुतिस्तन्निषेधपरा इत्या-श्रीयेत । नच स्वेनैव वाक्यान्तरेण औत्सर्गिकव्युत्पत्तितः, तात्पर्यभ्रमतो वा, प्रसक्तस्य न निषेध इति नियमोऽस्ति । 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुत्या 'इह'शब्दार्थे ब्रह्मणि स्वप्रसक्तस्यैव वाक्यान्तरप्रसक्तस्यापि परेणापि निषेधाभ्युपगमात् । नच 'आनन्दमयोऽ-भ्यासात्' (ब्र-सू-१-१-१२) इति सूत्रकृता आनन्दमयस्यैव ब्रह्मत्वसाधनमुक्तम्, नान्नमयादीनां तत्त्वे मानमस्तीति वाच्यम् । ब्रह्मत्वसाधकहेतोरभ्यासस्य जगज्जन्मादिकारणत्वरूप-ब्रह्मासाधारणधर्मस्य च आनन्दमय इव अन्नमयादिष्वपि सत्वेन तद्ब्रह्मत्वस्य दुर्वारत्वात् ॥

॥ इति 'नात्र काचन भिदाऽस्ती'ति श्रुत्यर्थनिरूपणम् ॥

**॥ अथ प्राणमयादिरूपाणां भेदप्रतिपादकश्रुत्यर्थनिरूपणम् ॥**

ननु अन्नमयादितः प्राणमयादेः

'अन्योऽन्तर आत्मा प्राणमयः',
'अन्योऽन्तर आत्मा मनोमयः',
'अन्योऽन्तर आत्मा विज्ञानमयः',
'अन्योऽन्तर आत्माऽऽनन्दमयः'

इत्यन्यत्वापरनाम्नो भेदस्याभिधानश्रुत्या प्राप्तेः उदाहृतश्रुत्या ब्रह्मणि तद्भेदनिषेधो न सम्भवतीति चेन्न । भावानवबोधात् । अन्नमयादितः प्राणमयादिर्भिन्न इति प्राणमयादावन्नमयादिभेदाऽवेदकश्रुतेः अन्नमयादिर्ब्रह्मभिन्नो न, इत्यन्नमयादौ ब्रह्मभेदनिषेधाऽवेदकश्रुतेश्च भिन्नविषयत्वेन अन्योन्यापरिपन्थित्वात् । नहि घटपटयोः परस्परभेदग्राहिप्रत्यक्षं घटो द्रव्यभिन्नो न, पटो द्रव्यभिन्नो न, इति घटपटयोः द्रव्यभेदाभावगोचरप्रत्यक्षविरोधि ॥

नन्वेवमप्यन्नमयादितः प्राणमयादेर्भेदस्य श्रुतिप्राप्तत्वादन्नमयादेः प्राणमयादितोऽपि भेदस्यावश्यकतया अन्योन्यात्यन्तभिन्नान्नमयादिपञ्चकाद् ब्रह्मणो भेदाभावे परस्परभिन्नब्रह्मपञ्चकस्वीकारप्रसङ्गः । आकाशस्य प्रदेशिन 'इह पक्षी नेह पक्षी'ति प्रतीतिसिद्धप्रदेशतो भेदाभाव इव ब्रह्मणोऽप्यंशिनः स्वांशभूतान्नमयादितः कथञ्चिद्भेदाभावेऽपि तत्प्रदेशानामत्यन्तभेदवत् अन्नमयादिपञ्चकस्यापि स्वाभाविकपरस्परात्यन्तभेदप्रसङ्ग इति चेन्न ।

**'इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरय शता दश'**
**'नह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव'**

इत्यादिश्रुत्या ब्रह्मणो मायाशब्दितविचित्रशक्त्या वा तच्छब्दितस्वेच्छया वा योग्यजीवानां भिन्नभिन्नरूपत्वेन प्रतीतिगोचरत्वाऽवेदना । तदनुरोधेन(तदनुसारेण-पा) 'अन्योऽन्तरआत्मा प्राणमयः' इत्यादि तद्रूपभेदाऽवेदकश्रुतेरवास्तवतद्भेदपरत्वेनाविरोधात् ।

**'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।**
**प्रोच्यते भगवान् विष्णुरैश्वर्यात् पुरुषोत्तमः'(१)**

इति भाष्योदाहृतब्रह्माण्डपुराणवचनोपबृंहणादपि तस्याः अवास्तवभेदपरत्वाव्यवसायाच्च ॥

ननु 'नह्यस्ति द्वैतसिद्धिः'इति श्रुतौ 'द्वैत'शब्दितभेदमात्र एव प्रमाणाभाव प्रतिपादनात् कथं त्वदभिमतभेदविशेषस्यैवाप्रामाणिकत्वसिद्धिरिति चेन्न । 'आत्म'शब्दस्य योगरूढिभ्यां परमात्मैव मुख्यार्थ इति द्युभ्वाद्यधिकरणे परैरभ्युपगमात् मुख्ये सम्भवत्यमुख्यार्थस्वीकारायोगाच्च । 'आत्मैव सिद्धोऽद्वितीयः' इत्यस्य परमात्ममात्राद्वितीयत्वप्रतिपादनपरत्वाव-

(१) तैत्तिरीयोपनिषद्भाष्योदाहृतब्रह्माण्डपुराणस्मृतिः ॥

सायात् । 'द्वितीय'शब्दस्यापि 'अस्य गोर्द्वितीयेन भाव्यम्' इत्यादौ सजातीयद्वितीयमात्र-परत्वावसायेन व्युत्पत्त्यविरोधाय'आत्मैव सिद्धोऽद्वितीय' इत्यत्र 'अद्वितीय'शब्दस्य सजातीयद्वितीयमात्रनिषेधपरत्वेन तस्य वाक्यस्य परमात्मपरत्वमेव(परमात्मत्वमेव-पा) । परमात्मत्वं स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणमिति गोत्वाश्रयवन्न परमात्म-त्वाश्रयो 'नाना'इति परमात्मव्यक्तिभेदनिषेधपरत्वावसायात् । तदनुरोधेन द्वैतशब्दस्य भेदमात्रवाचित्वेऽपि प्रकृते भेदविशेषपरत्वस्यैवाश्रयितव्यत्वात् । तथा च 'मायया ह्यन्यदिव' इति वाक्यशेषेणोपस्थितपरमात्मप्रतियोगिक तदनुयोगिकभेदस्यैव मायाधीनप्रतीतिकत्वं निश्चीयते । 'नह्यस्ति द्वैतसिद्धिः'इति पूर्ववाक्येनापि तस्यैव प्रमाणाधीनसिद्धिकत्वं निरस्यत इति किमनुपपन्नम्?।।

एतेन –

'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मसंज्ञितम् '

इति विष्णुपुराणवचनमपि व्याख्यातम् । प्रत्यस्तमितो सन् भेदो= विशेषो यस्मात्त-त्तथोक्तं, निरतिशयमिति यावत् । 'जातिभेदकृतो भेदो गवाश्वादिषु निश्चितः' इत्यादौ भेद-शब्दस्य विशेषेऽपि प्रयोगात् । यत् सत्तामात्रं यस्य सत्तैव न= कथञ्चिदप्यसत्तेत्यर्थः (कथञ्चिदसत्त्वेत्यर्थः-पा) । वचसामगोचरं= स्वपरगाऽशेषविशेषविशिष्टतया विशिष्य प्रतिपाद-यितुमशक्यम्, आत्मसंवेद्यम्= स्वप्रकाशस्वरूपं, तत्= 'सत्यं ज्ञानमनन्तम्' इति श्रुत्युपात्तं ज्ञानं, ब्रह्मसंज्ञितमिति । 'यन्नदुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम्' इत्यादिवच्छक्तिग्रहार्थं प्रवृत्ततया तस्य वचनस्य भेदमात्रनिषेधपरत्वासिद्धेः ।।

अत एव 'नह्यस्ति द्वैतसिद्धिः'इतिश्रुतिः पराभ्युपगतमर्थं स्फुटं प्रतिपादयतीति प्रत्यूढम् ।। हि = यस्मात् । एवकारो भिन्नक्रमः, अद्वितीय एव= द्वितीयरहित एव आत्मा, सिद्धः= श्रुत्यादिना प्रमितःसन्, मायावशात्, अन्यदिव= अन्यत्वेन= अनेकत्वेन भातीति नहि, तस्मात् अस्ति द्वैतसिद्धिः इत्यर्थपरतया मायावादादिकुसमयप्राप्ताद्वैतनिरासकतया तस्याः श्रुतेः पराभ्युपगमार्थासाधकत्वात् । द्वितीय'हि'शब्दस्य 'अयमर्थः सकललोकप्रसिद्धः'

इति प्रतिपादनाय प्रवृत्तत्वेनावैयर्थ्यात् । तस्मादन्नमयादितः प्राणमयादेः 'अन्योऽन्तर आत्मा प्राणमयः' इत्यादिना वास्तवभेदप्रतिपादनात् ब्रह्मणस्तद्भिन्नत्वनिषेधे परस्परात्यन्तभिन्नान्नमयादिपञ्चार्थाभिन्नत्वेन न परस्परभिन्नपञ्चब्रह्मव्यक्तिसिद्धिप्रसङ्ग इति ॥

॥ इति प्राणमयादिरूपाणां भेदप्रतिपादकश्रुत्यर्थनिरूपणम् ॥

## ॥ अथ 'तस्माद्वा एतस्मादन्नरसमयात्' इति श्रुतेः वर्णकान्तरकथनम् ॥

केचित्तु[(१)] 'तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः' इत्यादौ 'अन्य'शब्दस्य साक्षान्न पञ्चम्यन्तेनान्वयः येनोक्तदोषः स्यात् । किन्त्वन्तरशब्दस्यैव । तथा चायमर्थः । ''तस्मादेतस्मादन्नरसमयात्, अन्यशब्दो भिन्नक्रमः, अन्तरः= तदपेक्षया अन्तःस्थितः ईश्वरे मूर्तिभेदेन न्यूनाधिकपरिमाणभेदस्य श्रुतिसिद्धत्वात् अन्यः= सङ्कोचकाभावात् सकललोकविलक्षणः य सः आत्मा स प्राणमयः, तेनैष पूर्णः'' इति । एवमुत्तरवाक्यस्याप्यर्थो द्रष्टव्यः ॥

नच बाधकं विनाऽन्यशब्दस्य साक्षात् पञ्चम्यन्तान्वयत्यागायोगः । अन्नमयादेर्ब्रह्मलक्षणलक्षितत्वेन ब्रह्मत्वावश्यम्भावे ब्रह्मणश्च 'एकमेवाद्वितीयम्' 'द्यावाभूमी जनयन् देव एकः'(श्वे-उ-३-३) इत्यादिना द्रव्यत्वपृथिवीत्वादिवदेकव्यक्तित्वावधारणेन, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति समाभ्यधिकरहितत्वावधारणेन च अनेकत्वस्वीकारायोगात् । यथाश्रुतान्वये श्रुतिसिद्धब्रह्मैकव्यक्तित्वत्यागस्यैव बाधकत्वात् । **'सोऽन्तरादन्तरं प्राविशत्, दिशश्चान्तरं प्राविशत्'**(अथ-शि-उ) इत्यथर्वशिरोवाक्ये 'अन्तर'शब्दयोगेऽपि पञ्चमीदर्शनात् । तद्वत्प्रकृतेऽपि पञ्चम्युपपत्तेः । 'प्राप्य'इति ल्यब्लोपे वा(च)इयं पञ्चमी । एतत्पक्षेऽपि पूर्ववद्योजना । सत्यामाकाङ्क्षायां सन्निधानमात्रस्य अतन्त्रतया व्यवहितेनाऽप्यन्यतरशब्देन पञ्चम्यन्तस्यान्वयसम्भवाच्च ॥

नचान्यशब्दे तदुभयसम्भवे त्यागायोग इति वाच्यम् । बाधकाभाव एव सम्भवत्यागायोगात् । प्रकृतेच बाधकस्य दर्शितत्वात् । नच ब्रह्मनिष्ठभेदे सकललोकप्रतियोगित्व-

---

(१) 'केचित्तु' इत्यस्य 'प्रतियोगित्वेनावधारणादित्याहुः' (पु.७४)इत्यन्तेनान्वयः ।

मङ्कृप्तमेव कल्प्यमेवं सति स्यादिति वाच्यम् । 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्' इति श्रुतिवाक्यात् साकल्येन यावद्गुणवत्तया(गुणाश्रितः-पा) चिन्तनागोचरः परमः= परमात्मा जीवसङ्घाद्भिन्नः इत्यर्थकाद् –

**'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एवच ।**
**क्षरःसर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः'** (भ.गी.१५-१६)

इति स्मृतेश्च जीवसङ्घक्षराक्षरशब्दितसकललोकस्येश्वरनिष्ठभेदप्रतियोगित्वेनावधारणादित्याहुः ॥

॥ इति 'तस्माद्वा एतस्मादन्नरसमयात् 'इति श्रुतेः वर्णकान्तरकथनम् ॥

(१)अन्येतु –

**'यथाह्ययं ज्योतिरात्मा विवस्वान्नपो भिन्ना बहुधैकोऽनुगच्छन् ।**
**उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्ववमजोऽयमात्मा'**

**'एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'**

इति श्रुतिभ्यां परमात्मनिरूपितपरमात्मनिष्ठभेदः तावत् सामान्यतः औपाधिकत्वेनाऽवेद्यत इत्यविवादम् । भेदश्रुतिरप्यनन्यथासिद्धैव भेदनिषेधकश्रुतिविरोधिनीत्यपि । एवं च 'तस्माद्वा एतस्मादन्योऽन्तर आत्मा प्राणमयः' इत्यादिभेदश्रुतिः किमन्नमयादिशब्दितान्नमयादिकोशान्तर्गतपरमात्मरूपेषु कोशरूपोपाधिनिष्ठं भेदं परम्परासम्बन्धेनाऽवेदयति, किं वा साक्षात्सम्बन्धेनेतिविशये? साक्षात्सम्बन्धेनेति प्राप्ते प्रकरणान्तरे **'अन्नमय- प्राणमय-मनोमय-विज्ञानमय-आनन्दमयमात्मा मे शुद्ध्यन्ताम्'** (म-ना-उ-६६-१०) इति शुद्धिप्रार्थनानुरोधेन अन्नमयादिकोशानां 'येऽन्नं ब्रह्मोपासते' 'शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुत' 'एतमन्नमयमात्मानमुपसङ्क्रम्य' इत्यादिवाक्यपर्यालोचनया 'अन्नमयमा-

---

(१) 'अन्येतु' इत्यस्य 'न कोऽपि दोष इत्यप्याहुः' (पु.७५) इत्यन्तेनान्वयः ।

त्मानमुपसङ्क्रम्य' इति योगरूढिभ्यां परमात्मनि यो मुख्यः 'आत्म'शब्दस्तदन्यथाऽनुपपत्त्या च तदन्तर्गतपरमात्मरूपाणां चावश्यकमङ्गीकार्यत्वात्, परमात्मभेदौपाधिकत्वप्रतिपादकश्रुतौ शरीरशब्दपर्याय'क्षेत्र'शब्दसत्वात्, 'क्षेत्रेषु' इति बहुवचनस्योपपत्तये तदर्थत्वेन क्षेत्रशब्दस्य 'लम्बकर्णमानय' इत्यादाविवाजहल्लक्षणया शरीररूपान्नमयकोशपरत्ववत् प्राणमयादिकोश-परत्वसम्भवात्, तत्तत्कोशनियामकतत्तत्परमात्मरूपविशेषपरत्वस्यच मुख्यवृत्त्यैव सम्भवाच्च, साक्षान्नियम्यकोशनिष्ठभेदस्य च नियामकान्नमयादिशब्दितपरमात्मरूपविशेषेष्वपि, साक्षात् परमात्मन्यङ्गुष्ठमात्रत्वायोगेऽपि तादृशार्थनिष्ठत्वेन 'अङ्गुष्ठमात्रः पुरुषो मध्ये' (म-ना-उ-७-१-१) इति श्रुत्येव परम्परासम्बन्धमभिप्रेत्य श्रुत्या तत्प्रतिपादनसम्भवात्, भेदश्रुते-रन्यथासिद्धत्वेन तन्निषेधश्रुतिविरोधिता निषेधश्रुतेः साक्षात्सम्बन्धेन तन्निष्ठभेदविषयत्वात् । एवं चान्नमयादिशब्दितपरमात्मस्वरूपविशेषाणां घटपटयोरिव साक्षात्परस्परप्रतियोगिक-परस्परनिष्ठभेदे प्रमाणाभावेन तदभिन्नत्वेऽपि ब्रह्मणो नानेकत्वमिति सिद्धान्तसम्भवान्न कोऽपि दोषः ॥

एवं 'एक एव तु भूतात्मा' इति श्रुतेरपि 'भूतात्मा परमात्मा च मुक्तानां परमागतिः' इति नामसहस्रे पाठात्, भूतात्मा= परमात्मा, स्वयमेक एव । भूते भूते नहि स्यात् 'सर्वा भूतानि' इत्यादौ भूतशब्दस्य प्राणिवाचित्वदर्शनात्, वीप्सया व्याप्तेर्लाभात्, तत्तत्प्राण्य-नुगुणकर्मानुसारेण व्यवस्थितव्यापारनियामकतया सर्वभूतेषु व्यवस्थितः सन् ज्ञानिनः प्रति एकधा, दोषदुष्टान् प्रति बहुधा च = भिन्नतया च, जलचन्द्रवत् दृष्टिगोचरो भवतीत्यर्थ-प्रतीतेः । स्वभिन्नान्योन्यभिन्नजीवसम्बन्धेनान्तर्बहिः तन्नियामकतया तन्निष्ठे परमात्मनीव 'अन्योऽन्तर आत्मा' इत्यादेः स्वावच्छेदककोशनिष्ठभेदं स्वस्मिन् परमात्मनि परम्परा-सम्बन्धमभिप्रेत्य प्रतिपादयितुं प्रवृत्तिरिति तच्छ्रुतेर्नाऽन्यथासिद्धभेदपरत्वम् । तथाच न कोऽपि दोष इत्यप्याहुः ॥

एतेन 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' इतिश्रुतौ अन्यत्वस्य जीवनिष्ठस्य मायिकत्वप्रतीतेः, 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति' इतिश्रुतौ भेदं जानतो भयोक्तेः 'अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मि स न वेद

यथा पशुः' इति श्रुतौच भेदोपासनाया निन्दनाच्च 'नात्र काचन भिदास्ति' इत्यादि-श्रुतेर्भेदमात्रनिषेधपरत्वमवसीयते । नतूक्तरीत्या सङ्कोचेन भेदविशेषनिषेधपरत्वम् इति निरस्तम् ॥

'मायया सन्निरुद्धः' इति निरोध एव मायायाः करणत्वावेदनेन जीवनिष्ठपरमात्मनिरूपितान्यत्वं प्रति तत्करणत्वस्यातच्छ्रुत्यर्थत्वात् । 'उदरमन्तरं कुरुते' इति श्रुतेरपि उदरम्, अल्पमेव= बाध्यमेव = अभेदसहितमेव वा अन्तरं= भेदं, यः कुरुते = निश्चिनोति, अथ= अनन्तरमेव, तस्य, भयं भवतीत्यर्थकत्वेन भेदज्ञानिनं प्रति भय- प्रतिपादकत्वा-सिद्धेः ॥

## ॥अथ 'योऽन्यां देवतामुपास्ते' इति श्रुत्यर्थः ॥

'अथ योऽन्यां देवतामुपास्ते' इति श्रुतेरपि **'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्'** इत्यनुदितहोमनिन्दया उदितहोमस्तुतिपरत्ववत् भेदोपासनानिन्दात्वेन प्रतीता-वप्यभेदोपासनास्तुतिपरत्वोपपत्त्या भेदनिषेधपरत्वासिद्धेः ।

यद्वा 'अन्योऽसावन्योऽहमस्ति' इत्येवोपासनाकारः इति प्रतिपादयन्तीयं श्रुतिस्तदाकार-विशिष्टाप्युपासना परदेवतारूपवासुदेवातिरिक्तदेवताविषया न कार्या । ताम् = 'अन्योऽ-सावन्योऽहमस्मि' इति विहिताकारविशिष्टां, कुर्वन्नपि 'स न वेद यथा पशुः' इत्याह इति, न तस्याभेदनिषेधोऽर्थः । तथाहि(च) स्मृतिः –

**'वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।**
**तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः' इति** (१)॥

नच 'अथ योऽन्यां देवतामुपास्ते' इत्युक्तेः सन्निधानाद्यच्छब्दितोपासकापेक्षयैवान्यत्व-ग्रहणं युक्तम् । नतु तद्वाक्यानुपस्थित वासुदेवरूपदेवतापेक्षयेति वाच्यम् । देवतापद-समभिव्याहारस्वारस्यात् । यत्र देवतात्वं प्रमाणसिद्धं तदपेक्षयैवान्यत्वस्य वक्तव्यत्वात् । नहि 'अन्यं राजानमुपासते' इत्युक्ते उपासकापेक्षयान्यत्वमर्थः । राजान्तरापेक्षयैवेति ॥

---

(१) कृष्णामृतमहार्णवोदाहृतश्लोकोऽयम् ॥

यद्यपि 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इत्यादावपीशशब्दसमभिव्याहारात् तदर्थस्योक्तरीत्या न द्रष्टृजीवापेक्षयाऽन्यत्वलाभः । तथाऽपीशकोट्यन्तराभावादन्यत्वमुच्यमानमीशितव्य कोट्यपेक्षयैव निर्वाह्यमिति वस्तुतो द्रष्टुरपीशितव्यकोटि प्रविष्टतया ईशनिष्ठान्यत्व(निष्ठान्यत्र-पा)प्रतियोगित्वं लभ्यत इति 'पश्यति'शब्दोपात्तद्रष्टृत्वेन तस्य तत्त्वालाभेऽप्यक्षतिः ॥

किञ्च परदेवतापेक्षयाऽन्यत्वस्याविवक्षितत्वे च 'अथ यो देवतामुपास्तेऽन्योऽसावन्योऽहमस्ति' इत्येतावैव विवक्षितार्थलाभात् 'अन्यम्' इति देवताविशेषणवैयर्थ्यमित्यलम् ॥

॥ इति 'योऽन्यां देवतामुपास्ते' इति श्रुत्यर्थः ॥

## ॥ अथ जुष्टं यदा इति श्रुतेः सम्प्रदायविदभिप्रायकथनम् ॥

(१)सम्प्रदायविदस्तु 'जुष्टं यदा पश्यत्यन्यमीशम्' इति वाक्यस्येशपदसमभिव्याहारात् तदर्थस्येशान्तरापेक्षयैवान्यत्वं वाच्यम् । तथैव व्युत्पत्तेः । ईशान्तरं च 'शम्भुरीशः पशुपतिः' (अ-को-स्व-व) इति कोशसिद्धमेवेति, तदपेक्षया अन्यम् ईशं = परममहेशं, श्रवणादिसम्पन्नो जीवो यदा जुष्टं= प्रीतं पश्यतीत्यर्थः । नच तादृशेश्वरे मानाभावः । 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्' 'पतिं पतीनां परमम्' (श्वे-उ-६-७) इत्यादि श्वेताश्वतरश्रुतेरेव तत्र मानत्वात् । अत एवोत्तरवाक्ये 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति तत्समाधिकयोर्मानाभावोक्तिः ॥

ननु श्वेताश्वतरे 'संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशम्' इति 'किं कारणं ब्रह्म कुतस्म जाता । जीवाम केन क्व च सम्प्रतिष्ठा' (श्वे-उ-१-१) इत्यादिप्रश्नानन्तरं 'ईश'शब्देन प्रक्रमदर्शनात् तस्यैव च प्रतिवचनत्वकल्पनात् प्रतिवचनगत'ईश'शब्दस्य च योगरूढिभ्यां पशुपतावेव प्रवृत्तेः परमोपक्रमे श्रुतस्यैवेशस्य 'तमीश्वराणां परमं महेरश्वरम्' इति तच्छब्देन परामृश्येश्वराणां मध्ये परममहेश्वरत्वमावेद्यत इति तस्य वाक्यस्य प्रसिद्धेशातिरिक्ते मानत्वमेव नेति चेन्न । 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यन्येशत्वेन श्रुतस्य

(१) 'सम्प्रदायविदस्तु' इत्यस्य 'नवा व्युत्पत्तिविरोध इत्याहुः' (पु.७८) इत्यनेन सम्बन्धः ।

प्रसिद्धेशान्यत्वावश्यकत्वात् । श्वेताश्वतरे प्रथमे षष्ठे च 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मनावीशते देव एकः' (श्वे-उ-१-१०) 'धर्मावहं पापनुदं भगेशं ज्ञात्वाऽत्मस्थममृतं विश्वधाम'(श्वे-उ-६-६) इति । तत्र हि 'ईश'शब्दपर्याय'हर''भव'शब्दार्थस्य 'अक्षर'शब्दार्थत्वोक्तिपूर्वकम् ईशितव्यत्वम् उच्यते । नहि स्वस्यैव स्वं प्रति ईशित्वम् ईशितव्यम् । 'तमीश्वराणां परमं महेश्वरम्' इतिवाक्यार्थपर्यालोचनया **'एको ह वै नारायण आसीन्न ब्रह्म नेशानः'** इति महोपनिषद्वाक्यार्थपर्यालोचनया च श्वेताश्वतरे उपक्रमगतेशशब्दस्यास्यैव मध्यगतस्य तत्पर्यायस्य चातिरिक्तेशपरत्वाश्रयणावश्यम्भावात् । अन्यथा श्रुतीनामेव परस्परव्याहतभाषित्वापत्तेः ॥

नच तासां तत्तद्देवतोत्कर्षप्रतिपादनपरत्वात् **'नहि निन्दा निन्द्यम्'** इति न्यायेनाविरोध इति वाच्यम् । तथासति –

**'सर्वे वेदा यत्रैकीभवन्ति'**
**'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति'**
**'वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेद विदेव चाहम्'**
**'सर्वे वेदाः सर्वे घोषाः एक एव व्याहृतिः'** (ऐ-उ-२-२-२)
**'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम्'**
**'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्'** (ब्र-सू-३-३-४३)

इति सर्ववेदमुख्यतात्पर्यगोचरार्थैक्यप्रतिपादकश्रुति-स्मृति-सूत्रविरोधात् ॥

किञ्च प्रसिद्धेशो न जगत्कारण ब्रह्मशब्दार्थाभिन्नोऽङ्गीकर्तुं शक्यः । तस्य सर्गाद्यकाले 'न ब्रह्म नेशानो' इति महोपनिषद्वाक्येनासत्त्वाऽवेदनात् । नहि जगत्सृष्टेः प्रागसतो जगत्सृष्टिं प्रति कारणत्वं शक्याभ्युपगमम् । तस्मात् 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यत्र 'ईश'शब्देन प्रसिद्धेशादन्य एवेशो ग्राह्य इति, न तस्य जीवेश्वरपरत्वक्षतिः । अन्यत्वप्रतियोगितयाऽवगतस्यैव जीवत्वेन पर्यवसानात्, नवा व्युत्पत्तिविरोध' इत्याहुः ॥

तस्मात् कयाऽपि श्रुत्या जीवेश्वरभेदस्यानिषेधात् श्रुतिनिषिद्धभेदविषयत्वेन द्वासुपर्णेत्यादिभेदश्रुतिस्मृतिसूत्राणां व्यावहारिकार्थपरत्वं परोक्तमयुक्तमिति सिद्धम् ॥

॥ इति 'जुष्टं यदा' इति श्रुतेः सम्प्रदायविदभिप्रायकथनम् ॥
॥ इति जीवेश्वरभेदव्यावहारिकत्वनिरसनम् ॥

## ॥ अथ भेदे प्रत्यक्षप्रमाणोपन्यासः ॥

अत्रास्मद्गुरुचरणाः(१)– प्रत्यक्षं तावज्जीवब्रह्मणोर्भेदे प्रमाणम् । 'नाहं सर्वज्ञः नाहं निर्दुःखः' इत्यनुभवात् । नच ब्रह्मणोऽप्रत्यक्षत्वात्तद्भेदोऽप्यप्रत्यक्ष इति वाच्यम् । यत्रहि यत्सत्वमनुपलब्धविरोधि तत्र तदभावः प्रत्यक्षः । नतु प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे तन्त्रम् । जलपरमाणौ पृथिवीत्वाभावस्यप्रत्यक्षत्वप्रसङ्गात् । प्रतियोगिनः पिशाचादेरप्रत्यक्षत्वेऽपि 'स्तम्भः पिशाचो न भवतीति' स्तम्भे तत्प्रतियोगिकभेदप्रत्यक्षप्रतीतेश्च । प्रतीत्यनुसारेण हि प्रयोजनं कल्प्यम् । नतु स्वपरिकल्पितप्रयोजनानुसारेण प्रतीतिनियमनं कार्यम् ॥

किञ्च जीवेश्वरभेदयोरप्रत्यक्षत्वे तन्निषेधकश्रुतेरप्रसक्तप्रतिषेधकत्वापत्तिः । तद्भेदश्रुतेः त्वदुक्तप्रत्यक्षप्राप्तभेदानुवादकत्वानुपपत्तिश्च ॥

ननु अन्तःकरणविशिष्टस्य तदुपहितस्य वा परमेश्वराद्भेदः प्रतीयते । सच ममापीष्टः । यश्च नेष्टोऽविशिष्टः(नेष्टः विशुद्ध-पा) चैतन्यस्य परमेश्वराद्भेदः सो न भवतीति चेत् 'योऽहमस्वाप्स्वम्, यस्य ममाज्ञानं संसारश्च सोऽहं निर्दुःखाद्भिन्नः' इत्यज्ञानसंसारयोराश्रयस्यैव ततो भेदावगमात् । संसाराद्याधार-अनाधारचैतन्ययोरेव हि भेदे आवयोर्विवादः, नतु चिन्मात्रस्य चिन्मात्राद्भेदे ईश्वरस्यापि जीवाद्भेदे 'ममैवांशो जीवलोके'(भ-गी-१५-७) इत्यादि तद्वचनानुमितं तदीयं प्रत्यक्षं वा 'तुरीयं तत्सर्वदृक् सदा' इति श्रौतार्थान्यथानुपपत्तिकल्पितं तदीयं प्रत्यक्षं वा प्रमाणम् । नच 'सर्वदृक्' इत्यत्र 'सर्व'शब्दस्य जीवेश्वरभेदातिरिक्तसर्वपरत्वमेवेति सङ्कोचे मानमस्ति । प्रमाणसिद्धपदार्थमात्रविषयकसाक्षात्कार-

(१) 'प्रत्यक्षं तावत्' इत्यादि वाक्यानि न्यायामृते २ परिच्छेदे १७ भङ्गमनुकरोति ॥

त्वेनैव हि तस्य सर्वदृत्त्वं वाच्यं नत्वन्यथा । अन्यथेश्वरज्ञाने घटपटादिभेदोऽपि विषयो नेत्यप्यङ्गीकारापत्तेः । नहि घटपटयोर्भेद इव जीवेश्वरयोर्भेदः परेण व्यावहारिकप्रमागोचरो नेष्यत इत्यस्ति ॥

॥ इति भेदे प्रत्यक्षप्रमाणोपन्यासः ॥

## ॥ अथ भेदे अनुमानप्रमाणोपन्यासः ॥

अनुमानमपि जीवेश्वरभेदे प्रमाणम् ।(१)'ईश्वरः जीवप्रतियोगिकधर्मिसत्तासमानसत्ताक-भेदवान् । दुःखाननुभवितृत्वात्, अभ्रान्तित्वात्, असंसारित्वाच्च घटवत् । 'जीवः ईश्वर-प्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवान् असर्वज्ञत्वात् असर्वशक्तित्वात् अस्वतन्त्रत्वाच्च घटवत् । अत्र जीवेश्वरशब्दाभ्यां परमते 'तत्त्वमसि'इत्यत्र तत्त्वंपदाभ्यां, जीवाः परमात्मनस्तत्वतो न भिद्यन्त आत्मत्वात् परमात्मवत् इत्यत्र 'जीव-परमात्म'शब्दाभ्यां ये संसाराद्याधार-तदनाधारचैतन्ये विवक्षिते ते एव अत्रापि विवक्षिते इति न सिद्धसाधनम् । धर्मिशब्दस्य पित्रादिशब्दवत् सम्बन्धिशब्दत्वान्न मिथ्यात्वं प्रति धर्मिभूतशुक्तिरूप्यसमान-सत्ताकभेदेन सिद्धसाधनशङ्का । नहि माता पूज्येत्युक्ते स्वसुतमाता= भार्या पूज्यते । धर्मिपदस्थाने स्वपदं वाप्रयोज्यम् । सत्तात्रैविध्यमतेऽपीश्वरे बाधाभावरूपसत्तायास्तदुपलक्षित-स्वरूपरूपाया वा सत्वान्न बाधः । स्वपदस्य समभिव्याहृततत्तदर्थपरतया व्युत्पत्तिसिद्धत्वान्न कश्चिद्दोषः ॥

नचाद्यानुमाने दृष्टान्तः साध्यविकलः । 'घटो जीवप्रतियोगिकप्रतियोगिज्ञानाबाध्य-भेदवान्, जीवधर्मिकधर्मिज्ञानाबाध्यभेदप्रतियोगित्वात् । यद्यज्ज्ञानाबाध्ययद्धर्मिकभेदप्रति-योगितत्तज्ज्ञानाबाध्यतत्प्रतियोगिकभेदवत् । यथा दूरस्थवनस्पत्योः एक' इत्यनुमानेन घट-रूपदृष्टान्ते साध्यसिद्धेः । नच दुःखाननुभवितृत्वहेतोर्जीवेन अनैकान्तिकत्वम् । अन्तः-करणस्यैव दुःखानुभवितृत्वादिति वाच्यम् । दुःखादेर्बन्धस्य मोक्षसामानाधिकरण्याय जीवस्थत्वावश्यम्भावात् । पराभिमतान्यथाभावहेतुत्वेन विवक्षित इति किमनुपपन्नम्? नच

(१) 'ईश्वरः जीवप्रतियोगिक' इत्यादि वाक्यानि न्यायामृते २ परिच्छेदे १८ भङ्गमनुकरोति ॥

असंसारित्वादिहेतोः ईश्वरेऽसिद्धिः, जीवेऽनैकान्त्यं वा । परमतेऽप्यौपाधिकश्यामत्वा- दिवत् संसारित्वादेरपि व्यवस्थितत्वात् ॥

यद्वा 'ब्रह्म स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत् पदार्थत्वाद् घटवत् । जीवस्यापि जीवान्तराद्भिन्नत्वेन न तेन व्यभिचार' इत्यनुमानं तत्र मानम् ॥

॥ इति भेदे अनुमानप्रमाणोपन्यासः ॥

## ॥ अथ भेदे श्रुतिप्रमाणोपन्यासः ॥

श्रुतिश्च जीवेश्वरयोर्भेदे प्रमाणम् । 'द्वा सुपर्णा' इत्याद्याः । स्मृतिश्च 'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्' इत्याद्याः । सूत्राणि च 'भेदव्यपदेशात्' 'भेदव्यपदेशाच्चान्यः' 'शारीर-श्चोभयेऽपि हि भेदेनैनमधीयते' इत्यादीनि । नचायं भेदो व्यवाहारिकः । मुक्तावपि श्रुतेः स्मृतेश्च । नच सा मुक्तिरवान्तरा ।

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्तिच'(भ-गी-४-१२)

इति स्मृतौ मुक्तानां सर्गाद्यभावोक्तेः ।

'न यत्र माया किमुतापरे हरेरनुव्रताः यत्र सुरासुरार्चिताः ।
श्यामावदाताः शतपत्रलोचनाः पिशङ्गवासाः(वस्त्रा)सुरुचः सुपेशसः'

(भाग-२-९-१०,११) इति स्मृतौ मुक्तिं गतानां मायासम्बन्धनिषेधाच्च ।

'यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ।
ब्रह्मणा विपश्चिता'

इत्यत्र श्रुतौ मुक्तेः शुद्धब्रह्मज्ञानफलत्वोक्तेश्च । भूमविद्याफलोक्त्यवसरे तद्विद्यावतः –

'सर्वेषु लोकेषु कामचारो भवति, स एकधा भवति, स त्रेधा भवति'

इति भेदोक्तेश्च ।

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमःपुरुषः । स तत्र पर्येति'

इति स्वरूपाभिव्यक्त्युक्तेश्च ॥

'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'

इति कर्मक्षयोक्तेश्च ।

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः'

पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेति ॥'

'ज्ञाज्ञौ द्वावजावीशानीशौ अनीशश्चात्मा मुह्यते भोक्तृभावात् ।
अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥'

इत्यादौ भेदज्ञानात् मोक्षोक्तेश्च ।

'आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान्विनियोजयेद्यः ।
तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः'

इत्यादावन्यत्वस्य तात्विकत्वोक्तेश्च ॥

॥ इति भेदे श्रुतिप्रमाणोपन्यासः ॥

## ॥ अथ अभेदे प्रमाणनिरासः ॥

अभेदे च न किञ्चिन्मानमस्ति । नच 'जीवाः परमात्मनस्तत्त्वो न भिद्यन्ते आत्मत्वात् परमात्मवत्' इत्यनुमानं तत्र मानमस्ति इति वाच्यम् । उक्तभेदप्रत्यक्षेण बाधितविषयत्वात् । ज्ञातृत्वादिरूपात्मत्त्वस्य हेतोस्तवासिद्धेः । अध्यस्तस्य तस्य विपक्षेऽपि सम्भवात् । अवेद्यत्वरूपस्य तस्य मां प्रत्यसिद्धेः । जातिरूपस्य तस्य विरोधेनैव दूरनिरस्तत्वात् । जीवाः परमात्मनो व्यवहारतोऽपि न भिद्यन्ते आत्मत्वादेव तद्वत्' इत्याभाससमानयोगक्षेमत्वाच्च । नापि श्रुतिः तत्र मानम् । तस्य जीवेश्वरभेदग्राहिनित्यनिर्दोषस्वप्रकाशसाक्षिप्रत्यक्षाद्युपोद्बलितभेदश्रुतिविरोधेनातत्परत्वात् । नचोपक्रमादितात्पर्यलिङ्ग-

सत्वेन तत्परत्वं दुर्वारमिति वाच्यम् । मानान्तराविरोधविशिष्टोपक्रमादेरेव तात्पर्यलिङ्गत्वस्याभ्युपगन्तव्यत्वात् । अन्यथा 'यजमानः प्रस्तरः' 'सोमेन यजेत' इत्यादेरपि प्रस्तरयजमानाभेद-सोमयागाभेदयोरपि अपूर्वतालिङ्गसत्वेन तात्पर्यसिद्ध्यापत्तेः । तत्र तात्पर्यसत्त्वेऽपि ततस्तदभेदासिद्धौ तत्त्वमस्यादिवाक्यतोऽपि सत्यपि तात्पर्ये तत्त्वंपदार्थाभेदासिद्धिप्रसङ्गात् । तात्पर्यसत्वस्य हठात् प्रतीयमानवाक्यार्थसत्वेनानियमस्य क्वचिदेवाङ्गीकारे विशेषहेत्वभावाच्च ।

तस्मात् प्रत्यक्षानुमानश्रुतिस्मृत्यादिप्रमाणसिद्धत्वाज्जीवेश्वरभेदः पारमार्थिकः(पारमार्थः-पा) । अभेदे च प्रमाणाभावात् स्वसत्तार्थमुपाधिसत्तानिरपेक्षत्वाच्च स्वाभाविकश्चेति वदन्ति[१] ॥ ।। इति अभेदे प्रमाणनिरासः ।।

## ।। अथ नवीनोक्तभेदतात्त्विकत्वनिरासः ।।

अत्र नवीनाः यद्भेदगततयाऽङ्गीक्रियते तत्पारमार्थिकत्वं न तावज्जातिः । पदार्थमात्रगततया तस्य जातित्वासम्भवात् । गोत्वघटत्वादेरिव नियतव्यञ्जकाभावाच्च । किन्तु बाधागोचरत्वरूपोपाधिः । स च न जीवेश्वरभेदेऽस्ति ।

**'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता'**

इति द्रष्ट्रादिभेदस्य 'अतः'शब्दार्थभूतब्रह्मप्रतियोगिकस्य निषेधात् । नच प्रात्यक्षिकबाधागोचरत्वं सत्त्वमुपाधिः । तच्च भेदेऽप्यस्तीति वाच्यम् । लाघवेन प्रत्यक्षाप्रत्यक्षसाधारणबाधागोचरत्वस्यैव परमार्थशब्दार्थत्वात् । प्रात्यक्षिकबाधागोचरत्वस्य चन्द्रप्रादेशिकत्वनभोनैल्य-अहमर्थगोचरत्वादौ आरोपितेऽपरमार्थेऽपि सत्वेन अतिव्याप्तेरिति । तन्न । पारमार्थिकत्वस्य, गोत्वघटत्वादेः सास्नादिमत्व-कम्बुग्रीवादिमत्वरूपनियतव्यञ्जकव्यङ्ग्यत्वेन जातिरूपत्ववत् तादृशधर्माऽव्यङ्ग्यत्वेन अजातिरूपत्वेऽपि भावत्ववत् तन्नियतसत्व-द्रव्यत्व-पृथिवीत्वादिवत् अभावत्व-तन्नियतप्रागभावत्वप्रध्वंसत्वात्यन्ताभावत्ववच्च पदार्थ-

---

(१) अस्मद्गुरुचरणाः' (पु.७९) इत्यत्र पूर्वम् अन्वयः ।

मात्रगताखण्डोपाधिरूपत्वसम्भवेन बाधागोचरत्वप्रात्यक्षिकबाधागोचरत्वरूपोपाधिरूपत्वासिद्धेः । तस्य च पारमार्थिकत्वरूपाखण्डोपाधेर्ब्रह्मणीव,जीव इव च तत्परस्परप्रतियोगिकभेदादिसर्वपदार्थेष्वपि वृत्तेः । अन्यथा तत्राबाधितपरमार्थाकारबुद्ध्यनुपपत्तेः । अनुगतबाधितबुद्धेरनुगताऽप्रयोज्यत्वात् । नचैवं पारमार्थिकत्वेऽपि पारमार्थिकत्वानुभवात्तत्र तदन्यपारमार्थिकत्वाभ्युपगमे तत्राप्येवं, तत्राऽप्येवमित्यनवस्थापत्तिः । तस्यैव तदाश्रितत्वाङ्गीकारे चात्माश्रयापत्तिरिति वाच्यम् । सिद्धविषयत्वेन तस्यैव तदाश्रितत्वोपगमात् । अन्यथाऽभिधेयत्व-ज्ञेयत्व-दृश्यत्व-मिथ्यात्वादेरपि स्वानाश्रितत्वप्रसङ्गात् ॥

अस्तु वा बाधागोचरत्वं पारमार्थिकत्वम् । तथाऽपि न दोषः । तस्य जीवेश्वरभेदेऽपि सत्त्वात् । नच 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुत्या निषेधान्न तस्य बाधागोचरत्वं सम्भवतीति वाच्यम् । श्रुतिनिषिद्धत्वमात्रेण बाधितत्वे

**'नो सदासीत्', 'अलक्षणम्',**
**'नेह नानाऽस्ति किञ्चन',**
**'एकमेवाद्वितीयम्', 'नेति नेति'**

इत्यादि श्रुतिनिषिद्धत्वेन ब्रह्मणोऽपि तत्त्वापत्तिरित्युक्तत्वात् । शुक्तिरूप्यादेरारोपविशेषदर्शनपूर्वकात्यन्ताभावप्रतियोगिकत्वप्रमितिविषयत्वेन बाधितत्वेऽप्यनेवंविधस्य ब्रह्म-जीवतदुभयनिरूपितभेदादेर्बाधितत्वानुपपत्तेः ॥

किञ्च कलञ्जभक्षणादिगतेष्टसाधनत्वस्य 'न कलञ्जं भक्षयेत्' इत्यादिश्रुतिनिषिद्धत्वेन बाधितत्वप्रसङ्गः । नचेष्टापत्तिः । कलञ्जभक्षणापेक्षया तस्य भिन्नसत्वप्रसङ्गात् । नच कलञ्जभक्षणानिष्टसाधनत्वं तदर्थः, नतु तन्निषेध इति वाच्यम् । प्रत्यक्षाद्यपेक्षया श्रुतेः प्राबल्यमङ्गीकुर्वता यथाश्रुतार्थपरत्वस्यात्याज्यत्वात् । प्रत्यक्षप्राबल्यवादिनैवानन्यगत्या तद्विरोधपरिहाराय अव्युत्पन्नानिष्टसाधनत्वार्थकत्वस्याप्यादरणीयत्वात् ।

अस्तु वा श्रुतिनिषिद्धत्वमात्रेण बाधितत्वम् । तथाऽपि न जीवब्रह्मनिरूपितभेदस्य पारमार्थिकत्वक्षतिः । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादेरुक्तरीत्या भेदनिषेधपरत्वासिद्धेः ।

अस्तु वा योग्ये प्रात्यक्षिकबाधागोचरत्वमेव पारमार्थिकत्वम् । नचेदमारोपितेऽपारमार्थिके चन्द्रप्रादेशिकत्वादौ अतिव्याप्तम् । चन्द्रे वा सूर्ये वोदयकाले यत्र प्रत्यक्षेण यत्परिमाणं विषयीकृतम् अन्यथा तत्रैव प्रत्यक्षेण ततोऽन्यपरिमाणस्य(न्यूनपरिमाणस्य-पा) पूर्वानुभूत-परिमाणव्यतिरेकस्य च ग्रहात् । तदनन्तरं तदुभयप्रत्यक्षोपनये सति किमनयोः प्राचीनमेव प्रत्यक्षं प्रमाणं, किं वा तदनन्तरमुत्पन्नं प्रत्यक्षमिति? अनयोरप्रामाण्यशङ्कायां (अन्यतरो-रप्रामाण्यशङ्कायां-पा) जातायां तदनन्तरं तदाहितार्थसंशये सति अप्रामाण्यशङ्कायां शून्यार्थ-सत्तानिश्चयरूपविरोधिनोऽभावेन शाब्दबोधोन्नायकयोग्यता(बोधाङ्गयोग्य-पा)संशयसत्वेन च 'अष्टाशीति सहस्राणि विस्तीर्णो योजनानि तु' इत्यादिश्रुत्या यथावस्थितपरिमाण-वेदनात्, प्रात्यक्षिकबाधस्यैव तत्र सत्वेन प्रात्यक्षिकबाधागोचरत्वरूपस्य पारमार्थिकत्वस्य दूरस्थत्वदोषबलादारोपिते,अत एवाऽपारमार्थिके चन्द्रप्रादेशिकत्वे अभावेनातिव्याप्त्यसिद्धेः । नह्यप्रामाण्यशङ्कातोऽन्य एव बाधः । येन यस्यार्थसत्तानिश्चयरूपत्वं विघट्यते तस्यैव तद्बाधरूपत्वात् । अप्रामाण्यशङ्कया च चन्द्रप्रादेशिकत्वज्ञानस्यार्थसत्तानिश्चयरूपत्वं विघट्यत इति कथं तस्यास्तद्बाधत्वाभावः । शङ्का च सा मानसप्रत्यक्षरूपैवेति किमसमञ्जसमिति । नच प्रागप्रामाण्यशङ्कोदयात् श्रुतिप्रवृत्तिरस्ति । सति योग्यताव्यतिरेकेणनिश्चये(व्यतिरेकनिश्चये-पा) शाब्दबोधासम्भवात् । कथञ्चित्सम्भवे वा तस्याहार्यरूपत्वेनार्थसत्तानिश्चयरूपत्वानुप-पत्तेश्च ॥

एवं नभोनैल्यप्रत्यक्षस्थलेऽपि निकटे नभसि नैल्याभावं पश्यतोऽपि दूरे गतस्य तत्रैव नभःप्रदेशे नैल्यप्रत्यक्षदर्शनात्तदुभयप्रत्यक्षोपनयानन्तरं किमनयोः प्रमाणमित्यप्रामाण्यशङ्कया नभोनैल्य-तदभावावगाहिप्रत्यक्षद्वयस्य अर्थसत्तानिश्चयरूपत्वविघटनानन्तरमेव नैल्याभाव-साधकानुमानप्रवृत्तेः, तदभावे तदप्रवृत्तेश्च अन्वयव्यतिरेकाभ्यामप्रामाण्यशङ्कैव मानस-प्रत्यक्षरूपा तत्र बाधत्वेन स्वीकार्येति प्रात्यक्षिकबाधागोचरत्वस्य पारमार्थिकत्वस्य न नभोनैल्येऽतिव्याप्तिः । तथैव गौरोऽहमिति ज्ञानानन्तरं 'मम देहो गौरः' 'मम शरीरमिदम्' 'अहं देही' 'मम देहः' इत्यादिदेहात्मगोचरप्रत्यक्षदर्शनात्तदुभयविधप्रत्यक्षोपनयानन्तरं किमत्र प्रमाणमित्यप्रामाण्यशङ्कानन्तरमेव देहात्मभेदसाधकानुमानस्य तद्भेदावदेकश्रुतेश्च प्रवृत्तिरिति तदभेदेऽपि न प्रात्यक्षिकबाधागोचरत्वरूप पारमार्थिकत्वमस्तीति द्रष्टव्यम् ॥

एवं रज्जुसर्पभ्रमस्थलेऽपि नाऽप्रामाण्यशङ्कासाधनं विना, नायं सर्प इत्याप्तवाक्यशतमपि स्वार्थप्रत्यायनस्येष्टे इति, रज्जुसर्पतादात्म्येऽपि अप्रामाण्यशङ्कारूपप्रात्यक्षिकभ्रमागोचरत्वमस्त्येवेति न क्वापि प्रात्यक्षिकबाधागोचरत्वरूपपारमार्थिकत्वस्यातिव्याप्तिशङ्केति ॥

ननु यत्र क्रमिकविरुद्धानेकार्थविषयकप्रत्यक्षद्वयमप्युत्पद्यते तत्रोक्तप्रणाड्या प्रामाण्यशङ्कया प्रागुत्पन्नज्ञानद्वयस्यार्थसत्तानिश्चयरूपत्वविघटनमुखेन स्वोत्तरभाव्यानुमानिकशाब्दप्रतीत्युत्पत्तिं प्रति प्रतिबन्धकत्वं (प्रतिलब्धकत्वं-पा) माऽस्तु । आनुमानिकशाब्दप्रतीतिविषय एव तत्र वस्त्वस्तु । न पूर्वोत्पन्नाप्रामाण्यशङ्कास्पदप्रत्यक्षविषयः । यत्र तु पुनरेकमेव प्रत्यक्षम् 'उष्णं जलम्' 'सुरभि जलम्' 'पूतिगन्धीदं जलम्' 'लवणं जलम्' इत्यादिरूपमुत्पद्यते तत्रागमेनैव बाधो वाच्यः । नहि जलस्य शुक्लरूपवत् स्नेहवत् सांसिद्धिक-(संसर्गिक-पा) द्रवत्ववत् औष्ण्यादिकं स्वाभाविको गुणः । अस्ति च बदरिकाश्रमप्रदेशे क्वचित् सर्वदोष्णं जलं किञ्चित् ।

तथा च तादृशोष्णस्पर्शरसगन्धादिष्वेव प्रात्यक्षिकबाधागोचरत्वरूपं पारमार्थिकत्वमतिव्याप्तमिति चेन्न । 'अग्नेरापः' (तै-उ- २-३) इति श्रुत्यनुरोधेन तेजउपादानकजले उपादानगुणभूतस्योष्णस्पर्शस्य सत्वेऽपि तज्जन्यस्पर्शान्तरस्य सत्वाविरोधात् । प्राण्यदृष्टविशेषबलेन क्वचित्तस्योद्भूतत्वसम्भवाच्च । एवं प्राण्यदृष्टविशेषघटितसामग्रीमहिम्नैव समुद्रोदकादौ लवणरसस्य, भूविशेषनिर्मितकूपादिगते जले क्वचिद्दुर्गन्धस्य च साक्षात्सम्बन्धेनैव सत्वमविरुद्धमिति किमनुपपन्नम्?

नन्वेवं प्रहरपर्यन्तमग्निसंयोगरूपकारणविशेषबलाज्जले उष्णस्पर्शविशेषस्य साक्षात्सम्बन्धेनोत्पत्तिरेव स्वीक्रियताम् । एवं कस्तूरिकादिसुरभिद्रव्यसम्बन्धाद्वस्त्रजलपवनादिषु गन्धोऽप्युत्पद्यते इत्यस्त्विति चेदिष्टापत्तिः ।

किञ्च अन्यथासिद्धप्रतीतिर्हि अर्थसाधिका, न प्रतीतिमात्रमित्यविवादम् । एवं च स्वसम्बद्धाग्निसम्बन्धोपाधिवशादुपपन्नजलौष्ण्यप्रतीतेस्तत्र तस्य साक्षात् सम्बन्धावगाहित्वे भ्रमत्वस्य दुर्वारतयाऽन्यथासिद्धत्वेन परम्परासम्बन्धावगाहित्वेच प्रमात्वावश्यम्भावेनानन्यथासिद्धत्वेन च स्वीकार्या । एवं विषयभेदकृतसाधकत्वासाधकत्वोभयधर्मसम्भवेन साक्षात्सम्बन्धावगाहित्वकाले तत्रौष्ण्यसिद्धिरसम्भाविनीति ॥

एतेन तत्तत्सामग्रीबलाद्वस्त्रजलादौ गन्धाद्युपत्त्यङ्गीकारे भ्रमोच्छेदप्रसङ्गः । जपाकुसुमसम्बन्धरूप(सन्निधिरूप-पा)सामग्रीबलादेव स्फटिकेऽपि लौहित्योत्पत्तिसम्भवात् । शुक्त्यादावपि चाकचिक्यादिज्ञानादिरूपसामग्रीबलादेव रजताद्यभेदोत्पत्तिसम्भवात् । दूरस्थवनस्पतिचन्द्रादिष्वपि दूरस्थत्वादिदोषाभिमतघटितसामग्रीविशेषबलादेव अधिकन्यूनपरिमाणोत्पत्ति सम्भवाच्च । नहि तत्र तत्र स्वोचितसम्बन्धेनविद्यमानार्थगोचरप्रतीतेर्भ्रमत्वं शक्याभ्युपगममिति निरस्तम् ।

बाधविसंवादाभ्यामेव भ्रमत्वसिद्धेः । बाधविसंवादाभावस्थले च भ्रमोच्छेदस्येष्टत्वात् ॥

किञ्च योग्यस्थले अनन्यथासिद्धान्वयव्यतिरेकौ हि सामग्रीत्वकल्पकौ । नच शुक्तिरूप्यदूरस्थनवस्पति-न्यूनपरिमाणत्व-प्रतीतिस्थले-चाकचिक्यदूराद्यन्वयव्यतिरेकयोः तत्प्रतीतिजनकत्वेनैवान्यथासिद्धयोः रूप्यन्यूनपरिमाणे सत्यपि चाकचिक्यस्य दूरादेः सामग्रीत्वकल्पकत्वं युक्तम् । नच गत्यन्तरसम्भवे तत्र रूप्यपरिमाणाद्युत्पत्तिमनुभवारूढमङ्गीकृत्य अक्लृप्तसामग्र्यन्तराङ्गीकारो युक्तः । नच तत्र रूप्यरूपविषयानङ्गीकारे तदापरोक्ष्यानुपपत्तिः । मदभिमतान्यथाख्यातिनिरूपणावसरे(ख्यातिनिरूपणावसरे-पा) तदापरोक्षस्योपपादितत्वात् । आपरोक्ष्यज्ञानं विषयाविनाभूतमिति चेन्न । लाघवेन 'यद् ज्ञानं तत् विषयाविनाभूतम्' इत्यापत्त्या परेणापरोक्षभ्रमस्थल इव परोक्षभ्रमस्थलेऽप्यनिर्वचनीयार्थस्वीकारप्रसङ्गात् । मुक्तिकालेऽपरोक्षैकरसचैतन्यस्य विनाऽपि विषयं सत्त्वाङ्गीकाराच्च । मयेव परेण स्वविषयत्वरूपस्वप्रकाशत्वानभ्युपगमाच्च । अपरोक्षज्ञानस्य सतो विषयाविनाभूतत्वेऽपि गौरवेण यावद्विषयाविनाभूतत्वस्य स्वीकार्यतया परमते साक्षिरूपरजतापरोक्षज्ञानस्य रजतगोचरभ्रमरूपविषयाऽविनाभूतत्वेन रजतरूपविषयं विनाऽपि सत्त्वोपपत्तेश्च ॥

॥ इति नवीनोक्तभेदतात्त्विकत्वनिरासः ॥

## ॥ अथ शुक्तिरजतस्य साक्षिविषयत्वनिरासः ॥

किञ्च साक्षिचैतन्यस्य नित्यनिर्दोषस्वरूपज्ञानत्वेन बाध्यशुक्तिरूप्यादिविषयकत्वानुपपत्तिः । तथासति स्वरूपज्ञानस्यापि भ्रमत्वापत्तेः । नच साक्षिज्ञानं न स्वरूपचैतन्यमात्रम्,

किन्तु वृत्तिविशिष्टं तदुपहितं वा स्वरूपचैतन्यमित्यङ्गीकारान्नोक्तदोष इति वाच्यम् । वृत्तेर्विशेषणत्वेनोपाधित्वेन वा साक्षिपदार्थशरीरप्रविष्टत्वेऽपि विषयोल्लेखित्वे ज्ञान-रूपत्वस्यैव तन्त्रत्वेन तत्र वृत्तेरतन्त्रत्वात् । वृत्तिं विनाऽपि सुप्तिकाले स्वरूपचैतन्यस्या-ज्ञानादिविषयोल्लेखित्वदर्शनाच्च । नच सुप्तिकालेऽप्यज्ञानवृत्तिरस्ति, अन्यथा 'एतावन्तं कालं न किञ्चिदवेदिषम्' इत्यौत्तरीयकस्मृत्यनुपपत्तिः, नित्यज्ञानस्य संस्कारजनकत्वादिति वाच्यम् । 'विशिष्टम् अपदार्थान्तरम्' इति पक्षे विशेषणत्वेन स्वीकृतयापि वृत्त्या स्वरूप-चैतन्यस्य नित्यत्वानिवारणात् । पदार्थान्तरमिति पक्षेऽपि, विशिष्टस्य अनित्यत्वेऽपि तस्य जडत्वेनाज्ञानादिविषयप्रकाशत्वानुपपत्त्या नित्यभूतस्वरूपचैतन्यस्यैव तत्प्रकाशत्वेनाभ्युप-गन्तव्यत्वाच्च ॥

एतेन विशिष्टं न विशेषणविशेष्यतत्सम्बन्धातिरिक्तमित्येव पक्षः । वृत्तिविशिष्ट एव स्वरूपचैतन्ये शिपिविष्टत्वविशिष्टविष्णौ देवतात्ववद्विषयप्रकाशरूपत्वमङ्गीक्रियत इति निरस्तम् ॥

एवं ह्यावश्यकवृत्तिमात्र एव लाघवेन विषयप्रकाशरूपत्वापातेनान्वयव्यतिरेकाभ्यां तत्रैव विषयप्रकाशरूपायां 'जानामीति' अविगीतमुख्यज्ञानव्यवहारसत्वेन जन्यज्ञानत्वेन संस्कारजनकत्वोपपत्त्या च वृत्तेरेव ज्ञानरूपत्वम् । आत्मनस्तु तादृशवृत्तिरूपविषय-प्रकाशाधारतया न्यायनय इव चेतनत्वसम्भवेऽपि न चैतन्यरूपत्वम् इत्यापातात् । प्रत्युता-त्मस्वरूपमात्रस्य चैतन्यरूपत्वमङ्गीकुर्वता तत्साधनार्थं सुप्तौ वृत्तिं विनाऽप्यज्ञानादि-विषयप्रकाशरूपत्वमङ्गीकृत्य वृत्तिप्रयुक्तविषयप्रकाशरूपताया व्यतिरेकव्यभिचारेण निर-सनीयत्वाच्च ॥

किञ्च सुप्तिकालेऽपि विषयप्रकाशरूपत्वेन वृत्त्यङ्गीकारे रजतभ्रमकाले इव वैषयिक-सुखदुःखाद्यनुभवकाले इव च सुप्तिकालेऽपि जाग्रदवस्थात्वापत्तिः स्वप्नावस्थात्वापत्तिर्वा । वृत्त्यभावाङ्गीकारे तु नैष दोषः । जन्यज्ञानोपरमस्य लाघवेन वृत्तिविशेषोपरमस्य वा सुप्तित्वेनाङ्गीकृतार्थस्य सत्वानपायात् । वृत्तौ विशेषस्य जातिविशेषरूपत्वस्वीकारेणाति-प्रसङ्गानवकाशात् । नहि ज्ञानत्वेन व्यवहारो वृत्तिमात्रेऽस्ति । येनातिप्रसङ्गः । संस्कारादि-

रूपान्तःकरणपरिणामान्तरमादाय सर्वाङ्गीकृतसुप्तिकालोऽपि असुप्तिकालःस्यादित्येवंरूपस्त-वापि सम इत्युच्यते ॥

अपि च नित्यानित्यसाधारणज्ञानत्वेनैव संस्कारजनकत्वमभ्युपेयं, लाघवात् । नतु जन्यज्ञानत्वेन गौरवात् । नचैवं भेदवादिनो नित्यज्ञानत्वेनेश्वरं स्वीकुर्वतोऽतिप्रसङ्गः, तज्ज्ञानस्यापि संस्कारजनकत्वापत्तिरूपोऽस्तीति वाच्यम् । तस्य कार्यमात्रजनकत्वेन संस्कारं प्रत्यपि जनकत्वात् । नच ज्ञानं स्वसमानाधिकरणसंस्कारजनकमिति नियमः । मानाभावादप्रयोजकत्वाच्च । नचैवं देवदत्तीयानुभवेनापि यज्ञदत्तेऽपि संस्कारापत्तिः । यज्ञदत्तरूपकारणान्तरप्रत्यासन्नतया तत्र तस्य तदजनकत्वोपपत्तेः । स्वरूपयोग्यत्वापादने इष्टापत्तेश्च । समानाधिकरणसंस्कारजनने समानाधिकरणकर्मणोऽप्यपेक्षितत्वेन तदभावा-देवेश्वरानुभवस्य तादृशसंस्काराजनकत्वोपपत्तेश्च ॥

अपि च 'स्मरामी'त्यनुभवसिद्धस्मृतिर्हि संस्कारकल्पिका । यत्र वाऽत्मनि तथा स्मृतिरनुभवसिद्धा तत्रैव तत्कारणतया संस्कारः सिध्यति नत्वन्यत्र । एवं च साधकाभावादेव नेश्वरे संस्कारसिद्धिः । नहीश्वरस्यापि 'स्मरामि' इत्यनुभवे मानमस्ति । नच संस्कारजनकत्वेन स्वीकृतस्य ज्ञानस्य नित्यत्वे तेनैव प्रवृत्त्यादि व्यवहारसिद्धेः स्मृत्यर्थं तज्जन्यसंस्काराङ्गीकारो विफल इति वाच्यम् । व्यवहारोपपत्तये स्मृतेरस्वीकारात् । अनुभवसिद्धस्मृतिरूपकार्या-न्यथानुपपत्त्या कल्प्यसंस्कारस्य स्वात्मलाभार्थं कारणकल्पकतया कारणस्य च परिशेषेण ज्ञानत्वेन अनुभवत्वेन वा सिद्धेः । संस्कारजनकीभूतज्ञानस्यानुभवस्य वा स्वरूपसन्नित्यत्वस्य तदुपस्थितेर्वा संस्कारकल्पनायां संस्कारकल्प्यज्ञाननिष्ठस्वात्मकारणत्वकल्पनायां वा विरोधित्वाभावात् ॥

अत एव वृत्त्युपहितं चैतन्यं साक्षीति प्रत्यूढम् । 'साक्षी चेता केवलो निर्गुणश्च' इतिश्रुत्या अनुपहितचैतन्यस्यैव साक्षित्वप्रतिपादनेन तद्विरोधापत्तेश्च । अन्यथा केवलादि-शब्दवैयर्थ्यात् । 'तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः' इति श्रुत्या साक्षि-शब्दार्थमनूद्य तत्र चिन्मात्रत्वस्य वा चिन्मात्रमनूद्य तत्र साक्षिशब्दप्रतिपाद्यत्वस्य वा विधानानुपपत्तेश्च । नहि बाधकं विना श्रुतितात्पर्यगोचरसाक्षिशब्दार्थत्यागो युज्यते ॥

अपि च वृत्तिरूपोपाधेः दर्पणादेः स्वोपहिते मुखादाविव, स्वोपहिते स्वरूपचैतन्ये भेदकल्पकत्वेऽपि स्वाभाविकतन्नित्यत्वनिरासकत्वमयुक्तम् । स्वसम्बन्धेन तत्र स्वनिष्ठमनित्यत्वमपि आदधतीति चेत् । अस्तु तदपि किं तावता । नह्युपाध्याहितमुपहिते स्वाभाविकतद्धर्मविरोधीति स्वीकर्तुं शक्यम् । तथा सत्युपाधिकृतश्यामत्वलौहित्यादिनामुखस्फटिकादेः स्वाभाविकाऽवदातत्वशुभ्रत्वादेरभावप्रसङ्गात् ॥

एतेन असङ्गैकस्वभावचैतन्यस्य विषयसङ्घटनाय वृत्तेरुपाधित्वेन स्वीकार इति निरस्तम् । तथासत्यसङ्गैकस्वभावत्वव्याकोपेनैव वृत्तिरूपोपाधिनापि सङ्गाभावप्रसङ्गात् । असङ्गैकस्वभावस्य चैतन्यस्यापारमार्थिकवृत्तिरूपोपाधिसम्बन्धाविरोधित्वमिति चेत्, तर्हि वृत्तिं विनाऽप्यज्ञानादिरूपापारमार्थिकार्थसम्भवेन तदर्थं सुप्तिकालेऽसुप्तिकाले वा वृत्तेरस्वीकार्यत्वात् । 'असङ्गो ह्ययं पुरुषः' इतिश्रुतौ सङ्गसामान्यस्यैव निषेधेन तद्विशेषविषयत्वेन सङ्कोचानुपपत्तेश्च । तस्मात् स्वरूपचैतन्यस्य विषयेण स्वाभाविक एव सम्बन्धो वाच्यः । एवं च शुक्तिरूप्यादिबाध्यविषयकत्वे साक्षिशब्दितापरोक्षैकरस स्वरूपचैतन्यस्य स्वाभाविकभ्रमत्वं वज्रलेपायितमिति तस्य तद्विषयत्वं सर्वथा त्याज्यमेव । एतेन प्रमाणवृत्तिमात्रोपरमः सुषुप्तिशब्दार्थ इति निरस्तम् । स्वप्नावस्थाया अपि तत्त्वापातात् ॥

॥ इति शुक्तिरजतस्य साक्षिविषयत्वनिरासः ॥

## ॥ अथ अनिर्वचनीयख्यातिवादनिरासः ॥

अपि च अनिर्वचनीयाख्यातिपक्षेऽक्लृप्तैव रजतोत्पत्तिसामग्री कल्प्या । अन्यथाख्यातिवादेऽसत्ख्यातिवादे च न तथाविधसामग्री कल्प्येति लाघवम् । नच अनिर्वचनीयख्यातिपक्षे तादृशरजतादेः सामग्रीकल्पनेऽप्यन्यथाख्यातिवाद इव असत्ख्यातिवाद इव च न तज्ज्ञानसामग्री कल्प्या । अनिर्वचनीयस्य सामग्रीनिरपेक्षसाक्षिचैतन्यभास्यत्वाभ्युपगमात्, तथाचावयोः साम्यमिति वाच्यम् । अन्यथाख्यात्यसत्ख्यातिवादयोर्ज्ञानविशेष सामग्रीत्वेन क्लृप्तचक्षुरादेर्दोषसहकारित्वकल्पनवत् अनिर्वचनीयाख्यातिवादे रजतसामग्रीत्वेन क्लृप्तरजतावयवादेर्दोषसहकारित्वाकल्पनेन साम्यात् । अञ्जनादिसामर्थ्याद् व्यवहितनिक्षेपादेरिव दोषसामर्थ्याद् असन्निकृष्टरजतादेरपि भानोपपत्तेश्च ॥

अपि च दोषघटितसामग्रीतो यदि तत्र रजतमुत्पद्यते तदा 'दण्डेन घट उत्पन्नः' इतिवत् दोषेण रजतमुत्पन्नमिति प्रतीतिव्यवहारप्रसङ्गश्च । एवं 'मुद्गरप्रहारेण घटो विनष्ट' इतिवत् विशेषदर्शनेन रजतं विनष्टमित्यपि प्रतीतिप्रसङ्गश्च ।।

एतेन सर्गाद्यकाले इदानीन्तनक्लृप्ततत्तत्सामग्रीविरहेऽपि अक्लृप्तसामग्रीत एव तत्तद्वस्तूत्पत्तिवत् अनिर्वचनीयरजताद्युत्पत्तिः क्लृप्तरजतसामग्र्यभावेऽपि अक्लृप्तसामग्रीतोऽभ्युपगन्तव्या इति निरस्तम् ।।

सर्गाद्यकाले तत्तद्वस्तूत्पत्तेरात्मादितः श्रुतिसिद्धत्ववदनिर्वचनीय रजतोत्पत्तिर्दोषादित्यत्र प्रत्यक्षाद्यभावेन तत्तत्सामग्रीकल्पनस्य निष्प्रमाणकत्वात् । 'मम तत्र रजतभ्रमो जातः' इतिवत् रजतं जातमिति तदुत्पत्तेरननुभवाच्च ।।

एवं दूरस्थवनस्पतौ चन्द्रादौ दूरस्थत्वदोषात् 'ह्रस्वो जातः' 'चन्द्रमण्डलमल्पम्' 'रजतमिदानीं महत् जातम्' इत्यननुभवेन, प्रत्युत 'दूरतो दोषात् इदानीं तथा प्रतिभाति' इत्यनुभवेन च तत्र तदुत्पत्तेरसिद्धेश्च । कस्तूर्यादिसम्बन्धेन वह्निसम्बन्धेन च पाकाद्रक्तमुत्पन्नं, श्यामं नष्टमितिवत् 'वस्त्रं सुरभि जातम्' 'इदानीं जलमुष्णं जातम्' इत्यनुभवेन तत्र तदुत्पत्तेर्दुर्वारत्वाच्च । नचैवं 'जपाकुसुमसन्निधानात् स्फटिको रक्तो जातः' इत्यनुभवात् तत्रापि रक्तिमोत्पत्तिप्रसङ्गः । अबाधिततदनुभवे तत्र तदुत्पत्तेरिष्टत्वात् । असमीचीनदर्पणसान्निध्येऽपि यथावत् प्राक् समीचीनदर्पणसान्निध्येन बहुशो निश्चितस्वमुखस्य पुंसो 'मम मुखमिदानीं श्यामं जातम्, वक्रं जातम्' इत्यनुभवो नास्त्येव । किन्तु दर्पणस्यासमीचीनत्वादन्यथा सम्प्रत्येमीत्येव । तस्मादर्थसत्त्वासत्त्वे अबाधितप्रतीतिबलेनैव स्वीकार्य इति सिद्धम् ।।

।। इति अनिर्वचनीयख्यातिवादनिरासः ।।

## ।। अथ प्रत्यक्षप्राबल्यसमर्थनम् ।।

नच चन्द्रप्रादेशिकत्व-नभोनैल्य-देहात्म-तादात्म्यादीनि अबाधितप्रतीतिसिद्धानि । किन्तु उक्तरीत्याऽप्रामाण्यशङ्कारूपबाधकबलीकृतप्रतीतिसिद्धान्येवेति, न तत्र प्रात्य-

क्षिकबाधागोचरत्वरूप पारमार्थिकत्वरूपप्रसङ्ग इति । नच अनेनैव न्यायेन ब्रह्मणः सप्रपञ्चत्वनिष्प्रपञ्चत्वप्रतिपादनपरवाक्याभ्यां क्रमिकतदुभयगोचरज्ञानोत्पत्त्यनन्तरं तदुभयो-पनये सति किमनयोः ज्ञानयोः इदं वा प्रमाणम्, इदं वा प्रमाणमित्यप्रामाण्यशङ्का-सम्भवति । नित्यनिर्दोषवाक्यजन्यत्वनिश्चयेनोत्पत्तिज्ञप्त्योः प्रामाण्यस्य स्वतस्त्वेन च निश्चयात् । कथञ्चिदप्रामाण्यशङ्कासम्भवेऽपि चन्द्रप्रादेशिकत्वादिज्ञानस्थल इवात्र न ब्रह्म-स्वरूपे मानान्तरस्य निश्चायकस्यावतारः सम्भवति (ब्रह्मस्वरूपम् ईदृगेवेति निश्चायकमानान्तरावतारः सम्भवति-पा)। 'नेन्द्रियाणि नानुमानम्' इत्यादिना ब्रह्मणः प्रत्यक्षानुमानागम्यत्वनिषेधात् । 'नावेदविन्मनुतेदं बृहन्तम्' (तै-आ-३-१२-९) इति वेदान्यवेदविरुद्धार्थकदुरागमादिवेद्यत्व-निषेधाच्च । किन्तु –

> **'वेदा ह्येवैनं वेदयन्ति',**
> **'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति',**
> **'औपनिषदः पुरुषः'**

इत्यादिश्रुत्या वेदैकसमधिगम्यत्वनिश्चयात् तत्र वेदरूपप्रमाणावतार एव वाच्यः । सच ब्रह्मसप्रपञ्चत्वनिष्प्रपञ्चत्वप्रतिपादनपरत्वेन द्विराशिरिति तद्राशिद्वयजन्यज्ञाने प्रामाण्यशङ्कायां राश्यन्तराभावेन राशिद्वयात्मकवेदेन ब्रह्मस्वरूपनिर्णयस्यैव दुर्लभत्वापत्तेः ॥

किञ्च ब्रह्मसप्रपञ्चत्ववाक्यस्य प्राथमिकत्वेन तज्जनितज्ञानस्यानुपसञ्जातविरोधितया प्रबलस्य सत्वे कथं ब्रह्मनिष्प्रपञ्चत्ववाक्येन चरमोपस्थितेन उपसञ्जातविरोधिना स्वार्थ-गोचरप्रतीतिरुत्पादयितुं शक्या? तस्मात् चन्द्रप्रादेशिकत्वादिस्थल इवात्रास्मदुक्तन्यायेन न निर्णय इति तदर्थं तत्र प्रकारान्तरमेवाश्रयणीयमिति ।

ननु चन्द्रप्रादेशिकत्वादिस्थले क्रमिकविरुद्धपरिमाणादिगोचरज्ञानद्वयसत्वात् तदुपनये सति तत्राप्रामाण्यशङ्कया स्वविरहविघटनरूपया स्वविरहविशिष्टार्थसत्तानिश्चयविरहसम्पा-दनाद्भवतु तस्यास्तद्बाधकत्वम् । यत्र तु पुनः ज्ञानद्वयं विरुद्धविषयं क्रमिकं कदाऽपि नोत्पद्यते, बदरिकाश्रमप्रदेशे स्वोत्पत्तिविशिष्टौष्ण्यगुणके, तथाविधलवणरसगन्धगुणके च

जलादौ कथमुक्तबाधावकाशः? तथाच तत्रागमेनैव तज्ज्ञानस्य बाधो वाच्यः । अन्यथा प्रात्यक्षिकबाधागोचरत्वेन तन्निष्ठौष्ण्यगुणादेः पारमार्थिकत्वं दुर्वारमिति चेन्न । योग्ये तज्जातीये जलादौ कदाऽपि प्रात्यक्षिकबाधादर्शनेन तदौष्ण्यादेः पारमार्थिकत्वस्येष्टत्वात् । पञ्चीकरणपक्षे जलेऽप्यौष्णस्याभ्युपगन्तव्यत्वाच्च । भोजकादृष्टविशेषेणाबाधितानुभवात् क्वचिदेव तस्योद्भवकल्पनेनातिप्रसङ्गानवकाशादित्युक्तम् । नचैवम् –

'आकाशस्य गुणः शब्दो वायोस्पर्शस्तथाग्निगम् ।
रूपमप्सु रसो भूमेर्गन्ध एको गुणः स्मृतः'

इत्यागमाप्रामाण्यप्रसङ्ग इति वाच्यम् । तस्य तद्गुणवत्वप्रतिपादने एव तात्पर्येणागमस्य तदितरगुणवत्वानिवारकत्वात् । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्'(१) इत्यस्य सर्वथा प्रत्यक्षागमगोचरार्थे अनुमानप्रवृत्तिसम्भवप्रयुक्तागमावधिकानुमानप्राबल्यशङ्कानिरास-परत्वेनोक्तार्थाविरोधित्वात् ॥

नन्वेवं पञ्चीकरणानुसारेण जलादावप्यौष्ण्यादिगुणसत्वाङ्गीकारे अख्यातिरेव स्यान्न तु अन्यथाख्यातिः । शुक्तावपि रजतावयवसत्वेन तत्रापि रजतारम्भसम्भवादिति चेन्न । तथासति परीक्षितप्रत्यक्षेण तत्र कदापि बाधाभावप्रसङ्गात् । तत्रोत्पन्नरजतस्य विशेष-दर्शनादिना तदैव नाशे च 'इदं रजतं नष्टम्' इत्येव प्रतीत्यापत्त्या 'कालत्रयेऽपि इदं रजतं न' इत्यननुभवापत्तेः ॥

नन्वेवमप्यप्रामाण्यशङ्का न बाधः । ग्राह्याभावप्रमात्मकनिश्चयरूपत्वाभावादिति चेन्न । बाधशब्दार्थस्यानेकविधत्वेन तस्यापि बाधत्वात् । 'सामान्यशास्त्रस्य विशेषशास्त्रेण बाधः' इत्यभ्युपगमात् । उपक्रमादिना उपसंहारादेः श्रुत्यादिना लिङ्गादेश्च बाध इत्यभ्युपगमाच्च । 'वह्निरनुष्णः कृतकत्वात्' इत्यादेः 'वह्निरुष्णः' इति प्रत्यक्षेण बाध इत्यभ्युपगमाच्च । तथा च रजतादिभ्रमानन्तरं विशेषदर्शनं विना 'नेदं रजतम्' इत्यादिज्ञानं नैवोत्पद्यत इत्य-विवादम् । विशेषदर्शनमपि न साक्षात् भ्रमविरोधीत्यपि । सति चैवं विशेषदर्शनेन

(१) विष्णुतत्त्वनिर्णय-१-परिच्छेदोदाहृतब्रह्मतर्कस्मृतिः ॥

भ्रमेऽप्रामाण्यज्ञानानन्तरमेव 'नेदं रजतम्' इति ज्ञानमुत्पद्यमानं बाधव्यवहारगोचरो नत्व-न्यथेति सिद्धे प्रथमोपस्थितत्वादावश्यकत्वाच्च 'नागृहीतविशेषणन्याये'न अप्रामाण्य-ज्ञानमेव बाधः ॥

किञ्च लोके येन यस्य स्वकार्यानुकूलसामर्थ्यं विघट्यते तत्तद्बाधकमित्युच्यत इत्य-प्रामाण्यशङ्कया भ्रमाऽनन्तरभाविन्या तत्पूर्वभाविन्या वा तादृशभ्रमे प्रवृत्त्यादिव्यवहारानु-कूलार्थसत्तानिश्चयरूपत्वविघटनमुखेन तदनुकूलसामर्थ्यं विघट्यत इति कथं साऽपि न बाध इति । अत एव पीतशङ्खभ्रमस्य 'शठाय दशपणी अवश्यं देया' इति वक्ष्यमाणवाक्यस्य च तत्पूर्वभाविन्या भूयःपरीक्षितप्रत्यक्षसहकृतशङ्खत्वलिङ्गकशैत्यानुमित्या 'इदानीमेव मन्निकटं शठ आयास्यति, तस्मै दशपणी देयेति मया वक्ष्यते, तदप्रमाणम्' इतिपूर्ववृत्ताप्तवाक्येन चाप्रामाण्यं ज्ञाप्यत इत्यनयोस्तद्बाधकत्वम् । अन्यथा अनयोः ग्राह्याभावानवगाहिप्रमात्व-भावेनाबाधकत्वापातात् । तथाचाप्रामाण्यज्ञानमपि बाधः तज्जनकमपि बाधकमिति ॥

सम्प्रदायविदस्तु[(१)] 'चन्द्रप्रादेशिकत्वादिप्रत्यक्षं स्वयमुत्पत्तिदशायामेव दूरस्थवनस्पति-परिमाणादिग्रहे दूरत्वेन(दोषत्वेन-पा) क्लृप्तदूरस्थत्वदोषजन्यत्वनिश्चयविषयीभूतमुत्पद्यमानम् अपह्नेव सदुत्पद्यत(क्लृप्तदूरजन्यत्वनिश्चयविषयभूतमुत्पद्यमानम् अपह्नसदुत्पद्यते-पा) इति न तत् श्रुत्यादिबाध्यम् । वनस्पतेर्यथावत्परिमाणग्रहेच (परिमाणग्रह एव-पा) पर्वतादेर्यथावद्रूपपरिग्रहेऽपि दूरस्थत्वं दोषत्वेन क्लृप्तमेव । नहि दूरे पर्वतादिरूपं यथावद्गृह्यते । अपि त्वन्यदेव श्यामत्वादिकमारोपितमिति । सवितृशङ्खादावपि परीक्षितप्रत्यक्षेणैव प्राक् सुषिरपीतज्ञानो-दयात् ग्राह्याभावनिश्चयात्, पश्चात् प्रबलदोषादुत्पद्यमानं सुषिरपीतप्रत्यक्षरूपज्ञानं निश्चितप्रामाण्यमेव सदुत्पद्यत इति न तयोरप्यनुमानेन बाधः । 'इदं रूप्यमि'ति प्रत्यक्षमपि 'नेदं रूप्यमि'तिसयुक्तिके बलवत्प्रत्यक्षेणैव बाध्यते । नतु केवलयुक्त्यैव । 'गौरोऽहमि'त्यादि प्रत्ययोऽपि(प्रत्यक्षमपि-पा) 'मम शरीरमि'ति बलवद्भेदग्राहिप्रत्यक्षेणैव बाध्यते, नत्वनुमानेन बाध्यते श्रुत्या वा । कर्दमलिप्ते वस्त्रे कृष्णमितिवत् गौणं वा, उष्णं जलमित्यादिकमपि परम्परासम्बन्धावगाहितया गौणमेव । नतु लिङ्गादिबाध्यम् ॥

---

(१) 'सम्प्रदायविदस्तु' इत्यस्य चन्द्रप्रादेशिकत्वेऽतिव्याप्तिरित्याहुः'इत्यनेन वाक्येनान्वयः (पु.१००)

यद्वा निश्चितद्रव्यान्तरसमभिव्याहाररूपदोषेण शङ्किताप्रामाण्येन उष्णं जलमिति प्रत्यक्षेण अवकाशे दत्ते लिङ्गादिकमपि प्रवर्तते । नतु तत्प्रथममेव लिङ्गादिनाबाध्यते । 'अहमिहैवास्मि सदने जानानः' इत्यादिप्रत्यक्षं तु प्रमाणमेव । जीवस्याविभुत्वाभ्युपगमात् । नतु लिङ्गादिना तद्बाध्यते । ज्वालैक्यप्रत्यक्षमपि निर्वापितारोपितदीपवद्भेदग्राहिप्रत्यक्षेण बाधितविषयमेव जायते । अन्यत्रापि 'दीर्घोऽयं दीपो ह्रस्वो न' इति भेदप्रत्यक्षेण(प्रत्यक्षेणैव-पा) वा बाध्यते, नत्वनुमित्या । तादृशप्रत्यक्षाभावस्थले च दीपभेदो नास्त्येव, मानाभावात् । दूरस्थस्य 'अयं सर्पः' इत्यादिप्रत्यक्षं शब्दमात्रेण न बाध्यम् । किन्तु 'नायं सर्पः' इत्याप्तवाक्यमूलपरीक्षित प्रत्यक्षगौरवनिश्चयादेव, राजगौरवनिश्चयादिव राजभृत्येनामात्यः । श्रुतिगौरवनिश्चयादिव वा श्रुत्यनुसारिप्रकरणादिना लिङ्गादिकम् ।

उक्तं हि –

> **'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।**
> **तदापि विपरीतत्वं शिष्टाकोपे(१) यथोदितम् 'इति ।।(२)**

ननु 'गौरोऽहम्, ब्राह्मणोऽहम्, काणोऽहम्' इत्यादिप्रत्यक्षं गौरब्राह्मणदेहादेः आत्माभेदगोचरतया अध्यासरूपमेव वाच्यम् । नतु कर्दमलिप्ते वस्त्रे शुभ्रे तद्गोचरपरीक्षितभेदप्रत्यक्षपूर्वककाष्र्ण्यावगाहिप्रत्यक्षवद्गौणम् । नहि 'कृष्णं वस्त्रम्' इति तादृशवस्त्रावगाहिप्रत्यक्षं कारणवशाद् गौणमित्येतावता 'गौरोऽहम्' इत्यादिकमपि तथा । नच कर्दमलिप्तवस्त्र इव गौरदेहादिविशिष्टेऽहमर्थे आत्मनि विशेष्ये विशेषणसम्बन्धव्यतिरेकः कदाचित् दृष्टः ।।

किञ्चात्मनि ब्राह्मणदेहाभेदाध्यासाभावे वस्तुतो ब्राह्मणत्वजातेरभावेन 'ब्राह्मणो यजेत' इति श्रुतेर्विषयाभावेन अननुष्ठापकतयाऽप्रमाणं स्यात् । सुप्तौ प्रमातृत्वाद्यदर्शनान्यथानुपपत्त्याऽप्यध्यासो दुर्निवारश्च इति चेन्न । परमते अहमर्थस्यानात्मत्वे 'नाहं ब्राह्मणः' इत्यादेर्देहात्मैक्याविषयत्वात् । देहात्मैक्यस्य प्रत्यक्षत्वे तद्विरोध्यनुमानाद्यप्रामाण्यस्य

(१) जैमिनूसूत्रं -१-३-४-पदार्थप्राबल्याधिकरणोक्तन्यायेनेत्यर्थः ।।

(२) इदं रूप्यमित्यारभ्य यथोदितम् इत्यन्तं वाक्यं न्यायामृते १परिच्छेदे १६ भङ्गमनुकरोति ।।

दुर्वारत्वेन तद्भेदासिद्ध्यापत्तेश्च । अन्यथा निर्विचिकित्सवह्न्यौष्ण्यप्रत्यक्षे जागरूकेऽपि तदनौष्ण्यानुमानं प्रमाणं स्यात् । परस्परं भिन्नत्वेन निश्चितानां देहेन्द्रियादीनां युगपदेकात्मैक्याध्यासायोगाच्च । त्वन्मते देहात्मनोः भेदस्याध्यस्तत्वेन जीवब्रह्मणोरिव तथा तत्र अभेदाध्यासायोगाच्च ॥

मिथ्यात्वं ह्यधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वम् । तद्बाध्यात्यन्ताभावप्रतियोगित्वस्य सत्वेऽपि सम्भवात् । अभेदश्च भेदात्यन्ताभाव इति कथं भेदमिथ्यात्वेऽभेदः सत्यो न स्यात् । नच देहस्य स्वरूपेणैवाध्यस्तत्वाद्देहात्मनोः न भेदो नाप्यभेद इति वाच्यम्, अध्यस्तादपि रूप्याच्छुक्तेः स्वज्ञानाबाध्यस्य बाधगोचरस्य भेदस्य दर्शनात् ॥ किञ्च –

'अहं गेहीतिवच्चाहं देहीत्येव प्रतीयते ।
नतु देहोऽहमस्मीति कदाचित् कस्यचिन्मतिः ॥१॥

ब्राह्मणोऽहं मनुष्योऽहम् इत्यादिस्तु प्रमैव नः ।
देहभेदयुतो यस्माद् ब्राह्मणादिपदोदितः ॥२॥

कृशोऽहं कृष्ण इत्यादौ कार्ष्यादिर्देहसंस्थितः ।
पुत्रादिस्थितकार्ष्यादिवदात्मन्युपचर्यते ॥३॥

प्रतीयते हि 'मम गृहम्, मम क्षेत्रमि'तिवत् 'मम देहो, मम मनः, मम चक्षुः', इति भेदः । 'अहं ब्राह्मणोऽहं मनुष्यः'इत्यादिस्तु प्रमा । देहविशेषविशिष्ट एव हि ब्राह्मणादिशब्दार्थः,नतु देहविशेषः । देहो ब्राह्मण इति कदाऽप्यप्रतीतेः । 'अन्धोऽहम्' इत्यादिधीरपि प्रमैव । चक्षुः श्रोत्रादिहीनस्यैवान्धत्वबधिरत्वादिशब्दार्थत्वात्(१)। 'कृशोऽहं कृष्णोऽहम्' इत्यादिधीः पुत्रे कृशेऽहंकृश इतिवत् कर्दमलिप्ते 'अहं कृष्णः' इतिवच्च गौणः । नचायमप्यध्यासः । पुत्रात् कर्दमात् स्वस्य स्पष्टं भेदप्रतीतेः । अन्यथा 'मञ्चाः क्रोशन्ति' इत्यादिरप्यध्यासः स्यात् । पुत्रकार्श्येन दुःखं तु तस्यात्यन्तप्रेमास्पदत्वात् । नच 'कृशोऽहम्' इति

(१) 'अन्धबधिरादित्वात्' इति पाठः स्वारसिकः इति भाति ॥

ऐक्यप्रतीत्या 'शिलापुत्रिकाया देहः' इतिवत् 'मम देहः' इत्ययमेव गौण इति वाच्यम् । 'ममदेहः' इत्यस्य देहात्मविवेकिनि मुख्यतायाः 'कृशोऽहम्' इत्यस्यच पुत्रकार्श्ये गौणतायाश्च क्लृप्तत्वात् । तत्र भेदधीः स्पष्टेति चेत् । इहापि तथा । पश्वादीनामपि देहात्मभेद-साक्षात्कारस्याङ्गीकार्यत्वात् । तदुक्तम् –

**'जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।**
**भयाभयस्वभोगादौ कारणानि विजानते ।।**
**अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेत् '**(अनु-३-२-१) इति ।

तथाहि । जातमात्रस्य पश्वादेः स्तन्यपानादौ प्रवृत्त्यादि हेतोः इष्टसाधनत्वाद्यनुमितेर्हेतुः 'यत् स्तन्यपानं तदिष्टसाधनं यथेदम्' 'यन्नेत्रस्यान्तःशङ्कुकण्डूयनं तदनिष्टसाधनं यथेदम्' इत्यादिव्याप्तिस्मृतिस्तावन्न देहान्तरास्मृतौ युक्ता । नच मम प्राग्देहान्तरमभूदिति स्मरतः स्वस्यैव तद्देहैक्यधीः । किन्त्वनेकमणिष्वनुस्यूतं सूत्रमिव अनेकदेहेषु अनुस्यूतमात्मानं पश्यतस्ततो भेदधीरेव ।।

किञ्च 'योऽहं बाल्ये पितरौ अन्वभूवं सोऽहं स्थविरः नप्तॄन् पश्यामि' इति 'योऽहं स्वप्ने व्याघ्रदेहः सोऽहमिदानीं मनुष्यदेहः' इति च देहभेदधीपूर्वकं स्वस्यैक्यमनुसन्दधानः कथं? ततो भेदं न जानीयात् । नचेयं विरुद्धधर्मरूपलिङ्गजन्या भेदधीः परोक्षेति नैक्या-परोक्षभ्रमविरोधिनी इति वाच्यम् । प्रत्यक्षेण धर्मिणि भेदकसाक्षात्कारस्य भेदसाक्षात्कार-व्याप्तत्वात् । इह च व्यावृत्तत्वेन धीस्थदेहादिभेदकस्यानुवृत्तत्वस्यात्मनि प्रत्यभिज्ञा-प्रत्यक्षसिद्धत्वात् । व्यावर्तकसाक्षात्कारस्यैव ऐक्यापरोक्षभ्रमेण भेदव्यवहारस्यौपचारिकत्वेन च सह विरोधाच्च । नचायं भ्रमः सोपाधिकः । येनाधिष्ठानतत्त्वसाक्षात्कारेऽपि स्यात् । यातु श्रुतिरुक्ता, तत्र किं लक्षणया देहविशेषैक्याध्यासवान् ब्राह्मणशब्दार्थ इति भावः, किं वा देहविशेषसम्बन्ध एव तदर्थः । सम्बन्धस्त्वन्यस्यासम्भवादैक्याध्यासरूप इति?, यद्वा देह विशेष एव तदर्थः? आत्मा तु देहैक्याध्यासात् प्रवर्तत इति । न प्रथमः । विधौ लक्षणा-योगात् । त्वया 'पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेत्यध्यस्यति'

इति भाषितत्वेन[१]न्यायसाम्येन भृत्यमित्रादावपि तस्य सत्वेन शूद्रस्वामिनो ब्राह्मणादेः यागादावप्यनधिकारापाताच्च । ब्राह्मणादिकमित्रस्य शूद्रस्याप्यधिकारापत्तेश्च । नच स्वकर्मार्जितेन देहविशेषेणैक्याध्यासवांस्तदर्थः । आवश्यकत्वेन स्वकर्मणा देहविशेषार्जनस्यैव तदर्थत्वोपपत्तेः । सुषुप्तस्य जीवन्मुक्तस्य च देहैक्याध्यासाभावेन 'ब्राह्मणो न हन्तव्यः' इत्यादेस्तदविषयकत्वापाताच्च । नापि कदाचिदध्यासवांस्तदर्थः । महापातकेन नष्टब्राह्मण्यस्यापि अधिकारापातात् । जन्मारभ्य जीवन्मुक्तस्योक्तनिषेधाविषयत्वापाताच्च ॥

अत एव न द्वितीयः । संयोगस्यात्मविभुत्वपक्षे सर्वदेहेषु, स्वस्वामिभावस्य भृत्यदेहे सत्वेऽपि इच्छानुविधायित्वस्य चाशक्यातुरगादिदेहेष्वसत्त्वेऽपि, साक्षात् स्वस्वामिभावस्य तदिन्द्रियाश्रयत्वस्य वा, साक्षात् तत्प्रयत्नजन्यक्रियाश्रयत्वस्य वा, तद्भोगायतनत्वस्य वा, तत्कर्मार्जितत्वस्य वा सम्बन्धान्तरस्य सम्भवात् । नच प्रयत्नादावात्मैक्यभ्रम एव सम्बन्धः । 'अहं कृतिः' इत्यप्रतीतेः । आत्मसमवायस्य आत्मायुतसिद्धेर्वा सम्बन्धान्तरस्य सत्त्वाच्च । नच अनतिप्रसङ्गाय स्वस्वामिभावादिरैक्याध्यासरूपमूलसम्बन्धाधीनः । वैपरीत्यस्यापि सुवचत्वाच्च । तत्कर्मार्जितत्वस्यैव मूलसम्बन्धत्वाच्च । कर्मणां तदीयत्वं च अनादिपूर्वपूर्वतदीयकर्माधीनत्वं वा तदाश्रितप्रयत्नजन्यत्वाधीनत्वं वा नतु तदीयशरीरजन्यत्वाधीनत्वम् इति नान्योन्याश्रयः । पुत्रकामेष्टिकर्मापि न पुत्रशरीरार्जकं किन्तु ग्रामकामेष्टिवत् पुत्रकर्मार्जितस्य तस्य स्वसम्बन्धमात्रार्जकम् । न तृतीयः । तस्य जडत्वादिना अनियोज्यत्वात् । देहविशेषयुक्ते एव ब्राह्मणशब्दप्रयोगेण देहस्यातदर्थत्वाच्च । एतेन 'सर्वाण्यपि विधिनिषेधशास्त्राणि अध्यासमूलानि' इति परभाष्यं निरस्तम् ॥

नापि प्रमातृत्वाद्यन्यथानुपपत्त्या अध्याससिद्धिः । तदभावेऽपि सुषुप्तौ अज्ञानादिज्ञातृत्वस्य दर्शनात् । जागरणादावपि घटादिप्रमातृत्वदशायां तत्कर्मार्जितत्ववत् तदैक्याध्यासस्य सदाऽभावाच्च ॥

एतेन प्रमातृत्वादिकमध्यासमूलमिति परभाष्यं निरस्तम् । चार्वाकादेस्त्वनुमानाभासादिजन्येऽपि देहात्मभ्रमे धर्माद्यभावभ्रम इव प्रत्यक्षत्वाभिमानः संसारहेतुर्देहानुकूलादौ

(१) 'जिज्ञासाधिकरण शाङ्करभाष्ये पुत्रभार्यादि .वे'ति बाह्यधर्मानात्मन्यध्यस्यति इति भाषितत्वेनेत्यर्थः ॥

रागादिरपि पुत्रानुकूलादाविव देहस्य प्रेमास्पदत्वात् । अङ्गुल्या देहं प्रदर्श्य 'अयमहम्' इत्युक्तिरपि अङ्गारं प्रदर्श्य 'अयं वह्निः' इतिवत्पृथग्दर्शयितुमशक्यत्वात् । श्रुतिषु देहात्मैक्य-निषेधोऽपि असत्कारणनिषेधवत् कुवादिप्राप्तत्वात् । व्यवहारपर्यन्तं स्फुटतरभेदज्ञाना-भावाच्च । दृश्यन्ते हि यमयोर्व्यावर्तकं पश्यन्तोऽपि व्यवहर्तुमशक्ताः ।

उक्तं च –

**'व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।**
**भेदज्ञानेऽपि चाङ्गारवह्निवत् स्वाविविक्तवत् ।।१।।**

**भवन्ति व्यवहाराश्च नहि प्रत्यक्षगानपि ।**
**अर्थान् यथानुभवतः प्रतिपादयितुं क्षमाः'** (अनु-३-२-१) इति ।[१]

तस्माद्देहादेरात्मैक्येन स्वरूपेण चानाध्यास एव वाच्यः । सोऽपि विरोधिभेदप्रत्यक्ष-निबन्धन एवेति कथं गौरोऽहम् इत्यादिकं प्रत्यक्षम् अगौणमिति ।।

अपि च चन्द्रप्रादेशिकत्वादिप्रत्यक्षंप्रति श्रुतिजन्यज्ञानस्यानुमितेर्वा बाध्यत्वं नामा-ग्निरुष्ण इति प्रत्यक्षप्रमायास्तदनौष्ण्यानुमितिं प्रतीव नोत्पत्तिप्रतिबन्धकत्वम् । चन्द्र-प्रादेशिकत्वादिप्रत्यक्षस्य श्रुत्यनुमानप्रवृत्तेः प्रागेवोत्पन्नत्वात् । अप्रामाण्यशङ्काशून्यचन्द्र-प्रादेशिकत्वादिप्रत्यक्षे जागरूके सति तेनैव प्रतिबन्धात् तद्विरुद्धश्रुत्यनुमानजन्यज्ञानयो-रेवानुदयेन वैपरीत्याच्च ।।

अत एव तज्जातीयप्रत्यक्षान्तरोत्पत्ति प्रतिबन्धकत्वमेव तयोर्बाधकत्वमिति निरस्तम् । अप्रामाण्यशङ्काशून्यचन्द्रप्रादेशिकत्वादिग्राहिविरोधिप्रत्यक्षे सति श्रुत्या अनुमानेन वा तद्वि-रोधिज्ञानोत्पत्तेरेव असम्भवात् । अत एव च तयोस्तत्राप्रामाण्यशङ्काऽऽधायकत्वेन प्रति-बन्धकत्वमिति निरस्तम् । तत्र श्रुतिजन्यानुमानजन्यज्ञानातिरिक्त कार्यान्तराभावेन तत्प्रति-बन्धकत्वस्वीकारानुपपत्तेः ।।

एतेनैव चन्द्रप्रादेशिकत्वाद्यनुपस्थितिदशायां प्रवृत्तश्रुत्यनुमानजनितज्ञानेन शैत्यानुमित्या

(१) मिथ्यात्वं हि इत्यारभ्य क्षमाः इत्यन्तं वाक्यं न्यायामृते १परिच्छेदे-५८ भङ्गमनुकरोति ।।

स्वानन्तरभाविपीतशङ्खभ्रमवत् स्वानन्तरभाविचन्द्रप्रादेशिकत्वादिप्रत्यक्षेऽप्रामाण्यशङ्का आधीयत इति परास्तम् ॥

चन्द्रादिप्रत्यक्षस्य तत्प्रादेशिकत्वादिविषयत्वनियमेन तदनुपस्थितिदशाया एव असम्भवात् । अपि च 'अष्टाशीति सहस्राणि विस्तीर्णो योजनानि तु' इति श्रुत्या चन्द्रे तादृशपरिमाणविशेषबोधिकयाऽपि तत्र प्रत्यक्षगोचरप्रादेशिकत्वव्यतिरेकानवगाहितया न तद्बाधो युज्यते । तथांच बाधागोचरत्वस्य पारमार्थिकत्वरूपत्वाङ्गीकर्तृमतेऽपि चन्द्रप्रादेशिकत्वेऽतिव्याप्तिरित्याहुः ॥

॥ इति प्रत्यक्षप्राबल्यसमर्थनम् ॥

॥ इति चन्द्रप्रादेशिकत्वादेर्जीवेश्वरभेदस्य च परोक्तश्रुत्यनुमानमात्रबाध्यत्वनिरसनम् ॥

## ॥ अथ भेदवाक्यस्य अभेदनिषेधरूपत्वसमर्थनम् ॥

एतेन 'भिन्नोऽचिन्त्यो परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः' इत्यस्य वाक्यस्य श्रुतित्व एव विप्रतिपत्तिः । श्रुतित्वे वा 'नान्योऽतोऽस्ति द्रष्टा' इति भेदनिषेधशेषत्वेन निषेधाय भेदानुवादकत्वमेवेति न ततो जीवेश्वरभेदसिद्धिरिति निरस्तम् । इदानीन्तनाध्ययनागोचरत्वमात्रेण(गोचरत्वेन-पा) अश्रुतित्वे अतिप्रसङ्गस्योक्तत्वात्[(१)] । शाबरभाष्ये 'एवं क्वचिच्छ्रूयते' इत्युक्त्वा उदाहृतस्य तस्य तस्य वाक्यस्य प्रसिद्धशाखास्वनुपलम्भात् । भेदनिषेधस्यैवाभेदप्रतिपादनपर्यवसितस्य 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्याद्यभेदवाक्यवत् 'भिन्नोऽचिन्त्यः' इत्येतद्वाक्यशेषत्वेन निषेधायानुवादकतया वैपरीत्यापत्तेश्च॥

ननु 'भिन्नोऽचिन्त्यः' इत्यस्याभेदनिषेधकत्वमयुक्तम् । निषेधबोधकनञादेरश्रवणात् । नचाभेदाभावो भेदः, अभावबोधकं च निषेधकमिति वाच्यम् । तथात्वे प्रमाणमात्रस्य निषेधकत्वप्रसङ्गात् । सर्वस्यापि प्रमेयस्य स्वाभावाभावरूपत्वात् । नच अभावत्वेन तद्बोधकं मानं निषेधकम् । प्रकृते तदभावादिति चेन्न । न्यायनये तमःशब्दस्य अभावत्वेन तेजोऽभावबोधकत्ववत्, प्राभाकरनये तत्त्वेन तस्यैवालोकज्ञानाभावबोधकत्ववच्च भेदशब्दस्याप्यभावत्वेनाभेदबोधकत्वेनोक्तातिप्रसङ्गानवकाशात् । नहि 'अयं घटः पटाद्भिन्नो न' इति

---

(१) नच भिन्नो......मानाभाव इति वाच्यम् इत्यत्र १ परिच्छेदे (पु.९) उक्तत्वादित्यर्थः ॥

शब्दादिव 'अयं घटः पटाद्भिन्नः' इतिशब्दाद् घटे पटाभेदाभावो न प्रतीयत इत्यस्ति । नच तादात्म्याभावत्वातिरिक्तं तदवच्छिन्नप्रतियोगिकाभावत्वातिरिक्तं वा भेदत्वं किञ्चित् सुवचं सम्भवति । तथा च अभेदस्य भेदस्य इव श्रुतिनिषिद्धत्वेन व्यावहारिकत्वप्रसङ्ग इति ॥

एतेनैव नाभेदवाक्यं भेदवाक्यशेषतयाऽङ्गीकर्तुं शक्यम् । तदर्थानुपयोगात् । तथाहि । न तावत् जीवब्रह्माभेदो प्रातिभासिकः । असतो निषेधायोगात् । भेदवाक्येनाभेदो बोध्यत इति वदतो मते 'अहं ब्रह्मास्मि' इत्यपरोक्षतो प्रतीतस्यतस्य प्रातिभासिकत्वायोगात् । किञ्च 'नाहं ब्रह्मास्मि' इति भेदप्रत्यक्षे जागरूके कथम् 'अहं ब्रह्मास्मि' इति तदभेदापरोक्षसम्भवः । नापि व्यावहारिकः । तात्विकभेदप्रमायां व्यावहारिकभेदप्रमायां वा सत्यां व्यावहारिकाभेदसम्भवात् । तथाच जीवब्रह्माभेदो वास्तव एवेति निरस्तम् ॥

शाब्दापरोक्षं स्वीकुर्वतः परमत एव दशमस्त्वमसीत्यादिशब्दादिव 'तत्त्वमसि' इत्यादि शब्दादपि तात्पर्यभ्रमदशायामपरोक्षाभेदप्रतीतिसम्भवात् । नच 'नाहं ब्रह्मास्मि' इति भेदप्रत्यये जागरूके कथमभेदापरोक्षज्ञानोदय इति वाच्यम् । देहभिन्नत्वेन श्रुतिजन्यात्मगोचरापरोक्षज्ञाने सत्यपि 'गौरोऽहम्' इत्यपरोक्षाभेदप्रत्ययवत्तदुपपत्तेः ।

अस्तु वा जीवेश्वराभेदो व्यावहारिकः । नच तात्विकभेदप्रमायां व्यावहारिकभेदप्रमायां वा सत्यां व्यावहारिकाभेदो न सम्भवतीति वाच्यम् । परमते तत्त्वमस्यादिवाक्येन सत्यामपि तात्त्विकभेदप्रमायां व्यावहारिकभेदवत् 'भिन्नोऽचिन्त्यो' इत्यादिवाक्येन सत्यामपि तात्त्विकभेदप्रमायां व्यावहारिकाभेदोपपत्तेः । 'अहं कर्ता भोक्ता' इति व्यावहारिकाभेदप्रमासत्वेऽपि 'ममान्तःकरणम्' 'मम मनः'इति व्यावहारिकभेदवत् सत्यामपि व्यावहारिकभेदप्रमायां पररीत्यैव व्यावहारिकाभेदोपपत्तेश्च । तस्मादभेदो न वास्तवः ॥

एतेन 'भिन्नोऽचिन्त्यः' इत्यादिवाक्येन जीवतादात्म्यं ब्रह्मणि निषिध्यत इति कृत्वा तद्धर्मिकजीवप्रतियोगिकतादात्म्यनिषेधेऽपि ब्रह्मप्रतियोगिकजीवधर्मिकाभेदस्य 'नान्योऽतोऽस्ति' इति वाक्यार्थस्यानिषिद्धत्वेन तस्य तदशेषत्वात् । नहि जीवस्य अवच्छिन्नस्य यद्रूपं तदेवेश्वरस्वरूपमिति वेदान्तिभिरिष्यते । तस्मात् 'नान्योऽतोऽस्ति' इति वाक्यार्थः परमार्थः एवाभेद इति निरस्तम् ॥

तथाऽपि 'तत्त्वमसि'इति ब्रह्मप्रतियोगिक जीवधर्मिकाभेदपरवाक्यस्य तच्छेषत्वापरिहारात् । ब्रह्मप्रतियोगिकजीवधर्मिकाभेदपरत्वेन 'नान्योऽतोऽस्ति'इत्यस्य 'भिन्नोऽचिन्त्यः' इति तदर्थानिषेधकवाक्यशेषत्वाभावेऽपि 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति तन्निषेधैकवाक्यशेषत्वानपायाच्च । तस्यापि अस्मदज्ञातभेद(अस्मत्प्रतिज्ञातभेद-पा)परवाक्यशेषत्वस्थितेः । नह्येतद्वाक्यं प्रत्येव तस्य शेषत्वमित्यस्मद्गुरुचरणाभिप्रायः । अन्यथा 'नान्योऽतोऽस्ति' इतिवाक्यं प्रति 'भिन्नोऽचिन्त्यः' इत्यस्य परोक्तशेषत्वानुपपत्त्या जीवप्रतियोगिकब्रह्मधर्मिकभेदस्य तात्त्विकत्वापत्तेः ॥

यत्तु, किञ्च 'भिन्नोऽचिन्त्यः' इति भेदमनूद्य निषिध्यते, चिन्त्यत्वनिषेधस्य भेदनिषेधे पर्यवसानात् । स्वरूपान्वयाख्यानमात्रस्य वैयर्थ्यात् । नापि द्रष्टृभेदनिषेधश्रुतिरनुवादः । द्रष्टृभेदाभावस्यान्यतोऽप्राप्तेः । नचाभेदवादिसिद्धं भेदाभावमनुवदतीत्युक्तम् । केवलाभेदवादिनः स्वयं ज्ञानकरणत्वासम्भवात् करणान्तरजन्यज्ञानाश्रयत्वात् । नच तत्प्रसिद्धिर्भ्रम इत्येतावता न हेतुमपेक्ष्यत इत्यस्ति। तथासति सर्वदा सर्वेषां भ्रान्तित्वप्रसङ्गः स्यात्। न तावत्प्रत्यक्षं तत्प्रसिद्धौ हेतुः । जीवपराभेदस्य अननुभवात् । सत्यां भेदप्रत्यक्षप्रमायाम् अभेदभ्रान्त्यनुपपत्तेश्च । अत एव न लिङ्गजन्या तत्प्रसिद्धिः । नहि वह्न्यौष्ण्यप्रत्यक्षे जागरूके तदनौष्ण्यानुमितिः सम्भवति । विरुद्धधर्माधिकरणत्वादिरूपानेकलिङ्गसत्वाच्च । नच भेदप्रत्यक्षस्य भ्रमत्वाभिमानात् अनुमानाबाधकत्वमिति(नानुमानाबाधकत्वं-पा) वाच्यम् । भेदप्रत्यक्षे बाधकप्रमितिं विना भ्रमत्वाभिमानानुपपत्तेः । अनुमानस्यैव बाधकत्वेऽन्योन्याश्रयात् । नापि अनादिपौरुषेयवाक्यम् अद्वैतवादिनो अभेदभ्रमहेतुः । स्फुटतरभेदप्रतीत्या योग्यताविरहनिश्चयेन शाब्दबोधानुदयात् । शाब्दज्ञानमात्रस्यैव योग्यताज्ञानजन्यत्वात् । पौरुषेयवाक्यस्य अद्वैतवादिना प्रत्यक्षादिविलक्षणप्रामाण्यानभ्युपगमेन तस्य भेदनिषेधश्रुतितुल्ययोगक्षेमत्वाभावात् । नच प्रत्यक्षेण भेदानुपस्थितिदशायाम् अनुमानात् पौरुषेयवाक्याद्वा अभेदभ्रमः इति शङ्क्यम् । जीवपरपदार्थज्ञाने सति तद्भेदज्ञानस्यावश्यकत्वात् । पदार्थद्वयज्ञानाभावे च अभेदानुमित्यादेरेव अनुदयात् । ऐक्यस्य अभेदवादिना स्वतन्त्रानुमानपौरुषेयवाक्यगम्यत्वानङ्गीकाराच्च । सर्गप्रलययोः अङ्गीकारेण पौरुषेयवाक्यानुमानप्रवाहस्य उच्छिन्नत्वाच्च । सर्गाद्यकालीनाभेदभ्रमासम्भवाच्च । नच तदा इश्वर एव व्यामोहकारी इति

वाच्यम् । सर्वज्ञत्व-परमाप्तत्व-वैषम्यनैर्घृण्याभावग्राहकमानविरोधात् । नच तदा कस्यचित् पूर्वकल्पीयभ्रमाहितसंस्कारात् तद्भ्रमसम्भवः । वेऽमूलकत्वे बाधकाभावात् । तत्कल्पने च चोदनावाक्यस्यापि(अनुवाकस्यापि-पा) अनुवादकत्वापत्तेः । नच भेदनिषेधश्रुतितात्पर्यभ्रमात् अद्वैतवादिनो अभेदप्रसिद्धिः । अनुपस्थिते जीवपरभेदाभावे श्रुतितात्पर्यभ्रमस्यैव तत्र दुःसम्पादकत्वात् । नच तर्कादिनोपस्थिते तस्मिन् तद्भ्रमः । तार्किकस्य तस्य जीवपराभेदस्य अन्यत्राभावात्, अत्राप्यसत्वे भेदश्रुत्या तन्निषेधायोगात्, अभेदश्रुतितात्पर्यज्ञानस्य यथार्थत्वापत्तेः । तस्माददद्वैतवादिनो अद्वैतप्रसिद्धेर्मूलान्तराभावादियमेव श्रुतिः साक्षाद्भेद-निषेधबोधमूलमिति नाद्वैतश्रुतिरनुवादः ॥

किञ्च प्रमाणसिद्धस्यैवानुवाद इति श्रुतिपदतः कथमद्वैतमप्रामाणिकम् । तत्र व्यावहारिकप्रमाणाप्रसरात् । तत्वाऽवेदकप्रमाणस्यैव तद्विषयत्वात् । नच निषेधार्थत्वात् प्रमाणापेक्षा नेति वाच्यम् । भेदवादिनो मते(भेदिनो मते-पा) क्वचित् प्रमितस्यैवान्यत्र निषेधात् । जीवधर्मिकेश्वराभेदस्यान्यत्राप्रमितत्वात् । नन्वेवं 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति असदनुवादोऽपि न स्यात् । प्रपञ्चसत्ताग्राहिप्रत्यक्षादिविरोधेन तद्भ्रमानुपपत्तेः (तत्प्रमानुपपत्तेः-पा)। अतस्तत्प्रसिद्धिरपि श्रुतिमूलैव स्यादिति चेन्न । असद्वादिना श्रुति-प्रामाण्यानभ्युपगमात् । 'उत्पत्तेः पूर्वं कार्यमसत् अन्यथा उत्पत्त्ययोगात्' इत्यादि-तर्काभासप्रसिद्धस्य सतोऽनुवादसम्भवात् । नच प्रत्यक्षविरोधोऽपि । तस्येदानीन्तनप्रपञ्च-सत्ताविषयतया भिन्नविषयत्वात् । असत्पदस्य शक्तिग्राहकाभावेन अनुमानात् प्राक् शब्दतस्तदवगमासम्भवात्(श्रुतितःतदवगमासम्भवात्-पा) तस्माद्द्रष्टृभेदनिषेधश्रुतिर्न भेदश्रुतिशेष-तया अङ्गीकर्तुं शक्या ॥

नापि 'नान्योऽतोऽस्ति' इति श्रुतिर्द्रष्ट्राद्यभेदोपासनार्था । अन्तर्याम्यक्षरब्राह्मणयोः 'उपासीत' इत्यादिविध्यश्रवणात्, कल्पकाप्रतीतेश्च । वाक्यस्यानुभूयमानस्वप्रमेयपरत्वसम्भवे श्रुतिविरुद्धाश्रुतकल्पनायोगाच्चेति नवीनोक्तम् । तन्न । जीवसङ्घप्रतियोगिकभेदस्यापि परमात्मन्यप्राप्ततया 'भिन्नोऽचिन्त्यः' इति तत्रानूद्य निषेधायोगात् । विशिष्टादुपहिताद्वा जीवचैतन्याद्भेदनिषेधे परमात्मनस्तद्भेद(तदभेद-पा)प्रसङ्गाच्च । न 'जीवसङ्घ' 'परम' शब्दयोः चिन्मात्रपरत्त्वम् । 'चिन्मात्रं चिन्मात्राभिन्नम्' इति श्रुत्यर्थपर्यवसानेन इष्टापादनात्

अप्रसक्तप्रतिषेधत्वापत्तेश्च । नच चित्त्वं स्वाश्रयप्रतियोगिकान्योन्याभावासामानाधिकरणमिति तदर्थः,एवं च नेष्टापादनमिति वाच्यम् । अस्यापदार्थत्वात् अवाक्यार्थत्वाच्च । जीवाश्रित-दुःखित्वादिधर्माणाम् ईश्वराश्रित-सर्वज्ञत्व-सर्वशक्तित्वादिधर्माणां च परस्परसाङ्कर्यापत्तेश्च । चित्त्वस्येव इतरधर्माणां केनाऽप्यनिवारणात् । जीवेश्वरयोर्बिम्बप्रतिबिम्बभावमङ्गीकुर्वतापि मुखप्रतिमुखयोः अवदातत्व-श्यामत्वयोरिव दुःखित्वादुःखित्वयोर्व्यवस्थितत्वाङ्गीकाराच्च । श्रुतिमात्रप्रामाण्ये श्रद्धावता जीवब्रह्मशब्दमुख्यार्थभेदस्य श्रौतस्यात्याज्यत्वाच्च । अन्यथा जीवब्रह्मणोरभेद इति प्रवादस्य निरर्थकत्वापत्तिः ॥

अपि च लक्षिते निर्विशेषे पराभिमते ब्रह्मचित्पद(चैतन्यपद-पा)व्यवहारगोचरे तादृश-जीवपदव्यवहारगोचराद् भेदस्याभेदस्येव श्रुत्यैव प्राप्तेर्वक्तव्यत्वेन श्रुतिप्राप्तस्य श्रुत्या सर्वथा निषेधायोगेन निर्विशेषे एव भेदाभेदप्रसङ्गः ॥

किञ्च 'अचिन्त्यः परमः' इति अचिन्त्यत्वेन परमत्वं जीवसङ्घात् भेदकमभिदधत् इयं श्रुतिर्भेदपरैव अवसीयते नतु तन्निषेधपरा । अन्यथा वाक्यशेषे 'पूर्णः परो जीवसङ्घो ह्यपूर्णः' इति पूर्णत्वापूर्णत्वरूपवैधर्म्योपन्यासात् आनर्थक्यप्रसङ्गः । तथा च साकल्येन चिन्तनागोचरः परमः = परमात्मा, जीवसङ्घाद्भिन्नः इत्येव योजनात् । नतु 'भिन्नोऽचिन्त्यः' इति । एवं च 'भिन्नोऽचिन्त्यः' इति भेदानुवादपुरःसरं चिन्त्यत्वनिषेधोऽभेदनिषेधे पर्यवसायी निश्चीयते । स्वरूपान्वयाख्यानमात्रस्य वैयर्थ्यात् इत्यत एव निरस्तम्(एव परास्तम्-पा)॥

किञ्चैवं द्रष्टृभेदनिषेधश्रुतिरेव किं नानुवादः । नच द्रष्टृभेदाभावस्यान्यतोऽप्राप्ततया तदाऽवेदकश्रुतिर्नानुवादः । पराभिमतनिर्विशेषचैतन्यशब्दितेऽपि तादृशचैतन्यप्रतियोगिक-भेदस्याप्यन्यतोऽप्राप्त्या तदावेदकश्रुतेरप्यननुवाद इत्यापातात् । नहि तादृशभेदस्य वादिनः प्रसिद्धः । भेदवादिनः करणजन्यज्ञानाश्रयतया तत्प्रसिद्धिरूपज्ञानकरणत्वायोगात् । नहि प्रमैव हेतुमपेक्षते नतु भ्रान्तिरित्यस्ति । येन भेदज्ञानस्य भ्रान्तितया हेत्वनपेक्षत्वं स्यात्॥

किञ्चैवं सर्वेषां सर्वदा भ्रान्तिप्रसङ्गः । नचेष्टापत्तिः । सुषुप्त्युच्छेदापत्तेः । न तावत् प्रत्यक्षं भेदप्रसिद्धौ हेतुः । तादृशजीवपरशब्दित प्रतियोगिकानुयोगिकभेदस्याननुभवात् । निर्विशेषचैतन्यस्य वेदैकसमधिगम्यत्वाभ्युपगमविरोधश्च । अत एव नानुमानं पौरुषेयवाक्यं वा तादृशभेदप्रसिद्धिहेतुः ।

किञ्चानुमानस्य पक्षतावच्छेदकसाध्यसामानाधिकरण्यगोचर ज्ञानजनकत्वनियमेन निर्विशेषे प्रसरानुपपत्तिः । 'सर्गप्रलययोरङ्गीकारेण' इत्यादिना त्वदुक्त(त्वदुद्भावित-पा)दूषणग्रासेन सर्गाद्यकालीनभेदभ्रमासम्भवाच्च । 'नच तदेश्वर एव व्यामोहकारी' इत्यादिशङ्का समाधानयोरपि तुल्यत्वाच्च । नच सर्गाद्यकाले कस्यचित् पूर्वपूर्वभ्रमजसंस्कारात् तद्भ्रमसम्भवः । तादृशभेदप्रसिद्धेर्वेदमूलकत्वे बाधकाभावात् । अन्यथा चोदनावाक्यस्यापि तादृशभ्रमसिद्धार्थानुवादकत्वापत्तेः । तस्माद् द्वैतवादिनस्तादृशभेदप्रसिद्धेर्मूलान्तराभावात् इयमेव श्रुतिः साक्षाद्भेदबोधी मूलमिति न भेदश्रुतिरनुवादः ॥

नचैवम् अभेदस्याप्रामाणिकत्वे निषेधाय कथं 'तत्त्वमसि' इत्यादितदनुवादः, प्रमाणसिद्धस्यैवानुवाद इति त्वयाभ्युपगमात् इति वाच्यम् । असिद्धेः । 'तद्धैक आहुः' इत्यादिना अप्रामाणिकस्याऽप्यनुवाद इत्यभ्युपगमात् । शुक्तिरेव अत्यन्तासद्रजतात्मना भ्रमविषयः 'नेदं रजतम्' इति तस्यैव निषेध इत्यभ्युपगन्तुः मम क्वचित् प्रमितस्यैवान्यत्र निषेध इत्यसिद्धेश्च । अत एव निषेधार्थं प्रामाणिकत्वानपेक्षा इति सिद्धान्तः । तस्मात् द्रष्टृभेदनिषेधश्रुतिः भेदश्रुतिशेषार्थेति किमनुपपन्नम्? नच मानान्तराप्राप्तस्य कथमनुवाद इति वाच्यम् । तादृशभेदस्यापि मानान्तराप्राप्ततया कथमनुवाद इति साम्यात् । अध्यारोपापवादन्यायेन मानान्तराप्राप्तस्य वियदादेः ब्रह्मणि 'यस्मिन् द्यौः' इत्यादिनेव भेदस्य तादृशस्य श्रुत्या ब्रह्मण्यध्यारोपे तथैव अभेदस्य 'तत्त्वमसि' इत्यादिना तत्राध्यारोप इति सुवचत्वाच्चेति । एवम् अन्यदपि दूषणं परोक्तं पक्षद्वयेऽपि सममिति विशिष्य न तदुद्धृतमिति द्रष्टव्यम् ॥ ॥ इति भेदवाक्यस्य अभेदनिषेधरूपत्वसमर्थनम् ॥

## ॥ अथ श्रुत्या ईश्वरे स्वगतभेदनिषेधसमर्थनम् ॥

यदपि 'नान्योऽतोऽस्ति द्रष्टा'इति वाक्यमीश्वरे स्वगतभेदनिषेधपरम् इति स्वीकारे तद्भेदस्याप्रसक्तत्वेन निषेधायोग इति नवीनोक्तं दूषणम् । तदपि न । 'एकमेवाद्वितीयम्' इति वाक्यस्य परेणापि 'वृक्षस्य स्वगतो भेदः'[१] इत्यादिना स्वगतभेदनिषेधार्थत्वाङ्गीकारात्

---

(१) वृक्षस्य स्वगतो भेदः पत्रपुत्रफलादिभिः । वृक्षान्तरात्सजातीयो विजातीयशिलादिवत् । तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते । ऐक्यावधारणद्वैतप्रतिषेधः त्रिभिः क्रमात् ॥ इतिवाक्येन निषेधार्थाङ्गीकारादित्यर्थः ॥

तत्राप्येकपदस्य स्वगतभेदनिषेधपरत्वस्वीकारात् । 'ईश्वरः ईश्वरप्रतियोगिकभेदवान् आत्मत्वात् जीववत्' इति भेदभ्रमानुमितौ तत्प्राप्तस्य(भ्रमानुमानवत् प्राप्तस्य-पा) निषेधसम्भवाच्च ॥

नच 'द्यावाभूमी जनयन् देव एकः' इत्यादिधर्मिग्राहकमानविरोधात् एतादृशाऽनुमानमेव नोदयमासादयतीति वाच्यम् । एवं विधप्रमाणानवतारदशायां तद्भेदानुमानप्रवृत्तिसम्भवात् । 'एष त आत्माऽन्तर्याम्यमृत' इत्यादिवाक्योपस्थिते वस्तुगत्येश्वरधर्मिणि विरोध्युपस्थापकाभावेन (विरोधाभ्युपस्थापकाभावेन-पा) तद्भेदशङ्कायाः सुलभत्वाच्च । 'ग्रहं सम्मार्ष्टि'[1] इत्यादाविव 'एषः' इत्येकवचनस्याविवक्षितार्थत्वशङ्कायां तेन लाघवानुगृहीतेन तद्भेदस्यानिषिद्धत्वात् । प्रतिपर्यायम् अनन्तर्यामिण एव भिन्नत्वशङ्कासम्भवाच्च । नच 'नान्योऽतोऽस्ति द्रष्टा' इति 'अतः' शब्देनान्तर्यामिमात्रस्यैव भेदावधित्वेनोपस्थितेः अनन्तर्यामिण एवान्तर्याम्यवधिक भेदाश्रयत्वं लभ्यते नत्वन्तर्यामिण एवेति वाच्यम् । अनन्तर्यामिण्यन्तर्यामिभेदे शङ्कानुदयेऽपि अन्तर्यामिशब्दार्थे व्यक्तिभेदशङ्कोदयसम्भवात् । जातावप्येकवचनदर्शनात् । किञ्च अन्तर्यामिवाक्यपर्यालोचनाप्राप्त तदभेदानुवादपरः 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिरस्तु । अज्ञातार्थपरत्वासम्भवेन निरर्थकतदनुवादत्वस्य सह्यत्वात् ।

किञ्च 'क्षित्यादिकमनेककर्तृकं विचित्रकार्यत्वात् प्रासादादिवत्' इतीश्वरभेदप्रसक्तौ 'नान्योऽतोऽस्ति द्रष्टा' इति तन्निषेधोऽस्तु । नच क्षित्यादेरनेककर्तृकत्वे तत्कर्तुः प्रासादादिकर्तुरिव सर्वज्ञत्वाद्यसिध्या अनीश्वरत्वे ततोऽनुमानादनीश्वरभेद एव प्रसक्तो नत्वीश्वरभेद इति वाच्यम् । क्षित्यादिपदेन अदृष्टद्वारकस्वोपादानगोचरजन्यकृत्यजन्यसमवेतजन्यमात्रस्य पक्षत्वेन विवक्षणात् । ऐन्द्रियकानैन्द्रियकतत्तद्वस्तूपादानभूततत्तद्वस्तुभूतानन्तपदार्थगोचरापरोक्षज्ञानवदनेकजन्यत्वस्य साध्यस्य तत्र सिद्ध्या अनेकेश्वरप्रसक्तेः । तादृशापरोक्षज्ञानस्य सङ्कोचकाभावेन सर्वविषयत्वावश्यम्भावेन तज्ज्ञानवत एवेश्वरत्वात् । सृष्टिवाक्यगतैकवचनादिनाऽविवक्षितार्थत्वसन्देहदशायां क्षित्यादिकर्तुः ऐक्यस्यानुपस्थितिसम्भवेन तस्योक्तानुमानाविरोधित्वात् । उत्तरकालं विचारितेन सृष्टिवाक्येन तद्विरोधिज्ञानसम्भवेन तेन क्षित्यादिकर्त्रनेकत्वानुमितेरप्रामाण्यज्ञापनसम्भवात् ।

---

(१) जै.सू.(३-१-७-१३) सूत्रे विचारितन्यायेनेत्यर्थः ॥

एतेनान्तर्यामिण एव 'अतः'शब्देन परामर्शात् क्षित्यादिकर्त्रैक्यस्यच सृष्टिवाक्य-गतैकवचनेनैव सिद्धेश्च । द्रष्टृभेदनिषेधश्रुत्योर्विशेषेण 'अतः'शब्देन परामृष्टाऽन्तर्यामि क्षित्यादिकर्त्रतिरिक्ते, द्रष्टृमात्रे बुद्धिस्थे तत्समभिव्याहृत नञा तन्मात्रभेदाभाव एव बोध्यत इति निरस्तम् ॥

पूर्ववाक्येऽन्तर्यामिण एव प्रस्तुतत्वेन 'एषः' इत्येकवचनस्य जात्येकवचनत्वशङ्का-प्रयुक्ततदनेकत्वप्रसक्तौ 'अतोऽन्यो द्रष्टा = अन्तर्यामि नास्ति' इति तद्भेदनिषेधसम्भवात् । प्रत्यक्षश्रुत्योर्विरोधे द्रष्टृसामान्यभेदनिषेधश्रुतेस्तद्विशेषान्तर्यामीश्वरानेकत्व निषेधपरतया नियमनोपपत्तेश्च । अन्यथा 'धूम एव अग्नेर्दिवा ददृशे नार्चि' इत्यादेः प्रत्यक्षाविरोधाय 'दिवा भूम्ना अर्चिः न दृश्यते' इत्याद्यर्थपरत्वानाश्रयणप्रसङ्गात् ॥

नच प्रत्यक्षस्य कल्पितभेदविषयतया श्रुतेश्च वास्तवभेदनिषेधपरतया भिन्न-विषयत्वेनाविरोध इति वाच्यम् । तथासति बाध्यभेदविषयत्वेन प्रत्यक्षस्य अप्रामाण्यापत्तेः । अन्यथा 'नार्चिः' इत्यस्यापि वास्तवार्चिर्दर्शनाभावपरत्वेन कल्पितार्चिर्दर्शनविषयक-प्रत्यक्षापेक्षया भिन्नविषयत्वाश्रयणप्रसङ्गात् । बाधकं विना प्रत्यक्षस्य कल्पितभेदविषयत्वा-सिद्धेश्च । नच 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुतिरेव बाधिकेति वाच्यम् । वैपरीत्यस्यापि सुवचत्वात् । नच श्रुतेर्निर्दोषत्वेन निश्चितप्रामाण्यात् नैवमिति वाच्यम् । प्रत्यक्षे क्लृप्तदोषस्य भेदप्रत्यक्षेऽप्यभावनिश्चयेन(निर्णयेन-पा) प्रामाण्यावधारणात् । प्रत्यक्षवत् (प्रत्यक्ष इव-पा) श्रुतावपि कल्प्यदोषस्यानिवारणाच्च । प्रत्यक्षं प्रति श्रुतेरबाधकत्वस्योक्तत्वाच्च । अन्यथा श्रुतेर्बाधकत्वेसिद्धे प्रत्यक्षस्य कल्पितभेदविषयत्वसिद्धिः । सिद्धे च तस्मिन् श्रुतेर्बाधकत्व-सिद्धिरित्यन्योन्याश्रयप्रसङ्गः । नच भेदस्य कल्पितत्वे मानान्तरमस्ति ॥

किञ्च प्रत्यक्षश्रुत्योर्विरोधानुपस्थितौ भिन्नविषयत्वकल्पनाया एवानुदयात् तदुप-स्थितेरावश्यकत्वे उभयोरपि पारमार्थिकविषयत्वेन प्रामाण्योपपत्तौ प्रत्यक्षस्य कल्पिता-क्लृप्तार्थविषयत्वेनाप्रामाण्याश्रयणमयुक्तम् । अन्यथा वह्न्यौष्ण्यग्राहिप्रत्यक्षस्य तदनौष्ण्य-ग्राह्यनुमानस्य कल्पितौष्ण्य वास्तव तदभावरूपभिन्नविषयतया बाध्यबाधकभावाभाव-प्रसङ्गः । नच तत्रोभयोरपि व्यावहारिकत्वाद्विरोधः प्रकृते तु नैवमित्यत्र विशेषहेतुरस्ति ।

नचैवं भेदप्रत्यक्षभेदनिषेधकश्रुत्योरुभयोरपि पारमार्थिकविषयत्वे भेदाभेदप्रसङ्गः । नचेष्टापत्तिः । भेदाभेदयोरेकत्रासम्भवात् इति वाच्यम् । 'नान्योऽतोऽस्ति' इत्यस्यान्तर्यामी-ईश्वररूपद्रष्टृविशेषनिरूपितोक्तप्रकारप्रसक्तपरस्परभेदनिषेधपरत्वेन तदप्रसङ्गात् । 'नाहमीश्वरः' इत्यादिप्रत्यक्षस्य च पारमार्थिकजीवेश्वरभेदविषयत्वात् । नचैवं, 'तत्त्वमसि' इत्यादेरपि ईश्वरैक्य प्रतिपादनपरत्वाश्रयणेन तदिव त्वमसीत्याद्यर्थपरत्वानाश्रयणप्रसङ्गः । तत्र जीवविशेषवाचि श्वेतकेतु शब्दवत् 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्र जीवासाधारणशब्दाभावात् । 'घटमानय' इत्यादौ व्यक्तिवचनन्यायेन लक्षणां विनैव घटपदेन घटविशेषस्येवात्रापि द्रष्टृपदेन लक्षणां विनैवान्तर्यामीश्वररूपद्रष्टृविशेषपरत्वोपपत्तेश्च ।

नचास्य वाक्यस्यैव परमात्मभेदनिषेधकत्वे 'नान्योऽतोऽस्ति द्रष्टा' इत्येतावन्मात्रमेव स्यात् । 'नान्योऽतोऽस्ति श्रोत्रा नान्योऽतोऽस्ति मन्ता विज्ञाता' इतिच निरर्थकमसङ्गतं स्यात् । परमात्मनो नित्यसार्वज्ञाश्रयस्य तद्रूपविशेषस्य वा शरीराभावेन श्रोत्रादिजन्यज्ञानाश्रयत्वरूपश्रोतृत्वाद्ययोगादिति वाच्यम् । 'पश्यत्यचक्षुः स श्रुणोत्यकर्णः' इत्यादिवाक्यपर्यालोचनया रूपशब्दगोचरसाक्षात्काराश्रयत्वस्यैव द्रष्टृश्रोतृशब्दार्थत्वेन चक्षुःश्रोत्रादिजन्यज्ञानाश्रयत्वस्यातदर्थत्वात् । अन्यथा गौरवात् । व्याप्तिविशिष्टपक्षधर्मज्ञानाश्रयस्यैव मन्तृशब्दार्थतया तज्जन्यानुमित्याश्रयस्यातदर्थत्वात् । अन्यथा बाधसत्प्रतिपक्षस्थलेऽनुमितिरूपफलोदयाभावेन प्रयोक्तुरनुमातृव्यवहारागोचरत्वप्रसङ्गात् । परेणापि 'नान्योऽतोऽस्ति' इत्यादेरीश्वरद्रष्ट्राद्यभिन्नत्वपरत्वं वदता 'यत्साक्षादपरोक्षाद्ब्रह्म' 'तुरीयं तत्सर्वदृक् सदा' इत्यादिश्रुत्यविरोधाय 'पश्यत्यचक्षुः' इत्यादिश्रुत्यविरोधायच एवमेवाङ्गीकार्यत्वाच्च । नचेश्वरस्यापि जीवरूपेण श्रोत्रादिजन्यज्ञानाश्रयत्वात् ब्रह्मरूपेण साक्षादपरोक्षत्वादिसम्भवाच्चाविरोध इति वाच्यम् । जीवरूपेण ब्रह्मरूपेणेति वचनभङ्ग्यापि श्रोत्रादिजन्यज्ञानाश्रयत्वादिरूपश्रोतृत्वादेर्व्यवस्थितत्वस्यैव स्वीकृतत्वात् (स्वीकारात्-पा) । अन्यथा जीवब्रह्मणोरौपाधिकभेदस्याप्यनङ्गीकारापत्तेः । तस्मात् 'नान्योऽतोऽस्ति श्रोता मन्ता विज्ञाता' इति च न निरर्थकमसङ्गतं च ॥

॥ इति श्रुत्या ईश्वरे स्वगतभेदनिषेधसमर्थनम् ॥

## ।। अथ भगवतः सशरीरत्वसमर्थनम् ।।

यदत्रोक्तं परमात्मनो नित्यसार्वज्ञाश्रयस्य तद्रूपस्य वा शरीराभावेन श्रोत्रादिजन्यज्ञानाश्रयत्वरूपश्रोतृत्वाद्ययोगात् इति । तन्न ।

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'

इति परमात्मनोऽपि मुक्तिसाधनज्ञानविषयतया 'तनूं स्वाम्' इति शरीरकथनात् । नचैवम् 'अकायमव्रणम्' 'अचक्षुः' 'अपाणिपादः' इत्यादि श्रुतिविरोधात् न प्रतीयमानार्थपरत्वमिति वाच्यम् । 'अकायमव्रणम्' 'अचक्षुः' इत्यादेरस्मदादिसाधारणपरिमितार्थगोचरशरीरादिनिषेधपरत्वात् । अन्यथा 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुः' 'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके' (श्वे-उ-३-१६) इत्यादिविलक्षणतद्वत्वप्रतिपादकश्रुतिविरोधात् । नचैवं सर्वगन्धत्व-सर्वरसत्वप्रतिपादकश्रुत्या परमात्मनः सर्वगन्धत्वादिप्रसङ्गः । इष्टापादनात् । 'अगन्धमरसम्'इत्यादि निषेधस्य अस्मदादिदेहसाधारणानुत्कृष्टापकृष्टगन्धादिराहित्यपरत्वात् । 'अणोरणीयान् महतो महीयान्' इत्यादि श्रुत्यनुरोधेन 'अस्थूलमनणु' इत्यादिश्रुतेरपि भोजन-तदभावप्रयुक्तास्मदादिसाधारणोपचयापचयादिनिषेधपरत्वात् । नच 'अणोरणीयान्' इत्यादेः परस्परविरुद्धपरिमाणत्वप्रतिपादकत्वात् अणुशब्दार्थो दुर्निरूपत्वमेवेति वाच्यम् । विनिगमनाविरहेण सुनिरूपत्वमेव महत्त्वमित्यापातात् । 'अस्थूलम्' इत्यादेरपि दुर्निरूपत्वादिप्रतिपादनपरत्वेन स्थौल्याभावाद्यप्रतिपादकत्वापत्तेश्च । अणुत्वमहत्वादीनां लौकिकवस्तुषु विरोधावगमेऽपि वैदिकसमधिगम्ये परमात्मनि तयोर्धर्मिग्राहकमानसिद्धत्वेन विरोधानुपपत्तेश्च । अन्यथा ज्ञानसुखादेर्नित्यत्वविरोधात्, दुःखासम्भिन्नत्वादिविरोधश्च । नित्यज्ञानादेर्दुःखासम्भिन्नसुखादेश्च 'नित्यं विज्ञानमानन्दं ब्रह्म' 'यन्न दुःखेन सम्भिन्नम्' इत्यादिश्रुत्यसिध्नुपपत्तेश्चेति ।।

तस्मात् 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिः न द्रष्टृमात्रभेदनिषेधपरा । तथात्वे 'सदा

पश्यन्ति सूरयः' इत्यादि सार्वकालिकद्रष्ट्रनेकत्वप्रतिपादकश्रुतिविरोधात् । किन्तु तद्विशेष-भूतपरमात्मावतारेषु रामकृष्णादिष्वेव परस्परभेदनिषेधपरेति सिद्धम् ॥

**॥ इति भगवतः सशरीरत्वसमर्थनम् ॥**

**॥ इति 'नान्योऽतोऽस्ति' इत्यादेः ईश्वरनिरूपित स्वगतभेद निरासपरत्वसमर्थनम् ॥**

## ॥ अथ ' सत्यं भिदा'इति श्रुतेः परोक्तार्थनिरासः ॥

यत्तु 'सत्य आत्मा, सत्यो जीवः सत्यं भिदा- सत्यं भिदा- सत्यं भिदा' इत्यस्य प्रसिद्धशाखासु अनवगमात् अश्रुतित्वमेव । श्रुतित्वेन उदाहृतानवकाशभेदापवादकश्रुति-विरोधेन तस्याः श्रुतेः स्वार्थपरत्वायोगेन तच्छेषतया तन्निषेध्यसमर्पकत्वम् । तथाहि । सत्य इति प्रतीतो भेदः 'सत्यं भिदा' इति प्रथमम् अनूद्यते । नच त्रिकालाबाध्यभेदो न प्रसिद्धः । प्रत्यक्षस्य भेदविषयस्य श्रुतिसमानतया प्रामाण्यं वदता भेदश्रुतेः प्रत्यक्षसिद्ध-तादृशसत्ताकभेदविषयत्वाभ्युपगमात् । अन्यथा वास्तवभेदे तव प्रत्यक्षाद्युपन्यासवैयर्थ्यात् । 'नान्योऽतोऽस्ति' इति श्रुतिविरोधस्य अपरिहार्यत्वाच्च । नच सा व्यावहारिकभेदविषया । तथासति अतत्वाऽवेदकत्वापत्तेः ॥

माऽस्तु वा इदं वाक्यं निषेधवाक्यशेषः । अपि तु साक्षात् तन्निषेधकमेव भवतु । भेदनिषेधकश्रुत्यन्तरानुरोधेन वर्णितन्यायेन च अत्र 'असत्यम्' इति छेद एव उचितः । अनेन सजातीयभेदो निराकृतः । विजातीयभेदं निराचष्टे 'सत्यं भिदा सत्यम्' इति । सत्यम् = पञ्चभूतात्मकं जगत्, 'सच्च त्यच्चाभवत्' इति श्रुतेः । 'सत्यस्य सत्यम्' इत्यादेश्च । तदेव 'भिद्यते इति भिदा' असत्यम्= अनिर्वचनीयम् । तस्यैव दार्ढ्याय पुनरुक्तिः 'भिदा सत्यं भिदा' इति, काकाक्षिन्यायेन 'असत्यम्' इत्यस्य उभयत्र सम्बन्धः । एवं स्मृतिरपि भेदं अपवदति ।

**'विभेदजनकेऽज्ञाने नाशमात्यन्तिके गते ।**
**आत्मनो ब्रह्मणो भेदे असन्तं कः करिष्यति'** इति ।

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र-सू-४-१-३) इत्यादिसूत्राण्यपि भेदम् अपवदन्ति एवं तत्परत्वादपि अभेदश्रुतिः बलवती । अभेदस्य मानान्तरागोचरत्वात् । 'तदात्मानमेवाऽवेत्

अहं ब्रह्मास्मीति । यो वेदाहं ब्रह्माहमस्मीति । स इदं सर्वं भवति' इति ब्रह्मात्मैक्यज्ञानात् सार्वात्म्यरूपमोक्षफलश्रवणाच्च अभेदे श्रुतिः स्वार्थपरा, नच भेदे तात्पर्यमस्तीति, नवीनकृत-श्रुत्यर्थवर्णनम् ॥

तदपि न । निरस्तत्वात् । 'नान्योऽतोऽस्ति 'इति श्रुतेः जीवेश्वरभेदनिषेधपरत्वस्य सम्प्रत्येव निरासाच्च । 'सत्य आत्मा सत्यो जीवः' इति प्रक्रमविरोधेन तृतीय'सत्य'-शब्देनापि उपस्थितार्थप्रतिपादनावश्यम्भावाच्च । सत्यशब्दस्य अबाधार्थपरत्वेन पञ्चभूतेषु योगेनैव वृत्त्या पञ्चमहाभूतावाचकत्वाच्च । 'मङ्गलानां च मङ्गलम्' इत्यादिवत् 'सत्यस्य सत्यम्' इत्यादेरपि परमात्मनिष्ठमुक्तामुक्तनियामकत्व-गतातिशयप्रतिपादनपरत्वेन अप्रामा-णिकानिर्वचनीयपरत्वासिद्धेश्च । 'अभिदा'शब्देनापि लाघवेन बाधकं विना अभावार्थस्यैव भेदस्याभिधानाच्च । तृतीय'भेद'शब्दवैयर्थ्याच्च । 'असत्यम्' इति नञ्प्रश्लेषस्य प्रमाणं विना कल्पनाऽयोगाच्च । 'विभेदजनकेऽज्ञाने नाशमात्यन्तिके गते' इति स्मृतेरपि वक्ष्यमाण-रीत्या परमात्म-तदवतारेषु परस्परनिरूपितभेदनिरासार्थत्वाच्च । 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यादिसूत्राणामपि भेदपरत्वस्य स्पष्टतया तदपवादकत्वासम्भवाच्च । अभेद-स्यापि असत्कारणत्वस्येव अनादिकुसमयप्राप्तत्वाच्च । प्रमाणप्राप्तस्य सर्वथा निषेधायोगेन, सर्वथा निषेध्यस्य भ्रान्त्येव प्रसक्तेर्वक्तव्यत्वाच्च । 'तदात्मानमेवाऽवेत् अहं ब्रह्मास्मि' इति ब्रह्मात्मैक्यज्ञानस्य सर्वात्मफलकत्वकथनेन हेयदुःखाद्यात्मकत्वफलकत्व ज्ञापनमुखेन नि-न्दिततया अनुपादेयत्वसूचनेन तस्य ब्रह्मात्मैक्ये तात्पर्यव्यतिरेकस्यैव प्रत्युतनिश्चयाच्चेति ॥

॥ इति 'सत्यं भिदा'इति श्रुतेः परोक्तार्थनिरासः ॥

## ॥ अथ नवीनोक्तद्वासुपर्णेति श्रुत्यर्थनिरसनम् ॥

यत्तु 'द्वा सुपर्णा'इत्यस्यापि श्रुतिवाक्यस्य भेदानुवाद-तन्निषेधमुखेन असङ्गोदासीन-शोधित'तत्त्वम्'पदार्थ परत्वमेव । तथाहि । 'ब्रह्मैवेदममृतं पुरस्तात्' इति वाक्ये ब्रह्मणः सर्वात्मकत्वे निर्दिष्टे तर्हि दुःखादिभोक्तृभेदात् ब्रह्मापि तद्भोक्तृ स्यात् । तच्चायुक्तम् । 'असङ्गोऽह्ययं पुरुषः' 'निरनिष्टो निरवद्यः' इत्यादिश्रुत्या च तस्य तद्भोक्तृत्वादिनिषेधात्, अतो न सर्वात्मकत्वमिति शङ्कायाम् अयं मन्त्रः पठ्यते । तस्यार्थः । यौ द्वौ= बिम्बप्रति-

बिम्बभूतौ जीवेश्वरौ अस्मिन् शरीरे वर्तेते तयोर्मध्ये अन्यः= अबुद्धि-बुद्धि-प्रतिबिम्बभूतः तदभेदाध्यासात् तद्धर्माभिमानी कर्मफलं भुङ्क्ते । अन्यः= स एवान्यः सन् बुद्धितादात्म्य-रहितः, स्वरूपभूतवैचित्र्यात्मना भोगरहितः, प्रकाशते= औदासीन्यबोधाभ्यां साक्षिमात्रतया वर्तते । 'अनश्नन्' इति च भोक्तृत्वनिषेधः क्रियते । जीवस्य च स्वरूपेण भोगनिषेधे अहमनुभवविरोधात् तत्परिहाराय स एव अन्तःकरणेन कल्पिततादात्म्यापन्नः भुङ्क्ते इति स्वीक्रियते । एवं च भोक्तृत्वस्य चैतन्यसामानाधिकरण्यधीः न विरुद्धा इति भेदानुवादोऽयम् अन्यशेषः इति ॥

अथवा जीवानुवादपूर्वकं तस्यैव केवलचैतन्यात्मना भोक्तृत्वाभावः अनेन उच्यते । अभोक्तृजीवस्य ईश्वरात् भेदे मानाभावात् । तथा च तादृशजीवभेदो नेति निषेधाय अयमनुवादः । एवं च अहमनुभवसिद्धं स्वरूपं न जीवस्य । किन्तु आविद्यकं तत् । जीवस्वरूपं तु तद्विलक्षणम् अशनायादिधर्मरहितं चैतन्यमात्रम् इति ब्रह्मणः सर्वात्मकत्वे न कोऽपि विरोधः इति नवीनव्याख्यानम् ॥

तन्न । 'ब्रह्मैवेदममृतं पुरस्तात्' इति वाक्यस्य, अमृतं = सदा संसारगन्धविधुरम्, इदं = श्रुतिजन्यानुभवेनप्रत्यक्षतः सिद्धं, ब्रह्मैव, पुरस्तात् = पूर्वस्थितम्, इत्यर्थकत्वेन ब्रह्मसर्वात्मकत्वप्रतिपादकत्वाभावेन ब्रह्मणि भोक्तृभेदप्रसक्तेरेव अभावेन सर्वात्मकत्वा-नुपपत्तिशङ्कायां द्वा सुपर्णेत्ययं मन्त्रः, चैतन्यानेकत्वानुवाद तन्निषेधमुखेन असङ्गो-दासीनशोधित'तत्त्वम्'पदार्थैक्यप्रतिपादकवाक्यं प्रति शेषत्वं भजन् ऐक्यावधारणार्थः इत्यस्यैवासिद्धेः । 'इदं ब्रह्मैव पुरस्तादमृतम् स्थितम् न त्वन्यत्' इति संसारगन्धवैधुर्यस्य ब्रह्मतो अन्यस्मिन् जीवे सत्वाभावे निर्दिष्टे, ननु जीवस्यापि 'तत्त्वमसि' 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना ब्रह्माभिन्नत्वेन अवगमात् 'इदं ब्रह्मैवाऽमृतम्' इति कथम् इति आशङ्कायामेव तस्य वाक्यस्य पाठाच्च । 'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्रे आसीत्' इत्यादावपि 'इदम्'शब्दस्य 'सत् आत्म'शब्दार्थविशेषणत्वेन जग-त्परत्वासिद्धेः । 'इदं वा अग्रे नैव किञ्चनासीत्' इत्यादावेव 'इदम्' शब्दस्य 'किञ्चन'-आदिशब्दानुरोधेन जगत्परत्वात् ॥

नच 'द्वा सुपर्णा'इत्यादिना एतच्छङ्कानिरासो न प्रतीयते इति वाच्यम् ।

यौ द्वौ = जीवेश्वरौ अस्मिन् शरीरे वर्तेते, तयोर्मध्ये अन्यो = जीवः ईश्वरादन्यः = अन्य एव । कुत इत्यत आह 'पिप्पलं स्वाद्वत्ति' इति । कर्मफलं भुङ्क्ते इति कृत्वा, ननु तावता जीवः ईश्वरादन्योऽस्तु, ईश्वरस्तु जीवादनन्यः किं न स्यात्? इत्यत आह- अन्यः= जीवभिन्नेश्वरः, अनश्नन्नेव= कर्मफलभोगरहित एव अभिचाकशीति = सर्वतोऽतिशयेन प्रकाशते इति कृत्वा, इति तयोः अत्यन्तवैधर्म्योपपादनात् । अत एव 'ज्ञाज्ञौ द्वावीशानीशावनीशश्चात्मा मुह्यते भोक्तृभावात्' इति जीवस्य अनीशत्वप्रयुक्तं भेदवत्त्वं(मोक्षवत्त्वं-पा) भोक्तृत्वं च श्रुतम् उपपद्यते= 'न कर्मणा वर्धते नो कनीयान्' इति ईश्वरस्य कर्मकृतवृद्धिह्रासाभावश्च श्रुतमुपपद्यते ।।

किञ्च नवीनव्याख्याने 'अन्यः'इत्यस्य बुद्धिप्रतिबिम्बभूतः तदभेदाध्यासात् 'तद्धर्माभिमानी कर्मफलं भुङ्क्ते' इति अश्रुतार्थपरिग्रहः श्रुतार्थत्यागश्च । नहि अन्यः = स एवान्यः सन् बुद्धितादात्म्यरहितः स्वरूपचैतन्यात्मना, अनश्नन्नभिचाकशीति= भोगरहितः प्रकाशते इत्याद्यर्थः उक्तो वा श्रुतितः कथमपि प्रतीयते । किञ्च यस्य चैतन्यस्य अत्तीति भोक्तृत्वम् उच्यते तस्यैव कथम् अनश्नन्निति तन्निषेधः कर्तुं शक्यः? जीवस्य स्वरूपेण भोगनिषेधे अहमनुभवविरोधात् । नच स एव अन्तःकरणेन कल्पिततादात्म्यात् अनश्नन्नित्युच्यते इति वाच्यम् । तथात्वे मानाभावात् । 'ममान्तःकरणम्' 'मम मनः' इत्येव अनुभवेन तेन तादात्म्यस्य अनुभवबाधितत्वाच्च । नच 'अहम्' इति अन्तःकरणेन तादात्म्यम् अनुभूयते इति वाच्यम् । तथात्वे तस्य आरोपत्वेन द्व्याकारत्वापत्तेः(द्व्याकारानुभवत्वापातात्-पा) ।

नहि 'अहम्' इत्यनुभवस्य शुक्तौ 'इदं रूप्यम्' इतिवत् द्व्याकारता अनुभवसिद्धा । अन्यथा 'इदम्' इत्यनुभवस्यापि द्व्याकारतापत्तेः । अपि च 'अहम्' इत्यनुभवसिद्धः अर्थः अनिदमर्थ एव स्वीकार्यः । अन्यथा सुप्तिकाले 'एतावन्तं कालं न किञ्चिदवेदिषम्' 'सुखी अहमस्वाप्सम्' इत्यौत्तरिकस्मृतिकल्प्यसौषुप्तिकानुभवे अहमर्थाभानप्रसङ्गात् । नहि अनुभूतार्थः स्मर्यते । नच अनिदमर्थातिरिक्तं सुषुप्तिकालेऽस्तीति शक्यमभ्युपगन्तुम् । नापि सुप्तौ सुखमेव नास्तीति अभ्युपगन्तुं शक्यम् । 'सुषुप्तिकाले सकले विलीने तमोभिभूतः

सुखरूपमेति' इति श्रुत्या अनिदमर्थातिरिक्तस्यान्तःकरणादेः तदा सर्वात्मना विलयश्रवणात् । नच औत्तरिकस्मृत्युत्पत्तिकाले एव स्वसामर्थ्योत्पन्नम् अन्तःकरणमहमिति स्मृतौ भासत इति न तद्बलेन सौषुप्तिकानुभवस्य अहमर्थविषयत्वसिद्धिरिति वाच्यम् । 'योऽहं पूर्वेद्युर्यादृशं सुखं सुप्तावन्वभुवम्(सोऽहं-पा) अद्य सुप्तौ तादृशमेव सुखमेतावन्तं कालमनुभुवं नासम्' इत्यनुभवबलेन अहमर्थस्यैक्यसिद्धेः । अन्यथा अहमर्थस्य अनिदमर्थातिरिक्तत्वे सिद्ध एव सुप्तौ तदभावेन सौषुप्तिकानुभवस्य अहमर्थागोचरत्वसिद्धिः । तत्सिद्धौ च तद्गोचरौत्तरिकस्मृत्यन्यथानुपपत्त्या तदुत्पत्तिसमसमयमेव अहमर्थस्योत्पत्तिसिद्धिः, तत्सिद्धौ च तस्य अनिदमर्थातिरिक्तत्वसिद्ध्या सुप्तौ लयावश्यम्भावेन सौषुप्तिकानुभवस्य अहमर्थगोचरत्वसिद्धिरित्यन्योन्याश्रयप्रसङ्गः ॥

किञ्च औत्तरिकस्मृतेः तत्कालोत्पन्नाहमर्थविषयत्वाङ्गीकारे 'एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इत्यौत्तरिकस्मृतिगोचरकालसुखादीनामपि तदैवोत्पन्नानां तद्गोचरत्वाङ्गीकारप्रसङ्गः । तस्मात् अहमर्थोऽनिदंचैतन्यरूप एव, नतु अन्तःकरणेन चैतन्यस्य तादात्म्याध्यासरूपः । नचैवम् अहमर्थस्य अनिदं चैतन्यरूपत्वे 'अथातो अहङ्कारादेशःअथातो आत्मादेशः' इत्यहमर्थमनिदंचैतन्यरूपात्मशब्दार्थयोः पृथगुपदेशानुपपत्तिः । निरसिष्यमाणत्वात् ॥

एतेन जीवानुवादपूर्वकं तस्यैव केवलचैतन्यात्मना भोक्तृत्वाभावः अनेन मन्त्रेण प्रतिपाद्यते । अभोक्तृजीवस्य ईश्वरात् भेदे प्रमाणाभावात् । नास्ति जीवस्य ततो भेद इति तन्निषेधायैव अयम् अनुवादः । तथा च अहमनुभवसिद्धं जीवस्य न स्वरूपं, किन्तु आविद्यकम् । जीवस्वरूपं तु तद्विलक्षणम् अशनायादिधर्मरहितं, चैतन्यमात्रम् इति न ब्रह्मणः सर्वात्मकत्वे कोऽपि दोषः इति व्याख्यानान्तरम् अपास्तम् । श्रुतार्थपरित्यागाश्रुतार्थाङ्गीकारप्रसङ्गादेव ॥

किञ्च अभोक्तृचैतन्यस्य जीवत्वे एव मानाभावेन तस्य ईश्वरत्वम् अविरुद्धम् इति जीवस्य ईश्वरात् नास्ति भेदः इति निषेधाय अयम् अनुवादः इत्यसङ्गतम् । त्रिकालाबाध्यभेदस्य प्रत्यक्षतः अप्राप्तेश्च ॥

अत एव अहम् अनुभवसिद्धं जीवस्य न स्वरूपं किन्तु आविद्यकम् । जीवस्य स्वरूपं तु तद्विलक्षणम्, अशनायादिधर्मरहितम् , चैतन्यमात्रम् इति न ब्रह्मणः सर्वात्मत्वं विरुद्धम् इति प्रत्यूढम् ॥

(१)ब्रह्मणः सर्वात्मकत्वे अविद्याविद्यकयोरपि सर्वान्तर्गतत्वेन तदात्मकताया अपि दुर्वारत्वेन जीवस्यापि तादृशब्रह्माभिन्नतया अविद्याविद्यकस्वरूपत्वावश्यम्भावेन तद्विलक्षणाशनायादिधर्मरहितचैतन्यमात्रत्वप्रतिपादनानर्थक्यात् ॥

॥ इति नवीनोक्तद्वासुपर्णेति श्रुत्यर्थनिरसनम् ॥

## ॥ अथ जीवात्मनः ब्रह्मस्वरूपेण नित्यमुक्तः इत्यस्य निरसनम् ॥

किञ्च जीवात्मनो अभोक्तृत्वे बन्धमोक्षयोर्वैयधिकरण्यप्रसङ्गः । नच ब्रह्मस्वरूपेण नित्यमुक्तस्यात्मन एव बुद्धिः तादात्म्येन भोक्तृत्वादिरूपबन्धनसम्भवात् नैवमिति वाच्यम् । ब्रह्मस्वरूपेण नित्यमुक्तात्मन एव बुद्धितादात्म्याध्यासेन भोक्तृत्वादिरूपबन्धोऽस्मदादिवत् ब्रह्मणोऽप्यनेन दुःखेन 'अहं दुःखी अहं संसारि' इत्यनुभवप्रसङ्गात्(प्रसङ्गः-पा)। तन्निवृत्तिरूपमोक्षसाधनज्ञानार्थं श्रवणादौ प्रवृत्तिप्रसङ्गश्च । बुद्धितादात्म्याध्यासप्रयुक्तभ्रान्तत्वप्रसङ्गश्च । नच 'विमुक्तश्च विमुच्यते' इति श्रुत्यनुसारेण ब्रह्मैव स्वाविद्यया संसरति स्वविद्ययामुच्यते इत्यङ्गीकारात् नोक्तमनिष्टमिति वाच्यम् ।'विमुक्तश्च विमुच्यते' इति श्रुतेः सालोक्य-सारूप्य-सामीप्य-सायुज्यरूपेण चतुर्विधेषु मोक्षपदार्थेषु प्रथमं सालोक्यं प्राप्तस्तदनन्तरं सारूप्यादिकं प्राप्नोतीत्यर्थपरतयैव प्रवृत्ततया जीवस्य नित्यमुक्तत्वप्रतिपादनपरत्वासिद्धेः ॥

नच वैकुण्ठादिलोकानां नित्यत्वे मानाभावेन नित्यपुरुषार्थत्वरूपमुक्तित्वानुपपत्तिरिति वाच्यम् । 'परीक्ष्य लोकान् कर्मचितान्'(आ-उ-२-११) इत्यादेरेव लोकानां नित्यत्वसिद्धेः । ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यत इत्यङ्गीकारस्य निर्मूलत्वात् । 'यत्साक्षादपरोक्षात्

---

(१) इतःपरं हरिपदङ्कत-सोदामठाधीशश्रीविश्वोत्तमतीर्थश्रीपादसङ्गृहीततौलवलिपिबद्धताळपत्रानुसारेण ग्रन्थः लिख्यते ।

ब्रह्म'(बृ-उ-३-४-१) 'तुरीयं तत्सर्वदृक् सदा' इत्यादिश्रुत्या अपरोक्षैकरसत्वेन सर्वविषयत्वेन च सिद्धेः, ब्रह्मचैतन्ये स्वस्वरूपावाचकाविद्याया असम्भवेन तद्रूपसंसारानुपपत्तेश्च । 'अहम् अज्ञः' इत्यनुभवेन 'ज्ञाज्ञौ' (श्वे-उ-१-९) इति श्रुत्या च जीवस्यैवाज्ञानाश्रयत्वाच्च । 'सुषुप्ति-कांले सकले विलीने तमोऽभिभूतः सुखरूपमेति'(श्वे-उ-१-९) इतिश्रुत्या अवस्था त्रयवत एवाज्ञानेनाभिभवाऽवेदनाच्च । तथाच श्रुत्यन्तरं 'अनृतेन हि प्रत्यूढाः'(छां-उ-८-३-२) इति । अत एव दीपदर्शनप्रतिबन्धक[१]कुड्यादिवत् लिपिदर्शनप्रतिबन्धकनेत्रपटलवच्च ब्रह्मदर्शन-प्रतिबन्धकं जीवस्याज्ञानमस्तीति 'तम आसीत् तमसा गूळमग्रे'(ऋ-सं-१०-१२९-३) 'अन्यद्युष्माकमन्तरं बभूव' इत्यादि श्रुतिराहेति । अन्तरं = व्यवधिरित्यर्थः । अन्यथा 'आनीदवातं स्वधया तदेकम्' (ऋ-सं-१०-१२९-२) इति ब्रह्मणः स्वातन्त्र्यमुखावस्थान-प्रतिपादनपूर्वकं तदन्योत्कृष्टवस्त्ववस्थानाभाव प्रतिपादकवाक्यशेष विरोधप्रसङ्गः । 'वृक्षाद्यु-त्पाटनेन बलातिशयसिद्धेः, वायुकोटिमहाबल' इत्यादौ तद्वत्वेन प्रसिद्धेश्च । अवातं वात-शब्दस्योपलक्षणत्वात्, वाताद्यप्रेरितमेव आनीत् = अचेष्टतेति, ब्रह्मणः स्वातन्त्र्यावगतिरिति द्रष्टव्यम् । तस्मात् ब्रह्मस्वरूपेण नित्यमुक्तस्यात्मन एव बुद्धितादात्म्येन संसारित्वमित्य-युक्तम् । जीवात्मनो ब्रह्मस्वरूपेण नित्यमुक्तत्वे एव मानाभावात्, 'मम बुद्धिः' 'ममान्तः करणम्' 'मम मनः' इति भेदेनैवानुभवेन 'अहं बुद्धिरहमन्तःकरणमहं मनः' इति कदाऽ-प्यननुभवेन च जीवात्मनो बुद्धितादात्म्यासिद्धेः ॥

॥ इति जीवात्मनः ब्रह्मस्वरूपेण नित्यमुक्तः इत्यस्य निरसनम् ॥

यद्यपि 'तयोः'इति तच्छब्दस्योपस्थित परामर्शित्वात्तेन यच्छब्दस्याप्यनुमानादनुवादत्वं सुज्ञानं 'अनश्नन्' इति भोक्तृत्वनिषेधश्च । तथाऽपि नायं भोक्तृत्वनिषेधः अभोक्तृत्वस्याप्यर्थात् सिद्ध्या तदंशेऽप्यनुवाद एवायम् । तथा हि । तयोर्मध्ये अन्यो अत्तीत्युक्ते 'देवदत्तो वा मे न चक्षुषा पश्यतीत्युक्ते' तदितरेण दर्शननिषेधवत् अन्यो नात्तीत्यस्य भोक्तृत्वनिषेधस्यान्यस्मिन् लाभसम्भवादिति । सत्यम् । तथाऽपि 'अभिचाकशीति' इत्येव विधिः इतरांशस्त्वनुवाद एव । नह्यनश्नतः सर्वतः प्रकाशः प्रमाणान्तरप्राप्तः । येन तदंशेऽप्यनुवाद इत्युच्येतेति ॥

---

(१) प्रतिबिम्बक इति ताळपत्रस्थपाठः ॥

किञ्चार्थासिद्धस्य निषेधे 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' (तै-उ-२-१२) इत्यस्याप्यनिषेधत्वप्रसङ्गः । 'अस्ति ब्रह्मेति चेत् वेद' इति ब्रह्मसत्वविधानेनैवार्थात् तदसत्वाभावस्य लाभात् ॥

किञ्च शोधिते 'तत् त्वं' पदार्थयोरेवाभेद इति स्वीकुर्वता तयोरेव भेदस्य भोक्तृत्वस्य च 'नान्योऽतोऽस्ति द्रष्टा'(बृ-उ-५-८-११) 'अनश्नन्' इति निषेध इति वाच्यम् । नहि तत्र भेदस्य भोगस्य च मानान्तरेण प्राप्तिः सम्भवति । शोधिते'तत् त्वं' पदार्थयोरौपनिषदत्वात् । एवञ्च 'द्वासुपर्णा' इति मन्त्रो नाऽनुवादकः । नच 'तयोः' इति तच्छब्दानुमितयदुपबन्धमात्रेणानुवादत्वं शक्याभ्युपगमम् । 'यदाग्नेयोऽष्टाकपालो भवति' (तै-सं-३-६-३) इत्यादेरप्यनुवादत्वापत्तेः । अपि चाप्राप्तस्यापि निषेधे कथमप्रसक्तप्रतिषेधत्वं न स्यादिति ॥

## ॥ अथ प्रसङ्गात् प्राप्त भेदश्रुतीनां निषेधशेषत्वानुवादत्व निरसनम् ॥

किञ्चास्य मन्त्रस्य निषेधशेषानुवादत्वे सत्यादिवाक्यस्यापि 'असद्वा इदमग्र आसीत्' (तै-उ-२-१५) इति निषेधशेषानुवादत्वप्रसङ्गः । नच ब्रह्मविषयसत्यादिवाक्यस्य 'असद्वा इदमग्र आसीत्' इत्यादिप्रपञ्चासत्त्वविषयस्य च भिन्नविषयत्वेन शेषशेषिभावानुपपत्तिः । 'नायमात्मा प्रवचनेन लभ्यः'(कठ-उ-१-२-२३)इत्यादाविवात्रापि 'इदम्'शब्दस्य ब्रह्मपरत्वेन प्रपञ्चपरत्वासिद्धेः ।

'इदं सर्वं यदयमात्मा' इत्यादावपि तस्य ब्रह्मपरत्वावधारणात् 'इदं सर्वम्' इति पूर्ववाक्यस्थ'इदम्'शब्दस्य सर्वशब्दसमभिव्याहारबलेन जगत्परत्वोपगमात् । सच्छब्दस्य 'सदेव सोम्येदमग्र आसीत्'(छा-उ-६-२-१)इत्यादौ ब्रह्मपरत्वावधारणेन 'असद्वा'इति नञा तन्निषेधोपपत्तेश्च ॥

एतेन सत्यादिवाक्यप्रतिपाद्यस्य त्रिविधपरिच्छेदरहितत्रिकालाबाध्यसत्वस्यान्यतो प्राप्तेः कथम्? असद्वेति तन्निषेधः । किञ्च 'असद्वा इदम्' इत्यस्य अग्रे = सृष्टेः पूर्वम्, असत् = अनभिव्यक्तनामरूपं जगत्, इदं= व्याकृतब्रह्मात्मकमासीत् इत्यर्थपरत्वेन कथं सत्यादिवाक्य-

प्रतिपाद्यनिषेधपरत्वसम्भवः । अन्यथा 'ततो वै सदजायत' इत्युत्तरवाक्यविरोधः । असतः सदुत्पत्त्यनुपपत्तेः । 'कथमसतः सज्जायेत'(छां-उ-६-२-२) इति श्रुत्यन्तरे असतः सदुत्पत्ते-र्निषेधात् । किञ्च ब्रह्मणः सत्वनिषेधे 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो विदुरिति'(तै-उ-२-१२) इति असत्वप्रतिक्षेपपूर्वकं सत्वविधानविरोध इति निरस्तम् ॥

तथाऽपि सत्यादिवाक्यप्रतिपाद्यस्य 'इदं वा अग्रे नैव किञ्चनासीत्' (तै-आ-२-२-९) 'अलक्षणमव्यपदेश्यमव्यवहार्यम्' (मा-उ-२-१) इत्यादिश्रुत्या निषेधसम्भवेन 'सत्यं ज्ञानम्' (तै-उ-२-२) इत्यादेर्निषेधशेषत्वानपायात् । नच त्रिविधपरिच्छेदरहितत्रिकालाबाध्यब्रह्म-सत्वमिदं 'किञ्चन' 'लक्षण'शब्दार्थो नेत्यस्ति । नचैवं ब्रह्मणि तादृशसत्वस्यान्यतो प्राप्तेः तन्निषेधस्य अप्रसक्तप्रतिषेधत्वापत्तिः । 'नेह नानाऽस्ति किञ्चन' (कठ-उ-२-११) इति ब्रह्मण्यन्यतो प्राप्तप्रपञ्चनिषेधवत् तदुपपत्तेः ॥

नच 'असद्वा इदमग्र आसीत्' इत्यस्य, सृष्टेः पूर्वमनभिव्यक्तनामरूपं जगत्, इदं = व्याकृतं ब्रह्मात्मकमासीत् इत्यर्थपरत्वम् ।'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यादौ असच्छब्दस्य त्रिकालाबाध्यसत्वरहितपरतायाः क्लृप्ताया अत्र बाधकं विना त्यागायोगात् । नच असतः सुदुत्पत्त्यनुपपत्तिः । जगति वस्तुतः सत्वस्य परेणाप्यभ्युपगमात् । अन्यथा परस्यैव जगत्सत्यत्व प्रतिपादक वाक्यशेषविरोधेनोक्तार्थपरत्वेऽपि, ततो = ब्रह्मणः, सत् = व्यावहारिकसत्, 'अजायत' इत्यर्थपरत्वानाश्रयणप्रसङ्गः । नच स्वर्गनरकादियोग्यायोग्य-जगन्मात्रे सत्वमन्यतः प्राप्तम् । येन अधिष्ठानब्रह्मगतसत्वानुवादोऽयमित्युच्येत ॥

नचैवं 'कथमसतः सज्जायेत' इत्यसतः सदुत्पत्तिनिषेधानुपपत्तिः । असतो सदुत्पत्तिरेवोचिता, कार्यस्य कारणानुरूपदर्शनात् । तथा च कथमसतः सदुत्पत्तिः? न कथमपीत्यर्थपरत्वेन, तस्याऽसन्निषेधकत्वात् । 'असन्नेव स भवति' इत्यस्यापि दुःखादिरूपसंसारानापादकासद्ब्रह्मतादात्म्यापत्तिलक्षणमोक्षस्य ब्रह्मासत्त्वज्ञानं विना न प्राप्तिः, सत्वेन ब्रह्मवेदनस्य सत्वेन प्रतीतस्यैव लोके दुःखादिरूपसंसारदर्शनेन तादृश-संसारापादकसत्तातादात्म्यापत्तिरूपानिष्ठफलकत्वमित्यर्थपरत्वेन ब्रह्मसत्त्वाक्षेपपूर्वकं तत्सत्व-

विधायकत्वाभावात् । नच 'ततो वै सदजायत'इत्यादौ सत्पदमसद्विलक्षणपरम् । बाधकं विना मुख्यार्थत्यागाऽयोगात् ।'कथमसतः सज्जायेत' इत्यत्र काकार्थपरत्वेन (कात्कार्थ-परत्वेन-पा) पराभिमतार्थासिद्धितादवस्थ्यात् । बाधकं विनाऽप्यसत्पदस्य सद्विलक्षणार्थपरत्वे 'सदेव सोम्येदमग्रे' 'सत्यं ज्ञानमनन्तम्' इत्यादौ सत्-सत्योरप्यसद्विलक्षणपरत्वापत्त्या त्रिकालाबाध्यपरत्वाभावप्रसङ्गाच्च ॥

नन्वेवं ब्रह्मणो असत्वे 'अस्तीत्येवोपलब्धव्यम्' (कठ-उ-३-१३) इति सावधारणश्रुतिविरोध इति चेन्न । तस्यापि सत्यज्ञानादिवाक्यवत् 'नो सदासीत्' (ऋ-सं-१०-१२९-१) 'अलक्षणम्' इत्यादि निषेधशेषत्वेनाविरोधसम्भवात् ॥

एतेन 'तयोर्मध्ये एको अत्ती'त्युक्ते 'देवदत्तो वा मे नाक्ष्णापश्यती'त्युक्ते तदितरेण दर्शननिषेधवदर्थादीश्वरे भोगनिषेधसिद्धेः तदुक्तिवैयर्थ्यम् । नचायमनुवादः । प्रयोजनाभावेन सप्रयोजनप्राप्तार्थत्वरूपानुवादत्वायोगात् । नहि विधिनिषेधशेषत्वाभावे सप्रयोजनार्थत्व-रूपानुवादत्वं युज्यते । 'नान्तरिक्षे न दिवि'[१] इत्यादिवत् नित्यानुवादत्वे भङ्ग्यन्तरेण निष्प्रयोजनत्वाङ्गीकारप्रसङ्गः । नच जीवानुवादपूर्वकं तस्यैव केवलचैतन्यात्मभोक्तृत्वाभावो 'अनश्नन्' इत्यनेन विधीयत इति मत्पक्षे तद्वैयर्थ्याशङ्काऽस्ति । नच सत्यां गतौ निष्प्रयो-जनानुवादत्वमभ्युपगमार्हम् ॥

किञ्च 'तयोरन्यः' इत्यादेरनुवादत्वेऽपि 'नान्योऽतोऽस्ति' इत्यादि निषेधशेषत्वेन सप्रयोजनत्वसम्भवे निष्प्रयोजनत्वाङ्गीकारो न न्याय्यः । नच प्रत्यक्षादिप्रामाण्यनिश्चयार्थमेव 'तयोरन्यः' इति नित्यनिर्दोषवाक्येन प्रत्यक्षप्राप्तार्थो अनूद्यत इति वाच्यम् । प्रत्यक्षादि-प्रामाण्यस्यापि वेदप्रामाण्यवत् स्वत एव सिद्धेः। परतः प्रामाण्यपक्षेऽपि घटादिप्रत्यक्षवद् व्यवहारकाले बाधाभावादेव भेदप्रत्यक्षप्रामाण्यसिद्धिसम्भवात् । नच प्रत्यक्षस्य वेदबोधितार्थ-विषयतया तात्विकप्रामाण्यसिद्ध्यर्थमेवायमनुवाद इति वाच्यम् । भेदस्य स्वार्थपरानेक-श्रुतिनिषिद्धत्वेन तदंशे प्रत्यक्षस्य तात्विकप्रामाण्यसिद्ध्ययोगात् । अतत्परश्रुतिभिरनुवादेऽपि रुद्ररोदनाद्यनुमानस्येव प्रत्यक्षस्यापि तत्सिद्ध्यसम्भवात् । तस्मान्न भेदश्रुत्या भेदसिद्धिरिति निरस्तम् ॥

---

(१) पूर्वमीमांसोक्तार्थवादाधिकरणन्यायादित्यर्थः ॥

'नान्योऽतोऽस्ति' इत्यादेरुक्तरीत्या भेदनिषेधश्रुतित्वायोगेन 'द्वासुपर्णा' इत्यादिभेदश्रुतीनां तच्छेषत्वेन सप्रयोजनत्वासम्भवात् । अनुवादत्वेऽपि 'अभिचाकशीति' इति विधिशेषत्वेन सप्रयोजनत्वोपपत्तेश्च । अतत्परानुवादरूपरुद्ररोदनादिश्रुत्या रुद्ररोदनाद्यनुमानस्य तात्त्विकप्रामाण्यसिद्धावपि तत्परानुवादरूपभेदादिश्रुत्या भेदादिप्रत्यक्षस्य तात्विकप्रामाण्यसिद्धेर्दुर्वारत्वाच्च । अस्ति च भेदश्रुतीनां तत्परत्वे फलरूपं लिङ्गम् ।

**'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः'** (आ-उ-५-२)
**'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति'** (श्वे-उ-१-६)
**'अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनि मुक्ताः'** (श्वे-उ-१-७)

इति । नचैताः श्रुतयः आत्मानात्मभेदपरा वा बुद्ध्यात्मभेदपरा वा । निरसिष्यमाणत्वात् ॥

किञ्च सम्भावितदोषतया प्रत्यक्षमेवाप्रमाणमिति वदता कथं? नित्यनिर्दोषतया स्वतः प्रमाणभूतस्य 'द्वासुपर्णा' इत्यादिवेदवाक्यस्य तत्प्राप्तार्थानुवादिते...ष्नम् । नच 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यादि नित्यनिर्दोषवाक्येनाप्यप्रमाणिकासदनुवादो दृश्यत इति वाच्यम् । निषेधस्य प्रमाणप्राप्तार्थनिरपेक्षत्वेऽपि विधानस्य प्रमाणप्राप्तार्थसापेक्षत्वनियमात् । अन्यथाऽनुवाद्यस्यासत्वेन विधिना अनुवाद्यविधेयसंसर्गासिद्धिप्रसङ्गात् । नच प्रकृतेऽपि 'नान्योऽतोऽस्ति द्रष्टा' इति निषेधायामनुवाद इति नोक्तदोष इति वाच्यम् । प्रकृते जीवेश्वरभेदनिषेधस्य भावरूपाभेदरूपेण पर्यवसन्नस्य विधेयदधिलक्षणगुणस्य प्रमाणप्राप्तहोमसापेक्षत्ववत्, प्रमाणप्राप्त'द्वासुपर्णे'ति द्विसुपर्णशब्दोपस्थापितजीवेश्वरसापेक्षत्वावश्यम्भावात् । नच 'अहम्'इति बुद्धितादात्म्येन प्रतीयमानो जीवः 'त्वम्' पदार्थः सार्वज्ञाद्युपहितः ईश्वरस्तत्पदार्थो वा प्रमाणप्राप्तः । येनाभेदत्वेन पर्यवसितस्य भेदनिषेधस्य तत्र वास्तवः संसर्गः सिद्ध्येत् । परमते 'अहम्'इत्यनुभवस्य साक्षिरूपत्वेनाप्रमाणत्वाच्च । नहि साक्षी चक्षुरादिवत् प्रमाकरणम् ॥

किञ्च यस्य 'त्वम्'पदार्थत्वेन स्वीकृतस्य जीवस्य व्यावहारिकप्रमाणसिद्धत्वमेव दुर्लभम्, शुक्तिरूप्यवत् साक्षिमात्रसिद्धत्वं, तस्य कथम्? 'नान्योऽतोऽस्ति' इति वा, 'तत्वमसि'

(छां-उ-३-८-७) इत्यादिना वा, ईश्वरेण व्यावहारिकप्रमाणप्राप्तेन पारमार्थिकाभेदो विधातुं शक्यः । नहि साक्षिमात्रे सिद्धत्वेनाप्रामाणिकस्य शुक्तिरूप्यस्य व्यावहारिकप्रमाणसिद्धेन शुक्तिशकलेनाभेदोऽनुभूयमानः व्यावहारिकः पारमार्थिको वा ॥

॥ इति प्रसङ्गात् प्राप्तभेदश्रुतीनां निषेधशेषत्वानुवादत्व निरसनम् ॥

किञ्च साक्ष्यनुभवो भग्नश्चेत् तत्सिद्धदुःखादिवत्तत्सिद्धजीवचैतन्यमपि बाध्यं स्यात् । प्रमाचेत् 'नाहमीश्वरः' इत्यादिसाक्ष्यनुभवसिद्धेश्वरप्रतियोगिकसाक्षिचैतन्यानुयोगिकभेदस्याप्य-बाध्यत्वप्रसङ्गः । घटादिज्ञानवत् तस्य व्यावहारिकप्रमात्वाङ्गीकारेऽपि घटादिवदेव जीवचैतन्यस्यापि बाध्यत्वं दुर्वारमेव । नच जीवचैतन्यस्यापि विशिष्टाकारेणोपहिताकारेण बाध्यत्वमिष्टम् । विशिष्टाकारेणेवोपहिताकारेणेव च जीवचैतन्यस्य स्वरूपेणाऽपि साक्षि-भास्यत्वात् । नहि 'दण्डि' इति प्रत्यये देवदत्तस्वरूपं न विषयः, शुक्तौ 'इदं रूप्यम्' इति प्रत्यये वा शुक्तिरूप्यस्वरूपं न विषय इत्यस्ति । अन्यथा शुक्तिरूप्यादिकमपि साक्षि-भास्यत्वेन स्वीकृतं विशिष्टाकारेणोपहिताकारेणैव वा बाध्यं नतु स्वरूपेणेति स्यात् ॥

नच प्रतियोगित्वादिवदभावरूपधर्मवच्चाभेदो न धर्मसत्वनिरपेक्षधर्मः । येनाभेदत्वेन पर्यवसितं भेदनिषेधरूपं धर्मं प्रत्याश्रयभूतजीवेश्वरयोः प्रमाणतः प्राप्तिरपेक्षिता न स्यात् । नच धर्ममात्रं धर्मिसत्वसापेक्षम् । असति सद्वैलक्षण्यस्य वन्ध्यासुते वक्तृत्वाद्यभावस्य चाभावप्रसङ्गात् ॥

किञ्च सार्वज्ञाद्युपहितस्येश्वरस्य बाध्यत्वे कथं तत्त्वेन तदाऽवेदकवेदान्तानां प्रामाण्य-निर्वाहः । शुक्तिरूप्यप्रत्यक्षवत्, बाधितार्थकत्वेन प्रामाण्यानुपपत्तेः प्रमाणत्वे अबाधिता-र्थकत्वस्यैव तन्त्रत्वात् ॥

एतेन 'नान्योऽतोऽस्ति द्रष्टा' इति जीवप्रतियोगिको भेदः ईश्वरे निषिध्यते, सच प्रमाणप्राप्त एवेति निरस्तम् ॥

अपि च शुक्तिरूप्यवत् साक्षिमात्रसिद्धस्य जीवस्य प्रातिभासिकत्वावश्यम्भावेन यागेष्टसाधनत्वादिवत् व्यावहारिकेश्वरे श्रुत्या कथं तदभेदसिद्धिः? नच शोधिते 'तत्' 'त्वम्'-पदार्थयोरेव चिन्मययोस्तया अभेदो बोध्यते भेदो वा निषिध्यत इति वाच्यम् । 'अहम्'

इति जीवचैतन्यस्यानिस्यूतेश्वरचैतन्यस्यच साक्षिणा भानेन साक्षिभास्यस्य च शुक्तिरूप्यादिवत् बाध्यत्वेन तदुभयाभेदस्य तदुभयभेदनिषेधस्य वा वास्तवस्यासिद्धेः । नहि प्रातिभासिकद्वयाभेदो वास्तवः सम्भवति ॥

किञ्च तादृशचैतन्यद्वयस्यैव श्रुत्या परस्परभेदो निषिध्यते इति वदता तस्य साक्षित एव प्राप्तिरवश्यं वाच्या । अन्यथा अप्रसक्तप्रतिषेधापत्तिरित्युक्तम् । चिन्मात्रं साक्षिभास्यमित्येतदनुभवसिद्धं नेति चेत्तर्हि श्रुत्या तद्भेदो निषिध्यते तदभेदो वा बोध्यत इत्येतदपि सत्यवादिनस्तव नानुभवसिद्धमित्यनुमातुं शक्यत इत्यलं परव्यामोहनसामर्थ्येनेदृशवचनजातेन ॥

किञ्च चिन्मात्रं न साक्षिभास्यमिति किम्, चिति भासमानायां चित्त्वादिकं तदन्यदप्यधिकं भासत इति विवक्षितम्? । किं वा चिदेव न भासत इति? । आद्ये शुक्तिरूप्यवत् चितोऽपि प्रातिभासिकत्वतादवस्थ्यम् । द्वितीयेऽपि चित्त्वदुःखाज्ञानान्तःकरणादीनाम् अध्यासत्वं वदता तदविनाभूताधिष्ठानचिद्भानस्यावश्याङ्गीकार्यत्वात् । नच चिद्भासकमन्यत् सम्भवतीति, चितश्चिदेव भासिकेत्यापन्नम् ॥

तथाऽपि शुक्तिरूप्यादिवच्चितश्चित्कर्मत्वेन तद्भास्यत्वं नेति चेत् 'शुक्तिरूप्यं जानामि' इतिवत् 'मामहं जानामि' इत्यनुभवेन चितोऽपि चित्कर्मत्वस्यानुभवात् अनुभवोल्लङ्घने 'मामन्यं च न जानामि' इत्यनुभवसिद्धज्ञानकर्मत्वस्यापि त्यागापत्तेः । अनुभवबलेन यस्यैवकर्तृत्वं तस्यैव स्वकर्मत्वमित्यभ्युपेयत्वात् । साक्षिणा उपहिततयानुपहितचिन्मात्राद्भिन्नत्वेन वृत्तिविरोधाभावेन चिन्मात्रस्यापि साक्षिभास्यत्वोपपत्तेश्च ॥

अपि चाबाध्यत्वेन चित्कर्मत्वं चैतन्यस्यासङ्गैकस्वभावत्वेन समयत्वेन च तत्सङ्गविशेषरूपकर्मत्वस्य शुक्तिरूप्येऽप्यभावेनानध्यासत्वापाताच्च । वृत्त्युपहितचित्कर्मत्वस्य चिन्मात्रेऽपि सत्त्वेन तस्याऽपि चिद्विषयत्वं दुर्वारम् ॥

किञ्च ज्ञानाज्ञानयोरेव विरोध इति स्वीकुर्वता चितोऽपि चिद्विषयत्वमवश्यं स्वीकार्यम् । अन्यथा चिन्मात्रविषयकाज्ञानस्य स्वसमानविषयकं ज्ञानं विना निवृत्त्यसम्भवेन तादृश-

मूलाज्ञानप्रयुक्तदुःखादेः कदाऽपि निवृत्तिर्नस्यात् । चिन्मात्रस्य वेदान्तजन्यवृत्तिव्याप्यत्वे सत्यपि तद् वृत्तेर्जडत्वेनाज्ञानाविरोधितया तदुपहितचित्कर्मत्वस्य केवलाचित्कर्मत्वस्य वा मूलाज्ञानाश्रयभूतचिन्मात्रेऽवश्यमङ्गीकर्तव्यत्वाच्च ॥

अत एव वृत्त्या अज्ञानप्रयुक्तावरणनिवृत्तावनावृतसंविदैवाज्ञानसमानाकारया अज्ञानं निवर्तत इति सिद्धान्तः । नह्यन्यज्ज्ञानसमानाकारत्वं ज्ञानस्य तत्समानविषयत्वातिरिक्तं सुवचनम् । वृत्तेरपि घटाद्याकारत्वं तद्विषयत्वमेव समानविषयत्वेन विरोधश्च घटज्ञाना-ज्ञानादावेव क्लृप्तमिति न किञ्चित्क्षुद्रोपद्रवः ॥

अपि च 'तुरीयं तत्सर्वदृक् सदा' इति श्रुत्या 'सर्व'शब्दस्य तुरीयान्यपरत्वेन सङ्कोचे मानाभावेन 'तुरीय'शब्दितचिन्मात्रस्यापि स्वकर्मत्वाऽवेदनात् चिन्मात्रस्यापि स्वकर्मत्वं दुर्वारम् । एवं च प्राचीनमते जीवचैतन्यस्य शुक्तिरूप्यवदविद्यावृत्त्युपहितचैतन्यरूपसाक्षि-भास्यत्वेन प्रातिभासिकत्वम् । नवीनमते तु अविद्यावृतौ मानाभावात् प्रमाणाप्रमाणवृत्ति-साधारणान्तःकरणवृत्त्युपहितचैतन्यरूपसाक्षिभास्यत्वेन घटादिवत् दुःखादिवच्च जीवचैतन्य-स्येश्वरचैतन्यस्य च व्यावहारिकत्वं दुर्वारम् ॥

यद्यपि मम प्राचीनमते आगन्तुकदोषाधीनाऽविद्यावृत्त्युपहितचिद्रूपसाक्षिभास्यत्वं शुक्तिरूप्यादेरेव नजीवचैतन्यस्येति तद्वदस्य न प्रातिभासिकत्वम् । नवीनमतेऽपि आगन्तुक-दोषाधीनविषयोपहितचैतन्यरूपसाक्षिभास्यत्वं प्रातिभासिकत्वे तन्त्रम् । तच्च शुक्तिरूप्यादे-रेवास्ति नत्वन्यस्येति जीवचैतन्यस्य न प्रातिभासिकत्वशङ्केति । तथाऽपि जीवचैतन्य-स्येश्वरचैतन्यस्य च घटादिवद् व्यावहारिकत्वं दुर्वारम् । तथा च मतद्वयेऽपि जीवेश्वरयोरभेदो वा भेदनिषेधो वा श्रुत्या बोध्यमानो न वास्तवः सिद्ध्येदिति, वास्तवतत्सिद्धिमिच्छता साक्षिणो दोषजन्यज्ञानत्वेन प्रमात्वमङ्गीकृत्य जीवचैतन्यस्य तद्रूपप्राप्तौ सत्यामपि न पारमार्थिकत्वक्षतिरित्येव वाच्यम् । एवं च तादृशसाक्षिप्रत्यक्षप्रमाप्राप्तो जीवेश्वरभेदो वास्तव एवापतित इति तादृशभेदानुवादकं 'द्वासुपर्णा'इत्यादिवेदवाक्यं कथं 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्याद्यनुवादतुल्यम् । ततश्च विधिर्वा निषेधो वा धर्मिसत्तां विना यत्र किञ्चिद् विधातुं निषेद्धुं वा न क्षमते । तत्रानुवादोऽपि स्वार्थे प्रमाणम् । यथा 'दध्ना जुहोति'

इत्यादौ जुहोतीत्यादि हि, अन्यत्र तु नैवमिति सर्वेणापि स्वीकार्यम् । अन्यथा 'अग्नि-र्हिमस्य भेषजम्' (तै-सं) इत्याद्यनुवादस्य व्यावहारिकहिमभेषजत्वादिकमपि कथञ्चित् शुक्तिरूप्यप्रत्यक्षतुल्यप्रत्यक्षप्राप्तत्वापराधीनार्थो न स्यादिति ॥

ननु साक्षिसिद्धत्वविशेषेण शुक्तिरूप्यादिकमपि जीवचैतन्यवत् जीवेश्वरभेदादिवच्च पारमार्थिकं स्यादिति चेन्न । परमतेऽपि साक्षिभास्यत्वाविशेषेण शुक्तिरूप्यवत् जीवेश्वरभेदः दुःखादिकं च व्यावहारिकं न स्यादिति साम्यात् । शुक्तिरूप्यादेश्चाक्षुषत्वेन तस्य मया साक्षिभास्यत्वानभ्युपगमाच्च ॥

**॥ अथ द्वासुपर्णादि भेदश्रुतीनां नवीनोक्तनिषेधशेषानुवादत्वनिरसनम् ॥**

नन्वेवं नित्यनिर्दोषसाक्षिप्रमाविषयभूतजीवेश्वरभेदार्थत्वे 'द्वासुपर्णा'दि श्रुतीनां निषेध-शेषानुवादत्वमेवायुक्तम् । पारमार्थिकत्वे ब्रह्मवत् निषेधगोचरताया एवाऽयोगादिति चेन्न । भेदश्रुतीनाम् अननुवादित्वस्य प्रागेव समर्थितत्वात् । कथञ्चिदनुवादत्वे भेदनिषेधश्रुतेरेवा-भावेनातच्छेषत्वात् 'अभिचाकशीति' इति कर्मफलभोगरहिते मानान्तराप्राप्ताभिचकाशन-विधिशेषत्वोपपत्तेश्च ॥

यत्तु[१]अनुवाद्यस्यासत्त्वेऽनुवाद्यविधेयसंसर्गसिद्धिरेव दुर्लभेत्यत्रासत्वं न तुच्छत्वं मया अङ्गीक्रियते । येनानुवाद्यविधेयसंसर्गासिद्धिप्रसङ्गः । किन्तु सद्विलक्षणत्वं तच्च भूषणमेव । विधेयानुवाद्यसंसर्गस्यापि तथात्वात्, अन्यथा प्रकृते निषेधानन्वय प्रसङ्गात् । तस्मात् 'द्वासुपर्णा' इत्यादिवाक्यं शुद्धजीवस्वरूपपरम् ॥

अत एव तदनन्तरं कथं भोक्तुः जीवस्याशनयादिराहित्यं स्वरूपम् । आगन्तुकस्य स्वरूपत्वायोगात् । नच तत्स्वाभाविकम् । जीवस्येदानीं भोगविशिष्टत्वात् । नहि दण्ड-विशिष्टस्तदानीमेव तदभावविशिष्टो भवतीत्याशङ्क्य भोगस्य कल्पितत्वात्, अधिष्ठानस्य कालत्रयेऽप्यारोपशून्यत्वात् दण्डिवैषम्यम् । नहि सर्पबुद्धिगृहीता रज्जुः तदानीमपि सर्परहिता न भवतीत्यभिप्रेत्याह 'समाने वृक्षो पुरुषो निमग्नः' इति ॥

---

(१) यत्तु इत्यस्य तस्मान्नभेद ज्ञानान्मोक्ष (पु.१२७) इत्यनेनान्वयः ॥

समाने वृक्षे = बिम्बप्रतिबिम्बरूपजीवेश्वराश्रये शरीरे, पुरुषो = बुद्ध्युपहितो, निमग्नः = कर्तृत्वाद्यभिमानत्वात् स्वरूपेणाप्रकाशात् निमग्नः, अत एव तत्कारणमोहावृतो, अनीशया = स्वस्यानन्दरूपेश्वरभावाप्रतीत्या, शोचति= विषयागमापायनिमित्तदुःखमनुभवति । नच 'अनीशा' = ईश्वरत्वाभावः, तृतीयया शोकहेतुत्वेन निर्दिष्टः, नतु तदप्रतीतिरिति वाच्यम् । तथा सति तस्य भेदवादिमते मुक्तावपि सत्वेन तदापि निर्निमित्तकशोक-प्रसङ्गात् । मन्मते तु इदानीमपि तदभावादज्ञानमेव 'अनीशा' अत एव जीवेश्वरभेद-साक्षात्कारात्तन्निवृत्तिमाह 'जुष्टं यदा पश्यति' इति । कार्यकारणसङ्घैः सेवितमविवेकि-भिस्तदात्मतया गृहीतम् ॥

यदा अधिकारी, अन्यं = विवेचनाच्छारीरद्वयात् पृथग्भूतं तत्साक्षितयाऽवगतं शोधित-'त्वम्'पदार्थम् ईशं सन्तं, पश्यति = ईश्वर इति स्वात्मानं पश्यति= साक्षात्करोतीति यावत्, तदा अस्य= आत्मत्वेनावगतस्य, महिमानम्= अपरिच्छिन्नानन्दात्मतामिति, एति = नान्तरीयकतया अनर्थनिवृत्तिं च दर्शयति, वीतशोक इति ।

अथवा, जुष्टं= विवेकवैराग्यादिभिःप्रक्षाळिताशयमलैः सनकादिभिर्नैरन्तर्येन सेव्यमानम् अन्यं= कार्यकारणसङ्घाताद्विलक्षणम्, ईशं, यदा पश्यतीत्यर्थः । नतु यदा, जीवादन्यं पश्यति तदा तस्य महिमानं प्राप्नोतीत्यर्थः ॥

तथा सति जीवेश्वरतदुभयभेदानां ज्ञानं मुक्तिहेतुः स्यात् । तथा च सति 'तमेवं विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय' (श्वे-उ-३-८) इत्यादि ज्ञान-ज्ञेय-नियमन-श्रुतिविरोधः स्यात् ॥

किञ्च भेदे 'तस्य महिमानमेती'त्येतत् विरुद्धम् । अन्यस्यान्यदीयमहिमप्राप्त्ययोगात्, तत्सदृशमिति कल्पनायां च लक्षणाप्रसङ्गात् । 'ब्रह्मवेद ब्रह्मैव भवति'(आ-उ-६-९) इति वाक्यशेषानुसारेणोक्तार्थपरताया एवाश्रयणीयत्वाच्च, अन्यथा तद्विरोधात् । अत्र च ज्ञाना-च्छोकनिवृत्तिर्न सुप्ताविव सावशेषा किन्तु तत्कारणपुण्यपापयोः तत्कारणाज्ञानस्य च निवृत्तत्वादात्यन्तिकीत्याह-'यदा पश्यः पश्यते रुग्मवर्णम्' इति (मु-उ-३-३-२) 'निरञ्जन'-इत्यविद्याराहित्योक्तिः । 'परमं साम्यम्' इत्यैक्यमाह । अत्यन्तसादृश्यस्य ऐक्ये एव

पर्यवसानात् । भेदगर्भसादृश्यस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे-उ८-६-) 'नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इत्यादिश्रुतिस्मृतिभिर्निषिद्धत्वात् । 'तथा विद्वान् नामरूपाद्विमुक्तः' इत्यादिना मुक्तौ नामरूपराहित्यप्रतिपादनेन सादृश्ययोगाच्च । 'अथ समं सर्वम्'[१] इत्यभिधानात्, साम्यं, सर्वात्मकत्वमिति वा –

'तस्मात्सर्वं भवदत्र ह्येते सर्व एकी भवन्ति',
'आत्मा ह्येषां सम्भवति'
'यो वेदाऽहं ब्रह्मास्मीति', 'स इदं सर्वं भवति'

इत्यादिश्रुतिभिः सर्वात्मत्वप्रतिपादनादिति ॥

यत्तु 'पृथगात्मानं प्रेरितारं च मत्वा' इत्यादिवाक्याद् भेदज्ञानान्मुक्तिरिति । तदसत् । आत्मानं, कार्यकारणसङ्घातात्, पृथग्= विलक्षणं, मत्वा, त्वं पदार्थज्ञानमात्रान्मुक्तिरिति वाक्यमीश्वरतादात्म्यमप्याह –'प्रेरितारं च मत्वेति' । पृथक्त्वेनावगतमेव, आत्मानं प्रेरितारं च, मत्वा = ईश्वर इति ज्ञात्वेत्यर्थः । तेनाऽमृतत्वं प्राप्नोतीति अभेदज्ञानादेव तत्रापि मोक्षस्य प्रतिपादनात् प्रकारान्तरेण तदर्थकथने कथितनियमश्रुतिविरोधात् ।

'उदरमन्तरं कुरुते । अथ तस्य भयं भवति'
'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'
'नात्र काचन भिदाऽस्ति नैवात्र काचनभिदाऽस्ति ।
अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति'

इत्यादि श्रुत्या भेदज्ञानस्यानर्थहेतुत्वप्रतिपादनात्स्वरूपनिषेधाच्च ।

'भयं द्वितीयाभिनिवेशतः स्यात्',
'आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।
तस्य भिन्नदृषोर्मृत्युर्विधत्ते भयमुल्बणम्'

इत्यादि स्मृत्या विभेदज्ञानस्यानर्थहेतुत्वाऽऽवेदनाच्च ।

---

(१) अमरकोश-विशेष्यनिघ्नवर्गः

'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः' (ई-उ-७)
'यन्मदन्यन्नास्ति कस्माद्बिभेमि'

इत्यादिश्रुत्या अभेदज्ञानाद्भयनिवृत्तिश्रेयः प्राप्त्योर्दर्शितत्वाच्च। तस्मान्न भेदज्ञानान्मोक्ष इति ।।

तत्र यत्तावदुक्तम् 'विधेयस्यानुवाद्यस्य वाऽसत्त्वं सद्विलक्षणत्वमेव, तत्र विधेयः । संसर्गस्यापि तथात्वेन तस्य तथात्वं भूषणमेवे'त्यादि । तन्न । तस्य सद्विलक्षणत्वे तुच्छत्वस्यैव वचनभङ्ग्यन्तरेण स्वीकारापत्तेः । नहि नृशृङ्गादेरपि सद्विलक्षणत्वादन्यतुच्छ-तुच्छत्वमन्विष्यमाणमुपलभ्यते । नच निस्स्वरूपत्वमेव तुच्छत्वम् । सर्वत्र प्रतिपन्नोपाधौ स्वरुपेण त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्ववत्वं अन्यत्र स्वरूपेणासतः निस्स्वरूपत्व एव पर्यवस्यतीति भङ्ग्यन्तरेण तुच्छत्वस्वीकारतादवस्थ्यात् ।।

अपि च विधेयसंसर्गस्य स्वसमसत्ताकानुवाद्यसापेक्षत्वनियमे जीवेश्वरयोर्विधेयाभेदस्य भेदनिषेधस्य वा पारमार्थिकसत्वमङ्गीकुर्वता सद्विलक्षणत्वं नानुवादे विधेयसंसर्गसिद्धि-प्रयोजकमङ्गीकर्तुं शक्यम् । अनुवाद्यत्वेनाभिमतयोर्जीवेश्वरयोः सत्त्वेन सद्वैलक्षण्याभावे च तत्र विधेयाभेदसंसर्गस्य निषेध्यभेदाभावसंसर्गस्य चावास्तवत्वापत्तेः । प्रयोजकं विना प्रयोज्यायोगात् । लाघवेन विधेयसंसर्गसिद्धावनुवाद्यसत्वस्यैव प्रयोजकत्वेन गौरवेण तत्सद्वि-लक्षणत्वस्यासद्विलक्षणत्वस्य वा तत्र प्रयोजकत्वाच्च ।।

नच 'तत्त्वमसि' इत्यादिवाक्यं नाभेदविधायकं किन्तु चैतन्यस्वरूपमात्रपरमिति वाच्यम् । तथासति 'नान्योऽतोऽस्ति द्रष्टा' इत्यादेरप्यखण्डमात्रपरत्वेन भेदनिषेधपरत्वाऽ-योगेन 'द्वासुपर्णे'त्यादेस्तन्निषेधशेषानुवादत्वापत्तेः । तस्याप्यखण्डचिन्मात्रस्यापि वेदार्थे शोधिते 'त्वम्'पदार्थादिमात्रनिष्ठत्वस्य तुल्यन्यायेनावश्यकत्वेऽनुवादत्वस्यैवाऽसम्भवाच्च ।।

नचासति तात्पर्यात्प्रतीयमानार्थस्य वेदार्थत्वं युज्यते । तथासति रुद्ररोदनात्म-वपोत्खननादेरपि वेदार्थत्वप्रसङ्गात् । नचासत्यपि तात्पर्ये मानान्तराविरुद्धोऽपि वेदात् प्रतीयमानो अर्थोऽपि वेदार्थ इति वाच्यम् ।

तथासत्ययमेव वेदार्थोनाऽयमित्यवधारणायोपक्रमादितात्पर्यलिङ्गगवेषणवैयर्थ्यापत्तेः। माना-

न्तराविरोधमात्रेणाखण्डचिन्मात्रस्यापि वेदार्थत्वसम्भवेन तत्रापि वेदतात्पर्यास्वीकारापत्तेश्च । वेदान्तमात्रस्याखण्डचिन्मात्रपरत्वेन प्रत्यक्षाद्यविरोधितया तद्गृहीतप्रपञ्चसत्वजीवेश्वरभेदादेर-मिथ्यात्वापत्तेश्च, प्रतीयमानार्थेऽपि तात्पर्ये वाक्यभेदापत्तेर्युगपद्वृत्तिद्वयापत्तेश्च । नच लक्षणां विना अखण्डचैतन्यलाभः सम्भवति । प्रतीयमानार्थविशिष्टचैतन्यपरत्वे चाखण्डार्थत्वहानिः । द्वितीयाभावादेरपि ब्रह्मवत् वेदान्ततात्पर्यगोचरतया पारमार्थिकत्वेनाद्वैतहानिश्च ॥

किञ्च श्रवणादिकर्तव्यताया वेदान्ततात्पर्यविषयत्वे श्रवणादेर्ब्रह्मसाक्षात्कारसाधनत्वे एव मानाभावेन तदनुष्ठानस्य चैत्यवन्दनाद्यनुष्ठानवत् निष्फलत्वापत्तिः । एवं साक्षात्कारस्य मुक्तिसाधनत्वासिद्धिप्रसङ्गश्च । तथैव सृष्ट्यादिवाक्येन ब्रह्मतो जगत्सृष्ट्याद्यसिद्धिप्रसङ्गश्च ।

॥ इति द्वासुपर्णादि भेदश्रुतीनां नवीनोक्त निषेधशेषानुवादत्व निरसनम् ॥

## ॥ अथ परमते लक्षणया'द्वासुपर्णे'त्यादिवाक्यस्य शोधित'तत् त्वं'-पदार्थमात्रपरत्वनिरसनम् ॥

किञ्च पराभिमताखण्डचिन्मात्रस्य प्रमाणान्तराप्राप्ततया तत्र वेदान्तानां तात्पर्यनिश्चयस्य लक्षणाकल्पनस्य चायोगः । नह्यनुपस्थिते वृत्तितात्पर्यग्रहः सम्भवति । नच पक्षतावच्छेदक-धर्मेण पक्षोपस्थितिं विना इदं वाक्यमेतत्परं, इदं वा तद्वाक्यतात्पर्यगोचरः उपक्रमादुप-संहारात् इत्यनुमानावतारः सम्भवति । एवं लक्षणाकल्पनायामपि लक्ष्यतावच्छेदकरूपेण लक्ष्योपस्थितिरावश्यकी । येन येन रूपेणोपस्थिते यस्य शब्दस्य वृत्तिग्रहः स शब्दस्तेनैव रूपेण तमर्थमुपस्थापयतीति हि तस्य शब्दस्य स्वभावः । नान्यथा निदर्शनाभावात् ॥

नच 'यन्न दुःखेन सम्भिन्नम्' इत्यादिना वाक्यार्थविधेयोपस्थिते सुखविशेषे स्वर्गशब्दस्येव 'यतो वा इमानि भूतानि जायन्ते' इत्यादिना वाक्यार्थविधेयोपस्थिते वस्तुतोऽखण्डचैतन्ये वेदान्तगतपदानां वृत्तिर्लक्षणारूपा सुग्रहेति वाच्यम् । वाक्यार्थस्यापि पदार्थनिरूपितत्वेन तयापि केनचिद्रूपेण तद्रूपस्थित्यनिवारणात् वाक्यार्थे पदार्थानामेव विशेषकत्वात् । नच शब्दादिप्रमाणस्वाभाव्याद् धर्मिविशिष्टोपस्थितावपि न धर्मवैशिष्ट्ये तात्पर्यम्, अन्यथो-द्देशस्यापि लक्षणविभागवाक्याभेदप्रसङ्गः । अत एव व्यावर्तकधर्मतात्पर्यकलक्षणोक्त्युद्देश्यकः शब्द उद्देश इत्युच्यत इति वाच्यम् । केनचिद्रूपेणोपस्थापित एवार्थे शब्दस्य वृत्तिग्रहः ।

तस्माच्चशब्दात् तेनैव रूपेण तदुपस्थितिरिति वदन्तं प्रत्यस्यानुत्तरत्वात् । एवं वदतापि लक्षणया विशिष्टोपस्थितेरत्यागाच्च ॥

किञ्च शब्दस्वाभाव्याद्विशिष्टस्यैव तदुपस्थितिरित्यङ्गीकुर्वता 'असदेव सोम्येदमग्र आसीत्' इत्युपक्रमादिरूपशब्देऽपि प्रथमं विशिष्टोपस्थितिरेव वाच्येत्यसञ्जातविरोध्युपक्रमादिलिङ्गेनापि विशिष्टे एव तात्पर्यनिश्चयावश्यम्भावेन उद्देशवद् वेदान्तगतशब्दानां ब्रह्मधर्मवैशेष्ये तात्पर्याभावासिद्धेश्च ॥

किञ्च लक्षणायाः अपि विशिष्टोपस्थितौ शक्त्यैव तदुपस्थितिरस्तु । किं लक्षणा कल्पना व्यसनेन? ननु ब्रह्मणि शब्दानां शक्तौ प्रमाणाभावात् 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' 'अशब्दम्' (कठ-उ-१-२-१५) इत्यादिश्रुत्या प्रत्युत तत्र शब्दशक्तेनिर्षेधाच्च । लक्षणायाम् 'अवचनेनैव प्रोवाच' इति श्रुतेः सत्त्वात् शक्तिर्नाभ्युपगम्यते लक्षणाचाङ्गीक्रियते नतु वास्तवियतया ॥

किञ्च 'केवलो निर्गुणश्च'(श्वे-उ-६-११) इत्यादि श्रुत्या ब्रह्मणि धर्ममात्रनिषेधात् प्रवृत्तिनिमित्तशून्यतया तस्य वाच्यत्वमेवानुपपन्नम् । नचैवं वाच्यत्वाभावे तस्य वेदैकगम्यत्वमेव न स्यादिति वाच्यम् । विशुद्धाऽखण्डपरमात्मस्वरूपस्य स्वप्रकाशसिद्धतया वेदप्रतिपाद्यत्वानभ्युपगमात् । नचैवं

**'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति'**(१)
**'सर्वे वेदा यत्पदमामनन्ति'**(कठ-उ-१-१-५२)
**'सर्वे वेदा यत्रैकं भवन्ति'**(तै-आ-३-११)

इत्यादि श्रुतिप्रतिपन्नवेदप्रतिपाद्यत्वानभ्युपगमे तद्विरोध इति वाच्यम् । तच्छ्रुतीनां विशिष्टविषयत्वेनोपहितविषयत्वेन च प्रवृत्त्या तद्विरोधाप्रसरात् । अन्यथा विशुद्धचैतन्यस्य 'यत्तदद्रेश्यम्' इत्यादिश्रुतिप्रतिपन्नज्ञानविषयत्वनिषेधानुपपत्तेः । एतेन वेदान्तानां विशुद्धचैतन्यप्रतिपादकत्वे निर्विषयत्वेन प्रेक्षावदुपादेयत्वाभावप्रसङ्गः इति निरस्तम् ॥

---

(१) पिप्पलादश्रुतिः ॥

## ।। अथ विशुद्धचैतन्यस्य वेदप्रतिपाद्यत्वविवरणम् ।।

अस्तु वा विशुद्धचैतन्यस्य वेदप्रतिपाद्यत्वम् । तथाऽपि न तस्य वाच्यत्वसिद्धिः । वैदिकपदानां तत्र लक्षणाङ्गीकारेऽपि तत्प्रतिपाद्यत्वसम्भवात् । नच अनुपस्थिते तत्र लक्षणावृत्तिग्रहाऽसम्भवात्तदुपस्थितेरावश्यकत्वे तस्याश्च प्रत्यक्षादितो सम्भवेन वेदेनैवोत्पत्तौ वाच्यायां लक्षणावृत्तिकल्पनात् प्राक् वेदस्य मूकत्वेन तदुपस्थापकमेव सम्भवतीति वाच्यम् । ब्रह्मणो वाच्यत्वपक्षेऽप्येतद्दोषसाम्यात् ।

नहि वेदैकसमधिगम्यत्वेन आवाभ्यामङ्गीकृतस्य परमात्मस्वरूपस्य प्रत्यक्षादिमानान्तरेणोपस्थितिरभ्युपगमार्हः । नचानुपस्थिते तत्र शक्तिरूपसम्बन्धग्रहो युज्यते ।।

किञ्च ब्रह्मणो वाच्यत्वे सत्यज्ञानादिवाक्यप्रतिपाद्यं ब्रह्म न तद्वाक्यस्थपदशक्यं, तद्वाक्यार्थत्वात् सम्मतवदित्यनुमानविरुद्धम् । नच तस्य वाक्यार्थत्वमसिद्धम् ।

**'सर्वे वेदा यत्पदमामनन्ति'**
**'वेदैश्च सर्वैरहमेववेद्यः'** (भ-गी-१५-१५)

इत्यादिना तस्य सिद्धिरिति चेत् । अत्रोच्यते । न तावत् ब्रह्मणोऽवाच्यत्वे मानाभावः ।

**'अथ कस्मादुच्यते ब्रह्म तस्मादुच्यते परं ब्रह्म',**
**'एतमेव ब्रह्मेत्याक्षते'** (ऐ-उ-२-२-१२),
**'यमिन्द्रमाहुः तदु सत्यमाहुः'** (तै–ब्रा-३७-९-३),
**'तदेव ब्रह्म परमं कवीनाम्'** (म-ना-उ-१-६),
**'ब्रह्मैव वाचः परमं व्योम'** (तै-सं-७-४-१८-४६)

इत्यादि श्रुतीर्विनाऽनुपपत्तेः । वृत्तेश्च बाधकं विना शक्तिरूपसाक्षात्सम्बन्धत्वात्यागात् । उदाहृतश्रुत्या 'उच्यते' इत्यंशेन वाच्यत्वरूपसाक्षात्सम्बन्धवत्वस्यैव आवेदनाच्च । नच 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' 'अशब्दम्' इत्यादिश्रुत्या तस्य वाच्यत्व निषेधात्, बाधकं विनेत्येतदसिद्धमिति वाच्यम् । 'एकमेवाऽद्वितीयम्' (छां-उ-६-२-१) इत्यादि श्रुत्या ब्रह्मणि निषिद्धस्य वियदादेरिव तत्र निषिद्धायाः शक्तिरूपशब्दप्राप्तेर्मिथ्यात्वसिद्धावपि

नृशृङ्गादिवत् निस्स्वरूपत्वासिद्धेः । अन्यथा 'असङ्गो ह्ययं पुरुषः' 'नेह नानाऽस्ति किञ्चन' (कठ-उ-१-२-११) इत्यादि श्रुतिनिषिद्धत्वात् सत्यादिपदानां ब्रह्मणि शक्यसम्बन्धरूपलक्षणापि तव न सिद्धयेत् ।।

अत एव 'केवलो निर्गुणश्च' इत्यादि श्रुत्या ब्रह्मणो धर्ममात्रनिषेधात् प्रवृत्तिनिमित्ताभावेन तस्य शब्दवाच्यत्वमेवानुपपन्नमिति परास्तम् । निषिद्धत्वेन मिथ्यात्वेऽपि ब्रह्मधर्माणां घटत्वादिवत् शब्दप्रवृत्तिनिमित्तत्वाक्षतेः । तेष्वपि शक्यत्वे सति शक्यभिन्नत्वे सतीत्यादि प्रवृत्तिनिमित्तप्रयोजकसत्वात् । नच 'अथ कस्मादुच्यते ब्रह्मेति' इत्यादि श्रुतीनां विशिष्टविषयतयोपहितविषयतया वा विशुद्धब्रह्मविषयत्वाभावात्, ततो न तत्र वाच्यत्वसिद्धिरिति वाच्यम् । तथासति तत्रैव श्रुतौ 'तस्मादुच्यते परं ब्रह्म' इति 'पर'शब्दानुपादानप्रसङ्गात् । नहि विशुद्धचैतन्यादन्यत् परं ब्रह्माऽस्ति ।।

।। इति विशुद्धचैतन्यस्य वेदप्रतिपाद्यत्वविवरणम् ।।

किञ्चैवं 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिरपि विशिष्टे उपहिते वा ब्रह्मणि वाच्यत्वनिषेधिका, नतु विशुद्धब्रह्मणीति सुवचम् । नचैवमुक्तविधिनिषेधयोरेकविषयत्वेन व्याहतभाषित्वपरिहाराय तत्र 'यतो वाचो' इति वाच्यत्वनिषेधश्रुतेर्विशुद्धब्रह्मविषयत्वं कल्प्यत इति वाच्यम् । तथा सति ब्रह्मणि 'यस्मिन् द्यौः' (आ-उ-२-२-५) इत्यादिवियदादिप्रपञ्चविधायकश्रुत्या सह व्याहतभाषित्वपरिहाराय 'नेह नानाऽस्ति किञ्चन' इत्यादि तन्निषेधश्रुतीनां विशुद्धब्रह्मविषयत्वं, उदाहृततद्विधायकश्रुतेस्तु विशिष्टविषयत्वमुपहितविषयत्वं वेति व्यवस्थाश्रयणापत्त्या वियदादिप्रपञ्चमिथ्यात्वस्य निष्प्रमाणकत्वेन दत्तजलाञ्जलित्वापत्तेः । एवं –

**'सत्यकामः सत्यसङ्कल्पः'** (छां-उ-३-८-७),
**'यः सर्वज्ञः सर्ववित्'** (आथ-उ-१-१-९),
**'सर्वगन्धः सर्वरसः'** (छां-उ-३-१४-४)
**'परास्य शक्तिर्विविधैव श्रूयते'** (श्वे-उ-६-८)
**'नित्यं विज्ञानमानन्दं ब्रह्म'**

**'एष नित्यो महिमा ब्राह्मणस्य'** (बृ-उ-६-४-२३)

**'सत्यस्सो अस्य महिमा'**

इत्यादि सत्यकामत्वादिधर्मप्रतिपादकश्रुतीनां 'केवलो निर्गुणश्च' इत्यादिधर्मनिषेधकश्रुतीनां चाविरोधायोक्तरीत्या भिन्नविषयत्वेन व्यवस्थाश्रयाणापत्त्या ब्रह्मधर्ममिथ्यात्वासिद्धिप्रसङ्गः । तच्छ्रुतीनां प्रतियोगिप्रसञ्जकत्वाभ्युपगमे वाच्यत्वश्रुतीनामपि निषेधाय प्रतियोगिभूतवाच्यत्व-समर्पकत्वं किन्नाभ्युपेयते, अविशेषात् ॥

एतेन सत्यादिवाक्यप्रतिपाद्यं ब्रह्म न तद्वाक्यस्थपदशक्यं तद्वाक्यार्थत्वात् सम्मतवद् इत्यनुमानविरोधो निरस्तः । उदाहृतवाच्यत्वपरश्रुत्या बाधितविषयत्वेनास्यानुमानस्य वाच्य-त्वाभावसाधकत्वानुपपत्तेः । वेदान्तमुख्यतात्पर्यविषयीभूतं ब्रह्मपदवाच्यं वस्तुत्वात् लक्ष्यत्वाद्वा तीरवद् इत्यनुमानेन प्रतिपक्षाच्च । वस्त्वस्तीति वाक्यार्थे तद्वाक्यस्थवस्तु-पदशक्ये तद्वाक्यार्थत्वरूपहेतुसत्त्वेन व्यभिचाराच्च ॥

## ॥ अथ ब्रह्मणः वाच्यत्वसमर्थनम् ॥

नच 'यतो वाचो निवर्तन्ते' इति श्रुतिसहकाराद् वाच्यत्वाभावसाधकानुमानं प्रबलमिति वाच्यम् । उदाहृतवाच्यत्वश्रुतिसहकारादिदं वाच्यत्वसाधकानुमानमपि प्रबलमिति सुवचत्वात्, वाच्यत्वाभावसाधकानुमाने व्यभिचारस्योक्तत्वाच्च । 'यतो वाचो निवर्तन्ते' इति श्रुतेर्ब्रह्मा-नन्दापरिच्छेदप्रतिपादनपरत्वेन वाच्यत्वनिषेधपरत्वासिद्धेश्च । 'नावेदविन्मनुतेदं बृहन्तम्' (तै-आ-३-१२-९) इति 'वेदविरुद्धागमवित् बृहन्तमात्मानं न मनुते' इत्यर्थपरश्रुत्य-न्तरानुसारेण 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतेर्वेदविरुद्धागमवेद्यत्वनिषेधपरत्वेन वाच्यत्व-निषेधपरत्वासिद्धेश्च । अन्यथा तत्रापि 'अप्राप्य मनसा सह' इति श्रवणात् मनोवेद्यत्वमपि निषिद्धं स्यात् । नच 'यन्मनसा न मनुते' (केन-उ-१-६) इति श्रुत्यन्तरानुसारेण तस्य मनोवेद्यत्वमेव नेति वाच्यम् । तथा सति 'मनसैवानुद्रष्टव्यम्' (कठ-उ -१-२-९) इति सावधारणश्रुतिविरोधापत्तेः ॥

यदि च 'दृश्यते त्वग्रया बुध्या' (कठ-उ-१-१२) इत्यव्यवहितमनोवेद्यत्वाऽवेदक-श्रुत्यन्तरानुसारेण मनोवेद्यत्वनिषेधश्रुतेरनवहितमनोवेद्यत्वं निषेधपरत्वम् । तर्हि तादृश-

मनःसहकृतावगम्यत्व[१]निषेधपरा 'यतो वाच' इत्यादिश्रुतिरस्तु । तथा च तादृशमनोविशिष्टवाच्यत्वनिषेधिका सती सा श्रुतिः ब्रह्मणि वाच्यत्वरूपविशेष्यसत्वेऽपि तादृश -मनःसहितत्वरूपविशेषणाभावमादायैव कृतार्था कथम्? उदाहृतश्रुत्यनुमानसिद्धवाच्यत्वपरिपन्थिनी स्यात् । तस्माद् ब्रह्मणो वाच्यत्वमव्याहतप्रसरम् ॥

॥ इति ब्रह्मणः वाच्यत्व समर्थनम् ॥

नच 'अवचनेनैव प्रोवाच'[२] इति श्रुतिर्लक्षणायां मानम् ।

'गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः'

इति दक्षिणामूर्तेर्व्याख्यानवत् मौनस्यैव तया व्याख्यानत्वलाभेन लक्षणायामप्रमाणत्वात् । यद्वा 'अनुदरा कन्या' इतिवत्, 'अवचनेनैव प्रोवाच' इत्यल्पवचनत्वविवक्षया प्रवृत्तिसम्भवेन न तस्या लक्षणाप्रमाणत्वसम्भवः । अपदार्थत्वादवाक्यार्थत्वाच्च । 'वचसां वाच्यमुत्तमम्'[३] इतिस्मृतौ ब्रह्मणः सर्वशब्दवाच्यत्वप्रतीतेश्च ॥

नच ब्रह्मावाच्यत्वप्रतिपादकश्रुतीनां 'यतो वाचो निवर्तन्ते' 'अशब्दम्' इति निषेधशेषानुवादत्वेन न स्वार्थपरत्वमिति वाच्यम् । ब्रह्मणि वाच्यत्वस्याप्राप्ततया तच्छ्रुतीनां तदनुवादत्वासम्भवात् । 'अप्राप्य मनसा सह' 'अशब्दम्' इति 'असङ्गोह्ययं पुरुषः' इति च ब्रह्मणि शब्दप्राप्तिमात्रस्य सङ्गमात्रस्य च निषेधात् । शक्तेरिव लक्षणायाऽपि स्वीकारायोगाच्च । 'अवचनेनैव प्रोवाच' इति लक्षणाश्रुतेरप्युदाहृतनिषेधशेषानुवादत्वेनातत्परतायाः सुवचत्वाच्च । 'सर्वे वेदायत्पदमामनन्ति' इत्यादि ब्रह्म-वेद-प्रतिपाद्यप्रतिपादकश्रुतीनामपि 'यतो वाचो निवर्तन्ते' 'अशब्दम्' इति निषेधशेषानुवादत्वेनास्वार्थपरत्वस्वीकारसम्भवेन तदन्यथानुपपत्त्यापि ब्रह्मणो लक्ष्यत्वसिद्धिरित्युक्त्यनवसराच्च ।

'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्'

(१) वाक् अगम्यत्व निषेधपरा इति पाठः स्यात् ॥

(२) बाष्कलश्रुतिः

(३) कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥ जितन्ते स्तोत्रम् ॥(४-७)

इति स्मृत्या निर्विशेषब्रह्मचैतन्ये एव कण्ठरवेण ब्रह्मशब्दवाच्यत्वाभिधानाच्च । 'यतो वाचो निवर्तन्ते' 'अशब्दम्' इत्यादेरुदाहृतवाच्यत्वपराऽनेकश्रुत्यविरोधाय वाच्यं साकल्येन ब्रह्म-प्रतिपादकत्वाभावपरत्वेन वा वेदविरुद्धागमगम्यत्वप्रतिपादनपरत्वेन सङ्कोचसम्भवेन ब्रह्मणि वा इत्यनिषेधकत्वापत्तेश्च । 'यदाहवनीये जुहोति' इत्यादिसामान्यशास्त्रस्य 'पदे जुहोति' इत्यादिविशेषशास्त्रेणेव वेदविरुद्धवाक्यमात्रे शक्तिलक्षणा । प्रतिपाद्यप्रतिपादकभावसाधा-रणाप्राप्तिमात्रविषयतया 'यतो वाच' इत्यादेः उदाहृतब्रह्मवाच्यत्वपरश्रुत्यपेक्षया सामान्य-शास्त्रत्वात् । अन्यथा लोकवेदयोरुत्सर्गापवादभावः क्वापि नाश्रीयेत ॥

एवं 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिब्रह्मनिर्धर्मकत्वश्रुतिरपि विहितेतर-हेयधर्मनिषेधपरेति वास्तवप्रवृत्तिनिमित्ताभावप्रयुक्तवास्तववाच्यत्वाभावनिरासः ऊह्यः । अत एव 'निर्गुणश्च'इति हेयरूपधर्मविशेषाभावसमुच्चयार्थः 'च'कारोऽप्युपपद्यते । 'अस्थूलमनणु' इत्यादि धर्मविशेषनिषेधोऽपि 'अणोरणीयन्महतो महीयान्' इत्यादिधर्मविशेषविध्यनुसारेण 'ब्रह्मणे ब्राह्मणमालभेत' इत्यादिविशेषविध्यनुसारेण 'ब्राह्मणो न हन्तव्यः' इत्यादिविशेष-निषेधवत् नेयः । अत एव 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम्' (म-ना-उ-१२-१) 'आदित्यवर्णं तमसः परस्तात्'(श्वे-उ-३-८) इत्यादिरूपविशेषविधिः सत्यपि 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' (श्वे-उ२०-४-) इत्यादिचक्षुर्ग्राह्यरूप-निषेधोऽप्युपपद्यते । अत एव च रूपविधौ 'तमसः परस्तात्' इति विशेषणमस्मदादिरूपात् ब्रह्मरूपस्य वैलक्षण्यज्ञापकमुपपद्यते । नचैतदपरब्रह्मपरम् । 'ऋतं सत्यं परं ब्रह्म' इति विशेषणात् । एवमन्यदपि गुणनिषेध-तद्विधिवाक्यं नेयम् ॥

किञ्च लोके लक्षणोक्तेः वाच्यवाचकभावपरिच्छेदरूपव्यवहारप्रयोजकत्वस्यापि दर्शनेन वेदेऽपि 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यतो वा इमानि भूतानि जायन्ते' 'तद्ब्रह्म' इत्यादि-लक्षणोक्तेः ब्रह्मपदवाच्यत्व-परिच्छेदरूपत्व-व्यवहारप्रयोजनकत्वमपि स्वीकार्यम् । नहि तत् त्यागे कारणं पश्यामः । अत एव लोके 'सास्नादिमान् गौः' इति लक्षणे उक्ते यं यं सास्नादिमन्तं पिण्डं पश्यति व्युत्पित्सुः तं तं स गोशब्दवाच्यं प्रत्येति इति घण्टाघोषः ॥

नच सत्यज्ञानादिवाक्यस्थसत्यत्वादिलक्षणविशिष्टवाचिसत्यादिपदानामपि लक्षणा । तथासति 'गङ्गा'पदलक्ष्यतीरस्यागङ्गास्वरूपत्ववत् सत्यज्ञानादिपदलक्ष्यस्यासत्यज्ञानादिस्वरूपत्वापत्तेः । एवं 'यतो वा इमानि भूतानि जायन्ते' इति लक्षणवाक्यब्रह्मपदलक्ष्यस्याब्रह्मस्वरूपस्यैव इदमुच्यमानं लक्षणमित्यापत्त्या 'अस्य लोकस्य का गतिः' (छां-उ -१-९-१) इत्यादिकारणवाक्यान्तरस्थाकाशादिशब्दानाम् उक्तब्रह्मलक्षणस्यातिव्याप्तिपरिहाराय 'आकाशस्तल्लिङ्गात्' (ब्र-सू-१-१-२२) इत्यादिना समन्वयानुक्तिप्रसङ्गाच्च ॥

पररीत्योक्तलक्षणमब्रह्मस्वरूपस्यैवेति पर्यवसानेन मुख्यतः आकाशादेरेव लक्ष्यत्वमिति पर्यवसानात् । नच 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ काकपदस्येवात्र ब्रह्मपदस्य अजहत्स्वार्थलक्षणा स्वीकारार्हा । तथा सति शक्यलक्ष्यसाधारणेन न केनचिद्रूपेण ब्रह्मशब्दप्रवृत्तिनिमित्तत्यागेन तदर्थोपस्थितिलाभेऽप्युक्तातिव्याप्त्यनुद्धारात् अखण्डार्थत्वहानितादवस्थ्याच्च ॥

**॥ अथ ब्रह्मपदस्य ब्रह्मपदलक्षणवाक्यस्यच जहदजहल्लक्षणायाः अयुक्तत्वसमर्थनम् ॥**

नच तत्त्वमस्यादिवाक्ये तत्त्वंपदयोरिवात्र ब्रह्मपदस्य जहदजहल्लक्षणा, एवं सत्यादिपदानामिति नोक्तदोषः इति वाच्यम् । एवं लक्षणस्यातिप्रसक्तिवारणेऽप्यखण्डार्थत्वहानितादवस्थ्यात् । तथा हि । लक्षणवाक्यस्य ब्रह्मपदादिलक्ष्ये स्वप्रत्याप्यलक्षणवैशिष्ट्ये तात्पर्यसत्वे अखण्डार्थत्वक्षतेः ब्रह्मपदादेस्तत्र लक्षणा स्वीकारवैयर्थ्याच्च । तत्फलस्य संसर्गासङ्गिसम्यग्धियस्तथाप्यलाभात्, चिन्मात्रपरस्य तस्य लक्षणवैशिष्ट्येपि तात्पर्यवाक्यभेदाच्च । वेदतात्पर्याविषयस्यापि मानान्तराबाधमात्रेण वेदात्प्रतीतत्वमात्रेण याग-स्वर्गसाधनत्वादेरिव वेदप्रमाणकत्वे रुद्ररोदनात्मवपोत्खननादेरपि[१] तथात्वेन वेदप्रमाणकत्वापातात् ॥

नच रुद्रशब्दिताग्निदेवतायां रोदनादिव्यतिरेको वा प्रजापतौ वपोत्खननादिव्यतिरेको वा मानान्तरेण निश्चितः । येन वेदप्रमाणको न स्यात् । अन्यत्रादर्शनमात्रस्याविरोधित्वात् ।

(१) यदरोदीत् तद् रुद्रस्य रुद्रत्वम् इति वाक्यम् । प्रजापतिरात्मनो वपामुदखिदत् इति वाक्यम् ॥

अन्यथा ज्ञानसुखादेर्नित्यत्वापरिच्छिन्नत्वाद्यदर्शनमात्रेण विरोधेन नित्यज्ञानाद्यसिद्धि-प्रसङ्गात् । 'त आप ऐक्षन्त' (छां-उ-६-१-४) 'मृदब्रवीत्' (श-त-ब्रा-६-१-३) इत्यादिना बाधे ईक्षणवचनाद्यनङ्गीकारप्रसङ्गाच्च । 'वज्रहस्तः पुरन्दरः' इत्याद्यर्थवादेनापि देवताविग्रहाद्य-सिद्ध्यापत्तेश्च ॥

किञ्च श्रुत्यपेक्षया प्रत्यक्षादिकं दुर्बलमिति स्वीकुर्वतः सत्यपि तद्विरोधे श्रुत्याऽवेदित-स्तादृशः सर्वोऽप्यर्थो व्यावहारिकः पारमार्थिको वा स्यात् ॥

किञ्च मानान्तराविरोधमात्रेण वेदप्रतीतार्थस्य वास्तवत्वे ब्रह्मणोऽपि तथात्वेनैव वास्तवत्वसम्भवेन वेदस्य तत्राप्यतात्पर्यप्रसङ्ग इत्युक्तम् । तस्मादर्थस्य वास्तववेद-तात्पर्यगोचरत्वमेव तन्त्रम् । वेदात् प्रतीतत्वेऽप्यर्थस्यावास्तवत्वे तु वेदतात्पर्यविषयत्वमेव नियामकमित्येव स्वीकार्यम् । एवञ्च जगज्जन्माद्यनुकूलशक्तिरूपं तत्कारणत्वमपि ब्रह्मलक्षणं यागस्वर्गसाधनत्ववत् वास्तवमित्यङ्गीकुर्वता तस्य तथात्वसिद्धये उदाहृतलक्षणाऽवेदकवेद-तात्पर्यगोचरत्वमत्याज्यमेव । तथा च वाक्यभेदो वज्रलेपायितः । एकस्यैव वाक्यस्य चिन्मात्रपरत्वात् तदन्यपरत्वाच्च । तथा युगपद्वृत्तिद्वयविरोधार्थप्रयुक्तविरोधश्च । नहि तद्वाक्यजन्यमेकमेव ज्ञानं संसर्गसंसर्गितदसङ्गि चेति सम्भवतीति ॥

किञ्च ब्रह्मलक्षणभूतं तादृशशक्तिरूपं कारणत्वं सत्यम् अतिरिक्तं चेदद्वैतहानिः । नचैतत् ब्रह्मस्वरूपानतिरिक्तं ज्ञानात्मकत्वादतो नोक्तदोषः इति वाच्यम् । शक्तिरूप-कारणत्वस्य ज्ञानबाधाद्यतिरिक्तत्वात् । अन्यथा 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति 'च'शब्दवैयर्थ्यप्रसङ्गः ॥

किञ्च ब्रह्मातिरिक्तैव शक्तिर्वाच्या । 'परास्य शक्तिः' इति षष्ठीश्रुतेः, 'विविधैव' इति सविशेषत्वश्रुतेश्च 'एकधैवानुद्रष्टव्यम्' इति श्रुत्या ब्रह्मण ऐकविध्यावेदनाच्च । शक्तिरूप-जगज्जन्मादिकारणत्वं मिथ्या चेत् कथं न तत्परवेदान्तस्यातत्त्वाऽऽवेदकत्वम्?

किञ्च शक्तिबलक्रियाणां कल्पितत्वे स्वाभाविकत्वोक्तिविरोधो ज्ञानेन सहपाठविरोधो दुर्वारः । शक्तिवत् 'ज्ञानबलक्रिया च' विविधा स्वाभाविकीत्यर्थपर'च'शब्दविरोधश्च । नचायावद्भिर्मिभाविनां धर्माणां स्वाभाविकत्वं युज्यते । तथा च 'अनन्तं ब्रह्म' रूपं

धर्मीति तत्स्वाभाविकधर्मभूतशक्त्यादीनामपि यावद्धर्म्यनुवृत्तिर्दुर्वरिति सेऽयमुभयतः पाशा-रज्जुः । तस्मात् ब्रह्मशब्दस्य ब्रह्मलक्षणवाक्यस्य च जहदजहल्लक्षणा न युक्ता ॥

अपि च जहत्स्वार्थलक्षणायां 'गङ्गायां घोष' इत्यादेरिव अजहत्स्वार्थलक्षणायां 'काकेभ्यो दधि रक्ष्यताम्' इत्यादेरिव च जहदजहल्लक्षणायां निदर्शनस्थलेस्यैवालाभेन तस्यां मानाभावः ॥

॥ इति ब्रह्मपदस्य ब्रह्मपदलक्षणवाक्यस्य च जहदजहल्लक्षणायाः अयुक्तत्वसमर्थनम् ॥

## ॥ अथ अद्वैतश्रुतेः यथाश्रुतार्थनिराकरणम् ॥

यद्यपि सर्वनामविशेषस्य तच्छब्दादेरनतिप्रसक्तानेकधर्मविशिष्टार्थे प्रथमं गृहीतसङ्गतिकस्य तदनन्तरं कदाचिदनतिप्रसक्तपूर्वोपस्थित यत्किञ्चिद्धर्ममात्रविशिष्टतद्धर्मिमात्रपरामर्शितत्वेन जहदजहत्स्वार्थलक्षणायां तस्य निदर्शनत्वं सुवचम् । एवं 'त्वम्'पदादेरपि । तथापि न तावता परस्येष्टसिद्धिः । 'तत्त्वमसि' इत्यादौ 'तत्त्वम्'पदाभ्याम् ईश्वरजीवचैतन्ययोस्तथा तदर्थत्वेन गृहीतयोस्तत्त्वमसीत्यभेदबोधनसमये यत्किञ्चिदनतिप्रसक्तपरस्परविरुद्धार्थधर्म-वत्तयोपस्थित्यापत्त्या पराभिमतार्थभेदासिद्धेः, तथाप्यबोधार्थत्वानिर्वाहाच्च (तथाप्यखण्डार्थ-त्वानिर्वाहाच्च-पा) । किञ्च 'तत्त्वं'पदयोः सर्वनामत्वेन ताभ्यामनतिप्रसक्तयत्किञ्चित्धर्मवत्तया जीवेश्वरचैतन्ययोः शक्त्यैवोपस्थित्या तत्र तयोर्लक्षणायामेव मानाभावेन तद्विशेषे सुतरामेव मानाभावः ।

किञ्च ब्रह्मपदस्य सत्यज्ञानादिपदानां च नानुपस्थितेऽर्थे लक्षणाग्रहः । नापि निर्वि-कल्पकोपस्थितेर्निर्विकल्पकस्य वृत्तिग्रहाद्यङ्गत्वानुपपत्तेः, किन्तु केनचिदाकारेण । स किं शक्यतावच्छेदरूपः किम्? वान्यः। नाद्यः। शक्तेरेव मानान्तरकरणप्रसङ्गात् । न द्वितीयः । फलभूतवेदान्तवाक्यान्यबोधस्यापि तदाकारविशिष्टचैतन्यगोचरत्वापत्त्या बाधार्थत्वाभङ्ग-(गोचरत्वापत्त्याखण्डार्थत्वाभङ्गः-पा)प्रसङ्गादित्युक्तम् ॥

ननु भवेदेवमखण्डार्थत्वहानिः यद्वैशिष्यं चिन्मात्रे वेदान्तेन बोध्यते स आत्माकारो यद्यन्यःस्यात् । न चैवम् । किन्तु ब्रह्मस्वरूपरूपद्वितीयाभावात्मक एव सः । एवं ब्रह्मणि

तद्वैशिष्यमपि ब्रह्मस्वरूपरूपमेवेति चेन्न । द्वितीयाभावतद्वैशिष्ययोर्ब्रह्मचैतन्यस्वरूपरूपत्वे मानाभावात् । नच अद्वैतश्रुतिविरोध एव तत्र मानम् । तथा सति सर्वात्मकत्वश्रुतिबलेन द्वितीयाभावतद्वैशिष्ययोरिवाज्ञानतत्कार्यवियदादि-विचित्रजडप्रपञ्चस्यापि ब्रह्मचैतन्यस्वरूपत्वेनाङ्गीकारापातात् ॥

अपि चैवं द्वितीयाभावस्याद्वैतश्रुतिबलेन ब्रह्मस्वरूपत्वावश्यम्भावेनापारमार्थिकत्ववत् सर्वात्मकत्वश्रुतिबलेन तत्प्रतियोगिभूतद्वितीयप्रपञ्चस्यापि पारमार्थिकब्रह्माभिन्नत्वावश्यम्भावेन पारमार्थिकत्वस्य दुर्वारतया द्वितीयप्रपञ्चतदभावयोः क्लृप्ततुल्यसत्ताकत्वप्रयुक्तविरोधापत्त्या ब्रह्मणि सर्वदा द्वितीयप्रपञ्च एव स्यात्, तदभाव एव वा सर्वदा स्यात् । नचैवम् । परेण द्वितीयस्य प्रपञ्चस्य प्रतियोगित्वेऽपि व्यावहारिकत्वात् । तदभावस्य पारमार्थिकत्वात् सत्ताभेदेनाविरोध इति स्वीकारात् । तथा च द्वितीयतदभावयोरुभयोरपि न ब्रह्मस्वरूपरूपत्वमेषितव्यम् ॥

किञ्च विचित्रप्रपञ्चाभावस्यानन्तप्रतियोगितावच्छेदकभेदप्रयुक्तभेदवत्त्वेनासङ्ख्यस्य ब्रह्मणश्चात्यन्ताभेदे ब्रह्मशब्दार्थभूतचैतन्यस्यापि वास्तवनानात्वं दुर्वारम् । अपि चोक्तरीत्या ब्रह्मण एव द्वितीयरूपत्वं तदभावरूपत्वं तदभावाश्रयत्वं चापन्नं, तथा च स्वस्यैव स्वस्वरूपभूतप्रतिपन्नोपाधिस्थस्वस्वरूपभूतनिषेधप्रतियोगित्वेन मिथ्यात्वप्रसङ्गः ॥

किञ्च अभावत्वाविशेषात् द्वितीयनिषेधवत् द्वितीयप्रतियोगिकान्योन्याभावशब्दितानां तदभेदानामपि ब्रह्मस्वरूपरूपत्वस्योक्तरीत्या दुर्वारत्वेन द्वितीयतन्निषेधो भिन्नत्वेऽपि तदाश्रयत्वात् द्वितीयराश्यन्तर्गतभेदाभिन्नत्वेऽपि तदाश्रयत्वसम्भवेन द्वितीयप्रतियोगिकभेदाश्रयतया ब्रह्मणो वास्तवद्वितीयत्वप्रसङ्गः । तस्मादद्वैतश्रुतेः सर्वात्मकत्वश्रुतेश्च न यथाश्रुतार्थो अङ्गीकार्यः ॥

॥ इति अद्वैतश्रुतेः यथाश्रुतार्थनिराकरणम् ॥

अपि च अद्वैतश्रुतिबलेन निषेधवद् ध्वंसशब्दितनिवृत्तेरपि ब्रह्मस्वरूपरूपत्वाश्यम्भावेन माया तन्निवृत्त्योरपि तुल्यसत्त्वेन विरोधात् ब्रह्मरूपस्वनिवृत्तेः सर्वदा सत्त्वेन सर्वमपि

जीवचैतन्यं निर्विशेषब्रह्मचैतन्यवत् सर्वदा कारणभूतमायाया अभावेन तद्विक्षेपरूपः दुःखादिरहिततया नित्यमुक्तं स्यात् ॥ एतेन –

**'निवृत्तिरात्मामोहस्य ज्ञातत्वेनोपलक्षितः ।**
**उपलक्षणहानेपि स्यान्मुक्तिः पाचकादिवत्'**

इति निरस्तम् ॥ मायानिवृत्तिवदुपलक्षणहानस्यापि ब्रह्मस्वरूपरूपत्वेनोपलक्षणभूतज्ञानोदयात् प्रागपि सत्वेन मोक्षार्थमयत्नापत्तेः । भङ्ग्यन्तरेण वेदान्तजन्यज्ञानातिरेकेण मुक्तिरेव नास्ति इत्यङ्गीकारापत्तेश्च । अपि चैवं द्वितीयाभावस्य ब्रह्मस्वरूपरूपत्वे ब्रह्मणो भावरूपत्वाभावप्रसङ्गः । नह्यनुपलब्धिप्रमाणसिद्धोऽभावो भावात्मक इति क्वचित् दृष्टचरम् ॥

अपि च भावरूपाभावाभावः अभावरूप इति नियमात् ब्रह्मणो भावरूपाभावरूपत्वे तदभावस्य तद् द्वितीयप्रपञ्चस्यानादेः प्रागभावत्वप्रसङ्गः, सादेः प्रध्वंसत्वप्रसङ्गश्चेति ब्रह्मणोऽपि घटादिवदुत्पत्तिविनाशप्रसङ्गः ॥

एतेनाद्वैतश्रुतिः ब्रह्मव्यतिरिक्तं भावरूपं द्वितीयं नेत्यर्थपरेति निरस्तम् । उक्तबाधकादेव । सङ्कोचे तत एव ब्रह्मातिरिक्तभावातिरिक्तं द्वितीयं नास्ति इत्यर्थपरतयाऽपि सङ्कोचः किन्नाश्रीयते? नहि ब्रह्मणि भावरूपप्रपञ्चविधायकश्रुतिरद्वैतश्रुतेर्नबाधिकेत्यत्र विशेषहेतुरस्ति । नच भावाभावोभयव्यतिरेकेणान्यस्य द्वितीयस्य ब्रह्मण्यप्रसक्तेरद्वैतश्रुतिरेवं सति निर्विषयैव स्यादिति वाच्यम् । 'अस्मान्मायी सृजते विश्वमेतत्' (श्वे-उ-४-९) इत्यादि 'मायि'शब्दसमभिव्याहृतश्रुत्यर्थानवधारणप्रयुक्तमायिकत्वप्रसक्तिसत्त्वेनाद्वैतश्रुतेः 'मायिकं द्वितीयं नास्ति' इत्यर्थपरतया निर्विषयत्वासिद्धेः । नचैवमश्रुतकल्पनाप्रसङ्गः । तत्राऽश्रुतत्वेऽप्यन्यत्रोक्तवाक्ये श्रुतत्वात् । नहि वाक्यान्तरपर्यालोचनबलेन लब्धोऽर्थोऽनादरणीय इत्यस्ति । तथासति मीमांसावैयर्थ्यापत्तेः ॥

एतेन द्वितीयाभावोपलक्षिते तदुपहिते वा ब्रह्मचैतन्ये सत्यादिपदानां लक्षणेति निरस्तम् । केनचिद्रूपेण लक्षणीयवस्तूपस्थितिं विना लक्षणावृत्तेः एव दुर्ग्रहात्, तद्रूपोपस्थितिपूर्वकं लक्षणाग्रहे यच्छब्देऽपि तत्प्रकारकत्वं दुर्वारमिति वदन्तं प्रति द्वितीयाभावोपलक्षणत्वोक्तेस्तदुपाधित्वोक्तेश्चासङ्गतत्वात् ॥

अपि च लक्षणा हि मुख्यार्थसम्बन्धरूपैव, नान्या । नच 'अनन्त'पदस्य मुख्यार्थोऽन्यः सम्भवति । येन तस्य तत्सम्बन्धिनि चिन्मात्रे लक्षणेति स्यात् ॥

अपि चैवं लक्षणासाधकसद्भावादङ्गीक्रियते किं वा बाधकाभावात् । नाद्यः । निरस्तत्वात् । न द्वितीयः । गन्धर्वनगरादेरप्यङ्गीकारप्रसङ्गात् बाधकस्योक्तत्वाच्च ॥

ननु 'तमेवं विदित्वाऽतिमृत्युमेति नान्य पन्था विद्यतेऽयनाय' इत्यादिश्रुत्या ब्रह्ममात्रज्ञानस्यैवोपायान्तरनिरासपूर्वकं मोक्षं प्रति साधनत्वाऽऽवेदनात् तादृशब्रह्मज्ञानस्य च मानान्तरेणासम्भवात् वेदान्तेनैव सम्पादनीयत्वेन तस्य मुख्यवृत्त्या तत्सम्पादकत्वायोगेन तादृशज्ञानसिद्ध्यर्थमेव मुण्डितचिन्मात्रा वेदान्तगतसत्यादिपदानां लक्षणाऽङ्गीक्रियत इति चेन्न । केनचिद्रूपेण लक्षणीयवस्तूपस्थितिं विना लक्षणकल्पनानुपपत्तेरुक्तत्वात्(१) । नहि त्वदिच्छामात्रेणैव तादृशलक्षणासिद्धिः । तथा सति लक्षणां विनैव तत एव त्वदभिमतमुण्डितचिन्मात्रज्ञानसम्भवात् तत्स्वीकारवैयर्थ्यात् । धारावाहनस्थले पूर्वस्य घटज्ञानस्योत्तरघटज्ञाने विशेषणज्ञानत्वेनैव ब्रह्मान्यविषयस्यापि ब्रह्मज्ञानस्य तज्ज्ञानत्वेनैव मोक्षहेतुत्वमभिप्रेत्य तच्छ्रुतिप्रवृत्तिसम्भवाच्च ॥

अपि च 'तमेवं विदित्वा' इति श्रुत्यनुरोधेन चिन्मात्रविशेष्यक(विषयक-पा)ज्ञानस्यैव मोक्षसाधनत्वं नान्यस्येति स्वीकुर्वता नैयायिकेन चक्षुरादिना वैशिष्ट्यानवगाहिघटघटत्वादिगोचरनिर्विकल्पकवत् त्वयापि वेदान्तगतपदैस्तादृशब्रह्मनिर्विकल्पकं स्वीक्रियतां नतु तच्छ्रुत्यनुरोधेन सर्ववेदान्तानाम् मुख्यार्थेषु तन्निरूपितवाक्यार्थेषु च कर्मकाण्डरीत्या अक्लृप्तावान्तरतात्पर्यं महातात्पर्यं त्यक्त्वा चिन्मात्रे लक्षिते पदार्थैकदेशे अन्यत्राक्लृप्ततात्पर्यं, तथा च सति बहुविप्लवापातात् । अन्यथा

**'सर्वे वेदा यत्पदमामनन्ति',**
**'सर्वे वेदा यत्रैकं भवन्ति',**
**'वेदैरनेकैरहमेव वेद्यः',**
**'वेदैश्च सर्वैरहमेव वेद्यः'**

---

(१) तद्रूपोपस्थितिपूर्वकं लक्षणाग्रहे इत्यादिना उक्तत्वादित्यर्थः ॥

इत्यादि श्रुतिस्मृत्यनुरोधेन कर्मकाण्डस्यापि लक्षणया चिन्मात्रपरत्वमस्वीकृत्य कर्मादि-परत्वमस्वीकार्यं स्यात् । तथा च यागेष्टसाधनत्वादेर्वेदात् प्रतीतत्वेऽपि वेदतात्पर्य-गोचरत्वेनातत्प्रमाणकत्वापत्त्या स्वर्गाद्यर्थं यागाद्यननुष्ठानप्रसङ्गः । तत्रैवं श्रुतिपीडाऽनुचितेति यदि तव मतिस्तर्हि तुल्यन्यायतया वेदान्तभागेष्वपि तव तथा मतिः किन्न भवितुमर्हति? किमविचारितरमणीयेन कर्णकठोरेण त्वद्वचनेनेति ॥

## ॥ अथ प्रसङ्गात् परोदीरित 'तत्त्वमसि' श्रुत्यर्थनिराकरणम् ॥

एतेनैव मुख्यार्थान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा लक्षणायां बीजम् । तथा च तत्त्वमसीत्यादिवाक्ये मुख्यार्थान्वयानुपपत्तेः सत्त्वात् विनिगमनाविरहाच्च पदद्वये लक्षणा सत्यज्ञानादि(१) वाक्ये तु श्रुतिप्रतिपन्नचिन्मात्रविषयकवेदान्तजन्यज्ञानमोक्षसाधनत्वान्यथा-नुपपत्तिकल्प्य वेदान्तचिन्मात्रपरत्वान्यथानुपपत्तेः सत्वात् विनिगमनाविरहाच्च, सत्यादिपदेषु सर्वत्र लक्षणेति निरस्तम् ॥

'तत्त्वमसि'इत्यत्र तत्पदस्य सर्वनामप्रतिरूपकाव्ययत्वेन तस्मिन्नित्याद्यर्थेष्वपि वृत्ति-सम्भवेन 'तस्मिन् त्वमसि' इत्याद्यर्थपरतया मुख्यार्थान्वयानुपपत्तेरेवाभावात् । नह्यभेद एव तद्वाक्यमुख्यार्थ इत्यत्र विशेषहेतुरस्ति ॥

किञ्चाभेदार्थत्वेऽपि नीलमुत्पलमित्यत्रेव(२) 'तत्त्वमसि' इत्यत्रापि लक्षणां विनैव विशेष्यमात्राभेदान्वयोपपत्त्या लक्षणास्वीकारवैयर्थ्यात् । प्रत्यक्षादेः श्रुत्यपेक्षया दौर्बल्य-मङ्गीकुर्वता तद्विरोधकृतमुख्यार्थान्वयानुपपत्तेरनादरणीयत्वेन परपक्षे मुख्यार्थान्वयानुपपत्ते-र्लक्षणाबीजत्वस्यैव दुर्लभत्वाच्च । 'तत्-त्वम्'पदयोः सर्वनामत्वेन सर्वविश्वादिपदवत् लक्षणाया अयोगाच्च । अन्यथा सर्वनामत्वव्याहतेः । 'घटो द्रव्यम्' इत्यत्रेव 'तत्त्वमसि' इत्यत्र लक्षणां विनैव विशेष्यमात्रभेदान्वयसम्भवेऽपि चिन्मात्रलक्षणेतिवदता तेज-स्तिमिरमित्यत्रेव तत्त्वमसीत्यत्राप्यभेदान्वये विशेष्यांशेऽपि विशेषणांश इव प्रत्यक्षमेव बोधकमस्तीति तव मनसि स्फुरतीत्युन्नयनाच्च । 'तस्य त्वं तत्त्वम्' इति तत्पुरुषाश्रयणेना-

(१) लक्षिणा सत्यज्ञानादिवाक्ये इति ताळपत्रस्थ पाठः ॥

(२) नीलमुत्फलमित्यत्रैव इति ताळपत्रस्थ पाठः ॥

तत्त्वमसीति भेदाश्रयणेन वा मुख्यार्थान्वयोपपन्नत्वस्य सुज्ञानत्वेनोक्तलक्षणाबीजानुपपत्तेरेव अप्रसराच्च । नहि कथञ्चिदपि मुख्यार्थान्वयोपपत्तिसम्भवे सर्वथा तदनुपपत्तिरूपलक्षणाबीजं सम्भवति ॥

## ।। अथ प्रसङ्गात् परोदीरित'तत्त्वमसि'श्रुत्यर्थनिराकरणम् ।।

नच षष्ठीतत्पुरुषपक्षेऽपि सम्बन्धे सम्बन्धिनि वा लक्षणापातात् साम्यं पक्षान्तरेत्वश्रुत नञ्कल्पनं दोष इति वाच्यम् । समासे शक्तिः इति पक्षे उक्तदोषाप्रसरात् । परपक्षे लक्षणद्वयाश्रयणेन गौरवात् । अतत्वमसीति नञो श्रुतत्वेऽपि 'अथ योऽन्यां देवतामुपास्ते' इत्यादाविव 'अकः सवर्णे दीर्घः' (पा-सू-६-१-१०१) इत्यादिशास्त्रपर्यालोचनया स्वीकारार्हस्य सर्वथानुपस्थिते चिन्मात्रे कल्प्यलक्षणाद्वयापेक्षया लघुत्वेनादरार्हत्वाच्च[१] । सत्यज्ञानानन्दादि-शब्दस्यापि(पदेष्वपि-पा) न तात्पर्यानुपपत्त्या लक्षणाकल्पनं युज्यते । पराभिमता-प्रामाणिकचिन्मात्रे तात्पर्यसत्व एव मानाभावात् । 'ब्रह्मविदाप्नोति परम्' इत्यसञ्जातोप-क्रमबलेन ब्रह्मशब्दस्यापि ब्रह्मत्वविशिष्टपरत्वावधारणेन तदेव ब्रह्म किं लक्षणकमिति प्रश्ने तदुत्तरत्वेन प्रवृत्तस्य सत्यज्ञानादिवाक्यस्य तदविरोधेन प्रतीयामानमश्रुतसत्यत्वादिविशिष्ट-परतया एव न्याय्यात् ॥

## ।। अथ 'तमेवम्' इति श्रुतेः परमतनिरसनपूर्वकार्थकथनम् ।।

नच 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था' इत्यादिब्रह्मचैतन्यमात्रगोचरज्ञान-मोक्षसाधनत्वाऽवेदकश्रुत्यन्यथानुपपत्त्या वेदान्तमात्रस्याखण्डचिन्मात्रपरत्वमवधारितं, तद-न्यथानुपपत्त्या च तादृशज्ञानसिद्ध्यर्थमेव तद्वेदान्तगतस्य ज्ञानादिपदानां तादृशचिन्मात्रे लक्षणाङ्गीक्रियते, तस्योपायान्तरासाध्यत्वादिति वाच्यम् ।

'तमेवं विदित्वाऽतिमृत्युमेति';
'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ'

इत्यादौ पूर्वप्रकृतविशिष्टापरामर्शिप्रथमश्रुत'तम्'इति तत्शब्दाविरोधाय चरमश्रुत'एव'कारस्य

---

(१) लघुत्वेन अनादरार्हत्वाच्च इति पाठः स्यात् ॥

'तत्'शब्दार्थभूतपरमात्ममात्रविशेष्यकज्ञानत्वेनैव तज्ज्ञानस्य मोक्षसाधनत्वं नान्यस्येति तद्वाक्यानां तात्पर्यमित्यर्थत्वेन तस्य परमात्मज्ञानमोक्षहेतुत्वेन विवक्षिते तत्तद्वाक्यगत-प्रवृत्तिनिमित्तभूतधर्मप्रकारकत्वाव्यावर्तकत्वात् । तथा च न तदन्यथानुपपत्तिर्वेदान्तानां पराभिमताऽप्रामाणिकाखण्डचिन्मात्रपरत्वकल्पिका यदन्यथानुपपत्तिबलेन तादृशज्ञानसिद्ध्यर्थं तादृशचिन्मात्रे लक्षणावश्यकी स्यात् । अन्यथा'एव'कारस्य मोक्षसाधनत्वेनोक्तपरमात्म-ज्ञाने अन्यकर्मत्वरूपान्यविशेषिते व्यावर्तकत्ववदन्यप्रकारकत्वव्यावर्तकत्वे 'तमेवं विद्वानमृत इह भवति नान्य पन्था' इत्यादि 'तम्'इति द्वितीयार्थपरमात्म-कर्म-ज्ञान-मोक्षसाधन-त्वाऽवेदकश्रुत्यन्तरे 'एवं विद्वान्' इति प्रकारवाचि 'एवम्'शब्दानुपपत्तिः ।।

अथवाऽस्तु 'तमेवं विद्वान्' इत्यादिसावधारणवाक्यं ब्रह्मचैतन्यमात्रविषयक-वेदान्तजन्यज्ञानस्यैव मोक्षसाधनत्वावेदकम् । तथा च न वेदान्तानां पराभिमतचिन्मात्र-परत्वसिद्धिः । यदनुपपत्त्या तादृशब्रह्मज्ञानार्थं लक्षणावश्याङ्गीकार्या । प्रमाणजातीये चक्षुरादौ क्लृप्तस्य संसर्गासंसर्गधीहेतुत्वस्य वेदान्तेषु कल्पनमात्रेणोपपन्नस्य 'तमेवं विदित्वा' इत्यादि-वाक्यस्य पराभिमतचिन्मात्रे तात्पर्यकल्पकत्वायोगात् ।।

।। इति 'तमेवम्'इति श्रुतेः परमतनिरसनपूर्वकार्थकथनम् ।।

तथाऽपि चक्षुरादिजन्यघटादिनिर्विकल्पकं संसर्गागोचरमपि घटादिधर्मिवत् तदन्य-घटत्वादिवत् धर्मगोचरमपि नैयायिकादिभिराद्यप्रत्यक्षसविकल्पकान्यथानुपपत्त्या स्वीकृतम् । तथाऽपि चरमवृत्तेर्मोक्षैकफलकत्वेन सिद्धाया ब्रह्मवत्-सार्वज्ञत्व-सर्वशक्तित्व-सत्य-कामत्वादिश्रुतितात्पर्यगोचरत्वेन पारमार्थिकत्वेऽपि ब्रह्मचैतन्यरूपधर्मिमात्रविषयत्वमेव कल्पयितुं युक्तम् । अन्यथोक्तरीत्या ब्रह्मणः सकलवेदप्रतिपाद्यत्वाऽवेदकानेकश्रुत्यन्यथा-नुपपत्त्या ब्रह्मकाण्डवत् कृत्स्नकर्मकाण्डस्यापि ब्रह्मपरत्वं परिकल्प्य तदन्यथानुपपत्त्या मोक्षसाधनभूतज्ञानसिद्धये कर्मकाण्डगतसकलपदानामपि तादृशब्रह्मचैतन्ये लक्षणा स्वीकार-प्रसङ्गः । एवं च कर्मकाण्डे किमपि वाक्यं कर्मादिपरं न स्यादिति तदनुष्ठानेऽपि भ्रान्त-कृतचैत्यवन्दनाद्यनुष्ठानवत् फलाभावप्रसङ्गः । वेदात् प्रतीतस्यापि तस्य वेदतात्पर्यागोचरतया तत्तत्तात्पर्यगोचरस्यैव वेदार्थत्वेनान्यस्यातथात्वेन चैत्यवन्दनवाक्यार्थतुल्यत्वात् । एवं

ब्रह्मकाण्डगतश्रवणादिविधिवाक्येषूपासनादिविधिवाक्येषु 'नेह नाना' इत्यादिनिषेधवाक्येषु चोक्तातिप्रसङ्गाव्याहतप्रसर इति ॥

नन्वेवं ब्रह्मकाण्डकर्मकाण्डयोरुभयोरपि तादृशचरमवृत्तिमात्रफलकत्वेन फलान्तराभावात् । अर्थावबोधपर्यन्तो विचारो अध्ययनविधिप्रयुक्तो वा उत्तरक्रतुविधिप्रयुक्तो वा-श्रवणादिविधिप्रयुक्तो न स्यात् । एवं विवरणकृन्मते अध्ययनविधिरक्षरावाप्तिफलक इत्यपि न स्यादिति चेन्न । त्वदुक्तन्यायसाम्येनायमपि दोषस्तवैव पक्षे नत्वस्मत्पक्ष इतीष्टापत्तेः ॥

अपि चैवंविध दोषाद्भीतस्य कथं तव 'तमेवं विदित्वाऽतिमृत्युमेति' इत्यादिज्ञानमोक्षसाधनत्वाऽवेदकश्रुतीनां स्वार्थपरत्वं विना मोक्षज्ञानयोः साध्यसाधनभावसिद्धिः?, तत्परत्वे च कथं सकलवेदान्तानां लक्षणया अखण्डचिन्मात्रपरत्वसिद्धिः? उभयपरत्वे च कथं न वाक्यभेदः? *(कथं वा न सम्भवतः?) 'तमेवं विदित्वा' इत्यादिज्ञानमोक्षसाध्यसाधनभाववेदककतिपयवेदान्तवाक्यातिरिक्तसकलवेदान्तवाक्यानां तथाविधब्रह्मपरत्वाङ्गीकारे च कथं श्रवणादेर्विहितत्वासिद्धिः? । तदसिद्धौ च नियमविध्याद्यभावेन भाषाप्रबन्धादिजन्यब्रह्मज्ञानस्य कथं मोक्षसाधनत्वव्यावृत्तिः? (*) तालपत्रस्थपाठः ।

## ॥ अथ प्रसङ्गात् परोदीरित'यदेव विद्यया'इति श्रुत्यर्थकथनम् ॥

किञ्च 'स्थाणुरयं भारवहः केवलो भूर्दधीत्यवेदं न विजानाति योऽर्थम्' इति निन्दाविकल्पितविधिना गुरूपसन्नस्येव ब्रह्मेतरवेदार्थज्ञानस्यापि निर्विकल्पकरूपचरमवृत्त्यङ्गत्वमस्तु । अत एव 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति' (छां.उ१.१.१०) वाक्यमपि सङ्गच्छते । विद्यया = ब्रह्मेतरवेदजन्यज्ञानेन, यदेव = चरमवृत्तिरूपमेव, ब्रह्मज्ञानं करोतीत्यर्थः । कर्मवतः(कर्मवत्-पा) प्रतीयमानवाक्यार्थज्ञानरूपविद्यायाश्चित्तशुद्धिद्वारा चरमवृत्त्युपयोगसम्भवात्, तस्मात् सर्वे वेदान्ता अखण्डचिन्मात्रपरा इति स्थिते तदन्यथानुपपत्त्या तद्गतसर्वपदानामपि विनिगमकाभावाच्चिन्मात्रे लक्षणया अर्थवादगतपदवत् चिन्मात्रगोचरमेव वेदान्तजन्यज्ञानं मोक्षसाधनमित्युक्तम् । सत्यज्ञानादिवाक्ये प्रथमोपस्थितत्वरूपविनिगमकसत्वेन सत्यपद एव (स्यापदवएव-पा) लक्षणाङ्गीकारप्रसङ्गात् ॥

॥ इति प्रसङ्गात् परोदीरित'यदेव विद्यया' इति श्रुत्यर्थकथनम् ॥

एतेन[1] पदसमन्वयमङ्गीकुर्वतस्तवाप्युक्तःसर्वोऽपि दोषस्तुल्यः । एतावांस्तु विशेषः । मम सर्ववेदान्तानां लक्षणया अखण्डचिन्मात्रपरत्वं भवतु, स्वातन्त्र्यात् योगार्थरूपनिमित्त-सम्भवाच्च अनन्तयोगार्थरूपनिमित्तसम्भवप्रयुक्ता(ससद्भावप्रयुक्ता-पा)पर्यायत्वसकलवैदिकपदाना-मपि परममुख्यया वृत्त्या अनन्तानां नाम विष्णुवाचित्वमिति ॥

किञ्च विष्णुवत् तदितरार्थेषु वैदिकेषु लौकिकेषु च प्रवृत्तिनिमित्तसत्वेन तत्तत्-पदवाच्यत्वमस्ति न वा । आद्ये पदानां[2] विष्णावेव परममुख्यवृत्तिरिति न युज्यते । प्रवृत्तिनिमित्तवत्वाविशेषे इतरार्थवद्विष्णोरपि मुख्यत्वसम्भवेऽपि परममुख्यत्वायोगः । किञ्च विष्ण्वितरस्य सर्वस्यापि विष्ण्वधीनत्वेन सर्वान्तर्गतप्रवृत्तिनिमित्तानामपि तथात्वात्, समवेतमपि जयधनादिकं राज्याद्यधीनत्वेन कारणेनादाय राजादेर्जयादिभृत्यादिपदवाच्यत्ववत् विष्णोसर्वशब्दवाच्यत्वाङ्गीकारे कथं नातिप्रसङ्गः?॥

किञ्च यत्पदवाच्यत्वेन यावर्थौ प्रमाणसिद्धौ तयोर्मध्ये यन्निष्ठं यदप्रवृत्तिनिमित्तं यदधीनं स तत्पदस्यामुख्यार्थः स्वतन्त्रस्तु मुख्य इति व्यावस्थाश्रयणेन कथञ्चिदतिप्रसङ्गवारणेऽपि तदवारण-तादवस्थ्यम् । वस्त्वादिपदवाच्येषु सर्वनामवाच्येषु च स्वामिभृत्यादिष्वविशेषेण मुख्यत्वस्यैव दर्शनात् । नहि वस्तुपदं द्रव्यपदं सर्वनाम वा स्वामिन्येव परममुख्यं भृत्येषु (भृत्येतु-पा) मुख्यमेव नतु परममुख्यमित्यस्ति ॥

किञ्च विष्णोरेव सकलशब्दपरममुख्यार्थत्वे बाधकं विना मुख्यार्थत्यागायोगात् कर्माद्य-मुख्यार्थकरणे कारणाभावादनुष्ठापकत्वे बाधकं विना मुख्यार्थत्यागायोगात् कर्माद्यमुख्यार्थ-ग्रहणेकारणाभावादनुष्ठापकप्रमाणाभावेनाविगीततया सर्ववैदिकस्वीकृतसकलवैदिकार्थानुष्ठान-विलोपप्रसङ्गश्च ॥

किञ्च उपक्रमादितात्पर्यप्रमापकसत्वेन वेदान्तानां विष्णुपरत्ववत् कर्मादिपरत्वे वाक्यभेद-प्रसङ्गः । 'आत्मन आकाशः सम्भूतः' (तै-उ-२-३) 'अव्यक्तात्पुरुषःपरः' (कठ-उ-१-११) इत्यादि कार्यकारणभावपरापरभावाद्याऽवेदकवाक्यानामसम्बन्धार्थत्व(सम्बद्धार्थत्व-पा)प्रसङ्गः ।

(१) एतेनेत्यस्य 'नचैवमनुभवविरोधादिति परास्तम्' (पु.१४६) इत्यनेनान्वयः ॥

(२) आद्ये पद्यानाम् इति ताळपत्रस्थ पाठः ॥

तथाविधवाक्यानां विष्णुपरत्वे अपसिद्धान्ताश्च । सकलवेदानां मुख्यतो विष्णावेव तात्पर्यमिति हि त्वत्सिद्धान्तः ।।

अपि चैवमितरवद् विष्णोरपि वैदिकाकाशाव्यक्तादिशब्दमुख्यार्थत्वे अक्षादिशब्दवत् आकाशादि शब्दानामनेकार्थत्वप्रसङ्गः । अन्याय्यश्चानेकार्थत्वमिति हि न्यायः । अपि च आकाशादिशब्दानां भूताकाशादिष्वमुख्यार्थत्वे वाक्यार्थप्रतीतौ विष्णुरूपमुख्यार्थोपस्थिति तदन्वयबाधपूर्वजनिप्रसङ्गः । नचैवमनुभवविरोधादिति परास्तम् ।।

सति प्रमाणे अनेकार्थत्वाश्रयणस्यादोषत्वात्, विष्णोश्च सर्वशब्दाभिधेयत्वस्य सर्ववेदप्रतिपाद्यत्वस्य च साधितत्वात् । नचोभयपरत्वे वाक्यभेदप्रसङ्गः । विष्णाविव तदितरकर्माद्यर्थेष्ववान्तरतात्पर्याङ्गीकारेऽपि महातात्पर्यानभ्युपगमात् महातात्पर्यानेकत्वस्यैव वाक्यभेदापादकत्वात् । अन्यथा प्रयाजादिवाक्यानां स्वार्थपरत्वाभावप्रसङ्गात् ।।

नच उक्ताकाशादिवाक्यार्थानुपपत्तिः, परमात्मनो भूताकाशादिवत् सम्भूतत्वायोगात् । स्वयैव स्वापेक्षया परावरत्वायोगाच्चेति वाच्यम् । 'आत्मनः आकाशःसम्भूत' इत्यादौ 'देवदत्तः ओदनं पचति' इत्यादौ कृतिवर्तमानत्वयोराख्यार्थयोः प्रथममन्वये सति तदनन्तरं वर्तमानकृतेर्देवदत्तेन वाऽकाशशब्दार्थयोः परमात्माकाशयोः प्रथमं योग्यतया- अन्तर्यामिब्राह्मणसौबलादिश्रुत्यनुसारेण नियम्यनियामकभावेनान्वये सति तदनन्तरमाकाशनियामकः परमात्मा 'आत्मन सम्भूतः' इति विशिष्टवैशिष्ट्यान्वयसम्भवात्, 'नित्यो घटः' इत्यादौ योग्यतया नित्यत्वस्य घटत्व इव 'स्वर्गी ध्वस्तः' 'घटः पाकाद्रक्तः' इत्यादौ स्वर्गध्वंसस्येव रक्तरूपे पाकस्येव 'मृदब्रवीत्' 'आपोऽब्रुवन्' इत्यादौ मृत्-तदभिमानिदेवतयोरुभयोः मृद्शब्दवाच्यत्वादविशेषेऽपि[१] तदभिमानिदेवतयोरेव वचनकर्तृत्वस्येव च परमात्मनियम्याकाशादावात्मसम्भूतत्वस्यान्वयोपपत्तेश्च ।

'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य । सच्च त्यच्चाभवत्' (तै-उ-२-१४)
'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं सम्प्राविशत् प्राञ्चोऽहं प्रत्यञ्चोऽहम्'
(अथ-शि-उ-१)

---

(१) मृदशब्दवाच्यत्वादविशेषेऽपि इति ताळपत्रस्थ पाठः ।।

इत्यादिश्रुत्यनुसारेण,

> **'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
> **तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्'** (भ-गी-१०-४१)

इत्यादिस्मृत्यनुसारेण च भूताकाशादेः वाय्वादिसम्भवकारणत्वरूपविभूतेः तत्र परमात्माभिव्यक्तिरूपतत्सम्बन्धविशेषं विनाऽयोगेनाकाशादौ परमात्माभिव्यक्तिविशेषरूपसम्भवस्यात्मशब्दितात् मूलकारणभूतात् स्वस्मादेव स्वस्मिन्नाकाशादिशब्दिते परमात्मनि सत्वाच्च । नचैवं 'सम्भव'शब्दार्थस्य ज़न्माद्यनेकार्थरूपत्वेन वाक्यार्थनिकत्वप्रसङ्गः, न्यायप्राप्तस्य सह्यत्वात् ।

अपि च 'आकाश'शब्दस्य मयेव परेणापि भूताकाशवत् तदभिमानिदेवताया ब्रह्मचैतन्यस्य चार्थत्वेन स्वीकारात् तयोश्च भूताकाशवत् सम्भूतशब्दमुख्यार्थान्वयसम्भवात् तत्र तदमुख्यार्थमादायाप्यन्वयाभ्युपगमात् तुल्यः परस्यापि वाक्यभेदः । 'अव्यक्तात् पुरुषः परः' इत्यादावप्यव्यक्ततत्वतन्नियामकपरमात्मरूपविशेषयोरुभयोरव्यक्तशब्दवाच्यत्वेऽप्यव्यक्तनिष्ठपुरुषावरत्वस्याव्यक्तत्वेन सम्बन्धेन सत्वं, तेन सम्बन्धेन तन्नियामकपरमात्मरूपविशेषअसत्वेऽपि तदधीनत्वेन सत्वात् तत्तत्त्व इव तन्नियामक रूपविशेषेऽपि तस्यान्वयेनानुपपन्नः । पुरुषशब्दिते परमात्मन्यव्यक्तशब्दितलक्ष्मीतत्वात्परत्वान्वयवत् 'तत्'शब्दिततत्तन्नियामकपरमात्मरूपविशेषात् परत्वान्वयस्यासम्भवात् त्याग इति किमसम्बद्धम्?॥

अत एव 'महतः परमव्यक्तम्' इति पूर्ववाक्ये महदव्यक्तशब्दितपरमात्वरूपविशेषयोरपि तत्तत्वनिष्ठपरावरत्वयोस्तदधीनत्वेन सत्वात् अन्वयो अङ्गीकृतः सति सम्भवे त्यागायोगात् । यदुक्तं[१] विष्णोरेव सकलशब्दमुख्यार्थत्वे बाधकं विना तत्त्यागायोगात्, सर्वत्र वाक्ये तस्यैव पदार्थविधया वाक्यार्थविधया ग्रहणापातेन कर्मादिग्रहणाभावेन तदनुष्ठापकप्रमाणाभावात् तदनुष्ठानविलोपप्रसङ्ग इति । तन्न । अभेदे साध्यसाधनभावायोगेन परमात्मन एव मोक्षरूपफलत्वं तस्यैवोपायत्वं चेत्यसम्भवात् । तथा सति मोक्षार्थं सम्पादनीयाभावेन सर्वेषामपि नित्यमुक्तत्वापत्तेः संसारानुपलम्भप्रसङ्गात् । लोके राजतत्पुत्रयोः राज-

(१) किञ्च विष्णोरेव सकलशब्दपरममुख्यार्थत्वे इत्यादिना उक्तमित्यर्थः ॥

शब्दार्थत्वाविशेषेऽपि पुत्रस्य राजाधीनत्वेनामुख्यत्वेऽपि प्रकरणादितात्पर्यनिश्चायकानवतारदशायां 'राज'पदेन तदमुख्यार्थभूततत्पुत्रमादायाप्यन्वयवत् वेदेऽपि तथा कर्मादमुख्यार्थानामपि परमात्मन्येव परममुख्यवृत्तिमद्भिरेव पदैः तात्पर्यनिश्चायकप्रमाणानवतारदशायां परममुख्यत्वाग्रहदशायां वोपस्थितिसम्भवात् ।

'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था',

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन'

(बृ-उ-६-४-२२)

'सर्वकर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते' (भ-गी-४-३३)

'भिद्यते हृदयग्रन्थिः' (आ-उ-४-१०)

इत्यादिवाक्यार्थावधारणसम्भवात् पश्चात् मुख्यार्थभूतपरमात्मनः सामग्रीबलात्तैरेवपदैस्तेन तेन रूपेणोपस्थितावपि स्वस्यैव स्वं प्रत्युपायत्वायोगादिरूपोक्तबाधकेनान्वयावधारणात्[१] गृहीतमोक्षज्ञानकर्मादिसाध्यसाधनभावत्यागोपपत्तेः । नहि विष्णोः परममुख्यत्वे सकलवेदमुख्यतात्पर्यगोचरत्वे च प्रमाणमस्तीत्येतावता सर्वेषां तथैव तेनोपस्थापनीय इति विशेषकारणं पश्यामः ।।

यदपि[२] विष्णोरितरवत्तत्तत्पदप्रवृत्तिनिमित्तवत्वे मुख्यत्वमेव स्यात्, नतु परममुख्यत्वमिति । तदपि न । लक्षणगौणीभ्यां रूढेरिव रूढिमात्राद्योगरूढेरिव योगरूढिमात्रात् तद्द्वयसहितस्वातन्त्र्यस्य-मुख्य-मुख्यतर-मुख्यतम-व्यवहारप्रयोजकत्वोपगमात् । नच सर्ववैदिकपदानां विष्णौ योगे रूढौ च मानाभावः । 'कश्छन्दसां योगमावेद धीर' (ऋ-सं-१०-१९-९) इत्यादिश्रुत्या च्छन्दःशब्दितसकलवैदिकविष्णौ योगस्य दुर्विभाव्यत्ववचनान्यथानुपपत्तेरेव तत्र मानत्वात् । नचात्र योगः संसर्गः च्छन्दांसि तु वेदा इति वाच्यम् । योगशब्दस्य रूढिशब्दस्येव शब्दसम्बन्धिनिवृत्तिविशेषे रूढत्वात् बाधकं विना रूढार्थत्यागायोगाद् विशेषशब्दस्य सामान्यपरत्वे लक्षणापत्तेश्च । तावत् पदातिरिक्तच्छन्दसामेवाभावेन च्छन्दःपदसमभिव्याहारस्य बाधकत्वात् ।।

(१) अन्वयअनवधारणात् इति पाठः स्यात् ।।

(२) यद्यपि इति ताळपत्रस्थपाठः ।।

एतेन च्छन्दःपदेन वेदग्रहणमिति निरस्तम् । वेदशब्दार्थस्यापि तावत्पदातिरेकेणाभावात् । नच पदानामानुपूर्वीविशेषः पदातिरिक्त एव वेदशब्दार्थ इति वाच्यम् । विनिगमकाभावेन तादृशानुपूर्वीकपदानामेव वेदशब्दार्थत्वात् ॥

ननु तथाऽपि सकलवैदिकपदानां विष्णौ योग इत्यत्र किं मानमुपन्यस्तमिति चेन्न ।

**'सर्वे वेदा यत्पदमामनन्ति'**

इत्यादिश्रुत्या विष्णोरेव मुख्यतः सकलवेदप्रतिपाद्यत्वे सिद्धे –

**'नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्'**(१)

**'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'**

**'यो देवानां नामधा एक एव'** (ऋ-सं-१०-१९-९)

**'ब्रह्मैव वाचः परमं व्योम'**

इत्यादिश्रुत्या रूढ्या सकलवैदिकानां मुख्यार्थत्वे(२) च सिद्धे

**'यमन्तः समुद्रे कवयो वयन्ति'** (म-ना-उ-१-३) इत्युपक्रम्य,

**'तदेव ब्रह्म परमं कवीनामाहुः'**

इतिश्रुत्या विष्णोरेव च विद्वद्रूढ्या ब्रह्मशब्दार्थत्वे सिद्धे

**'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तोऽह्यस्मिन् गुणाः ।**
**अथ कस्मादुच्यते ब्रह्मेति तस्मादुच्यते परं ब्रह्मेति'**

**'बृहबृंहिवृद्धौ'**

इति श्रुति-पाणिनि-स्मृतिपर्यालोचनया तस्यैव गुणपूर्णत्वे सिद्धे तदुपपादनाय प्रत्यासन्नतया विष्णावेव तद्वाचितया सिद्धे, सर्ववैदिकनाम्नां योगवृत्तेरपेक्षितत्वेन 'कश्चन्दसाम्' इति श्रुतेरपि तद्विषयत्वोपगमात् ॥

---

(१) जिज्ञासाधिकरणसूत्रभाष्योदाहृत भाल्लवेयश्रुतिः ॥

(२) सकलवैदिकानाममुख्यार्थत्वे इति ताळपत्रस्थ पाठः ॥

एतेन रूढ्या राज-तदधीनयोः साधारणस्य वस्तुपदस्य द्रव्यपदस्य-यत्तदादिसर्वनाम्नो वा राजन्येव परममुख्यत्वापत्तिः वस्त्वादिपदवाच्यत्वे सति भृत्यादि उपेक्षया[१] स्वातन्त्र्यस्य परममुख्यत्वप्रयोजकस्य तत्रैव सत्वादिति निरस्तम् । योगविशिष्टस्यैवोक्तस्य तत्प्रयोजकत्वोपगमात् । नहि वस्त्वादिपदानां राजनि वाऽन्यत्र वा योगे मानमस्ति ॥

एतेनैव विष्णोरेव सर्वशब्दपरममुख्यार्थत्वे सर्वत्र अमुख्यार्थभूतकर्मादिसंसर्गप्रतीतेः 'गङ्गायां घोषः' इत्यादौ मुख्यार्थोपिस्थितितद्बाधपूर्वकवाक्यार्थप्रतीतिवत् परममुख्यार्थ-भूतपरमात्मोपस्थितितद्बाधकपूर्वकजनिप्रसङ्गः इति परास्तम् । तथैव व्युत्पन्नात् प्रत्येव-मापादनेऽस्य दृष्टत्वात् । अव्युत्पन्नात् प्रत्यापादकाभावात् । अन्यथा प्रवाहे गङ्गापदस्य शक्तिमगृहीतवतोऽपि तथा प्रतीतिप्रसङ्गात् । तस्मात् पदमात्रसमन्वय इत्यस्मत्पक्षे न काऽप्यनुपपत्तिः ॥

## ॥अथ 'तत्तु समन्वयात्'इति सूत्रस्य द्वैतमतानुसारेणार्थकथनम् ॥

अत एव भगवता सूत्रकारेणाऽपि जन्मादिसूत्रे जन्मादिकारणत्वोपलक्षितगुणपूर्णत्वं जिज्ञास्य ब्रह्मलक्षणमभिप्रेत्य तस्यातिव्याप्तत्वशङ्कानिरासाय 'शास्त्रयोनि'सूत्रे तत्र शास्त्रं प्रमाणीकृत्य तत्वेन, तत्तु = तदेव = जिज्ञास्यत्वेनोक्तं महायोगविद्वद्रूढिभ्यां 'ब्रह्म'शब्दितं विष्णुरूपमेव वस्तु, शास्त्रयोनि, न रुद्रादिरूपमिति प्रतिज्ञाय, 'तत्तु समन्वयात्' (ब्र-सू-१-१-४) इति सूत्रे 'समन्वयात्' इति महातात्पर्यसाधनाय गुणपूर्णत्वसाधनस्य च तत्र सकलवेदवाक्यानां तद्गतसकलपदानां चोपक्रमादिलिङ्गसमुदायो वाचकभावश्च[२] हेतूकृतः ॥

तथा हि । सम्यगन्वीयते = सकलवेदवाक्यमहातात्पर्यगोचरतया, सम्बध्यते = बोध्यत इति यावत् विष्णुरनेनेति समन्वयः = उपक्रमादिलिङ्गसमुदायः, सं = सम्यक्, अन्वयः = सकलपदानां सम्बन्धः, रूढियोगशब्दितवाचकत्वात्मक इति यावत् तस्मात् इति सूत्रार्थः ॥

तथा च विष्णुरेव जगज्जन्मादिकारणत्वाद्युपलक्षितानन्तकल्याणगुणविशिष्टतया सकल-शास्त्रेण प्रतिपाद्यः, न रुद्रादिः, विष्णावेव सम्यक् शास्त्रे विचार्यमाणे शास्त्रतात्पर्यलिङ्गोप-

(१) अपेक्षया इति पाठः स्यात् ॥

(२) वाचकाभावश्च इति ताळपत्रस्थ पाठः ॥

क्रमादेः सत्वात् रुद्रादौ तदभावाच्चेति शास्त्रीयसकलपदानां महायोगविद्वद्रूढिभ्यां विष्णुमात्र-वाचकत्वाच्चेति पर्यवसितम् ॥

॥ इति 'तत्तु समन्वयात्' इति सूत्रस्य द्वैतमतानुसारेणार्थकथनम् ॥

ननु 'तत्तु समन्वयात्' इति सूत्रस्योक्तार्थे सूत्रकारस्य विवक्षायां किं मानमिति चेत् । शृणु । 'अथातो ब्रह्मजिज्ञासा' (ब्र.सू- १-१-१) इति सूत्रेण प्रथमं ब्रह्मजिज्ञासां विधाय, ब्रह्म किं लक्षणमिति जिज्ञास्यमिति जिज्ञासायां 'जन्माद्यस्य यतः' इत्येव लक्षणसूत्रे कर्तव्ये तत्र जन्मादीति लक्षणान्तरपरिग्रहार्थादिपदवैयर्थ्यात् लक्षणसूत्रस्य 'यतो वा इमानि भूतानि जायन्ते' इति श्रुत्यनुसारितया तत्रादिपदवैयर्थ्ये च –

'सत्यं ज्ञानमनन्तं ब्रह्म', 'नित्यं विज्ञानमानन्दं ब्रह्म',
'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'

इत्यादिश्रुत्युपात्तब्रह्मासाधारणधर्माणामसूत्रेण कारणाभावेन

'जन्माद्यस्य यतः' (ब्र-सू-१-१-२)

इति सूत्रस्येतरलक्षणोपलक्षणार्थत्वस्यावश्यकत्वात् । नहि

'तमीश्वराणां परमं महेश्वरम्' (श्वे-उ-६-७)
'न तत्समश्चाभ्यधिकश्च दृश्यते', 'न तस्य शोकश्च न',
'तस्य नाम महद्यशः' (म-ना-उ-१-१०)
'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वे-उ-३-१९)
'तमेवं विदित्वाऽति मृत्युमेति'
'सत्यकामः सत्यसङ्कल्पः' 'यस्सर्वज्ञः सर्ववित्'

इत्यादिश्रुतिपन्ना (प्रतिपन्ना-पा) धर्मा न असाधारणाः ॥

नचैतत् प्रतिपादकश्रुतीनामतत्परत्वम् । उन्मत्तप्रलापसमत्वापत्तेः । तथा च लक्षण-सूत्रानुसारेण शास्त्रयोनिसूत्रमपि जगज्जन्मादिकारणत्वोपलक्षितान् अतिप्रसक्तकल्याणविशिष्टे एव ब्रह्मशब्दार्थे शास्त्रं प्रमाणीकर्तुं प्रवृत्तमिति वाच्यम् । एवं चैतमेवार्थं सामान्यतः प्रतिज्ञाय

तत्साधनाय 'तत्तु समन्वयात्' इति सूत्रेणोक्तरीत्या हेतुद्वयोपन्यासः सूत्रकृत इत्यकामेनापि स्वीकार्यमिति मदुक्तार्थे सूत्रकारस्याप्यस्त्येव विवक्षा । अन्यथा = कारणवाक्यानामेव ब्रह्मणि अस्या(सम)न्वयस्योक्तलक्षणातिव्याप्तिवारणाय सूत्रकृद्विवक्षितत्वे, प्रथमपादे – 'अन्तस्तद्धर्मोपदेशात्' (ब्र-सू-१-१-२०) 'ज्योतिश्चरणाभिधानात्' (ब्र-सू-१-१-२४) इत्यादि-सूत्राणां, द्वितीयपादे 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र-सू-१-१-२४) 'अन्तर उपपत्तेः (ब्र-सू-१-२-१३) इत्यादिसूत्राणां, तृतीयपादे 'भूमा सम्प्रसादादध्युपदेशात्' (ब्र-सू-१-३-८) 'दहर उत्तरेभ्यः' (ब्र-सू-१-३-१४) इत्यादिसूत्राणां, चतुर्थपादे 'वाक्यान्वयात्' (ब्र-सू-१-४-२०) इत्यादिसूत्राणां, चाकारणवाक्यगतलिङ्गात्मकादि(१) शब्दसमन्वयप्रतिपादकानामकरण-प्रसङ्गात् । तस्मात् कारणवाक्यानामेव समन्वयः सूत्रकारस्य विवक्षितः, नतु सकलवेदान्त-वाक्यानामिति परस्योक्तिः समस्तसूत्रार्थापरिशीलनप्रयुक्तेत्युक्तम् ॥

ननु समन्वयसूत्रस्योक्तरीत्या हेतुद्वयपरत्वे 'तत्तु समन्वयाभ्याम्' इत्येव सूत्रयितव्यम्, न 'तत्तु समन्वयात्' इति चेन्न । समन्वयश्च समन्वयश्चेत्यस्मिन्नर्थे द्वन्द्वे प्राप्ते 'सरूपाणा-मेकशेष एकविभक्तौ' (पा-सू-२-२-६४-(१४) इति सूत्रेणैकशेषे पञ्चमी द्विवचनस्यैकवचना-देशे 'सुपां सुलुक्' (७-१-३९(३४१) इत्यादिना कृते तथा सूत्रेणोपपत्तेः । सूत्रे 'समन्वयात्' इत्येकवचननिर्देशस्तु 'सर्वे वेदा यत्रैकं भवन्ति' 'पुनस्तस्यार्थवित्तये चकार ब्रह्मसूत्राणि'(२) इत्यादाविवेकविषयत्वज्ञानापनायेति सर्वमवदातम् ॥

अत एवोक्तहेत्वोर्मध्ये सन्निहिते द्वितीये सम्यग्वाचकत्वहेतावसिद्धिशङ्कायां सामान्यत-स्तदुद्धाराय 'ईक्षतेर्नाशब्दम्'(ब्र-सू-१-१-५) इति सूत्रं कृतम् । तदनन्तरं प्रथमहेतुर्नासिद्ध इति प्रदर्शनमुखेन सर्ववैदिकशब्दानां विष्ण्वावेवसमन्वयात् सम्यग्वाचकत्वादित्यस्य द्वितीय-हेतोरेवाध्यायपरिसमाप्त्यसिद्धिशङ्कापरिहाराय आनन्दमयादिसर्ववैदिकशब्दानां जिज्ञासासूत्रेण सङ्गतत्वात् 'आनन्दमयोऽभ्यासात्'(ब्र-सू-१-१-१२) इत्यादिसूत्रैः क्रियते । यद्यपि प्रथमाध्यायेऽपि शृङ्गग्राहिकया प्रत्येकं सर्ववैदिकशब्दानां सूत्रकृता सम्यग्विष्णुवाचित्वं न प्रतिपादितम् । तथाऽप्यध्यायान्ते 'एतेन सर्वे व्याख्याता व्याख्याताः'(ब्र-सू-१-४-२९)

---

(१) च कारणवाक्यगतलिङ्गात्मकादि इति पाठः स्यात् ॥

(२) ब्रह्मसूत्रभाष्य जिज्ञासाधिकरणोदाहृत स्कान्दवचनम् ॥

इत्युक्तन्यायैरेव तत्सुज्ञानम् इत्यतिदिष्टत्वात् न बुद्धिमतां तत्रासिद्धिशङ्कालब्धावसरेति सर्व-मनवद्यम् ॥

अत एव द्वितीयाध्याये प्रथमपादान्ते 'सर्वधर्मोपपत्तेश्च' (ब्र.सू.१-१-३८) इति सर्वशब्द-वाचकत्वोपयोगिसर्वधर्मोपपादकं सूत्रं कृतमुपपद्यते । ततश्च सर्वे वेदान्ताः लक्षणया अखण्ड-चिन्मात्रपरा इति स्वीकुर्वता इव सर्ववैदिकशब्दाः योगरूढिस्वातन्त्र्यैर्विष्णोरेव मुख्या इति स्वीकुर्वतो न काऽप्यनुपपत्तिरिति ॥

एतेन 'व्यवहारे भट्टनयः' इत्यङ्गीकारात् सत्यादिपदानां सत्यत्वज्ञानत्वादिपरापर-जातिवाचित्वमेव गवादिपदानां गोत्वादिजातिमात्रवाचित्वात् व्यक्तौ तुल्यलक्षणैवेति निरस्तम् ॥

तथा सति गवादिपदेनैव सत्यादिपदलक्षणयैव जातिविशिष्टव्यक्त्युपस्थित्यापातात् । अन्यथा तेन व्यक्तिमात्रोपस्थित्यङ्गीकारे प्रथमोपस्थिते सत्यपदेनैव कृतकार्यतया पदान्तर-वैयर्थ्यात् । नच तत् प्रत्याप्य व्यावृत्तिभेदादवैयर्थ्यम् । व्यावर्तकधर्मवैशिष्ट्यमबोधयतस्तत्र व्यातवर्तकताया एवायोगात् । व्यावृत्तेः पारमार्थिकत्वे अद्वैतहानेः अपारमार्थिकत्वे च वेदान्तानामतत्वावेदकत्वापत्तेः, ब्रह्मस्वरूपरूपकत्वे च भेदज्ञानमेव मोक्षसाधनमित्य-ङ्गीकारापातात् ॥

एतेनैव वेदान्तगतपदैरखण्डचिन्मात्रे बोधनीये व्यावृत्तिद्वारमिति प्रत्यूढम् । शब्दजन्य-प्रतीतौ व्यावृत्तिकृतोपकारकाभावेन तदस्याद्वारत्वायोगात् चिन्मात्रस्वरूपस्य स्वतः सिद्धत्वे-नान्यबोधनस्यानिष्टतया 'सत्यं ब्रह्म' इति वा 'त्वं तदसि' इति वा पदार्थद्वयसंसर्गावगाहि शाब्दबोधस्वीकारे वाक्यवैयर्थ्यानिस्ताराच्चेति ॥

एतेनैव[१] 'अर्धमन्तर्वेदि, अर्धं बहिर्वा' इत्यादिवाक्यस्यस्यान्यतरदेशविशेष[२] इव सत्यज्ञानादिवाक्यानामेवाखण्डचिन्मात्रे लक्षणेति निरस्तम् । तथाऽपि वाक्यान्तरवैयर्थ्य-

(१) एतेनैव अधर्मित(तेः) वेद्ये 'ऊर्ध्वंबहिर्वा इत्यादि ' इति तालपत्रस्थ पाठः ॥( जै-सू-३-२-६-अधिकरणे चिन्तित न्यायमित्यर्थः ॥)

(२) अन्यतरालदेश विशेष इति तालपत्रस्थ पाठः ॥

तादवस्थ्यात् । नच विनिगमनाभावेन प्राशस्त्यसमर्पकार्थवादगतपदवद् वाक्यान्तरा-वैयर्थ्यमिति वाच्यम् । परेण अर्थवादवाक्यैकवाक्यताङ्गीकारेण मीमांसकेनेव पदैक-वाक्यतानङ्गीकारात् । अन्यथा ततो विग्रहवद्देवतादिसिद्ध्यभावप्रसङ्गात् विहिताध्ययनसमये प्रथमोपस्थितेरेव तत्र तु असम्भवाच्च ॥

नच अध्ययनविध्यवधारितपुरुषार्थत्वनिर्वाहाय सर्ववेदान्तवाक्यानामपि लक्षणया चिन्मात्रपरत्वाङ्गीकारात् न कस्यापि वाक्यस्य वैयर्थ्यशङ्केति वाच्यम् । मद्रीत्या विशिष्टार्थ-परत्वेऽपि तदवधारितपुरुषार्थत्वोपपत्त्या चिन्मात्रे लक्षणाकल्पकाभावात् उपासनाविधि-वाक्यानामपि नियामकाभावेन तथात्वाश्रयणापत्त्या तद्विधित्वाभावापातेन तदनुष्ठानासिद्धि-प्रसङ्गाच्च । उभयपरत्वे वाक्यभेदाच्च । एकस्यैव सविकल्पकनिर्विकल्पकज्ञानजनकत्वा-सम्भवाच्च ॥

यत्तु वाक्यार्थविधेयोपस्थितब्रह्मणि सत्यादिपदानां लक्षणावृत्तिग्रह उपपद्यत इति । तन्न । विशिष्टोपहितसत्यादिपदवाच्यचैतन्ययोरविशिष्टानुपहितचैतन्यादन्यत्वेन अज्ञान-तत्कार्यवत् परिच्छिन्नत्वे जडबाध्यत्वावश्यम्भावेन सत्यज्ञानादिपदमुख्यार्थत्वासम्भवेन तेषां पदानां निरभिधेयत्वपरिहाराय अविशिष्टमनुपहितं वा चैतन्यमेव तदभिधेयमित्यङ्गी-कर्तव्यत्वाच्च । अन्यथा यूपाहवनीयस्वर्गादिपदानां सत्यज्ञानादिपदवत् निरभिधेयत्वमेवाङ्गी-कृत्य वाक्यार्थविधेयोपस्थितेष्टदारुविशेषादिषु लक्षणेत्यङ्गीकारापातात् ॥

किञ्च असङ्गैकस्वभावत्वेन 'असङ्गोऽह्ययं पुरुषः'(बृ-उ-४-३-१५) इति श्रुतिप्रतिपन्न-चैतन्यमात्रे लक्षणारूपसङ्गाङ्गीकारो न युक्तः । शक्यसम्बन्धरहिते लक्षणासम्भवात् । अन्यथा क्लृप्तहानाद्यापत्तेरिति । नचैवं वाच्यत्वपरश्रुतिप्रतिपाद्यत्वं ब्रह्मणो 'यत्तदद्रेश्यम्'इत्यादि ज्ञानविषयत्वनिषेधपरश्रुतिविरुद्धमिति वाच्यम् । तच्छ्रुतेर्विरुद्धचैतन्यं फलव्याप्यं न इत्यर्थ-परत्वेन श्रुतिजन्यप्रतिपत्तिविषयत्वावारकत्वात् । अन्यथा = तस्य वेदान्तजन्यप्रतिपत्ति-विषयत्वावारकत्वे, संसारापादकविशुद्धचैतन्याश्रिततद्विषयकाज्ञाननिवृत्तिप्रसङ्गात् ॥

नच वेदान्तजन्यवृत्तेर्जडतया विरोधित्वाभावेन ततो नाज्ञाननिवृत्तिरिति वाच्यम् । तथासति वृत्त्यर्थं श्रवणादौ प्रवृत्त्यनुपपत्तेः । नच चैतन्यमेवाज्ञानविरोधि ज्ञानाज्ञानयोरेव

विरोधाभ्युपगमात्, वेदान्तजन्यवृत्तिस्तु चैतन्यस्याज्ञानप्रयुक्ताऽवृतत्वरूपप्रतिबन्धनिवृत्तावुपयुज्यते । तथा च तदर्थमेव वेदान्तश्रवणाद्यनुसरणमावश्यकमिति वाच्यम् । तथाऽपि विशुद्धचैतन्यस्य वेदान्तजन्यवृत्तिविषयत्वावारणात् भङ्ग्यन्तरेण वृत्तिविशिष्टचैतन्यस्यैवाज्ञानविरोधित्वाङ्गीकाराच्च ॥

नच चैतन्येनाज्ञानानिवृत्तौ कर्तव्यायां वेदान्तजन्यवृत्तिरूप उपाधिरेव न विशेषणमिति वाच्यम् । उपाधिशब्दार्थस्य तादृशस्य यावद्धर्म्यवस्थायित्वनियमेन वृत्तेस्तथाविधोपाधित्वे मोक्षेऽपि तत्प्रसङ्गात् । चैतन्यस्य स्वविषयत्वानभ्युपगमेन तत्स्वविषयकाज्ञाननिवृत्त्यनुपपत्तेश्च । ज्ञानाज्ञानयोः समानविषयत्वेनैव घटादौ विरोधावधारणात् । अन्यथाऽतिप्रसङ्गात् । तस्मात् वेदान्तजन्यवृत्तिरेव चिन्मात्रशब्दिताश्रिततद्विषयकाज्ञानविरोधिनी न चैतन्यशब्दितं, समानविषयत्वाभावादित्येव वाच्यम् ॥

किञ्च चिन्मात्रं 'यत्तदद्रेश्यम्' इत्यादिश्रुतिजन्यवृत्तिविषयो नो चेत् कथं तत्र वृत्तिविषयत्वाभावसिद्धिः? तद्विषयश्चेत् कथं न विवादपर्यवसानम् । एवं च कथं वृत्तेर्भङ्ग्यन्तरेण न ज्ञानत्वानभ्युपगमः ब्रह्मणश्चाज्ञानत्वानभ्युपगम इत्यलं पल्लवेन ॥

॥इति परमते लक्षणया'द्वासुपर्णे'त्यादिवाक्यस्यशोधित'तत्वं'पदार्थमात्रपरत्वनिरसनम् ॥

## ॥ अथ द्वितीयाभावतात्पर्यप्रतिबन्द्या द्वासुपर्णादि वेदान्तवाक्यानां स्वार्थपरत्वार्थसमर्थनम् ॥

अपि च वेदान्तानां सर्वेषामपि लक्षणयाऽऽखण्डचिन्मात्रपरत्वे कथं ब्रह्मणि तेभ्यः प्रपञ्चाभावसिद्धिः? नच चिन्मात्रबोधनार्थं केवललक्षणमाश्रितैस्तैर्मुख्यार्थोपस्थितिसहकृतवाक्यान्तरैरिव द्वितीयाभावविशिष्टं तदुपहितं वा ब्रह्मबोधयितुं शक्यते, युगपद् वृत्तिद्वयविरोधात् । 'गङ्गायां मीनघोषौ' इत्यादौ वृत्तिद्वयसत्त्वाश्रयणे तस्य वाक्यार्थद्वयतात्पर्याविनाभूतत्वेनाद्वैतश्रुतीनां युगपद्वृत्तिद्वयाश्रयणस्य वाक्यार्थद्वयतात्पर्यं विनाऽयोगेन तदावश्यकत्वे सप्रपञ्चनिष्प्रपञ्चवेदान्तवाक्येषु सर्वत्र तात्पर्यद्वयप्रयुक्तवाक्यभेदस्य दुर्वारत्वाच्च ॥

नच तात्पर्यभेदमात्रेण वाक्यभेदः विद्ध्यर्थवादयोरेकवाक्यत्वाभावप्रसङ्गात् विधेर्विधेये-ऽर्थवादस्य च विध्यपेक्षितप्रशस्ते तात्पर्यसत्वेन तद्भेदात् किन्तु महातात्पर्यभेदेन । [१]नच प्रकृते वेदान्तानां महातात्पर्यभेदोऽस्ति, चिन्मात्रे एव तेषां महातात्पर्यात् द्वितीय-विधिनिषेधयोस्त्ववान्तरतात्पर्यात् महातात्पर्यभेदस्यैव वाक्यभेदप्रयोजकत्वादिति वाच्यम् । तथा सति विध्यर्थवादयोरिव प्रयाज-दर्शपूर्णमास-वाक्ययोरिव चाखण्डचिन्मात्रपरत्वेन स्वीकृतानां वेदान्तानां विशिष्टवैशिष्ट्येन बोधकत्वापत्त्या संसर्गासङ्गिसम्यग्धीहेतुत्वादि-रूपाखण्डार्थत्वहानिप्रसङ्गात् । सत्प्रतिपक्षवद्विरुद्धार्थबोधसामग्रीद्वयरूपत्वेन वेदान्तानां परा-भिमतार्थबोधनेनैव मुख्यापत्तेश्च । नहि तदेव वाक्यं विशिष्टार्थबोधकमवशिष्टार्थबोधकं चेति दृष्टचरम् । शब्दबुद्धिकर्मणां विरम्यव्यापारादर्शनेन क्रमेणार्थद्वयबोधकत्वकल्पनानव-काशात् । तथाऽपि स्वातन्त्र्येणार्थद्वयबोधकत्वप्रयुक्तवाक्यभेददोषानुद्धाराच्च ॥

ननु द्वितीयाभावस्य चिन्मात्रे तत्सम्बन्धस्य च निर्विशेषचिन्मात्ररूपत्वाङ्गीकारात् तत्तात्पर्यस्यैव तत्तत्तात्पर्यतया च तात्पर्यभेदप्रयुक्तवाक्यभेददोषः, न वा अखण्डार्थत्व-हानिप्रसङ्गः[२] । चिन्मात्रे तदतिरिक्तप्रकार-तत्संसर्गबोधकत्वस्यैव तथा निष्प्रयोजकत्वात् । नच द्वितीयाभावो वा चिन्मात्रे तत्संसर्गो वा चिन्मात्रातिरिक्तोऽस्माभिरङ्गीकृतः,येन तथा स्यादिति चेत् ॥

द्वितीयाभावस्य चिन्मात्रत्वेऽपि तत्त्वेन तात्पर्यविषयताया आवश्यकत्वेन तात्पर्यभेदस्य दुर्वारत्वात् शुक्तिरूप्याद्यत्यन्ताभावस्य शुक्त्याद्याकारोपाध्यधिष्ठानानतिरिक्तत्वेऽपि शुक्त्यादे-स्तदत्यन्ताभावनिश्चयस्यैव शुक्तित्वादिनिश्चयस्य तत्र तद्रूप्यादौ मिथ्यात्वव्यवहारप्रयोजक-त्वादर्शनेन चिन्मात्रस्यापि द्वितीयाभावत्वे 'एकमेवाद्वितीयम्' इत्यादिवेदान्तेन न निश्चया-वश्यम्भावात् ॥

किञ्च भूतलादौ घटाद्यभाववत् शुक्त्यादौ रूप्याद्यभावस्य ब्रह्मणि द्वितीयाभावस्य चैकरूप्याधिकरणातिरिक्तत्वमावश्यकम् । नह्यारोपाधिष्ठानतदनधिष्ठानयोरभावप्रतीतिव्यव-

(१) 'नच' इत्यस्य 'वाक्यभेदप्रयोजकत्वादि'ति (पु.१५६)इत्यनेनान्वयः ॥

(२) 'क्रवाखण्डार्थत्वहानि' इति ताळपत्रस्थ पाठम् ॥

हारयोर्विषयप्रयुक्तातिशयं पश्यामः । येनाभावस्य क्वचिदधिकरणस्वरूपत्वं क्वचिन्नेति वैरूप्य-माश्रीयेत ॥

अपि च आरोपाधिष्ठाने शुक्त्यादाविव भूतलादौ तदनधिष्ठानेऽपि रूप्याद्यभावप्रतीतेस्तत्र तदभाव आवश्यकः । अन्यथा विरोध्यभावेन तत्रापि रूप्यादिप्रसङ्गात् । एवं च तत्राधि-करणातिरिक्तत्वेन क्लृप्त एवारोपस्थलेऽपि स्वीकर्तुमुचितः । अन्यथा क्लृप्तहानाक्लृप्तकल्पना प्रसङ्गात् । नचारोपस्थले इवान्यत्राप्यभावोऽधिकरणानतिरिक्तः । तथा सत्यभावेऽनुपलब्धि-प्रमाणकत्वास्वीकार विरोधात् ॥

अपि च विशेषहेत्वभावे आरोपस्थले एवाधिकरणानतिरिक्तोऽन्यत्र तु तत्स्वरूपरूप इत्येव किं नाङ्गीकार्यम् । नच प्रतियोगिसहिष्णुत्वे अभाववैरूप्यकल्पके तथाऽप्यधि-करणानतिरिक्त एव अभावात् सहिष्णुः नतु तदतिरिक्त इत्यत्र निश्चायकप्रमाणाभावेन अतिरिक्त एव तत्सहिष्णुत्वं न त्वनतिरिक्त इत्येव कल्पनीयत्वात् ॥

अपि च अभावातिरिक्तोऽनतिरिक्तो वा अधिकरणभेदेन देशकालाद्यवच्छेदभेदेन वा विद्यमानो न क्वापि प्रतियोगिमिथ्यात्वप्रतीतिव्यवहारप्रयोजको दृष्ट इति, तद्विपरीत एव तथाविधप्रतीतिंव्यवहारप्रयोजको वाच्यः । एवञ्च शुक्त्याद्यधिष्ठानेऽपि रूप्यादिप्रतियोगि-सहिष्णुत्वेऽभावस्य न तन्मिथ्यात्वप्रतीतिव्यवहारप्रयोजकत्वम् । तथा सति शुक्तिरूप्यादिकं नृशृङ्गादिवत् अत्यन्तासदेवापतितमिति चेन्न । तन्न्यायागतत्वेन तस्य सह्यत्वात् । एवं हि शुक्तिरूप्यादिकम् अपरोक्षं न स्यात्, विशेषेण ज्ञानादिरूपप्रत्यक्षविरहादिति चेन्न । 'रजतं साक्षात्करोमि' इत्यनुभवबलेन रजतज्ञानस्य साक्षात्कारत्वे सिद्धे फलानुगुणसामग्री-कल्पनात् । अन्यथा रजतापरोक्षभ्रमस्थले यो क्लृप्तसामग्री तद्विरहात्तदपेक्षप्रमानुभवसिद्धा न स्वीकार्या स्यात् ॥

अपि चाहार्यरजताद्यपरोक्षभ्रमस्थले विशेषदर्शनेन रजताद्युपादानभूताज्ञानस्य निवृत्तेः कथं भ्रमः? नह्युपादानं विनोपादेयमुत्पत्तुमर्हति अभ्युपगतं वा । नच आवरणशक्तिं विना विक्षेपशक्तिमात्रेण परोक्षभ्रमोदृष्टचरः । आहार्यापरोक्षभ्रमस्यानुभवसिद्धत्वेन दुरपह्नवत्वात् । तत्राज्ञानस्य विक्षेपशक्तिमात्रं प्रयोजकं, नतु स्वारसिकापरोक्षभ्रम इवावरणशक्तिरपीत्यङ्गीकारे

अत्यन्तासद्रजतादिगोचरस्वारसिकापरोक्षभ्रमे सन्निकर्षानपेक्षदोषघटितेतरप्रत्यक्षसामग्रीमात्रम् अकारणम्, नतु स्वारसिकापरोक्षप्रमायामिव(तदपरोक्षप्रमायामिव-पा) विषयसंयोगोऽपीत्यङ्गी-क्रियतामित्यलम् ॥

असद्वैलक्षण्यतया न प्रतीयते[१] नृशृङ्गादिवदिति चेन्न । असद्वैलक्षण्ये सत्त्वे वा सामान्यरूपतया प्रतीतत्वमेव तन्त्रं, नत्वपरोक्षतया प्रतीतत्वम् । तस्य तद्विशेषत्वादिति नृशृङ्गादिकमप्यसद्विलक्षणं सद्वा स्यात् ब्रह्मवदिति शुष्कलाघवस्यानादरणीयत्वात् । ततश्च द्वितीयाभावचिन्मात्रस्वरूपरूपयोः तथाविधोः वा उभयथाऽपि, स्वस्मिन्नज्ञानतत्कार्यभूत-वियदादिप्रपञ्चसहिष्णुत्वेन तन्मिथ्यात्वापादकः स्यादिति तस्य चिन्मात्ररूपत्वाग्रहो व्यर्थः ॥

अपि च प्रकार-प्रकारि-तदुभयसम्बन्धानां परस्परभेदस्यौत्सर्गिकत्वेन बाधकं विना चैतन्ये द्वितीयाभाव तत्सम्बन्धयोर्नतद्भिन्नत्व त्यागो युक्तः ॥

एवञ्च 'अद्वितीयम्' इतिश्रौतः बहुव्रीहिरप्यनुकूलितो भवति । वृत्तिगतपदार्थान्यार्थप्राधान्यः एवाभियुक्तैर्बहुव्रीहिसमासवृत्त्यभ्युपगमात् । तत्कार्यभूतभावरूपप्रपञ्चप्रतियोगित्वे चैतन्य-स्यानुपलब्धिप्रमाणकाभावजातीयत्वं दुर्वारम् । एवमभावप्रतियोगिकत्वे भावत्त्वं भावप्रति-योगिकाभावस्यानुपलब्धिप्रमाणकत्वनियमात् अभावाभावस्य भावत्वनियमाच्च । नहि तथा विधाभावाभावरूपवत्वे दत्ते(भावरूपययदत्वे दत्वे-पा) । तस्माद् द्वितीयाभावश्चैतन्यातिरिक्त एव । एवं च लक्षितचिन्मात्र इव मुख्यार्थे द्वितीयाभावादावपि महातात्पर्यमेव वाच्यम् । मुण्डितचिन्मात्रस्यद्वितीयाभावविशिष्टस्य, तदुपहितस्य तदुपलक्षितस्य, विरोधेन विद्धचर्थ-वादाविव विशिष्टवैशिष्ट्यरीत्या न वेदान्ताबोधनस्येशते(बोधनस्य चैतन्येन-पा) । नहि तदेव वेदान्तजन्यं ज्ञानं विशिष्ट-वैशिष्ट्यावगाहि-तदनवगाहि चेति युज्यते । तथा च वाक्यभेदापादकवाक्यार्थद्वयमहातात्पर्याविनाभूतयुगपद्वृत्तिद्वयाङ्गीकारो न युक्तः ॥

अपि चैवं चिन्मात्रे द्वितीयाभावे चोभयत्र तात्पर्याङ्गीकारे कथमखण्डार्थत्वहानिप्रसङ्गो न तादवस्थः । द्वितीयाभावस्य चैतन्ये तत्संसर्गस्य चोक्तरीत्या चैतन्यातिरिक्तत्वस्य

(१) असन् वेदपक्षतया न प्रतीयेत इति तालपत्रस्थ पाठः ॥

दुर्वारतया तद् गोचरसम्यग्धीहेतुत्वेन वेदान्तानां चैतन्ये तदतिरिक्तप्रकारवैशिष्ट्याऽनवगाहिसम्यग्धीहेतुत्वरूपाखण्डार्थत्वानुपपत्तेः । प्रत्यक्षेण गवाश्वयोरिव वेदान्तैः परस्परसंसृष्टयोरेव चैतन्यद्वितीयाभावयोः स्वातन्त्र्येणधीर्जायत इत्यङ्गीकारे च तेषां ब्रह्मरूपप्रतिपन्नोपाधौ विद्यमानद्वितीयात्यन्ताभावबोधकत्वाभावेन तद्द्वितीयमिथ्यात्वासिद्धिप्रसङ्गात् ॥

एतेन अपर्यायशब्दानामेकप्रातिपदिकार्थमात्रपर्यवसायित्वरूपमप्यखण्डार्थत्वं प्रत्यूढम् । एकप्रातिपदिकार्थमात्रपर्यवसायित्वशब्देनास्वाभाव्याच्छब्दैः द्वितीयाभावादिविशिष्टस्य तदुपहितस्य तदुपलक्षितस्य वा चैतन्यस्य बोधेऽपि व्यावर्तकधर्मतात्पर्यकलक्षणोक्त्युद्देश्यकशब्दरूपोद्देशवत् द्वितीयाभावादिवैशिष्ट्या तात्पर्यकत्वविवक्षायां चैतन्यव्यावहारिकस्य वियदादिरूपद्वितीयस्य पारमार्थिकस्य व्यावहारिकस्य वा तदभावस्य चासिद्धिप्रसङ्गात् । तात्पर्याविषयस्यापि तस्य मानाविरुद्धत्वमात्रेण सिद्ध्यङ्गीकारे च तत एव चिन्मात्रसिद्ध्युपपत्तेस्तत्राऽपि तात्पर्यानभ्युपगमप्रसङ्गात्, तत्र लिङ्गसत्वेन तात्पर्याभ्युपगमे द्वितीयाभावादिवैशिष्ट्येऽपि तत्सत्वेन तात्पर्यस्य दुर्वारत्वादित्युक्तम् । द्वितीयाभावादावतात्पर्यं वायुक्षेपिष्ठादाविव न। मानान्तरप्राप्तत्वात् । चिन्मात्रे द्वितीयाभावादेः परेण मानान्तरप्राप्तत्वानभ्युपगमात् माय्यात्मवपोत्खननादाविव तद्विरोधरूपश्रुत्यैकसमधिगम्ये चिन्मात्रे मानान्तराप्रसरेण तत्र ततो विरोधानुपस्थितेः । उपस्थितौ वा प्रत्यक्षादिमानान्तरस्य श्रुत्यपेक्षया दुर्बलत्वेन परेण तस्य श्रुतावबाधोपगमात् इदानीन्तनेषु वपोत्खननादेः प्रत्यक्षविरुद्धत्वेऽपि प्राजापतौ तदभावेन वपोत्खननवाक्यस्य दृष्टान्तत्वाच्च ॥

नच प्रपञ्चविधायकश्रुतिविरोधात् तथा । सम्प्रति योगिसमर्पकतया निषेधैकश्रुत्यनुगुणत्वेन परेण स्वीकृततया निषेधकश्रुत्यविरोधित्वात्, नचाद्वैतवाक्यानामेव परस्परविरोधात्, न स्वप्रत्याय्य प्रपञ्चाभावे तात्पर्यमिति साम्प्रतम् । तेषामेकप्रपञ्चाभावप्रतिपादकत्वेन तुल्यविषयतया विरोधशङ्कानवकाशात् ॥

नापि स्वविरोधादेव, तथा प्रपञ्चाभावस्यापि नाना-किञ्चनत्वाकारेण-द्वितीयत्वाकारेण, नच स्वविषयत्वादिति वाच्यम् । निषेधस्य स्वविहितनिषेधेतरविषयत्वावश्यम्भावात् । अन्यथा व्याहतभाषित्वापत्तेः । अपि च निषेधस्यायं स्वभावो, यद्विधिविषयं परित्यज्य

ततोऽन्यत्रैव व्याप्रियते इति कथं प्रपञ्चनिषेधः स्वविहितप्रपञ्चाभावविषयोऽभ्युपेयः? तथासति निषेधस्वभावव्याकोपप्रसङ्गात् । यदा 'न हिंस्यात्' 'ब्राह्मणो न हन्तव्य' इत्यादि-निषेधोऽन्यविहितमग्नीषोमीयहिंसादिकं न स्पृशति तदा किमु वक्तव्यं स्वविहितं स्वयं न स्पृशतीति । नहि निषेधस्य वाक्यान्तरविरोधादपि यत्नेन स्वविरोधः परिहार्यः इत्यत्र दृष्टचभावे वाक्यान्तरविहितार्थास्पर्शितत्वं सर्वसम्प्रतिपन्नमुपपद्यते । कथमन्यथा 'न हिंस्यात्' इत्यादिनिषेधोऽग्नीषोमीयहिंसादिकं 'नो सदासीद्'(ऋ-सं-१०-१२९-१) 'अलक्षणम्' 'न प्रज्ञानघनं'(मा-उ-३-२-१) 'अदुःखमसुखं समम्'[१] इत्यादिनिषेधो ब्रह्मस्वरूपलक्षणभूत-सच्चिदानन्दरूपत्वं न स्पृशेत्? तस्माद् 'एकमेवाद्वितीयम्' इत्यादिनिषेधवाक्यं स्वसमाना-र्थकवाक्यान्तरविरोधाद्वा, स्वविरोधाद्वा न द्वितीयाभावे तात्पर्यरहितमिति ।।

नन्वेवं यदि विहितविषये निषेधो न प्रवर्तते तदा ब्रह्मणि 'यस्मिन् द्यौः' इत्यादिना विहिते विषये वियदादिप्रपञ्चे स्वरूपेण 'नेह नाना' इत्यादिनिषेधप्रवृत्तिरनभ्युपगन्तव्यैव स्यादिति चेन्न । तावता अयमपि तस्याधिकोऽपराध इति नास्माकमपरिभावात् । नह्युदाहृत-विधिनिषेधाभ्यां ब्रह्मणि प्रपञ्चविधिनिषेधयोर्विशेष नियामकं पश्यामः । तेनात्रैवाद्ध्या-रोपापवादन्यायाश्रयणं न कर्मकाण्डगतोदाहृत विधिनिषेधयोरिति स्यात् । नापि ग्रहैकत्वा-दाविवोद्देश्यविशेषणत्वादतात्पर्यम् । प्रपञ्चाभावे 'ग्रहं सम्मार्ष्टि' इत्यादौ सम्मार्गस्ये-वेहाखण्डार्थपरत्वे विधेयान्तरस्याभावेन विशेष्यत्वेनाभिमतस्य शास्त्रैकगम्यस्य चिन्मात्रस्य प्राप्तयोद्देश्यत्वायोगेन च प्रपञ्चाभावस्योद्देश्यविशेषणत्वाभावात् अविवक्षाहेतोर्निर्ज्ञात-विशेषणत्वस्याभावाच्च, कर्मकाण्डादापातप्रतीतधर्मेण पुंसा तत्तत्प्रकारविशेषस्येव वेदान्ता-दापातप्रतीतब्रह्मणा मुमुक्षुणाऽप्यद्वितीयत्वादितत्प्रकारस्यैव जिज्ञासितत्वाच्च । शाब्दधी-स्थस्यापि द्वितीयाभावस्य तात्पर्यविषयत्वेन द्वैतमानविरोधेन चात्मवपोत्खननादेरिव व्यावहारिकसत्वासिद्धेश्च । अवान्तरतात्पर्यविषयत्वात्तत्सिद्धिरिति चेन्न । निरस्तत्वात् । द्वितीयाभावस्योपक्रमे उपसंहारे च प्रतीतस्य प्राकरणिकत्वेन सुषुप्तौ फलवत्त्वदर्शनेन चान्य-शेषत्वयोगेनावान्तर तात्पर्यविषयत्वाच्च । स्वप्रकाशत्वेन स्वतःसिद्धचिन्मात्रे एव प्रमाणा-न्तरनैरपेक्षेणाप्राप्तत्वात् महातात्पर्यस्वीकारायोगाच्च ।।

(१) अनुव्याख्यानोदाहृतवाक्यम् ।।

प्रमाणान्तरतात्पर्यविषयस्य सत्यप्यन्यशेषत्वे महातात्पर्यविषयसमसत्ताकत्वनियमेन द्वितीयाभावस्य अवान्तरतात्पर्यविषयत्वेऽपि महातात्पर्यविषयचिन्मात्रसमसत्वस्य दुर्वारत्वाच्च । महातात्पर्यविषयस्य पारमार्थिकत्वम् अवान्तरतात्पर्यविषयस्य तु व्यावहारिकत्वमिति व्यवस्थाश्रयणेन द्वितीयाभावस्य द्वितीयवद् व्यावहारिकत्वे श्रुत्या प्रत्यक्षादिबाधस्वीकारायोगाच्च । नहि कदाऽपि तदभावे तत्प्रमिते तत्तत्रारोपितमिति शक्त्याभ्युपगमम् ॥

नहि व्यावहारिकमनारोपितमपि किं वाऽस्तीति परेणाभ्युपगतम् । तस्माद् द्वितीयाभावे चिन्मात्र इव महातात्पर्यं दुर्वारितमिति । तात्पर्यभेदप्रयुक्तवाक्यभेदो वज्रलेपायितः । तथाच 'एकमेवाद्वितीयम्' इत्यादिश्रुतिर्न प्रपञ्चमिथ्यात्वे मानम् ॥

एतेन प्रतियोगिनो द्वितीयस्य मिथ्यात्वे स्यादेव तदभावोऽपि । मिथ्यात्वप्रतियोगितदभावयोरेकस्वभावत्वनियमात् । नहि हन्तुमागतं स्वप्नगजवत् स्वाप्नपुरुषान्तरकृत तद् गजनाशो मिथ्या । स्वप्नोत्थितस्य बाधावतारेण तदुभयमिथ्यात्वावधारणादिति निरस्तम् ॥

तदुभयमिथ्यात्वरूपाभाव एव नियमभङ्गेन दृष्टान्ताभावात् । नहि तदुभयमिथ्यात्वमपि मिथ्यात्ववदभावात्,(मिथ्यात्मवद् अबाधात्, नच-पा) तदुभयमिथ्यात्वमपि मिथ्येत्यपि प्रमा अनुभवसिद्धा ॥

किञ्च भावप्रतियोगित्वेन प्रतीतिमात्रं प्रमा न बाधः । अतिप्रसङ्गात् । बाधनियतमिथ्यात्वप्रतीतिव्यवहारयोरवश्यम्भावात्, किन्तु भ्रमपूर्विका तथा प्रमादोषजन्यं ज्ञानं हि भ्रमः, न त्वन्यदपि, चरमवृत्तेरपि भ्रमत्वापत्तेः । नच ब्रह्मणि नित्यनिर्दोषश्रुतिजन्यं वियदादिप्रपञ्चसत्त्वज्ञानं भ्रमः । येन तत्पूर्विका 'एकमेवाद्वितीयम्' 'नेह नाना' इत्यादि तादृशश्रुतिजन्यद्वितीयाभावप्रमा बाध इत्युच्येत । अपि च अग्नीषोमीयहिंसायां कर्तव्यत्वस्यापि 'न हिंस्यात्' इति निषेधत्वेन बाधितत्वापत्तिः ॥

एतेन प्रपञ्चविधेर्निषेधापेक्षितनिषेध्यसमर्पकतया तदङ्गत्वेन तदपेक्षया दुर्बलत्वमिति निरस्तम् । तथा सति विशेषहेत्वभावेन कर्मकाण्डगतविधिनिषेधयोरप्युक्तरीत्या अङ्गाङ्गित्वस्य वक्तुं शक्यत्वेन वेदान्तगतोदाहृतविधिनिषेधयोरिव सर्वात्मना निषेधेन विधिबाधापातात् । नच निषिद्धत्वमात्रं विधिजन्यज्ञानस्य भ्रमत्वकल्पकम् । 'नो सदासीत्' 'अलक्षणम्'

इत्यादिनिषेधेन 'सत्यं ज्ञानम्' इत्यादिब्रह्मसद्रूपत्वादिविधिजन्यज्ञानस्यापि भ्रमत्वकल्पनाप्रसङ्गात् ॥

किञ्च ब्रह्मणीव स्वदेशकालयोः स्वोपादाने च सर्वत्र प्रतिपन्नोपाधावनिषिद्धत्वेन प्रपञ्चस्य न सर्वप्रतिपन्नोपाधिनिष्ठात्यन्ताभाव प्रतियोगित्वलक्षणमिथ्यात्वसिद्धिः ॥

ननु 'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते'(१) इति प्रतीतिमात्रस्य ब्रह्मविषयत्वाङ्गीकारात् 'मायिनं तु महेश्वरम्' 'यस्मिन्द्यौः' इत्यादिश्रुत्याऽवेदित सर्वप्रपञ्चतदुपादानमायाधारत्वत्यागाऽयोगात् । 'कालाय नमः कलविकरणाय नमः'(म-ना-उ-१७-२) 'स एवाधस्तात् स एवोपरिष्टात्'(छां-उ-७-२५-१) 'कालः कलयतामहम्'(भा-११-१६-१०) इत्यादिश्रुति-स्मृति-प्रतिपन्नब्रह्मदेशकालरूपत्वत्यागायोगाच्च । ब्रह्मैव सर्वत्र प्रतीतौ प्रतिपन्नोपाधित्वेन विषयः तत्र देशकालोपादाने विशेषोऽस्तु तदवच्छेदकत्वमात्रेणोपयुक्ता वा भासन्ते, नतु तेऽपि ब्रह्मवत् प्रतिपन्नोपाधयः । एवञ्च 'एकमेवाद्वितीयम्' 'नेह नाना' इत्यादिना सर्वत्र प्रतिपन्नोपाधिभूते ब्रह्मणि प्रपञ्चमात्रनिषेधात् कथं न तच्छ्रुतेः सर्वप्रपञ्चमिथ्यात्वसिद्धिरिति चेन्न । रूपादिहीनस्य श्रुत्यैकसमधिगम्यस्य ब्रह्मण ऐन्द्रियकानैन्द्रियकसाधारणप्रतीतिमात्रविषयत्वाऽयोगेन 'भूतलादौ घटादिः' 'चन्दने सौरभम्' 'श्रोत्रे वीणाशब्दः' 'पर्वतो अग्निमान्' 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादि प्रत्यक्षानुमितशाब्दप्रतीतानां ब्रह्मेतरवाच्यत्वेन भूतलादिप्रतिपन्नोपाधौ श्रुत्या घटादेरनिषिद्धतया ब्रह्मेतरसकलमिथ्यात्वासिद्धेः । इन्द्रियादिगम्यत्वाङ्गीकारस्य 'नेन्द्रियाणि नानुमानम्' इत्यादिश्रुतिविरुद्धत्वात् देशकालयोरखण्डदण्डायमानयोः कथञ्चित् ब्रह्मस्वरूपत्वोक्तिसम्भवेऽपि तद -तिरिक्ततदुपाधिभूततपनपरिस्पन्द-संयोगरूप-देशकालयोरतथात्वेन अवच्छेदकत्वेऽपि वृक्षे मूलाग्रादेः कपिसंयोगाद्याश्रयत्ववद् वियदाद्याश्रयत्वस्य अबाधितप्रतीतिसिद्धस्य उपपन्नवत्वेन तयोर्वियदादेः श्रुत्यनिषिद्धतया ब्रह्मवत् सत्यतया अनिर्वारकत्वाच्च ॥

अपि च ब्रह्मणीवोपादानभूतायां प्रकृतिशब्दितमायायां वियदादेरनिषिद्धत्वेन कथं न सत्यत्वम् । नच मायाया निषिद्धत्वेन मिथ्यात्वात् तदुपादानकं वियदादिकमपि मिथ्याभूतं,

(१) 'प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ' इति पूर्णपाठः ॥

कार्यस्य कारणानुरूपत्वनियमादिति वाच्यम् । अन्तःकरणोपादानकधर्मादेरन्तःकरणवत्साक्षि-सिद्धत्वाभावेन व्यभिचारात्, ब्रह्मोपादानकप्रपञ्चे ब्रह्मतुल्यसत्वस्य परेणानभ्युपगमाच्च ॥

किञ्च देशकालयोः ब्रह्मरूपत्वे 'अदृश्येऽनात्म्येऽनिलयने अभयं प्रतिष्ठां विन्दते' इति श्रुत्या निषिद्धत्वेन ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गः । देशकालयोर्जगत् प्रतीव ब्रह्म प्रति निलयनशब्दिताश्रयत्वप्रसक्तावेतन्निषेधप्रवृत्तेः । तथा च स्मृतिः 'अनाधारो निराधार'इति ॥

अपि च 'नेह नाना' इत्यत्र 'इह'शब्देनाचैतन्यस्य प्रमाणाभावेऽपि प्रतिपन्नोपाधित्वेन ग्रहणे तत्र वियदाद्यवच्छिन्नस्य तदुपहितस्य वा चैतन्यस्यैव,'नेह'इति निषेधः किन्नाङ्गी-कार्यम्? अशब्दार्थप्रमाणाभावयोस्तुल्यत्वात् । अपि च सर्वत्र चैतन्यस्यैव प्रतिपन्नोपाधित्वे तस्यैकत्वात् मिथ्यात्वशरीरे सर्वत्रेति प्रतिपन्नोपाधिविशेषणं व्यर्थम् । अपि च 'नेह नाने'ति 'इह' शब्दस्य सर्वनामत्वेऽप्यन्यशब्दासमभिव्याहृतवाक्ये शब्दोपात्तप्रकृतपरामर्शित्वस्वभा-वत्वेनासिद्धस्य व्युत्पत्तितदुपात्ततदनुपात्तार्थद्वयपरामर्शित्वाङ्गीकारे वाक्यभेदो दुर्वारः । प्रतिपन्नोपाधिरुभयथा तेनोपास्थापनाच्च[(१)] ।

अपि चैवं 'सदेव सोम्येदमग्रे' इति ब्रह्मस्वरूपरूपकालरूपप्रतिपन्नोपाधौ सत् शब्दार्थभूतस्य ब्रह्मण 'इदं वा अग्रे नैव किञ्चन आसीत्' इति निषेधात् जगत् इव मिथ्यात्वप्रसङ्गः । नचात्र 'इदम्'पदेन जगदेव विवक्षितं, नतु ब्रह्मेत्यत्र विशेषहेतुरस्ति । 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुत्या वेदान्तगतपदानां ब्रह्मण्येव तात्पर्यवेदनेन 'इदं वा अग्रे नैव' इति 'इदम्' पदेन ब्रह्मोपस्थितेरवश्याङ्गीकरणीयत्वाच्च । 'नायमात्मा प्रवचनेन लभ्यः' इत्यत्र 'इदम्' शब्देनेव ॥

अपि च 'सदेव सोम्येदमग्रे' इति वाक्यस्य हे सोम्येदं= सदेवेदं, ब्रह्मैव, वाऽग्रे, एकमेव= अन्यदेव= द्वितीयविलक्षणमेव, सत्, अद्वितीयं= द्वितीयप्रागभावं, तदासीत्' इत्यर्थपरत्वेन न द्वितीयात्यन्ताभावपरत्वम् । तदुत्तरवाक्ये सृष्टिकथनात् 'अग्र'पदसमभि-व्यवहाराच्च । संसर्गाभावमात्रवाचिनोऽपि नञः प्रागभावपरताया एव न्याय्यत्वात् । तस्मात् 'एकमेवाऽद्वितीयम्' इत्यादिश्रुतिरविगानेन सामान्यतो विशेषतश्च द्वितीयाभावप्रतिपादनात्

(१) प्रतिपन्नोपाधिरुभयतातातेनोपस्थापनाच्च इति ताळपत्रस्थ पाठः ॥

उपक्रमादितात्पर्यलिङ्गोपेतत्वाच्च, तासां तदभावविशिष्टे वा तदुपहिते वा तदुपलक्षिते वा, ब्रह्मचैतन्ये महातात्पर्यमकामेनापि स्वीकार्यम् । अन्यथा तात्पर्यव्यभिचारित्वेनोपक्रमादीनामतल्लिङ्गत्वापातात् । एवं च तुल्यन्यायतया 'द्वासुपर्णे'त्यादिवाक्यानामन्येषां च स्वार्थपरत्वमविकलमिति, कथं तेषां शोधिते 'त्वम्'पदार्थमात्रपरत्वमङ्गीकारार्हम् । उभयत्रापि तात्पर्ये कथं न वाक्यभेदादिदोषः, तस्मात् यत्किञ्चिदेतत् ॥

॥ इति द्वितीयाभावतात्पर्यप्रतिबन्द्या द्वासुपर्णादिवेदान्तवाक्यानां स्वार्थपरत्वार्थपरत्वसमर्थनम् ॥

## ॥ अथ द्वासुपर्णाश्रुत्यर्थविवरणम् ॥

तस्माद्'द्वासुपर्णादि'श्रुतेरेवमेवार्थो वर्णनीयः । तथा हि । 'ब्रह्मैवेदममृतं पुरस्तात्' इति वाक्येन पुरस्ताद् = अनादिपूर्वपूर्वकालमारभ्य, इदं= सर्वं जगत्कारणतया सर्वनियामकत्वादिना च श्रुत्यादिजन्यानुभवसिद्धं, ब्रह्मैव = गुणपूर्णमेव, विष्ण्वाख्यं, अमृतं = मृत्यादिदोषरहितमिति, निरूपिते, ननु 'ब्रह्मैव'इत्यवधारणमनुपपन्नं व्यावर्त्याभावात् जीवजातस्याऽपि 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिश्रुतिपर्यालोचनायां ब्रह्माभिन्नत्वावगमादित्याशङ्कायां 'द्वासुपर्णा' इत्ययंमन्त्रः पठ्यते ॥

द्वौ सुपर्णौ = तद्वत्तिष्ठन्तौ, जीवेश्वरात्मानौ, सखायौ = सखिवद् वर्तमानौ, सयुजौ = सहैव तिष्ठन्तौ, समानं, एकं, वृक्षं = 'एकायनोऽसौ'(भा-१०-३-२८) इति स्मृत्युक्तलक्षणलक्षितं ज्ञानकुठारेण च्छेदनार्हत्वात् वृक्षसंज्ञितं तद्वत्तिष्ठत् शरीरं, परिषस्वज्यते = तादृशशरीरे वर्तते । अनेन 'ब्रह्मैवेदममृतं पुरस्ताद्' (आ-उ-४-१३) इत्यवधारणव्यावर्त्यसद्भावः सामान्यत उक्तो वेदितव्यः । ननूक्तधर्माणामविशिष्टत्वेन व्यावर्तकान्तराभावे कथं व्यावर्त्यनिश्चय इत्यत आह 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति । यौ= द्वित्वादिधर्मावच्छिन्नौ= जीवेश्वरात्मानौ, तयोर्मध्ये यः, पिप्पलं = कर्मफलं, स्वाद्वत्ति= स्वादुतया भुङ्क्ते, सो अन्यः, तथा च स एव व्यावर्त्य इति भावः ॥

ननु अङ्गुल्यवष्टब्धचक्षुषा चन्द्रद्वित्वोपलम्बात्तद्वदेवोपक्रमावगतं 'सुपर्ण'शब्दितजीवेश्वरद्वित्वमौपाधिकं किन्न स्यादित्यत उक्तम् 'अन्य' इति । अन्यथा 'द्वावि'ति भेदनियतद्वितोपन्यासेनैव तादृशभेदलाभाद् 'अन्य'इति भेदप्रतिपादनं तस्य अनौपा-

धिकत्वप्रतिपत्त्यर्थमिति भावः । एवं 'तयोः द्वयोः मध्ये यो अत्ति सो अन्य' इत्युक्ते वा 'तयोः मध्ये यो अनश्नन् अभिचाकशीति सो अन्य' इत्युक्ते वा कर्मफलभोक्तृप्रतियोगिकमेवान्यत्वं तदभोक्तरि तदभोक्तृप्रतियोगिकान्यत्वं तद्भोक्तरि लभ्यत एव । तथाऽपि वाक्यद्वयोपादानं जीवेशपरस्परप्रतियोगिकपरस्परानुयोगिकान्यत्वशब्दित भेदे आदरं ज्ञापयन् 'अहो दर्शनीय अहो दर्शनीय' इत्यादिवत्तात्पर्यकारणमिति द्रष्टव्यम् ॥

यद्यपि 'द्वासुपर्णेत्यादि'पूर्ववाक्यावगतद्वित्वाक्षिप्तो जीवेशपरस्परभेद इति 'तयोरन्यः' इत्यादिवाक्यं तदनुवादकमिव । तथाऽपि 'द्वयोः प्रणयन्ति' इत्यस्याप्राप्तप्रणयनपरत्ववदेतद्वाक्यस्याप्यप्राप्तजीवेशपारमार्थिकभेदपरत्वं युक्तम् । पारमार्थिकशब्दं विनाऽपि 'तत्त्वमसि' इत्यादिना जीवेश्वरयोः पारमार्थिकाभेदो 'तयोरन्यः' इत्यादिना पारमार्थिकशब्दं विनाऽपि जीवेशयोः पारमार्थिकभेदसिद्धिर्युज्यते । 'अभिचाकशीति' इति सर्वतःप्रकाशवत्वविधानार्थमेव वाऽयमनुवादोऽस्तु । अत एव तदनन्तरमपि, ननूभयोः एकशरीरसम्बन्धाविशेषे तत्रैकस्यैव कर्मफलभोगो नापरस्येत्ययुक्तम् । नहि दावाग्निमध्यपतितयोः पुंसोरेकस्यैव दाहो नापरस्येति दृष्टचरमिति शङ्कानिरासाय 'समाने वृक्षे' इत्याद्युक्तम् । समानेऽपि, वृक्षे= देहे, पुरुषः, जीव,एव निमग्नः = कर्मप्रवाहे निमग्नः, ननु परमात्मनोऽपि पुरिशयनाविशेषात् जीवस्येव कर्मप्रवाहे स्यादेव निमग्नता इत्यत उक्तम् 'अनीशयेत्यादि' । अनीश्वरत्वेन= अस्वातन्त्र्येणेति यावत्, शोचति = शोकं प्राप्नोति नतु परमात्मा, स्वतन्त्र्यादिति भावः । ननु शोकस्य मोहशब्दिताज्ञानकार्यत्वात्तदभावे शोक एव कथमन्यथा परमात्मनोऽपि शोकप्रसङ्ग इत्यत उक्तं -'मुह्यमान' इति । अनीशत्वादेव मोहोऽपि जीवस्यैवेति न तस्य तत्कार्यभूतशोकानुपपत्तिरिति भावः ॥

॥ इति द्वासुपर्णेति श्रुत्यर्थः ॥

## ॥ अथ जुष्टं यदा पश्यतीति श्रुत्यर्थनिरूपणम् ॥

ननु जीवस्यानीश्वरत्वं सार्वकालिकमिति इदानीमिव मुक्तिदशायामपि मोहापत्त्या तत्प्रयुक्तकर्मशोकादिप्रसङ्गतादवस्थ्यमित्यत उक्तं 'जुष्टं यदा पश्यती'त्यादि ॥

'त्रिषुधामसु यद् भोग्यं भोक्ता भोग्यश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ।।'

इत्यादिश्रुतेः 'उत्तमः पुरुषस्त्वन्यः' इत्यादिस्मृतेश्च, अन्यं= सकलजीवजडात्मकप्रपञ्च-विलक्षणम्, ईश्वरं= स्वतन्त्रं परमात्मानं, यदा जुष्टं = श्रवणादिरूपोपासना वशीकृतं सन्तं तादृशोपासनाकर्ता= जीवात्मा, पश्यति= निर्विचिकित्सं साक्षात्करोति, तदाऽस्य = ईशस्य, महिमानमिति प्राप्नोति= महिमानं जगत् सृष्ट्यादिसामर्थ्यरूप इत्याह 'वीतशोक' इति ।।

ननु शोकापादकपुण्यपापयोः सत्त्वे तदापादक'मोह'शब्दितानाद्यविद्यासत्वे चासंसारि-त्वरूप वीतशोकत्वमेवासम्भावितम् इत्यत आह- 'यदा पश्यः पश्यते रुग्मवर्णम्' इत्यादि । 'निरञ्जनः' इति पुण्यपापापादकानाद्यविद्यारूप दोषराहित्यमुच्यते । तथा च सूत्रं 'तदधिगम उत्तरपूर्वाघयोरश्लेशविनाशौ तद्व्यपदेशात्'(ब्र.सू-४-१-१३) इति 'परमं साम्यम्' इति 'महिम'शब्दार्थो विवृतः ।।

यद्यपि संसारदशायामपि जीवस्य सच्चिदानन्दस्वरूपत्वेनान्यैरपि साधारणधर्मैश्चास्ति परमेश्वरेण साम्यं तथाऽप्यात्यन्तिकशोकराहित्य तत्प्रयोजकापहतपाप्मत्व तत्प्रयोजका-नाद्यविद्याराहित्यानां संसारदशायामभावेन तेष्वीशदर्शनात्सम्पन्नेषु परमसाम्यं जायत इति न काचिदनुपपत्तिः ।।

एतेन जीवस्य-अज्ञान-पापशोक-प्रयोजकानीश्वरत्वस्य सर्वदा सत्वान्मुक्तिदशायामपि तद्वत्वं दुर्वारमिति निरस्तम् । ईशादर्शनसहकृतानीश्वरत्वस्यैव मोहादिप्रयोजकत्वात् सति च ईशदर्शने तदभावसहकृतानीश्वरत्वरूपप्रयोजकाभावादेव तदभावोपपत्तेः । अत एव 'जुष्टं यदा पश्यत्यन्यमीशम्' इति 'यदा पश्यः पश्यते रुग्मवर्णम्' इति च ईशदर्शनावधिशोक-पापमोहानां सत्वप्रतिपादनम् । अत्र 'निरञ्जन'शब्देन मोहशब्दितानाद्यविद्याराहित्यमुच्यते । अन्यथा 'पुण्यपापे विधूय' इत्यनेन पौनरुक्त्यात् 'देवदत्तो धनधान्यादिकं सम्पाद्य राजसाम्यं प्राप्तः' इत्युक्ते धनधान्यादिनेव द्रष्टा जीवः ईशदर्शनात् निरञ्जनः सन्= पुण्यपापे विधूय

वीतशोकश्च सन्, अस्य= ईशस्य, परमसाम्यं= महिमानम् उपैतीत्युक्तेऽपि निरञ्जनत्वादि-नैवेशपरमसाम्यप्राप्तिः प्रतीयत इति किमनुपपन्नम् ॥

नच संसारदशायामिव मुक्तिदशायामीशदर्शनादप्राप्तांशस्य पुरुषार्थत्वेनाभिमतस्यासतिना भेदस्य 'महिमानम्' इति 'परमं साम्यमुपैतीति' उत्सर्गतो भेदनियतसम्बन्धार्थकषष्ठी वा सर्वथा भेदनियतप्राप्त्यर्थके इण्धातुप्रयोगो वा युज्यते । नच मुख्यार्थत्यागे कारणं पश्यामः । नचात्र 'महिम'शब्दस्य स्वरूपमहिमपरत्वे 'स्वे महिम्नि प्रतिष्ठितः' (छां-उ-७-२४-१) 'धातुःप्रसादान्महिमानमीशम्' इत्यादौ 'स्व'शब्दवत्सामानाधिकरण्यनिर्देशवच्च कश्चिद् हेतुरस्ति ॥

यद्वा जुष्टं= सर्वसेव्यम्, अन्यं= चेतनाचेतनात्मकसकलप्रपञ्चविलक्षणम् ईशं, अस्य = ईशस्येति, महिमानं च 'तदेतत्सत्यम्' इत्यादिप्रागुक्तप्रकारेण 'यदा' सेवको जीवः पश्यति तदा, स, वीतशोको= मुक्तो भवतीत्यर्थः । ननु शोकापादकपुण्यपापयोस्तदापादकमोहस्य च सत्वे वीतशोकत्वलक्षणमुक्तिरेवासम्भाविनीत्यत आह 'यदा पश्यः पश्यते' इत्यादि । शेषं पूर्ववत् । 'यदा पश्यः पश्यते रुग्मवर्णम्' इत्यादिना रुग्मवर्णत्वाद्याकारमीशदर्शनं निरञ्जनत्व-पुण्य-पाप-विधूननवीतशोकत्वकारणमिति लाभात् । अन्यत्वमात्रज्ञानं कारण-मिति न भ्रमितव्यम् ॥

यद्वा 'अस्य'इत्यस्य 'जन्माद्यस्य यत' इत्यादाविव प्रत्यक्षादिप्रमाणसिद्धस्य जगत इत्यर्थः । तेन अस्य= जगतः, ईशं= नियामकम्, अन्यम् = ईशितव्याज्जगतो विलक्षणम्, अत एव, जुष्टम् = सर्वसेव्यमिति, महिमानं च= उक्ततन्महिमानं च, ईशितव्यजीवकोटि-निविष्टो जीवो यदा पश्यति तदा वीतशोको भवति' इत्यादि पूर्ववत् ॥

॥ इति 'जुष्टं यदा पश्यती'ति श्रुत्यर्थनिरूपणम् ॥

## ॥ अथ जुष्टमिति श्रुतेः परकीयार्थनिरसनम् ॥

एतेनैव जुष्टं= विवेकवैराग्यादिभिः प्रक्षाळिताशयमलैः सनकादिभिर्नैरन्तर्येणात्मत्वेन सेव्यमानं कार्यकारणसङ्घाद्विलक्षणम् ईशं, यदा पश्यतीत्यर्थः ननु जीवात्मा स्वस्मादन्यं यदा

पश्यति तदा तस्य महिमानं प्राप्नोतीत्यर्थः । तथासति मुक्तौ भेदज्ञानं हेतुः स्यात् । तथा च 'तमेवं विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिज्ञानज्ञेय-नियमनश्रुतिविरोधः स्यात् । किञ्च भेदे 'अस्य महिमानम्' इत्येतद्विरुद्धम्, अन्यस्यान्य-महिमप्राप्त्ययोगात् तत्सदृशमिति कल्पानायां लक्षणाप्रसङ्गात् । 'ब्रह्मवेद ब्रह्मैव भवति' इति वाक्यशेषविरोधप्रसङ्गाच्चेति निरस्तम् ॥

उक्तरीत्या परव्याख्यानेऽपि भेदज्ञानस्य मुक्तिहेतुत्वावरणेन 'तमेवं विदित्वा' इत्यादि-नियमनश्रुतिविरोधतादवस्थ्यात् । नहि कार्यकारणसङ्घाताद्विलक्षणत्वं न भेदः, तज्ज्ञानं न भेदज्ञानमित्यस्ति ॥

यदुक्तम् अन्यदीयमहिमाप्राप्तिर्नान्यस्य युज्यत इति । तन्न । पितृभूतराजादन्यस्याऽपि तत्पुत्रादेस्तत्छत्रचामरसिंहासनराज्यादिरूपतन्महिमप्राप्त्युपलम्भात् । नहि श्वेतछत्रादिकं राज्ञो न महिमा ॥

मोहतदापाद्यकर्मतत्फलभूतशोकाभावलक्षणेशमहिमप्राप्तौ तदन्यत्वस्याप्रतिबन्धकत्वाच्च । 'अनीशया शोचति मुह्यमान' इति प्रकृतशोकमोहयोर्निनिष्ठिततयोपस्थितयोर्योऽभावः तल्लक्षणस्य 'अस्य महिमानम्' इत्यनेन शब्दतः उपस्थितस्य महिम्न एव प्राप्तिकर्मत्वसम्भवेन ग्राह्यत्वाच्च । 'अस्य महिमानम्' इति षष्ठीस्वारस्येन बाधकाभावे ईशभिन्नस्यैव महिम्ना ग्राह्यत्वाच्च ॥

॥ इति जुष्टमिति श्रुतेः परकीयार्थ निरसनम् ॥

किञ्च 'तस्याभिध्यानाद्योजनात्तत्वभावात् भूयश्च, अन्ते= विश्वान्ते, विश्वमाया निवृत्तिरिति मोह-अज्ञान-मायाऽपरपर्यायप्रकृतिसम्बन्धरूपबन्धनिवृत्तेरीशज्ञानसाध्यत्वाऽऽ-वेदनात् तत्र च 'तस्य' इति प्रस्तुत्य 'तत्त्वभावात्' इत्यभिहितत्वेन 'तस्य' इत्यनेना-न्वयासम्भवात् 'तत्वभाव' इत्यस्य तस्य भावस्तद्धर्मस्तत्त्वमितीशानारोपितधर्मज्ञानादेवाशेष-प्रकृतिसम्बन्धरूपबन्धनिवृत्तिप्रतीतिः । 'तमेवं विदित्वा' इत्यस्य ज्ञान-ज्ञेयनियमन-परत्वाङ्गीकारे तद्विरोधप्रसङ्गः । 'तमेवं विदित्वा' इति विशेष्यसङ्गतैवकारस्यान्ययोग-व्यवच्छेदार्थकत्वेऽपि 'पार्थ एव धनुर्धरः' इत्यादौ धनुर्धरत्वस्येव मोक्षसाधनज्ञानविषयत्वस्य

'ईशान'विशेष्यसम्बन्धव्यच्छेदकत्वेन तद्विशेषणभूतसार्वज्ञसर्वविलक्षणत्वसम्बन्धाव्यवच्छेदकत्वाच्च । अन्यथा 'पार्थ एव धनुर्धरः' इत्युक्तेऽपि पार्थत्वादितद्धर्मव्यवच्छेदप्रसङ्गः । नच धनुर्धरावच्छेदकत्वेनापि पार्थत्वादिधर्मस्य तत्रान्वय इत्यस्ति । एवमीशधर्माणामपि मोक्षसाधनज्ञानविषयतावच्छेदकतयाऽन्वये को विरोधः? 'तमेव'इत्यवधारणस्य मोक्षसाधनज्ञानं प्रति परमात्माऽन्यस्मिन् 'तम्'इति द्वितीयार्थभूतकर्मत्वशब्दित-प्रकारित्वमात्रव्यवच्छेदार्थकत्वोपपत्तेः । पार्थत्वादिधर्मव्यवच्छेदस्य प्रत्यक्षादिप्रमाणविरुद्धत्ववत् सार्वज्ञजीवजडमात्रप्रतियोगिकभेदादिधर्मव्यवच्छेदस्यापि तद्विधायकानेकश्रुतिविरुद्धत्वात्, 'तमेवं'इति तच्छब्दस्य शब्दतः प्रकृतधर्मविशिष्टपरामर्शित्वेन प्रथमश्रुत'तत्'शब्दोपस्थितविशिष्टस्य चरमोपस्थितावधारणेनोपसञ्जातविरोधिना बाधायोगाच्च । नहि 'तमेव'इत्यादिवाक्यं 'स्वाध्यायोऽध्येतव्यः' इत्यादिवाक्यवत् अनारभ्याधीतम् ॥

यत्तु 'अस्य महिमानम्' इत्यत्र 'महिमा'शब्देन सदृशमहिमग्रहणे लक्षणाप्रसङ्ग इति । तन्न । लक्षणकल्पकमुख्यार्थान्वयानुपपत्त्यादिसत्वे लक्षणाङ्गीकारस्यालङ्कारत्वात् प्रत्युत परपक्षे एव जीवस्य वस्तुतः ईशादिभिन्नत्वेन प्राप्ततन्महिमतया प्राप्त्यर्थस्य 'एति' इत्यस्येति षष्ठ्याश्च योगेन परेणापि लक्षणया आदरणीयत्वाच्च ॥

'सप्तदशारत्निर्वाजपेयस्य यूपः'(तै-सं-१-८-१३-१) इत्यादाविव 'देवदत्तस्य नप्ता' इत्यादाविव च 'अस्य महिमानमिति' इत्यत्रापि षष्ठ्याः, साक्षात्परम्परासाधारणसम्बन्धमात्रार्थत्वसम्भवेन द्रष्टुर्जीवगतेशदर्शनलब्धमहिम्नोऽपि ईशसम्बन्धित्वेनोक्तिसम्भवेन लक्षणाऽनभ्युपगमाच्च ॥

अत एव 'एक शतं षष्ठ्यर्था'[(१)] इत्यभियुक्तवचनमुपपद्यते । नहि ईशितव्यजीवनिष्ठमहिमेशानिष्ठतया न व्यवहारार्ह इत्यस्ति । भृत्यजयेन तत्स्वामिनि 'राजा जयी'त्यपि व्यवहारात् ॥

एतेन 'ब्रह्मवेद ब्रह्मैव भवति' इति वाक्यशेषविरोधोऽपि प्रत्यूढः । 'सुपर्णौ' इति द्विवचनेन जीवेश्वरनिष्ठद्वित्वलाभेऽपि 'द्वौ'इति द्विशब्देन तदुक्त्या तत्रादरलाभात् द्वित्वस्य

---

(१) व्याकरणमहाभाष्योदाहृतवचनम् ॥

विवक्षागोचरत्वे सिद्धे तस्य पुनर्भेदं विनाऽनुपपन्नत्वशङ्का परिहारायाक्षेपत एव । सत्यपि तद्भेदलाभे 'तयोरन्यः' इति तयोर्मध्ये 'योऽस्ति सोऽन्य' इति वा, तयोर्मध्ये 'योऽनश्नन्नभिचाकशीति सोऽन्य' इति वाऽन्यत्र वचनमात्रेण लब्धमपि तद्भेदं कण्ठरवेण वाक्यद्वयेनाप्युक्त्याऽत्यन्तादरलाभात् द्विव्यापके भेदेऽपि विवक्षागोचरे सिद्धे, मध्ये 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति' इति जीवस्य अनीशत्वप्रयुक्ताज्ञान-तत्प्रयुक्तकर्म-तत्प्रयुक्तशोकानुक्त्वा, नन्वज्ञानादिसम्बन्धस्यानीशत्वप्रयोज्यत्वे तस्य जीवे सदासत्वेन सर्वदैव तस्याज्ञानादिसम्बन्धप्रसङ्ग इति शङ्कापरिहाराय 'जुष्टं यदा पश्यति अन्यमीशम्' इति,यदाऽनीशो जीवः श्रवणादिविहितोपासनया सेवितं = प्रीतं वा, ईशं, सङ्कोचकाभावात् चेतनाचेतनात्मकसकलप्रपञ्चविलक्षणं, तत्त्वेन, पश्यति = साक्षात्करोति, तदा, अस्य, महिमानं= मोक्षादिवैधुर्यरूपम्, 'एति' इति भेदज्ञानस्य फलप्रतिपादनात् तत्र विवक्षावधारणेन 'ब्रह्मविदाप्नोति परम्' इत्यादिवाक्यपर्यालोचनेन च योऽधिकारी ब्रह्मवेद स ब्रह्मैव भवति = तत् प्राप्नोति, इत्येवार्थपरत्वस्यैव न्याय्यतया वाक्यशेषाविरोधात् । 'ब्रह्मवेद' इति द्वितीयान्तप्रथमब्रह्मशब्दवत् 'ब्रह्मैव भवति' इति द्वितीयब्रह्मशब्दस्यापि द्वितीयान्ततयाऽश्रयणे प्रक्रमाविरोध-प्रत्यभिज्ञाविरोधाभ्यां प्रतिपत्तिलाघवाच्च । अन्यज्ञानेनान्यप्राप्तिव्यवच्छेदेन तज्ज्ञानेनैव तत्प्राप्तिरित्यर्थस्यापि स्पष्टं वेदार्थत्वलाभाच्च । 'भू प्राप्तौ' इत्यभियुक्तपाणिनिव्याख्यानेन 'भवति' इत्यस्य प्राप्त्यर्थत्वकल्पनाच्च ॥

यदा 'पश्यः पश्यते' इत्यादावात्मनेपदवद् 'भवति' इति परस्मैपदोपपत्तेश्च । नचैवं 'ब्रह्मैव सन् ब्रह्माप्येति' 'ब्रह्म सम्पद्यते तदा' इत्यादिश्रुत्यन्तरविरोधः । तस्य जीव एव सन् = जीवभावमत्यजन्नेव, परं ब्रह्म प्राप्नोति' इत्यर्थपरत्वेनाविरोधात् । अन्यथा 'एति' इति प्राप्त्यर्थकधात्वसाङ्गत्यात् ॥

नच 'अप्येति' इत्येतत्तल्लयपरम् । तथा सत्यनन्वयात् । द्वितीय'ब्रह्म'शब्दस्य सप्तम्यन्तत्वकल्पनापत्तेश्च । नचैवम् 'अपि'पदवैयर्थ्यम् । 'अर्चिरादिमार्गस्थं ब्रह्मापि' इत्यर्थसत्वेन तदवैयर्थ्यात्[१] । लयस्यापि परमते ब्रह्माभेदमात्ररूपत्वेन तस्य 'ब्रह्मैव सन्' इति पूर्व-

(१) तद्वैयर्थ्यात् इति ताळपत्रस्थ पाठः ॥

वाक्येनैव लब्धतया पुनरप्रतिपाद्यत्वाच्च । अन्यथाऽन्यतरवाक्यवैयर्थ्याच्च । 'ब्रह्म'शब्दस्य 'बृहजीवजातिकमलासनशब्दराशिषु' इत्यभिधानेन जीवेऽपि रूढत्वात् । 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च' (मै.उ- ६.२२) इत्यादिश्रुतावपि जीवेऽपि तस्य प्रयोगाच्च ॥

एतेन 'ब्रह्म सम्पद्यते तदा' (ब्र-बि-उ-६) इतिश्रुतेरपि ब्रह्मापरोक्षज्ञानानन्तरं ब्रह्म-प्राप्नोति इत्येवार्थः । सम्पत्तेरपि 'सोम्य तदा सम्पन्नो भवति' इत्यादौ सकर्मकत्वदर्शनात् । तस्मान्नश्रुत्यन्तरविरोधो न वाक्यशेषविरोधः ॥

एवं च 'परमं साम्यमुपैति' इति वाक्यसन्निहितं 'परात्परं पुरुषमुपैति दिव्यम्' (आ-उ- ६.८) इति वाक्यमप्यनुकूलितं भवति । अत एव च 'तम्', आत्मानं = परमात्मानं, ब्रह्म= गुणपूर्णम्, अमृतं= मृत्युलक्षितसकलदोषरहितम्, एवम्= उक्तप्रकारेण, विद्वान्, अन्योऽन्यस्सन्, अमृतो= मुक्तो भवति' इत्यर्थपरं 'तमेवम् अन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति, वाजसनेयोक्तवाक्यमपि सङ्गच्छते ॥

ननु 'अस्य महिमानमिति वीतशोकः' इत्यच्युमाना शोकनिवृत्तिः सुप्ताविव, सावशेषा किन्न स्यादिति चेन्न । दत्तोत्तरत्वात् । नहि तत्कारणपुण्यपापयोः तत्कारणज्ञानस्य च ईशज्ञानानिवृत्तौ शोकनिवृत्तिः सावशेषाभ्युपगमार्हा । मोहनिवृत्तिर्निरञ्जनशब्देनेवाऽवेद्यत इत्युक्तम् । साकाङ्क्षितस्यैवार्थस्य श्रुत्या प्रतिपादनीयत्वात् । अन्यथोन्मत्तप्रलापसमत्वा-पातात् । तथा च परमसाम्यमात्रात्यन्तसादृश्यमेव, उक्तरीत्या उपक्रमाद्यानुगुण्यात् । अन्यथा तद्विरोधात् ॥

यद्यपि जीवस्य सच्चिदानन्दस्वरूपत्वेन साधारणधर्मेण च सादृश्यं परमते प्रत्यक्-ब्रह्मैक्यवत्, सर्वाद्वैतपक्षे अविद्यानिवृत्तिरूपमोक्षवच्च, मत्पक्षेऽपि 'नेशदर्शनफलम् उपैति' इत्येतदप्यमुख्यार्थम्, उप= समीपे, एति= प्राप्नोति इत्यर्थाभावात् । तथाऽप्युक्तरीत्याऽ-नाद्यविद्या-काम-कर्म-शोकादिराहित्यसहितत्वस्य 'परमसाम्य'शब्दार्थस्येशज्ञानरूपसाधना-धीनत्वसत्वात् 'उप'शब्दस्य 'एति'शब्दस्य च परमत इव न मन्मते मुख्यार्थत्वासम्भवः । एतेन सामीप्य-सारूप्यलक्षणमोक्षयोरश्रौतत्वशङ्का निरस्ता भवति । श्रौतसाम्योपशब्दाभ्यां तदुपस्थापनात् ॥

एतेन, परमं साम्यम्= ऐक्यमेव, अत्यन्तसादृस्यस्य ऐक्ये एव पर्यवसानात्, भेदगर्भसादृश्यस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इत्यादिश्रुतिस्मृतिभिरेव निषिद्धत्वात् । 'तथा विद्वान् नामरूपाद्विमुक्तः' इत्यादिना मुक्तस्य नामरूपराहित्यप्रतिपादनात्तदभावे सादृश्यस्यासम्भवाच्चेति निरस्तम् ॥

उपक्रमानुसारेण 'तयोरन्यः' 'अनश्नन्नन्यः' 'जुष्टं यदा पश्यत्यन्यमीशम्' इति, मध्ये परामर्शानुसारेण च 'अस्य महिमानम्' इति 'परमं साम्यमुपैति' इत्यस्य भेदगर्भसादृश्यपरताया एवाभ्युपेयत्वात् । नच स्वतःसिद्धविषयकज्ञानापगमे तद्विषयकाज्ञानमात्रे च सति तत्रेदं मया प्राप्तमिति व्यवहारो दृश्यते ॥

नच 'एति' इत्यस्यान्यार्थत्वं सम्भवति । प्राप्त्यर्थत्वे तु 'तदा विद्वान्' इति तदर्थस्य प्रतिपाद्यमानं ज्ञानफलत्वमुपपद्यते । अन्यथा'उप'शब्दवैयर्थ्यात् 'महिमानमिति' इत्यस्याप्यसङ्गतत्वाच्च । प्राप्तव्यं सादृश्यमेव केन रूपेण? इत्याकाङ्क्षायां 'पुण्यपापे विधूय' इति 'निरञ्जनः' इति चागन्तुकसादृश्यप्रयोजकरूपोपन्यासानुपपत्तेश्च । अत एव प्राक् वीतशोकत्वोक्तिः । नचैवं 'परम'शब्दवैयर्थ्यम् । संसारिव्यावृत्तधर्मप्रयोज्यत्वेनैव साम्यशब्दितसादृश्यस्य परमत्वलाभेन 'पर'शब्दावैयर्थ्यात् ॥

**॥अथ संयुक्तमेतत् इति श्वेताश्वतरश्रुत्या ब्रह्मधर्माणां मोक्षकारणत्वसमर्थनम् ॥**

नचैवं भेदगर्भसादृश्याङ्गीकारे 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतिविरोधः । श्वेताश्वतरे प्रथमाध्याये 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशम्' (श्वे-उ-१-८) इति व्यक्त–अव्यक्त-क्षर-अक्षरशब्दितकृत्स्नजगद्भरणकर्तृत्वं विष्ण्वेकधर्मत्वेन लोकवेदयोः प्रसिद्धम् 'ईश'शब्दितस्योक्त्वा तदनन्तरं 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इति 'क्षराक्षर'शब्दितव्याख्यानदर्शनादयम् 'ईश'शब्देन 'शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः, हरः स्मरहरः' 'व्योमकेशो भवो भीमः'[१] इत्यादिशब्दैर्व्यवह्रियमाणे प्रसिद्धे ईशे न वर्तते । तथा सति स्वस्यैव स्वं प्रति ईशत्वा-

(१) अमरकोश-स्वर्गवर्गः ॥

द्यापत्तेः । एवं चोपक्रमानुरोधेन प्रसिद्धेशानत्वेनाङ्गीकर्तव्यस्य 'ईश'शब्दार्थस्य मध्ये 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्'(श्वे-उ-३-३) इत्यादिचतुर्मुखजनकत्वश्रवणात्, 'तमेवं विदित्वाऽति मृत्युमेति नान्यःपन्था' इति मोक्ष-साधनज्ञानविषयत्वश्रवणात्, तथा 'यस्मात् परं नापरमस्ति किञ्चित्'(श्वे-उ-३-९) इति निरतिशयितोत्तमत्वश्रवणात्, 'तस्माद्यदुत्तरतरम्' इति तस्यैव प्रपञ्चनात्, 'महान् प्रभुर्वै: पुरुषः सत्त्वस्यैष प्रवर्तकः'(श्वे-उ-३-१२) इति सत्त्वगुणप्रवर्तकत्वश्रवणात्, तथा 'धर्मावहं पापंनुदं भवेशम्'(श्वे-उ-६-६) इति षष्ठेऽध्याये प्रसिद्धेशपर्याय'भव'शब्दार्थेशत्वाभिधानात्, तदनन्तरं 'तमीश्वराणां परमं महेश्वरम्' 'तं देवानां परमं च दैवम्' इति तस्यैव लोक-पालेश्वरप्रसिद्धेशापेक्षया परमत्वाभिधानाच्च, उत्तरत्र श्रुतस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति वाक्यस्य प्रागुक्तधर्मैरेव तत्सदृशनिषेधपरत्वेन धर्मान्तरेण तत्सदृश निषेधपरत्वा-भावात् । अन्यथा 'तं ये यथोपासते तथैव भवति यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छां-उ-३-१४-१)

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम'(कठ-उ-३-२-१५)

इत्यादिसादृश्यप्रतिपादनपरश्रुतीनामुन्मत्तप्रलापसमत्वापत्तिः ॥

॥ इति संयुक्तमेतत् इति श्वेताश्वतरश्रुत्या ब्रह्मधर्माणां मोक्षकारणत्वसमर्थनम् ॥

## ॥ अथ उपासनाविचारः ॥

नचोपासनाफलस्यैवं विधत्वेऽपि ज्ञानफलस्य प्रत्यक् ब्रह्माभेदमात्रत्वमेव वाच्यम् । अन्यथा मुक्तौ 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' (आ-उ-६-७) इति जीवब्रह्माभेदावेदकश्रुतिविरोध इति वाच्यम् । 'उद्यन्तमस्तं यत्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते असावादित्यो ब्रह्मेति' 'ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद' इत्युपासनाफलस्यापि प्रत्यक्ब्रह्मभेदपरत्वाऽऽवेदनात् । नचायमर्थवादः । 'प्रतितिष्ठन्ति'[१] इत्याद्यर्थवादस्यापि फलसमर्पकत्वात् अर्थवादत्वापराधेन स्वार्थपरत्वाभावे

(१) जै-सू-४-३-१७ इत्यत्रोक्त अर्थवादमित्यर्थः ॥

एतेन, परमं साम्यम्= ऐक्यमेव, अत्यन्तसादृस्यस्य ऐक्ये एव पर्यवसानात्, भेदगर्भसादृश्यस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इत्यादिश्रुतिस्मृतिभिरेव निषिद्धत्वात् । 'तथा विद्वान् नामरूपाद्विमुक्तः' इत्यादिना मुक्तस्य नामरूपराहित्यप्रतिपादनात्तदभावे सादृश्यस्यासम्भवाच्चेति निरस्तम् ॥

उपक्रमानुसारेण 'तयोरन्यः' 'अनश्नन्नन्यः' 'जुष्टं यदा पश्यत्यन्यमीशम्' इति, मध्ये परामर्शानुसारेण च 'अस्य महिमानम्' इति 'परमं साम्यमुपैति' इत्यस्य भेदगर्भसादृश्यपरताया एवाभ्युपेयत्वात् । नच स्वतःसिद्धविषयकज्ञानापगमे तद्विषयकाज्ञानमात्रे च सति तत्रेदं मया प्राप्तमिति व्यवहारो दृश्यते ॥

नच 'एति' इत्यस्यान्यार्थत्वं सम्भवति । प्राप्त्यर्थत्वे तु 'तदा विद्वान्' इति तदर्थस्य प्रतिपाद्यमानं ज्ञानफलत्वमुपपद्यते । अन्यथा'उप'शब्दवैयर्थ्यात् 'महिमानमिति' इत्यस्याप्यसङ्गतत्वाच्च । प्राप्तव्यं सादृश्यमेव केन रूपेण? इत्याकाङ्क्षायां 'पुण्यपापे विधूय' इति 'निरञ्जनः' इति चागन्तुकसादृश्यप्रयोजकरूपोपन्यासानुपपत्तेश्च । अत एव प्राक् वीतशोकत्वोक्तिः । नचैवं 'परम'शब्दवैयर्थ्यम् । संसारिव्यावृत्तधर्मप्रयोज्यत्वेनैव साम्यशब्दितसादृश्यस्य परमत्वलाभेन 'पर'शब्दावैयर्थ्यात् ॥

**॥अथ संयुक्तमेतत् इति श्वेताश्वतरश्रुत्या ब्रह्मधर्माणां मोक्षकारणत्वसमर्थनम् ॥**

नचैवं भेदगर्भसादृश्याङ्गीकारे 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतिविरोधः । श्वेताश्वतरे प्रथमाध्याये 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशम्' (श्वे-उ-१-८) इति व्यक्त–अव्यक्त-क्षर-अक्षरशब्दितकृत्स्नजगद्भरणकर्तृत्वं विष्णवेकधर्मत्वेन लोकवेदयोः प्रसिद्धम् 'ईश'शब्दितस्योक्त्वा तदनन्तरं 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इति 'क्षराक्षर'शब्दितव्याख्यानदर्शनादयम् 'ईश'शब्देन 'शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः, हरः स्मरहरः' 'व्योमकेशो भवो भीमः'[१] इत्यादिशब्दैर्व्यवह्रियमाणे प्रसिद्धे ईशे न वर्तते । तथा सति स्वस्यैव स्वं प्रति ईशत्वा-

---

(१) अमरकोश-स्वर्गवर्गः ॥

द्यापत्तेः । एवं चोपक्रमानुरोधेन प्रसिद्धेशानत्वेनाङ्गीकर्तव्यस्य 'ईश'शब्दार्थस्य मध्ये 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्'(श्वे-उ-३-३) इत्यादिचतुर्मुखजनकत्वश्रवणात्, 'तमेवं विदित्वाऽति मृत्युमेति नान्यःपन्था' इति मोक्ष-साधनज्ञानविषयत्वश्रवणात्, तथा 'यस्मात् परं नापरमस्ति किञ्चित्'(श्वे-उ-३-९) इति निरतिशयितोत्तमत्वश्रवणात्, 'तस्माद्यदुत्तरतरम्' इति तस्यैव प्रपञ्चनात्, 'महान् प्रभुर्वै: पुरुषः सत्त्वस्यैष प्रवर्तकः'(श्वे-उ-३-१२) इति सत्त्वगुणप्रवर्तकत्वश्रवणात्, तथा 'धर्मावहं पापनुदं भवेशम्'(श्वे-उ-६-६) इति षष्ठेऽध्याये प्रसिद्धेशपर्याय'भव'शब्दार्थेशत्वाभिधानात्, तदनन्तरं 'तमीश्वराणां परमं महेश्वरम्' 'तं देवानां परमं च दैवम्' इति तस्यैव लोक-पालेश्वरप्रसिद्धेशापेक्षया परमत्वाभिधानाच्च, उत्तरत्र श्रुतस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति वाक्यस्य प्रागुक्तधर्मैरेव तत्सदृशनिषेधपरत्वेन धर्मान्तरेण तत्सदृश निषेधपरत्वा-भावात् । अन्यथा 'तं ये यथोपासते तथैव भवति यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छां-उ-३-१४-१)

**'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम'**(कठ-उ-३-२-१५)

इत्यादिसादृश्यप्रतिपादनपरश्रुतीनामुन्मत्तप्रलापसमत्वापत्तिः ॥

**॥ इति संयुक्तमेतत् इति श्वेताश्वतरश्रुत्या ब्रह्मधर्माणां मोक्षकारणत्वसमर्थनम् ॥**

## ॥ अथ उपासनाविचारः ॥

नचोपासनाफलस्यैवं विधत्वेऽपि ज्ञानफलस्य प्रत्यक् ब्रह्माभेदमात्रत्वमेव वाच्यम् । अन्यथा मुक्तौ 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' (आ-उ-६-७) इति जीवब्रह्माभेदावेदकश्रुतिविरोध इति वाच्यम् । 'उद्यन्तमस्तं यत्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते असावादित्यो ब्रह्मेति' 'ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद' इत्युपासनाफलस्यापि प्रत्यक्ब्रह्मभेदपरत्वाऽऽवेदनात् । नचायमर्थवादः । 'प्रतितिष्ठन्ति'(१) इत्याद्यर्थवादस्यापि फलसमर्पकत्वात् अर्थवादत्वापराधेन स्वार्थपरत्वाभावे

(१) जै-सू-४-३-१७ इत्यत्रोक्त अर्थवादमित्यर्थः ॥

'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति' इत्यादेरपि जिज्ञासाविधि-विषयस्तावकत्वेनार्थवादतया स्वार्थ पर परत्वाभावाप्रसङ्गात्[१] । 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्मचेद्वेद'(तै-उ-२-११) इत्यादावुपासनाया अपि ज्ञानाभिन्नत्वोक्तेः 'चतुर्भुजो नव न' इत्यादिज्ञापकात् विदेरेवोपासनार्थत्वसम्भवाच्च । 'ब्रह्मविदाप्नोति परम्' इत्यादावपि तस्योपासनार्थपरत्वापत्तेश्च । नच 'ब्रह्मविदाप्नोति परम्''तरति शोकमात्मवित्' इत्यादेः 'तद्विजिज्ञासस्व' इत्यादिना समानार्थत्वे मानमस्ति । तस्मादुपासनाऽपि ज्ञानादनन्यैव ॥ ॥ इति उपासनाविचारः ॥

नचैवंसति 'परेऽव्यये सर्व एकी भवन्ति' इति मुक्तजीवस्य ब्रह्माभेदाऽवेदकश्रुति-विरोधः । तत्र 'एकी भवन्ति' इति व्यपदेशस्य 'सायं गोष्ठे सर्वे गाव एकी भवन्ति' इत्यत्रेव स्थानैक्यनिबन्धनत्वेनाभेदपरत्वाभावात् । तथा सति 'परेण अव्ययेनैकीभवन्ती'ति तृतीयापत्त्या सप्तम्यनुपपत्तेश्च । किञ्चैवंसति 'कर्माणि विज्ञानमयश्च आत्मा' इति कर्मसमभिव्याहारोऽनुपपन्नः । नहि कर्मणां ब्रह्माभेदः सम्भवतीत्यङ्गीकृतो वा ॥

यत्तु 'तथा विद्वान् नामरूपाद्विमुक्तः' (आ-उ-६-८) इति मुक्तस्य नामरूपविमोक्ष-श्रवणात् सादृश्यमसम्भवि, नहि नामरूपे विना कृतं सादृश्यमस्तीति । तन्न । 'नामरूपे व्याकरवाणि' 'नामरूपे व्याकरोत्' इति श्रुतिप्रतिपन्नकृत्रिमनामरूपसम्बन्धविधुरत्वेन तेनरूपेण सादृश्यासम्भवेऽप्युक्तरीत्या निरञ्जनत्वाऽपहतपाप्मत्व-वीतशोकत्वादिना मुक्त-स्येशसादृश्यसम्भवात् । नहि 'परमं साम्यमुपैति' इति श्रुतिस्ताभ्यामेव[२] सादृश्यमाह । येन तत्त्वेन सादृश्यासम्भवः शङ्क्येत ॥

अपि च 'नामरूपाद्विमुक्तः' इति वाक्यस्य न सुबन्तशब्दमात्रवाच्यत्वाभावो वा 'रूप'शब्दवाच्यमात्राभावो वाऽर्थः । तथासति 'मुक्त' इत्यादिव्यवहाराभाजनत्वप्रसङ्गात् नृशृङ्गवत् निस्स्वरूपत्वापत्तेश्च । तथा च 'सच्चिदानन्दस्वरूपत्वेन मुक्तः' इत्यादिव्यवहार-गोचरत्वेन चास्त्येव सादृश्यमिति न ताभ्यामपि तदसम्भवः ॥

---

(१) परत्वाभाव प्रसङ्गात् इति पाठः स्यात् ॥

(२) 'श्रुतिस्थताभ्यामेव' इति ताळपत्रस्थपाठः ।

किञ्च तथा 'नामरूपाद्विमुक्तः' इति श्रुतिः परमसाम्योपपादकैवेति न स्वोक्तार्थविरोधिनी । लोके अल्पव्यावर्तकधर्मयुक्तेष्वेव 'परमसाम्य'व्यवहारात् नामरूपविशेषयोरपि व्यावर्तकत्वात् । अपि च परमसाम्यमात्रं नैक्यं वाच्यम् । तथा सति तस्य 'यदा पश्यः पश्यते रुग्मवर्णम्' इत्यादिश्रुतिप्रतिपन्नरुग्मवर्णत्वादिविशिष्टज्ञानफलत्वं तदुपहितज्ञानफलत्वं तदुपलक्षितज्ञानफलत्वं वा स्यात् । तादृशज्ञानस्य त्वया भ्रमत्वोपगमेन भ्रमफलस्य नित्यत्वायोगेनानित्यत्वापत्तेः बाधितार्थविषयत्वस्यैव ज्ञाने भ्रमत्वरूपत्वात् । तादृशज्ञानस्यापि तत्त्वज्ञानत्वे वेदान्तानामखण्डचिन्मात्रपरत्वस्वीकारानुपपत्तेः ॥

यत्तु- साम्यं=समत्वं=सर्वात्मकत्वम्, उपैति इत्यर्थः, तस्मात् 'सर्वं भवदत्र ह्येते सर्व एकं भवन्ति' 'आत्मा ह्येषां सम्भवति' (बृ-उ-१-४-१०) इत्यादिश्रुतिभिः सर्वात्मकत्व प्रतिपादनादिति व्याख्यानान्तरम् [(१)]। तन्न । 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यस्य पूर्ववाक्यस्य, कार्यकारणसङ्घातैः सेवितम् = अविवेकिभिः तदात्मतया गृहीतं, यदाऽधिकारी अन्यं= विवेचनात् शरीरद्वयात् पृथक्भूतमिति व्याकुर्वता सर्वात्मकत्वमुत्तरवाक्यस्यार्थ इत्यस्वीकर्तव्यत्वात् । अन्यथा स्ववचनविरोधात् । किञ्चैवम् उत्तरवाक्यस्य व्याख्याने कथमुक्तोपक्रमाद्यविरोधः । अपि च सर्वात्मकत्वस्य चैतन्यमात्रत्वे ज्ञानसाध्यत्वानुपपत्तिः, तदन्यत्वे सति पारमार्थिकत्वे अद्वैतहानिश्च ॥

किञ्च मिथ्याभूतसर्वात्मकत्वे चैतन्यस्य मिथ्यात्वप्रसङ्गो वा, सत्यचैतन्यात्मकत्वेन जीवस्यैव सर्वस्यापि सत्यत्वप्रसङ्गो वा, परस्परात्यन्तभिन्नव्यवस्थितार्थक्रियाकारिसर्वशब्दितासङ्ख्य पदार्थात्मकत्वेन चैतन्यभेदप्रसङ्गो वा, एकचैतन्याभिन्नत्वेन सर्वस्यैकत्वप्रसङ्गो वा, दुर्वारः । सर्वात्मकत्वाऽवेदकश्रुतीनां तवोपासनार्थत्वेनावैयर्थ्यात्, मयाऽपि 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति'(म-ना-उ-११-२) इति श्रुत्या सर्वात्मकत्वाऽवेदकश्रुतीनाम् उपजीव्य-उपजीवकभावविषयत्वाऽवेदनेन तथोपासनार्थत्वेनावैयर्थ्याच्च ॥

'असन्नेव स भवति । असत् ब्रह्मेति वेद चेत्' इत्यादिश्रुत्या 'नच रमन्त्यहो

---

(१) 'साम्यं=समतां=अद्वैतलक्षणम् उपैति' इत्याथर्वणोपनिषत् शाङ्करभाष्यस्य तात्पर्यतोऽनुवादोऽयम् ॥

असदुपासनयाऽऽत्महनः' (भा-१०-९४-२४) इत्यादिस्मृत्या चासदुपासनायाः निषिद्धत्वेन मया इव त्वयाऽपि उपासनार्थं सर्वात्मकत्वाऽवेदकश्रुतीनामर्थस्य स्वीकार्यत्वाच्च ॥

यत्तु 'द्वासुपर्णा'दिवाक्ये उपक्रमादिभिर्भेदो न प्रतिपाद्यः । प्रत्यक्षादिसिद्ध तत्प्रतिपादने श्रुतिवैयर्थ्यात् 'अप्राप्ते शास्त्रमर्थवत्'(१) (जै-सू-६-२-१८) इति न्यायात् । तदसिद्ध-भेदस्याभावाच्चेति । तन्न । 'घटः सन् पटः सन्, अहं सुख्यस्मि, घटोऽस्ति, घटः प्रकाशते, मम धनं प्रियं, धान्यं प्रियं, मम सर्वं स्फुरती'त्याद्यनुभवेन घट-जीव-चैतन्यादेः सच्चिदानन्दात्मकब्रह्माभिन्नत्वसिद्धेः उदाहृतसर्वात्मकत्वाऽऽवेदकश्रुतीनां, तत्त्वमस्यादि-श्रुतीनां, चोपक्रमाद्युपेततया तदप्रतिपादकत्वापातात् । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात्, –

**'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।**
**आद्यत्रयं ब्रह्मरूपम्** '(२) इति त्वयैव स्वीकारात् ॥

अपि च जीवनिष्ठेश्वरप्रतियोगिकभेदस्य प्रत्यक्षसिद्धत्वेऽपि 'जुष्टं यदा पश्यत्यन्यमीशम्' इति सफलदर्शनप्रकारतयाऽवगतस्य ईशनिष्ठजीवप्रतियोगिकभेदस्यापि 'द्वासुपर्णे'त्यादिना प्रतिपादनात् प्रत्यक्षसिद्धे तस्मिन्नेव भेदे उपक्रमादिभिस्तात्पर्यवत्ता प्रतिपादने को दोषः?

अपि च मम भेदद्वयवत् परस्याभेदद्वयासम्भवेन 'तत्त्वमसि' 'अयमात्मा ब्रह्म' (मा-उ-१-१) 'अहं ब्रह्मास्मि' 'तद् ब्रह्माऽद्वयमस्म्यहम्' इत्यादिवाक्यार्थपर्यालोचनेन जीवे एव ब्रह्माभेदस्य प्रतिपाद्यत्वावसायेन तस्य चोक्तरीत्या निरुपाधिकप्रेमत्वलिङ्गेन 'अहं स्फुरद्रूपम्' इत्यनुभवेन च सच्चिदानन्दात्मतया सिद्धेस्तद्वाक्यानामेवोपक्रमादिभिस्तात्पर्यवत्तया तत्प्रतिपादने एव प्रयोजनाभावाद्वैयर्थ्यम् । नच ब्रह्मनिष्ठतया तद्बोधने वैयर्थ्याभावः । अश्मादिशब्दघटितत्वेन तेषां वाक्यानां तत्रासामर्थ्यात्, परेण 'प्रकृष्टःप्रकाशश्चन्द्रः' इत्यादि वाक्यस्य प्रत्यक्षसिद्धतत्स्वरूपमात्रे तात्पर्यस्य स्वीकाराच्च ॥

---

(१) 'अशास्त्रात्तूपसम्प्राप्तिः शास्त्रं स्यान्न प्रकल्पकं तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत्' इति जैमिनि-सूत्रपूर्णपाठः ॥

(२) 'जगद्रूपं ततो द्वयम्' इति पूर्णपाठः ॥

अपि च 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इत्यादिवाक्याद् भेदज्ञानात् मुक्त्यवगमात्, फलस्यापि तात्पर्यलिङ्गत्वात्, तस्य भेदपरत्वमावश्यकमिति । नचास्य वाक्यस्य कार्यकारणसङ्घातात् पृथग्विलक्षणम् आत्मानं= स्वात्मानं= त्वंपदार्थमिति यावत्, मत्वा तदज्ञानमात्रात् 'अमृतत्वमेति' इति वाक्यार्थप्रतीतेर्जीवचैतन्यस्येश्वरचैतन्य तादात्म्यमेवार्थः । अत एव 'प्रेरितारं च मत्वा' इत्युपपद्यते । कार्यकारणसङ्घातात् पृथक्त्वेनावगतमेव आत्मानं प्रेरितारं च मत्वा= ईश इति ज्ञात्वेत्यर्थः, तेनाऽमृतत्वं प्राप्नोतीति । तथा च अभेदज्ञानस्यैव मोक्षफलकत्वस्य दर्शितत्वात् अभेदे एवास्य तात्पर्यमस्तीत्यवसीयते, प्रकारान्तरेणार्थकथने 'तमेवं विदित्वा' इति ज्ञेयज्ञाननियमनश्रुतिविरोध इति वाच्यम् ।

'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः' (के-उ-१८)

'द्वे ब्रह्मणी वेदितव्ये परं चापरं च'
'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्'

इत्यादि जीवेश्वरभेदाऽऽवेदकश्रुत्यन्तरपरात् ।

'आत्मानं द्विविधं विद्यात् परापरविभेदतः ।
द्वे ब्रह्मणी वेदितव्ये इति चाथर्वणी श्रुतिः' (वृ-ना-पु)

इति नारदीयवचनात्,

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (भ-गी-१५-७)

इति गीतावचनाच्च ।

आत्मानं= स्वात्मानं, प्रेरितारं च= ईश्वरं च, पृथक्सन्निहितपरित्यागे कारणाभावात्, कार्यकारणसङ्घातस्य च असन्निहितत्वात्, परस्परभिन्नत्वेन मत्वा= ज्ञात्वा, ततः= तदनन्तरं, जुष्टःसन्= परिजनैः सेव्यमानः सन्, तेन= जीवेश्वरपरस्परभेदज्ञानेन, अमृतत्वं = मोक्षं, एति= प्राप्नोति, इत्येव तच्छ्रुत्यर्थस्य वर्णनीयत्वात् । अन्यथा 'पृथगात्मानं

प्रेरितारं च' इति'च'शब्दानर्थक्यप्रसङ्गात्, कार्यकारणसङ्घातात्, आत्मानं= स्वात्मानं, पृथक्= विलक्षणं मत्वा' इति, व्याख्यानेऽपि भेदज्ञानस्य मोक्षसाधनत्वावारणाच्च, 'पृथक्'शब्दस्य भेदवाचिनोऽन्यार्थपरत्वाङ्गीकारे लक्षणापाताच्च, वैलक्षण्यस्यापि वैधर्म्यरूपस्य द्वित्व-द्विपृथक्त्व-अन्योन्याभाव-स्वरूपभेदवद् भेदशब्दार्थत्वाच्च, वैधर्म्यस्य व्यावर्तकधर्मत्वेन तज्ज्ञानस्य त्वया मोक्षसाधनत्वेनानभ्युपगमाच्च ॥

किञ्च जीवात्मानः प्रेरयित्रीशाभिन्नत्वे ईशवज्जीवस्यापि तदभेदानुसन्धानप्रसङ्गः । नचैवम् । अनुभवविरोधात् । 'य आत्मनि तिष्ठन् यमात्मा न वेद' इत्यादि भेदव्यपदेशानुपपत्तिश्च । नच वस्तुतो भेदाभावेऽप्यज्ञानवशाद्विद्यमानोऽपि ईश्वराभेदः जीवेन नानुसन्धीयत इति वाच्यम् । तथा सति ईश्वरस्य अज्ञानावृतजीवचैतन्याभिन्नतया तदावृतत्वावश्यम्भावेन तस्यापि स्वगत सर्व इव सर्वप्रेरकत्वादिरूपेश्वरत्वनियत-धर्माननुसन्धानापातात् । नचैवम् । 'यः सर्वज्ञः सर्ववित्' 'तुरीयं तत् सर्वदृक् सदा' इत्यादि श्रुतिविरोधापत्तेरिति ॥

## ॥ अथ 'उदरमन्तरं कुरुते'इति वाक्यस्य अर्थनिरूपणम् ॥

'उदरमन्तरं कुरुते' इति श्रुतेरपि 'दरादराभ्यां दरकंपिनीपपेदरविवृतकवाटं दर्शयन्ति मुखम्' इत्यादाविव 'दर'शब्दस्याल्पार्थकत्वेन यो अरम्= अल्पमेवान्तरं= भेदं कुरुते[१] 'अथ तस्य भयं भवति' इत्यर्थपरत्वेन तदनुरोधेनाऽपि 'पृथगात्मानम्' इति श्रुतेः पराभिमतयोजनाऽयोगाच्च । जीवेश्वरभेदस्य मिथ्यात्व-औपाधिकत्वयोः[२] अन्यतराङ्गीकारे निवृत्त्यवश्यम्भावेन यावद् धर्म्यवस्थित्यभावेनाल्पकालत्वरूपाल्पत्वसत्वात्, परव्याख्याने ईश्वरशब्दस्यापि शब्दार्थत्वाङ्गीकारवत् मद्व्याख्याने तस्यावधारणार्थत्वाङ्गीकारेणोक्त-विवक्षितार्थत्वलाभात् 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुत्या भेदालीकत्वदर्शनानिष्टप्रतिपादनाच्च ॥

---

(१) 'उदपि,अरं= अल्पमप्यन्तरं छिद्रं=भेददर्शनं कुरुते' इति शाङ्करत्तैत्तिरीयभाष्यम् ॥

(२) 'मिथ्यात्वात् औपाधिकत्वयोरन्तराङ्गीकारे' इति ताळपत्रस्थ पाठः ॥

वस्तुतो 'नानात्वाभावेनैव भिन्नमिव, यः पश्यति स मृत्योर्मृत्युमाप्नोति' इति तस्यानिष्टफलानुक्तिप्रसङ्गाच्च । नहि नानेव वस्तुतो विद्यमानं तथैव तत् पश्यतोऽनिष्टं वक्तुं शक्यमिति,अन्यदन्यथा पश्यत एव मिथ्याज्ञानित्वेनानिष्टभाजनत्वात् । नचैवं ज्ञेय-ज्ञाननियमनश्रुतिविरोधः । तद्विरोधस्य पूर्वं निरस्तत्वात् ।।

## ।। अथ 'भयं द्वितीयाभिनिवेशतः स्यात्' इति स्मृत्यर्थचर्चा ।।

ननु 'नात्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्ति अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति' (नृ-उ-ता-उ-८) इति श्रुत्या भेदज्ञानस्य अनर्थहेतुत्वप्रतिपादनात् तत्स्वरूपनिषेधाच्च ।

'भयं द्वितीयाभिनिवेशतः स्यात्' (भा-११-२-३७) इति स्मृत्याऽपि द्वितीयाभिनिवेशस्य भयहेतुत्वाऽवेदनाच्च, भेद-तज्ज्ञानयोः परमार्थत्व-परमपुरुषार्थसाधनत्वे कथम् उपपद्येते इति चेत् । किमेह कथम्, अत्र = परमात्मनि प्रतिपन्नासु भिधासु, काचन = अवयव-अवयवि-भाव गुण-गुण्यादि-भावापादिता, भिदा, नास्ति, सा अत्र नैवास्ति, इति तादृशस्यैव भेदस्य तच्छ्रुत्या निषेधेन जीवजडादिप्रतियोगिकभेदस्य तत्र अनिषेधात् । अन्यथा 'तेभ्यो विलक्षणः साक्षी चिन्मात्रः' इति परमात्मनि भोग्य-भोक्तृ-भोग-भेदस्यानुक्तिप्रसङ्गात् । 'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्'(१) इति स्मृत्या जीवेश्वरपरस्परप्रतियोगिकभेदस्य सत्यस्यानुक्तिप्रसङ्गाच्च ।।

'भयं द्वितीयाभिनिवेशतः स्यात्' इति स्मृतौ 'द्वितीय'शब्दस्य विरोधिभूतद्वितीय-परत्वेन तस्य अनिष्टसाधनभूतद्वितीयवस्तु अन्याभिनिवेशस्यानिष्टसाधनत्वाऽऽवेदनत्वेन द्वितीयमात्रस्य भयहेतुत्वाऽनावेदकत्वात् । अन्यथा 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' (आ-उ-२-११) इति गुरूपासनादिविधिवैयर्थ्यात् । गुरु तदुपासनादेरपि(उपासनादेः-पा) द्वितीयत्वेन भयसाधनत्वात् । अन्यथा भेदमात्रस्यालीकत्वे तत्रैव श्रुतौ 'अत्र भिदामिव मन्यमानः' इति भेदालीकत्वं जानतो अनिष्टानुक्तिर्न स्यात् । पूर्ववाक्ये 'नात्र काचन

(१) ब्रह्मसूत्रभाष्ये गुहाधिकरणोक्तस्मृतिवाक्यम् ।

भिदाऽस्ति' इति निषेधत्वेन भेदस्यालीकत्वापरपर्यायमिथ्यात्वावगमात् । पूर्वोत्तरवाक्या-विरोधाय उक्तरीत्या भिन्नविषयत्वस्वीकारावश्यम्भावात् ॥

॥ इति 'भयं द्वितीयाभिनिवेशतः स्यात्' इति स्मृत्यर्थचर्चा ॥

किञ्च अस्यां श्रुतौ 'अत्र'इति न तावत् ब्रह्मणीति विवक्षितम् । तथासति –

'तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः'

'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्'

'अनश्नन् अन्यः'

'जुष्टं यदा पश्यत्यन्यमीशम्'

'अहं विजानामि विविक्तरूपो नचास्ति वेत्ता ममचित्सदाहम् ।
वेदैरनैकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्'

'उत्तम पुरुषस्त्वन्यः '

इत्यादि श्रुति-स्मृति-विरोधात् । ताभिर्ब्रह्मणि भेदाऽवेदनात् । तस्मात् –

'नात्र काचन भिदाऽस्ति' इति

'तद्विशेष(१)स तत्वतोऽन्यः'

'तस्मिंश्चान्यो मायया सन्निरुद्धः'

'तयोरन्यः पिप्पलं स्वाद्वत्ति'

'अतोऽन्य दार्तम्'(बृ-उ-३-४-२)

'अन्यद्युष्माकमन्तरं बभूव'(ऋ-सं-१०-८२-७)

'नान्यच्छ्रेयो वेदयन्ते' (आ-उ-२-९)

इत्यादि श्रुतिविरोधात्, ताभिस्तयोर्भेदावेदनात्, तस्मात् 'नात्र काचन भिदाऽस्ति' इत्यादिश्रुतेः, न भेदमात्रनिषेधपरत्वं, किन्तु उक्तरीत्या तद्विशेषनिषेधपरत्वमेवेति ॥

॥ इति नात्र काचनेति श्रुत्यर्थनिरूपणम् ॥

---

(१) 'कर्मक्षये याति सतत्वतोऽन्यः' इति पाठः स्यात् ॥

किञ्च जीवेश्वरयोरभेदे –

**'स वृक्षकालाकृतिभिः परोऽन्यो यस्मात् प्रपञ्चः परिवर्ततेऽयम् ।**
**धर्मावहं पापनुदं भगेशं ज्ञात्वाऽत्मस्थममृतं विश्वधाम'** (श्वे-उ-६-६)

'तमीश्वराणां परमं महेश्वरम्' (श्वे-उ-६-७) इति श्वेताश्वतरवाक्यविरोधः । तथा 'तमात्मस्थं येऽनुपश्यन्ति धीराः' तथा 'ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि' (श्वे-उ-२-८) 'प्राणान् प्रपीड्येह संयुक्तचेष्टः' (श्वे-उ-२-९) इत्यादिवाक्य-विरोधः । नच भेदं विना आत्मशब्दितजीवस्थत्वं युज्यते । तदपेक्षयाऽतिशयितनित्य-चेतनत्वं वा सिद्धत्तरण साधनत्वम् ॥

एतेन **'एवमेतान् लोकानात्मवान्येव प्रतितिष्ठितान् वेदात्मैव भवति इति वेदा-नुशासनम्'**[१] इति(सौ-उ-१०) **'ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद'**(सौ-उ-३) इति च सौबालगतदशम-तृतीय-खण्डगतवाक्याभ्यां जीवस्य ब्रह्माभेदाऽवेदनादन्यथाङ्गीकारे तद्विरोध इति निरस्तम् ॥

'अङ्गुष्ठमात्रो रवितुल्यरूपः' इति परमात्मनः उपास्यं रूपं= नित्योपासकस्य जीवा-त्मनः स्वरूपं, प्रतिपादयता 'सङ्कल्पाहङ्कारसमन्वितो यः बुद्धेर्गुणेन' इति पूर्ववाक्येन आराग्रत्वमात्रत्वोक्तावौपाधिकत्वशङ्का निरासाय श्वेताश्वतरे –

**'आत्मगुणेन चैवमाराग्रमात्रो ह्यपरोऽपि दृष्टः'**

**'बालाग्रशतभागस्य शतधा कल्पितस्य च ।**
**भागो जीवस्सविज्ञेयः सचानन्त्याय कल्प्यते'** (श्वे–उ-५-९)

इति वाक्येन 'आत्मगुणेन'= स्वाभाविकगुणेनापि, आराग्रमात्रत्वोक्त्या, दृष्टः = साक्षि-प्रत्यक्षसिद्धजीवः, अपरोऽपि हि= परः= परमात्मा, तद् भिन्नोऽपि हि' इति, व्यावर्तक-धर्मोक्तिपूर्वकं जीव-परमात्मभेदस्यैवाऽवेदनात् । अन्यथा तत्रैव 'वेदाहमेतमजरं पुराणं

---

(१) 'एवमेतान् लोकानात्मनि प्रतिष्ठितान्वेदात्मैव स भवति इत्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति' इति इदानीन्तनपाठः ॥

सर्वात्मानं सर्वगतं विभुत्वात्' (श्वे-उ-३-२१) इति विभुत्वं हेतूकृत्य सर्वगतत्वं सर्वान्तर्यामित्वं च परमात्मन्युक्तिप्रसङ्गः[१] । 'आत्मगुणेन च' इति 'च'कारानर्थक्यप्रसङ्गश्च ॥

'आत्मैव भवति', 'ब्रह्मैव सन् ब्रह्माप्येति' (नृ-उ-ता-उ-५) इत्यनयोर्वाक्ययोः 'आत्म'शब्दस्य 'ब्रह्म'शब्दस्य च प्रथमान्तस्य जीवपरत्वाङ्गीकारेणोक्तरीत्या जीवभावमत्यजन्नेवेत्यर्थपरत्वेन[२], तयोर्जीवेश्वरभेद[३]प्रतिपादकत्वात् ॥

एतेन 'जीवभावस्य ज्ञानात् प्रागेव सिद्धस्य, फलत्वप्रतिपादनमसङ्गतमि'ति निरस्तम् । भ्रमरकीटन्यायेन, ज्ञाता आत्मैव परमात्मसदृशैव, भवतीति तदर्थविज्ञानात् । नहि कीटोऽपि स एव जीवभ्रमरो भवति, किन्तु तत्सदृश एव । नचैवं लक्षणाप्रसङ्गः । मुख्यार्थासम्भवे लक्षणाया अलङ्कारत्वात् । परपक्षे पदद्वयलक्षणा, मत्पक्षे तु एकपदलक्षणेति लाघवेन गौरवग्रस्तपरपक्षस्यैवानादर्तव्यत्वाच्च । जीवब्रह्मभावस्य प्रागेव सिद्धत्वेन परपक्ष एव, तस्य ज्ञानफलसत्त्वासम्भवाच्च, 'ब्रह्माप्येति' इत्यत्र श्रुतप्राप्तिकर्मत्वत्यागापत्तेश्च ॥

## ॥ अथ 'ब्रह्म वेदे'ति आथर्वणश्रुत्यर्थनिरूपणम् ॥

एतेन 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवतीति' (आ-उ-६-९) श्रुतिरपि व्याख्याता । 'भवति' इत्यस्य प्राप्त्यर्थत्वात् । 'यदा पश्यः पश्यते' इत्यत्रात्मनेपदवत् अत्र परस्मैपदोपपत्तेः । 'ब्रह्मविदाप्नोति परम्' इत्यादिवाक्यान्तरानुगुण्याच्च ॥

किञ्चास्य वाक्यस्य जीवब्रह्माभेदपरत्वे 'स यो ह वै तत्परमं ब्रह्मवेद स तत्परमं भवति' इति श्रुत्याकारापत्त्या तथात्वाभावेन 'ब्रह्मैव भवति' इत्येवकारेण च यथा योग्यं पूर्णो भवतीत्येवार्थपरत्वं युक्तम् । अपि च 'ब्रह्म भवति नास्याब्रह्मवित्कुले भवति' इत्यत्र नञोः देहलीदीपन्यायेन परव्याख्याने 'यस्मात् परं नापरमस्ति किञ्चित्'(श्वे-उ-३-८) इत्यत्र नञिवोभाभ्यां 'भवति'पदाभ्यां सम्बन्धेन तस्य वाक्यस्याभेदपरत्वमेव दुर्लभम् । नचैवम्

---

(१) 'परमात्मन्यनुक्तिप्रसङ्गः' इति पाठः स्यादिति भाति ॥

(२) जीवभावमत्यजन्मैवेत्यर्थपरत्वेन इति ताळपत्रस्थ पाठः ॥

(३) तयोर्जीवेश्वराभेद इति ताळपत्रस्थ पाठः ॥

अभेदनिषेधपरत्वाङ्गीकारे प्रसक्तप्रतिषेधत्वापत्तिः, 'तत्त्वमस्या'दिवाक्यजापातप्रतीतेरेव तत् प्रसक्तिरूपत्वात् । नचायमर्थः प्रत्यक्षादिप्राप्तत्वान्नश्रुत्या बोद्धयो, 'अप्राप्ते शास्त्रमर्थवत्' (जै-सू-६-२-१८) इति न्यायादिति वाच्यम् । 'अहमस्मि सुखि' इत्यादि प्रत्यक्षप्राप्ततया जीवेशब्रह्माभेदस्यापि तत्त्वमस्यादिना बोध्यत्वाभावप्रसङ्ग इति साम्यात् ॥

॥ इति 'ब्रह्म वेदे'ति आथर्वणश्रुत्यर्थनिरूपणम् ॥

अपि च जीवेश्वरयोरभेदे 'को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्द याति' इति ईश्वरे जीवभेदोपपादनानुपपत्तिः । तथा 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ-उ-४-५-१५) इति भेदस्य पुरुषार्थानुभवोपयोगित्वेन स्तुत्यनुपपत्तिः । तथा 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इत्यादिना तद्विरोधित्वेनाभेदस्य गर्हणानुपपत्तिः ॥

किञ्च जीवब्रह्मणोरभेदे 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चितेति' (तै-उ.२.२) इति तद्भेदापादक'सह'श्रुतिसर्वकामाऽवाप्तिप्रतिपादनविरोधः । नचात्र 'सह'शब्दस्य युगपदित्यर्थः । परेण मुक्तस्य कालसम्बन्धानुपगमात् । नचाविद्यानिवृत्तिरूपमुक्तौ तद्विक्षेपरूपकालतत्सम्बन्धयोरस्ति सम्भवः ॥ नच –

'यःकाल कालो गुणी सर्वविद्यः स वृक्षकालाकृतिभिः परोऽन्यः',

'कालाय नमः कलविकरणाय नमः',

'कालःकलयतामहम्',

'कालोऽस्मि लोकक्षयकृत् प्रवृत्तः' (भ-गी-११-३२)

इति श्रुतिस्मृतिभिरात्मन एव कालरूपत्वाऽवेदनात्, मोक्षेऽपि कालाङ्गीकारे नाद्वैतविरोधो अविद्याङ्गीकारप्रसङ्गो वेति वाच्यम् । 'स वृक्षकालाकृतिभिः परोऽन्यः' इति श्रुत्या

'द्रव्यं कर्मच कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया'॥ (भाग-२-१०-१२)

इत्यादिस्मृत्या च कालस्य परमात्मान्यत्व-तदधीनत्वयोराऽवेदनात् पूर्ववाक्ये 'काल काल' इति तत्प्रेरकत्वाभिधानात् । 'कालः कलयतामहम्' इति कालपदप्रवृत्तिनिमित्तकथनाच्च ॥

**॥ अथ सोऽश्नुतेति तैत्तिरीय श्रुतेः परोक्तार्थनिरसनम् ॥**

एतेन[१] 'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चितेति' (तै-उ-२-२) न तावत् सहश्रुतिः ब्रह्मणा सहत्वं दर्शयन्तीतिं मुक्तेश्वरयोर्भेदं[२] दर्शयति । मुक्तस्य ब्रह्मणा सहत्वा-योगात् । तथा हि । सहत्वं हि ब्रह्मणः 'पुत्रेण सहागतः पिता' इत्यत्रेव प्रधानक्रियानु-कूलतज्जातीयक्रियाकर्तृत्वेन वा? 'पत्न्या सह प्राणानायम्य' इत्यत्रेवानुज्ञामात्रेण वा? नाद्यः । ब्रह्मणोऽपि भोगप्रसङ्गात् । न द्वितीयः । ईश्वरस्य प्राणिमात्रभोगे अनुज्ञादातृत्वात् मुक्ते तस्य विशेषनिर्देशवैयर्थ्यात् ॥

किञ्च ब्रह्मणः सहत्वे 'भृत्येन सह भुङ्क्ते राजा' इत्यत्र भृत्यस्येवाप्राधान्यमावश्यकत्व-मिति तस्य सर्वशेषित्वमपि भज्येत । नच गर्भदासन्न्यायेन शेषस्यापि प्राधान्यम् । स्वामिनि भृत्यकृतोपकारवत् ईश्वरे आप्तकामे मुक्तकृतोपकाराभावात् । तस्माद्ब्रह्मणः सहत्वायोगात्, न सहयोगे तृतीयेयम् । नापि 'सर्वान् कामान्' इति 'सर्व'शब्दबहुवचनाभ्यां मुक्तेश्वरयो-र्भेदसिद्धिः ॥ तयोरल्पत्वमात्रनिवृत्तिपरत्वात् । तव मतेऽपि 'सर्व'शब्दस्यासङ्कुचितार्थत्वा-सम्भवात् जगत्सर्जनलक्ष्मीविहारादिकामानां जीवेषु बाधितत्वादनभ्युपगमाच्च ॥

तृतीया चेयम् इत्थम्भावे । [३]'ब्रह्मणा= ब्रह्मरूपेण, मुक्तः, सह= युगपत्, सर्वान् कामान्= परमानन्दम्, अश्नुते= अनुभवतीत्यर्थः ॥

तथा च स्मृतिः –

**'सोऽश्नुते सकलान् कामान् क्रमेणामीसुरर्षभाः ।**
**विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः'**

---

(१) 'एतेन' इत्यस्य 'तस्मान्नेयं श्रुतिर्भेदे प्रमाणमिति निरस्तम्' (पु.१८५) इत्यनेनान्वयः ॥

(२) 'उक्तेश्वरयोर्भेदं दर्शयति' इतिताळपत्रस्थ पाठः ॥

(३) 'अश्नुते=भुङ्क्ते । सर्वान्निरवशिष्टान्कामान् भोगान् ....सह युगपत् एकक्षणोपारूढानेव ..' इत्यादि तैत्तिरीयशाङ्करभाष्यस्य तात्पर्यतोऽनुवादोऽयम् ॥

इति । तथा च 'सर्वान् कामान्' इत्येतत् तत्र तत्र सर्वैः कामैरमरवधूपरिरम्भमाणादिभिरभिव्यङ्ग्यं यत् सुखं ब्रह्मात्मकं तदभिप्रायं वा, सर्वेषु इत्यादि तत् प्रकरणस्थं वाक्यं निर्गुणविद्या स्तुतिपरमिति, अभेदेप्रमाणं सर्वज्ञता परं वा, गत्यर्थस्यज्ञानार्थत्वात् 'अथ यदल्पं= भिन्नं, तन्मर्त्यम्'(छां-उ-७-२४-१) इति तद्भेदस्य तत्रैव निन्दितत्वात् । तस्मान्नेयं श्रुतिर्भेदे प्रमाणमिति निरस्तम् ॥

'ब्रह्मणा' इत्यस्य 'इत्थम्भावे'(पा-सू-२-३-२१) तृतीयान्तत्वानुपपत्तेः, कश्चित्प्रकारं प्राप्तस्यैव'इत्थम्भूत'शब्दार्थत्वात् । परमते मुक्तस्य निर्विशेषचैतन्याभिन्नतया प्रकारप्राप्तेरेव दुर्लभत्वात् । 'ब्रह्मणा' इत्यस्य ब्रह्मरूपेण इत्यर्थपरत्वे लक्षणापत्तेश्च ॥

नचोक्तरीत्या ब्रह्मणः सहत्वायोगात् न सहयोगे तृतीया इयं सम्भवतीति वाच्यम् । 'पुत्रेण सहागतः पिता' इत्यत्रेवात्रापि सहयोग एव तृतीयाभ्युपगमात् । नचैवं ब्रह्मणोऽपि भोक्तृत्वापत्तिः, सर्वशेषित्वभङ्गप्रसङ्गश्चेति वाच्यम् । अस्मदादिवदन्याधीनतयैश्वरस्येष्टा-भोक्तृत्वेऽपि स्वेच्छयैव तस्यापि शुभभोक्तृत्वोपगमात् । नचात्र प्रमाणाभावः ।

'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा'

'एको विष्णुर्महद्भूतं पृथक् भूतान्यनेकशः ।
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः'

'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।
पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्'[१]

इति श्रुतिस्मृत्यादिसत्वात् ॥

नचैवम् 'अनश्नन् अन्यो अभिचाकशीति' इति श्रुतिविरोधः । एतच्छ्रुतेः अनिष्टा-भोक्तृत्वपरत्वेनाविरोधात् । ईश्वरे भोक्तृत्वस्य 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' (ब्र-सू-१-२-११) 'ऋतं पिबन्तौ सुकृतस्य लोके'(कठ-उ-१-३-१) इति श्रुतिसूत्रयोः ऋत-पानकर्तृत्ववदुपपत्तेश्च ॥

---

(१) सूत्रभाष्यगुहाधिकरणोदाहृतपाद्मस्मृतिः ॥

नच सहयोगे= सह युक्ते अप्रधान (पा.सू.२-३-१९) इति सूत्रेण तृतीयाऽनुशासनात् तद्योगे तृतीयाङ्गीकारे ब्रह्मणः शेषित्वभङ्गः । 'अथ पित्रा सह भुङ्क्ते पुत्र' इत्युक्ते पितुःशब्दतोऽप्राधान्यप्रतीतावपि प्रमाणसिद्धशेषित्वानपायवत्, ब्रह्मणः प्रमाणसिद्धसर्वशेषित्वानपायात् । अन्यथा 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' 'आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचन' इत्यादौ शब्दतो ब्रह्मणो प्राधान्यप्रतीत्या सर्वशेषित्वभङ्गप्रसङ्गः ॥

अस्तु वा 'पत्न्या सह प्राणानायम्य' इत्यत्रेवात्रापि सहत्वं ब्रह्मणोऽनुज्ञामात्रेण । तथाऽपि न दोषः । नचेश्वरस्य प्राणिमात्रभोगोऽनुज्ञा दातृत्वेन मुक्तभोगे विशेषनिर्देशवैयर्थ्यं, मुक्तभोगस्य संसारिभोगतोऽतिशयितत्व ज्ञापनार्थत्वेन तस्यावैयर्थ्यात् । अत एव 'सर्वान् कामान्' इति 'सर्व'शब्दबहुवचनोऽप्युपपद्यते । नच जीवेषु जगत्सर्जनलक्ष्मीविहारादिकामानां बाधितत्वात् तव सर्वशब्दबहुवचनयोः सङ्कोचप्रसङ्गः । परेणाऽपि तयोरल्पत्वमात्रनिवृत्तिपरत्वाङ्गीकारेण श्रुतहानादिप्रसङ्गात्, सति विशेषप्रमाणे 'यदाहवनीये जुहोति' (तै-ब्रा-१-१-१०-३९) इत्यादेरिव सङ्कुचितार्थस्यावश्यकत्वाच्च । अन्यथा 'आप्नोति स्वाराज्यम्' (तै-उ-१-१६) इत्यादि श्रुतेर्मुक्तानामीश्वरस्वातन्त्र्याङ्गीकारप्रसङ्गात् ॥

नचैवं [१]'जगद्व्यापारवर्जम्' (ब्र-सू-४-४-१७) 'प्रकरणात्' (ब्र-सू-१-४-६) 'एतेन सर्वे' (ब्र-सू-१-४-२९) इत्यादि कामचारवाक्यं निर्गुणविद्यास्तुतिपरमिति, न भेदे प्रमाणं सर्वज्ञानपरं वा, गत्यर्थस्य ज्ञानार्थत्वादित्यादि परास्तम् । स्तुतिपरत्वे मानाभावात् । गत्यर्थस्य ज्ञानार्थत्वसम्भवेऽपि प्रथमोपस्थितप्रसिद्धार्थस्य बाधकं विना त्यागायोगाच्च । अत एव 'सह'इत्यस्य योगपदार्थकत्वाश्रयणं प्रयुक्तम्[२]। 'ब्रह्मणा' इति तृतीयान्तसमभिव्याहारेण युगपत् 'सोऽश्नुते सर्वान् कामान्' इत्युक्तेऽपि 'राजभृत्योऽन्नमश्नुते' इत्यादाविव भेदप्रतीतेरवर्जनीयत्वाच्च । युगपत् कालस्य सर्वकामभोक्तुश्च मुक्तावप्याधाराधेयभावस्य कल्पकाज्ञानं विनाऽप्यापाताच्च । अज्ञानसत्वे च अमुक्तित्वस्यैवापत्तेश्च ॥

---

(१) एतेनेति पाठः साधुरिति भाति । तस्य च परास्तम् इत्यनेन अन्वयः ज्ञायते ॥

(२) प्रत्युक्तम् इति पाठः स्यात् ॥

यत्तु 'अथ यदल्पं= भिन्नं, तन्मर्त्यमिति, भेदो निर्णीत[१] इति । तन्मत एवाल्पानल्पयोर्भेदावश्यम्भावात् । अन्यथाऽनल्पे एव तन्निन्दाप्रसङ्गात् । निन्दाया अल्पत्वप्रयुक्तत्वस्य लोके दृष्टत्वेन तस्याः भेदनिन्दत्वासिद्धेश्च, अल्पशब्दस्य भेदवाचित्वाच्चेति ॥

॥ इति 'सोऽश्नुते'ति तैत्तिरीयश्रुतेः परोक्तार्थनिरसनम् ॥

**॥ अथ प्रसङ्गात् 'तत्र को मोहे'ति श्रुतेः परोक्तार्थनिरसनम् ॥**

एतेनैव –

**'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः',**

**'यन्मदन्यन्नास्ति कस्मान्नु बिभेमि'** (बृ-उ-३-४-२)

**'तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति'** (बृ-उ-३-४-१०)

इति अभेदज्ञानाद् भयनिवृत्ति-श्रेयःप्राप्त्योः दर्शितत्वेनाऽभेदे एव श्रुतितात्पर्यगोचर इति निरस्तम् ॥

तत्र= परमात्मनि, एकत्वं= मुख्यत्वं= विशुद्धैकस्वभावत्वरूपं, केवलत्वं= जगत्सृष्ट्यादौ कर्तव्यायामसहायत्वं स्वसदृशकारणान्तरतानपेक्षत्वरूपत्वं वा, अनुपश्यतः= गुरूपसदनपूर्वकश्रवणादिसाधनानुष्ठान्तरं पश्यतः= साक्षात्कुर्वतः, को मोहः? नकोऽपि, तत् कार्यभूतः शोको वा कः? न कोऽपि सम्भवतीत्यर्थः ॥

॥ इति प्रसङ्गात् 'तत्र को मोहे'ति श्रुतेः परोक्तार्थनिरसनम् ॥

नन्वेवं द्रष्टुरन्यस्य परमात्मन एवाभावात् तत्रैकत्वदर्शनमेव कुत इत्यत आहमदन्यन्नास्ति इति । कस्मात् अस्त्येव यत्= यतो, बिभेमि तदिदमपि अहं, तदिदमपि = मदन्यत्तदिदमपि ब्रह्म, एतर्ह्यस्तीत्यर्थः, एतर्हि= तर्हि इति यावत्, कथं तद्ब्रह्म ज्ञेयं ? यत् ज्ञानेन तद्ब्रह्मप्राप्तिरिति जिज्ञासायामाह- 'तद् ब्रह्माहमस्मि= तदन्तर्यामिकोऽस्मीति'। 'अहं मनुरभवम्' (ऋ-सं-३-६-५ ) इत्यादिवत् 'यो वेद य एवम्' इत्यस्य विवरणम् 'अहं ब्रह्मास्मी'ति ।

---

(१) निन्दितः तत्र इति पाठः स्यात् ॥

ज्ञानफलमाह - स इदं सर्वं भवतीति । सर्वं= सर्वसमापकम् इदं= मुक्तब्रह्म, भवतीति = प्राप्नोतीत्यर्थः । यद्वा सोऽस्य= सर्वस्योपजीव्यो भवति, यथा प्रमाणं ब्रह्मवदित्यर्थः ॥

तथा च श्रुतिः –

**'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च ।**
**मृत्युर्धावति पञ्चम इति'** (तै–उ-२-१६)
**'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति'** इति (म-ना-उ-१३-२)
**'पुरुष एवेदं सर्वं यद्भूतं यच्चभव्यम्'**(श्वे-उ-३-१५)

इत्यादि श्रौतसामानाधिकरण्यनिर्देशस्य इयमेव गतिर्द्रष्टव्या । तथा च भारतवचनं 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति । नचैवं लक्षणापत्तिः । श्रुत्यैव स्वाभिप्रेतार्थाभिधानेन लक्षणा स्वीकारस्य सप्रमाणकत्वात् । परव्याख्यान एव निष्प्रमाणकस्तुत्यर्थत्वचिन्मात्र-लक्षणाङ्गीकारेण मुख्यार्थभेदत्यागाच्च ॥

एतेनैव **'कस्माद्ध्यभेष्यत् यन्मदन्यत् नास्ति' 'द्वितीयाद्वै भयं भवति'**
**'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोकः एकत्वमनुपश्यतः'**
इति श्रुत्यन्तरमपि व्याख्यातम् ॥

यस्मादभेष्यत् तत्, मदन्यत्= जीवादन्यत्, कस्माद्धि नास्ति? श्रुति-तदुपजीवि-प्रमाणसिद्धं ब्रह्म-दुरपह्नवत्वादस्यैव कुतो निश्चीयत इत्यत आह -द्वितीयाद्वै भयं भवति, लोके स्वभिन्नादेव भयं भवति, इत्यौत्सर्गिकप्रसिद्धेत्यर्थः । 'यस्मिन् सर्वाणि भूतानि= सर्वेजीवाआश्रित्य, तिष्ठन्ति, स विजानतो, विषयदर्शन आत्मैव= परमात्मैव न जीवात्मा इत्यभूत् । तत्र तत्रैव= परमात्मनि, एकत्वं= मुख्यत्वादिकम्, अनुपश्यतः= उक्तप्रकारेण साक्षात् कुर्वतः,को मोहः? कः शोकः? इत्यप्यर्थपरत्वात् । नचैवं योजनायां सम्भवन्त्यां सकलप्रमाणविरुद्धानुभवविरुद्धान्यार्थपरत्वमभ्युपगमार्हम् ॥

'अथ योऽन्यां देवतोपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुः' इति भेदो-पासननिन्दायाः अनुदितहोमप्रकरणे उदितहोमनिन्दायास्तत् निन्दाया तत्प्रशंसार्थत्व-

स्येवाभेदोपासनस्योपपत्त्या प्रत्यक्षादिप्रमाणान्तरविरुद्धाद्वैततात्पर्य कल्पकत्वादित्युक्तमेव । अन्यथा 'यजमानः प्रस्तरः' 'सोमेन यजेत'(तै-ब्रा-१-४-२) इत्यादेरपि प्रस्तरयजमान-सोमयागाभेदपरत्वप्रसङ्गः, अपूर्वतालक्षणतात्पर्यलिङ्गसत्वेऽप्यतत्परत्वे व्यभिचारेणातल्लिङ्ग-त्वापत्तेः । तत्र प्रमाणान्तराविरुद्धत्वे सतीति तल्लिङ्गविशेषणे, अद्वैतवाक्येऽपि तद्विशेषणस्य न्यायसाम्येनावश्यकत्वात् ॥

नच प्रस्तर-यजमानाद्य-भेदास्वीकारो न प्रत्यक्षादितद्भेदग्राहिप्रमाणविरोधप्रयुक्तः, अपि तु प्रहरणशास्त्रमूलकं विरोधद्रव्यान्तरकल्पनागौरवदोषनिबन्धन इति वाच्यम् । प्रहरण-शास्त्रप्रयुक्तकर्मानिष्पत्तिरूपविरोधस्याप्यन्ततः प्रत्यक्षादिनैव ज्ञातव्यत्वात् । नहि प्रस्तरा-भिन्नयजमानप्रहरणे तत्कर्मनिष्पत्तौ प्रत्यक्षादितोऽन्यत् मानमस्ति ॥

यदुक्तं 'यागस्य सोमद्रव्याभिन्नत्वे अङ्गीक्रियमाणे द्रव्यान्तरकल्पनागौरवदोष' इति । तन्न । ध्रौवाज्यसत्वेन उक्तगौरवानवकाशात् । श्रुत्यविरोधतत्वेनैवार्थस्यादरणीयत्वे प्रत्य-क्षादिविरोधस्याकिञ्चित्करत्वेन सोमस्य श्रुतिप्रतिपन्नयागाभेदात्यागेनैव यागनिवर्तकद्रव्य-रूपत्वस्वीकारापत्तेश्च ॥

एतेनैव 'यो वेदाऽहं ब्रह्मास्मीति स इदं सर्वं भवति इत्यद्वैतज्ञानस्य सर्वात्मकत्व-फलश्रुतिबलेन अद्वैततात्पर्यकत्वे अवधारिते तदुपपत्त्यर्थं स्वीक्रियमाणायाः लक्षणाया नाप्रमाणिकत्वमिति' निरस्तम् ॥

सर्वात्मकत्वस्य दुःखाद्यनिष्ठाश्रयभूततत्तत्पदार्थाभेदं विनाऽयोगेन श्रवणादिना सम्पा-दितस्य अभेदज्ञानस्य परपक्षे यथा पूर्वं नित्यसंसारित्वापादकत्वेनापुरुषार्थत्वात् । नच 'यः स्थाणुः स पुरुषः' इतिवत् 'स इदं सर्वं भवतीति' सामानाधिकरण्येन सर्वं बाधित्वात्माऽवशेषतोच्यते इति, न दुःखाद्यनिष्ठाश्रयाभेदापत्तिरिति वाच्यम् । तथा सति वाक्यगत सर्वपदानामपि चिन्मात्रलक्षकत्वप्रसङ्गात् । एकपदलक्षणापेक्षयाऽनेकपदलक्षणायाः अन्याय्यत्वात् । 'अहं ब्रह्म नियम्योऽस्मि इति यो वेद स इदं सर्वं भवति' इति 'सर्वोप-जीव्यो भवति' इति उक्तार्थपरत्वसम्भवाच्च ॥

## ।। अथ प्रसङ्गात् 'स इदं सर्वं भवति' इति श्रुत्यर्थविवरणम् ।।

एतेन 'स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां सम्भवति' इति श्रुतिरपि व्याख्याता । स, आत्मा= ब्रह्मज्ञानी जीव, एषां भवतीति ब्रह्मज्ञानस्य तदीयत्व-प्रयोजनत्वपरत्वात् । अत एव 'देवाश्चान्ये च तस्य नाभूत्या ईशत इति' स्वप्रतीतिविषयत्वात् शक्ता अपि नाभूतिं सम्पादयितुमुद्युञ्जत इति सङ्गच्छते । अन्यथा 'स आत्मा एते भवति' इत्येव वाक्यं नतु 'आत्मा ह्येषां संभवति' इति ।।

।। इति प्रसङ्गात् 'स इदं सर्वं भवति' इति श्रुत्यर्थविवरणम् ।।

## ।। अथ 'सूर्यो यथे'त्यस्य परकीयोक्तार्थखण्डनम् ।।

एतनैव –

**'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः'** (कठ-उ-२-११)

इति श्रुत्या परमात्मनो निर्लेपत्वाऽवेदनात् सम्पन्नतज्ज्ञानस्य जीवस्यापि तदभिन्नत्वेन सर्वात्मकत्वेऽपि परमात्मवदेव निर्लेपत्वमुपपद्यत इति निरस्तम् ।।

तथा सति श्रुत्याऽवेदक इत्यस्य 'सर्व'शब्दसमभिव्याहृत'भूतान्तरात्मा' इत्यस्य 'न लिप्यते' इति वर्तमाननिर्देशस्य च निरर्थकत्वापत्तेः । 'एषोऽस्य परम आनन्दः' (बृ-उ-६-३-३३) 'एषाऽस्य परमा गतिः' इति श्रुतौ परमात्मनो जीवप्राप्यत्वजीवपरमानन्दत्वो-त्त्यनुपपत्तेश्च ।

'तं यथा यथोपासते ते तथैव भवन्ति यथाक्रतुरस्मिन्
च लोके पुरुषो भवति तथेतः प्रेत्य भवति'

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम'(कठ-उ-२-१-१५)

इति श्रुतौ सदृष्टान्तं ब्रह्मज्ञानफलतया 'तादृगेव भवति' इति सावधारणं मुक्तस्य परमात्म-सदृशत्वोक्त्ययुक्तेश्च । नच भेदस्यप्रत्यक्षसिद्धत्वेन तद्बोधकश्रुतेरनुवादकत्वप्रसङ्गः । श्रुते-

र्नित्यत्वेन पुरोवादन्तरानपेक्षत्वात् दैवादेव तुल्यार्थत्वात् । नित्यनिर्दोषानन्याधीनप्रवृत्तिक-स्वतःप्रामाण्यभूतश्रुत्या तुल्यार्थत्वेन प्रत्युत प्रत्यक्षस्यैव तुल्यप्रामाण्यकत्वापत्तेः ॥

॥ इति 'सूर्यो यथे'त्यस्य परकीयोक्तार्थ खण्डनम् ॥

अत एव प्रत्यक्षजन्यस्येव वेदजन्यस्यापि भेदज्ञानस्य न यथार्थत्वमारोपितेनापि भेदेनोपासनोपपत्तिरिति निरस्तम् । वेदजन्याभेदज्ञानस्यापि न यथार्थत्वमारोपितेनापि तेनोपासनोपपत्तेरिति सुवचत्वात् ॥

एतेनैव प्रत्यक्षजन्यभेदज्ञानावद्वेदजन्यभेदज्ञानस्यापि यथोक्तं फलं तज्ज्ञानजनकभेदस्य भेदोपासनारूपदृष्टफलकभेदज्ञानजनकत्वेन कृतकृत्यत्वेन भेदतात्पर्यसिद्धेरिति निरस्तम् ॥

ईश्वरनिष्ठजीवभेदस्य प्रत्यक्षेणासिद्धेर्वेदजन्यस्य तादृशभेदज्ञानस्यैवोपासनाद्वारकेश्वर-साक्षात्कारमुत्पाद्य यथोक्तफलकत्वापत्तेः । अन्यथा 'अहमिदानीं सुख्यस्मी'ति जीवब्रह्मा-भेदज्ञानस्यैव 'तत्त्वमस्यादि'वाक्यजन्याभेदज्ञानस्यापि न.....।... यथोक्तं 'फलम् अभेदो-पासनारूपदृष्टाप्रयोजनत्वेन तज्ज्ञानजनकस्य तत्वमसीत्यादेरपि तदभेदे तात्पर्याभावापत्तेः' इति ॥

ननु 'तत्त्वमसि तत्त्वमसि' इति नवकृत्वो अभेदस्याभ्यासात्, तत्र तात्पर्यमवधार्यताम् इति चेत्, 'तयोरन्यः' 'अनश्नन्न्यः' इति भेदस्याप्यभ्यासात् तत्र तात्पर्यमवधार्यताम् इति समम् । किञ्च –

'तं यथोपासते ते तथैव भवन्ति'
'निरञ्जनः परमं साम्यमुपैति'
'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता' इति,
'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति'

इत्यादि श्रुत्यनुसारेण 'स आत्मा तत्त्वमसि' इत्यादिवाक्ये 'देवदत्त त्वं सिंहोऽसि' इत्यादिवाक्यवत् 'आदित्यो यूप' इत्यादिवाक्यवच्च, नञ्प्रश्लेशं विनैव सदृशपरत्व-सम्भवेन प्रमाणन्तराविरोधाय तस्यैवायमभ्यासो नत्वभेदस्येत्यवधार्यते । नचैवं सत्कार्यम-द्वैतस्यैवाभ्यास इति नियतुं शक्यते । 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्' (ब्र-सू-

२-१-१४) इति भगवता सूत्रकारेणैव अभेदश्रुतीनां स्थानैक्यादिप्रयुक्त औपचारिकाभेदालम्बनत्वाभिधानाच्च ॥

ननु 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति जीवभावेन परमेश्वरस्यानुप्रवेशप्रतिपादनात् जीवेश्वराभेदोऽङ्गीकार्य इति चेन्न । 'अनेन जीवेन' इति सहभावतृतीयाया विज्ञानात्, अन्यथा –

**'सदेव सोम्येदमग्र आसीत्'**
**'एकमेवाद्वितीयम्'**
**'तदैक्षत बहुस्यां प्रजायेयेति'** (छां-उ-६-२-३)
**'हन्ताहमिमास्तिस्रो देवता'** (छां-उ-६-३-२)

इति च वाक्ये 'स्यामि'त्युत्तमपुरुषानुरोधेन 'अहं'शब्दानुरोधेन च जीवरूपत्वस्य लब्धत्वात् तदतिरिक्तजीवाभावे 'अनेन जीवेन' इत्यस्य वैयर्थ्यापत्तेः । 'अनेन' इत्यनुभवसिद्धाकारप्रतिपादनात् । नच 'एकमेवाद्वितीयम्' इति जीवाभेदनिषेधात् तं विना सहभावाअयोगेन 'अनेन जीवेन' इति सहभावतृतीयायाऽनुपपत्तिरिति वाच्यम् । 'सलिल एको द्रष्टा' (बृ-उ-४-३-३२) इति पूर्वेण सलिलादिप्रापकेन 'सदेव सोम्येदमग्र आसीत्' इति सत्वैकत्वा....ग्राह्यार्थप्रापकेणोत्तरेण चाविरोधाय 'एकमेवाद्वितीयम्' इत्यस्य द्वितीयमिथ्यात्वपरत्वाभावावश्यकत्वात्, प्राक् सृष्टेरपि जीवभेदनिषेधाक्षमत्वात् । अव्याकृतरूपेण प्राक् सृष्टेः तदङ्गीकारे च जीववत् भेदाद्यर्थस्यापि तदा दुर्वारत्वात् ॥

किञ्च प्राक् सृष्टेः जीवस्याभावे कृतहानाकृताभ्यागमप्रसङ्गः । एवं च तदाऽपि जीवब्रह्मणोर्भेदोऽस्त्येवेति न सहभावतृतीयानुपपत्तिरिति । अन्यथा 'जीवेन' इति वैयर्थ्यप्रसङ्गः । नच 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिना व्यापकत्वेन सिद्धस्येश्वरस्य प्रवेशानुपपत्तिः । 'अणोरणीयान् महतो महीयान्' (म-ना-उ-८-३) 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्'(म-ना-उ-९-४) इत्यादिना तस्य अतिमहत्ववदत्यणुत्वस्याप्यावेदनात् । विनिगमनाविरहेण तयोरुभयोरपि मुख्ययोरेव स्वीकारात् । नचाणुत्वमहत्वयोर्लोके विरोधदर्शनादन्यतरावास्तवं विनिगमना विरहादुभयावास्तवत्वं वा पततीति वाच्यम् ।

धर्मिग्राहकप्रमाणसिद्धत्वेन[(१)] उभयोरपि वास्तवत्वात् । लोके विरोधदर्शनस्य तथाविध-प्रमाणाभावस्थल एव प्रसरात् । अन्यथा वस्तुत्वनिर्द्धर्मिकत्वयोर्ज्ञानत्व-आनन्दत्व-नित्यत्वादीनाम् अनादिभावत्वनिवृत्तिप्रतियोगिकत्वादीनां च लोके विरोधदर्शनात् । परेण श्रुतिसिद्धानां ब्रह्मनिर्धर्मिकत्व तदज्ञान-आनन्द-नित्यत्व-अविद्यानिवृत्त्यादीनाम् अनभ्यु-पगमप्रसङ्गः ॥

एतेन 'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरोऽयं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरं यस्सर्वाणि भूताऽन्यतरो यमयति' (बृ-उ-३-७-१५) इत्य-न्तर्याम्येकत्वस्य श्रुतिसिद्धत्वात् । 'गुरुस्यामि'ति सङ्कल्प्य शिष्यसम्पादनवत्[(२)] नियमनार्थं 'बहुस्याम्' इति सङ्कल्प्येश्वरेण बहुवस्तुषु सृष्टेष्वपि तस्य वास्तवबहुभावो न युज्यते । एकस्मिन् बहुत्वस्य विरुद्धत्वादिति निरस्तम् ॥

लोकेऽपि बहुत्वस्य एकत्वसामानाधिकरण्यदर्शनेन सहानवस्थानलक्षणविरोधाभावात् । बहुत्वस्यैकस्मिन्नपर्याप्तिर्दृष्टेति चेत् । सत्यम् । श्रुतिबलेन मयाऽपि ईश्वरीयेषु तत्तद्वस्तु-नियामकरूपेष्वेव बहुत्वपर्याप्तिस्वीकारेणाविरोधात् । तथा च श्रुतिः **'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्'** (म-ना-उ-१-५) इत्यादि ॥

**॥ अथ प्रसङ्गात् 'इन्द्रो मायाभिः' इति श्रुतेः मायिकत्वार्थनिरसनम् ॥**

ननु **'इन्द्रो मायाभिः पुरुरूप ईयते'** (बृ-उ-२-५-१९)

**'एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'** (ब्र-बि-उ-१-१२)

इत्यादि श्रुत्या बहुत्वविशिष्टानामीश्वररूपाणामेव मायिकत्वाद्यावेदनात् न तेषां वास्तवत्व-मस्तीति चेन्न । 'तान् यज्ञस्य मायया सर्वानव यजामहे' (तै-ब्रा-३-१०-८-१४) इत्यादौ वेदे लोके च 'माया'शब्दस्य शक्तिविशेषापरनामकसामर्थ्यविशेषवाचित्वदर्शनेन, मायाभिः=

---

(१) प्रमाणमसिद्धत्वेन इति ताळपत्रस्थ पाठः ॥

(२) ईक्षतिकर्मव्यपदेशात्स (ब्र-सू-१-३-४) इति सूत्रभागे-तात्पर्यचन्द्रिकायाम् उदाहृतवाक्यम् ॥

सामर्थ्यविशेषैः, इन्द्रः = परमैश्वर्य सम्पन्नःपरमात्मा, पुरुरूपः = तत्तद्वस्तुनियामकान्तर-रूपवान् सन्, ईयते, ज्ञानिभिः, इत्यर्थपरत्वेनातदर्थपरत्वात् ।।

यद्यपि 'माया'शब्दो लोके 'माया तेषु न कर्तव्या', 'माया यैरेव निर्मिता', 'कुसृष्टिः कुहकं न माया' इति वञ्चनार्थेषु प्रयुज्यते । तथाऽपि 'तान् यज्ञस्य मायया' इति वेदे सामर्थ्यविशेष एव प्रयोगप्रसिद्धेः, प्रत्यासत्त्या तत्पर एव श्रोत्रग्रहणार्ह इति परमेश्वरे सामर्थ्यविशेषश्च । 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिश्रुतौ स्वाभाविकत्वेनोक्तत्वात् । यावद्धर्मिदुर्वार इति तत्प्रयुक्तेश्वरपुरुरूपत्वमपि स्वाभाविकं यावद्धर्मिस्थायि चेति सिद्ध्यति । अन्यथा ईश्वररूपेषु –

**'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते'** (बृ-उ-५-१-१)

इति श्रुत्या मूलरूपतुल्यतया पूर्णत्वोक्तिविरोधः । नहि प्रसिद्धमायिकस्य पूर्णत्वं युज्यते स्वीकृतं वा ।।

**।। इति प्रसङ्गात् 'इन्द्रो मायाभिः' इति श्रुतेः मायिकत्वार्थ निरसनम् ।।**

**।। अथ प्रसङ्गात् 'एक एव' इति ब्रह्मबिन्दूपनिषदः परोदीरितार्थ निरसनम् ।।**

एतेन 'एक एव तु भूतात्मा= परमात्मा, भूते भूते= सर्वजीवेषु व्यवस्थितः= प्राण-सिद्धव्यवस्था नियामकत्वेन[१] स्थितः, एकधा बहुधा चैव= मूलरूपेण एकधा नियामकरूपेण बहुधा च, ज्ञानिभिर्दृश्यते, एवं प्रमीयत एव, जलचन्द्रवत् इत्यर्थपरत्वेन कल्प्यानेकरूपपरा सा श्रुतिरित्यपास्तम् ।।

**'भूतात्मा परमात्मा च'** (वि.स.ना.)
**'एको विष्णुर्महद्भूतं पृथग् भूतान्यनेकशः ।**
**त्रीन् लोकान् व्याप्य भूतात्मा ....'**

इत्यादौ 'भूतात्म' आदिशब्दः परमात्मनि प्रसिद्ध इति किमवद्यम्? नन्वीश्वर तदीय-

(१) 'प्रमाणसिद्धव्यवस्था नियामकत्वेन' इति पाठमिति भाति ।।

तत्तद्वस्तुनियामकरूपेषु चैकत्वान्यसङ्ख्यात्वाङ्गीकारे तेषां परस्परभेदोऽप्यवश्यमङ्गीकार्यः । तेन विना तादृशसङ्ख्यानुपपत्तेः । नहि व्यापकं विना व्याप्यसत्वं सम्भवति । अन्यथा 'द्वासुपर्णे'ति श्रुतिप्रतिपन्नद्वित्वावच्छिन्नत्वेऽपि तद्बलेनानयोर्भेदासिद्धि प्रसङ्गात् । नहि यत् यद्यभिवारितेन तत्सिद्धिरिति शक्यमभ्युपगन्तुम् ॥

॥ इति प्रसङ्गात् 'एक एव' इति ब्रह्मबिन्दूपनिषदः परोदीरितार्थनिरसनम् ॥

किञ्च सङ्ख्यायाः भेदासाधकत्वे जैमिनिना 'शब्दान्तरात्'[१] इति भेदप्रमाणेषु तस्या उपादानं न क्रियतेति चेन्न । बाधकाभावविशिष्टद्वित्वादिसङ्ख्याविशेषस्यैव भेदेन व्याप्तत्वाभ्युपगमेनोक्तदोषानवकाशात् । ईश्वरतद्रूपाणां परस्परभेदे जीवेश्वरपरस्पराभेदे 'नाहमीश्वरः' इत्यादिप्रत्यक्षस्येव 'नेह नानाऽस्ति किञ्चन' इत्यादेर्बाधकस्य सत्त्वात् । एतच्च तच्छ्रुत्यर्थनिरूपणावसरे प्रपञ्चयिष्यामः[२] ॥

एवं यत् 'द्वासुपर्णे'ति श्रुतिप्रतिपन्नद्वित्वसङ्ख्यया बाधकाभावविशिष्टया जीवेश्वरपरस्परभेदानुमितिः स्वव्याहतप्रसराविषयाबाधात् प्रमा चेति किमनुपपन्नम्? । एवमेव जैमिन्युक्तं सङ्ख्यायाः कर्मभेदप्रमाणत्वमप्रत्यूढं द्रष्टव्यम् ॥

नच जीवेश्वरपरस्परभेदेऽपि 'नान्योऽतोऽस्ति द्रष्टा' 'नान्योऽतोऽस्ति द्रष्टृ' इत्यादौ बाधकस्य सत्वात्, 'द्वासुपर्णे'त्यादि श्रुतिप्रतिपन्नद्वित्वसङ्ख्यया न जीवेश्वरभेदानुमानप्रवृत्तिः सम्भवतीति वाच्यम् । तस्य जीवेश्वरभेदे बाधकस्य निरस्तत्वात् । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' (कठ-उ-३-९) इत्यादिश्रुत्या द्रष्टृत्वादिविशेषाणां प्रमितत्वेन 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिद्रष्टृसामान्यनिषेधकत्वायोगेन 'अतः'शब्दार्थभूते द्रष्टृतुल्यद्रष्टृनिषेधकत्वस्यैवाभ्युपगमतया(अभ्युपेयतया-पा) जीवेश्वरभेदेन 'अन्य'इत्यस्य बाधकत्वानुपपत्तेश्च । किञ्च न वयं 'द्वासुपर्णे'ति द्वित्वसङ्ख्यायैव जीवेश्वरपरस्परभेदं साधयामः, किन्तु 'तयोरन्यः' 'जुष्टं यदा पश्यत्यन्यमीशम्' इति अभ्यासंसिद्धतात्पर्यकभेदश्रुतिसहितया इति कानुपपत्तिः ?॥

---

(१) जै-सू -८-४-१२ ॥

(२) नापि नेह नानाऽस्ति किञ्चनेति श्रुतिस्तत्र मानम् इत्यादिना (पु.३०६) प्रपञ्चयिष्यत इत्यर्थः ॥

**।। अथ प्रसङ्गात् श्वेताश्वतरश्रुतेः षड्विधतात्पर्यलिङ्गेन जीवेश्वरभेदवर्णनम् ।।**

किश्च –

**'किं कारणं ब्रह्म कुत स्म जाता जीवाम केन क्व च सम्प्रतिष्ठिताः ।**
**अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्'** (श्वे-उ-१-१)

इति शेषस्याभ्यधायि ।

**'कालः स्वभावो नियतिर्यदृच्छया भूतानि देवः पुरुषेति चिन्त्या ।**
**संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः'** (श्वे-उ-१-२)

इति श्वेताश्वतरे आत्मनोऽनीशत्वोपक्रमात्, 'पृथगात्मानं प्रेरितारं च मत्वा' 'अत्रान्तरं वेदविदो विदित्वा' 'अनीशश्चात्मा मुह्यते(बुध्यते-पा) भोक्तृभावात्' इत्याद्यभ्यासात्, ईश्वरस्याप्रत्यक्षत्वेन तत्प्रतियोगिकभेदस्य तत्राऽपि परमार्थस्य मानान्तराप्राप्तत्वात्, 'अनीशश्चात्मा मुह्यते भोक्तृभावात्' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यादिफलश्रुतेः, 'अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः' इत्याद्यर्थवादात्, 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा मुह्यमीशाते[१](बुध्यते-पा) भोक्तृभावात्' (श्वे-उ-१-८) इत्यस्वातन्त्र्योपपत्तेः ।

**'तिलेषु तैलं दधिनीव सर्पिरापःस्रोतःस्वरणीषुचाग्निः [२]।**
**एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति'** (श्वे-उ-१-१५)

इति उपसंहाराच्च । अन्तर्यामि ब्राह्मणे –

'यः पृथिव्यामन्तरो' (बृ-उ-५-७-३) 'योऽद्भ्योऽन्तरः' 'य आत्मनोऽन्तरो' 'यो विज्ञानादन्तर' (बृ-उ-५-७-२२) इत्यादयः 'पृथिवीम् अन्तरो यमयति' 'योऽपोऽन्तरः' 'यमात्मानं अन्तरः' 'यो विज्ञानमन्तरः' इत्यादेर्वा प्रागुक्ताद् 'अन्तर'शब्दितभेदाभ्यासाच्च एतच्छ्रुतिप्रतिपन्ननियम्यनियामकभावान्यथानुपपत्तेश्च जीवेश्वरभेदएव श्रुतितात्पर्यगोचरः ।।

---

(१) 'अनीनश्चात्मा मुह्यते' इति पाठः स्यात् ।।

(२) 'स्वरण्योरिवाग्निः' इति पाठान्तरम् ।।

किञ्च 'स एष सम्प्रसादोऽस्मात् शरीरात् समुत्थाय[१] परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां-उ-८-३-४) इति श्रुत्या विदुषः परं ज्योतिरूपसम्पत्ति-तत्कृत-स्वरूपाभिनिष्पत्ति पृथगुच्यते । नहि जीवब्रह्मणोरभेदे तथोक्तिः सङ्गच्छते । किञ्च 'मनसैतान् कामान् पश्यन् रमते य एतद् ब्रह्मलोक' इति ईश्वरभोगसाम्यं मुक्तौ श्रूयते । तथा 'स वै नैव रेमे तस्मादेकाकी न रमते' इत्यद्वैतनिन्दाच, नहीदमुभयं[२] द्वैतवादे सङ्गच्छते ॥

किञ्च मुक्तस्य निर्विशेषब्रह्माभिन्नत्वे –

> **'स उत्तमः पुरुषः तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा**
> **यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा'** (छां-उ-८-१२-३)

इति श्रुतिप्रतिपन्ने व्यापारो न सर्वथा युक्तः ॥

**॥ अथ 'अहं विजानामी'त्यादि कैवल्योपनिषत् श्रुत्यर्थनिरूपणम् ॥**

ननु –

> **'अहं विजानामि विविक्तरूपो नचास्ति वेत्ता मम चित् सदाहम् ।**
> **वेदैरनेकैरहमेव वेद्य वेदान्तकृद्वेद विदेव चाहम्'** (कै-उ-१-२२)

इति तत्ववित्-क्षेत्रज्ञ-स्वरूपानुभवाभिनयनरूपात् कैवल्योपनिषद्वाक्यात् जीवेश्वराभेदस्य सर्ववेदप्रत्ययत्वप्रतीतेः कथं तद्भेदस्य श्रुतितात्पर्यगोचरत्वम्? । तथात्वे परस्परविरोधेन श्रुत्यप्रामाण्यापत्तेरिति चेन्न । 'अहं मनुरभवं सूर्यश्च' इत्यादिवामदेववचनात् अस्याप्यन्तर्यामिविवक्षयैव प्रवृत्त्यङ्गीकारे विरोधाभावेनाप्रामाण्यशङ्कायाः एवाप्रसङ्गात् । लोकेऽप्यन्याभिप्रायेण 'मय्यन्यस्मिन् दुष्टत्वबुद्धिर्न कार्ये'त्यन्याभिप्रायेण कृतप्रश्नं प्रतिवचनादानदर्शनाच्च । नहि वेद इति कृत्वा तत्र लोकसिद्धव्युत्पत्त्युल्लङ्घनमुचितम् ॥

किञ्च नैतद्वाक्यं तत्ववित् क्षेत्रज्ञस्वरूपानुभवाभिनयरूपम् । तथासति –

---

(१) 'शरीरादुत्थाय' इति तालपत्रस्थ पाठः ॥

(२) 'अद्वैतवादे सङ्गच्छते' इति पाठमिति भाति ॥

**'जाग्रत् स्वप्नसुषुप्त्यादिप्रपञ्चः यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते'** (कै-उ-१-१७)

**'मय्यैव सकलं ज्ञातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्'** (कै-उ-१-१९)

इति पूर्ववाक्ये जाग्रदादिप्रपञ्चप्रकाशकत्वेन सर्वबन्धमोक्षहेतुज्ञानविषयत्वेन सकलजगज्जन्मादिकारणत्वेन च प्रतिपादनात् । तस्य परमतेऽपि जीवधर्मत्वानुपपत्तेः, ब्रह्ममात्रधर्मत्वोपपत्तेश्च । उत्तरवाक्येऽपि –

**'एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम्** । (कै-उ-१-२२)
**'समस्तसाक्षिं सदसद्विहीनं प्रयाति नित्यं परमात्मरूपम्'** (कै-उ-२-१)

इति ज्ञानिप्राप्यपरमात्मस्वरूपवर्णनानुपपत्तेश्च । किन्तु परमात्मन एव स्वस्वरूपानुभवाभिनयरूपं वचनमिदम् । एवं च नकाप्यनुपपत्तिः ॥

अत एव **'अहं विजानामि विविक्तरूपः'** इति **'नचास्ति वेत्ता मम'** इति च मध्ये स्वस्य सर्वभिन्नस्वरूपत्वेन साकल्येन केनाप्यज्ञेयत्वेन च प्रतिपादनमुपपद्यते । नच विविक्तत्वं सङ्कोचकाभावेन संकलजीवजडात्मकप्रपञ्चभिन्नत्वादतिरिक्तं सम्भवति ॥

॥ इति 'अहं विजानामी'त्यादि कैवल्योपनिषत् श्रुत्यर्थनिरूपणम् ॥

## ॥ अथ अथर्वशिरोपनिषत् मन्त्रार्थः ॥

अत एव **'देवा ह वै स्वर्गं लोकमगमं स्म ते रुद्रमपृच्छत् । को भवानिति? सोऽब्रवीत् । अहमेवैकः प्रथममासं वर्तामि च[१] भविष्यामि च'** (अथ-शि-उ-१) इति अथर्वशिरोवाक्ये 'अहं'शब्दस्य स्वस्वरूपोपदेष्टृपरमेश्वरपरत्वम् । नन्विदमयुक्तम् । उपदेष्टृपरत्वेऽप्यस्य वाक्यस्य 'तस्मै स होवाच पितामहश्च' इति वक्तृत्वेन हिरण्यगर्भस्यैव च प्रक्रान्तत्वात् तस्यच त्वन्मतेऽप्यनीश्वरत्वेन तस्मिन्नपि उक्तधर्मानुपपत्तेरिति चेत् । सत्यम् । 'आकाशस्तल्लिङ्गात्' (ब्र-सू-१-१-२२) इति न्यायेन हिरण्यगर्भवाचिनोऽपि

(१) 'लोकमायंस्ते...अहमेकः प्रथमासीद्वर्तामि' इति इदानीन्तन पाठः ॥

'पितामह'शब्दस्य परमेश्वरपरत्वात् । अन्यथा जीववद् भूताकाशस्यापि वास्तवश्रुतिप्रतिपन्नपरमात्मभेदाभिप्रायेणैव 'अस्य लोकस्य का गतिः' (छां-उ-१-९-१) इत्यादिश्रुतिप्रतिपन्नजगत्कारणत्वादिधर्मवत्वसम्भवेन ब्रह्मलक्षणस्यानातिप्रसक्तत्वसम्भवात् ब्रह्मपरत्वेन समन्वयानुक्तिप्रसङ्गः ॥

॥ इति अथर्वशिरोपनिषत् मन्त्रार्थः ॥

एतेन –

**'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'** (कै-उ-१-१५)

**'यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।**
**सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्'** (कै-उ-१-१६)

इति पूर्ववाक्यमपि व्याख्यातम् ॥

'यत् परं ब्रह्म तत्त्वमेव= हे आश्वलायन उक्तविधस्तमेव, तद् ब्रह्माऽहम्' इति ज्ञात्वेति योजनाङ्गीकारात् । नचैवं 'प्रमुच्यते' इति[१] प्रथमपुरुषप्रयोगानुपपत्तिः । परव्याख्यानेऽपि तौल्यात् च्छन्दसि बाहुलकस्योपपत्तेश्चेति । 'मामेव विजानीहि' (कौ-उ-३-१) इति प्रतर्दनं प्रतीन्द्रवचनगतास्मच्छब्दस्याप्यन्तर्यामि विवक्षयैव प्रवृत्त्युपपत्तेश्च, वामदेववचनगत 'अस्मत्'शब्दवत् ॥

ननु 'आत्मैवेदम् अग्र आसीत् पुरुषविधः स आत्मनोऽन्यदपश्यन् सोऽहमिति व्याहरत्'[२](बृ-उ-३-४-१) इति श्रुतौ पुरुषविधस्य प्रत्यगात्मन एव 'सोऽहम्' इति व्यवहारप्रतीतेः । 'स आत्मनोऽन्यदपश्यत्' इति स्वव्यतिरिक्तादर्शनप्रतीतेश्च । पुरुषविधो = हिरण्यगर्भः परमात्मैवासीत्' इति वाक्यार्थलाभात्, जीवब्रह्माभेदो अनिवार्य इति चेन्न । इदमग्रे= अस्य जगतः सृष्टेःपूर्वं, आत्मैव आसीत् = 'आत्मा वा इदमेक एवाऽग्र आसीत्

(१) 'तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते' इति कै-उ-१-१७ इत्यत्र विद्यमान'प्रमुच्यते' इति शब्दः ॥

(२) पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोऽहमस्मीत्यग्रे व्याहरत् ॥ इति इदानीन्तन पाठः ॥

नान्यत् किञ्चन मिषत्' इति श्रुत्यन्तरानुसारेण विद्यमानस्यापि जीवाद्यनादिप्रपञ्चस्यैवकारेण मिषत्व-विशिष्टत्वव्यावर्तनात् । तस्य मिषरूपविशेषणमात्रविरहेऽप्युपपत्तेः । अत्रापि नञ्(नञः-पा)स्तच्छब्दात्मशब्दाभ्यां देहलीदीपन्यायेन सम्बन्धो द्रष्टव्यः । तथा च पुरुषविधो = हिरण्यगर्भः जगतः, सृष्टेः पूर्वं य आत्मैवासीत् स किं? नेत्याह– स नेति । किन्तु तदन्य इत्यर्थः । अत एव सर्वज्ञत्वात् दर्शनार्थमालोचनावश्यम्भावात् तदभावादीश्वर-वदात्मनोऽन्यद् विद्यमानमपि मिषन्नापश्यत्, 'अपश्यत्' इत्यन्तरमपि नञनुषङ्गः ।।

ननु पुरुषविधो= हिरण्यगर्भः तदा, स = परमात्मा, नेति कुतो ज्ञायत इत्यत आह- सोऽहमिति व्याहरत्' इत्यर्थपरत्वेनैव श्रुतेः परमात्म-हिरण्यगर्भाभेदपरत्वाभावात् । नचैवं नञनुषङ्गेण व्याख्याने मानाभावः । उत्तरवाक्ये 'सो बिभेत्तस्मादेकाकी बिभेति' (बृ-उ-३-४-२) इति पुरुषविधस्य= हिरण्यगर्भस्य, भयसङ्कीर्तनात् । सर्वज्ञ-सर्वशक्तिसत्यसङ्कल्प-परमात्माभिन्नत्वेच भयानुपपत्तेः । 'भीषास्माद्वातः पवते' इत्यादिना वाताद्युपलक्षितस्य च चेतनवर्गस्य परमात्मन एव भयकीर्तनेन तस्या कुतो...भयत्वलाभाच्च ।।

एवं चेयमेवानुपपत्तिः नञनुषङ्गे मानमिति, न तस्य निष्प्रमाणतेति । नचैवं सति 'तस्यादन्योऽद्ययमहमस्मीत्याह'(१) इति वाक्यशेष(२)विरोधः ।'अयम्' इत्यस्य सर्वनामत्वेन एतादृशोऽहमिदानीमस्मीति शक्यार्थप्रतियोगिसमर्पकत्वेनाविरोधात् ।।

### ।। अथ 'एतज्ज्ञेयम्' इति श्वेताश्वतरश्रुतेः त्रेधार्थकथनम् ।।

ननु –

**'एतज्ज्ञेयं नित्यमेत्वाऽऽत्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ।**
**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतद्'** (श्वे-उ-१-१२)

इति श्रुत्या, मे=मया, प्रोक्तमेतत्, सर्वं, त्रिविधं= भोक्ता- भोग्यं- प्रेरितारं च, इति तत् त्रिविधं, ब्रह्म ज्ञात्वाऽतः परं ज्ञेयं नास्ति, आत्मसंस्थम्= आत्मनःसंस्था मृतिर्मोक्षो वा तात्पर्यम् । 'तमेतत् ब्रह्माद्वैतं नित्यमेव ज्ञेयम्' इत्यर्थो, उक्तस्य त्रिविधस्य सर्वस्य प्रपञ्चस्य

(१) 'तस्मादन्योऽद्ययमहमस्मि' इति पाठः स्यात् ।।

(२) वाक्यशेषत्वे इति ताळपत्रस्थ पाठः ।।

ब्रह्माभिन्नत्वेन ज्ञेयत्वोक्तेर्नजीवब्रह्मभेदो वास्तवो अङ्गीकार्यः । अन्यथैतत् श्रुतिविरोधादिति चेन्न । 'भोक्ताभोग्यं प्रेरयितृब्रह्म च' इति सर्वस्य ज्ञेयस्य त्रैविध्यकथनपरतयाऽस्याश्रुतेरुक्त-रीत्या त्रिविधस्य ज्ञेयत्वप्रतिपादनपरत्वासिद्धेः । अन्यथा –

**'सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।**
**पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति'** (श्वे-उ-१-६)

इति जीवमीश्वरं च पृथक् कर्मत्वेनेत्यर्थपरेण पूर्ववाक्येन विरोधः । [१]नचास्य वाक्यस्य ब्रह्मचक्रे = प्रकृतौ, परमेश्वरे, ब्रह्माण्डे वा, अहं सो= जीवः, भ्राम्यते भ्रमतीश्वरेण वा, प्रकृतौ, ब्रह्माण्डे भ्राम्यते, आत्मानं= देहं बुद्धिं वा, प्रेरितारं क्षेत्रज्ञं(च)= आत्मानं पृथक् कर्मविवेकेण, मत्वा= ज्ञात्वा, तत एव, जुष्टम्= प्रीतः, ज्ञानामृततृप्तः सन्, तेन ब्रह्मरूपेण अमृतत्वम् एतीत्यर्थः ॥

यद्वा प्रेरितारं क्षेत्रज्ञम् आत्मानं, पृथक्= देहाभिन्नं, 'पृथग्विनानानाभिस्तृतीयाऽ-न्यतरस्याम्'(पा-सू-२-३-३२(६०३) इति पृथग्योगे द्वितीया, मत्वाऽमृतत्वमेति हंस' इत्यस्य अनुक्षणयाच, श्रुतेर्भिन्नक्रमो द्रष्टव्यः ॥

यद्वा आत्मानं= क्षेत्रज्ञं, पृथक्= देहादितो विविक्तं, प्रेरितारं= ईश्वरं च, मत्वा = देहादिविविक्तमात्मानम् ईश्वरात्मतया ज्ञात्वा इत्यर्थः नतु जीवमीश्वरं च पृथक्त्वेनेत्यर्थः । स तथासत्युत्तरवाक्ये 'एतद् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्' (श्वे-उ-१-१२) 'भोक्ता भोग्यं प्रेरितारं च मत्वा = सर्वं प्रोक्तं त्रिविधं ब्रह्म मत्वा, इत्यर्थप्रतीतिसत्त्वान्नोक्तार्थपरत्वमिति वाच्यम् । एवमर्थपरत्वेऽपि भेदज्ञानस्य मोक्षहेतु-त्वावारणात् । नहि विवेको भेदादतिरिच्यते । आत्मानं=जीवं, प्रेरितारं च,पृथक्त्वोक्तेः । 'स पशुः' इति दृष्टान्तेन च (ज्ञात्वा च इति-पा) मुख्यार्थपरत्वस्य बाधकं विना त्यागा-योगाच्च । उक्तरीत्योत्तरवाक्ये भोक्तृ-भोग्य-प्रेरयितृ-ब्रह्मत्वेन त्रिविधवस्तुन एव ज्ञेयत्वोक्त्या एतत्त्रितयातिरिक्तस्य ज्ञेयस्याप्रामाणिकत्वप्रतीतेः । त्वदुक्तरीत्या त्रिविधस्य वस्तुनो ब्रह्माभिन्नत्वप्रतिपादनपरत्वासिद्धेश्च ॥

---

(१) नच इत्यस्य मत्वा इत्यर्थप्रतीतिसत्त्वात् इत्यत्रान्वयः ।

एतेन 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद तथा पशु' इति श्रुत्यन्तरेण भेदज्ञानस्य मिथ्यात्वञ्च, मिथ्याज्ञानस्य बन्धहेतुत्वमिति प्रत्यूढम् ॥ प्रत्यक्षादिप्रमाणान्तरानुग्रहेण जीवेश्वरस्य भेदज्ञानस्यामिथ्यात्वेनातथाभूत तदभेदज्ञानस्यैव मिथ्यात्वप्राप्तेः । अन्यथा 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन'(आ-उ-२-११) इत्यादिनाऽऽवश्यकत्वेन श्रुतिसिद्धस्य नित्यानित्यवस्तुविवेकज्ञानस्यानुपादेयत्वापत्तिः ॥

किञ्च 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' (कठ. उ.२-२३) 'तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' (श्वे-उ-३-१०) इति श्रुत्या जीवेश्वरयोः अनुग्राह्य-अनुग्राहकभाव-लब्धृ-लब्धव्यभावयोरभिधानात्तयोर्भेद आवश्यकः । नच तमादाय तदुपपत्तिः । मोक्षकालीनेश्वरलाभस्य कल्पितभेदेनोपपादनासम्भवात् । तदा कल्पकाज्ञकल्पितभेदानन्यज्ञानेन निवृत्तत्वात् ॥

## ॥ अथ अद्वैताभिमतज्ञाननिवर्त्यत्वविमर्शः ॥

किञ्च 'तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे-उ-१-१०) इति योजनात् तत्त्वाभावसम्पादित'अभिध्यान'शब्दितेश्वरप्रसादाज्जीवस्य प्रकृतिबन्धनिवृत्तिः श्रूयते । नच सा जीवचैतन्यस्वरूपरूपा वा, परमेश्वरचैतन्यस्वरूपरूपा वा, अङ्गीकर्तुं शक्यते । तयोरनाद्यनन्तत्वेनासाध्यत्वात् । तदतिरिक्तत्वे सत्यत्वे चाऽद्वैतहानेः । मिथ्यात्वेऽपि च ज्ञाननिवर्त्यत्वावश्यम्भावेन नित्यपुरुषार्थत्वानुपपत्तेः । नच मिथ्यात्वे मोक्षनित्यपुरुषार्थत्वप्रतिपादकश्रुतिप्रामाण्यान्यथानुपपत्त्या तस्य ज्ञाननिवर्त्यत्वं नोपेयते यन्मिथ्यात्वादिति वाच्यम् । ज्ञाननिवर्त्यमिति नियमस्य तदतिरिक्तविषयत्वेन सङ्कोचाश्रयणात् । श्रुत्यनुमानयोः श्रुतेर्बलीयस्त्वेन तदनुसारेणाऽयं नियम एव सङ्कोचस्योचितः । तथा सति अविद्यानिवृत्तेरात्मनश्च मुक्तावन्योन्यभेदापातात् । सत्यम् । सोऽपि मिथ्याभूतो अङ्गीक्रियते इति चेत् तर्हि लब्धृ-लब्धव्यभावोपपादकोऽमिथ्याभूतो जीवेश्वरभेदोऽपि स्वीक्रियतामिति । अविशेषात् । नचैवमद्वैतश्रुतिविरोधः । सत्यभूतवस्त्वन्तराङ्गीकार एव तद्विरोधात् । अन्यथाऽत्माऽविद्यानिवृत्योरपि मुक्तौ भेदास्वीकारप्रसङ्गात् ॥

॥ इति अद्वैताभिमत ज्ञाननिवर्त्यत्वविमर्शः ॥

## ।। अथ मुक्तौ जीवेश्वरभेदस्वरूपविचारः ।।

अपि च भेदस्तावत् कोऽपि संसारदशायामिव मुक्तावपि दुर्निवारः । 'अविद्यायामन्तरे वर्तमाना नान्यच्छ्रेयो वेदयन्ते' इति श्रुतिपर्यालोचनया संसारदशायां सिद्धात् श्रेयसोऽन्यस्य श्रेयसो, मुक्तौ सत्त्वलाभात् । नह्यन्यत्वं वेदादतिरिच्यते । अपि च आत्माऽविद्यानिवृत्त्योरिव मुक्तौ जीवेश्वयोरपि मिथ्याभेदः संसारदशायामिव किं न स्वीकार्यम्? । नच मुक्तौ जीवेश्वभेदसत्वे मानाभावादेव न तदङ्गीकार इति वक्तुं शक्यम् ।

**'आरभ्यकर्माणि गुणान्वितानि भावांश्च सर्वान् विनियोजयेद्यः ।**
**तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः'**(श्वे-उ-६-४)

इति श्वेताश्वतरश्रुतेरेव मुक्तजीवे भेदप्रतीतेः(प्रमितेः-पा) । 'ब्रह्मविदाप्नोति परम्'(तै-उ-२-२) इत्यादिश्रुत्यनुसारेण 'कर्मक्षये याति स तत्त्वतोऽन्यः' इति श्रुतेः 'प्रारब्धःकर्मक्षये सति याति, ब्रह्म' इत्येवार्थः ।।

किञ्च मुक्तजीवभेदे 'न यत्र माया' इत्यादिप्रागुदाहृतस्मृतयोऽपि मानमिति स मुक्तौ सर्वथा दुर्वारः । किञ्च मुक्तौ भेदवत् तत्पारमार्थिकत्वमपि दुर्वारम् । 'स तत्त्वतोऽन्यः' इति श्रुत्या 'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्' इत्यादिस्मृत्या च तस्य तथात्वाऽवेदनात् । अत एव –

**'परमात्माऽत्मनोर्योगः परमार्थ इतीक्ष्यते ।**
**मिथ्यैतदन्यद् द्रव्यं हि नैति तद् द्रव्यतां यतः ।।'**

इति सोपपत्तिजीवेश्वराभेदमिथ्यात्वाऽवेदकं विष्णुपुराणवचनमपि सङ्गच्छते । तत्राभेदपरो योग शब्दः पूर्वं तस्यैव प्रस्तुतत्वात् ।।

एतेनात्र भेदः औपाधिक एव वाच्यः ।

**'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना वहुधैकोऽनुगच्छेत् ।**
**उपाधिना क्रियते भेदरूपः देवक्षेत्रेष्वेवमजोऽयमात्मा ।'**

**कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।**

कार्यकारणतां हित्वा पूर्णबोधो विशिष्यते ।'
'जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवति '(नृ-उ-ता-उ-९)
'एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् '(ब्र-बि-उ-१२)
'विभेदजनकेऽज्ञाने नाशमात्यन्तिके गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति'(वि-पु-६-७-९६)

इत्यादि श्रुतिस्मृतिभिस्तस्य तथात्वाऽवेदनात् । उपाधेश्च निवृत्तिमत्वनियमात् । तन्निवृत्तौ च औपाधिकस्य निवृत्त्यवश्यम्भावात् । मुक्तौ चिन्मात्रमेव भेदगन्धविधुरमवतिष्ठत इति निरस्तम् ॥

'त्रिषु धामसु यद्भोग्यं भोक्ता भोग्यश्च यद्भवेत् ।
तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः'

इति श्रुत्योपाधिसम्बन्धरहितेऽपि चिन्मात्रे वैलक्षण्यशब्दितस्य भोक्तृजीवात्मतो भेदस्यावेदनेन मुक्तावनौपाधिकभेदस्याकामेनाप्यङ्गीकार्यत्वात् । नह्यनात्मनश्चिन्मात्रत्वं मुक्तस्य सम्भवति । नच, वैलक्षण्यं न भेदः किन्तु तद्व्याप्तधर्मशब्दितोऽसाधारणधर्म इति वाच्यम् । व्याप्यसत्वे व्यापकसत्वाऽवश्यम्भावेन तथाऽप्यात्मभेदस्यानिवारणात् । नच 'चिन्मात्रोऽहम्' इति श्रुतौ 'चिन्मात्र'शब्दस्य 'अहम्' शब्दसामानाधिकरण्यदर्शनात् अहमर्थस्य चेदमर्थभूताऽहङ्कारोपहितचैतन्यरूपतया तस्यानुपहितानिदं चैतन्यमात्ररूपत्वायोगेन यथाश्रुतार्थमादाय तत्सामानाधिकरण्योपपादनायोगात्, श्रौतचिन्मात्रपदं वस्तुतोऽहमर्थोपाधिनिवृत्तौ चिन्मात्रतयाऽवतिष्ठत इत्यभिप्रायमिति वाच्यम् । (१)तथा सत्यस्याश्रिते भोक्तर्यहमर्थ एव भोक्तृवैलक्षण्यप्रतिपादकत्वप्रसङ्गेनाप्रामाण्यप्रसङ्गात् । किञ्चाहमर्थोऽनिदं चैतन्यस्वरूपरूप एव वाच्यः न उपहितचैतन्यस्वरूपरूपः । अन्यथा 'चिन्मात्रोऽहं सदाशिवः' इति तत्र सदाशिवत्वविधानायोगात् । उपहितस्य शिवताया एव दुर्लभत्वेन सदाशिवत्वस्य सर्वथाऽसम्भवात् । एवं च 'उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवम्' इति श्रुत्या

(१) तथा सति अस्याः श्रुतेः इति पाठः स्यादिति भाति ॥

'त्रिषुधामसु यद्भोग्यं' 'कर्मक्षये याति स तत्त्वतोऽन्यः' 'उत्तम पुरुषस्त्वन्यः' इत्यादि प्रमाणसिद्धजीवात्म-ईश्वरात्म-परस्पर-प्रतियोगिकभेदस्य मायान्तःकरणादिरूपकारणकार्यरूपो सन्बन्धप्रयुक्तस्फुटप्रतिभासत्वरूपमेवौपाधिकत्वमाऽवेद्यत इत्येव वाच्यम्, नतु स्फटिक-लौहित्यादेर्यादृशं तादृशम् औपाधिकत्वम् । मानाभावात् ॥

किञ्च स्फटिकलौहित्यादेरिव जीवेश्वरभेदस्योपाध्यधीनोत्पत्तिस्थितिकत्वरूपमौपाधिकत्वं न वाच्यम् । परेण तद्भेदस्यानादित्वोपगमात् । मल्लिकाकुसुमलक्षणोपाधिसम्बन्धविरहेऽपि पूर्वं बहुकालं ततकुसुमसम्बन्धवस्तुनः इव औपाधिकगन्धानिवृत्तिवद्भेदोपाधिभूतपराभि-मतोपाधि सम्बन्धनिवृत्तावपि तदुपाधिकभेदनिवृत्तिसम्भवेन भेदस्य तदधीनस्थितिकत्वा-सिद्धेश्च । नच वस्त्रे सूक्ष्मकुसुमाऽवयवोपाधिसम्बन्ध एवास्ति, नतु तत्र तन्निवृत्तिः, येन तद्दृष्टान्तावष्टम्भस्तवोचितः स्यादिति वाच्यम् । तथा सति कुसुमनाशापत्तेः । कुसुमे 'तदेवेदमिति' प्रत्यभिज्ञाऽनुपपत्तेश्च । नच सा भ्रान्तिरबाधात् । नच गुणत्वेन गन्धस्य गुणिनं विना सत्वासम्भव एव बाधक इति वाच्यम् । प्रत्यक्षप्रत्यभिज्ञां प्रति[१]सहचार दर्शनरूपयुक्तिमात्रस्याबाधकत्वात् । अन्यथा वह्नावौष्ण्यप्रत्यक्षस्यौष्ण्याभावकृतकत्वसह-चारदर्शनरूपयुक्तिमात्रेणाऽपि बाधापत्त्या भ्रमत्वप्रसङ्गात् ॥

यद्यपि प्रत्यभिज्ञानात् कुसुमजात्यभेदविषयतया न भ्रान्तिरिति वचनावसरोऽस्ति, इव तथाऽपि दूरस्थेऽपि कुसुमे तद्गन्धोपलब्धिरस्तीत्यविवादम् । तदुपपत्तये तत्र तदवयव-गमनादिकल्पनायामतिगौरवात् । तत्कुसुमसम्बन्धोपाधेर्वायावेवौपाधिकगन्धोत्पन्नोऽनुभूयत इति कल्पनायामतीवलाघवात्, न तादृशवचनावकाशः । तादृशाऽनेककुसुमसामग्रीकल्पना-पेक्षया वाय्वादौ तत्सम्बन्धस्य सामग्रीत्वकल्पने लघुत्वात् । अन्यथा स्फटिकलौहित्यादि-कमप्युपाध्यवयवसङ्क्रमप्रयुक्तमेवोपलभ्यते नतु तत्सम्बन्धात्तत्रोत्पन्नमिति स्यात् ॥

ननु स्फटिकादौ जपाकुसुमाद्युपाधिसम्बन्धनिवृत्त्या लौहित्याद्युपाधिनिवृत्तिर्दृश्यत इति चेत् । सत्यम् । तावतापि= उपाधिनिवृत्तावपि, क्वचिदुक्तस्थले औपाधिकगन्धाद्यनिवृत्ति-दर्शनेन तन्निवृत्तौ तन्निवृत्तिनियमासिद्धेः ॥

---

(१) प्रत्यभिज्ञं प्रत्यभिज्ञा प्रति इति ताळपत्रस्य पाठः ॥

किञ्च मुक्तौ 'भूयश्चान्ते विश्वमाया निवृत्तिः' इति श्रुत्योपाधिनिवृत्त्यवगमेऽपि 'कर्मक्षये याति स तत्त्वतोऽन्यः' 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' (छां-उ-८-१२-३) इति श्रुत्यौपाधिकभेदस्य विक्षेपस्यचावगमात् तदुपाधित्वेन स्वीकृता मायानिवृत्तिः कुसुमोपाधिसम्बन्धवस्त्रगन्धोपलब्धिस्थले सूक्ष्मकुसुमावयवोपाधिसम्बन्धवत् सूक्ष्मरूपेणाऽस्तीति किन्न स्वीकार्यम्? एवं च भेदस्यौपाधिकत्वेऽपि का नो हानिः?

किञ्च उपाधिनिवृत्त्यौपाधिकनिवृत्तिरिति नियमस्वीकारे जीवेश्वरचैतन्ययोरपि निवृत्तिप्रसङ्गः। 'कार्योपाधिः'इत्यादिना तयोरप्यौपाधिकत्वश्रवणात् । नच 'कार्योपाधिः' इति श्रुतौ 'जीवेश्वर'शब्दौ भावप्रधानौ तथाचोपसंहारादिति वाच्यम् । असञ्जातविरोधित्वेनोपसंहारापेक्षयोपक्रमस्य बलवत्त्वेन तदनुसारेणोपसंहारस्य नेयत्वात् । अपि च परस्य जीवेशभेदौपाधिकत्वाङ्गीकारोऽपि कल्प्यः । नह्युपाधिनिवृत्त्या भेदो निवृत्तो भवतीत्येतन्मात्रं स्वतःफलम् । सुखदुःखाभावेतरत्वात् । नच भेदनिवृत्तिः सुखदुःखाभावान्यतरसम्पादकतया गौणफलम् । परमते स्वरूपसुखान्यजन्यसुखाभावात् स्वरूपसुखस्य च असाध्यत्वात् । नच भेदनिवृत्तिः तदभिव्यञ्जिका । सत्यपि जीवेशभेदे सुप्तौ स्वरूपसुखाभिव्यक्तिदर्शनेन तत्र तस्याः उपयोगादर्शनात् ॥

एतेनोपाधिभूताऽविद्यादिनिवृत्तिसहिता भेदनिवृत्तिस्तदभिव्यञ्जकेति प्रत्युक्तम् । सुप्तौ तदुभयनिवृत्त्यभावेऽपि स्वरूपसुखाभिव्यक्तिदर्शनात् । एतेन जीवेशभेदनिवृत्तिर्मुक्तिकालीनब्रह्मानन्दाभिव्यञ्जिकाऽङ्गीक्रियते । सुप्तौ त्वनुभूयमानो जीवस्वरूपानन्द इति नोक्तदोष इति निरस्तम् ॥

आवश्यकोपाधिभूत'मायाऽविद्या'शब्दितप्रकृतिबन्धनिवृत्तित एव ब्रह्मानन्दाभिव्यक्तिसिद्धेर्जीवेशभेदनिवृत्तेरपि तथात्वाकल्पनात् ॥

किञ्च यदावरकं तन्निवृत्तिरेवाभिव्यञ्जकत्वेन स्वीकारार्हा । नचाज्ञानवज्जीवेशभेदस्यावारकत्वे मानमस्ति । तया ज्ञाननिवृत्तिवत् भेदनिवृत्तिरपि न तदभिव्यञ्जिकेति ॥

एतेन सा दुःखनिवृत्तिहेतुत्वेन फलमिति निरस्तम् । सुप्तौ जीवेशभेदनिवृत्त्यभावेऽपि [१]तन्निदर्शनात् । नचात्यन्तिकदुःखनिवृत्तौ सा हेतुः । दुःखहेतुत्वेन प्रमाणसिद्धपापरूप-सामग्रीविरहादेव तत्सिद्धेः । प्रारब्धस्य च भोगादेव निवृत्तेश्च भोगभोग्यभोक्तृणां भेदाऽविना-भूतस्वरूपत्वेन दुःखनिवृत्तिहेतुभोगस्य भेदेनैव निर्वाह्यतया प्रत्युत भेदनिवृत्तेः तद्विरो-धित्वाच्च ॥

अपि च यथाऽनाद्यविद्या न जीवेश्वरचैतन्यस्वतःसिद्धा, भेदाविरोधिनी तथा तद्भेदोऽपि न तद्विरोधीति तस्य पराभिमतौपाधिकत्वस्वीकारो विफलः, तन्निवृत्त्यनिवृत्तिकृतेष्टा-निष्टदर्शनेनाविशेषात् । प्रत्युत सुखस्वीयत्वसम्पादकतया पुरुषार्थत्वोपयोगित्वेनेदानीमिव मुक्तावपि भेदस्यावश्यकत्वाच्च । आवरकाज्ञानोपाधिमात्रनिवृत्त्यैव जीवचैतन्यस्य वस्तुतः स्वाभिन्नानावृतब्रह्मापरिच्छिन्नानन्दानुभवोपयोगित्वेन तत्सत्त्वस्यैव परेण प्रार्थनीयत्वाच्च । 'अहं सुखी'त्यनुभवकाले वस्तुतः स्वाभिन्नत्वेऽपि तत्सुखस्य भेदप्रयुक्तस्वीयसुखत्वेनन[२] पुरुषार्थत्ववत् स्वाभिन्नसुखत्वेन पुरुषार्थताया अदर्शनात् । 'नह्यहं सुखीस्यामि'तिवत् 'अहं सुखं स्याम्' इति पुरुषेणार्थ्यत इति अनुभवसिद्धम् । तस्मात् परस्याऽपि जीवचैतन्यं प्रति ब्रह्मानन्दस्य पुरुषार्थत्वसम्पत्तये मुक्तौ तयोर्भेदोऽवश्याङ्गीकार्य इति ॥

किञ्चौपाधिकभेदो न स्वतः सिद्धाभेदकार्यविरोधी स्वीकर्तुं शक्यः । बिम्ब-प्रति-बिम्बयोस्तथाविधभेदं पश्यतोऽपि तिलकसौष्ठवादितदभेदकार्य एव प्रवृत्तिदर्शनात् । अन्यथा तदभावप्रसङ्गात् । अपि चौपाधिकभेदस्यापि विशेषदर्शनं प्रत्यभेद-तत्कार्यविरोधित्वे उपाधिनिवृत्तिप्रसक्तभेदनिवृत्तावपि स दुर्वारः । प्रागभावसत्त्वादिविरोधि तद्घटनिवृत्तिवत् ब्रह्माभेद तत्कार्यब्रह्मानन्दानुभवविरोधि-जीवेश्वरभेदविरोधि-तद्भेदनिवृत्तेरपि तदानन्दा-नुभवविरोधित्वात्, 'यद्वस्तु यदभावत्वेन व्यवह्रियामाणवस्तुनिवृत्तिरूपं तत् स्वकाले तत् कार्यस्वरूपासहिष्णुः' इति नियमात् भेदस्याऽप्यभेदाभावत्वेन व्यवह्रियमाणत्वात् । निवृत्ति-त्वमिह सप्तमपदार्थः पदार्थविभजकोपाधित्वं विवक्षितमिति उक्तनियमे व्यभिचारानवकाशात् या यद्विरहनिवृत्तिः सा स्वकाले स्वविरहविरहस्वरूपासहिष्णुरिति नियमाद् वा ॥

---

(१) तन्न । अदर्शनात् ॥ इति पाठः स्यात् ॥

(२) स्वीयसुखत्वेन इति पाठः स्वरसमिति भाति ॥

किञ्च 'यथा ह्ययं ज्योतिरात्मा' इति श्रुतिर्न भेदस्यौपाधिकत्वं विधत्ते किन्तु 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः' (मा-उ-२-९) इति श्रुत्या भेदौपाधिकत्वप्रतिक्षेपाय तदनुवदति । तथा च भेदौपाधिकत्वे मानाभावः । 'प्रपञ्चो यदि विद्येत' इति श्रुत्यर्थस्तु 'एकमेवाद्वितीयम्' इत्यादिश्रुतीनां प्रपञ्चमिथ्यात्वपरत्वनिरसनप्रस्तावे वक्ष्यते ।।

अपि च 'स्यादयं मनोरथो जीवेशभेदो निवर्तत' इति यदि तदुपाधित्वेन स्वीकृत-'मायाऽविद्या'शब्दितप्रकृतप्रकृतिनिवृत्तिः प्रमाणसिद्धा भवेत् । नचैवम् । 'गौरनाद्यन्तवती' (मना-उ-५) 'एषोऽश्वत्थः सनातनः' (कठ-उ-२-३-१) इत्यादिश्रुतिपर्यालोचनायां तदनिवृत्ते-रेव लाभात् । नच 'भूयश्चान्ते विश्वमाया निवृत्तिः' इति श्रुत्या तन्निवृत्तिरावेद्यत इति वाच्यम् । 'गौरनाद्यन्तवती' इत्यस्याः मायानिवृत्तिप्रतिपादिकायाः अनादिभावत्वयुक्ति-सहकृतत्वेन केवलतन्निवृत्तिप्रतिपादकोदाहृतश्रुत्यपेक्षया प्रबलत्वेनैतच्छ्रुत्यनुरोधेनैव तस्याः नेयत्वात् । नच 'गौरनाद्यन्तवती' इत्यास्याः 'अनादिश्चासावन्तवतीति' बहुव्रीहि-गर्भकर्मधारयाश्रयणे सा अस्मदभिमतार्थसाधिकैवेति वाच्यम् । बहुव्रीहिगर्भकर्मधारयापेक्षया द्वन्द्वगर्भनञ्तत्पुरुषाश्रयणस्य लघुत्वात् बहुव्रीहेरन्यपदार्थप्रधानत्वेन जघन्यत्वात्, द्वन्द्वस्य च वर्तिपदार्थप्राधान्येन मुख्यत्वात्।

किञ्चात्र द्वन्द्वगर्भनञ्तत्पुरुष एवाश्रयणीयः । 'एषोऽश्वत्थः सनातनः' इति संसारा-नन्त्यप्रतिपादकश्रुत्यनुगुणात् । नहि प्रकृतिबन्धनियतसंसारानन्त्यं प्रकृतिनिवृत्तावुपपद्यते । एवं च 'आकाशवत् सर्वगतश्च नित्यः' इत्यादि 'माया'शब्दितप्रकृत्युपादानकाकाशादि-नित्यत्वप्रतिपादकश्रुतिरप्यनुकूलिता भवति । 'उत्पत्तिमतो भावस्य ध्वंस' इति नियमस्तु श्रौतार्थान्यविषय इति, शुष्कनियमस्य श्रुत्या बाधात् । यथाऽपि द्वन्द्वगर्भनञ्तत्पुरुषपक्षेऽपि संसर्गाभावे शक्तस्य नञः पर्युदासार्थकत्वाश्रयणेन लक्षणेत्यविशेषः । तथाऽपि बहुव्रीहि-गर्भकर्मधारयपक्षे बहुव्रीहिगताऽनेकपदस्यापि विनिग्रमकाभावेनान्यपदार्थलक्षणेति नाविशेषः इति प्रतिपादितमधस्तात् ।।

**।। अथ प्रसङ्गात् 'कार्योपाधिरिति' श्रुतेः परोदीरितार्थनिरसनम् ।।**

एतेन 'कार्योपाधिः' इति श्रुतिर्जीवेश्वरभेदौपाधिकत्वे मानमिति निरस्तम् । अत्र श्रुतौ भेदवाचिपदाभावेन तस्य सोपाधिकत्वे मानत्वायोगात् । वस्तुतः स्वयमनुभवसिद्धो,

पूर्णबोधः, केन प्रयोगोपाधिना जीव इत्युच्यते, पूर्णबोधः = सर्वज्ञः, केन तथाविधोपाधिना ईश्वर इत्युच्यते इति जिज्ञासायामस्याः प्रवृत्तत्वेन भेदौपाधिकत्वप्रतिपादनपरत्वमेवासिद्धम् । **उपसंहारविजये** अस्माभिः उपक्रमात् उपसंहारस्य प्राबल्यसमर्थनात्[१] तद्रीत्याऽत्र 'कार्योपाधिरयम्' इति श्रुतौ 'कार्यकारणतां हित्वा' इत्युत्तरवाक्यानुरोधेन पूर्ववाक्यगत-'कार्य-कारण'शब्दौ भावप्रधानौ । एवं च सङ्कोचकाभावात् 'यतो वा इमानि भूतानि जायन्ते' इत्यादिजगत्कारणत्वाऽवेदकप्रमाणसद्भावाच्च, 'पूर्णबोधो' जगत्कारणत्वोपाधिना ईश्वर इत्युच्यते । कारणतां=फलोपादानलक्षणकारणतां, हित्वा, तदभावसमये = प्रलये, पूर्णबोधोऽवशिष्यते । अयमपूर्णबोधत्वेनानुभवसिद्धोऽर्थः, सन्निधानात् समानवाक्योपात्तत्वादाकाङ्क्षावशाच्च । 'आत्मनो व्युच्चरन्ती' इत्यादिश्रुतिपर्यालोचनया पूर्णबोधकार्यत्वे सति चेतनत्वोपाधिना 'जीव' इत्युच्यते । अयमनुभवसिद्धो पूर्णबोधः, फलोपादानलक्षण-तत्कार्यत्वं हित्वा तदभावसमये यथापूर्वमवशिष्यत इत्यनुषङ्गेणार्थः । अन्यथा अपूर्ण-बोधस्य वस्तुतो अभावे 'पूर्णबोधः' इत्यत्र 'पूर्ण'विशेषणवैयर्थ्यात् । अतोऽपि जीवेश-भेदसिद्धिरिति ।।

।। इति प्रसङ्गात् 'कार्योपाधिरिति' श्रुतेः परोदीरितार्थ निरसनम् ।।

## ।। अथ 'माया चाविद्या च' इति श्रुतेः परोदीरितार्थनिरसनम् ।।

'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति'(नृ-उ-ता-उ-९)इति नृसिंहतापनीयवाक्यमपि न जीवेश्वरभेदौपाधिकत्वे प्रमाणम् । तस्य अपदार्थत्वात् अवाक्यार्थत्वाच्च । तदर्थस्तु 'आभासेन'इति तृतीया द्विवचनस्य 'सुपां सुलुक्' (पा-सू-७-१-३९) इत्यादिना एकवचनम् । आदेश आभासशब्दस्य चैकदेशश्च तत्र प्रथमाभास-शब्दे, आ= ईषत् अर्थः, द्वितीये त्वभिविध्यर्थः इति विवेकः । भासनं= भासः= प्रकाशो= ज्ञानम् इति यावत् । आभासाभ्याम्= ईषत् ज्ञानमितियावत् । आभासाभ्यामीषत्= ज्ञान-पूर्णज्ञानाभ्यां, या प्रकृतिः मायाचाविद्या चेति व्यपदिश्यते, सा स्वयमेव भवति=

---

(१) 'अस्मद्गुरुचरणाः उपक्रमादुपसंहारो बलीयान् । तस्य तद्व्याख्यानरूपत्वात् ।। इत्यादिना' उपसंहार-विजये समर्थनादित्यर्थः ।।

स्वयमेव सती अनादिनित्येति यावत् । एतादृशी जीवेशौ करोति= व्यक्तीकरोति, तत्वेन, तौ, स्फुटम् व्यञ्जयन्तीति ।।

।। इति 'माया चाविद्या च'इति श्रुतेः परोदीरितार्थनिरसनम् ।।

**।। अथ प्रसङ्गात् 'एक एवेति' श्रुतेः परोदीरितार्थनिरसनम् ।।**

एतेन 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः' इति श्रुतिरात्मभेदौपाधित्वे मानमिति परास्तम् । अपदार्थत्वादवाक्यार्थत्वाच्च । भूते भूते= सकलजीवात्मसु, व्यवस्थितः= व्यवस्थितव्यापारसम्पादकत्वेन स्थितत्वात्, तथा व्यपदिष्टः । भूतात्मा= परमात्मा,एक एव= स्वसमानजातीयद्वितीयरहित एव सन्, किन्तु, एकधा, मूलरूपेण, बहुधा चैव तत्तद्भूतनियामकरूपेण, दृश्यते 'ज्ञानिभिः'इति शेषः । 'बहुधा दृश्यते' इत्यत्र दृष्टान्तमाह – जलचन्द्रवत् इति= प्रतिबिम्बभूतचन्द्रवत् इत्यर्थः । एकस्यापि प्रतिचन्द्रस्योपाधिभूतजलादिविक्रियानुसारिबहुप्रकारत्वदर्शनात् तस्य दृष्टान्तभावानुपपत्तिरिति, परमात्मन एवैकत्वं व्यवस्थया सर्वप्राणिनियामकत्वं 'एकधा बहुधा च' ज्ञानि साक्षात्कारविषयत्वमेवाऽस्याः श्रुतेः प्रतिपाद्यमिति व्युत्पन्नैरवधारणाच्च । 'विभेदजनकेऽज्ञाने' इति स्मृतेरपि न जीवेश्वरभेदौपाधिकत्वपरत्वम् । तस्य 'निमित्तपरीष्टि'रित्यादौ निमित्तशब्दस्य ज्ञापकपरत्ववत्, अत्रापि 'जनक'शब्दस्य ज्ञापकपरत्वं द्रष्टव्यम् । ज्ञानशब्दः करणव्युत्पत्त्या प्रमाणपरः । एवं चायमर्थः । 'द्वासुपर्णा' इत्यादिश्रुत्यनुरोधेन **'विः पक्षिपरमात्मनोः'**(१) इत्यभिधानाच्च, को जीवात्मपरमपरस्परभेदज्ञापके प्रत्यक्षादिप्रमाणे, आत्यन्तिकं नाशं गते सति= कथमपि तस्मिन् जागरूके सति, आत्मनोः= जीवात्मनोः,ब्रह्मणो अभेदम्= असन्तमप्रामाणिकं, कः= को वा वादी, करिष्यति= स्वीकरिष्यति, न कोऽपीति, तदर्थावगमादिति ।।

**।। अथ 'अथातोऽहङ्कारादेशः' इति श्रुतेः परोदीरितार्थविभेदनम् ।।**

यच्चोच्यते **'अथातोऽङ्कारादेशोऽथात आत्माऽदेशः'**(छां-उ-७-२५-१) इति 'आत्माहङ्कारयोः' पृथगुपदेशादनात्मैवाहङ्कारः । अन्यथा=तस्याऽत्मत्वे, पृथगुपदेशादनात्मैवाहं

(१) वैजयन्तीकोशम् ।।

वैयर्थ्यात् । नचायम् 'आत्म'शब्दो ब्रह्मपरः । वाक्योपक्रमे 'स एवाधस्तात्' (छां-उ- ७-२५-१) इत्यादिनोपदिष्टत्वेन पुनरुपदेशवैयर्थ्यादिति । तन्न । उपदेशत्रयस्यापि ब्रह्म-विषयत्वात् । नचैवमुपदेशत्रयवैयर्थ्यम् । आकारभेदेन ब्रह्मज्ञानार्थत्वेनावैयर्थ्यात् । नच 'अहङ्कार'शब्दस्य ब्रह्मवाचित्वे मानाभावः । ब्रह्मप्रकरणस्याहङ्कारशब्दस्यान्यपरत्वासम्भवेन ब्रह्म परताया एवावश्यकतया शक्त्यभावेऽपि लक्षणया तत्परत्वसम्भवाद् अहं, अहं शब्दोप-लक्षितं नामप्रपञ्चं करोतीति योगेन वा, तस्य ब्रह्मपरत्वसम्भवात् । सर्वशब्दवाच्यस्य ब्रह्म-णोऽहङ्कारशब्दवाच्यतायाऽप्यावश्यकत्वाच्च । नच तस्य सर्वशब्दवाच्यतायां मानाभावः ।

'ब्रह्मैव वाचः परमं व्योम' (तै-सं-७-४-१८)

'वेदैरनेकैरहमेव वेद्यः'

'सर्वे वेदा यत्रैकं भवन्ति सर्वे वेदा यत्पदमामनन्ति'

'नामानि सर्वाणि च यमाविशन्ति'

'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्येच विष्णुस्सर्वत्र गीयते' (ह-पु)

'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः'

'वचसां वाच्यमुत्तमम्'

इत्यादिश्रुतिस्मृतीनामेव तत्र मानत्वात् ।

'भूमा नारायणाख्यः स्यात् स एवाहङ्कृतिः स्मृतः ।
जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः'[१] इति

'अणुरूपोऽपि भगवान् वासुदेवः परोविभुः । आत्मेत्युक्त '[२]

इत्यादि स्मृत्या नारायण-अनिरुद्ध-वासुदेवाख्य-परमात्मरूपविशेषवाचितया भूमा-अहङ्कार-आत्मशब्देनोक्तत्वाच्च(शब्दानामुक्तत्वाच्च-पा) । 'यदेकमव्यक्तमनन्तरूपम्' (म-ना-उ-

(१) छान्दोग्यभाष्योदाहृतपरमसारस्मृतिः ॥

(२) छान्दोग्यभाष्योदाहृतपरमसारस्मृतिः ॥

१-५) इत्यादिश्रुत्यैव परमात्मनोऽनन्तरूपतायाः प्रमितत्वेन नारायणानिरुद्धवासुदेवाख्यानां 'भूमा-अहङ्कार-आत्म'पदार्थत्वेन स्मृत्युक्तानामपि परमात्मरूपभेदत्वाविरोधात् ॥

ननु 'अहङ्कार'शब्दसाम्येऽपि न श्रुतिस्मृत्योरेकार्थता, स्मृतौ 'अहङ्कार'शब्दार्थस्य जीवस्थत्वाभिधानात् । श्रुतौ तु 'अहमेवेदं सर्वम्' इति अहङ्कारस्य सर्वात्मकत्वाभिधानात् (अभिधानत्वात्-पा) रूपभेदे च शब्दसाम्यमात्रेण प्रत्यभिज्ञानुपपत्तेः । श्रुतिस्मृत्योर्भिन्नक्रमत्वादपि श्रौतभूमाद्यादेशो न स्मार्तनारायणाद्यादेशरूपः । श्रुतौ हि 'भूमाहङ्कारआत्मादेशास्त्रयः' क्रमेण प्रतीयन्ते । स्मृतौ तु 'भूमाङ्कत्यहङ्कारात्म'शब्दार्थाः क्रमेण निरूप्यन्त इति चेन्न । व्याकरणकोशादौ भिन्नक्रमेण व्युत्पादितानामपि योग्य-तत्तदर्थानां पश्वादिरूपाणां वेदे ग्रहणवत् स्मृतौ भिन्नक्रमेण व्युत्पादितानामपि भूमादिशब्दार्थानां नारायणादिपरमात्मरूपभेदानामेव वेदे भूमादिशब्दार्थत्वेन ग्रहणोपपत्तेः । अन्यथा 'लोकवेदाधिकरण'विरोधात् । उक्तस्मृतेर्व्याकरणस्मृतितुल्यतया शक्तिग्रहार्थं प्रवृत्तत्वेन, श्रुतेश्च तद्व्युत्पादितार्थानां सर्वगतत्व-सर्वात्मकत्वादिप्रतिपादनार्थं प्रवृत्तत्वेन, श्रुतौ 'जीवस्थ'इत्यादिशब्देन प्रत्यभिज्ञानाभावेऽपि जीवस्थत्वादिप्रवृत्तिनिमित्ताहङ्कारशब्दैः सर्वगतत्वादिविधानार्थमेकस्यापि परमात्मनः प्रवृत्तिनिमित्तभेदेनोक्त्यविरोधात् ॥

एतेन आकाङ्क्षितत्वादपि नायं स्मार्ताहङ्काराऽदेशः । अत्र हि 'स एवेदं सर्वम्' इति ब्रह्मणः सर्वात्मकत्वमुपदिश्यते । नच तत्सर्वात्मकत्वोपदेशः स्मार्ताङ्कारस्य सर्वात्मकत्वोपदेशमपेक्षते तेन विनाऽनुपपत्त्यभावात्, तस्य भूमाभिन्नत्वे भिन्नप्रकारत्वे च पृथगुपदेशवैयर्थ्यात् । तद्भिन्नत्वे भिन्नप्रकारत्वे च तस्याः जिज्ञासितस्य शेषीभूतभूमसार्वात्म्योपदेशप्रतिकूलस्याद्वितीयब्रह्मप्रकरणे निर्देशानुपपत्तेश्च । जीवस्य तु तमपेक्षते, अकार्यस्वरूपस्य प्रत्यक्षादिसिद्धभेदसिद्धस्य तस्य सार्वात्म्योपदेशाभावेन प्रत्यक्षतो प्रतीयमानो ब्रह्मप्रतियोगिको भेदः स्वाभाविक एव स्यादिति, ब्रह्मणः सर्वात्मकत्वश्रुतिरुन्मत्तप्रलापवत् स्यात् । शब्दद्वयोःसार्वात्म्याऽयोगात् । सति तु जीवसार्वात्म्योपदेशे वस्तुतो भिन्नयोर्द्वयोः सार्वात्म्यायोगेन तद्भेदौपाधिकत्वस्य स्वाभाविकतदभेदस्य च सिद्धौ ब्रह्मसर्वात्मकत्वश्रुतिरुपपन्नार्थैव स्यादिति, तदपेक्षितब्रह्माभेदसिद्धये जीव एव सर्वात्मत्वलक्षणब्रह्मधर्मवत्तया 'अथातोऽङ्काराऽदेश' इत्यत्र निर्दि(र्दे)शत इति निरस्तम् ॥

आकाशाधिकरणन्यायेन श्रौत'अहङ्कार'शब्दस्य वाक्यशेषस्थसर्वात्मकत्वरूपब्रह्मलिङ्गेन त्वद्रीत्याऽपि ब्रह्मपरतायाः आवश्यकत्वेन, स्मार्ताऽङ्कारस्य ब्रह्मत्वेनोक्तस्मृतिसिद्धरूढ्या 'अहम्' इति कृतिकरणं 'यस्मिन्' इति योगार्थभूतजीवापेक्षया शीघ्रोपस्थितत्वेन च तत्परत्वस्यैव न्याय्यत्वात्, 'अङ्कार'शब्दस्य जीवे रूढौ मानाभावेन तस्य परिच्छिन्नतया सर्वात्मकत्वरूपब्रह्मलिङ्गासम्भवेन च तत्परत्वानुपपत्तेश्च ।।

।। इति 'अथाऽतोऽत्मादेशः' इति श्रुतेः परोदीरितार्थविभेदनम् ।।

यद्यपि भूमरूपब्रह्माभिन्नस्मार्ताहङ्कारस्य सर्वात्मकतोपदेशः, स भूम[१] सार्वात्म्यसिद्धये तत्सार्वात्म्यश्रुत्याऽकाङ्क्षितः । तथाऽपि 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरति-आत्मक्रीडा-आत्ममिथुन-आत्माऽनन्दः स्वरूपाद्भवति तस्य सर्वेषु लोकेषु कामचारो भवति'(छां-उ-७-२५-२) इति वाक्यशेषस्थफलसिद्धये तदाकाङ्क्षित एव, प्रत्युत जीवसार्वात्म्योपदेश एव न तदाकाङ्क्षितः, बलवत्या भूमसार्वात्म्यश्रुत्यैवाहङ्कारत्वेन प्रसिद्ध-गर्वाहङ्कारतत्वाभेदवत् भूम-जीव-भेदग्राहिप्रत्यक्षाद्युपमर्दनेन तदभेदसिद्धिसम्भवात् । अन्यथा प्रत्यक्षादिसिद्धे भूमजीवभेदे दृढे सति भूमसार्वात्म्यश्रुतिवज्जीवसार्वात्म्यश्रुतेरप्युन्मत्तप्रलपित-त्वापत्त्या तदभेदप्रमापकत्वानुपपत्तेर्जीवोपदेशस्य ब्रह्मोपदेशतया वाक्यशेषस्थफलाकाङ्क्षित-त्वानुपपत्तेश्च । अन्यथा रूढ्या शीघ्रोपस्थितत्वेन प्रत्यक्षादिसिद्धभूमभेदवत्त्वेन च गर्वादेरेव श्रुतौ 'अहङ्कार'शब्देन ग्रहणोपपत्तेः ।।

नच स्मार्ताहङ्कारस्य भूमाभिन्नत्वेन तस्य पृथगुपदेशः फलार्थमप्यनाकाङ्क्षित एवेति वाच्यम् । तस्य भूमाभिन्नत्वेऽपि जीवस्यानिरुद्धत्वरूपाकारान्तरेण पृथग् तदुपदेशस्य फलार्थमाकाङ्क्षितत्वात् । 'एवं पश्यन्नेवं मन्वान एवं जानन्' इति वाक्यशेषे प्रकार-वाच्यभ्यस्त'एवं'शब्देन पूर्वोक्तप्रकार-विशिष्ट-ब्रह्मदर्शनादीनामेव फलकीर्तनात् । अन्यथा प्रकारवाचि'एवं'शब्दवैयर्थ्यात् । वस्तुतस्तु नेह सार्वात्म्यं प्रतिपिपादयिषितम् । भूमाऽत्मनः वास्तवजडप्रपञ्चात्मकत्वानुपपत्तेः । लक्षणभेदेन भूमाऽभूमा विभागोक्त्यनुपपत्तेः । तथात्वे च श्रुतौ 'यत्र नान्यत् पश्यति' इत्याद्युक्तव्यावहारिकतत्परत्वे च प्रत्यक्षादिसिद्धभेदस्य पारमार्थिकत्वापत्तेः । लक्षणभेदेन भूमाऽभूमविभागोक्त्यनुपपत्तेः । 'जुष्टं यदा पश्यत्यन्यमीशम्'

---

(१) 'न भूम' इति पाठः स्यात् ।

'अनश्नन् अन्यः' 'अविद्यायामन्तरे वर्तमानाः' (कठ-उ-१-२-५) 'नान्यच्छ्रेयो वेदयन्ते' इत्याद्यात्मानात्मभेदपरबहुश्रुतिव्याकोपापत्तेश्च । 'उत्तमपुरुषस्त्वन्यः' इत्यादितद्भेदपर-स्मृतिविरोधापत्तेश्च । आरोपितसार्वात्म्यपरत्वे श्रुतेरतत्वाऽवेदकत्वापत्तेः । बाधायां सामाना-धिकरण्यस्य च अपदार्थत्वादवाक्यार्थत्वाच्च । सर्वस्य बाधितत्वे सति आत्मनः सार्वात्म्या-सिद्धेः । नच आत्मव्यतिरेकेण सर्वात्मकत्वमेवाऽत्मनः सार्वात्म्यमिह विवक्षितमिति वाच्यम् । अस्यापि अपदार्थत्वादवाक्यार्थत्वाल्लक्षणाश्रयणापत्तेः,स्वरूपनिषेधशून्यवादा-पत्तेः । तत्सृष्ट्यादिप्रतिपादकश्रुत्यादिविरोधापत्तेश्च । 'अतोऽन्यदार्तम्' 'अन्यद्युष्माकमन्तरं बभूव'(ऋ-सं-१०-८२-७) इत्यात्मभिन्नप्रपञ्चसत्यत्वप्रतिपादकबहुश्रुतिविरोधापत्तेश्च ॥

## ॥ अथ सार्वात्म्यप्रतिपादकश्रुत्यर्थविचारः ॥

अत एव पारमार्थिकत्वाकारेणात्मव्यतिरिक्तप्रपञ्चासत्वमेवात्मनः सार्वात्म्यम् इह विव-क्षितमिति प्रत्युक्तम् । निषेधश्रुतौ पारमार्थिकत्वोपस्थापकपदाभावात् अध्याहारादि-कल्पानायां मानाभावात्, निषेधश्रुतेः प्रपञ्चस्वरूपग्राहिमानान्तरविरोधाय तत्कल्पनेऽपि तत्पारमार्थिकत्वग्राहिमानान्तरविरोधापरिहारात्, प्रपञ्चस्वरूप-तत्सत्यत्वग्राहि-प्रमाण-विरोधाय निषेधश्रुतावपारमार्थिकत्वाद्याकारोपस्थापकपदाध्याहारादिकल्पनमेवोचितमित्युक्त-त्वाच्च । 'स एवेदं सर्वम्' 'अहमेवेदं सर्वम्' (छां-उ-७-५१-१) 'आत्मैवेदं सर्वं' (छां-उ-७-२५-१) इति मुख्यसामानाधिरण्यस्य प्रमाणविरुद्धतया अर्थान्तरपरत्वस्यावश्यकत्वे 'स एव अधस्तादहमेवाधस्तादात्म्यैवाधस्तात्' इत्युपक्रमावगतात् अध्यस्थत्वाद्यविरोधाय 'स एवेदं सर्वमहमेवेदं सर्वमात्मैवेदंसर्वम्' इत्युपसंहारगत'इदं''सर्व'शब्दयोः 'सुपां सुलक्' (पा-सू-७-१-३९) इति सूत्रेण सप्तम्येकवचनस्य प्रथमैकवचनादेशसंभवादुपसंहारस्यापि सर्वगतत्व-परतायाः एव न्याय्यत्वात्, उपक्रमगत'अधस्तात्'इत्यादिनिर्णीतसप्तम्यन्तानेकपदानुसारेण उपसंहारगतप्रथमान्त'इदं''सर्व'शब्दयोरेवोक्तरीत्या सप्तम्यन्तताया एवान्याय्यत्वाच्च । एव-माश्रयणे उपक्रमोपसंहारयोः मुख्यार्थात्यागादिति ॥

यद्यपि 'स एवाधस्तात्' इत्युपक्रमे 'अधस्तात्' इत्यादिसप्तम्यन्तमिव प्रथमान्तमपि सम्भवतीत्युपसंहारानुसारितया सामानाधिकरण्यपरत्वेन योजयितुं शक्यम् । सप्तम्यन्तादिव

प्रथमान्तादपि 'सप्तमी-पञ्चमी-प्रथमान्तेभ्यो दिग्देशकालेष्वस्ताति'रित्यस्तातिप्रत्यये स्मरणात् । तथाऽप्युक्तवक्ष्यमाणबाधकात् प्रथमान्तत्वाऽसम्भवेन सप्तम्यन्तत्वनिश्चयेन सर्वगतत्वपरत्वमेव युक्तम् । 'सर्व एव'इत्यादावेवकारस्य 'पार्थ एव धनुर्धरः'इत्यादाविव मानान्तराविरोधाय समाभ्यधिकमात्रनिषेधपरत्वात् । तथा च श्रुतिस्मृती । 'न तत्सम-श्चाभ्यधिकश्च दृश्यते' 'एतावताऽलं ननु सूचितेन' (भा-१-१८-२०) इत्यादि ॥

किञ्च 'सर्वं लवणम्' इतिवत् सर्वव्याप्त्या वा, 'आयुर्वै घृतम्' 'ब्राह्मणोऽस्य मुखम्' इति 'ब्राह्मणो वै सर्वा देवता' (तै-ब्रा-१-४-४-१८) इति तन्निमित्तत्वेन वा, 'राजा राष्ट्रम्' इतिवत् तत्सर्वाधारत्वेन वा, 'यजमानःप्रस्तरः'इतिवत् तत्सिद्ध्येति वा,(१) 'आदित्यो यूपः' इतिवत्, सारूप्येण वा,'स एवेदं सर्वम्' इत्यादिश्रौतसामान्यधिकरण्योपपत्तौ सर्व-प्रमाणबाधितायाः सार्वात्मपरत्वकल्पनायाः 'यः पुरुषः स स्थाणुः' इतिवत्, यत्सर्वत्वेन प्रतीतं तदात्मन्यध्यस्तमिति पदद्वयलक्षणया बाधायां सामानाधिकरण्यपरत्वकल्पनायाश्चा-योगात् ॥

किञ्च 'पुरुष एवेदं सर्वं पुरुषेणैवेदं सर्वं व्याप्तमातृणादाकरीषात्'(२)इति श्रुतौ

'असतश्च सतश्चैव सर्वस्यप्रभवोऽव्ययः ।
सर्वस्य च सदा ज्ञानात् सर्वमेनं प्रचक्षते ॥
पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदीयत्वान्नतु सर्वस्वरूपतः'

इति भारते । 'सर्वं समाप्नोषि ततोऽसि सर्वः'(भ-गी-११-४०) इति गीतायां च 'सर्व'-शब्दस्यान्यथा व्याख्याततत्वात् । 'स वेद सर्वम्' इति श्रौतसामानाधिकरण्यव्यपदेशस्या-न्यथैवोपपत्त्या न सार्वात्म्ये प्रामाण्यम् । तस्मान्नेह सार्वात्म्यं प्रतिपिपादयिषितं किन्तु सर्वगतत्वमेवेति ॥

॥ इति सार्वात्म्यप्रतिपादकश्रुत्यर्थविचारः ॥

---

(१) तत्सिद्ध्येति = तत्कार्यकारित्वेत्यर्थः इति विजयीन्द्रभिक्षुकृतलघ्वामोदन्यायामृते ॥

(२) ब्राह्मणवाक्यमेतत् ॥

## ।। अथ परोदीरित 'यत्राऽन्यत् पश्यती'ति श्रुत्यर्थखण्डनम् ।।

यदत्रोक्तम् 'इदमद्वितीयब्रह्मप्रकरणम्' इति । तदपि न । तथात्वे मानाभावत् । नच 'यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यत् विजानाति स भूमा' (छां-उ-७-२४-१) इति निरस्तनिखिलभेदतया भूमशब्दार्थकथनमेव तत्र मानमिति वाच्यम् । 'यत्र नान्यत्पश्यति' इति वाक्येन 'अन्यशब्दार्थेन वा दर्शनक्रियया वा, दृष्ट्यज्ञया वा, विशिष्टेन वा, योजनायां ब्रह्मणि चक्षुर्योग्यपदार्थस्य चाक्षुषज्ञानक्रियायाश्चाक्षुषज्ञानवतश्च निषेधलाभेऽपि ब्रह्मव्यतिरिक्तसकलनिषेधालाभात्, पश्यतेः साक्षात्कारमात्रार्थत्वेऽप्यतीन्द्रियपदार्थनिषेधालाभाच्च ।।

'यदा पश्यः पश्यते रुग्मवर्णम्' इत्यादिश्रुत्या ब्रह्मणि साक्षात्कारविषयस्य रुग्मवर्णादेराऽवेदनेन तद्विरोधेन 'नान्यत् पश्यति' इत्यस्य ब्रह्मणि दृश्यदर्शन-क्रिया-दृश्य-सामान्यनिषेधपरत्वस्यापि अयोगाच्च । वाक्यशेषेश्रुत-अल्पत्व-मर्त्यत्वापादक-सातिशयत्व-उत्पित्तिमत्वादिरूपदोषाणामेव 'अन्य'शब्दार्थत्वेन स्वीकार्यत्वाच्च । 'यत्र नान्यत् शृणोति' 'नान्यत् विजानाति' इति वाक्ययोरपि न ब्रह्मातिरिक्तपदार्थसामान्यनिषेधपरत्वम् । पूर्ववाक्ये ब्रह्मातिरिक्तयोः गुरुश्शिष्ययोः सनत्कुमारनारदयोः तथा नामादिप्राणपर्यन्तं तस्योपासालम्बनस्योपासनक्रियायास्तत्फलस्य तर्तव्यशोकादेश्च, तथोत्तरवाक्ये 'यत्र नान्यत् पश्यति' इत्यादौ 'यत्'शब्दार्थादेश्च श्रुतत्वेन तद्विरोधात् । 'यस्मिन् द्यौः पृथिवी चान्तरिक्षम्' 'सत्यकामः सत्यसङ्कल्पः' इत्यादिश्रुत्यन्तरविरोधाच्च । किन्तु तदविरोधाय 'अपहतपाप्मा विजरो विमृत्युः' इत्यादिश्रुत्यन्तरावगतदोषनिषेधपरत्वमेव तस्यैवोत्कृष्टत्वापरपर्यायभूमत्वोपपादकत्वात् सकलनिषेधस्य स्वाश्रयोत्कर्षासाधकगुणासहिष्णुतयोक्तविधभूमत्वप्रतिकूलत्वाच्च । ततश्च पूर्वं भूमोत्तरवाक्यपर्यालोचनया सद्वितीयब्रह्मप्रकरणमेवेदं, अन्यथोपास्योपासनादिविधिनिषेधाऽवेदकतया श्रुतेर्व्याहतभाषित्वेनोन्मत्तप्रलापसमत्वापत्तेः।।

यद्वा 'यत्र' इति सति सप्तमी । तथा च, यत्र= यस्मिन्, इत्य..निरतिशयाऽनन्दरूपे परमात्मनि सति, द्रष्टा, जनः 'नान्यत्'अनित्यं सातिशयं सुखं पश्यति श्रोता वा, नान्यत्, तथाविधं सुखं शृणोति विज्ञाता वा, 'नान्यत्' तथाविधं सुखं विजानाति, स भूमा । यत्र चानित्ये सातिशये चानन्दे सति, अन्यं= निरतिशयं परमात्मस्वरूपसुखमेव,

द्रष्टा,श्रोता,विज्ञाता, वा जनः पश्यति श्रृणोति विजानाति वा, तदल्पमितिश्रुत्यर्थः । लोकेऽपि उत्कटानुत्कटविषययोः सतोः द्रष्ट्रादिजनः अनुत्कटं विषयं तुच्छीकृत्योत्कटमेव विषयं पश्यन् शृण्वन् विजानंश्च तिष्ठतीति, सर्वानुभवसिद्धम् । अतः कथमद्वितीयात्म-प्रकरणमिति ।।

यद्वा 'यत्र'इति विषयसप्तमी । तथा च अन्यत् कर्तृ, यत्र= यत्परमात्म स्वरूपं कर्म चक्षुषा न पश्यति, श्रोत्रेण न शृणोति= विशेषतः साकल्येन न जानाति वा, स भूमा इति श्रुत्यर्थः । तथा च श्रुत्यन्तरं 'नेन्द्रियाणि नानुमानम्' 'न चक्षुषा पश्यति कश्चनैनम्' इत्यादि ।।

।। इति परोदीरित 'यत्राऽन्यत् पश्यती'ति श्रुत्यर्थ खण्डनम् ।।

## ।। अथ 'नान्यत्पश्यती'तिश्रुतेः नवीनोक्तार्थ खण्डनम् ।।

यत्तु 'नान्यत्पश्यति' इत्यादिना प्रमाणनिषेधे यत्पदार्थासिद्धिप्रसङ्गः । कर्तृनिषेधे चात्मैकत्वसिद्धौ मदिष्टसिद्धिरिति नवीनैरुक्तम् । तन्न । 'न पश्यति न शृणोति' इत्यस्य चक्षुःश्रोत्ररूप प्रमाणविशेषगम्यत्वनिषेधकत्वात् 'न विजानाति' इत्यस्यापि 'वि'शब्दमहिम्ना साकल्येन प्रमाणगम्यत्वमात्रनिषेधकत्वेन प्रमाणसामान्यगम्यत्वानिषेधकत्वात् परमात्मनः स्वरूपतो गुणतश्चापरिच्छिन्नत्वेन तद्व्यतिरिक्तैः साकल्येन विशिष्याज्ञेयत्वात् ।

तथा च श्रुतिस्मृतयः ।।

**'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तोऽह्यस्मिन् गुणाः'**
**'अनन्तरूपमनन्तं ब्रह्म'**
**'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'**(भा-६-४-४८)
**'तान्यहं वेद सर्वाणि न त्वं वेत्थ परं तप'**(भ-गी-४-५)

इत्याद्याः । इदमेव स्वरूपतो गुणतश्च साकल्येन विशिष्याज्ञेयत्वेन दुर्विज्ञेयत्वम् । तस्य च विशिष्टे प्रतिपाद्यत्वसम्भवेनापदार्थत्वादित्यादि दूषणमपि प्रत्युक्तम् । मदभिमतब्रह्मणः पामरधीविषयत्वेन दुर्विज्ञेयत्वमसिद्धमिति दूषणमप्यत एव प्रत्युक्तम् । यथाकथञ्चित्

पामरधीविषयत्वेऽप्युक्तदुर्विज्ञेयत्वानपायात् । अन्यथा त्वदभिमतब्रह्मणोऽपि सर्वप्रत्यय-वेद्यतया वेदैकसमधिगम्यत्वाभावप्रसङ्गात् ॥

यदपि ''सा द्वितीयस्य सर्वगतमात्रस्यैतत्प्रतारणार्थत्वे 'यो वै भूमा' इति भूम्नः सुखत्वप्रतिपादनं न ब्रह्ममात्रविषयं स्यात् । कालादेरपि तवमते सर्वगतस्य सत्वात् तस्य सुखरूपतया 'यो वै भूमा तत्सुखम्' इति सामानाधिकरण्यानुपपत्तेश्च'' इति । तदपि न । स्यादेतदेवम् । यदि सद्वितीय-सर्वगत-वस्तुमात्रं 'भूम'शब्दार्थः स्यात् । नत्वेवं किन्तु 'यत्र नान्यत् पश्यति' इत्यादि श्रुत्युक्तनिर्दोषत्वदुर्विज्ञेयत्वादिरूपोत्कर्षवत्ववस्त्वेव । तच्च परमात्मरूपमेव नतु कालाकाशादीति, कथम्? भूम्नः सुखत्वप्रतिपादनं ब्रह्मविषयं,कथञ्च सामानाधिकरण्यानुपपत्तिरिति?

एतेन[१] 'स भगवः कस्मिन् प्रतिष्ठितः'(छां-उ-७-२४-१) इत्यादिनोत्तरत्र भूमब्रह्मणोऽप्यन्यवदधिकरणमस्ति न वा इत्याशङ्क्य 'नाहमेवं ब्रवीमीति स होवाचान्यो ह्यन्यस्मिंन् प्रतिष्ठितः'[२] इत्यादिनाऽकाङ्क्षान्यनिषेधेन तस्यान्यस्थित्वनिषेधात्, सद्वितीयत्वे च भूम्नः तदसम्भवात्, 'विभुत्वादप्रतिष्ठित' इति प्रतिवचनापत्तेश्चेत्यद्वितीयब्रह्मप्रकरणमेवेदमिति प्रत्युक्तम् ॥

भूम्नोऽन्यो हि पदार्थः स्वप्रतिष्ठाविध्यर्थमन्यत् पदार्थमपेक्षते । 'भूमा तु स्वमहिम्न्यैव प्रतिष्ठितः' इत्येवमर्थपरतया तस्य वाक्यस्य सकलप्रमाणविरुद्धतयाऽन्यनिषेधमुखेन तत्प्रतिष्ठितत्वनिषेधपरत्वानुपपत्तेः । नचैवं योजनायाम् अन्यप्रतिष्ठितत्वनिषेधे हेत्वलाभः इति वाच्यम् । अस्य परमाप्तसनत्कुमारोपदेशतया हेतुं विनाऽपि शब्दविधयैव बोधकत्वात् । **'अन्यो ह्यन्यस्मिन् प्रतिष्ठितः'** इति वाक्यस्य **'यो यो भूमाऽन्यः सोऽन्यस्मिन् प्रतिष्ठितः'** इति व्यतिरेकव्याप्तिप्रदर्शनपरताया भूमत्वस्यैव व्यतिरेक-हेतुत्वाच्च । तस्मात् न अद्वितीयब्रह्मप्रकरणमिदम् ॥

---

(१) 'स भगवन्यदिकस्मिन् प्रतिष्ठित' इति तालपत्रस्थ पाठः ॥

(२) 'ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठितः' इति इदानीन्तनपाठः ॥

नचात्र सार्वात्म्यं प्रतिपिपादयिषितम् । नाप्ययम् अहङ्कारादेशो अहमर्थस्यादेशः । किन्तु परमात्मरूपविशेषस्याहङ्कारशब्दवाच्यत्वेन स्मृत्युक्तत्वाविरुद्धस्यैवाऽयमादेश इति ॥

॥ इति 'नान्यत्पश्यती'तिश्रुतेः नवीनोक्तार्थखण्डनम् ॥

किञ्च न तावदात्मनः पृथगुपदेशमात्रादहमर्थाद्भेदसिद्धिः, उभयोर्भिन्नत्वे सार्वात्म्यायोगात्, अहमर्थस्यानात्मत्वे जडत्वापत्तेः, पृथगुपदेशाविशेषेण भूमाऽत्मनोरपि भेदसिद्धिप्रसङ्गाच्च ॥

ननु भूमात्मनोर्भेदः प्रत्यक्षादिसिद्ध इति तयोः पृथगुपदेशोऽभेदार्थः अहमात्मनो स भेदः एव प्रत्यक्षादिसिद्ध इति तयोः पृथगुपदेशोऽभेदार्थ इति चेत् । अहमर्थव्यतिरेकेणात्मनःप्रत्यक्षादितो भूमभिन्नत्वासिद्धेः, प्रत्युताहमर्थ एव भूमभिन्नत्वेन प्रत्यक्षादिसिद्ध इति, तस्यैव पृथगुपदेशेन भूमाभेदप्रसङ्गात् ॥

किञ्च अहमर्थस्यात्मभिन्नत्वे तस्य परिच्छिन्नत्वेन सार्वात्म्योपदेशो न स्यात् । भिन्नयोः सार्वात्म्यानुपपत्तिप्रसङ्गाच्च । नच 'स्थूलारुन्धतीन्यायेन' परोक्षस्य भूमात्मनो परोक्षत्वसिद्ध्यर्थं प्रत्यगभेदसिद्ध्यर्थं वा, अपरोक्षाहमर्थस्य परिच्छिन्नत्वेऽपि सार्वात्म्योपदेश इति वाच्यम् । तत्र स्थूलनक्षत्रापेक्षया भिन्नस्यातिसूक्ष्मस्योपदेष्टव्यस्यारुन्धतीनक्षत्रस्य सत्वेन सुखप्रतिपत्त्यर्थं प्रथमं स्थूलनक्षत्रस्यारुन्धतीत्वेनोपदेशो युक्तः। प्रकृते त्वहमर्थापेक्षया भिन्नस्य प्रतीचः सद्भावे प्रत्यग् भूमैक्यस्योपदेष्टव्यत्वे च मानाभावेन तन्न्यायाऽनवतारात् । नहि भूम्नः प्रत्यगैक्यज्ञानं शोकतरणसाधनमित्यत्र मानमस्ति । येन भूम्नः प्रत्यगैक्यं शोकतितीर्षुं नारदं प्रति सनत्कुमारेणोपदेष्टव्यं स्यात् । नचाहमर्थस्य सुषुप्तौ प्रत्यगात्मनि भासमानेऽप्यभासमानत्वमेव प्रत्यगात्मनि भिन्नत्वे मानमिति वाच्यम् । असिद्धेः । प्रत्यगात्मन एवाहमर्थत्वेन तद्भानस्यैव तद्भानत्वात् । नचैवं सुषुप्तावहमुल्लेखापत्तिः । अहम् इति प्रतीत्यापादनस्येष्टत्वात् । वागादिकरणानां तदानीमुपरतत्वेनैव 'अहमि'ति शब्दाभिलापस्यासम्भवात् । सुप्तोत्थितस्याहमर्थ स्मरणापादनस्येष्टत्वात् । प्रत्युत 'एतावन्तं कालं सुखमहमस्वाप्सम्' इति सुप्तोत्थितस्य अहमर्थगोचरस्मरणदर्शनेन तेनैवलिङ्गेन सुप्तौ स्वानुभववदहमर्थानुभवस्याप्यनुमानत्वात् । नच सुप्तोत्थितस्योक्त परामर्शः नाहमर्थांशे स्मृतिरूपः, किन्तु तदैवाध्यस्ताऽङ्कारगोचरसाक्ष्यनुभवरूप(गोचरस्यस्यहि अनुभवरूप-पा) इति वाच्यम् ।

तस्य तथाऽत्वे प्रमाणाभावात्, अन्यथाऽन्योन्याश्रयात्। एतत्कल्पनायाःअहमर्थे इदमनिदमात्मकत्वसिद्ध्यधीनत्वात् ॥

किञ्चाहङ्कारस्य सुप्तोत्थितसमसमयमेवाध्यस्तत्वे प्रतिसुप्तितदुपहिताहमर्थस्य भिन्नभिन्नत्वेन 'योऽहं पूर्वेद्युः सुखमनुभवं स एवाहमद्य सुखमनुभवामि' इति प्रत्यभिज्ञाऽनुपपत्तिः। ततश्चाहमर्थो न प्रत्यगात्मातिरिक्तः। नचेयं प्रत्यभिज्ञा, 'सेऽयं दीप ज्वाला' 'तानेव शालीन् भुञ्जते' इत्यादिप्रत्यभिज्ञावत् जात्यभेदविषया नतु व्यक्त्यभेदविषयेति वाच्यम्। प्रतिसुप्त्यहमर्थस्य भिन्नभिन्नत्वे तदनुसन्धातुरपि तदतिरिक्तत्वे मानाभावात्। अहमर्थरूपत्वेन भिन्नभिन्नतया प्रत्यभिज्ञातुरद्यतनाहमर्थस्य तदनुसन्धातुस्तच्छब्दार्थभूतपूर्वेद्युस्तनाहमर्थभूत तदनुसन्धातृभिन्नत्वेन देवदत्तमात्रानुभूतविषये यज्ञदत्तस्येव तादृशप्रत्यभिज्ञाया एवायोगात्। बाधकं विना औत्सर्गिकव्यक्तिभेदविषयत्वापरित्यागाच्च। अन्यथा स्थायिपदार्थासिद्धिप्रसङ्गात्। नच दीपज्वालादाविव प्रकृते अहमर्थभेदः प्रत्यक्षः। येनाहमर्थप्रत्यभिज्ञायास्तस्मिन् सत्यपि जायमानतया तद्विरुद्धव्यक्त्यभेदविषयकत्वासम्भवेन दीपज्वालादिप्रत्यभिज्ञाया इव तज्जात्यभेदविषयत्वमाश्रीयेत ॥

नचेयं प्रत्यभिज्ञा व्यक्तिभेदविषयिणी भूमरूपैवास्यतामिति वाच्यम्। बोधकाभावात्, भेदग्राहकप्रमाणाभावात्....अहमर्थस्य सुप्तौ लयःप्रतिपादक श्रुतेरभावात्, भावे वा तस्याः सुखदुःखादिरूपविक्षेपाभावमात्रपरत्वात्। अन्यथा कृतहानादिप्रसङ्गात्। प्राज्ञेनात्मना अहमर्थभूतस्य जीवस्य परिष्वङ्गप्रतिपादकश्रुत्यन्तर विरोधापत्तेः। 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इति श्रुत्या तस्य साक्षाल्लयाभाव प्रतिपादनाच्च ॥

### ॥ अथ प्रसङ्गात् 'कार्योपाधिरयं जीवे'ति श्रुत्यर्थनिरूपणम् ॥

'कार्योपाधिरयं जीवः' इत्यस्याः श्रुतेरन्यपरत्वस्योक्तत्वात्। कार्यं= प्रयोजनम् उपाधिर्यस्य स तथोक्तः। प्रयोजनाभिसन्ध्यधीनप्रवृत्तिक इति यावत्। कारणं= जीवाऽदृष्टादिवियदादिकार्यजनने स्वप्रवृत्तिसहकारि यस्य स तथोक्तः। वियदादिकार्यानुगुणतत्तज्जीवादृष्टादि सहकारिविशेषाभिसन्धिनियतप्रवृत्तिक इति यावत्। 'उपाधि'शब्दस्य लाभात्, 'उपाधिना कृतम्' इत्यादौ नानार्थत्वदर्शनात् कार्यानुगुणं कारणमदृष्टादि यस्य स तथा, तस्य भावः,

'कार्यकारणतां हित्वा' कार्योन्मुखादृष्टविशेषरूपसहकार्यसमवहितःप्रलयकाले पूर्णबोधमात्रत्वेन वर्तत इत्यप्यन्यार्थपरत्वसम्भवाच्च ॥

॥ इति प्रसङ्गात् कार्योपाधिरयं जीवेति श्रुत्यर्थनिरूपणम् ॥

## ॥ अथ 'स्वं ह्यपीतो भवती'ति श्रुत्यर्थविवरणम् ॥

'स्वं ह्यपीतो भवति' इति श्रुतेरपि पूर्वश्रुतेर्लयार्थकत्वेऽपि 'स्वम्'इति द्वितीयाऽनुपपत्त्या 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति प्राप्तिविशेषरूपपरमात्मपरिष्वङ्गप्रतिपादनपरश्रुत्यन्यथानुपपत्त्या च, स्वम्= परमात्मानम्, अपीतः ॥

अथवा 'स्वमपि इत' इति पदविभागः, प्राप्तो भवतीत्यन्यार्थपरत्वाच्च । 'व्यत्ययो बहुलम्' (पा-सू-३-१-८५) इत्यादिस्मरणात् सप्तमीस्थाने द्वितीयामाश्रित्य 'अपीत'शब्दस्य प्रकृत एव लयार्थपरत्वेऽपि तस्य कार्याभिसन्धिरूपविशेषणलयमादाय विशिष्टलयप्रतिपादकत्वोपपत्तेश्च । अन्यथाऽहमर्थस्य जीवात्मनः सर्वथालये सुप्तौ परिष्वङ्गात् बाह्यान्तरविषयकमज्ञानं तज्ज्ञानाभावो वा श्रुत्युक्तः कस्य स्यात्? 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' (बृ-उ-४-४-१२) इत्यादिजीवोत्पत्तिविनाशप्रतिपादकश्रुत्यन्तरस्यापि 'अविनाशी वा अरेऽयमात्मा अनुच्छित्तिःधर्मा' (बृ-उ-६-५-१३) इति मध्ये स्वरूपतः स्वाभाविकधर्मतश्चाविनाशमुक्त्वा तद्युपक्रमावगतोत्पादविनाशयोः का गतिरिति शङ्कायां तन्निरासाय 'न प्रेत्य संज्ञाऽस्ति' (बृ-उ-४-४-१३) मात्रासंसर्गस्तस्य भवति । 'मीयन्त इति मात्राः, विषयस्ताभिरसंसर्गो भवती'ति पूर्वोत्तरवाक्याभ्यां संज्ञारूपप्रवृत्तिविषय संसर्गव्यतिरेकप्रतिपादनात् तद्विशिष्टोत्पत्तिविनाशप्रतिपादनपरत्वेन सौषुप्तिकनित्यनिर्दोषसाक्षिस्वरूपानुभवसिद्धाऽनिदमर्थभूताऽहमर्थजीवोत्पत्तिमपि(जीवात्मोत्पत्ति-पा) विनाशपरत्वानुपपत्तेश्च । तस्मादहमर्थप्रत्यभिज्ञानं न भ्रमः कथमपि ॥

किञ्चौत्तरिकस्मृतिविषयत्वाविशेषेऽप्यहमर्थस्येव तत्स्मृतिविषयकालसुखाज्ञानस्वापकालैतावत्स्वापातीतत्वादेरपि[१] सुप्तोत्थितकाले एवाध्यास इति किन्न स्यात् । विशेषहेत्वभावात् ॥

(१) कालैतावत्वस्वापातीतत्वादेरपि इति ताळपत्रस्थपाठः ।

अपि च 'तरति शोकमात्मवित्' इत्यात्मवेदनस्य शोकतरणहेतुत्वमुक्त्वा आत्मवेदनार्थं उपसन्नं नारदं प्रति सनत्कुमारेण तस्मिन्नेव निरूपणीये भूमनिरूपणमसङ्गतमिति शङ्कायां तन्निरासाय भूमात्मनोरभेदनिरूपणमात्रं क्रियत इति तावदावयोः समम् । 'आत्म'शब्दस्य परमात्मैव मुख्योऽर्थः इति 'द्युभ्वाधिकरणे'(ब्र-सू-१-३-१) निर्णीतम् इत्यपि । तस्य परमात्मनोऽरुन्धतीवत् बहुप्रणिधानं विना दुर्विज्ञेयत्वमित्यपि च । एवञ्च स्थूलारुन्धत्योरिवाहङ्कारापरपर्यायाहमर्थभूतजीवपरमात्मनोरनौपाधिकाऽत्यन्तभेद एव स्थूलारुन्धतीन्याय इति किन्न स्यात् । अन्तर्यामित्वेन परमात्मनोऽहमर्थसन्निहितत्वादहङ्कारसार्वात्म्योपदेशस्यैवमप्युपपत्तेः ॥

अपि चाहङ्कारोपदेशस्य स्थूलारुन्धतीन्यायेनात्मस्वरूपस्य प्रत्ययन(प्रत्यायन-पा)परत्वे तदन्यथाऽनुपपत्त्या अहङ्कारस्य वस्तुनस्ततो भेद एव सिद्ध्यति, तेन विना तन्न्यायस्यैवानवतारात्, तच्च भूमात्मसार्वात्म्योपदेशप्रतिकूलमेव । अतो त्वद्रीत्या भूमात्मनोरत्र सर्वगतत्वमेव प्रतिपाद्यत इत्येव वाच्यम् । तच्च भूमात्माङ्काराणां वास्तवभेदेऽप्यविरुद्धम् ॥

नच सर्वगतत्वं भूमाकाशदावतिप्रसक्तं फलाभावादेव न प्रतिपाद्यं, विभुमात्रसाधारणमिदं 'यो वै भूमा तत्सुखम्'(छां-उ-७-२३-१) इति सामानाधिकरण्यप्रतिकूलं च सर्वगतमात्रस्य सुखरूपत्वादिति वाच्यम् । सर्वगतत्वेनाऽपि परमात्मनो ज्ञानस्य शोकतरणहेतुत्वेन सफलत्वात् 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुत्या आकाशसाधारण्येन परमात्मनः सर्वगतत्वाभिधानात्, 'यत्र नान्यत् पश्यति'(छां-उ-७-२४-१) इत्यादिलक्षणलक्षितस्यैव भूम्नस्तच्छब्देन परामर्शेन 'तत् सुखम्' इति सामानाधिरण्याविरोधात् । नहि सर्वगतत्वमात्रं भूमलक्षणमुक्तम् । येनाकाशदावतिप्रसक्तिः उक्तसामानाधिकरण्यानुपपत्तिश्च स्यात् । अपि चैवमप्यात्माहङ्कारयोर्द्वयोरेव सार्वात्म्यमुपदेष्टव्यम् । तावतैव स्थूलारुन्धतीन्यायावतारोपपत्तेः । ननु भूमात्मनोऽप्यात्मसार्वात्म्योपदेशेनैवात्मनो भूमा भेदसिद्धेः । नहि भूमा न सर्वशब्दार्थः ॥

किञ्च त्रयाणामन्यतमसार्वात्म्योपदेशेनैव त्वदभिमतनिर्विशेषवस्तुज्ञानसिद्धेरितरेतरसार्वात्म्योपदेशवैयर्थ्यम् । नचैवं सविशेषे सर्वात्मकत्वोपदेशेन निर्विशेषवस्तुसिद्धिः कथमिति

वाच्यम् । त्रयाणां तथोपदेशेऽप्यस्य समानत्वात् । बाधायां सामानाधिकरण्येन तत्सिद्ध्यभ्युपगमेऽन्यतमसार्वात्म्योपदेशेनैव तत्सिद्धेश्च । नच भूमात्मनो स्वरूपेणैक्यसिद्धिद्वारा भेदादद्ध्यास निरासः, निरासाय तथा पृथगुपदेश इति वाच्यम् । तदैक्यस्यापि भूमसार्वात्म्योपदेशत एव सर्वसिद्धेरात्मनोऽपि सर्वशब्दार्थत्वात् । अन्यथा विशेषहेत्वभावेन पृथग्भूमादित्रितयसार्वात्म्योपदेशे विनाऽपि तदसिद्धिप्रसङ्गात् । 'स एवेदं सर्वम्' इत्युपदेशेन सार्वात्म्यासिद्धौ भिन्नयोः सार्वात्म्यानुपपत्त्यापि तदैक्यासिद्धिप्रसङ्गाच्च । नच एकस्यैव सार्वात्म्योपदेशे, जडस्यैवात्मनोऽपि बाधायां सामानाधिकरण्यरूपभेदैक्यसिद्धिप्रसक्तौ, तन्निरासाय स्वरूपेण तदैक्यसिद्धये च भूमात्मनोर्द्वयोरिति सार्वात्म्योपदेशोऽत्रेति विशेषहेत्वभावोऽसिद्ध इति वाच्यम् । 'तत्त्वमसि' इत्यादिवत् 'स एवेदं सर्वम्' इत्यभेदेनैव सामानाधिकरण्यसम्भवे तत्परित्यागे कारणाभावात्, प्रत्यक्षादिप्रमाणविरोधात्, तत्त्यागेन बाधायां सामानाधिकरण्याभ्युपगमे भूमप्रत्यगात्म्यैक्यस्यापि प्रत्यक्षादिप्रमाणविरुद्धतया भूमात्मनोर्द्वयोः सार्वात्म्योपदेशे प्रसिद्धेः भूमप्रत्यगात्मनोः श्रुतसार्वात्म्यान्यथानुपपत्तेः प्रबलतया प्रत्यक्षाद्युपमर्दनेन स्वरूपतो वास्तवैक्यसिद्धौ 'स एवेदं सर्वम्' इति श्रुतेरिति (श्रुतेरपि-पा) प्रबलतया प्रत्यक्षाद्युपमर्दनेन भूम्नः स्वरूपतो वास्तवसर्वाभेदसिद्धिप्रसङ्गात् । वस्तुत्वेनेव चेतनत्वेन साजात्यस्याप्यकिञ्चित्करत्वात् अनभ्युपगमे च भूम्नः सुखात्मकत्ववत् दुःखात्मकत्वस्याप्यवर्जनीयतया निरुपाधीष्टत्ववन्निरुपाधिद्विष्टत्वास्याप्यापत्तेः । भूताकाशादेरपि परब्रह्मात्मकत्वेनाकाशादिशब्दानां भूताकाशादिपरत्वनिरसनेन ब्रह्मणि समन्वयानुक्तिप्रसङ्गाच्च ॥

अपि च भूमात्मनोः पृथक् सार्वात्म्योपदेशेनापि न पराभिमतैक्यसिद्धिः । 'स एवेदं सर्वम्' 'आत्मैवेदं सर्वम्' इति वाक्यद्वयेऽपि परेण बाधायां सामानाधिकरण्याभ्युपगमेन सर्वस्यैव भूमात्मनोरपि बाधापत्त्या बाह्याभिमतशून्यवादस्यैव सिद्ध्यापत्तेः ॥

एतेन प्रत्यगात्मा-अहंप्रत्ययविषयः कर्ता-भोक्तेति लौकिकैः निश्चीयतेति, तत्रैव परमात्मशब्दात् बुद्धिः स्यात्, तस्य च कर्तृत्वादिविशिष्टस्य संसारिणोऽहमर्थस्य प्रकृतभूमात्म्यैक्यश्रुतिर्नावगमयितुं शक्नोति विरुद्धत्वात् । शक्नोति, त्वहंप्रथमपदार्थं पृथग्निर्दिश्य

अपि च 'तरति शोकमात्मवित्' इत्यात्मवेदनस्य शोकतरणहेतुत्वमुक्त्वा आत्मवेदनार्थं उपसन्नं नारदं प्रति सनत्कुमारेण तस्मिन्नेव निरूपणीये भूमनिरूपणमसङ्गतमिति शङ्कायां तन्निरासाय भूमात्मनोरभेदनिरूपणमात्रं क्रियत इति तावदावयोः समम् । 'आत्म'शब्दस्य परमात्मैव मुख्योऽर्थः इति 'द्युभ्वाधिकरणे'(ब्र-सू-१-३-१) निर्णीतम् इत्यपि । तस्य परमात्मनोऽरुन्धतीवत् बहुप्रणिधानं विना दुर्विज्ञेयत्वमित्यपि च । एवञ्च स्थूलारुन्धत्योरिवाहङ्कारापरपर्यायाहमर्थभूतजीवपरमात्मनोरनौपाधिकाऽत्यन्तभेद एव स्थूलारुन्धतीन्याय इति किन्न स्यात् । अन्तर्यामित्वेन परमात्मनोऽहमर्थसन्निहितत्वादहङ्कारसार्वात्म्योपदेशस्यैवमप्युपपत्तेः ॥

अपि चाहङ्कारोपदेशस्य स्थूलारुन्धतीन्यायेनात्मस्वरूपस्य प्रत्ययन(प्रत्यायन-पा)परत्वे तदन्यथाऽनुपपत्त्या अहङ्कारस्य वस्तुनस्ततो भेद एव सिद्ध्यति, तेन विना तन्न्यायस्यैवानवतारात्, तच्च भूमात्मसार्वात्म्योपदेशप्रतिकूलमेव । अतो त्वद्रीत्या भूमात्मनोरत्र सर्वगतत्वमेव प्रतिपाद्यत इत्येव वाच्यम् । तच्च भूमात्माङ्काराणां वास्तवभेदेऽप्यविरुद्धम् ॥

नच सर्वगतत्वं भूमाकाशदावतिप्रसक्तं फलाभावादेव न प्रतिपाद्यं, विभुमात्रसाधारणमिदं 'यो वै भूमा तत्सुखम्'(छां-उ-७-२३-१) इति सामानाधिकरण्यप्रतिकूलं च सर्वगतमात्रस्य सुखरूपत्वादिति वाच्यम् । सर्वगतत्वेनाऽपि परमात्मनो ज्ञानस्य शोकतरणहेतुत्वेन सफलत्वात् 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुत्या आकाशसाधारण्येन परमात्मनः सर्वगतत्वाभिधानात्, 'यत्र नान्यत् पश्यति'(छां-उ-७-२४-१) इत्यादिलक्षणलक्षितस्यैव भूम्नस्तच्छब्देन परामर्शेन 'तत् सुखम्' इति सामानाधिरण्याविरोधात् । नहि सर्वगतत्वमात्रं भूमलक्षणमुक्तम् । येनाकाशदावतिप्रसक्तिः उक्तसामानाधिकरण्यानुपपत्तिश्च स्यात् । अपि चैवमप्यात्माहङ्कारयोर्द्वयोरेव सार्वात्म्यमुपदेष्टव्यम् । तावतैव स्थूलारुन्धतीन्यायावतारोपपत्तेः । ननु भूमात्मनोऽप्यात्मसार्वात्म्योपदेशेनैवात्मनो भूमा भेदसिद्धेः । नहि भूमा न सर्वशब्दार्थः ॥

किञ्च त्रयाणामन्यतमसार्वात्म्योपदेशेनैव त्वदभिमतनिर्विशेषवस्तुज्ञानसिद्धेरितरेतरसार्वात्म्योपदेशवैयर्थ्यम् । नचैवं सविशेषे सर्वात्मकत्वोपदेशेन निर्विशेषवस्तुसिद्धिः कथमिति

वाच्यम् । त्रयाणां तथोपदेशेऽप्यस्य समानत्वात् । बाधायां सामानाधिकरण्येन तत्सिद्ध्यभ्युपगमेऽन्यतमसार्वात्म्योपदेशेनैव तत्सिद्धेश्च । नच भूमात्मनो स्वरूपेणैक्यसिद्धिद्वारा भेदादद्ध्यास निरासः, निरासाय तथा पृथगुपदेश इति वाच्यम् । तदैक्यस्यापि भूमसार्वात्म्योपदेशत एव सर्वसिद्धेरात्मनोऽपि सर्वशब्दार्थत्वात् । अन्यथा विशेषहेत्वभावेन पृथग्भूमादित्रितयसार्वात्म्योपदेशे विनाऽपि तदसिद्धिप्रसङ्गात् । 'स एवेदं सर्वम्' इत्युपदेशेन सार्वात्म्यासिद्धौ भिन्नयोः सार्वात्म्यानुपपत्त्यापि तदैक्यासिद्धिप्रसङ्गाच्च । नच एकस्यैव सार्वात्म्योपदेशे, जडस्यैवात्मनोऽपि बाधायां सामानाधिकरण्यरूपभेदैक्यसिद्धिप्रसक्तौ, तन्निरासाय स्वरूपेण तदैक्यसिद्धये च भूमात्मनोर्द्वयोरिति सार्वात्म्योपदेशोऽत्रेति विशेषहेत्वभावोऽसिद्ध इति वाच्यम् । 'तत्त्वमसि' इत्यादिवत् 'स एवेदं सर्वम्' इत्यभेदेनैव सामानाधिकरण्यसम्भवे तत्परित्यागे कारणाभावात्, प्रत्यक्षादिप्रमाणविरोधात्, तत्त्यागेन बाधायां सामानाधिकरण्याभ्युपगमे भूमप्रत्यगात्म्यैक्यस्यापि प्रत्यक्षादिप्रमाणविरुद्धतया भूमात्मनोर्द्वयोः सार्वात्म्योपदेशे प्रसिद्धेः भूमप्रत्यगात्मनोः श्रुतसार्वात्म्यान्यथानुपपत्तेः प्रबलतया प्रत्यक्षाद्युपमर्दनेन स्वरूपतो वास्तवैक्यसिद्धौ 'स एवेदं सर्वम्' इति श्रुतेरिति (श्रुतेरपि-पा) प्रबलतया प्रत्यक्षाद्युपमर्दनेन भूम्नः स्वरूपतो वास्तवसर्वाभेदसिद्धिप्रसङ्गात् । वस्तुत्वेनेव चेतनत्वेन साजात्यस्याप्यकिञ्चित्करत्वात् अनभ्युपगमे च भूम्नः सुखात्मकत्ववत् दुःखात्मकत्वस्याप्यवर्जनीयतया निरुपाधीष्टत्ववन्निरुपाधिद्विष्टत्वास्याप्यापत्तेः । भूताकाशादेरपि परब्रह्मात्मकत्वेनाकाशादिशब्दानां भूताकाशादिपरत्वनिरसनेन ब्रह्मणि समन्वयानुक्तिप्रसङ्गाच्च ॥

अपि च भूमात्मनोः पृथक् सार्वात्म्योपदेशेनापि न पराभिमतैक्यसिद्धिः । 'स एवेदं सर्वम्' 'आत्मैवेदं सर्वम्' इति वाक्यद्वयेऽपि परेण बाधायां सामानाधिकरण्याभ्युपगमेन सर्वस्यैव भूमात्मनोरपि बाधापत्त्या बाह्याभिमतशून्यवादस्यैव सिद्ध्यापत्तेः ॥

एतेन प्रत्यगात्मा-अहंप्रत्ययविषयः कर्ता-भोक्तेति लौकिकैः निश्चीयतेति, तत्रैव परमात्मशब्दात् बुद्धिः स्यात्, तस्य च कर्तृत्वादिविशिष्टस्य संसारिणोऽहमर्थस्य प्रकृतभूमात्म्यैक्यश्रुतिर्नावगमयितुं शक्नोति विरुद्धत्वात् । शक्नोति, त्वहंप्रथमपदार्थं पृथग्निर्दिश्य

ततोऽन्य एव प्रत्यगात्मेति प्रतिपादिते प्रत्यगात्मनो भूमैक्यं प्रतिपादयितुमित्यहमर्थात् संसारिणः प्रत्यगात्मनोऽभेदसिद्धये ब्रह्माहमात्मानं(प्रथममहमात्मानं-पा) संसारिणं निर्दिशतीति नवीनोक्तं निरस्तम् ।।

अत्र प्रत्यग्भूमैक्यस्य प्रतिपिपादयिषितत्वे मानाभावात्, पृथगात्मसार्वात्म्योपदेशेन प्रत्यगर्थभूतात्मसार्वात्म्यविरुद्धतयाऽहमर्थात् प्रत्यगात्मनो भेदसिद्धेश्च । श्रुतेः प्रत्यक्षाद्यपेक्षया प्रबलत्वेन प्रपञ्चनिषेधश्रुतिवत् तदुपमर्दनेनाहमर्थस्य संसारिण एव भूमैक्यबोधने शक्ततया अहमर्थभिन्नत्वेन प्रत्यगात्मबोधनवैयर्थ्यात् । अहमर्थभेदस्यापदार्थत्वादवाक्यार्थत्वाच्च । पृथगात्मसार्वात्म्योपदेशस्य विरुद्धतयाऽहमर्थादात्मनोऽभेदानाक्षेपकत्वाच्च । प्रत्यग्भूमैक्यस्य स्वप्रकाशात्ममात्रत्वेन स्वतःसिद्धतया तत्सिद्ध्यर्थमुक्तविधोपदेशवैयर्थ्यात् । तस्यावृतत्वे चाज्ञानादिसर्वसाक्षिकचैतन्यस्यैवावृततया जगदान्ध्यप्रसङ्गाच्च ।।

नन्वात्मनः पृथक्सार्वात्म्योपदेश एव प्रत्यग्भूमैक्यस्यात्र प्रतिपिपादयिषितत्वे मानम् । परस्परभिन्नयोर्द्वयोः सार्वात्म्यायोगादिति चेन्न । 'तरति शोकमात्मवित्' इति शोकतरणहेतु-ज्ञानविषयतयोपक्रान्तपरमात्मा जिज्ञासुं नारदं प्रति सनत्कुमारस्य भूमस्वरूपोपदेशो व्यधिकरण इति शङ्का परिहाराय, भूम्नः परमात्माभेद एवोपदेष्टव्यः । तेन स चाभेदः आत्मशब्दस्य पामरैरहमर्थ एव, संसारिणि सङ्गतिग्रहात्तस्यैव प्रथममात्मशब्दात् प्रतीतया प्रथमम् आत्मसार्वात्म्योपदेशेन न सिद्ध्येत् । किन्तु प्रत्यग्भूमाभेद एव सिद्ध्येत् । तथा चाहमर्थात्संसारिणः सकाशात्परमात्मनो भेदसिद्धिं विना भूम्नः परमात्मनाऽभेदसिद्ध्य-सम्भवात्तदर्थमेव प्रथममहमर्थस्य संसारिणः सार्वात्म्यमुपदिश्य, ततोऽन्य एव परमात्मेति सूचयितुमेवायमात्मसार्वात्म्योपदेशः परमत्मान एवेत्यपि सम्भवेन आत्मसार्वात्म्योपदेशस्य तत्र मानत्वात् ।।

।। इति 'स्वं ह्यपीतो भवती'ति श्रुत्यर्थविवरणम् ।।

## ।। अथ 'अथातोऽहङ्कारादेशः' इति श्रुतेः नवीनोक्तार्थखण्डनम् ।।

यदपि च 'अथातोऽहङ्कारादेशः' इत्यत्र 'अहङ्कार'शब्दो अहमिति कृतिः= करणं, यस्मिन् इत्यवयववृत्त्याऽन्तःकरणावच्छिन्नचैतन्यमभिसन्धत्ते समुदायशक्तेर्लोके क्वचिदप्य-

क्लृप्तत्वात् स्मार्तप्रसिद्धेश्च पौरुषेयतयाऽपौरुषेयवेदाव्यवस्थापकत्वात् । तथात्वे वा 'शोक-हर्षभयक्रोधलोभमोहस्पृहादयः । अहङ्कारस्य दृश्यन्ते'[(१)] इत्यादिस्मृतावन्तःकरणावच्छिन्न-जीवे एव तत्प्रयोगात् शोकादेः कृतेश्च केवलजडधर्मधर्मत्वानुपपत्तेरित्युभयथाऽप्यन्तः-करणावच्छिन्नचैतन्यमेवाहङ्कारपदार्थः प्रकृते ग्राह्यः । तथा चोपाधिपरिच्छेदात् परिच्छिन्ने च तस्मिन् सर्वगतसर्वात्मब्रह्माभेदप्रतीतिर्न भवतीति, दहरपुण्डरीकवेष्टितस्य परमात्मनो 'यावा-न्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' (छा-उ-८-१-३) इत्युपाधिकृतार्थत्वनिवृत्ति-पराकाशोपदेशवदसमर्थस्याप्युपाधिकृतपरिच्छिन्नत्वनिवृत्त्या वास्तवसर्वात्मत्वादिपराश्रुतिर्न विरुध्यत इति नवीनोक्तम् । तदपि न ।

यतो 'अहम्'इति कृतेरहंशब्दप्रयोगरूपाया, अहमाकारज्ञानरूपाया वा, अनिदं चैतन्य-मेव विषयः लाघवादावश्यकत्वाच्च । नत्वन्तःकरणावच्छिन्नचैतन्यः गौरवान्मानाभावाच्च । ततश्च 'अहङ्कार' शब्दो न योगवृत्त्याऽन्तःकरणावच्छिन्नचैतन्यवाची,'अहङ्कार'शब्दस्य गर्वादौ रूढत्वेन तस्य क्वचिदपि समुदायशक्तिरक्लृप्तेत्ययुक्तम् । व्याकरण-स्मृति-कोशादेः पौरुषेयत्वेऽप्यपौरुषेयवेदरूपवाक्यार्थनिर्णयोपयुक्तपदार्थनिर्णायकतया स्मार्तप्रसिद्धेः स्मार्त-तादृशवेदार्थव्यवस्थापकत्वमित्यप्ययुक्तम् । 'अहं शोचामि' 'हृष्यामि' 'बिभेमि' इत्याद्य-नुभवबलेन 'एतत्सर्वं मन एव' (बृ-उ-३.६.९) इति श्रुत्युक्तमनोमात्रपरिमाणभूतशोका-दीनाम् अन्यपरिमाणभूतदण्डादीनां देवदत्तादिधर्मत्ववदनिदं चैतन्यधर्मत्वसम्भवेन, अन्तःकरणावच्छिन्नचैतन्यधर्मत्वे मानाभावेन, 'शोकहर्ष'इत्यादिस्मृतिबलेनाऽप्यङ्कारशब्द-स्तदवच्छिन्ने चैतन्ये रूढ इत्यप्यसिद्धम् । अन्तःकरणावच्छिन्नचैतन्यस्यैव अहंकारशब्दार्थ-स्योपाधिकृतपरिच्छेदनिवृत्त्या वास्तवसर्वात्मत्वपरा श्रुतिर्नविरुध्यत इत्यप्ययुक्तम् ॥

त्वन्मते उपहितानुपहितयोरत्यन्तभिन्नत्वेनानुपहितात्म सार्वात्म्योपदेशेन उपहितात्म-गतपरिच्छेदनिवृत्तेर्बाधयितुमशक्यत्वात्, उपहितस्य च उपाधिपरिच्छेदात् परिच्छिन्नस्य-तद्भेदात् भिन्नस्य तदुत्पत्तिनिवृत्तिभ्यां उत्पत्तिनिवृत्तिमतश्च सर्वात्मकत्वासम्भवात् । उपहितस्य सर्वगतसर्वात्मकब्रह्मभेद-तत्प्रतीत्योरसम्भवेन तदर्थतयोपहितगतपरिच्छेदाद्य-

(१) 'जन्ममृत्यू च नात्मनः' इति पूर्णपाठः ॥

भावबोधनायोगात् । अनुपहितात्मस्वरूपस्य च तादृशब्रह्माभेदयोग्योपहिता(योग्यस्योपहिता-पा)दत्यन्तभिन्नत्वेन तत्कृतपरिच्छेदादेः स्वत एव निवृत्त्यनिवृत्तत्वात् ॥

ननूपहितस्य न ब्रह्माभेदात् तत् प्रमितं वा ब्रूमः । नापि तदर्थं तत्परिच्छेदाद्यभावबोधनम् । येन तदयोगः स्यात् । किन्तूपहितात्परिच्छेदादिमतः ब्रह्माभेदायोग्यादन्य एव प्रत्यगात्मापरिच्छेदादिरहितः, ब्रह्माभेदयोग्योऽस्तीत्यहङ्कारशब्दार्थात्पृथगात्मनः सार्वात्म्योपदेशेन बोध्यत इति ब्रूम इति चेन्न । एतादृशार्थस्यापदार्थतयाऽवाक्यार्थतया च तेन बोधयितुमशक्यत्वात् । 'आत्म'शब्दार्थस्य पृथगुपदेशमात्रेणाहङ्कारादन्यत्वे भूम्नः सकाशादप्यात्मनोऽन्यत्वप्रसङ्गात् । एकस्य पृथगुपदेशो व्यर्थ इत्यन्यथानुपपत्तेः । भूमसाधारणत्वात् प्रकारिणः एकत्वेऽपि प्रकारभेदेन तज्ज्ञानार्थं पृथगुपदेशस्यान्यथैवोपपत्तेश्च । तादृशात्मपरत्वकल्पनायोगात् लक्षणाया अपि वृत्तिविशेषत्वेन स्वज्ञानार्थं स्वविषयज्ञानस्वापेक्षत्वेन स्वविषयस्य केनाऽप्यनुपहितत्वे निर्विशेषस्य तस्य मानान्तर(ा)गोचरत्वेन कल्पयितुमशक्यत्वात् । चैतन्यस्य स्वप्रकाशत्वेऽपि संसारदशायामज्ञानादिप्रपञ्चोपहितत्वेनैव, मुक्तिदशायां तन्निवृत्त्युपहितत्वेनैव च भाननियमेनानुपहितात्मस्वरूपस्य कदाऽप्यनुपस्थितेः ॥

॥ इति अथातोऽहङ्कारादेशः इति श्रुतेः नवीनोक्तार्थखण्डनम् ॥

## ॥ अथ जीवात्मनो अहङ्कारात् भेदसिद्धि निरूपणम् ॥

ननु 'गङ्गायां घोषः' इत्यादौ गङ्गापदस्य लक्षणाकल्पनादशायां मानान्तरेण तीरकच्छाद्यानेकार्थोपस्थिति[१] सत्त्वेऽपि तीर एव वक्तुस्तात्पर्यम्[२] तत्रैव लक्षणाकल्पनावत् संसारदशायामुपहितात्म्योपस्थितिसत्त्वेऽपि वेदस्यात्मस्वरूपमात्रे तात्पर्यात् तत्रैव लक्षणाकल्पना सम्भवतीति चेन्न । येन रूपेणोपस्थिते वृत्तिकल्पना तत्पदजन्यपदार्थस्मृतेः शाब्दबोधस्य च तत्प्रकारकत्वनियमेन गङ्गादिपदात् तीरत्वादिप्रकार-तीरादिस्मृतिशाब्दबोधवत् ब्रह्मपरवाक्यगतात्मपदादप्युपाधिप्रकारकपदार्थस्मृतिशाब्दबोधापत्त्या वेदान्तानामखण्डार्थत्वभङ्गप्रसङ्गात् ॥

---

(१) 'निरुक्तत्वाद्यनेकार्थोपस्थिति सत्त्वेऽपि' इति पाठः स्यात् ॥

(२) 'तीर एव कुस्तस्तात्पर्यान्' इति ताळपत्रस्थ पाठः ॥

ननु पदजन्यपदार्थस्मृतेः तत्प्रकारकत्वनियमेऽपि न तज्जन्यशाब्दबोधस्यापि तत्प्रकारकत्वनियमः । मानाभावात् । नचैवमतिप्रसङ्गः । तात्पर्यस्यैवेतराप्रकारकत्ववारकत्वात्, तात्पर्यं च तत्प्रतीति प्रयोजनकत्वरूपं, पौरुषेये पुमिच्छानियन्त्रितम्, अपौरुषये तु वाक्ये न्यायनियन्त्रितम् इति तात्पर्यग्राहकलिङ्गैर्यत्प्रतीतौ तदवधारितं तत्प्रतीतिरेव तेन क्रियते । तथा च वेदान्तानां निर्विशेषचैतन्योपक्रमादिलिङ्गैः तात्पर्यावधारणात् । ततो जायमानात् प्रतीतिः तन्मात्रविषयिण्येव जायत इति चेन्न । एवं सति ब्रह्मणि द्वितीयाभावरूपविशेषाभावासिद्धिप्रसङ्गात् । नच द्वितीयाभावस्य ब्रह्मातिरिक्तत्वे तदसिद्धिरिष्टैव, तन्मात्रत्वे च तत्सिद्धिरेव तत्सिद्धिरिति वाच्यम् । आद्ये प्रत्यक्षादिसिद्धिः द्वितीयस्यैव सत्यत्वापत्तेः । द्वितीयेऽपि द्वितीयाभाववत् द्वितीयस्य ब्रह्मातिरिक्तत्वादेश्चापि ब्रह्ममात्रत्वेन तत्सिद्धिरेव तत्सिद्धिरिति सुवचत्वात् । नच द्वितीयाभावो ब्रह्मैवेति श्रुतिरस्ति । 'इदं सर्वं यदयमात्मा यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिश्रुतेर्भावाभावात्मकप्रपञ्चमात्रस्याविशेषेणैवात्मस्वरूपत्वाऽवेदकत्वादिति दिक् ॥

यदपि दहरपुण्डरीकवेष्टितस्य परमात्मनः 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदये' (छां-उ-८-१-३) इत्युपाधिकृताल्पत्वनिवृत्तिपराकाशोपदेशवदहमर्थस्यापि उपाधिकृतपरिच्छिन्नत्वस्य(१) निवृत्तिपर आत्मसार्वात्म्योपदेश इति । तदपि न ।

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्यम्'(छां-उ-८-१-१) इति श्रुतौ 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यादिना हृत्पद्मस्थभूताकाशगतब्रह्मण एवान्वेष्टव्यत्वाद्युक्त्या 'दहरोऽस्मिन्नन्तर आकाश' इत्यत्र 'अकाश'पदस्य ब्रह्मपरत्वाभावेनान्वेष्टव्यत्वादिनोक्तादस्य ब्रह्मणः हृत्पुण्डरीकवेष्टितत्वासिद्धेः । उत्तरत्र 'किं तदत्र विद्यते' (छां-उ-८-१-२) इति प्रश्नस्य ब्रह्मपरशब्दमहिम्नैव परस्वामिन एव स्वातन्त्र्येण परान्तर्वर्तिवेश्माऽन्तरावकाशस्थत्वलाभेनान्वेष्टव्यस्य ब्रह्मत्वसिद्धेरन्वेष्टव्यवादिनोक्तस्य ब्रह्मणः हृत्पुण्डरीकवेष्टितुर्धर्मस्वरूपमात्रप्रश्नपरत्वासम्भवेन तद् ब्रह्म किं धर्मविशिष्टमन्वेष्टव्यमिति अन्वेष्टव्यधर्मविशेषप्रश्नत्वावश्यम्भावेन

---

(१) 'परिच्छिन्नत्वस्य अनिवृत्तिम्' इति ताळपत्रस्थपाठः ॥

'यावान्वाऽयमाकाशः' इत्यादितत्प्रश्नोत्तरभूतोत्तरवाक्यस्यापि यद् ब्रह्मान्वेष्टव्यपरोक्तं तस्यान्तर्हृदये, अयमाकाशः= प्रमाणसिद्धस्तावान् सर्वोऽप्येष आकाशो, विद्यते, अस्मिन्नेव द्यावापृथिव्यादिकं च समाहितम् । एषः= भगवान् 'अपहतपाप्मा विजरो विमृत्युर्विशोकश्च' इति अन्वेष्टव्यब्रह्मणः सर्वाकाशाश्रितत्व(सर्वाकाशाश्रयत्व- पा)- द्यावापृथिव्याद्याश्रयत्व-अपहतपाप्मत्वादिधर्मविशेषत्वप्रतिपादनपरा या दहरपुण्डरीकस्थदहराकाशस्य व्यापकीभूताकाशौपम्येन दहरपुण्डरीकरूपोपाधिवेष्टनकृतदहरत्वनिवृत्तिपरत्वासिद्धेश्च ॥

यदि च अन्यपरेऽन्यवेश्मस्थितिसम्भवादन्यवेश्मन्यप्यन्यावस्थानसम्भवाच्च । ब्रह्मपुरस्थहृत्पुण्डरीकवेश्मान्तर्गताकाशस्थस्यान्वेष्टितव्योक्तस्य ब्रह्मत्वनिर्णयासम्भवेन 'किं तदत्र विद्यते?' इतिप्रश्नस्य आधेयधर्मिस्वरूपमात्रप्रश्नत्वं, तदाऽपि 'यावान्' इत्यादितत्प्रश्नोत्तरभूतोत्तरवाक्ये 'हृदय'शब्देन हृत्पुण्डरीकम् 'अन्तः'शब्देन च सप्तम्यन्तेन तदन्तर्वर्तिभूताकाशं तदाधारकं चानूद्य 'आकाश'शब्देन प्रथमान्तेन आकाशाधिकरणन्यायेन(१) ब्रह्मपरेण पृष्टस्य तदाधेयस्य ब्रह्मत्वं विधाय 'यावान्वाऽयमाकाशस्तावानेष' इत्यव्याकृताकाशौपम्येन तस्य सुव्याप्तत्वप्रतिपादनात् 'उभे अस्मिन्' इत्यादिना च तस्यान्वेष्टव्यत्वादिप्रयोजकद्यावापृथिव्याद्याधारत्वप्रतिपादनात् 'यावान् वा' इत्यादेरुपाधिकृतब्रह्मपरिच्छिन्नत्वनिवृत्तिपरत्वासिद्धेः । तस्याऽचिन्त्यमहिमत्वेन स्वाभाविकमहत्त्ववत् स्वाभाविकपरिच्छेदस्याप्यविरुद्धत्वेन तन्निवृत्तेर्दर्शनात्(दुश्शकत्वात् -पा)॥

एतेन 'दहरोऽस्मिन्नन्तराकाशः' इति 'आकाश'शब्दस्याकाशाधिकरणन्यायेन परमात्मपरतया तस्यैवान्वेष्टव्यत्वं नतु हृत्पद्मस्थाकाशान्तर्गतस्य, तथात्वे द्यावापृथिव्यादेरेवान्वेष्टव्यत्वापत्तेः । तथा च हृत्पुण्डरीकस्थस्य'आकाश'शब्दार्थस्यैव परमात्मनः परिच्छिन्नहृत्पद्मोपाधिकृत परिच्छिन्नत्वप्रसक्तेः । तन्निवृत्त्यर्थं भूताकाशौपम्येन 'यावान्वा'इत्यादिना तस्य व्यापकत्ववर्णनमिति परव्याख्यानमपास्तम् ॥

'तस्मिन्यदन्वेष्टव्यम्' इति सन्निहितमाकाशं परामृश्य तदन्तर्गतस्यैवान्वेष्टव्यत्वाद्युक्तेः । 'आकाश'शब्दार्थस्यान्वेष्टव्यत्वलाभात्, 'तस्मिन्'इत्यस्य सन्निहितदहराकाशान्वयपरित्यागेन

---

(१) ॐ आकाशस्तल्लिङ्गात् ॐ इति सूत्रोक्तन्यायेनेत्यर्थः ॥

व्यवहितपुण्डरीकदहरपुण्डरीकान्वयायोगात् । आकाशस्य दहरहृत्पुण्डरीकस्थतायाः 'दहरोऽस्मिन्' इत्यत्रैवोक्तत्वेन पुनः 'तस्मिन् यदन्तर' इति तदुक्तिवैयर्थ्याच्च ॥

'यदन्तर' इति 'यत्'शब्दस्य 'तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यत्र 'तत्'शब्दस्यान्वेष्टव्यत्वादिशब्दानां च दहराकाशपरत्वे पुंलिङ्गतापत्तेश्च । किञ्च –

'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्यवशी सर्वस्येशानः'

(बृ-उ-६-४-२१)

'य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषः' (तै-उ-१-१६)

'यो वेद निहितं गुहायां परमे व्योमन्'

'दह्रं विपाप्मं वरवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसꣳस्थम् ।
तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' (म-ना-उ-१०-७)

इत्यादिश्रुतिषु हृत्पुण्डरीकाल्पभूताकाशस्थब्रह्मण एव उपास्यत्वोपपत्तेः इहापि तथैवाश्रयितुमुचितत्वात् ॥

अत एवाकाशान्तर्गतस्यैवान्वेष्टव्यत्वे द्यावापृथिव्यादेरेव उत्तरवाक्ये तदन्तर्गतत्वेनोक्तस्यान्वेष्टव्यत्वप्रसङ्ग इति निरस्तम् । उक्तरीत्याऽऽकाशद्यावापृथिव्याद्याधारत्वादिगुणकस्य वा ब्रह्मणो एवान्वेष्टव्यत्वादिलाभात् ॥

नन्वेवं हृत्पद्मस्थाकाशान्तर्गतब्रह्मण एवाकाशद्यावापृथिव्याद्याश्रयत्वे 'तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्'(म-ना-उ-११-९) इति श्रुत्यन्तरेण हृत्पद्मस्थ'सुषिर'शब्दार्थभूताकाशस्यैव सर्वाश्रयत्वमुक्तं विरुद्ध्येत । नच तत्र 'सुषिर'शब्देन अन्तस्थं ब्रह्मैव गृह्यत इति युक्तम् । लक्षणाप्रसङ्गात् । 'तस्याः शिखायाः मध्ये परमात्मा व्यवस्थितः' (म-ना-उ-११-१३) इत्युत्तरवाक्ये परमात्मनः सुषिरस्थशिखामध्यस्थितत्वोक्त्या 'सुषिर'शब्दस्य परमात्मपरत्वानुपपत्तिरिति चेन्न । गृहस्थमञ्जूषास्थमणिमालाया गृहस्थत्वोक्तिवत्, सर्वस्य सुषिरस्थब्रह्मत्वेऽपि सुषिरस्थत्वोक्त्यविरोधात् ।

तदुक्तम् –

'सुषिरस्थ ब्रह्मसंस्थं सुषिरस्थमितीर्यते ।
एवं मञ्जूषास्थोऽपि हि मणिर्गेहस्थ इति गीयते' इति[१] ।।

ब्रह्मणः सर्वगतत्वेन साक्षादाकाशस्थस्यैव तत्स्थ-स्वगत-वह्निशिखास्थत्वस्याप्यादित्यपुरुषस्थादिवदविरुद्धतया तत्तदुपासनानां तत्तद्गुणविशिष्टतया तत्तच्छ्रुत्या परमात्मप्रतिपादनाविरोधात् । तस्मात् 'यावान्वाऽऽयमाकाशः' इत्यादिश्रुतेर्दहरपुण्डरीकोपाधिकृतपरमात्मपरिच्छिन्नत्वाभावपरत्वाभावेन तद्दृष्टान्तेन आत्मसार्वात्म्योपदेशस्यान्तःकरणोपाधिकृते प्रत्यगात्मपरिच्छिन्नत्वाभावपरत्वमयुक्तमेवेति ।।

उक्तरीत्यैव भूमाऽहङ्कारशब्दार्थत्वेन स्मृत्युक्तानां परमात्मरूपविशेषाणामेव नारायण-अनिरुद्ध-वासुदेवानां सार्वात्म्योपदेशोऽयमित्येव युक्तमुक्तमिति तद्बलान्न जीवात्मनोऽहङ्कारात् भेदसिद्धिरिति ।।

।। इति जीवात्मनो अहङ्कारात् भेदसिद्धिः ।।

## ।। अथ तैत्तिरीयश्रुतेः नवीनोक्तार्थनिरसनम् ।।

यदप्यत्र नवीनोक्तं 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च'(तै-उ-२-५) इति श्लोकेन विज्ञानमयस्याहंबुद्धिविषयस्य निखिलकर्तृत्वमुक्तत्वं, ततोऽन्यत्वेनाऽन्तरत्वेन च जीवस्यानन्दमयस्य 'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः' (तै-उ-२-१२) इत्यभिधानान्निखिलकर्तुरहमनुभवगोचराद्भिन्न एव प्रत्यगात्मा जीव इति । तदपि न । अहं बुद्धिगोचरस्य 'विज्ञानमय'शब्दार्थत्वे वा मानाभावात् । नहि 'विज्ञानमय'-शब्दस्य वाऽहंबुद्धिगोचररूढिरस्ति । नापि योगः । मयटो विकारार्थऽत्वेपि[२] विज्ञान-विकारत्वस्याहंबुद्धिगोचरे सिद्धे, च्छन्दसि विकारार्थत्वेऽवयववाक्ये च 'द्व्यचच्छन्दसि' (पा-सू-४-१-१५०) इति द्व्यच एव मयटः स्मरणाच्च । 'विज्ञानानन्द'शब्दयोश्च द्व्यचूत्वाभावेन ताभ्यां विकारार्थे तदन्तायोगात्, सर्वत्राऽत्र मयटो विकारार्थत्वे 'प्राचुर्यशब्दान्नेति चेन्न विकारात्' इति सूत्रणापत्त्या 'विकारशब्दान्नेति चेन्न प्राचुर्यात्'(ब्र-सू-१-१-१३) इति

(१) श्रीव्यासराजतीर्थकृततात्पर्यचन्द्रिकायां दहराधिकरणे उदाहृतश्लोकः

(२) 'प्राचुर्यार्थे विकारार्थे तादात्म्यार्थे मयट् त्रिधा' इति प्रमाणानुसारेण विकारार्थत्वेपीत्यर्थः ।।

सूत्रविन्यासानुपपत्तेश्च । प्राचुर्यार्थत्वस्यैव त्वयैवानभ्युपगमात् । विज्ञानप्राचुर्यस्य सर्वत्र परमात्मन्येव सम्भवेन अज्ञानप्रचुरे अहंबुद्धिगोचरे तस्यासम्भवात् । विज्ञानकारणप्राचुर्यस्यापि सकलतत्कारणनियामकपरमस्वतन्त्रपरमात्मन्येव सम्भवेन अस्वतन्त्रेऽल्पतत्कारणभूतचक्षुरादिनियामके तत्रासम्भवाच्च ॥

परमात्मान एव –

'विश्वतश्चक्षुः' (श्वे-उ-३-३) 'सहस्रपात्'(श्वे-उ-३-१४)

इत्यादि श्रुतौ

'सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरो मुखम्' (भ-गी-१३-१४)

इत्यादि स्मृतौ च चक्षुराद्युपलक्षित विज्ञानकारण प्राचुर्यावगतेश्च । उक्तरीत्या मयटोऽर्थवत्त्व सम्भवे वैयर्थ्यापादकस्वार्थ'क'प्रत्ययत्वाश्रयणाऽयोगात् । 'अकायमव्रणम्' (ई-उ-८) 'अपाणिपादो' 'चक्षुःकर्णो मनो' इत्यादिविज्ञानकारणादिनिषेधश्रुतेश्च ।

'निरनिष्टो निरवद्यः'
'आप्रणखात्सर्व एव आनन्द आप्रणखात्सर्व एव सुवर्णः'
'पूर्णमदः पूर्णमिदम्' (बृ-उ-५-१)
'नित्यश्चेतनानां नित्यश्चेतन'

इत्यादि श्रुत्यनुरोधेन –

'नान्तोऽस्ति यस्य नच यस्य समुद्भवोऽस्ति ।
बुद्धि(वृद्धि)र्नयस्य परिणामविवर्जितस्य नापेक्ष्यं च समुपैत्यविकल्पवस्तु'

इत्यादि श्रुत्यनुरोधेन न दुःखहेत्वनित्यप्रकृतिपरिमाणात्मक'कुरूपऽपूर्ण' 'परिमित'शब्दादिविषयविहितेतरदेहादिविशेषविषयत्वेन सामान्यतः तन्निषेधरूपत्वाभावात् । अन्यथा 'न हिंस्यात् सर्वाभूतानि' इत्यादेः 'ब्राह्मणो न हन्तव्यः' इत्यादेश्च विहिता अहिंसानिषेधत्ववद्विहितपशुहिंसा निषेधत्वापत्तेः । चक्षुरादिविज्ञानकारणसामान्यभावे तन्नियतज्ञानवाचिनः 'पश्यति' 'शृणोति' इत्यादेर्जीवात्मन इव परमात्मनोऽपि स्वरूपतो नित्यत्ववद्देहादितोऽ-

प्यनित्यत्वस्य तुल्यत्वे 'नित्यो नित्यानां चेतनश्चेतनानाम्'(श्वे-उ-६-१३) इति परमात्मनः नित्यचेतनजीवात्मापेक्षया अतिशयितनित्यचेतनत्वोक्तेश्चायोगाच्च । तथा च 'विज्ञानमय'-शब्दस्याहंबुद्धिगोचरपरत्वाभावेन तत्समानार्थक'विज्ञानं यज्ञं तनुते'(तै-उ-२-५) इति श्लोकस्थ 'विज्ञान'शब्दस्याऽपि न तत्परत्वं युक्तम् ॥

॥ इति तैत्तिरीयश्रुतेः नवीनोक्तार्थनिरसनम् ॥

## ॥ अथ आनन्दमयस्य विष्णुपरत्वसमर्थनम् ॥

अत एवानन्दमयशब्दोऽपि न जीवपरः । तत्र तस्य रूढेरभावात् । आनन्दविकारत्व-रूपयोगार्थस्य च स्वरूपतोऽनादिजीवेऽभावात् । नच आनन्दात्मकब्रह्मप्रतिबिम्बभूतस्य जीवस्य तादृशब्रह्माधीनाग्रिमक्षणसत्ताकत्वेन तद्विकारकत्वमिति वाच्यम् । तदधीनाग्रिम-क्षणसत्ताकत्वस्य योगक्षेमसाधारणजन्यत्वरूपस्य स्वरूपतोऽनाद्यनन्ते जीवेऽसम्भवात् । सम्भवे वा परिणामत्वरूपविकारत्वस्य तत्रासम्भवात्तस्यैव च मयडर्थत्वात् । अन्यथा 'दण्डमयो घटः' 'प्रायश्चित्तमयो दुःखाभावः' इत्यादिप्रयोगप्रसङ्गात् । आनन्दप्राचुर्यस्य दुःखप्रचुरे जीवेऽसम्भवात् ॥

नच प्रियाद्यवयवसंयोगात् 'तस्यैष एव शारीर आत्मा' इति शारीरत्वश्रवणात् प्रति-शरीरं प्रियाद्यवयवभेदेन भिन्नत्वाच्चानन्दमयो जीव एवेति वाच्यम् । त्वन्मते जीवस्य निरवयवत्वेन प्रियाद्यवयवविशेषस्य योगस्याप्यसम्भवात् । निवासकार्थक'अण्'प्रत्ययान्त-शारीरशब्दयोगार्थस्य शारीरनिवासित्वरूपस्य जीव-ब्रह्म-साधारणतया जीवलिङ्गत्वाऽ-योगात् । वक्ष्यमाणरीत्या प्रतिशरीरं भिन्नभिन्नानां प्रियादीनामवयवत्वाभावेन तत्कृतभेदस्या-नन्दमयेऽसिद्धेः । आनन्दमयस्य जीवत्वे तदभिन्नत्वे वा ब्रह्मणस्तत्प्रति पुच्छत्वाऽयोगात्, बाधकं विना ब्रह्मशब्दपुच्छशब्दयोर्मुख्यार्थपरित्यागाऽयोगात् । ज्ञेयब्रह्मप्रकरणे जीवस्वरूप-निरूपणासङ्गतेः ॥

नचान्नमयादिवदानन्दमयस्यापि 'स्थूलारुन्धतीन्यायेन' ब्रह्मज्ञानोपयोगितयैव निरूपण-मत्रेति वाच्यम् । प्रथमं स्थूलनक्षत्रमरुन्धतीत्वेनोपदिश्य तं निरासपूर्वकं ज्ञापनीयारुन्ध-त्युपदेशवत् इह अन्नमयोपदेशानन्तरं तन्निरासपूर्वकं ज्ञापनीयब्रह्मनिरूपणाभावेन स्थूला-

रुन्धतीन्यायानवकाशात् । 'ब्रह्म पुच्छं प्रतिष्ठा'(तै-उ-२-५) इति पुच्छत्वेन ब्रह्मनिरूपणस्यान्नमयादौ 'इदं पुच्छं प्रतिष्ठा'(तै-उ-२-१) इत्यादेरिव ज्ञेयब्रह्मपरत्वाभावात् । आनन्दमयनिरासानुपलब्धेश्च, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षणवाक्येन ज्ञेयब्रह्मस्वरूपमात्रस्य प्रागेव ज्ञापितत्वेनोत्तरत्र पुनस्तज्ज्ञापनार्थमन्नमयादि आनन्दमयान्तानां निरूपणवैयर्थ्याच्च ॥

किञ्च स्थूलनक्षत्रप्रदर्शनमन्तरेणारुन्धतीप्रदर्शनासम्भववदन्नमयादीनां ब्रह्मत्वोपदेशमन्तरेण न ज्ञेयब्रह्मोपदेशसम्भवः, येनेह तन्न्यायावातरः स्यात् । नच 'सत्यं ज्ञानम्' इति स्वरूपलक्षणपरवाक्येन ब्रह्मोपदिश्य पुनरन्नमयादिवाक्येन स्थूलदेहादिरूपकोशात्मकतया भ्रान्तिमुत्पाद्य तन्निरासपूर्वकं 'ब्रह्म पुच्छम्' इति[१] वाक्ये पुनरपि ज्ञेयब्रह्मोपदेशस्य किमपि फलमस्ति । नचाज्ञातधर्मत्वचैत्यवन्दनादिर्धर्म इति मन्वानं प्रति चैत्यवन्दनादिरधर्म इत्युपदिश्य ज्योतिष्टोमादिरधर्म इत्युपदिश्यते । येन श्रोतृबोध्यनुसारेणेह तथा तथोपदेश इत्युच्येत ॥

किञ्चानन्दमयस्य जीवत्वे 'असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद' (तै-उ-२-६) इत्युत्तरश्लोके तत्र ब्रह्मशब्दाभ्यासोऽनुपपत्तिः । जातिकमलासनादि साधारणवैरूढ्यपेक्षया योगरूढेः प्रबलत्वेन ब्रह्मणि 'बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतिसिद्धयोगार्थस्य पूर्णगुणत्वस्य 'तदेव ब्रह्म परमं कवीनाम्' 'एतमेव ब्रह्मेत्याचक्षते' इति श्रुतिसिद्धविद्वद्रूढेश्च सत्वेन च, परमात्मन्येव तस्य(परमात्मन्येतस्य-पा) मुख्यत्वात् । नचानन्दमये अवयविनि प्रधाने सति ब्रह्मशब्दाभ्यासस्य 'असन्नेव' इत्यानन्दमयविषयकोत्तरश्लोकस्थस्य तदवयवाप्रधानपुच्छब्रह्मविषयः । अन्नमयादीनां प्रत्युदाहृतश्लोकानामप्यन्नमयादिपुच्छविषयत्वापातात् ॥

किञ्चानन्दमयस्य जीवत्वे 'सोऽकामायत बहुस्यां प्रजायेय' इत्यादिवाक्योक्तकामयितृत्वस्रष्टृत्वाद्यनुपपत्तिः, न तदपि वाक्यं पुच्छब्रह्मविषयम् । तथा सति 'सोऽकामयत' इति पुंलिङ्गनिर्देशानुपपत्तिः । आकाशादिकारणत्वेनोक्तस्यात्मनो व्यवहितत्वेनाव्यवहितानन्द-

(१) 'ब्रह्मपुच्छमपि' इति ताळपत्रस्थ पाठः ॥

मयपरित्यागेन तस्य तेन परामर्शायोगात् । 'रसो वै सः'(तै-उ-२-७) इत्यादिवाक्योक्त-लब्धृ-लब्धव्यभाव-तल्लाभानन्तराभाव्यतिशयितानन्दवत्वानुपपत्तिश्च । नहि जीवः स्वयमेव लब्धालब्धव्ये रसात्मकश्च भवति । सच सारापरनामकसरूपत्वस्य परमात्मनोऽन्यत्रासम्भवा-त्तस्यैव सर्ववस्तुषु निरतिशयस्वरूपत्वात् । नच 'आनन्दमय'शब्दमहिमलब्धप्रचुरानन्दब्रह्म-स्वरूपलाभस्यैव प्रचुरः दुःखजीवलाभस्य 'आनन्दि' इति इन् प्रत्ययान्तशब्दप्रतिपन्नाति-शयितानन्दहेतुत्वं युज्यते ॥

किञ्च पुच्छत्वेनोक्तस्यस्यैव ब्रह्मत्वे 'पुच्छमभ्यासात्' इति सूत्रणादप्यत्र 'आनन्द-मयोऽभ्यासात्' इति सूत्रविन्यासोऽसङ्गतिः स्यात् । नच सौत्रानन्दमयशब्देनानन्दमयपुच्छं विवक्षितमित्यत्र मानमस्ति । न वा प्रयोजकं विना निरूढलक्षणाश्रयणं युक्तम् । तस्मा-दानन्दमयो न जीवः किन्तु परमात्मैव । एवमन्नमयादयोऽपि न कोशाः किन्तु ब्रह्मैव । 'असन्नेव स भवति'(तै-उ-२-६) इत्युत्तरश्लोके आनन्दमये ब्रह्मशब्दाभ्यासवत् विज्ञानमयेऽपि 'विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्मचेद्वेद'(तै-उ–२-५) इति ब्रह्म-शब्दाभ्यासात् ॥

यद्यप्यन्नमयं न प्राणमयमनोमये पुनर्ब्रह्मशब्दाभ्यासोऽस्ति । तथाऽपि

**'येऽन्नं ब्रह्मोपासते'** (तै-उ-२-२)

**'ये प्राणं ब्रह्मोपासते'** (तै-उ-२-३)

**'आनन्दं ब्रह्मणो विद्वान्'** (तै-उ-२-४)

इति सकृच्छ्रुतब्रह्मशब्दसामर्थ्यादेव तेषामपि ब्रह्मत्वम् । नहि सकृदुक्तस्य 'ब्रह्म'शब्दस्य ब्रह्मप्रमापकत्वासामर्थ्येऽभ्यस्तस्यापि तद्युज्यते। नचैवमभ्यासोपन्यासः सौत्रो व्यर्थः । विजा-तीयानेकलिङ्गोपन्यासवत् सजातीयानेकतदुपन्यासस्यापि प्रतिज्ञार्थदार्ढ्यहेतुत्वात् ज्योति-ष्टोमप्रकरणस्थ 'ज्योतिः'शब्दस्य तत्परत्ववदन्नमयादीन् प्रति उदाहृतश्लोकस्थानाम् 'अन्नादि' -शब्दानां प्रकृत'अन्नमयादि'परत्वेन तत्रत्य ब्रह्मशब्दस्यापि अन्नमयादिविषयत्वात्, एव-मुत्तरत्रानुवाके भृगुवल्ल्यामप्यन्नादयः आनन्दपर्यन्ता ब्रह्मैव ॥

॥ इति आनन्दमयस्य विष्णुपरत्वसमर्थनम् ॥

तत्रापि सर्वत्र –

'अन्नं ब्रह्मेति व्यजानात्'
'प्राणो ब्रह्मेति व्यजानात्'
'मनो ब्रह्मेति व्यजानात्'
'आनन्दो ब्रह्मेति व्यजानात्' (तै-उ-३-३)

इति ब्रह्मशब्दश्रवणात्, नतु तपसोऽब्रह्मत्वेऽपि तत्र 'तपो ब्रह्मेति' ब्रह्मशब्दवदन्नमयादीनाम् 'अन्नानां' चाब्रह्मत्वेऽपि तेषु ब्रह्मशब्दोपपत्तिः, नाग्नि इव ब्रह्मत्वेनोपास्यत्वोपपत्तिश्चेत् । न । पूर्वत्र 'तपसा ब्रह्म विजिज्ञासस्व'(तै-उ-३-२) इति उत्तरत्र च 'स तपस्तप्त्वा । आनन्दो ब्रह्मेति व्यजानात्' (तै-उ-३-३) इति च ब्रह्मज्ञानोपायत्वेनानुष्ठेयत्वेन चोक्तस्य तपसो ब्रह्मत्वायोगेन तत्र ब्रह्मशब्दस्यासकृत् श्रुतस्यापि मुख्यार्थस्यासम्भवात् । 'ब्रह्म वै पूर्ण' इतिवदर्थवादत्वात् प्रकृते बाधकं विना मुख्यार्थत्वत्यागाऽयोगात् । असदुपासनायाः निषिद्धत्वेन अब्रह्मत्वेऽन्नमयादीनां तत्रैवोपास्यत्वासम्भवाच्च । 'नाम ब्रह्मेत्युपासीत' इत्यत्रापि नामब्रह्मण एवोपास्यत्वात् । तथा च स्मृतिः । 'नच रमन्त्यहोऽसदुपासनयाऽऽत्महन' इति । 'विज्ञानं ब्रह्म चेद्वेद'(तै-उ-२-११) 'अन्नं ब्रह्मेति व्यजानात्'(तै-उ-३-२) इत्यादावुपासनायामश्रवणाच्च । अन्नमयं प्रत्युदाहृतश्लोके 'अन्नाद् भूतानि जायन्ते' (तै-उ-२.५) इत्यादिना अन्नस्य सकलभूतोत्पत्ति-स्थिति-लय-हेतुत्वमेव ब्रह्मलक्षणोक्तेश्च । प्राणमयादौ ब्रह्मशब्दसमानार्थक'आत्म'शब्दश्रवणाच्च । मनोमयं प्रत्युदाहृतश्लोके 'यतो वाचो निवर्तन्ते'(तै-उ-२-९) इत्यादिना मनोमयस्य वाङ्मनसाऽगोचरत्वरूपब्रह्मधर्मोक्तेश्च । 'आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचन' इति तद्ज्ञानिनस्तु[१] उभयराहित्योक्तेश्च । विज्ञानमयं प्रत्युदाहृतश्लोके सर्वदेवोपास्यत्वरूपब्रह्मधर्मोक्तेः । तज्ज्ञानस्य सर्वपापनिवृत्तिवत् सर्वकामावाप्ति साधनत्वाश्रुतेश्च । एवमुत्तरानुवाके अन्नाद्यानन्दपर्यन्तानामपि 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते'(तै-उ-३-२) इत्यादिना जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणोक्तेश्च । अन्नमयादीनां च वाक्यशेषस्थनिरवकाशब्रह्मलिङ्गसम्भवेप्य(सद्भावेऽप्य-पा)ब्रह्मत्वे

(१) 'तदज्ञानिनस्तु' इति ताळपत्रस्थ पाठः ॥

आकाशप्राणादीनामप्यब्रह्मत्वापत्तेश्च । अन्नमयादिष्विवाकाशादिषु उपासनार्थमेव वाक्यशेषे ब्रह्मधर्मोक्त्युपपत्तेश्च ॥

### ॥ अथ मयट्प्रत्ययस्वारस्यकथनम् ॥

ननु मयटो विकारार्थत्वात् ब्रह्मणश्चाविकारित्वादन्नमयादीनामब्रह्मत्वं युक्तमिति चेन्न । सर्वत्र मयटः प्राचुर्यार्थत्वात् । ननु तथाऽप्यन्नमयादीनां त्रयाणां ब्रह्मत्वमविरुद्धं ब्रह्मणोऽप्यन्नादि प्राचुर्यसम्भवात् । 'विज्ञानमय-आनन्दमययोस्तु' न ब्रह्मत्वं सम्भवति । प्राचुर्यस्य 'सामानाधिकरणाल्पविरोधिसापेक्षत्वनियमेन' विज्ञानानन्दैकरसब्रह्मणि तद्विरोधि-अज्ञानदुःखलेशस्याप्यसम्भवेन तत्प्राचुर्यस्यासम्भवादिति चेन्न । सामानाधिकरणाल्पविरोध्य-पेक्षया 'ब्राह्मणप्रचुरो ग्रामः' इत्यादाविव व्यधिकरणाल्पसजातीयापेक्षयाऽपि 'प्रचुरः प्रकाशः सविता' इत्यादौ 'प्राचुर्य'वाचकशब्दप्रयोगदर्शनेन प्राचुर्यस्य सामानाधिकरण्याल्पविरोध्यपेक्षा नियमासिद्धेः । अविगीतप्रयोगतौल्ये तस्य 'ब्राह्मणप्रचुरो ग्रामः' इत्यादौ मुख्यत्वं 'प्रचुरः प्रकाशः सविता' इत्यादौ त्वमुख्यत्वमित्यत्र नियामकाभावाच्च । अत एवऽक्षादिपदवदनेकार्थ-स्यादोषत्वात्, अनन्यथासिद्धब्रह्मलिङ्गसत्वे आकाशादिशब्दवत् अन्नमयादीनां ब्रह्मणि समन्वयस्य वक्तव्यत्वाच्च ॥

अत एव 'सविता'इत्यादौ प्राचुर्यस्य विशेषणत्वेन तत्र सामानाधिकरणाल्पविरोध्य-प्रतीतावपि यत्र प्राचुर्यस्य विशेष्यत्वं तत्र तत्प्रतीतिनियमः 'ब्राह्मणप्रचुरो ग्रामः' इत्यादौ तथा दर्शनात्, आनन्दमय इत्यत्र च प्राचुर्यमविशेष्यमेवेति निरस्तम् ॥

'प्रकाश प्रचुरः सविता' इति प्रयोगे प्राचुर्यस्य विशेष्यत्वेऽपि सवितर्यन्धकारलेशाऽ-प्रतीतेः ।

**'अन्तःशरीरे ज्योतिर्मये हि शुभ्रः क्षीणः दोषः'**

**'य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः'**

**'आनन्दघनः एवाऽनन्दमयः'**

इत्यादौ तन्मतेऽपि ब्रह्मण्यपि ज्योतिर्मयादिशब्दप्रयोगाच्च । नच तत्र मयटः प्राचुर्यार्थसम्भवे वैयर्थ्यापादकस्वार्थकत्वं युक्तमाश्रयितुम् ॥

वस्तुतस्तु 'प्रचुर'शब्दस्याधिक्यापरपर्यायमुत्कर्षमात्रमाह । सामानाधिकरणाल्पविरोधिप्रतीतिस्तु मानान्तरात्, नतु प्रचुरशब्दात् । तथा च सामानाधिकरणमल्पं विरोधि यत्र मानान्तरबाधितं तत्र व्यधिकरणमल्पं सजातीयमेव निरूपकतया प्रतीयते । अल्पविरोधिवदल्पसजातीयस्याप्रचुरशब्दार्थभूतोत्कर्षनिरूपकत्वाविशेषात् । एवं च 'प्रचुर'शब्दस्य समानार्थकमयट्प्रत्ययाद् ब्रह्मणि विज्ञानानन्दरूपे तदुत्कर्षमात्रप्रतीतौ तन्निरूपकस्याल्पविरोधिनो ज्ञानस्य दुःखस्य वा, प्रमाणबाधितत्वेन मानान्तरादप्रतीतावपि व्यधिकरणसजातीयस्याल्पस्य जीवगतस्य विज्ञानस्यानन्दस्य वा निरूपकस्य मानान्तरात् प्रमिति सम्भवात्, मयटः प्राचुर्यार्थकत्वे च न काऽप्यनुपपत्तिरिति ॥

(१)एतेनानन्दमय-तदवयवपुच्छयोर्द्वयोर्ब्रह्मत्वायोगादेकस्य ब्रह्मता वाच्या । तत्रानन्दमयस्य ब्रह्मत्वे विकारार्थमयटः प्रायपाठपरित्यागः, प्राचुर्यस्याप्यल्पविरोध्यपेक्ष्यत्वात्, ब्रह्मणि च दुःखलेशस्याप्यसम्भवात्, मयटः स्वार्थत्यागः । पुच्छवाक्यं त्वब्रह्मगतगौणार्थत्वं मुख्यार्थस्य ब्रह्मणः 'आनन्दमय'शब्दार्थभूतं स्वं प्रति पुच्छत्वाऽयोगात् । नह्येकदैव स्वरूपं प्रत्यवयविअवयवश्चेति सम्भवति ॥

एवं सौत्राभ्यासरूपहेतूपपादनार्थं 'सैषाऽऽनन्दस्य मीमांसा'(तै-उ-३-१७) इत्यादौ अभ्यस्यमानानन्दप्रतिपादकेन मयडर्थो लक्ष्यते, प्रायपाठपरित्यागः मुख्यत्रितयलङ्घनरूपाश्चत्वारो दोषाः स्युः । पुच्छस्य ब्रह्मत्वे तु अवयव-प्रायपाठबाधमात्रं, पुच्छपदमुख्यार्थत्यागस्तु आनन्दमयस्य ब्रह्मत्वपक्षेऽपि समः । लाङ्गूले मुख्यस्य तस्यानन्दमयावयवेऽपि चागौणत्वात् । तस्मान्मयट्प्रत्यय ब्रह्मशब्दानन्दप्रातिपादकरूपमुख्यत्रितयानुगुण्यात् पुच्छमेव ब्रह्मेति युक्तम् । पुच्छपदं तु 'प्रतिष्ठा'पदसन्निधानादाधारलक्षकम् ॥

किञ्च तत्प्रियाद्यवयवयोगेनानन्दमयः सविशेषः, ब्रह्म तु निर्विशेषम् । अपि च आनन्दमयः प्रतिशरीरं प्रियाद्यवयवभेदाद्भिन्नः ब्रह्मत्वभिन्नं, तस्मात् आनन्दमयो न ब्रह्म किन्तु पञ्चापि कोशाः । नच सर्वान्तरत्वादानन्दमयोः । ब्रह्मपुच्छवाक्ये 'प्रतिष्ठा'पदेन

(१) 'एतेने'त्यस्य 'आनन्दस्य ब्रह्मत्वमिति निरस्तम्' (पु.२३७) इत्यनेनान्वयः ॥

तद्वोप्यान्तरस्य ब्रह्मणो निर्दिष्टत्वात्, या तु 'भार्गवी वारुणी विद्या' तस्यां मयटः प्रियशिरस्त्वादेश्च श्रवणाद्ययुक्तमानन्दस्य ब्रह्मत्वमिति निरस्तम् ॥

अन्नमयादिवाक्येष्वपि मयटः प्राचुर्यार्थत्वे विकारार्थत्वाभावेन[(१)] प्रायपाठपरित्यागाभावात्, प्राचुर्यस्योत्कर्षमात्ररूपस्य समानाधिकरणाल्पविरोधिनिरूपतिस्य ब्रह्मण्यसम्भवेऽपि व्यधिकरणाल्पसजातीयनिरूपितस्य तस्य चोक्तरीत्या सम्भवे मयटो मुख्यार्थत्वपरित्यागाभावात् । आनन्दमयपुच्छयोरवयव-अवयविनोः द्वयोरपि पूर्णत्वेन पुच्छवाक्यगतस्योत्तरत्र आनन्दमयेऽभ्यस्यमानस्य च ब्रह्मशब्दस्यामुख्यार्थपरित्यागाभावात् ॥

अन्यत्रावयविन्यवयवे वा, शब्दस्य ब्रह्मशब्दमुख्यार्थभूतस्य पूर्णत्वस्यानन्दान्तरे अदृष्टस्य पूर्णत्वादेर्ब्रह्मानन्दमय इव ब्रह्मरूपे आनन्दमयेऽवयविनि तदवयवे पुच्छादौ च, प्रमाणबलेन स्वीकारेऽविरोधा'द्विश्वतश्चक्षुरुत विश्वतोमुखः'(श्वे.३-३) 'पूर्णमदः पूर्णमिदम्' 'सर्वतः पाणि पादं तत्'(भ-गी-१३-१४) इत्यादिश्रुतिस्मृत्यादेस्तत्रमानत्वात् । 'उद्बबर्हात्मनः केशौ'[(२)](वि-पु-अ-५) इत्यादि स्मृतिसिद्धस्य केशरूपस्य कृष्णस्य 'व्याप्तं त्वयैकेन दिशश्च सर्वाः'(भ-गी-११-२०) इत्यादि स्मृत्या पूर्णत्वावगमाच्च । 'आनन्दं ब्रह्मणो विद्वान्' इत्यादि श्रुतेरानन्दात्मकस्यैव ब्रह्मण आनन्दित्वात् ।'स शिरः दक्षिणः पक्षः' इत्यादिश्रुतेः,'कृष्ण केशो हि यादवः' 'कृष्णस्तु भगवान् स्वयम्' (भा-१-३-२८) इत्यादिस्मृतेश्च ॥

अभेदेऽपि परमात्मनोऽपि अचिन्त्यशक्त्या विशेषबलेन चावयवावयवित्वाविरोधात्,'नेह नानाऽस्ति किञ्चन'इत्यादि श्रुत्याऽवयव-अवयवि-भावादिना प्रसक्तस्य स्वगतभेदस्य निषेधात् । एवमुत्तरत्र 'सैषाऽऽनन्दस्य' (तै-उ-३-१७) इत्यादावानन्दशब्दस्यापि न मुख्यार्थ परित्यागेनानन्दमयलक्षकता । नहि वयम् आनन्दमयस्य ब्रह्मत्वे आनन्दमयोऽभ्यासं हेतुं ब्रूमः, येन तथा स्यात्, किन्तु ब्रह्मपदाभ्यासमेव, सविशेषत्वं तु ब्रह्मत्वसाधकम् । नच 'यतो वाचो निवर्तन्ते' इति श्रुतिः ब्रह्मणो निर्विशेषत्वमाह । किन्तु साकल्येन वाङ्मनसा-

---

(१) 'विकारार्थत्वभावेन' इति ताळपत्रस्थ पाठः ॥

(२) 'सित कृष्णौ महामुने । उवाच सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यतः' इति पूर्णपाठः ॥

ऽऽगोचराऽनन्तविशेषवत्त्वम् । [१]प्रियादिके यः प्रतिशरीरं भिन्नः, प्रियादिः नाऽसौ भगवतोऽवयवयः, यश्चावयवो न स भिन्नः 'नेह नाना' इत्यादिश्रुत्यैव तद्भेदस्य निषेधात् । अत एव पुच्छवाक्ये 'प्रतिष्ठा'पदेन आनन्दमयापेक्षयाऽन्तरस्य ब्रह्मणो निर्देशात् पुच्छत्वेनोक्तमेव ज्ञेयम् । ब्रह्मानन्दमयस्तु प्राणमयादिवदब्रह्मैवेति प्रत्युक्तम् ॥

पुच्छत्वेनोक्तस्य ब्रह्मणो विज्ञानमय-आनन्दमयस्येव आनन्दमयादन्तरत्वेन शब्दतो निर्देशाभावात् 'प्रतिष्ठा'पदस्यान्तरत्वानभिधायित्वात् । आनन्दमयो ब्रह्म कुतः? अभ्यासात् इति स्वारस्येन सूत्रयोजनासम्भवे सौत्रानन्दमयशब्देनानन्दमयवाक्यार्थं पुच्छं लक्षयित्वा सूत्रयोजनानुपपत्तेश्च ॥

त्वद्रीत्या आनन्दमयस्य जीवत्वेन घटादिवत् विकाररूपत्वासम्भवेन विकारार्थमयड-नुपपत्तेरुक्तत्वाच्च । अन्नमयाद्यानन्दमयान्तानां ब्रह्मत्वे योगरूढिभ्यां ब्रह्मण्येव मुख्यस्य 'ब्रह्म'शब्दस्य 'आत्म'शब्दस्य तदभ्यासस्य च तेष्वनुपपत्तेश्च । नच बाधकं विना मुख्यार्थ-त्यागो युक्तः ॥

नन्वेवम् अन्नमयादीनां ब्रह्मत्वे 'स वा एष पुरुषोऽन्नरसमयः' इत्येतच्छब्देना-काशादिकारणत्वोनोक्तस्य परमात्मन एव परामर्शो वाच्यः । नह्याद्यपुरुषशब्दोक्तसन्निहित-पुरुषाका..कारण विकारात्मककोशपरामर्शः । 'स वा'(तै-उ-२-४) इति तच्छब्दपरामर्शेन आकाशादिकारणपरमात्मनो 'अन्नात्पुरुषः'(तै-उ-२-३) इत्यस्य कोशस्यात्यन्तभिन्नत्वेना-भेदमादाय तच्छब्द एतच्छब्दयोगसामानाधिकरण्योपपादनायोगात् । परस्याऽप्येष दोषः सम इति चेत्, परेणाऽस्य वाक्यस्य स्थूलारुन्धतीन्यायेन ब्रह्मत्वप्रतिपत्त्यर्थस्वीकारेण भेदपरत्वाभ्युपगमात् । नच 'यजमानः प्रस्तरः' इत्यादिवत् 'तत्सिध्या'वा, 'राजा राष्ट्रम्' इत्यादिवत् नियम्यत्वादिना वा, 'स वा एष पुरषः' इति श्रौतसामानाधिकरण्योपपत्तिरिति वाच्यम् । तथा सत्यन्नमयादिशब्दानां त्वदभ्युपगतब्रह्मपरत्वत्यागप्रसङ्गात् ॥

किञ्चैवं मयटो विकारार्थत्वेऽपि दोषाभावे अन्नमयादिशब्देषु तस्य प्राचुर्यार्थत्वाभिनिवेशो न युक्तः । नच तत्र तच्छब्दवद् 'एतत्'शब्दस्यापि व्यवहिताकाशादिकारणात्मपरामर्शित्वम्

(१) 'प्रियादिको यः प्रति शरीरं भिन्नः, प्रियादि नाऽसौ भगवतोऽवयवश्चावयवो' इति ताळपत्रस्थ पाठः ॥

अभ्युपगन्तुं शक्यम् । तस्य सन्निहितपरामर्शिताया एव स्वरससिद्धत्वेन व्यवहिततत्परामर्शित्वे मानाभावात्, द्वितीय'पुरुष'शब्देनाद्यपुरुषशब्दार्थस्यैव प्रत्यभिज्ञायमानतया तत्सामानाधिकरण'एतत्'शब्दस्य तत्परामर्शिताया एव न्याय्यत्वाच्च । नच आकाशादि[१]पुरुषान्तशब्दानां तादृशपरत्वेन सन्निहितत्वम् । तेषां तत्परत्वे मानाभावात् ॥

किञ्च तादृशात्मपरत्वे आत्मत आत्मोत्पत्तिरेव 'आत्मन आकाशः सम्भूतः' इत्यादिवाक्यार्थः स्यात् । नत्वात्मन आकाशादेरिति । अपि चैवं 'आकाशाद्वायुः' इत्यादिपुनरुक्तं स्यात् । 'आत्मन आकाशः सम्भूतः' इत्याद्युक्तार्थस्यैव तेन प्रतिपादनात् । नचाकाशादिशब्दानामुभयपरत्वेन इष्टसिद्धिः । उभयपरत्वे मानाभावात् । वाक्यभेदापत्तेरुभयपरत्वेऽप्युक्तदोषऽनिस्ताराच्चेति चेन्न । प्रकृते 'स्थूलारुन्धती न्याय'प्रवृत्त्यसम्भवस्योक्तत्वेन 'एतत्'शब्दस्य सन्निहिताद्य'पुरुष'शब्दार्थभूततदाकारनिर्विकारात्मककोशपरामर्शित्वे तादृश आत्मपरामर्शितच्छब्दसामानाधिकरण्यायोगेन तस्यापि तादृशात्मपरामर्शिताया एव वाच्यत्वात् । स्वरससिद्धसन्निहितपरामर्शित्वेऽपि एतच्छब्दस्य व्यवहिततादृशात्मपरामर्शित्वं चोक्तानुपपत्तेरेव मानत्वात् । केवलैतच्छब्दस्य तथात्वेऽपि व्यवहितपरामर्शः तत्शब्दपरामर्शस्यातथात्वेन व्यवहितपरामर्शित्वोपपत्तेः, अन्यथा केवलेनैव विवक्षितार्थस्य लब्धत्वेन विशेषणवैयर्थ्यात् ॥

नचाद्य'पुरुष'शब्दार्थस्यैव द्वितीय'पुरुष'शब्देन प्रत्यभिज्ञानात् तेन विशेषितस्य 'एतत्'शब्दस्य कथं व्यवहितात्मपरामर्शित्वम्? प्रत्यभिज्ञायाः विरोधादिति वाच्यम् । तथा सति 'एष पुरुषः' इत्येतावतैव 'अन्नात्पुरुषः' इति शब्दोक्तान्नविकारकोशस्य लाभात् 'अन्नरसमयः' इत्यस्य पुनरुक्तत्वप्रसङ्गात् । त्वन्मते मयटोऽत्र विकारार्थत्वात् 'अन्नात् पुरुषः' इति पञ्चम्योपादान एव स्वीकारेणाहेतुपञ्चमीत्वात् । तस्माद् 'वस्त्रप्रावृतजानुवत्' 'एष जानुरितिवत्' आद्य'पुरुष'शब्दार्थकोशावच्छिन्नतन्नियामकपरमात्मरूपविशेष एव 'एष पुरुषोऽन्नरसमयः' इति एतच्छब्दप्राचुर्यार्थक'अन्नरसमय'शब्दविशेषितद्वितीय-पुरुष-शब्दनिर्देश इत्येव युक्तं, न त्वाद्य'पुरुष'शब्दार्थप्रत्यभिज्ञापकोऽयमिति । एवञ्च क्व प्रत्यभिज्ञाविरोधः?

---

(१) 'अवकाशादि पुरुषान्तानाम्' इति ताळपत्रस्थ पाठः ॥

नच मत्पक्षे पुनरुक्तिदोषः । 'स वा एष पुरुषः= उक्तविधः परमात्मा, अन्नरसमयः= सारभूतान्नप्रचुरः' इति परमात्मनि सारभूतान्नप्राचुर्यस्य प्राप्तस्यैव विधानात् ॥

यद्वा आकाशाद्यद्यपुरुषान्तशब्दानामपि परमात्मपरत्वेन तस्य सन्निहितत्वम् । एवञ्च 'एतत्'शब्देन स्वरससिद्धसन्निहितपरामर्शित्वेन परमात्मपरामर्शेऽप्यविरोधः । नच तेषां परमात्मवाचित्वे तत्परत्वे वा मानाभावः । 'सर्वे वेदा यत्पदमामनन्ति' 'सर्वे वेदा यत्रैकं भवन्ति' इत्यादेस्तत्र मानत्वात् । अन्यथा तवाऽपि सर्वेषां वेदानां न ब्रह्मपरत्वसिद्धिप्रसङ्गात् । नच 'यतो वाचो निवर्तन्ते' इत्यादौ 'अप्राप्य'इति वाक्-प्राप्तिनिरोधाद्वाक्प्राप्तेश्च साक्षात्सम्बन्धरूपवाच्य-वाचकभावापरपर्यायशब्दशक्तिरूपत्वात् पदशक्तिमात्रनिषेधे तद्विशेषशक्तिरेव दुर्लभेति वाच्यम् । शक्तिलक्षणासाधारणवृत्तिशब्दमात्रस्य 'प्राप्ति'शब्दार्थत्वेन 'अप्राप्य' इत्यनेन तन्निषेधे लक्षणायाऽप्यसिद्धिप्रसङ्गात् । मनःप्राप्तेः संयोगरूपत्वतदकार्यत्वाभ्यामन्यस्याभावेन 'अप्राप्य मनसा सह' इति तस्यापि निषेधेऽन्तःकरणवृत्तिविषयत्वस्य वाऽसिद्धिप्रसङ्गाच्च ॥

असंयुक्तेऽपि ग्रामादौ[१] दानादिना स्वतोत्पत्तावपि 'ग्रामादिकमप्राप्तम्' इत्यविगीतव्यवहारदर्शनेन स्वत्वसंयोगाद्यनुगतसाक्षात्सम्बन्धत्वस्य निर्वक्तुमशक्यत्वेन 'प्राप्ति'शब्दस्य नानार्थपरत्वावश्यम्भावात् । साक्षात्सम्बन्धत्वापेक्षया लघुभूतवाक्सम्बन्धस्यैव निषेध्यतावच्छेदकत्वेन शक्तिलक्षणासाधारणवाक्सम्बन्धमात्रनिषेधस्यैव तत् श्रुतितात्पर्यगोचरत्वाच्च । 'यतो वाचो निवर्तन्ते' इत्यादेः 'एतमेव ब्रह्मेत्याक्षते' 'वचसां वाच्यमुत्तमम्' इत्यादिब्रह्मवाच्यत्वपरश्रुतिस्मृतिविरोधेन शब्दवाच्यत्वनिषेधपरत्वायोगेन साकल्येन शब्दप्रतिपाद्यत्वाद्यभावरूपान्यार्थपरत्वस्यैवाङ्गीकर्तव्यत्वाच्च । तथा च आकाशादिपुरुषान्तशब्दानां परमात्मवाचित्वे तत्परत्वे न काऽप्यनुपपत्तिः ॥

नचैवमात्मतःआत्मोत्पत्तिरेव 'आत्मनः आकाशः सम्भूतः' इत्यादिवाक्यार्थः स्यात्, पुनरुक्तिः स्यात्, आत्मादेर्भूताकाशादीनामुत्पत्तेरतद्वाक्यार्थत्वं च स्यादिति वाच्यम् । केवल

---

(१) 'असंयुक्तेऽपि भ्रमादौ' इति ताळपत्रस्थपाठः ।

आत्मत आकाशादिनियामकतदवच्छिन्नपरमात्मरूपविशेषोत्पत्तेरिष्टत्वात् । अत एव पौनरुक्तिप्रसङ्गः इति प्रत्यूढम् ।

आत्मादेर्भूताकाशादीनामुत्पत्तेरतद्वाक्यार्थत्वं च आकाशादिशब्दानामाकाशादिविशिष्टतन्नियामकपरमात्मपरत्वेन तदुभयपरत्वाभ्युपगमात् । अन्यथा तवापि वेदान्तानामखण्डचिन्मात्रपरत्वेन परमात्मत आकाशाद्युत्पत्त्यसिद्धिप्रसङ्गदोषसाम्यात्तवेव ममापि वाक्यभेदपरिहारोऽपि सम इति किमनुपपन्नम् ॥

तथाऽपि नान्नमयादीनां ब्रह्मत्वं युक्तम् । 'तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः' इति प्राणमयादीनामन्नमयादितोऽन्यत्वान्तरत्वोक्तेः । नच ब्रह्माभेदे मानमस्ति । प्रत्युत 'नेह नाना' इत्यादिना तद्भेदो निषिद्धः, नवा देशतोऽपरिच्छिन्नस्य ब्रह्मणः तत्परिच्छिन्नवदवान्तरत्वं युज्यते । नच 'अन्योऽन्तर आत्मा' इति श्रुत्युक्तान्यत्वान्तरत्वे अन्यनिबन्धने अमुख्यत्वे वा बाधकाभावात्, तदमुख्यत्वकल्पनस्यान्नमयादि ब्रह्मत्वसिद्ध्यधीनत्वात्, अन्नमयादीनां ब्रह्मत्वे चान्यत्वान्तरत्वे मुख्ये एव सम्भवतः । नहि सति सम्भवे मुख्यत्यागोऽयुक्त इति चेन्न । अन्नमयादीनां ब्रह्मत्वे बहुसाधकस्य तदब्रह्मत्वे बहुबाधकस्य चोक्तत्वेन तदविरोधाय तदन्यत्वान्तरत्वोक्त्योर्द्वयोरेव तन्नियम्यतदधिष्ठानभूतकोशनिबन्धनामुख्यत्वान्तरत्वालम्बनत्वकल्पनात् । अन्यथा बहुबाधापत्तेः, बहुभिर्विरोधेऽल्पस्यैवान्यथयितव्यत्वात् । तथा च पारमार्षं सूत्रं 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वमिति' (जै-सू- १२-२-२२) ॥

अपि च अन्नमयादीनां चाब्रह्मत्वे 'एतमन्नमयमात्मानमुपसङ्क्रामति'(तै-उ-२-२१) इत्यादौ 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्यन्ते, मध्ये,(१) तथा 'एतमन्नमयमात्मानमुपसङ्क्रम्य' (तै-उ-३-१०) इत्यादौ 'एतमानन्दमयमात्मानमुपसङ्क्रम्य'(२) इत्यन्ते उपसंहारे च 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्'(तै-उ.३.१०) 'एतत्सामगायन्नास्ते' इति श्रुत्युक्तकामान्नत्वादिलिङ्गनिश्चितमुक्तप्राप्यत्वोक्तिविरोधः । नचात्र 'उप'शब्दोऽतिक्रमार्थः । तत्राभि-

(१) 'इत्यन्तं मध्ये' इति ताळपत्रस्थपाठः ॥

(२) 'एतमन्नमयमात्मानम् उपसङ्क्रम्य' इति ताळपत्रस्थपाठः श्रुत्यनानुगुण्यम् इति भाति ॥

युक्तप्रयोगाभावेन तस्य तदर्थानुपपत्तेः । तदनुसारेणैव अव्ययानामनेकार्थत्वमाश्रयितव्यत्वात् । अन्यथा 'अन्तर'शब्दः क्वचित् बहिरर्थोऽप्याश्रियेत ॥

किञ्च 'अस्माल्लोकात् प्रेत्य'(तै-उ-३-१०) इत्यनेनैव विकारशरीराख्यकोशातिक्रमस्योक्तत्वेन 'अन्नमयमुपसङ्क्रामति' इत्यादिनापि तदुक्तौ पुनरुक्तिः ।

एतेनैव 'अन्नमयादीनां ब्रह्मत्वं त्याज्यम् अन्यथा शुद्धिप्रार्थनावाक्यविरोधादिति' प्रत्युक्तम् । शुद्धिप्रार्थनावाक्यगत-अन्नमयादीनामुक्तब्रह्मलक्षणकान्नमयादितः प्रकरणपाठात् (प्रकरणभेदात् -पा) 'कुण्डपायिनामयने मासमग्निहोत्रं जुहोति' इतिवाक्यगताग्निहोत्रस्य 'अग्निहोत्रं जुहोति' इति वाक्यगताग्निहोत्रादिवान्यत्वात् तदब्रह्मत्वेऽप्यस्मदुक्त ब्रह्मप्रमापकभिन्नप्रकरणस्थान्नमयादीनां ब्रह्मत्वे बाधकाभावात् । नह्यन्यशुद्धिप्रार्थनमन्यब्रह्मत्वे बाधकं सम्भवति । तस्मात् अन्नमयादयः अनन्दमयान्ताः पञ्चापि ब्रह्मैव न तु कोशा इति सिद्धम् ॥

॥ इति आनन्दमयस्य विष्णुपरत्वसमर्थनम् ॥

॥ इति मयट्प्रत्ययस्वारस्यकथनम् ॥

तदेवमुदाहृतश्रुतिप्रतिपन्नोऽहङ्कारो विज्ञानमयश्च नऽनात्मा आत्माऽपि सन्नजीवात्मा किन्तु परमात्मैवेति नास्याश्रुतेरहमर्थानिदंचैतन्यरूपत्वा...भावे माता[1] । तथाचास्यां श्रुतौ पृथगुपदेशादिः जीवात्मपरमात्मनोरभेदार्थ इति पराभ्युपगमो[2] निष्प्रमाणक एवेति ॥

किञ्च अस्मत्प्रकृतिक'अहङ्कार'शब्दार्थस्य(अहं शब्दार्थस्य-पा) अहङ्कारशब्दार्थभिन्नत्वे तत्र 'अहम्'इति प्रयोगवदहङ्कार इत्यपि प्रयोगप्रसङ्गः । 'ममाहङ्कारः'इति तद्भेदानुभवप्रसङ्गाच्च । यद्यप्यहङ्कारशब्दस्तव विशेषेण गर्वादौ च तत्र तत्र प्रयुज्यत इति नानार्थः । तथाऽप्यस्मत्प्रकृतिकाहमर्थेऽभियुक्तैरविगीतेन च प्रयुज्यत एव । नहि कोऽप्यहमर्थप्रत्यायने कर्तव्ये 'अहम्'इतिवद् 'अहङ्कार' इति प्रयुङ्क्ते । तथा चास्मत्प्रकृतिकाहमर्थोऽनिदं चैतन्यस्वरूपरूप एव वाच्यो न त्वनात्मस्वरूपरूप इति ॥

किञ्चाहमर्थाहङ्कारयोरभेदः सुप्तावहङ्कारस्य विलापश्रवणात् 'योऽहं पूर्वेद्युरिदमन्वभुवं स

(१) 'भावे मानम्' इति पाठः स्यात् ॥

(२) 'पदाभ्युपगमो' इति ताळपत्रस्थ पाठम् ॥

एवाहमद्यापि अनुभवामि' इति प्रत्यभिज्ञाऽनुपपत्तिः । एवञ्चाहङ्कारविशिष्टे तदनुपहिते चाहमर्थे एव, 'नाहमीश्वरः' इत्यादिनित्यनिर्दोषसाक्षिप्रत्यक्षसिद्धः ईश्वरप्रतियोगिकभेदो दुरपह्नवः । नच ईश्वरस्यायोग्यत्वात् न तत्प्रतियोगिको भेदः प्रत्यक्षः, भेदपक्षे अधिकरण-योग्यत्वस्येव प्रतियोगियोग्यत्वस्यापि तन्त्रत्वादिति वाच्यम् । आत्मत्वाक्रान्तत्वेनेश्वरात्म-नोऽपि योग्यत्वात् । नचैवं देवदत्तात्मानं प्रति यज्ञदत्तात्मापि प्रत्यक्षः स्यादिति वाच्यम् । जीवात्मनः अणुत्वेन[१] परस्पराप्रत्यक्षत्वेनैव तदभावोपपत्तेः । ईश्वरात्मनस्तु विभुत्वेन प्रत्यासन्नत्वसम्भवात् । अन्यथा ईश्वरात्मनः परमात्मत्वेनाप्रत्यक्षत्वे 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादितत्प्रत्यक्षत्वाऽऽवेदकश्रुतिरुन्मत्तप्रलपिता स्यात् । एतच्च अस्माभिः शिक्षायां जीवाजडत्ववादे प्रपञ्चितम् [२] ॥

अपि च अहङ्कारस्याहमर्थत्वे 'तदैक्षत बहुस्याम्' 'चिन्मात्रोऽहं सदाशिवः' 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते'(भ-गी-१०-८) इत्यादावीश्वरात्मनोहमर्थत्वदर्शनेनाहङ्कार-प्रसङ्गः । नचेष्टापत्तिः । ईश्वरस्यापि शोकादिप्रसङ्गात् । 'शोकलोभभयक्रोधहर्षमोहस्पृहा-दयः । अहङ्कारस्य दृश्यन्ते' इति स्मृत्या शोकादीनां तत्कार्यत्वावगतेः ॥

किञ्च जीवस्येवेश्वरस्याप्यहङ्कारापरनामकान्तःकरणसम्बन्धे भोक्तृत्वादिप्रसङ्गः । बुद्ध्यह-ङ्कारापरपर्यायान्तःकरणसम्बन्धेन च स्वप्नदर्शनं 'स हि स्वप्नो भूत्वेमं लोकमनुसञ्चरति'[३] (बृ-उ-६-३-७) इति श्रुतिसिद्धम् । नचेश्वरो भोक्ता । 'अनश्नन् अन्यो अभिचाकशीति' इति श्रुतिविरोधात् । नचेश्वरस्याज्ञानसम्बन्धाच्छोकादिस्सम्भवतीति वाच्यम् । 'एतत्सर्वं मन एव' इति सावधारणश्रुत्या तस्यान्तःकरणमात्रकार्यत्वावसायात् । 'तदेतत्सत्वं येन स्वप्नं पश्यति' इति पैङ्गिरहस्य-[४]ब्राह्मणेन स्वप्नस्यापि तत्कार्यत्वावसायाच्च ॥

किञ्च 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति सूत्रविषयवाक्यवत् 'द्वासुपर्णा' इति वाक्यस्य जीवेश्वरपरत्वे ततस्तयोः परस्पराप्यपि भेदसिद्धिरविकला । नच 'समाने वृक्षे पुरुष'

(१) 'जीवात्मनोर्गुणत्वेन' इतिताळपत्रस्थपाठः ॥

(२) एतेन अथातोऽङ्कारादेश............इत्यादिना अद्वैतशिक्षाख्यग्रन्थे (पु.२२१) प्रपञ्चितमित्यर्थः ॥

(३) 'स सध्री भूत्वेमम्' इति ताळपत्रस्थपाठः ॥

(४) 'ब्राह्मणेन न स्वप्नस्यापि' इति ताळपत्रस्थपाठः ॥

इत्यादेस्तत्परवाक्यस्य, 'अनीशया' 'नाहमीश' इति धिया= अविद्येति यावत् । बुद्ध्येव तस्याऽपि जीवताऽपादक सूक्ष्मोपाधित्वात् । 'मुह्यमानः शोचति' जुष्टं= सेवितं, अनीशया वा, तान्, जुष्टं= कर्तरि क्तः, तदध्यासवन्तं भोक्तारम्, अन्यं= बुद्ध्यादिशोषण शून्यं, ईशं, यदा पश्यतीति, भोक्तारं=पूर्ववाक्योक्त परमेश्वरत्वेन यद्यवलोकते तदा, अस्य= ईशस्य, महिमानम् एति, वीतशोकश्च भवति । 'अजो ह्येको जुषमाणोऽनुशेते' (श्वे-उ-४-५) इति श्रुत्या प्रकृतिजोषणस्यानुशयहेतुत्वोक्तेः । तद्रहितेश्वरभावे शोकादिर्न सम्भवतीति प्रतीतेरर्थो लभ्यत इतीति पूर्ववाक्योक्तं जीवस्य भोक्तृत्वं मिथ्यैव पर्यवस्यतीति तत्प्रयुक्तभेदोऽपि न वास्तव इति वाच्यम् । एतद्वाक्यार्थस्य प्रागेव वर्णितत्वेन(१) तस्योक्तार्थपरत्वासिद्धेः ॥

नच 'तयोरन्यःपिप्पलं स्वाद्वत्ति' इति सत्त्वं 'तदेतत्सत्त्वं येन स्वप्नं पश्यति' इति पैङ्गिरहस्यब्राह्मणेन 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति 'अनश्नन्नन्यो अभिचाकशीति' इति वाक्यस्य बुद्धेरेव भगवद्धर्मत्वमित्यर्थपरत्वेन व्याख्यानात्, न तस्य जीवेश्वरभेदपरत्वं, न वा जीवात्मभोक्तृपरत्वमिति वाच्यम् । तद्व्याख्यानरूपपैङ्गिरहस्यब्राह्मणे एव 'सत्त्व'शब्दस्य प्राणिपरत्वेनान्तःकरणत्वासिद्धेः । अन्यथा जीवात्मनि संसारानुपलब्धिप्रसङ्गात् ॥

नच 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः'(कठ-उ-३-४) इति श्रुतेः जीवात्मनि बुद्धिसम्बन्धौपाधिकसंसारोपलम्भः सम्भवतीति वाच्यम् । एतावता बुद्धिरिन्द्रियादिवद् भोक्तृशब्दप्रवृत्तिनिमित्तशरीरप्रवेशावपि जीवात्मगतभोक्तृत्वस्यावास्तवत्वासिद्धेः । नहि भोक्तृत्वादिरूपसंसारस्य बुद्धिपरिणामत्वमात्रेण जीवात्मनि सत्वासम्भवः । एतच्च तदध्यस्तत्वमिति स्यात् किन्तु मृदादिपरिणामस्य घटदण्डादेरिव बुद्धिपरिणामस्य भोक्तृत्वादेरपि द्रष्टव्यत्वेन जीवात्मनि संयोगेनैव सत्वेनाभ्युपेयत इति कथं तस्यावास्तवत्वम्? अन्यथा घटदण्डादेरपि भूतलादाववास्तत्वप्रसङ्गः । नच 'समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' (वृ-उ-६-३-७) इति श्रुतिपर्यालोचनया जीवात्मनि प्रतीयमानस्य भोक्तृत्वादेरध्यस्तत्वं कल्प्यत इति वाच्यम् । तच्छ्रुतेः परमात्मविषयत्वेन जीवात्मविषयत्वासिद्धेः जीवस्य उभयलोकसञ्चरणे समानत्वानुपपत्तेश्च ॥

---

(१) १परिच्छेदे 'अन्यं सकलजीवजडात्मकं प्रपञ्चम्' इत्यादिना वर्णितत्वेनेत्यर्थः ॥

अपि च 'आत्माऽप्यनीशः सुखदुःखहेतोः'(श्वे-उ-१-२) इति श्रुतिरपि जीवात्मनः ईश-भिन्नत्वे मानम् । नच 'कालःस्वभावो नियतिर्यदृच्छा भूतानि देवः पुरुषः इति चिन्त्यम् । संयोग एषां नत्वात्मभावात्' (श्वे-उ-१-२) इति कालादीनां प्रत्येकं जगत्कारणत्वं विमृश्य तत्समवायस्य वेति कोट्यन्तरमुत्थाऽप्यैषां समवाय आत्माभावादात्मत्वात्तु न सुख-दुःखहेतोरात्माऽप्यसमर्थो यत् इति स्वभावपरिप्राप्त्या सामर्थ्यानुवादेन तत्कारणत्वं प्रति-षिध्यत इति वाच्यम् । तथाऽपि तत्सामर्थ्यासामर्थ्याभ्यामेव तयोर्भेदसिद्ध्यवैकल्यात् ।।

## ।। अथ 'यत्रान्योऽन्यदि'ति श्रुतेः परोदीरितार्थनिरसनम् ।।

ननु तथाऽपि 'यत्रान्योऽन्यत् पश्यति यच्चान्योऽन्यत् श्रुणोति'(१)(छां-उ-७-२४-१) इत्यादि 'यदल्पं तन्मर्त्यम्' इति छान्दोग्ये 'यत्र भेदे सति अन्योऽन्यत् पश्यति तन्मर्त्यं विनाशि' इति भेदस्य विनाशित्वश्रुतेः न भेदः स्वाभाविक इति चेद्, विनाशित्वेऽप्यज्ञानव-त्स्वाभाविकत्वोपपत्तेः ।।

'यत्र= यस्मिन् विषये, सति अन्योऽन्यत् पश्यति तदल्पं यदल्पं तन्मर्त्यं' इत्यर्थ-परत्वेन 'यत्र'शब्दस्य भेदपरत्वसिद्धेः(२) । भेदस्य विनाशित्वेऽपि भेदवत् तद्विनाशस्याप्य-भेदविरोधाच्च । अपि च 'यत्र'शब्दस्य भेदपरत्वेऽपि यत्र भेदे सति अन्योऽन्यत्पश्यति' इति श्रुत्या 'यत्रान्योऽन्यं न पश्यतीति' तादृशोऽपि भेदः प्रतीयत इति 'सो मर्त्यो भविष्यति' इति मर्त्यभेदस्यापि सिद्धिर्दुवारा ।।

नच 'यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येत्' इति श्रुत्या भेदमात्रसत्वेऽप्य-न्योन्यदर्शनादिसत्वप्रतिपादनात् सर्वोऽपि भेदो मर्त्य एवेति वाच्यम् । पथ्यवस्थाविशेषे 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति' इति श्रुत्यनुरोधेनोदाहृत-श्रुतौ भेदविशेषविषयत्वेन सङ्कोचकल्पनात् प्रलयादौ परेण माया तद्वासनादीनां विद्यमान-त्वेऽप्यन्योऽन्यदर्शनाद्यनङ्गीकाराच्च । प्रलयेऽपि सूक्ष्मरूपेणान्योन्यान्यदर्शनादिर्विद्यत इति कश्चित् । तन्न । तदा तत्सत्वे मानाभावात् । तद्धेदं 'तर्ह्यव्याकृतमासीत्'(बृ-उ-१-४-७)

(१) 'यत्र नान्यत् पश्यति नान्यच्छृणोति' इति इदानीन्तनपाठः ।

(२) भेदपरत्वासिद्धेः इति ताळपत्रस्थ पाठः ।।

इति श्रुतेश्च तदभेदविद्यमानतायां मानत्वेऽपि तस्य तात्कालीनदर्शनगोचरत्वे अमानत्वात् । अन्यथा= तदभेदस्य दर्शनगोचरत्वे, श्रुतौ तस्याऽव्याकृतत्वोपवर्णनवैयर्थ्यात् । 'यत्र नान्यत्पश्यति नान्यत् श्रुणोति नान्यत् विजानाति' इत्यादिश्रुत्या यस्मिन् विषये सति तदौत्कट्या द्रष्ट्रादिरन्यद्विषयान्तरं न पश्यति, न शृणोति, न विजानाति, स भूमा' इति प्रतिपादितभूमलक्षणेन व्यावर्तनीयमिदमिति व्यावर्त्यसद्भावप्रतिपादनाय 'यत्रान्योऽन्यत्पश्यति यत्रन्योऽन्यत् शृणोति' यत्र विषये सति द्रष्ट्रादिर्विषयौत्कट्याभावात् अन्यद्विषयान्तरं पश्यति इत्यादि तदल्पं भूमा इति प्रतिपादयितुं छान्दोग्यवाक्यस्य प्रवृत्तेर्विषयविशेषस्याल्पत्वेन मर्त्यत्वसिद्धावपि भेदस्य मर्त्यत्वासिद्धेश्च । 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति हेतूच्छेदे पुरुषव्यापारादिति न्यायेन सांसारिकविविधदुःखापादकविविधमायायाः ज्ञानेन ज्ञायमानां निवृत्तिं पुरुषार्थत्वेनाङ्गीकुर्वता मुक्तावपि मायानिवृत्तितद्भेदस्यावश्याङ्गीकर्तव्यत्वेन भेद-मात्रस्य मर्त्यत्वरूपानित्यताया अनङ्गीकार्यत्वाच्च । विश्वमायानिवृत्तिवद्भेदज्ञाने सति 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति, 'तमक्रतुं पश्यति वीतशोकः धातुः प्रसादान्महिमानमीशम्' इति श्रुतिभ्याम् ईश्वरानुग्रहस्योक्तेस्तस्यापि पुरुषार्थत्वाच्च ॥

नच 'अनुग्राह्य-अनुग्राहक'भावस्य कल्पितभेदेन निर्वाहसम्भवात् तदज्ञानम् अनुप-योगीति वाच्यम् । स्वभिन्नत्वेन अनुग्राहकाज्ञाने तदनुग्रहार्थं प्रवृत्त्यदर्शनात् कल्पितभेदेनैव अनुग्राह्य-अनुग्राहकभावनिर्वाहे कल्पिताबाधेनैव प्रपञ्चस्य ब्रह्मवत् तद्रूपत्वनिर्वाहापत्तेश्च । नहि गुञ्जापुञ्जे कल्पितोऽग्निर्दहति पचति वा ॥

।। इति 'यत्राऽन्योऽन्यदि'ति श्रुतेः परोदीरितार्थनिरसनम् ।।

## ।। अथ 'अनन्तश्चात्मे'ति श्वेताश्वतरश्रुतेः परोदीरितार्थनिरसनम् ।।

नच 'ज्ञाज्ञौ द्वावजावीशानीशौ' इति श्रुतिप्रतिपन्नजीवे ईशान्यत्वं कल्पितमिति शक्याभ्युपगन्तुम् । तथा सति 'सत्यं ज्ञानमनन्तम्' इति श्रुतिप्रतिपन्नब्रह्मणि सद्रूपत्वादिक-मपि कल्पितमिति स्यात्, नचैतद्वाक्यं ब्रह्माभावप्रतिपत्तये प्रतिषेध्यविभागप्रतिपादनपर-मिति ॥

जीवेशभेदप्रतिपादनपरं 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'अजोह्येको भोक्तृभोगार्थ युक्ता'[(१)] 'अनन्तश्चात्मा विश्वरूपोऽह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्'(श्वे-उ-१-९), मे= मयोक्तमेतत्, त्रयम्, यदा, ब्रह्म विन्दते, तदा, आत्मा क्षेत्रज्ञः, अनन्तोऽकर्ता विश्वरूपो भवतीति तद्वाक्यार्थप्रतीतेरिति वाच्यम् । आत्मा= जीवात्मा, मे= मया उक्तमेतत्, त्रयं= भोक्तृ-भोगभोग्यरूपं, यदा, ब्रह्म विन्दते= ब्रह्मेति विन्दते, अजो ह्येको भोक्तृभोगार्थ-युक्ता'[(२)] अनन्तश्चात्मा विश्वरूपोऽह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्'(श्वे-उ-१-९) 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति श्रुतिभारतपर्यालोचनया ब्रह्मोपजीव्यकत्वात् ब्रह्माधीनसत्ताकत्वाच्च, तथाविधं विन्दत इति यावत्त दाऽनन्तः= देहतो नाशरहितः, अकर्ता = ईश्वरसङ्कल्पनिरुद्धकर्माकर्ता, अत एव स विश्वरूपश्च= तादृशकर्मापादितनानाविध-देहरहितश्च, भवति= मुक्तो भवति इति यावत्, इत्यर्थपरत्वेनैतद्वाक्यस्य ब्रह्मभावप्रतिपत्तये[(३)] प्रतिषेध्य-विभाग-प्रतिपादनपरत्वासिद्धेः । अत एव 'ज्ञाज्ञौ द्वावजावीशानीशौ' इति पूर्व-वाक्यस्य उदाहृतश्रुतिस्मृतिसिद्धउपजीव्य-उपजीवकभावनिर्वाहाय 'ईशानीशौ' इति 'ज्ञाऽज्ञ' -शब्दार्थयोर्जीवेशयोर्भेदप्रतिपादनम् ॥

॥ इति अनन्तश्चात्मेति श्वेताश्वतरश्रुतेः परोदीरितार्थनिरसनम् ॥

## ॥ अथ जीवेशभेदे श्रुत्यर्थनिरूपणम् ॥

किञ्च जीवेश्वरभेदे 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च' इति, 'अनीशश्चात्मा बुध्यते भोक्तृभावात्' इति च श्रुतिर्मानम् । नच 'अनीशात्मनो भोक्त्रन्तःकरणतादात्म्यात् बन्धः तद्विविक्तेश्वरस्वरूपज्ञानान्मोक्षः' इति तदर्थः । अन्तःकरणस्य भोक्तृत्वे मानाभावात् । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुत्या तद्युक्तस्यान्यस्यैव भोक्तृत्वाभि-धानात्, तदात्मनस्तद्युक्तत्वायोगाच्च । अत एव 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः' 'अनीशश्चात्मा भिद्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति

---

(१) भोग्यार्थ युक्ता इति इदानीन्तन पाठः ॥

(२) भोग्यार्थ युक्ता इति इदानीन्तन पाठः ॥

(३) 'प्रतिषेधाविभागप्रतिपादनपरत्वासिद्धेः' इति ताळपत्रस्थ पाठः ॥

कर्मफलभोक्तृत्वादनीशस्येशान्यात्मनो बन्धमुक्त्वा सर्वपाशेभ्यः ईशज्ञानान्मुक्त्युक्तिः । अन्यथा अन्तःकरणस्यैव वस्तुतः कर्तृत्वभोक्तृत्वादिबन्धवत्वेन तस्यैव मोक्ष इति अनीशात्मनो जीवस्य बन्धमोक्षौ न स्याताम् । नचेष्टापत्तिः । बन्धनिवर्तकेश्वरज्ञानार्थं जीवात्मनः श्रवणादौ प्रवृत्त्यभावप्रसङ्गात् । नच जीवात्मनस्तादृशान्तःकरणोपाधिसम्बन्धात् स्वस्मिन् कर्तृत्वभोक्तृत्वाध्यासात् तन्निवर्तकज्ञानाय श्रवणादौ प्रवृत्तिर्युज्यत इति वाच्यम् । तथा सति स्वमुखे दर्पणौपाधिकवक्रिमाध्यासवतोऽपि 'इदमेव तदौपाधिकमिति' ज्ञानतस्तन्निवृत्त्यर्थं प्रवृत्तिप्रसङ्गात् ॥

नच 'कामः सङ्कल्पो विचिकित्सा एतत्सर्वं मन एव' इति सावधारणश्रुत्यर्थपरिशीलनवतः कर्तृत्वभोक्तृत्वादिकं तदुपाधिकं जीवात्मनो तत्स्वाभाविकमिति विशेषदर्शित्वं दुर्लभम् । 'कार्योपाधिरयं जीवः' इति श्रुत्यन्तरस्य स्पष्टमेव उपाधित्वप्रतीतेः ॥

यद्यपीतरश्रुतौ 'कार्य'शब्दः कार्यमात्राभिधायिनोऽन्तःकरणरूपकार्यविशेषवाची । तथाऽपि 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः'(ब्र-बि-उ-२) इति श्रुत्या कार्येषु बन्धमोक्षयोरन्तःकरणस्यैव विशिष्य कारणत्वाभिधानात् तत्र 'कार्य'पदेनान्तःकरणमेव विवक्षाविषया इति अवधार्यत इति ॥

'अत्रान्तरो वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनि मुक्ताः' इत्येतदपि श्रुतिवाक्यं जीवेशभेदे मानम् । नच आन्तरम्= अनुस्यूतम्, ब्रह्म विदित्वा, इति तदर्थः । अन्तरम् इत्यकारप्रश्लेषकल्पनापेक्षया द्विमात्राकारकल्पनायां गौरवात् । नच तथाऽपि 'अन्तर'शब्दस्य नानार्थत्वेन, अन्तरम्= अवकाशभूतं, ब्रह्म विदित्वा इति तदर्थ सम्भवात्, न भेदपरत्वावधारणं सम्भवतीति वाच्यम् ।

'उद्गीतमेतत् परमं तद्ब्रह्म तस्मिन् स्वयं स्वप्रतिष्ठाक्षरं च ।
अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनि मुक्ताः'

इति वाक्ये 'तस्मिन् स्वयं प्रतिष्ठाक्षरं च' इति वेदान्तैरुच्चैर्गातस्य परमस्य ब्रह्मणः लोकत्रयादेश्च आधार-आधेय(स्व)भावप्रतिपादनेन परब्रह्मणोऽवकाशदेशरूपत्वप्रतीतेः 'अन्तर'-शब्दस्यावकाशपरत्वस्वीकारवैयर्थ्यात् । नच उक्तरीत्याधाराधेयभावप्रतिपादनेन भेदस्यापि

लाभात् भेदपरत्वाङ्गीकारोऽपि व्यर्थ इति वाच्यम् । 'सदा कालः' 'सर्वत्र देशः' इति प्रतीत्या,'स्वे महिम्नि प्रतिष्ठितः' इति श्रुत्या चाभेदेऽप्याधार-आधेयभावसिद्ध्या अत्रापि तथैव-आधार-आधेयभाव-शङ्कायां भेदपर'अन्तर'शब्देन तन्निराससम्भवेन तदवैयर्थ्योपपत्तेः । नच 'अत्रान्तरं वेदविदो विदित्वा' इत्यत्र 'अविदित्वा' इति पदविभागेन 'भेदम् अविदित्वा' इत्यर्थपरत्वाश्रयणे[१] मानमस्ति । नच यथाश्रुतार्थे बाधकं विना नञ्प्रश्लेषाकल्पना युक्ता । नच यथाश्रुतार्थे 'तमेवं विदित्वाऽऽतिमृत्युमेति नान्यःपन्था' इति श्रुतिरेव बाधिकेति वाच्यम् । निरस्तत्वात् । अभेदे 'ब्रह्मणि लीना' इति सप्तम्यनुपपत्तेश्च । नच भेदे लयानुपपत्तिः । भेदसत्वे एव 'कुञ्जे देवदत्तो लीनः' 'उदकेषु लवणं लीनम्' इति अविगीतव्यवहारात् प्रत्युताभेद एव लीनव्यवहारादर्शनात् नास्याभेदपरत्वं युक्तम् ॥

अत एव 'जुष्टस्ततस्तेनामृतत्वमेति' इति जीवस्य भेदाविनाभूतब्रह्मप्राप्तिप्रतिपादनम् । नह्यभेदप्राप्तिर्दृष्टचरी । योनिमुक्ता इति= प्रकृतिबन्धविमुक्ता इत्यर्थः । नचैवमेतत्, श्रुतिव्याख्याने **'ये पूर्वे देवा ऋषयश्च तं विदुस्ते तन्मयो अमृतो वै बभूवुः'**(श्वे-उ-५-६) इति जीवस्येश्वरभाव प्रतिपादकश्रुत्यन्तरविरोध इति वाच्यम् । [२]ये तन्मयाः= ज्ञानप्रचुराः, अमृता वै= मुक्ता वै, बभूवुरिति तदर्थविज्ञानेनाविरोधात् । अन्यथा 'जुष्टस्ततस्तेनामृतत्वमेति' 'ब्रह्मविदाप्नोति परम्' 'तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इत्यादिब्रह्मप्राप्तिप्रतिपादकानेकश्रुतिविरोधः स्यात् । 'ब्रह्म वेद ब्रह्मैव भवति' इत्यत्रापि 'भवति' इत्यस्य प्राप्त्यर्थत्वाश्रयणादविरोधः। नचैवमर्थपरत्वे मानाभावः । प्रथमोपस्थित-द्वितीयान्तब्रह्मशब्दानुरोधेन द्वितीयब्रह्मशब्देऽपि तथात्वप्रत्यभिज्ञानेन तस्यैव तत्र मानत्वात् । 'यदा पश्यः पश्यते' इत्यत्रात्मनेपदवदत्र परस्मैपदमुपपद्यत इत्युक्तमेव । नच 'तन्मया'इत्यत्र 'तत्'शब्देन 'तं विदुः' इति द्वितीयान्तोपस्थापितस्यैव परामर्शः, मयट् च तादात्म्यर्थः किन्न स्यादिति वाच्यम् । तथा सति ब्रह्मप्राप्तिप्रतिपादकोदाहृतानेकश्रुतिविरोधात् । तादात्म्ये मयटोऽननुशासनाच्च ॥

---

(१) 'भेदमनिवित्वेत्यर्थपरत्वाश्रयणे' इति ताळपत्रस्थपाठः ।

(२) ते तन्मयाः इति ताळपत्रस्थ पाठः ॥

एतेन 'ब्रह्मणि लीना' इति प्रतिपादितं सायुज्यमैक्यं न भेदज्ञानफलं सम्भवतीति निरस्तम् । सायुज्यत्वेनाभिमतस्य लयस्याभेदरूपत्वे मानाभावात् । 'युजिर्योगे'(१) इति युजः प्राप्त्यर्थत्वेन तस्याऽभेदविरोधित्वाच्च ॥

'स तत्त्वतोऽन्य' इत्येतत् श्रुतिरपि जीवेश्वरभेदे मानम् । नच तत्र 'तत्त्व'शब्देन 'भावांश्च सर्वान्विनियोजयेद्यः' इति पूर्ववाक्यपर्यालोचनया विनियोज्यत्वेनोक्तानां भावानां षोडशकलानामभिधानात् । तेषां भावानामभावे यस्ततोऽपि पूर्ववाक्योक्तमयोगम्, असङ्गत्वं याति स तत्त्वतः, तेभ्यो भावेभ्योऽन्य इत्यर्थविज्ञानात्, ततोऽपि पूर्ववाक्येन च,

(२)'तत्कर्म कृत्वा विनिवर्त्य भूयस्तत्त्वस्य सत्वं स समेत्य योगम् ।
एकेन द्वाभ्यां त्रिभिरष्टभिर्वाकालेन चैवात्मगुणैश्च सूक्ष्मैः'

इत्यनेन तत्कर्म= पुण्यपापात्मकं, भूयः, कृत्वा, विनिवृत्य= ततः कर्मत उपरम्य, तत्त्वस्य= तत्त्वानां तत्त्वमधिष्ठानभूतं, सः= आत्मा,समेति । एकेन ज्ञानेन, द्वाभ्यां= पुण्यपापाभ्यां, त्रिभिर्गुणैः= सत्त्वरजस्तमोलक्षणैः, अष्टभिः= बुध्यहङ्कारमनस्तन्मात्रैः वा कालेन चैव, सूक्ष्मगुणैः= आत्मगुणैः कामसङ्कल्पादिभिश्च अयोगः योगीति उत्तरवाक्येन योजना- सम्भवात् । 'स तत्त्वतोऽन्यः' इत्युत्तरवाक्यस्य न जीवेशभेदे मानत्वमिति वाच्यम् । पूर्ववाक्यपर्यालोचनयैव उत्तरवाक्ये 'स तत्त्वतोऽन्यः'(श्वे-उ-६-३) इत्यत्र 'तत्त्व'शब्देन विनियोज्य भावानामभिधानात् । पूर्ववाक्ये षष्ठ्यन्तत्वप्रतिपाद्यानां विनियोज्यभावाना- मुपसर्जनत्वात् तदपेक्षया द्वितीय'तत्त्व'शब्दोपस्थाप्यस्यैव प्राधान्यात् । तच्च 'तत्त्वं' नारायणपर इति पर्यालोचनया ब्रह्मरूपमेवेति तदेवात्र 'तत्त्व'शब्देनाभिधीयते । एवं च 'स तत्त्वतोऽन्य' इत्युत्तरवाक्यं कथं न जीवेशभेदे मानम् ॥

तत् कर्म, भूयः कृत्वा, विनिवृत्य= ततःकर्मतः,(३)उपरम्य, तत्त्वस्य= तत्त्वानां मध्ये, तत्त्वं= परं तत्त्वं, स= जीवात्मा, समेति= एकादिभिरयोगं च, समेति= तत्कृततद्-

---

(१) श्रम्विकरणम् रुधादिगणम् ॥ (१४४५)

(२) 'तत्कर्मकृत्वा विनिवर्त्त्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम्' इति इदानीन्तन पाठः ॥

(३) 'उपक्रम्य' इति ताळपत्रस्थ पाठः ॥

दुःखशून्यो भवति' इति पूर्ववाक्यार्थविज्ञानात्, पूर्ववाक्योक्त'तत्त्व'शब्दितपरमात्मप्राप्ति-रमुख्या चेति वक्तुम् उत्तरवाक्यप्रवृत्तिरिति । 'स तत्त्वतोऽन्यः संयाति' 'तत्त्व'शब्दितं परमेश्वरमिति योजनायां बाधकाभावादिति ॥

यद्वा पूर्ववाक्योक्तं स्वकादिभि(स्वकार्यादिभिः-पा)र्योगस्येत्यकर्मकारणमासाद्य 'तत् कर्म कृत्वा भूयः विनिवृत्य ततः= उपरम्य, तत्त्वस्य= परमार्थसतः प्रपञ्चस्य, सत्त्वं नियामकं परमार्थःसन् परमात्मस्वरूपं= तत्वशब्दस्य तत्वज्ञानात्, निःश्रेयसाधिगम इत्यादौ अना-रोपितरूपे परमार्थे सति, अभियुक्तप्रयोगदर्शनात् सः= जीवात्मा, याति । यो भावांश्च सर्वान् विनियोजयेत्, तेषां= भावानाम्, अभावे= कर्मक्षये सति, यत् कृतकर्मनाशो भवति, स तत्त्वतः= परमार्थसतः परमात्मना अन्यः इति योजना द्रष्टव्या ॥

नचोदाहृतश्रुतीनाम् उक्तरीत्या भेदपरत्वेन व्याख्याने 'नान्योऽतोऽस्ति द्रष्टा नान्य-दतोऽस्ति द्रष्टृ' इत्यादिभिः निषेधश्रुतिविरोध इति वाच्यम् । अनयोः श्रुत्योर्भेदनिषेध-परत्वस्य निरस्तत्वात् । नच जीवभेदस्य प्रत्यक्षादिसिद्धत्वेनानुपदेश्यत्वमिति वाच्यम् । प्रत्यक्षस्य सम्भावितदोषत्वेनार्थसत्तानिश्चायकत्वानुपपत्तेस्तन्निश्चयाय श्रुत्यैव भेदस्यावश्य-मुपदेश्यत्वाच्च ॥

एतेन अन्यथाव्याख्येयभेदश्रुतीनामपि निषेधप्रतियोगिसमर्पकत्वेनोपयोग इति निरस्तम् ॥ जीवप्रतियोगिकेश्वरानुयोगिकभेदस्य मानान्तराप्राप्तस्य श्रुत्यैकसमधिगम्यस्य श्रुत्या निषेधा-योगात् । अन्यथा विकल्पाद्युच्छेदापत्तेरित्युक्तम् । नचैवं वचनद्वयप्रामाण्यात् जीवेश्वरयो-र्भेदाभेदप्रसङ्गः । 'नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ' इत्यादिश्रुतीनां भेदनिषेधपरत्वस्य निरस्तत्वात् ॥

'अस्मान् मायी सृजते विश्वमेतत्' 'तस्मिंश्चान्यो मायया सन्निरुद्धः' इत्येतदपि श्रुतिवाक्यं जीवेश्वरभेदे मानम् । नचैतच्छ्रुतिवाक्यं –

'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' (श्वे-उ-४-१०)

इति जीवानां महेश्वरांशत्वाऽवेदकश्रुत्या निरुद्धम् । न वास्तवजीवेश्वरभेदे मानम् । तथा च निरोध इव भेदोऽपि मायिकः । अत एवेश्वरस्य 'निष्कलं निष्क्रियं शान्तम्'(श्वे-उ-६-१९) इति श्रुत्या तु अवास्तवांशाभावप्रतिपादनमुपपद्यते । नह्यंशांशिनोर्वास्तवभेदसत्वेंशस्यावास्तवत्वप्रतिपादनं युज्यत इति वाच्यम् । 'तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' इति सर्वस्य जगतो महेश्वरावयवव्याप्तत्ववर्णनेन तस्योदाहृतजीवेश्वरभेदपर श्रुत्यपरिपन्थित्वात् । नह्यनेन वाक्येन जीवानां मायिमहेश्वरांशत्वप्रतीतिरस्ति । तस्य अपदार्थत्वादवाक्यार्थत्वाच्च । नच 'अकायमव्रणम्'(ई-उ-८) 'तदपाणिपादम्' 'अपाणिपादो जवनो गृहीता' (श्वे-उ-३-१९) इत्यादिश्रुत्येश्वरस्यावयवनिषेधात् तदुक्तार्थपरत्वमप्यनुपपन्नमिति वाच्यम् ।

'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो वाहुरुत विश्वतस्पात्'
'सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमत्' (श्वे-उ-३-१६)

इत्यादिश्रुत्या अस्मदादिविलक्षणावयवविधानसामान्यनिषेधस्य तदतिरिक्तास्मदादिसाधारणावयवविषयत्वेन तदवयवविधिनिषेधयोरविरोधात् । अन्यथा 'विश्वतश्चक्षुः'इत्यादौ 'विश्वतः' 'सर्वतः'शब्दयोर्वैयर्थ्यात् ॥

एतेन 'निष्कलं निष्क्रियं शान्तम्' इति श्रुत्या कलादिशब्दितांशक्रिययोः निषेधात् तदवास्तवत्वमिति निरस्तम् । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुत्या परमेश्वरशक्ति-ज्ञान-बल-क्रियाणां विविधत्व-स्वाभाविकत्व-प्रतिपादनेन अस्मदादि-साधारण-शक्ति-ज्ञान-बल-क्रिया-विषयत्वेन 'निष्कलम्'इत्यादिनिषेधस्य ततस्तदवास्तवत्वासिद्धेः । अत एव 'परास्य शक्तिः' इति श्रुतौ न केवलमस्य शक्तिरेव परा, विविधा, स्वाभाविकी, किन्त्वस्य ज्ञानबलक्रिया अपि, परा, विविधा स्वाभाविक्यश्चेति प्रतिपादक'च'कारः ॥

किञ्च ईश्वरस्य सर्वात्मना शरीराद्यभावे समन्तात् प्रकाशमानशरीरवत्वप्रतिपादकम् 'आकाश शरीरं ब्रह्म'(तै-उ-१-१७) 'तस्यैष आत्मा विवृणुते तनूं स्वाम्'(कठ-उ-२-१३) इत्यादिश्रुतिवाक्यमनर्थकं स्यात् । तथा च श्रुत्यन्तरं 'यदात्मको भगवान् तदात्मिका

व्यक्तिः किमात्मको भगवान् ज्ञानात्मक'[१] इति भगवद्वत् तद्देहस्य विज्ञानादिरूपत्वप्रतिपादकं चानर्थकं स्यात् ॥

अत एव निरोध इव भेदोऽपि मायिक इति निरस्तम् । 'मायां तु प्रकृतिं विद्यात्' इति श्रुत्यैव 'माया'शब्दस्य स्वविवक्षितार्थ परत्वकथनेन लोकप्रसिद्ध 'मायावि' 'माया'परत्वे मानाभावेन, निरोधस्य प्रसिद्धस्य मायिक-गज-तुरगादिवदवास्तवत्वासिद्धेः । अन्यथा श्रुतौ 'माया'शब्दस्य मिथ्यार्थत्वस्य लोकसिद्धत्वेन प्रकृत्यर्थत्वेन व्याख्यानाऽनुपपत्तेः । 'प्रकृति'-शब्दस्यच अस्य 'प्रकृतिर्मृत्युः' 'प्रकृत्या चारुः' इत्यादावुपादानादौ अविगीताभियुक्त-प्रयोगसत्त्वेन 'माया'शब्दवन्नानार्थत्वेऽपि कार्यविशेषस्योपादानं विना निर्वाहायोगेन तदपेक्षया उपादानोपस्थापनेनैव निरसनीयत्वेन तत्परस्यावश्यकत्वात् श्रुतौ तस्यान्यार्थ-परत्वशङ्कानवकाशः ॥

अत एव जीवानां परमेश्वरावयवत्वप्रतिपादकश्रुतिर्गौणी तदधीनत्वादिना नेया नतु तदभिन्नत्वेनेति परेण मद्याख्यानत्वेन यत् कल्पनं कृतं तन्निरस्तम् । उदाहृतश्रुतावयवशब्दस्य मुख्यावयवपरत्वेन जीवपरत्वे मानाभावात् । तथात्वे लक्षणापत्तेश्च ॥

नच जीवेश्वरयोर्भेदे –

**'वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् ।**
**जन्मनिरोधं प्रवदन्ति यस्य ब्रह्म वादिनो हि प्रवदन्ति नित्यम्'** (श्वे-उ-३-२१)

इति सर्वात्मकत्वश्रुतिविरोध इति वाच्यम् । 'सर्वात्मानम्'इति 'आत्म'शब्दस्य 'शरीर'-परत्वेनाविरोधात् । सर्वश्चेतनाचेतनवर्ग आत्मा यस्य तं= सर्वात्मानम् इति विग्रहसम्भवात्, चेतनाचेतनवर्गस्य परमेश्वरशरीरत्वं 'यस्यात्मा शरीरम्' 'यस्य पृथिवी शरीरम्' इत्यादि-श्रुत्यन्तरसंवादेनाविरुद्धम् । अन्यथा 'सूर्य आत्मा जगतस्तस्थुषश्च'(ऋ-सं-१-११५-१)इति श्रुत्या सूर्यस्यापि स्थावर-जङ्गमरूपसर्वात्मकत्वप्रसङ्गः । नच 'तस्मिंश्चान्यो मायया' इत्यत्र 'मायया अन्यस्सन् निरुद्ध' इति योजनायाम् 'अन्य'शब्दितभेदस्य मायिकत्वं दुर्वारमिति

(१) ब्रह्मसूत्रभाष्ये पत्युरधिकरणे(२-२-४१) उदाहृतश्रुतिः ॥

वाच्यम् । 'तस्मिन्' इति प्रथमोपस्थितसप्तम्यन्तेन 'अन्य'शब्दस्यान्विततया निराकाङ्क्षत्वात् ॥

एतेन 'द्वे ब्रह्मणी वेदितव्ये' इत्येतदपि 'द्वे विद्ये वेदितव्ये इति हस्म ब्रह्मविदो वदन्ति । परा चैवापरा । तत्रापरा ऋग्वेदो यजुर्वेदःसामवेदोऽथर्ववेदःशिक्षाकल्प'(१) इत्याद्युक्त्वा 'अथ परा यया तदक्षरमधिगम्यते' इति तत्परार्थत्वेन वेदितव्यत्वपरमिति न जीवेश्वरभेदपरह....त्यफलश्रुतेरिति निरस्तम् ॥

'ग्रहं सम्मार्ष्टि'(२) इत्यस्य सम्मार्गपरत्वेन ग्रहत्ववैशिष्ट्यपरत्वाभावेऽपि ग्रहत्वस्योद्देश्यतावच्छेदकत्वेन वास्तवत्ववत् 'द्वे ब्रह्मणि'इत्यस्य वेदितव्यपरत्वेन ब्रह्मशब्दार्थ भेदपरत्वाभावेऽपि द्वित्वरूपभेदस्य उद्देश्यतावच्छेदकतया वास्तवत्वानपायात् ॥

एतेनैव प्रत्यक्षादिनैव जीवादिभेदस्य प्राप्तत्वेन श्रुतेस्तदप्रसञ्जकत्वात्, श्रुतेश्च मुमुक्षुं प्रति 'एकमेवाऽद्वितीयं ब्रह्म' इति निषेधभेदानुवादकत्वमिति परास्तम् । योग्यायोग्य-प्रतियोगिकभेदमात्रस्य प्रत्यक्षप्राप्तत्वायोगात् । अनुमानमात्रस्य सम्भाव्यकत्वेन तदनिश्चायकत्वेनानुवादकत्वाप्रयोजकत्वाच्च ॥

अन्यथा 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतेरप्यनुमानप्राप्तमिथ्यात्वानुवादित्वप्रसङ्गात् । नच मिथ्यात्वानुवादे प्रयोजनाभावः । 'विश्वं सत्यम्'(ऋ-सं-२-२४-१२)इत्यादिना निषेधाय, श्रुत्या तदनुवादोपपत्तेरित्युक्तम् ॥

॥ इति जीवेशभेदे श्रुत्यर्थनिरूपणम् ॥

## ॥ अथ भेदप्रपञ्च निषेधकश्रुत्यर्थनिराकरणम् ॥

ननु 'रूपं रूपं प्रतिरूपो बभूव रूपं तदस्य प्रतिचक्षणाय' (ऋ-सं-६-४७-१८) इति 'उपदेशादयं वादः' (मा-उ-२-१०) इति च श्रुतिभ्यां भेदप्रपञ्चस्य निषेधज्ञानप्रयोजनकत्वप्रतीतेः न तत्परत्वम् । प्रतिचक्षणाय= वर्जनाय, 'अथायमादेशो नेति नेति' इति, 'उपदेशात्= प्रयोजनात्' इति तयोरर्थः । इदमेवाभिसन्धायाह नारदः–

(१) 'सामवेदो अथर्वाङ्गिसरः' इति ताळपत्रस्थपाठः ॥

(२) ग्रहसम्मार्जनाधिकरणम् - जै.सू. ३.१.७

'परस्तु निर्गुणः प्रोक्तः अहङ्कारयुतोऽपरः ।
तयोरभेद विज्ञानं योग इत्यभिधीयते ।
एकः शुद्धःपरो नित्यः परमात्मा जगन्मयः ।
नृणां विज्ञानभेदेन भेदवानिव लक्ष्यते ।
एकमेवाऽद्वितीयं तत् परं ब्रह्मसनातनम् ।
गीयमानं च वेदान्तैस्तस्मान्नास्ति परं द्विज' ।।

इति चेन्न । भेदप्रपञ्चनं निषेधज्ञानप्रयोजनकमित्यस्यार्थस्य सर्वथा ततः प्रतीत्यभावात्, प्रत्युत 'रूपं रूपं प्रतिरूपो बभूव' इति श्रुत्या बिम्ब-प्रतिबिम्ब-भावस्य प्रतीत्या भेदपरत्वस्यैवोन्नेयनात् । नच वर्जनार्थक'प्रतिचक्षण'शब्दसमभिव्याहारात् निषेध्यत्वलाभेन बिम्ब-प्रतिबिम्बभावो न वास्तव इति वाच्यम् । 'प्रतिचक्षण'शब्दस्य निरूप्य-निरूपक-भावार्थत्वेनावर्जनार्थत्वात्, प्रतिचक्षणाय= निरूपणायेति यावत् । 'अथायमादेशो नेति नेति' इति श्रुत्याऽपि 'इति न' 'इति न' इति परमात्मनः तेन तेनाकारेण प्रमाणप्रतिपन्न-चेतनाचेतनात्मकसकलप्रपञ्चवैलक्षण्यमेव उपदिश्यत इति । 'उपदेशादयं वाद' इति श्रुत्याऽपि भेदप्रपञ्चनस्य निषेधज्ञानप्रयोजनकत्वप्रतीत्यसिद्धेश्च ।।

'परस्तु निर्गुणः प्रोक्तः' इत्यादि नारदवाक्येनापि भेदप्रपञ्चनस्य न निषेधज्ञानप्रयोजनकत्वं प्रतीयते । तत्र 'तयोरभेदविज्ञानम्' इत्यत्र 'अभेद'शब्देन स्थानैक्यादि-प्रयुक्तामुख्याभेदस्यैव विवक्षणात् । परेणापि निर्गुणाहङ्कारयुक्तयोर्मुख्याभेदस्यास्वीकाराद-सम्भवाच्च ।।

अत एव 'एकः शुद्धः परो नित्यः' इत्युत्तरवाक्ये 'नृणां विज्ञानभेदेन भेदवानिव लक्ष्यते' इति शुद्धे एव भेदराहित्ये प्रमाणमुक्तम् । अत एव च तत्रैव 'एकमेवाऽद्वितीयं तत् परं ब्रह्म' इति परब्रह्मण एव समाभ्यधिकराहित्यादिकमुक्त्वा 'तस्मान्नास्ति परं द्विज' इत्युपसंहारे परस्याधिकस्यैव निषेधः । अन्यथा 'परं ब्रह्म'इति विशेषणवैयर्थ्यात् । अत एव भगवता सूत्रकारेण 'भोक्त्रापत्तेरविभागः स्याल्लोकवत्' (ब्र.सू. २.१.१४) इति 'सायं सर्वे गावः गोष्ठे एकीभवन्ति' 'इदानीं चोलनृपस्य कर्णाटक ईश्वरोपसममैक्यं जातम्'

इत्यादिलौकिकदृष्टान्तावष्टम्भेन 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इत्यादिश्रौताभेदव्यवहारस्य स्थानैक्यमत्यैक्यादिकृतामुख्याभेद एव विषयः प्रदर्शितः । परीत्यैव–

**'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायापतौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः'** (कठ-उ-१-३-१)

इति कठवल्लीवाक्यपर्यालोचनया जीवेशभेदे मानमित्युक्तमेव । नच भेदः औपाधिकः व्यवहारिको वा। तद्भेदस्य तथात्वे सति निरस्तत्वात्, निरसिष्यमाणत्वाच्च । 'च्छाया तपौ ब्रह्मविदो वदन्ति' इति जीवेश्वरयोः च्छाया-आतपत्वरूपव्यावर्तकधर्मत्वस्य ब्रह्मवद्व्यावहारिकविषयत्वाभिधानेन प्रामाणिकव्यावहारिकविषयतया ब्रह्मवास्तवत्वावश्यम्भावेन तन्नियततदुभयपरस्परभेदस्यापि सत्वावश्यम्भावाच्च ।।

एतेन 'छायात्वमातपे कान्तौ प्रतिबिम्बेऽपि च' इत्यभिधानात् 'छाया'शब्दस्य प्रतिबिम्बभूतजीवपरत्वम् । एवं 'च्छाया'शब्दसमभिव्याहाराद् 'आतप'शब्दस्य बिम्बभूतब्रह्मपरत्वम् । तथा च 'च्छायातपौ'इति बिम्ब-प्रतिबिम्बभावौ उच्यते न त्वप्रकाशप्रकाशत्वाभ्यां व्यावर्तकधर्माभ्यां विशिष्टौ जीवेश्वरौ । 'अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः' इति जीवस्याऽपि प्रकाशरूपत्वाश्रुतेः । तथा च बिम्बप्रतिबिम्बभावनियतभेदस्यावर्जनीयत्वेन तस्य परमार्थसत्वं प्रतिबिम्बदर्शनो 'ममैवेदं मुखम्' इति स्वमुखाभेदेन तत्रानुभवदर्शनेन मुख-प्रतिमुखभेदस्य मिथ्यात्वकल्पना इति निरस्तम् ।।

एवमभेदानुभवस्य स्वमूर्तिसदृशसुधामयमूर्तौ-चित्रलेखितमुखे छायामुखादौ च दर्शनेन तादृशसुधामयमूर्त्यादेरपि स्वशरीरादिना वास्तवभेदापत्त्या तद्भेदस्य बिम्ब-प्रतिबिम्बभेदवादे वा सत्यत्वापत्तेः । तस्मात् बिम्ब-प्रतिबिम्बभावनियतभेदो वास्तव एव । अभेदानुभवस्त्वन्तरङ्गसादृश्यनिबन्धनः 'तानेव शालीन् भुञ्ज्महे' इत्याद्यनुभववदुपपन्नः । अन्यथा तद्भेदस्यौपाधिकत्वादिना मिथ्यात्वं निश्चिन्वतः परस्य स्वस्मिन् कर्तृत्व-भोक्तृत्वादिरूपस्य बन्धस्याहङ्कारोपाधिकृतत्वं निश्चिन्वतस्तन्निवृत्त्यर्थं प्रवृत्तिमस्तु । अमुखे प्रतीयमानस्य वक्रत्व-श्यामत्वादिधर्मस्य दर्पणाद्युपाधिकृतत्वं निश्चिन्वतोऽपि तन्निवृत्त्यर्थं प्रवृत्तिप्रसङ्गात् ।।

तस्यौपाधिकत्वनिश्चयेन मिथ्यात्वनिश्चयानवश्यम्भावात् । भावेच-अकर्तृत्व-भोक्तृत्वादि-रूपबन्धस्यापि दर्पणाद्युपाधिकृतवक्रत्वश्यामत्वादि स्वमुखधर्मनिवृत्त्यर्थमप्रवृत्तिवत् कर्तृत्व-भोक्तृत्वादिरूपाहङ्कारोपाधिकबन्धनिवृत्त्यर्थमप्रवृत्तिप्रसङ्गात् ॥

किञ्च गुरुगृहवासस्याध्ययनाद्युपाधिकृतत्वेऽप्यमिथ्यात्ववद् बिम्ब-प्रतिबिम्बभेदस्य दर्पणाद्युपाधिकृतत्वेऽप्यमिथ्यात्वमस्तु । एवं च दृष्टान्ताभावेन बिम्ब-प्रतिबिम्बभावनियत-जीवेशभेदस्यौपाधिकत्वेऽप्यमिथ्यात्वमविकलम् । तथासत्युपाधिनिवृत्त्या जीवेशभेदनिवृत्तिः स्यादिति चेन्न । अध्ययनादिरूपोपाधिनिवृत्तावपि सुप्तिमूर्च्छयोः शिष्यस्य तत्कृतगुरुगृहा-वासानुवृत्तिदर्शनात् । 'उपाधि'शब्दस्याध्ययनदर्पणादिषु तुल्यत्वेऽपि दर्पणादिरेव मुखभेद-तद्भेदकस्यात्मत्वादिधर्माध्यासहेतुर्नाध्ययनादिरिति चेत्, दर्पणादेरध्यासहेतुत्वमङ्गीकुर्वता मुखादेरध्यस्तत्वायोगेन पारिशेष्यात्, 'दर्पणे मुखमिदं' 'मुखं वक्रं श्यामं च' 'अस्मान् मुखाद्विलक्षणम्' इत्यादिप्रतीतेरनध्यासत्त्वस्यैवाभ्युपेयत्वात् । तथा हि । दर्पणसन्निधाने पार्श्वस्थस्य 'इदं मुखम्' 'बिम्बमिदम्' 'प्रतिबिम्बमिदम्' 'अवदातमिदम्' 'श्याममिदं च' इति प्रतीयत इत्यनुभवसिद्धम् । आबालं बालकः कश्चित् प्रतिबिम्बं दृष्ट्वा बिभेति आश्चर्य-बुध्या हसतीत्याद्यप्यनुभवसिद्धम् । सत्यपि बिम्ब-प्रतिबिम्बभेदादिज्ञाने 'तस्येदं मुखम्' 'तस्यैवेदं मुखम्' इत्यभेदज्ञानं तत्समानाकारम् । नच विरोधिनि तद्भेदज्ञाने जागरूके अप्रामाण्यशङ्काऽनास्कन्दिते तदभेदज्ञानमुत्पत्तुमर्हति ॥

एवं च तयोर्ज्ञानयोर्भिन्नविषयत्वमन्यतरस्याप्रामाण्यशङ्कास्कन्दितत्वं वा सर्वथा स्वीकार्यम् । अन्यथा 'विरोध'पदार्थस्य लोके दत्तजलाञ्जलित्वप्रसङ्गात् । नचात्र शङ्खे-पीतत्व-श्वेतत्वज्ञानयोः पीतत्वज्ञानं प्रबलदोषादुत्पद्यमानमप्रामाण्य-शङ्काशून्य-परीक्षित-श्वैत्यप्रत्यक्षानुगृहीततादृशानुमित्या अनन्तरभावितच्छङ्काकलङ्कितमेव उत्पद्यत इतिवत् उक्तिसम्भवोऽस्ति । उक्तबिम्बप्रतिबिम्बस्थलीयज्ञानयोरुभयोरपि तुल्यवदेवाप्रामाण्य-शङ्काऽनास्कन्दितयोरुत्पत्तिदर्शनात् । तथा च भिन्नविषयतयैव तयोरविरोधो वाच्यः । प्रकारान्तरासम्भवात् । एवं च बिम्बभूतमुखवत्-प्रतिबिम्बभूतमुखस्यापि 'दर्पणे मुखम्' इति ज्ञानमुपाधिसन्निधिवशात् उत्पद्यमानमपि भ्रमत्वापादककारणाभावाद् 'अनध्यासरूपमेव

उत्पद्यत' इति अमिथ्यात्वमेवेति । नहि दर्पणे 'बिम्बभूतं मुखं नास्ति नासीन्न भविष्यति' इतिवत् 'प्रतिबिम्बभूतमपि मुखं नास्ति नासीन्न भविष्यति' इति प्रतीतिरनुभवसिद्धा । येन दर्पणे तस्येवास्यापि त्रैकालिकनिषेधः सिद्ध्येत् ॥

किञ्च प्रतिबिम्बस्याध्यस्तत्वमभ्युपगच्छताऽपि स्फटिकस्येव 'दर्पणे एतन्मुखप्रतिबिम्बम्' इत्यनुभवेन प्रतिबिम्बं प्रत्यध्यासाधिष्ठानत्वं दर्पणस्यैवाभ्युपेयं नतु मुखादेः । अन्यथा मुखे दर्पणस्थत्वस्येव लौहित्ये स्फटिकस्थत्वस्य तदभिन्नत्वबाधसविषयत्वमङ्गीकृत्य मुखस्येव लौहितस्यैवाध्यासाधिष्ठानत्वमङ्गीकार्यं स्यात् । नच तत्रैवम् अत्रानेवमित्यत्र विशेषहेतुं पश्यामः । तथा चैवमपि व्यावहारिक-प्रातिभासिक-रजतयोरिव बिम्ब-प्रतिबिम्बयोरपि व्यावहारिक-प्रातिभासिकमुखयोः भेदो व्यावहारिक एव दृष्ट इति जीवेश्वररूपबिम्ब-प्रतिबम्बयोरपि व्यावहारिक-पारमार्थिक-योर्भेदोऽपि पारमार्थिक एव स्यात्, 'न्यूनाधिक-सत्ताकप्रतियोगिकतदयोगिकभेदयोर्धर्मसमसत्ताकत्व'नियमेन जीवप्रतियोगिकेश्वरानुयोगिकभेद-पारमार्थिकत्वस्य दुर्वारत्वात् ॥

॥ इति भेदप्रपञ्चनिषेधकश्रुत्यर्थनिराकरणम् ॥

## ॥ अथ जीवेश्वरभेदस्यौपाधिकत्वनिरसनम् ॥

अपि चेश्वरप्रतिबिम्बत्वेन स्वीकृतस्य जीवचैतन्यस्य प्रतिमुखवदौपाधिकत्वे उपाधि-निवृत्तिप्रयुक्तनिवृत्त्यवश्यम्भावेन तदभेदपर'तत्त्वमसी'त्यादिवाक्यानां निर्विषयत्वेनानर्थक्य-प्रसङ्गः । नच तेषां तत्र पदलक्षितानिष्कृष्ट[१]चैतन्याभेदपरत्वेन नानर्थक्यमिति वाच्यम् । 'तत्त्वम्'पदाभ्याम् उपहितस्वमुख्यार्थभूतचैतन्यशरीरप्रविष्टोपाध्यादिविनिर्मुक्तचैतन्यमात्रं लक्षणयाऽवस्थाप्य तदभेदबोधनसम्पादनेऽपि वस्तुतद्बोधविषयत्वस्य 'तत्त्वम्'पदमुख्यार्थ-भूतोपहितचैतन्यत्वेनोपाधिनिवृत्त्या निवृत्त्यवश्यम्भावनातादवस्थ्यात् ॥

नच 'तत्त्वम्'पदमुख्यार्थभूतोपहितचैतन्यशरीरप्रविष्टचैतन्यादन्यत् निष्कृष्टचैतन्यं नामाऽस्ति । मानाभावात् । नचोपहितवस्तु शरीरप्रविष्टं किमपि उपाधिनिवृत्तौ च निवृत्त-मानं दृष्टचरम् ॥

---

(१) निष्कृतचैतन्याभेद इति ताळपत्रस्थ पाठः ॥

किञ्च 'तत्त्वमसि' इति 'तत्त्वम्'पदमुख्यार्थाभेदाबोधने कथं? परस्य जीवेश्वराभेद-रूपेष्टसिद्धिः । अन्यथा 'तत्त्वम्'पदाभ्यां लक्षणया निष्कृष्टजीवेश्वरोपाध्युपस्थितिमङ्गीकृत्य तदभेद एव ताभ्यां बोध्यत इति वक्तुं शक्यत्वेन तदभेदसिद्धिरेव परेण जीवेश्वरा-भेदसिद्धित्वेनाङ्गीकार्यात्, जीवेश्वररूप'तत्त्वम्'पदमुख्यार्थासिद्धेः उभयथाऽप्यविशेषात् । नच स्फटिकलौहित्यवदाकाशपरिच्छेदवच्च जीवेश्वरत्वादिचैतन्यधर्म एवौपाधिकः न तु चैतन्य-मपीति वाच्यम् । 'कार्योपाधिरयं जीवः' इतिश्रुत्या 'अयम्' इति पूर्णबोधमुक्त्वा तस्यैव निष्कृष्टचैतन्यस्यौपाधिकत्वावेदनात्, अन्यथा 'पूर्ण'पदवैयर्थ्यात् ॥

वाक्यशेषे तदवशेषोऽपि श्रूयत इति चेत् । सत्यम् । असञ्जातविरोधि तदौपा-धिकत्वावेदकोपक्रमानुसारेण तदवशेषाऽवेदकोपसंहारस्य वाक्यशेषस्य सोपाधिकवस्तु-स्वभावपर्यालोचनायाम् उपाधिनिवृत्त्यनिवर्तमानत्वस्य दुर्वारतया निवृत्तिरूपतायामेव पर्यव-सन्नावशेषपरताया एव वाच्यत्वात् । नच 'उपाधिनिवृत्त्यौपाधिकं निवर्तते' इति नियमात् तदवशेषाऽवेदकश्रुतिर्बलीयसीति वाच्यम् । एतन्नियमस्यापि पूर्णबोधौपाधिकत्वपर श्रुति-तात्पर्यगोचरत्वावश्यम्भावेन वाक्यशेषाद् बलीयस्त्वात् । अन्यथा श्रुतौ पूर्णबोधौपाधिकत्वोक्तेः 'यूस्त्र्याख्यौ नदी'(पा-सू -१-४-३(२६६) इतिवत् परिभाषामात्रत्वप्रसङ्गात् ॥

किञ्च यत् दृष्टान्तावष्टम्भेन जीवेश्वरयोर्बिम्बप्रतिबिम्बभावोपाधिकत्वादपारमार्थिका-दध्यस्त इत्युच्यते । स एवायुक्तः । स्वमुख-प्रतिमुखत्वादेः पूर्वमनुभवेन संस्कारजन्यतया स्मर्यमाणानुभूयमानारोपसम्भवेन तद्विषयत्वरूपाध्यस्तत्वस्यैवायोगात् ॥

ननु निरुपाधिकाध्यास एव संस्कारादिकहेतुः नतु सोपाधिकाध्यासोऽपि । अध्यास-सामान्यलक्षणं च परत्वपरावभासत्वमेवेति चेत् । अध्यासस्य पूर्वानुभवजनितं संस्कारा-दिजन्यतायां लाघवेनाध्यासत्वस्यैवावच्छेदकत्वात् निरुपाधिकाध्यासत्वस्य तदपेक्षया गुरुत्वे-नातथात्वात् । अन्यथा निरुपाधिकाध्यास एवाधिष्ठानेन्द्रियसम्प्रयोगादिकं कारणं, सोपा-धिकाध्यासेतु न तत् इत्यनिर्वचनीयात्..दानादिकं न तत्र कारणमिति स्वीकारप्रसङ्गात् ।

एवं च सोपाधिकाध्यासे सम्प्रयोगाय दर्पणाद्युपाध्युपहत्या नायनरश्मीणां परावृत्तिर्न स्वीकार्येत्यतिलाघवम् । अन्यथा कल्पनागौरवम् ॥

किञ्च जलाद्युपाध्युपहितावपि नायनरश्मीणां परावृत्तिरस्ति इति वाच्यम् । तदयुक्तम् । तथा सति जलान्तस्थसैकताद्यग्रहणप्रसङ्गात् कतिपयानामन्तःप्रवेशेऽपि कतिपयरश्मीणां परावृत्तिरिति कल्पनायां मानाभावात् । उक्तरीत्या कार्यस्यान्यथोपपत्तेः । क्लृप्तसामग्रीतो अग्निर्व्यूढस्यैव कार्यस्य स्वनिर्वाहाय तादृशसामग्र्यन्तरकल्पकत्वात् । अन्यथैतत्कल्पनायाः अनन्यथासिद्धकार्यसिद्ध्यधीनत्वेनान्योन्याश्रयात् ॥

अत एवान्तःसैकतादिग्रहणरूपकार्यान्यथाऽनुपपत्त्या नायनरश्मीणामन्तः प्रवेशवत् तत्र प्रवेशानन्तरं मुखे प्रतिमुखाद्यध्यासान्यथाऽनुपपत्त्या तद्रश्मीनामेव परावृत्तिः कल्प्यते । अन्यथा धर्मिज्ञानाद्यभावादध्यासानुपपत्तिरिति परास्तम् ॥

एवं पराभिमतं भावरूपनिर्वचनीयमज्ञानमपि विना प्रधानसादृश्यं विनेवासंसर्गाग्रहं विनैव च सोपाधिकाध्यासप्रसङ्गः । अपि च सोपाधिकाध्यासे पार्श्वस्थस्य दर्पणाद्युपाधि-सन्निधाने 'देवदत्तस्यैवेदं मुखम्' इति तन्मुखाभेदगोचरनिर्विचिकित्साऽपरोक्षज्ञानसत्वेन तदभेदगोचरपराभिमताज्ञानस्यैव निवृत्तेर्न तस्योपादानत्वस्वीकारो युक्तः । नच सोपाधिका-ध्यासस्थलीया ज्ञानत्वेनोपाधिनिवृत्तिसहिता परोक्षज्ञानत्वेन निवर्त्त्य-निवर्तकभावाङ्गीकारात् तत्र ज्ञाननिवृत्तिरेव नेति वाच्यम् । लाघवेन तदज्ञानत्वेन निवर्त्त्य-निवर्तक-भावस्यैव स्वीकार्यत्वात् । अन्यथा निरुपाधिकाध्यासत्त्वस्यैवाज्ञानकार्यतावच्छेदकत्वस्वीकारप्रसङ्गात् । लाघवेनाध्यासत्वस्यैवाज्ञानकार्यतावच्छेदकत्वस्वीकारेच तत एवाध्यासत्वेनैव पूर्वानुभवजनित संस्कारकार्यतेति तदकार्यभूतबिम्ब-प्रतिबिम्बभावो नाध्यास एव स्यादिति घट्टकुट्टीप्रभात-वृत्तान्तः ॥ ॥ इति जीवेश्वरभेदस्यौपाधिकत्वनिरसनम् ॥

नच प्रतिबिम्बादेर्भावकार्यत्वेनोपादानं विना निर्वाहायोग इति वाच्यम् । यद्वस्तुनिष्ठतया तस्य प्रतीतिः तस्यैव तदुपादानत्वात् । नह्यज्ञानमेव कार्यमात्रे उपादानमित्यद्यापि सिद्धं, येन क्लृप्तहानाद्यापत्तिरित्युच्येत । नच शुक्तिरूप्यादेरिव घटादेरज्ञानोपादानकत्वं परेणापि स्वीकृतम् । तथाच प्रतिबिम्बादावध्यासप्रयोजकत्वेन रूप्याद्यध्यासे क्लृप्तप्रधानसादृश्या-संसर्गाग्रहादेरभावादध्यासत्वमेवानुपपन्नम् । एवमुपाधिसन्निधाने प्रतीयमानो मुखादिप्रति-बिम्बभेदोऽपि नाध्यस्त इति स्वीकार्यम् । नच मुखाभेदापरोक्षज्ञाने सति तदज्ञानं सम्भ-

वति । नच तदसम्भवे तत्कार्यभूतस्तद्भेदाध्यासो युज्यते । अन्यथा रूप्याद्यध्यासस्थलेऽपि अधिष्ठानतत्वसाक्षात्कारेण भीरुभटन्यायेन तदज्ञानस्यापसरणमात्रं जायते, नतु तन्निवृत्ति-रिति स्यात् । तन्निवृत्त्यनुभवस्तु 'अनष्टे गलहस्तिकायात् दूरापसारितचोरादौ' निवृत्त्यनु-भववदुपपन्नः । श्रुत्यादौ ज्ञानादज्ञानस्य निवृत्तिः प्रतीयत इति चेत् । सत्यम् । उक्तरीत्या कापि ज्ञानादज्ञानस्य नाशदर्शनेनापसरणमात्र दर्शनेन क्लृप्तापसरणस्यैव तन्निवृत्तिप्रतिपादक-श्रुतितात्पर्यगोचरत्वस्वीकारात् ॥

एवं च यावन्ति ज्ञानानि तावन्त्यज्ञानानीति गौरवदोष[१]ग्रस्तपक्षस्वीकारव्यसनशान्त्या परस्याधिको लाभ इति किमनुपपन्नम् । नचैवं मुक्तिकालेऽप्यज्ञानसत्त्वापत्तिः, नचेष्टापत्तिः, तथा सति तदापि संसारः स्यादिति वाच्यम् । चरमवृत्तिप्रागभावावच्छिन्नाज्ञानस्यैव संसारा-पादकत्वात् । नचैवमद्वैतश्रुतिविरोधः । ब्रह्मवत् सत्यभूतवस्त्वन्तरसत्वाभ्युपगम एव तद्विरोधात् ॥

एतेन एकमेवाज्ञानं तस्यावरणशक्तिर्नानाज्ञानाच्च तत्प्रागभाववन्नियतैव शक्तिर्नश्यति नत्वज्ञानम् । एवं च यत्र विषयैक्येऽपि कालभेदेन भ्रमे तत्त्वज्ञानसन्तानः सोऽप्यनुभवसिद्ध उपपादितो भवतीत्येकाज्ञानपक्ष एव साधुरिति निरस्तम् ॥

तथा सति ज्ञानादज्ञाननिवृत्तिप्रतिपादकश्रुतेरपि संसारापादकतच्छक्तिमात्रनिवृत्ति-परत्वप्रसङ्गात् । नचैवं श्रुतौ 'अज्ञाननिवृत्ति'पदस्य तच्छक्तिनिवृत्त्यर्थत्वे लक्षणाप्रसङ्गो मुख्यार्थत्यागप्रसङ्ग इति वाच्यम् । 'एतावन्तं कालं शुक्त्यज्ञानमासीत्तदिदानीं शुक्तितत्त्व-ज्ञानेन नष्टं निवृत्तम्' इत्यनुभवमुल्लङ्घ्य तत्प्रतीतेरयोग्यतच्छक्तिनिवृत्तिविषयत्वाङ्गीकारे तन्निवृत्तिश्रुतेरपि मुख्यार्थो न स्वीकार्यः ॥

किञ्च मुख्यार्थ एवेत्यापादनात् तस्मात् पार्श्वस्थस्योक्तरीत्या मुखैक्यगोचराज्ञाना-सम्भवात् दर्पणाद्युपाधि सन्निधानेऽपि प्रतीयमानबिम्ब-प्रतिबिम्बभेदोऽपि नाध्यस्तः । तथा च मुख-प्रतिमुखादिभेदवज्जीवेश्वरभेदोऽपि तद्रूपबिम्ब-प्रतिबिम्बभेदत्वेऽपि नारोपितः किन्तु वास्तव एवेति ॥

(१) तावत्यज्ञानाभिगौरवदोष इति ताळपत्रस्थ पाठः ॥

एतेनाध्यासत्वमात्रस्याज्ञानादावनध्यासेऽपि सत्वात् । कार्याकार्यवृत्तितयाऽतिप्रसक्तस्य लघुधर्मत्वेऽपि न पूर्वानुभवजन्यसंस्कारजन्यतावच्छेदकत्वमभ्युपगमार्हमिति परास्तम् ॥ निरुपाधिकाध्यासत्वस्यापि कार्या-कार्याध्यासवृत्तितया तादृशसंस्कारजन्यतायामनवच्छेद-कत्वापत्तेस्तौल्यात् । जन्याध्यासत्वस्य तज्जन्यतावच्छेदकत्वाङ्गीकारे च सोपाधिकाध्यासेऽपि तस्य सत्वेनोक्तदोषानिस्तारात् । जन्यनिरुपाधिकाध्यासत्वापेक्षया जन्याध्यासत्वस्य लघुत्वेन तादृश संस्कारादिजन्यतायामवच्छेदकत्वस्यावश्याङ्गीकार्यत्वादिति दिक् ॥

## ॥ अथ 'नित्यो नित्यानामिति' श्रुत्यर्थनिरूपणम् ॥

अपि च 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः'(कठ-उ-१-३-११) इत्युपसंहारे परमात्मनः परं निषेध्य, पूर्ववाक्ये पुरुषादवरगन्तृत्वेनाभिप्रेत्य 'सा परा गति' इति तस्यैव पुरुषस्य परगतित्वेन गम्यत्वेनाऽवेदनात् तद्वाक्यार्थपर्यालोचनयाऽपि जीवेश्वरयोर्वास्तवभेदो दुर्वारः । नच तद्भेदस्योक्तरीत्या बिम्ब-प्रतिबिम्बभेदरूपत्वेनौपाधिकत्वावश्यम्भावादुपाधि-निवृत्त्या तन्निवृत्तिः दुर्वारिति वाच्यम् । 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादि श्रुति-पर्यालोचनया बिम्ब-प्रतिबिम्बत्वेनोदाहृतश्रुत्याऽवगतजीवेश्वरयोरुभयोरपि नित्यत्वलाभेना-न्योन्यभिन्नत्वलाभेन च तदुपादानस्योपाधेरपि नित्यत्वकल्पनात् । नच तत्र षष्ठ्यन्त-'नित्य'पदस्य बहुकालावस्थायित्वमर्थः । प्रथमान्त'नित्य'पदस्यैव मुख्यार्थत्यागे कारणा-भावात्, अन्यार्थासम्भवेन षष्ठ्या नियम्य-नियामकभावार्थत्वात् उपाधेर्नित्यत्वेऽपि तद्गृहीत-जीवदुःखापादकशक्तेः परमात्मसाक्षात्कारसम्पादितजीवगतभोक्तृकृततत्परमप्रसादेनापागमादा-त्यन्तिकदुःखनिवृत्तावपि जीवेश्वरयोर्भेदस्यौपाधिकत्वेऽपि संसारदशायामिव मुक्तावप्यनु-वृत्त्युपपत्तेः । जीवेश्वररूपबिम्बप्रतिबिम्बतद्भेदोपाधिभूतप्रकृतेः 'गौरनाद्यन्तवति' इति श्रुत्या नित्यत्वाऽवेदनाच्च ॥

तन्निवृत्तिश्रुतेश्च संसारदशायामिव मुक्तिदशायां तत्त्वसाक्षात्कारकृतकुण्ठितशक्तित्वेन कार्यानार्जकत्वं परत्वमित्युक्तम् । अत एव लोके सम्पन्नस्य सम्पद्रूपधर्ममात्रापगमेऽपि 'स इदानीं नष्टो मृत' इति व्यवहारः । उपाधिसत्वे तद्धर्मनिवृत्तिमात्रेण[१] उपाधिकृतमेतन्निवृत्ति-

(१) उपाधिकमततन्निवृत्तिः इति ताळपत्रस्थ पाठः ॥

नेति तद्दर्पणरूपोपाधावेव स्वच्छतादशायामिव तदपगमे मालिन्यादिदशायां मुख-प्रतिबिम्ब-भेदकारित्वेन दृष्टमिति न कश्चित्क्षुद्रोपद्रवः ॥

नच तत्राऽपि दर्पणरूपोपाधिभेदे मानमस्ति । प्रतिमुखे मालिन्यादिधर्मस्य श्यामता दशायां श्यामघटे पाकात् रक्तिम्न इव कारणभेदादुपपत्त्या तस्योपाधिभेदाकल्पकत्वात् । एवं जडेश्वरभेदे जीवेश्वरभेदे –

**'सोऽकामयत बहुस्यां प्रजायेयेति'** (तै-उ-२-१४)
**'इदं सर्वमसृजत । तत् सृष्ट्वा । तदेवाऽनुप्राविशत्'**
**'तदप्येष श्लोको भवति' 'असद्वा इदमग्र आसीत् । ततो वै सदजायत'**
**'तदात्मानं स्वयमकुरुत'** (तै-उ-२-१५)
**'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि'**

इत्याद्यनुप्रवेशश्रुतयोऽपि मानम् । नच भेदवादे जीवान्तर्यामिभावस्य सृष्टेः प्रागपि सत्वेन तदर्थं परमात्मनो बहुभावकामनाऽनुपपत्तिरिति वाच्यम् । सृष्टेः प्राक् जीवान्तर्यामिभाव-सत्त्वेऽपि शरीरादिविशिष्टतदन्तर्यामिभावस्य कामनागोचरत्वोपपत्तेः । नहि सृष्टेः पूर्वं लिङ्गशरीरवत् जीवानां स्थूलशरीराण्यपि सन्ति । 'यो आत्मनि तिष्ठन्(१) आत्मनोऽन्तरः' इत्यादिश्रुतिस्तु सामान्यतो जीवान्तर्यामिभावं परमात्मनो वदतीति न काचिदनुपपत्तिः ॥ (२)'यः एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इति अभेदज्ञानाद् भयनिवृत्ति-श्रेयप्राप्त्योः-दर्शितत्वेनाभेद एव श्रुतितात्पर्यगोचर इति निरस्तम् ॥

तत्र= परमात्मनि, एकत्वं= मुख्यत्वं, विरुद्धैकस्वभावत्वरूपं केवलत्वं= जगत्सृष्ट्यादौ कर्तव्यतायामसहायत्वं, स्वसदृशकारणान्तरानपेक्षत्वरूपत्वं वा, गुरूपसदनपूर्वकश्रवणादि साधनानुष्ठानानन्तरं, पश्यतः= साक्षात्कुर्वतः, को मोहः? न कोऽपि सम्भवतीत्यर्थः ॥

॥ इति 'नित्यो नित्यानामिति' श्रुत्यर्थनिरूपणम् ॥

(१) 'यदात्मनि तिष्ठन्' इति ताळपत्रस्थपाठः ॥

(२) अत्र 'एतेन यः एवं' इति पाठमिति भाति ॥ तस्य 'निरस्तम्' इत्यनेनान्वयः स्यात् ॥

## ।। अथ 'य एवं वेदेति' बृहदारण्यकश्रुत्यर्थनिरूपणम् ।।

नन्वेवं द्रष्टृन्यस्य परमात्मन एवाभावात् तत्रैकत्वदर्शनमेव कुत इत्यत आह- मदन्यन्नास्ति कस्मात्? अस्त्येव यत् अतो बिभेमि तदिदमपि अहं... एतर्ह्यस्तीत्यर्थः । एतर्हि= तर्हीति यावत् । कथं तत् ब्रह्म ज्ञेयम्? यद् ज्ञानेन तद् ब्रह्मप्राप्तिरिति जिज्ञासायामाह -तद् ब्रह्माहमस्मि= तदन्तर्यामिकोऽस्मीति ।

'अहं मनुरभवम्' इत्यादिवद् 'यो वेद एवम्' इत्यस्य विवरणम् 'अहं ब्रह्मास्मि' इति । ज्ञानफलमाह 'स इदं सर्वं भवति' इति ।। सर्वं= सर्वसमापकमिदं...(१) सोऽस्य सर्वस्योपजीव्यो भवति यथा प्रमाणं ब्रह्म तदित्यर्थः । तथा च श्रुती –

> **'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च ।**
> **मृत्युर्धावति पञ्चम इति'**
> **'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति'**
> **'पुरष एवेदं सर्वं यद्भूतं यच्च भव्यम्'** (श्वे-उ-३-१५)

इत्यादिश्रौतसमा......ति द्रष्टव्या । तथाच भारतवचनम् । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति । नचैवं लक्षणापत्तिः । श्रुत्यैव स्वाभिप्रेतार्थाभिधानेन लक्षणास्वीकारस्य सप्रमाणकत्वात् परव्याख्याने एव निष्प्रमाणकचिन्मात्रलक्षणाङ्गीकारेण मुख्यार्थभेदत्यागाच्च । एतेन –

> **'यन्मदन्यन्नास्ति द्वितीयाद्वै भयं भवति'**
> **'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
> **तत्र को मोहः कः शोकः एकत्वमनुपश्यतः'**

इति श्रुत्यन्तरमपि व्याख्यातम् ।।

यस्माद्, अभेष्यत्, तत्, मदन्यत्= जीवादन्यत्, कस्माद्विनास्ति श्रुति-तदुपजीवि -प्रमाणसिद्धम् ब्रह्म दुरपह्नवत्वाद् अद्वितीयाद्वै भयं भवति= लोके स्वभिन्नादेव भयं भवति, इत्यौत्सर्गिकप्रसिद्धेत्यर्थः ।।

---

(१) उपलब्धतालपत्रेषु एवमेव रिक्तस्थलं दृश्यते । एवमग्रेऽपि ध्येयम् ।।

यस्मिन्[१] सर्वाणि भूतानि= सर्वे जीवा आश्रित्य तिष्ठन्ति, स विजानतो,विशेषदर्शन, आत्मैव= परमात्मैव, न जीवात्म इति अभूत् । तत्र= तत्रैव, परमात्मनि, एकत्वं= मुख्यत्वादिकं अ.....'को मोहः कः शोकः' इत्यपि रवत्वात् । नचैवं योजनायां सम्भवत्यां सकलप्रमाणविरुद्धानुभवविरुद्धार्थपरत्वमभ्युपगमार्हम् । 'अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुः'(बृ-उ-३-५-४) इति भेदोपासना(न) निन्दायाः अनुदितहोमप्रकरणे उदितहोमनिन्दायास्तत्प्रसङ्गस्योपपत्त्या प्रत्यक्षादिप्रमाणान्तरविरुद्धाद्वैते तात्पर्याकल्पकत्वादित्युक्तमेव । अन्यथा 'यजमानः प्रस्तरः' 'सोमेन यजेत' इत्यादेरपि प्रस्तर-यजमान-सोम-यागाभेदपरत्वप्रसङ्गः । अपूर्वतालक्षणतात्पर्यलिङ्गसत्वेऽप्यतत्परत्वे व्यभिचारेण तल्लिङ्गत्वापत्तेः । तत्र प्रमाणान्तराविरुद्ध.....तवाक्येऽपि तद्विशेषणस्य न्याय-साम्येनावश्यकत्वात् ॥

नच प्रस्तर-यजमानाद्यभेदस्वीकारो[२] न प्रत्यक्षादितद्भेदग्राहिप्रमाणविरोधप्रयुक्तः, अपि तु प्रहरणशास्त्रमूलकं विरोधद्रव्यान्तरकल्पनागौरवदोषनिबन्धन इति वाच्यम् । प्रहरण-शास्त्रप्रयुक्तकर्मानिष्पत्तिविरोध.......... नहि प्रस्तराभिन्न-यजमानप्रहरणे तत्कर्मनिष्पत्तौ प्रत्यक्षादितोऽन्यन्मानमस्ति । ....... प्रयुक्तं यागस्य सोमद्रव्याभिन्नत्वाङ्गीकरणे द्रव्यान्तर-कल्पनागौरवदोष इति चेन्न । ध्रौवाज्यसत्त्वेन उक्तगौरवानाकाशात् श्रुत्यविरोधि तत्त्वेनैवार्थ-स्यादरणीयत्वे प्रत्यक्षादिविरोधस्याकिं...... यागाभेदात्यागेनैव याग-निवर्तकद्रव्यरूपत्व-स्वीकारापाताच्च(स्वीकारापत्तेश्च-पा)॥

एतेनैव 'यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इति अद्वैतज्ञानस्य सर्वात्मकत्व-फलश्रुतिबलेनाद्वैततात्पर्यकत्वे अवधारिते तदुपपत्त्यर्थं स्वीक्रियमाणायाः लक्षणाया नाप्रामा-णिकत्वमिति निरस्तम् ॥

सर्वात्मक..............त्पदार्थाभेद विनाऽयोगेन श्रवणादिना सम्पादितस्याभेद-ज्ञानस्य परपक्षे यथा पूर्वं नित्यसंसारित्वापादकत्वेनापुरुषार्थत्वात् । न च 'यः स्थाणुः स

(१) यस्मात् इति ताळपत्रस्थ पाठः ॥

(२) यजमानाद्यभेदास्वीकारो इति ताळपत्रस्थपाठः ॥

पुरुष इतिवत्' 'स इदं सर्वं भवति' इति सामानाधिकरण्येन सर्वं बाधित्वाऽत्मावशेषतोच्यते इति न दुःखाद्यनिष्टाश्रयभेदापत्तिरिति । .....पदानामपि चिन्मात्रलक्षणकत्वप्रसङ्गात् । एकपदलक्षणापेक्षयाऽनेकपदलक्षणाया अन्याय्यत्वात् । अहं ब्रह्म नियम्योऽस्मि इति यो वेद स इदं सर्वं भवति= सर्वोपजीव्यो भवतीत्युक्तार्थपरत्वसम्भवाच्च ॥

एतेन 'स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा....इति श्रुतिरपि व्याख्याता । 'स आत्मा= ब्रह्मज्ञानी जीव, एतेषां भवतीति' ब्रह्मज्ञानस्य तदीयत्व-प्रयोजकत्वपरत्वात् । अत एव 'देवाश्चान्ये च तस्य नाभूत्या ईशत' इति स्वप्रीति-विषयत्वात् शक्ता अपि नाभूतिं सम्पादयितुमुद्युञ्जन्त इति सङ्गच्छते । अन्यथा 'स आत्मा ह्येतेषां .....सम्भवतीति....॥

॥ इति 'य एवं वेदेति' बृहदारण्यकश्रुत्यर्थनिरूपणम् ॥

## ॥ अथ प्रसङ्गात् 'सूर्यो यथेति' कठश्रुतेः परोदीरितार्थनिरसनम् ॥

एतेनैव –

**'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः'** (कठ-उ-२-२-११)

इति श्रुत्या परमात्मनो निर्लेपत्वाऽवेदनात् सम्पन्नतज्ज्ञानस्य जीवस्यापि तदभिन्नत्वेन सर्वात्मकत्वमुपपद्यत इति निरस्तम् । तथा सति श्रुत्याऽवेदक इत्यस्य 'सर्व'शब्दसमभि-व्याहृत'भूतान्तरात्मा' इत्यस्य 'न लिप्यते'इति वर्तमाननिर्देशस्य च निरर्थकत्वापत्तेः ॥

'एषोऽस्य परम आनन्दः' 'एषाऽस्य परमा गतिः' इति श्रुतौ परमात्मनो जीवप्रा....पत्तेश्च ।

**'तं यथा यथोपासते तथैव भवति यथा क्रतुरस्मिन् लोके**
**पुरुषो भवति तथेतः प्रेत्य भवति'**

**'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम'**

इति श्रुतौ सदृष्टान्तं ब्रह्मज्ञानफलतया 'तादृगेव भवतीति' सावधारणं मु......नच भेदस्य प्रत्यक्षसिद्धत्वेन् न तद्बोधकश्रुतेरनुवादकत्वप्रसङ्गः । श्रुतेर्नित्यत्वेन पुरोवादान्तरानपेक्षत्वात् दैवादेव तुल्यार्थत्वात् । नित्यनिर्दोषानन्याधीनप्रवर्तिक स्वतःप्रमाणभूतश्रुत्या तुल्यार्थत्वेन प्रत्युत प्रत्यक्षस्यैव तत्तुल्यप्रामाण्यकत्वाप्राप्तेः । अत एव प्रत्यक्ष.....दज्ञानस्य न यथार्थत्वमारोपितेनापि भेदेनोपासनोपपत्तेरिति निरस्तम् । वेदजन्याभेदज्ञानस्यापि न याथार्थत्वमारोपितेनापि तेनोपासनोपपत्तेरिति सुवचत्वात् ॥

॥ इति प्रसङ्गात् 'सूर्यो यथेति' कठश्रुतेःपरोदीरितार्थ निरसनम् ॥

## ॥ अथ 'अनेन जीवेनेति' श्रुत्यर्थनिरूपणम् ॥

एतेनैव प्रत्यक्षजन्यभेदज्ञानवद्वेदजन्यभेदज्ञानस्यापि अयथोक्तं फलं तत् ज्ञापक-भेदस्य....ति न काचिदनुपपत्तिः । नच 'अनेन जीवेनाऽत्माना' इति परमात्मनो जीवरूपेणानुप्रवेशं बोधयतीति तस्य जीवेशभेदे मानत्वानुपपत्तिरिति वाच्यम् । 'अनेन जीवेन' इत्यस्य जीवस्वरूपदेहसहितपरमात्मनस्तु तदर्थानुप्रवेशप्रतिपादनपरत्वेन परमात्मनो जीवभावेन तदर्थप्रवेशप्रतिपादनपरत्वासिद्धेः । अन्यथा 'यः आत्मनि तिष्ठन्' 'कर्माणि विज्ञानमयश्चात्मा परेऽव्यये सर्व एकी भवन्ति' इत्यादिश्रुतिविरोधापत्तेः । 'एष त आत्मा-ऽन्तर्याम्यमृतः' इति श्रुतिविरोधापत्तेश्च । नच 'ते'इति षष्ठ्यर्थभूतः सम्बन्धो बाधकं विना अभेदरूपोऽङ्गीकारार्हः ॥

अत एव 'अनेन जीवेन' इति इत्थम्भावतृतीयेति निरस्तम् । तथासति 'आत्मना' इत्यस्य वैयर्थ्यात् उदाहृतश्रुत्यन्तरानुसारेण सहार्थतृतीयायाः एव अवश्यमङ्गीकार्यत्वात् । 'गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनवत्' अन्तर्यामिभावेन 'बहुस्याम्' इति सङ्कल्प्य नियम्यसृष्ट्युपपत्तेश्च । 'तदात्मानं स्वयमकुरुत' इत्यत्रापि 'आत्म'शब्दः शरीरपर इति न काऽप्यनुपपत्तिः । 'यस्यात्मा शरीरम्' 'यस्य पृथिवी शरीरम्' इत्यादिश्रुत्या जीवजडात्मक-प्रपञ्चमात्रस्य परमात्मशरीरत्वावेदनमत एव सङ्गच्छन्ते ॥

॥ इति 'अनेन जीवेनेति' श्रुत्यर्थनिरूपणम् ॥

### ।। अथ तैत्तिरीयश्रुतेः परोक्तार्थ विभेदनम् ।।

एतेन 'उता विद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता' (तै-उ-२-१३) इति ज्ञानिनोऽज्ञानिनो वा ब्रह्मभाव इति प्रश्नोत्तरस्य विदुषः परमेश्वरभावापत्ति पर्यवसायिनः 'तदात्मानम्' इत्यादेरुक्तरीत्या भेदपरत्वमनुपपन्नम् । 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः'(तै-उ-२-२१) इत्यभेदस्यैवोपसंहारविरोधो अन्यथा स्यादिति निरस्तम् ।।

विदुषः परमेश्वरभावः कीदृशः? इति प्रश्नोत्तरस्य 'तदात्मानम्' इत्यादिवाक्यस्य पर्यालोचनयोक्तरीत्या भेदपरत्वे एव पर्यवसानोपपत्तेः । नचैवमुपसंहारविरोधः । 'स यश्चायम्' इति पुरुषादित्यगतस्य स्थानभेदप्रयुक्तभेदप्रसक्तिनिरासाय परमात्मैक्यप्रतिपादन-परत्वेन जीवेशाभेदः स्यादिति, य उपसंहारविरोधशङ्काया एवाप्रसरात् ।।

।। इति तैत्तिरीयश्रुतेः परोक्तार्थ विभेदनम् ।।

ननु 'ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवाऽवेद अहं ब्रह्मास्मि' इति 'तस्मात् तत्सर्वमभवत्' इति प्रश्नोत्तरदर्शनात् लक्षणयाऽपि ब्रह्मोचितसर्वभावस्यैव तद्विदुषामपि फलत्वमुचितं 'तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां सम्भवति' इति सर्व-भूयस्य सर्वात्मभूयत्वेनैव विवृतिरतएवोपपद्यत इति चेन्न । सर्वात्मकत्वे दुःख्यात्मत्वस्यापि दुर्निवारतया तस्यापुरषार्थत्वात् । नहि 'अहं सुखी स्याम्' इतिवत् 'दुःखी स्यामिति' कोऽपीच्छति । नचैवं सर्वभूयः श्रुतेर्निर्विषयत्वम् । 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति' इति सर्वात्मत्वाऽवेदकश्रुतीनामुपजीव्योपजीवकभावविषयत्वज्ञापनात् । अन्यथा 'तं यथोपासते ते तथैव भवन्ति' इति ब्रह्मोपासकस्य तत्सादृश्यावधारणानुपपत्तिः । न च 'तं यथा यथो-पासते' इत्यस्य सर्वगन्धत्वाद्युपासनाया ईश्वरैक्यफलत्वशङ्कानिरासार्थत्वेऽपि न प्रमित-फलत्वभाक्तत्वमिति वाच्यम् । जीवेश्वरैक्यस्य वस्तुतश्चिन्मात्रत्वे अनादिसिद्धस्य प्रमिति-फलत्वानुपपत्तेः । अत एव –

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम'इति

प्रमितिफलत्वेन जीवस्य परमात्मसादृश्यमेव श्रुतमुपपद्यते ।।

एतेन 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इत्यपि सादृश्यावधारणं वैशेषिक-प्रक्रियया जलद्वयस्यान्योन्याभिघातेन नाशे सति जलव्यक्त्यन्तरमुत्पद्यत इति पक्षे बोधितं[१] लोकप्रतीतिव्यवहारानुरोधे तु द्वयोर्जलयोरैक्यमेव वाच्यं, न यथाश्रुतसादृश्यमिति निरस्तम्।।

अभिघातविशेषस्य तन्नाशकत्वेऽपि अभिघातमात्रस्यातन्नाशकत्वेन मिलितनीरक्षीरयो-रिव तादृशकृष्णाभीमरथ्यादिप्रवाहाणामिव च शुद्धजलयोरपि मेलनमात्रोपगमेन वैशेषिक-रीत्या तत्र जलान्तरोत्पत्त्यनभ्युपगमात् । अन्यथा राजहंसेन नीरक्षीरयोरभिघातेन पूर्वनीर-क्षीरनाशे सति द्रव्यान्तरस्यैव तत्रोत्पत्तेः क्षीरस्य पृथक्कारणानुपपत्तिः । एवमभिघातेन कृष्णाभीमरथ्यादिप्रवाहनाशे सति प्रवाहान्तरस्यैव तत्रोत्पत्तेः पुनः समुद्रप्रवेशार्थं तत्तद-साधारणधर्मेण तत्तत्प्रवाहपृथक्त्वदर्शनानुपपत्तिः ।।

किञ्च शुद्धोदके आसिक्तस्य शुद्धोदकस्य तत्त्वमनुभवबाधितं, शुद्धे शुद्धोदकान्तरमेलनेन वृद्ध्यभावापत्तेः । श्रुतावपि 'तदेव भवती'त्याकारतापत्तेश्च नतु 'तादृगेव भवतीति' ।।

ननु –

**'यथा नद्यः स्यन्दमानाः समुद्रायणाः**
**समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय ।**
**तथा विद्वान्नामरूपाद्विमुक्तः परात्परं**
**पुरुषं याति दिव्यम्'**

इति[२](आ-उ-६-८) श्रुत्यन्तरेण सदृष्टान्तं जीवेशयोर्भेदाभावाऽवेदनादुदाहृतश्रुत्यर्थो न भेद-घटितमूर्तिसादृश्यात्मा सम्भवतीति चेन्न । नदीनां समुद्रप्रवेशानन्तरं मिलितनीरक्षीरयोरिव विवेकाग्रहनिबन्धनो नामरूपत्यागव्यवहार, इति श्रुत्यन्तरगतदृष्टान्तवाक्यार्थोपगमात् दार्ष्टान्तिकेऽपि विदुषः परमात्मनि सम्बन्धविशेषान्नामरूपविमुक्तत्वव्यवहारः । अन्यथा 'परात्परं पुरषं याति दिव्यम्' इति वाक्यशेषे 'परात्परं दिव्यं पुरुषं याति' इति विदुषः विशिष्टपरमात्मप्राप्त्युक्त्यनुपपत्तिः । नहि भेदं विना प्राप्तिर्युज्यते । दृष्टान्तेऽपि 'समुद्रेऽस्तं गच्छन्ति' इति सप्तम्यनुपपत्तिश्च ।।

(१) बाधितम् इति पाठः स्यात् ।।

(२) 'स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति इति ताळपत्रस्त पाठः । पुरुषमुपैति दिव्यम्' इति उपनिषत्पाठः।।

अत एव 'यथा क्रतुरस्मिन् लोके' इत्यादिश्रुत्यन्तरमप्युपपद्यते । नच सादृश्यं लाघवेन तद्गतभूयोधर्मत्वमात्ररूपं नतु तद्भिन्नत्वे सतीति विशेषितमिति वाच्यम् । अविगीतानादिवृद्धव्यवहारानुसारेणैव तत्तत्स्वरूपस्य निर्वक्तव्यत्वेन तत्र (१)शुष्कलाघवस्याकिञ्चित्करत्वात् । अन्यथा 'इदमेतत्सदृशम्' इत्यभेदावधारणेऽपि अविगीतव्यवहारप्रसङ्गात् ।।

किञ्च –

'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति'

इति ज्ञेयब्रह्मलक्षणोक्त्यन्यथाऽनुपपत्त्या,

'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः';
'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इति
'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'

इति तस्यैवैकस्य मोक्षसाधनविषयत्वं नान्यस्येति प्रतिपादनान्यथानुपपत्त्या च जीवेश्वरयोर्वास्तवभेद आवश्यकः । अन्यथा आत्मचैतन्यस्यैक्ये व्यावर्त्यभावेन लक्षणोक्तिर्व्यर्था स्यात् । 'तमेवैकं जानथ' इति 'तमेवं विदित्वा' इति च तस्यैकस्यैवात्मनो(२) अज्ञानं मोक्षहेतुरन्यथाज्ञानं त्वतथाभूतमिति प्रतिपादनमसङ्गतं स्यात् । अन्यथा प्रसक्तप्रतिषेधत्वापत्तेः । 'आत्मानमेकमेव जानथे'त्येतावतैव पराभिप्रेतार्थसिद्धे 'तमेव' इति 'अन्या वाचो विमुञ्चथ' इति च व्यर्थं स्यात् ।।

### ।। अथ माण्डूकोपनिषदर्थचिन्तनम् ।।

ननु माण्डूकोपनिषदि('अथ तस्यायमादेशो-पा) –

'नान्तः प्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं नप्रज्ञा नघनं नप्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः' (मा-उ-२-१)

(१) 'शुक्ल लाघव' इति ताळपत्रस्थ पाठः ।।

(२) 'तस्यैकवेकस्यात्मनो' इति ताळपत्रस्थ पाठः ।।

इत्यद्वैतात्मज्ञानमुपदिश्यते । बृहदारण्यके च 'द्वे वाव ब्रह्मणो रूपे । मूर्तं चा मूर्तं च । मर्त्यं चामृतं च । स्थितं च यत्र सच्च त्यच्चेति' मूर्तामूर्ते अनुपक्रम्य, 'अथाऽयमादेशो नेति नेति' इति पृथिव्यप्तेजोवाय्वाकाशानां प्रतिषेध उपदिश्यते । तथा च श्रुतिद्वयपर्यालोचनया आत्माद्वितीयत्वमेव वास्तवम् अन्यच्च सर्वमवास्तवमित्येव पर्यवस्यतीति चेन्न । 'नान्तः-प्रज्ञम्' इत्यादिना 'शिवमद्वैतं चतुर्थं मन्यन्ते' इत्यन्तेन यद्वस्तुस्वरूपं 'स आत्मा स विज्ञेयः' इति तत्र 'आत्मत्वविज्ञेयत्वविधानायोच्यते । तस्य प्रपञ्चात् पारमार्थिकभेदाभावे 'नान्तःप्रज्ञम्' इत्यादिनोक्तस्वरूपनिर्वाहायोगात् । नहि प्रपञ्चश्च तादृशः । जीवरूपचेतन-प्रपञ्चस्यान्तःप्रज्ञत्वादिधर्मवत्वात् लक्षणत्वाद् व्यपदेश्यत्वाच्च, अचेतनप्रपञ्चस्यापि 'यत् कठिनं सा पृथिवी' इत्यदिना लक्षणोक्तेश्च ॥

'द्वे वाव ब्रह्मणो रूपे' इत्यादिना ब्रह्मणो मूर्तामूर्तात्मकस्वरूपं(ब्रह्मरूपत्वेन मूर्तामूर्तवस्तुस्वरूपं-पा) प्रदर्श्यत इति, 'नेति नेति' इति, ब्रह्मणो मूर्तामूर्तात्मकपृथिव्य-प्तेजोवाय्वाकाशेभ्यः सृज्यरूपेभ्यः वैलक्षण्यप्रतिपादनेन तेभ्यो ब्रह्मस्वरूपस्य वास्तवभेदस्या-वश्यमेषितव्यत्वाच्च । नहि मूर्तामूर्ताभ्यां सृज्यकोटिनिविष्टाभ्यां मर्त्याभ्यां ब्रह्मणो वास्तवा-भेदो[१] युज्यते । नच 'अथाऽयमादेशो नेतिनेति' इति पृथिव्यप्तेजोवाय्वाकाशानां प्रतिषेधार्थ एवोपदेशः, नतु ब्रह्मणो मूर्तामूर्तादिवैलक्षण्यप्रतिपादनार्थं इति वाच्यम् । तथा सति 'मर्त्यं चामृतं च स्थितं च'इति स्वरूपेण मृतिरहितस्य जीवात्मनोऽपि 'अमृत'शब्देनानुक्रमात् 'नेति नेति' इत्युपदेशस्तत्प्रतिषेधार्थं इत्यप्यापातात् । नच तद्युक्तम् । 'तत्त्वमसि' इत्या-दिना तस्य परेण ब्रह्माभेदस्वीकारात् । निषिद्धस्य मिथ्यात्वेन सत्यभूतब्रह्माभेदायोगात् । 'एतस्मात्' इति 'न' इत्यन्यत्, परमस्तीति, एतस्मात्= मूर्तामूर्तप्रपञ्चात्, अन्यत्, परम्= उत्कृष्टं, नेति नेति, इत्यर्थकोदाहृतवाक्यशरीरप्रविष्टवाक्यान्तरानुपपत्तिश्चेति ॥

ननु 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतंमतमविज्ञातं विज्ञातम्' इति परमात्मज्ञानादिना सर्वस्य ज्ञातत्वाद्युक्तेः सर्वस्य परमात्मनश्चाभेद एव वाच्यः, अन्यथाऽ-न्यज्ञानस्यान्यज्ञानमावेदयन्त्याः श्रुतेरप्रामाण्यापातादिति चेन्न । एतच्छ्रुतेः ब्रह्मज्ञानस्य

(१) वास्वभेदो युज्यते इति ताळपत्रस्थ पाठः ॥

सर्वज्ञानफलसम्पादनसमर्थत्वप्रदर्शनमुखेन 'ज्ञेयेषु ब्रह्मैव प्रधानम्' इति तत्प्राधान्य-प्रतिपादनपरतया, ब्रह्मणः सर्वाभिन्नत्वप्रतिपादनपरत्वाऽसिद्धेः । अन्यथा घटादिसाक्षात्कार-स्यैव ब्रह्मसाक्षात्कारत्वापत्त्या तत एव मोक्षप्रसङ्गात् । तत्साक्षात्काराय श्रवणादाव-प्रवृत्तिप्रसङ्गात् । 'यत् साक्षादपरोक्षाद् ब्रह्म' इति श्रुतिप्रतिपन्नापरोक्षैकरसब्रह्माभिन्नत्वे योग्यायोग्यत्वेन प्रपञ्चद्वैविध्यभावापत्तेश्च ॥

'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिप्रतिपन्नसत्यज्ञानानन्तब्रह्माभिन्नत्वे प्रपञ्चस्य मिथ्यात्व-जडत्वपरिच्छिन्नत्वाद्यभावापत्तेश्च । चेतनाचेतनप्रपञ्चस्य ब्रह्मणश्च वास्तत्व-भेदाङ्गीकारेतु तयोर्मूल-मूलिभावप्रतिपादको 'अन्नेन सोम्य शुङ्गेनाऽपो मूलमन्विच्छद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छत्तेजसा सोम्य शुङ्गेन सन् मूलमन्विच्छ सन्मूलाः सदायतनाः सत्प्रतिष्ठाः सोम्येमाः सर्वाः प्रजा'(छां-उ-६-८-४) इत्युपसंहारोऽप्यनुकूलितो भवति । अन्यथा तद्विरोधप्रसङ्गात् । अत एव प्रक्रमेऽपि 'उत तमादेशम्' इति 'कथं नु भगवः स आदेशो भवति' इति चैकस्यैव प्राधान्यप्रतीतिः ॥

॥ इति माण्डूकोपनिषदर्थचिन्तनम् ॥

एतेन अस्य वाक्यस्य द्वैतपरत्वेऽन्यज्ञानस्यान्यज्ञानत्वायोगेनोपक्रमगतैकविज्ञानस्य सर्वविज्ञानत्वोक्त्यनुपपत्तेर्विकारमिथ्यात्वप्रतिज्ञायाः 'मृत्तिकेत्येव सत्यम्' इत्यादेर्वैयर्थ्य-प्रसङ्गाच्चेति निरस्तम् ॥

'राजनि प्रधाने ज्ञाते अप्रधानभूतो अमात्यादिः सर्वोऽपि ज्ञातो भवतीति'वत्तदुपपत्तेः । सतिभेदे अमुख्यार्थस्यपि लोकव्युत्पत्तिसिद्धत्वेन वेदेऽप्यादरणीयत्वात् । अन्यथा 'तत्त्वम्'पदमुख्यार्थयोरेव 'तत्त्वमसि'इत्यभेदो बोध्यत इति परेणाङ्गीकार्यम् स्यादिति । 'मृत्तिकेत्येव सत्यम्' इत्यस्य 'मृत्तिकाप्रकारः सर्व एव सत्यः' इत्यर्थपरत्वेन विकार-मिथ्यात्वप्रतिज्ञात्वासिद्ध्या वैयर्थ्याप्रसरात् ॥

किञ्च 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेन ब्रह्मणि वेदैकसमधिगम्ये प्रत्यक्षादिना सर्वथा प्राप्तिरहितस्य प्रपञ्चस्य श्रुत्यैव प्रसज्यप्रतिषेधात् मिथ्यात्वं बोध्यत इत्यङ्गीकारो न युक्तः ॥

किञ्चैवं प्रत्यक्षादिपरिदृष्टभूतसृष्टिश्रुतिस्तदानुपूर्वीविचारार्थानि सूत्राणि च –

**'तेजोऽतस्तथा ह्याह'** (ब्र-सू-२-३-१०)

**'आपः'** (ब्र-सू-२-३-११)

**'पृथिव्यधिकाररूपशब्दान्तरादिभ्यः'** (ब्र- सू-२-३-१२)

इत्यादीनि निष्प्रयोजनानि स्युः ॥

अनेन 'आकाश आत्मा' 'वायुर्वाव संवर्गः'(छा-उ-४-३-१) इत्याद्युपासानर्थश्रुतिसिद्धानामेवाकाशादीनाम् एकविज्ञानसर्वविज्ञानप्रतिज्ञासिद्धये उत्पत्तिकथनात् क्रमचिन्तायाश्च 'अन्नेन सोम्य शुम्भेनाऽपो मूलमन्विच्छ' इत्यादिवत् व्युत्क्रमेण ब्रह्मप्रतिपत्त्यर्थं परिसङ्ख्यानार्थत्वादवैयर्थ्यमिति निरस्तम् ॥

आकाशादीनां कतिपयपदार्थानामुपासनार्थं श्रुतिसिद्धत्वेऽपि तदन्येषामतथात्वेन एकविज्ञान-सर्वविज्ञानप्रतिज्ञासिद्ध्यत्वाभावेनोत्पत्तिकथनानुपपत्तेः । क्रमचिन्तां विनाऽपि व्युत्क्रमेण ब्रह्मप्रतिपत्त्यर्थं परिसङ्ख्यानस्याविधित्वाद् तद्ध्यानक्रमेणैव सिद्धेश्चेति ॥

ननु 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति 'सत्यं ज्ञानमनन्तं ब्रह्म' इति तत्पदार्थत्वेनोक्तस्य ब्रह्मणः 'योऽयं विज्ञानमयः' इति 'त्वम्'पदार्थत्वेनोक्तस्य च जीवस्याऽभेदावेदनात्, न जीवेश्वरयोरन्योपाधिको वा, नारोपितो वा...भेदो युक्तः । नचोदाहृततद्भेदश्रुत्यादिविरोधात् 'तत्त्वमसि' इति स्थानैक्यमत्यैक्यादिरूप-अमुख्याभेदपरं नतु मुख्याऽभेदपरमिति वाच्यम् । शोधित'तत्त्वं' पदार्थभूतयोश्चिन्मात्रयोर्मुख्याभेदो यस्तत्परत्वाभ्युपगमात् । नचैवमप्रामाणिकपदद्वयलक्षणापत्तिः । विनिगमनविरहापादितपदद्वयलक्षणायास्तादृश 'तत्त्वं'पदार्थस्वरूपप्रदर्शनपरोदाहृतसत्यज्ञानादिवाक्यमूलत्वेन श्रुत्यनुगृहीतत्वात्, 'तत्त्वं'पदयोः सर्वनामत्वेन लक्षणं विनैव पदार्थस्वरूपप्रदर्शनपरसत्यज्ञानादि वाक्यानुरोधेन शक्त्यैवोपाधिविनिर्मुक्तनिष्कृष्टचिन्मात्रोपस्थापकत्वोपगमेन मुख्यार्थभेदपरत्वोपपत्तेर्वा । नचैवं लक्षणया 'तत्त्वम्'पदयोश्चिन्मात्रपरत्वमिति सिद्धान्तविरोधः । तात्पर्यग्रहबिलम्बात्, विलम्ब्यप्रतीतिजनकत्वेन फलतो विशेषाभावेन तथा सिद्धान्त इति रवात् ॥

एतेन तत्त्वमस्याद्यभेदपरश्रुतितो भेदप्रत्यक्षस्य दुर्बलत्वात् मुख्यार्थाभेदबोधने विरोध्यन्तराभावात् लक्षणाकल्पकाभावेन परस्य तत्स्वीकारोऽप्रामाणिक इति निरस्तम् । उभयथा लक्षणाऽभ्युपगमसमूलत्वस्योक्तत्वात् ॥

एतेनोदाहृतभेदपर'द्वासुपर्णादि' श्रुत्यविरोधाय तदनुगृहीतपरीक्षितभेदप्रत्यक्षाद्यविरोधाय च 'अतत्त्वमसीति' नञ्प्रश्लेषेण 'स आत्मा तत्त्वमसि'इत्यस्यापि भेदपरत्वमेवेति परास्तम् ॥

माण्डूकोपनिषदि 'सर्वं ह्येतत् ब्रह्माऽयमात्मा ब्रह्मेति'(मा-उ-१-२) 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय'(मा-उ-२-१) इति साभ्यासं 'तत्त्वम्'पदार्थयोरभेदाऽवेदनात् । नच तत्रापि 'अब्रह्म' इति योजना सम्भवतीति साम्प्रतम् । तथा सति 'सर्वं ह्येतद् ब्रह्म' इत्युपक्रमविरोधप्रसङ्गात्, 'स आत्मा' इत्यावृत्तिविरोधापत्तेश्च ॥

किञ्च 'तत्त्वमसि' इत्येतत् 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' इत्युपक्रमात् 'ऐतदात्म्यमिदं सर्वम्' इत्युपसंहारात् अभ्यासादितश्चाद्वैतपरमेवेति स्वीकार्यमिति चेन्न । 'सदेव सोम्येदमग्र आसीत्' इति परमोपक्रमस्य सत्त्वैकत्वाव्याकृतप्रपञ्चाभावे इदञ्चाग्रकालविशिष्टसत्त्वपदार्थभूतब्रह्म, इदंपदार्थभूत-अव्याकृतप्रपञ्चाभेदप्रतिपादकत्वेन सद्वितीयब्रह्मपरतायां एवाऽवधारणात् तदविरोधाय 'एकमेवाऽद्वितीयम्' इति तदुत्तरवाक्यस्यापि नेयत्वात्, 'ऐतदात्म्यमिदम् सर्वम्' इत्युपसंहारस्याप्यनुपसञ्जातविरोध्युपक्रमानुसारेण सद्वितीयब्रह्मपरतया एव अभ्युपेयत्वाच्च । 'तत्त्वमसि' वाक्यस्यापि तथाविधब्रह्माभेदपरताया एवापातात् । उपक्रमोपसंहारबलेन तस्य अद्वितीयब्रह्मपरत्वमिति परकीयाभिलापस्य रिक्तत्वात् ॥

किञ्च 'ऐतदात्म्यमिदं सर्वम्' इत्युपसंहारस्य ष्यञ्प्रत्ययं विना कृतस्यैव पराभिप्रेतार्थप्रत्यायनसमर्थत्वेऽनुवादे 'ष्यञ्'प्रत्ययस्य वैयर्थ्यप्रसङ्गः । नचायं प्रत्ययो 'वर्तमानसामीप्ये वर्तमानवद्वा'(पा-सू-३-३-१३१(२७८९) इति पाणिनिसूत्र इव स्वार्थ इति वाच्यम् । तथाऽपि वैयर्थ्यदोषानिस्तारात् । नच द्वैतवादेऽप्येषदोषस्तुल्य इति वाच्यम् । 'एतदात्मन इदमैतदात्म्यम्' इत्यर्थसत्त्वेन वैयर्थ्यशङ्काऽनुदयात् । नच तस्य सम्बन्धार्थेनानुशासनमिति वाच्यम् । 'विचित्रा हि तद्धितगतिः' इत्यभियुक्तैरभ्युपगमात् । किञ्च 'सदेव सोम्येदमग्र

आसीत्' इत्यस्य तत्पूर्ववाक्ये 'सलिल एको द्रष्टा' इति सलिलाधारत्व-द्रष्टृत्वविशिष्टस्यैकस्य प्रतीतेः 'सदेव सोम्येदम्' इति उत्तरवाक्यस्यापि सद्वितीयब्रह्मपरत्वमेव युक्तम् ।।

## ।। अथ 'तत्त्वमसि' श्रुतेः परोदीरितार्थयुक्तायुक्तचिन्ता ।।

एतेन 'तत्त्वमसि' इति महावाक्येन न विशिष्टयोरुपहितयोर्वा चैतन्ययोरभेदो बोध्यते किन्त्वविशिष्टयोरनुपहितयोर्वा 'तत्त्वम्'पदार्थयोः चैतन्ययोः । नचैवं 'तत्त्वं'पदयोस्तादृश-चैतन्यलक्षकत्वमप्रामाणिकमेवापाद्यते । 'तत्त्वं'पदयोस्तादृशचैतन्यमात्रलक्षणकत्वस्य(चिन्मात्र-लक्षकत्वस्य-पा) 'तत्त्वम्'पदार्थस्वरूपप्रतिपादकसत्यज्ञानादिवाक्यानुरोधित्वेन प्रामाणिकत्वात् तयोः सर्वनामत्वेन चिन्मात्रस्यापि मुख्यार्थत्वाद्वा इति निरस्तम् ।।

उक्तरीत्योपक्रमोपसंहारयोर्विशिष्टपरत्वस्योपहितपरत्वस्यैव वा, व्युत्पत्तिसिद्धस्य दुर्वारत्वेन तदनुरोधेन 'सन्दंशमुखपतितवस्तु'न्यायेन तन्मध्यवर्तिनः 'तत्त्वमसि' इत्यादेरपि तादृशार्थपरत्वस्य दुर्वारत्वात् । सत्यज्ञानादिवाक्यस्यापि 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमावगतं ब्रह्म किं लक्षणकमिति? प्रश्नोत्तरत्वेन प्रवृत्तस्य विशिष्टपरताया एव न्याय्यत्वेन तदनुरोधेनापि 'तत्त्वं'पदयोर्निष्कृष्टचैतन्यमात्रपरत्वं लक्षणयेत्यस्यार्थस्याऽप्यसिद्धेश्च ।।

अत एव तादृशचिन्मात्रस्यैव सत्यज्ञानादिवाक्यबलेन स्वप्रतिपाद्यार्थत्वेन सुज्ञानतया सर्वनामत्वेन वस्तुमात्रे शक्तिसम्भवाच्च । 'तत्त्वम्'पदाभ्यां शक्त्यैव चिन्मात्रमुपस्थाप्य तदभेदो बोध्यत इति प्रत्यूढम् ।।

उक्तरीत्या सत्यज्ञानादिवाक्यस्यापि सत्यत्वादिविशिष्टपरत्वस्यैव व्युपत्तिसिद्धत्वेन तयोः सर्वनामत्वेन चिन्मात्रवाचित्वसम्भवेऽपि 'सत्यं ज्ञानम्' इति 'तत्'पदार्थस्वरूपप्रतिपादक-वाक्यपर्यालोचनायां विशिष्टार्थवाचित्वस्यैव प्राप्तेः । तथा च भेदप्रत्यक्षस्य श्रुतितो दौर्बल्या-ङ्गीकारे तत्त्वमस्यादिवाक्यस्य विशिष्टार्थपरत्वम्- उपहितार्थपरत्वं वा वज्रलेपायितमिति । एवं च तद्दोषपरिजिहीर्षया श्रुतितः पराजितप्रत्यक्षं प्रबलमित्यकामेनापि स्वीकृत्य 'तत्त्वम्'-पदमुख्यार्थयोर्बोधग्राहिपरीक्षित-प्रत्यक्षाविरोध एव चैतन्यमात्रं 'तत्त्वम्'पदाभ्यां लक्षणया शक्त्यैवोपस्थाप्य तदभेदो बोध्यत इति स्वीकार्यम् ।।

तत्राद्ये पक्षे पदद्वयलक्षणाङ्गीकारदोषप्रसङ्गः । द्वितीयपक्षे तदभावेऽप्युपक्रमाद्यवगत विशिष्टार्थाभेदपरत्वत्यागप्रसङ्ग इति, परस्य सेयमुभयतः पाशारज्जुः । ततश्चोपक्रमादिमात्रात् न श्रुतितात्पर्यनिर्णयः । अपि तु परीक्षितप्रत्यक्षतः उपजीविप्रमाणाविरोधसहकृतादित्य-वश्यमभ्युपेयम्(अवश्यमुपेयम्-पा) । सति चैवं जीवेश्वरभेदग्राहिनित्यनिर्दोषपरीक्षितसाक्षिरूप-प्रबलप्रत्यक्षसहकारात् नित्यनिर्दोषभेदपरश्रुतीनां प्रबलत्वेन तदविरोधाय 'तत्सत्यम्' 'स आत्मा तत्त्वमसि' इत्यादिश्रुतयो नेयाः इति । तत्र यत्न प्रकारस्तु अतत्त्वमसीति नञ्-प्रश्लेषेण चप्रकारान्तरेण चेति ॥

यत्तु 'तत्त्वमसि' इत्यत्र उपक्रमाद्यनुरोधेन वा भेदप्रत्यक्षानुरोधेन वा चिन्मात्रलक्ष-णाया आवश्यकत्वे विनिगमनाविरहात् पदद्वयलक्षणाया न्यायप्राप्तत्वेनादोषत्वमिति । तन्न । प्रथमोपस्थितत्वस्यैव विनिगमकत्वेन तत्पदे एव लक्षणा स्वीकार्यस्योचितत्वात् इति ॥

एतेनैव माण्डूकोपनिषदि –

**'सर्वं ह्येतद् ब्रह्म'**

**'अयमात्मा ब्रह्म'**

**'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा विज्ञेय'**

इति साभ्यासं जीवब्रह्माऽभेदप्रतिपादनदर्शनाच्च । 'आत्मा तत्त्वमसि' इत्यादिश्रुतिष्वपि नञ्प्रश्लेषेण योजनायास्तदननुसारित्वादनादरणीयतेति निरस्तम् ॥

'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति' इति श्रुत्यैव 'सर्वं ह्येतद् ब्रह्म' इत्येवंजातीयक-श्रुत्यर्थस्य व्याख्यानात् । उपक्रमस्य बाधितार्थकत्वेन 'सर्वं ह्येतद् ब्रह्माधीनम्' इत्यर्थ-परत्वस्यावश्यकत्वेन 'अयमात्मा ब्रह्म' इति तदुत्तरवाक्यस्यापि ब्रह्माधीने ब्रह्मशब्दस्य लक्षणमङ्गीकृत्य वा, 'अब्रह्म' इति च्छेदेन वा व्याख्यानस्यावश्यकत्वाच्च ॥

### ॥ अथ 'तत्त्वमसि'इति श्रुत्यर्थविचारः ॥

किञ्च पदद्वयलक्षणां विनैव 'तत्त्वम्'पदार्थशरीरप्रविष्टचैतन्ययोः शक्त्यैव स्वातन्त्र्ये-णोपस्थितयोरभेदान्वयसम्भवे लक्षणास्वीकारायोगः । नहि 'द्रव्यं घटः' 'मृद् घट' इत्यादि-

वाक्ये अभेदान्वयलक्षणास्वीकारोऽस्ति । तथाच 'गौरश्वः' इत्यादाविव 'तत्त्वमसी'त्यत्र योग्यताविरहादेवानन्वय इत्यास्थेयम् । अन्यथा 'गौरश्व' इत्यादावपि पदद्वयलक्षणया गवाश्वयोरभेदान्वयप्रसङ्गः ।। किञ्च 'तत्त्वमसि' इत्यत्र त्वन्मते पदद्वयलक्षणा । ततो वरं मद्रीत्यैकस्मिन् 'तत्'पदे- 'त्वम्'पदे वा अमुख्यवृत्तिः । तथाहि । तत्साहचर्यात्तदिति व्यपदेशः 'वसन्तादिभ्याष्ठक्' (पा-सू-४-२-८६(१२७६) इत्यत्र 'साहचर्यात्ताच्छब्द्यं भविष्यति वसन्तसहचरितमध्ययनं वसन्ताध्ययनम्' इति महाभाष्योक्तेः[१] । प्रसिद्धं च जीवस्य ब्रह्मसहचरितत्वं 'द्वासुपर्णा सयुजा'इत्यादौ ।।

यद्वा तदाश्रितत्वात्तदिति व्यपदेशः । 'समर्थः पदविधिः'(पा-सू-२-१-१(६४७) इत्यत्र 'समर्थपदाश्रितत्वात् पदविधिरुपचारेण समर्थ इति पदेनोच्यते' इति महाभाष्योक्तेः, 'सर्वाः प्रजाः सदायतनाः' इति वाक्यशेषाच्च ।।

अथवा 'ब्राह्मणोऽस्य मुखमासीत्'इत्यादिवत्ततो जातत्वात् तत् इति व्यपदेशः । 'इग्यणः सम्प्रसारणम्' (पा-सू-१-१-४५(३२८) इत्यत्र 'यथा काकाज्जातः काकः, श्येनाज्जातः श्येनः, एवं सम्प्रसारणाज्जातो वर्णः सम्प्रसारणमिति' महाभाष्योक्तेः, 'सन्मूलाः सोम्येमाः सर्वाःप्रजाः' इति वाक्यशेषाच्च ।।

**ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः ।**
**यथावदच्छ्रुतिस्तद्वज्जीवो ब्रह्मेति वाग्भवेत् ।।** इति स्मृतेश्च [२]।।

अथवा 'धान्यमसि धिनुहि' इत्यत्र तण्डुले धान्यशब्दवत् तदधीनत्वात् तदिति व्यपदेशः । 'प्राणबन्धनं हि सोम्य मन' इति वाक्यशेषे जीवस्येशाधीनत्वोक्तेः । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति भारतोक्तेश्च ।।

अथवाऽतिदेशोऽयं तद्वत्त्वमसीत्यर्थः । 'बहुगण'[३] (पा-सू-१-१-२३(२५८) इत्यादिसूत्रे

(१) 'साहचर्यात्ताच्छब्द्यं भविष्यति । वसन्तसहचरितमध्ययनम् - वसन्तोऽध्ययनमिति महाभाष्यवाक्यम् । सम्पुट ४ पृष्टम् १६७ ।

(२) भागवततात्पर्यनिर्णये(२-५-३७) उदाहृतब्राह्मस्मृतिवाक्यम् ।।

(३) बहुगणवतुडति सङ्ख्या ।। इति हि सूत्रम् ।।

'बहुगणवतुडयः सङ्ख्यावत्सम्भवन्ति अन्तरेणापि वतिमतिदेशो गम्यते । अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन वयं मन्यामहे ब्रह्मदत्तवदयं भवतीति' महाभाष्योक्तेः, 'सारूप्यामिति' (जै-सू-१-४-२३) जैमिनिसूत्रे 'आदित्यो यूपः' इत्यादिकं सादृश्यादित्युक्तत्वाच्च । 'तद् गुण-सारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'(ब्र-सू-२-३-२९) इति ब्रह्मसूत्रे ब्रह्मगुणयोगाज्जीवे तदिति व्यपदेश इत्युक्तत्वाच्च ।

'भिन्नाः जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः ।। इति स्मृतेश्च [१]।।

अन्यथा 'तत्त्वमसि' इति वाक्यमबोधकं स्यात् । यथोक्तं महाभाष्ये 'यो गामश्व इति ब्रूयान्नजातुचित् सम्प्रत्ययः स्यादिति' । यद्वा शाखा सदेशेचन्द्रे शाखाशब्दवत् जीवान्तर्यामि-तया जीवसदेशे ब्रह्मणि 'त्वम्' इति व्यपदेशः । 'य आत्मनि तिष्ठन्' इत्यादिश्रुतेः ।।

यद्वा 'ब्राह्मणो वै सर्वा देवताः' (तै-सं-१-४-४-१८) इत्यादिवत् जीवाश्रयत्वात् ब्रह्मणि 'त्वम्' इति व्यपदेशः । यद्वा ब्रह्मणः सर्वकर्तृत्वात् 'यजमानः प्रस्तरः' इत्यादिवत् 'तत्सिद्ध्या' 'त्वम्' इति व्यपदेशः । एवं च –

'तदधीनत्वतादेश्य तात्स्थ्याताद्धर्म्यपूर्वकैः
निमित्तैस्तत्त्वमस्यादि सामानाधिकरण्य गीः ।

नचैवं मुख्यार्थत्यागदोषः । अन्तर्यामिणि 'त्वम्' इत्यादेर्मुख्यताया वक्ष्यमाणत्वात् । त्वद्रीत्या पदद्वयलक्षणातः मद्रीत्या एकपदलक्षणाया ज्यायस्त्वाच्च ।।

किञ्च जहदजहल्लक्षणायां वाच्यान्तर्गतत्वेन प्राग्धीस्थस्याप्यनन्तरमनुपपत्तिदर्शनेन त्यक्तस्य पुनः स्वीकारः । जहल्लक्षणायान्तु [२]प्राग्धीस्थस्याप्यत्यक्तस्यैव स्वीकारः । त्यक्त-स्वीकारादपि वरमधीस्थस्वीकारः । एवं च –

---

(१). तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवत् इति(ब्र-सू-२-३-२९) सूत्रभाष्योदाहृतभविष्यत्पर्ववचनम् ।।

(२) अधीस्थस्य इति स्वरसः पाठः ।।

'एकस्यामुख्यवृत्त्यैव तत्त्वमित्यस्य सम्भवे ।
भेदेनैवैक्यपरताऽनेकलक्षणया कुतः? ।।

नच 'सदेव'इत्यादिवाक्ये लक्षणया प्रकृते शुद्धे, अधीते शुद्धे प्रकृतवाचिनस्तत्पदस्याऽभिधैवेति वाच्यम् । शुद्धस्यावाच्यत्वात् । तदित्येकपदलक्षणानिरासाय 'तदैक्षत तत्तेजोऽसृजत' इत्याद्यनेकपदलक्षणायोगाच्च ।।

यद्वा 'सुपां सुलुक्'[१](पा-सू-७-१-३९(३५६१) इत्यादिसूत्रात् तृतीयाविभक्त्या लुक्, प्रथमैकवचनादेशो वा । ततश्च तेन त्वं तिष्ठसि इति वा, ततस्त्वं जात इति वा, तस्य त्वमिति वा, तस्मिन् त्वमिति वा, अर्थः ।

अनेन 'जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति सन् मूलाः सोम्येमाः सर्वाः प्रजाः ऐतदात्म्यमिदं सर्वम्' इत्यादिवाक्यशेषात् । मीमांसकैः 'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः'(जै-सू-३-५-२३) इत्यत्र 'यत्र सुन्वन्ति तत्र हविर्धाने स्थित्वा सामिधेनीरनुब्रूयादिति' सप्तम्यर्थे प्रथमा स्वीकाराच्च ।।

न्याय्यं च निरवकाशप्रधानभूताऽनेकप्रातिपदिकस्वारस्याय सङ्ख्यार्थत्वेन सावकाशाप्रधानैकविभक्त्यस्वारस्यम् । 'प्रोद्गातॄणाम्' इत्यत्र तु विभक्त्यन्तरे प्रथमैकवचनस्येव षष्ठी बहुवचनस्यान्यत्राविधानात् बहुवचनानुसारेण प्रातिपदिकस्य प्रस्तोत्रादिच्छन्दोगेषु लक्षणाश्रिता । दृष्टं च 'प्रयाजशेषेण हवींष्यभिघारयति'(जै-सू-४-१-३३) इत्यत्र प्रयाजशेषप्रातिपदिकस्वारस्याय प्रयाजशेषं हविःषु प्रक्षिपतीति विभक्त्यस्वारस्यम् । एवं च –

'अवकाशोज्झितानेकमुख्यनामानुसारतः ।
युक्तोऽतादृक् विभक्तेर्हि बाधः प्रायाजशेषवत् ।।

यद्वा तस्य त्वमित्यर्थे तत्त्वमिति समस्तं पदम् । यद्वा 'ऐतदात्म्यमिदं सर्वम्' 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यत्र 'तत्' इत्यनेन नात्मा परामृश्यते किन्तु ऐतदात्म्यम्,[२] नपुंसकलिङ्गत्वात् । 'ऐतदात्म्यम्' इत्यस्य च एष चासावात्मा च एतदात्मा तस्येद-

(१) 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति हि सूत्रम् ।।
(२) किं तादात्म्या इति ताळपत्रस्थ पाठः ।।

मैतदात्म्यम् । एतदीयं वस्तु त्वमसीत्यर्थः । परमते हि एतत् सत् आत्मा यस्य तदैत-दात्म्यमिति व्याख्याततत्वात् भावप्रत्ययो व्यर्थः(१)। ततो वरम् अर्थान्तराश्रयणम् । 'विचित्रा हि तद्धितगतिः' इति वचनात् ॥

**'सः स्रष्टा चैव संहर्ता नियन्ता रक्षिता हरिः ।**
**तेन व्याप्तमिदं सर्वं ऐतदात्म्यमतो विदुः'**

इति स्मृतेश्च(२) ॥

केचित्तु-शरीरवाचिनां देवमनुष्यादिशब्दानां शरीरिपर्यन्तत्वदर्शनात्, जीवस्य 'तस्यात्मा शरीरम्'इत्यादिश्रुत्येश्वरशरीरत्वात् तत्त्वमिति व्यपदेशः शरीरशरीरिभावनिबन्धन इत्याहुः ॥

इतरेतु- 'आदित्यो ब्रह्म' इत्यादिवज्जीवे ब्रह्मत्वोपासनार्थं 'तत्त्वमसि' इति निर्देशः नतु वस्तुतत्वनिष्ठ इत्याहुः ॥

यद्वा 'स आत्मा तत्त्वमसि' इत्यत्र यद्यपि द्वेधा पदच्छेदः सम्भवति । तथाऽपि शब्दो नित्य इत्यत्रानित्यघटदृष्टान्तेनानित्य इति च्छेदवदत्रापि भिन्नशकुनिसूत्रादिदृष्टान्तैरतदिति च्छेदः । नहि आद्यखण्डे 'स यथा शकुनिः सूत्रेण प्रबद्ध' इत्युक्तयोः शकुनिसूत्रयोः,षष्ठे 'लवणमेतदुदकम्' इत्यादिनोक्तयोः लवणोदकयोः, सप्तमे 'पुरुषं सोम्यगन्धारेभ्य' इत्यादि-नोक्तयोः पुरुषगन्धारदेशयोः, नवमे 'अपहार्षीत् स्तेयमकार्षीत्' इत्यादिनोक्तयोः स्तेनाप-हार्ययोश्चैक्यं, स्तेनापहार्यदृष्टान्ते हि स्पष्टम् ऐक्यज्ञानिनोऽनर्थः । परकीयब्रह्मत्वाभिमानी हि स्तेनः, नतु विद्यमानब्रह्मत्वाज्ञानी । नच सत्यानृताभिसन्धिमात्रमिह विवक्षितम् । तथात्वे सत्यानृतवाक्ये दृष्टान्तेन पूर्तेः 'अपहार्षीत्' इत्यपहारदृष्टान्तायोगात् । आद्ये खण्डे सुषुप्ति-विषये 'स्वयमपीतो भवति'इत्यत्र ब्रह्मणि 'स्व'शब्दो न जीवाभेदाभिप्रायः ॥

**'स्वातन्त्र्यात् स्व इति प्रोक्त आत्मायं चातततत्वतः ।**
**ब्रह्मायं गुणपूर्णत्वाद् भगवान् विष्णुरव्ययः'**(३) इति श्रुतेः आत्मीयत्वार्थसम्भवाच्च ॥

---

(१) स यः सदाख्य एष उक्तोऽणिमाणुभावो जगतो मूलमैतदात्म्यमेतत्सदात्मा यस्य सर्वस्य तदेतदात्मा तस्य भाव ऐतदात्म्यम् । इति बृहदारण्यकशाङ्करभाष्यतात्पर्यानुवादोऽयम् ॥

(२) बृहदारण्यकभाष्ये (३-५४) उदाहृतब्रह्माण्डवचनम् ॥

(३) विष्णुतत्त्वनिर्णयोदाहृतपरमोपनिषत् वाक्यम् ॥

'अपीतो भवति' इत्यस्यापि तिरोहितः सन् प्राप्तो भवतीत्येवार्थः, नत्वभिन्न इति । अपेरपिधाने इणश्च गतौ निष्ठायाश्च कर्तरिशक्तेः क्लृप्तत्वात् ऐक्ये योगरूढ्योरभावाच्च । ऐक्यार्थत्वे 'अपीत'इत्यस्य भवतेश्चाकर्मकत्वेन श्रुतद्वितीया अयोगाच्च । अश्रुततृतीया कल्पनाप्रसङ्गाच्च ॥

**'स्वं कुलायं यथाऽपीतःपक्षी स्यादेवमीश्वरम् ।**
**अप्येति जीवः प्रस्वापे'**(१)

इति स्मृतेश्च ॥

**'यथाऽस्मिन् आकाशे श्येनो वा सुपर्णो वा विपरिपत्यश्रान्तः**
**संहत्य पक्षौ सल्लयायैव ध्रियते एवमेवाऽयं पुरुष'**

इति सुषुप्तिविषयश्रुत्यन्तरे भिन्न-श्येन-नीडदृष्टान्तोक्तेश्च । 'प्राज्ञेनात्मना सम्परिष्वक्त' इति सुषुप्तौ भेदश्रुतेश्च । त्वन्मतेऽपि भेदपरेण 'सुषुप्त्युत्क्रान्त्योर्भेदेन'(ब्र-सू-१-३-४२) इति सूत्रेण विरोधाच्च । त्वत्पक्षेऽपि जागरण इव सुषुप्तावप्याविद्यकजीवब्रह्मभेदस्य सत्त्वाच्च ॥

नच द्वितीयखण्डे 'नानात्ययानां वृक्षाणां रसानाम्' इत्यादिनोक्तानां नाना वृक्षरसानां, तृतीये 'इमाः सोम्य नद्यः' इत्यादिनोक्तयोर्नदी समुद्रयोश्चैक्यं शङ्क्यम् । नहिं नानावृक्षरसा अन्योन्यं भेदत्यागेन प्राक्सिद्धेन मधुनैक्यमापद्यन्ते, न वा प्राग्भेदभ्रान्तिविषायाः पश्चात् तदविषयाः, किन्तु तन्तव इव पटम् अन्योन्यं भिन्ना एव प्रागसिद्धं मधूत्पादयन्ति । नचेदं दार्ष्टान्तिकानुगुणम् । नदीसमुद्रदृष्टान्तेऽपि किं नदी-समुद्रावयविनोरैक्यम् ? किं वा तदवयवजलाणूनाम्? उत द्रव्यान्तरारम्भः? । नाद्यद्वितीयौ । माषराशौ प्रक्षिप्तमाष-तदवयवानामिव क्षीरे प्रक्षिप्तनीर-तदवयवानामिव चान्योन्यं मिश्रीभावेऽपि प्राग्भिन्नानां पश्चादप्यैक्यायोगात् । 'ता एवापो ददौ तस्य स मुनिः संशितव्रतः'(२) इति कौर्मे या इन्द्र-कमण्डलस्था आपः स्वकमण्डलौ निक्षिप्तास्ता एव वसिष्ठो दत्तवानित्युक्तेश्च । सप्तनदीनां मिश्रीभूतानामपि पुनर्वियुज्य समुद्रगमनदर्शनाच्च । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इति सावधारणश्रुतिविरोधाच्च ।

---

(१) मुक्तौचान्योऽपि सन्सदा इतिपूर्णपाठः । विष्णुतत्वनिर्णयोदाहृतपरमोपनिषद्वाक्यम् ॥

(२) भगवद्गीताभाष्यद्वितीयाध्यायोदाहृतमहाकौर्मवचनम् ॥

'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् ।
नचैतदेव भवति यतो वृद्धिःप्रदृश्यते ।।'[१]

इति सयुक्तिकस्मृतिविरोधाच्च । समुद्रे तु महत्वात् वृद्ध्यदर्शनम् । पूतापूतयोः शीतोष्ण-योर्मधुरलवणयोर्जलयोर्मेलने उभयगुणदर्शनाच्च । 'तास्समुद्रात्समुद्रमेवापि यन्ति' इति अव-धित्वादिनिर्देशायोगाच्च । वाचस्पतिनापि 'अवस्थितेरिति काशकृत्स्नः'(ब्र-सू-१-४-२३) इति सूत्रे नदीसमुद्राभेदस्य निरस्तत्वाच्च[२]। भेदाज्ञानन्तु क्षीरनीरयोरिव व्यामिश्रीभूतस्वर्णताम्रा-देरिव च मिश्रीभावाद्युक्तम् । अन्त्ये न कस्यापि केनाऽप्यैक्यं दार्ष्टान्तिकानानुगुण्यं च ।

'ताः समुद्रात्समुद्रमेवापि यन्ति स समुद्र एव भवति' इत्यत्रापि प्रकृतनदीरुद्दिश्य समुद्रभवनविधाने 'ते तण्डुला ओदनं भवन्ति' इत्यादिवत् ताः समुद्रा एव भवन्तीति स्यात् । अतो नद्यः नियतजलराशिरूपात्-खातरूपाद्वा, देवता रूपाद्वा,समुद्रात् गच्छन्ति तं प्रविशन्ति च, समुद्रस्तु स एव, नैतासां समुद्रत्वमिति वा, स समुद्र एव नतु नदीत्वं प्राप्नोतीति वाऽर्थः । तस्मादन्त्येऽप्यन्योन्यं भेदस्याज्ञान एवेमौ दृष्टान्तौ ।।

अत एव नानारसवाक्ये दार्ष्टान्तिके 'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति, त इह व्याघ्रो वा' इति नदीसमुद्रवाक्ये च दार्ष्टान्तिके 'सत आगम्य न विदुः सत आगच्छामह इति, त इह व्याघ्रो वा' इति सतो भेदस्याज्ञाने-नैवानर्थ उक्तः । नहि गृहे प्रविष्टस्य गृहादागतस्य वा तदैक्यम् । तस्माद् दृष्टान्तानुसारेण अतत्त्वमसीति च्छेदो युक्तः । तथा च श्रुत्यन्तरम् ।।

'यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।
यथानद्यः समुद्रश्च शुद्धोदलवणे यथा ।।
यथा स्तेनापहार्यौ च तथा पुंविषयावपि ।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ' इति[३] ।।

---

(१) भोक्त्रधिकरण सूत्रभाष्योदाहृत स्कान्दपुराणवाक्यम् ।।

(२) 'नदीपाथः परमाणूनां तु समुद्रपाथः परमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव नाभेदः । एवं समुद्रादपि तेषां भेद एव ।' इति भामतीवाक्यम् ।

(३) विष्णुतत्वनिर्णयोदाहृतपरमोपनिषत् वाक्यम् ।।

किञ्च आद्ये खण्डे 'स्वप्नान्तं मे सोम्य विजानीहि' इति स्वातन्त्र्यशङ्कानास्पदसुषुप्ति-निदर्शनेन चतुर्थे च 'अस्य यदेकां शाखां जीवो जहाति' इत्यादिना अन्वयव्यतिरेकोक्त्या, अष्टमे च 'पुरुषं सोम्योपतापिनम्' इत्यादिना स्वातन्त्र्यशङ्कानास्पदमरणनिदर्शनेनेश्वरा-धीनत्वस्योक्तत्वाद् अतदित्येव च्छेदो युक्तः । एवं च –

**'वाक्यशेषानुसारेण मुख्यार्थस्यैव सम्भवे ।**
**तद्विरुद्धानेकपदलक्षणा नैव युज्यते' ।।**

चतुर्थे खण्डे 'अनेन जीवेनात्माऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' इत्यत्र च जीवशब्दः ईश्वरपरः । 'मोदमान' इति संसरिणः पृथगुक्तेः । 'एतस्यैव सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति' इत्यत्र 'अणिम'शब्दः परमसूक्ष्मेश्वरपरः ।

'स एषोऽणिमा ऐतदात्म्यमिदं सर्वम्' इति इहैव श्रुतावीश्वरे तस्य प्रयोगात्, नतु परीत्या धानापरः । 'तासां किमत्र पश्यसीति अण्व्य इवेमा धाना भगव' इति भाव-प्रत्ययरहितेन स्त्रीलिङ्गेन बहुवचनान्तेन 'इव'शब्दशिरस्केण च 'अणु'शब्देन निर्दिष्टतया तद्विपरीताणिमशब्दानर्हत्वात्, 'न निभालयस' इत्युक्तादृश्यत्वायोगाच्च । यदि चाष्टमे विदुषो ब्रह्मप्राप्तिमात्रं विवक्षितं तदा तस्य 'वाङ्मनसि सम्पद्यते' इत्यादि 'तेजः परस्यां देवतायाम्' इत्यन्तमेव वाक्यं स्यात् । 'तस्य यावन्न वाङ्मनसि सम्पद्यते' इत्यादिव्यर्थम् । स्मृतिश्च–

**'यदा प्राणान् ददातीशः तदा चेतनकोऽखिलम् ।**
**जानाति ग्रस्तकरणस्तेन वेत्ति न किश्चन' इति ।।**(१)

'स आत्मा' इत्यत्र च 'सः अणिम'शब्दोक्तः ईश्वरः, आत्मा=आतत इत्येवार्थः, नतु जीवात्मेति ।।

**'यदाप्नोति यदादत्ते यच्चात्ति विषयानिह ।**
**यच्चास्य सन्ततो भावस्तेनात्मेति भण्यते'**

---

(१) विष्णुतत्त्वविनिर्णयोदाहृतस्मृतिवाक्यम् ।।

इति भारतोक्तेः ।। 'नानुमानमतच्छब्दात्' (ब्र-सू-१-३-३) 'प्राणभृच्च' (ब्र-सू-१-३-४) इति सूत्रे 'तमेवैकं जानथ आत्मानम्' इति वाक्योक्तो न जीवः, तद्वाचिशब्दाभावादिति त्वयाऽपि सिद्धान्तितत्वेन(१) 'आत्म'शब्दस्य जीवेऽप्यमुख्यत्वाच्च ।।

'स इमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्' इत्यत्रापि जीवशब्देनेश्वर उच्यते नतु संसारी, 'जीव इति भगवतोऽनिरुद्धस्याख्या' इति श्रुतेः । **'विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात्'** इति स्मृतेश्च(२) । जीवेऽपि योगसम्भवेन रूढिकल्पकाभावाच्च । **'अहं हि जीवसञ्ज्ञो वै मयि जीवः समाहितः'** इति मोक्षधर्मे भगवद्वचनाच्च ।।

प्राणधारकत्वरूपनिमित्तस्येश्वर एव मुख्यत्वाच्च । संसारिणस्त्रिवृत्करणपूर्वकं नामरूप-निमित्तस्येश्वर एव मुख्यत्वाच्च । संसारिणस्त्रिवृत्करणपूर्वकं नामरूपात्मकप्रपञ्चकर्तृत्वा-योगाच्च । तेजोऽबन्नानां 'तत्तेज ऐक्षत ता आप ऐक्षन्त इमास्तिस्रो देवता' इति पूर्वमेव चेतनत्वसिद्ध्या पुनर्जीवप्रवेशोक्त्ययोगाच्च ।।

'एकमेवाऽद्वितीयम्' इत्युपक्रमः । एकविज्ञानेन सर्वविज्ञानं च प्रागेव व्याख्यातम् । नचैक्याप्रसक्तेः 'अतत्त्वमसि' इति निषेधायोगः । 'इष्टापूर्तं मन्यमाना वरिष्ठम्'(आ-उ-२-९) इत्यादाविव श्रुतितात्पर्यापरिज्ञानेन वा, 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यादाविव अनादिक्लृप्तसमयेन वा, देहेन्द्रियादीन् प्रति स्वातन्त्र्यरूपस्येश्वरलक्षणस्य सर्वैरपि आत्मन्य-भिमन्यमानत्वेन प्रत्यक्षेण वा, प्रसक्तस्यैक्यस्य निषेधोपपत्तेः ।।

एवं च 'एकमेवाऽद्वितीयम्' इति समाभ्यधिकराहित्यस्योपक्रमात् । 'ऐतदात्म्यमिदम्' इति तस्यैवोपसंहारात्, 'अतत्त्वमसि' इति नवकृत्वोऽभ्यासात्, शास्त्रं विना शास्त्रैक-गम्येश्वरभेदस्याप्रसक्त्या अपूर्वत्वात्, 'अथ सम्पत्स्यते' इति फलश्रवणात्, 'येनाश्रुतं श्रुतं

(१) कथम्? प्राणभृद्धीह घटादिच्छिद्रवत्सत्त्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीतिनिषिध्यते । इति शाङ्करभाष्यम् ।।

(२) विष्णुतत्त्वविनिर्णयोदाहृतस्मृतिवाक्यम् ।।

भवति' इत्याद्यर्थवादात्, शकुनि-सूत्र-दृष्टान्तैरुपपादनात्, षड्विधतात्पर्यलिङ्गानि भेदपराण्येवेति ।।[१]

।। इति 'तत्त्वमसि' इति श्रुत्यर्थविचारः ।।
।। इति तत्त्वमसिश्रुतेः परोदीरितार्थयुक्तायुक्तचिन्ता ।।

## ।। अथ 'अहं ब्रह्मास्मि' इति श्रुत्यर्थः ।।

एतेन 'अहं ब्रह्मास्मि' इत्याद्यपि व्याख्यातम् । उक्तरीत्या एकपदलक्षणया ब्रह्मसाहचर्यादिना जीवे ब्रह्मेति व्यपदेशस्य वा, सादृश्यादिना ब्रह्मण्यहमिति व्यपदेशस्यचोपपत्तौ पदद्वयलक्षणया ऐक्यपरत्वायोगात् ।।

किञ्चाहं शब्दो जीवान्तर्यामिणि मुख्यः ।

**'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाभिधीयते ।**
**एषोऽहं त्वमसौचेति नतु सर्वस्वरूपतः'**[२]

इत्यादिस्मृतेः । 'अहं मनुरभवं सूर्यश्च' इत्यन्तर्यामिणि 'अहम्'शब्दप्रयोगाच्च । नहि त्वत्पक्षेऽपि विशिष्टचैतन्यरूपो वामदेवो विशिष्टचैतन्यरूपमनुसूर्यादिर्भवति । 'अहम्' मन्वादिशब्दैश्चिन्मात्रलक्षणायां चोत्तमपुरुषायोगः । 'अहं भूमिमददामार्याय' (ऋ-सं-४-२६-२) इत्याद्ययोगाच्च । नहि चिन्मात्रं भूमिमादात् । भगवान् विष्णुर्हि इन्द्राय भूमिमादात्, तस्मात्-

**'अहन्नामाभवत्तस्योपनिषदहमिति'**
**'अहन्नामा हरिर्नित्यं अहेयत्वात्प्रकीर्तितः'**[३]

इत्यादिश्रुतेश्च ।। श्रुत्यन्तरे 'अहं तत्तेजोरश्मीन्नारायणं पुरुषं जातमग्रतः । तमिममहं विजानाति' इति अहेये 'अहम्'शब्दप्रयोगाच्च । अन्यथा 'अहं विजानामि' इति स्यात् ।

---

(१) किञ्च तत्त्वमसि इत्यारभ्य भेदपराण्येवेति पर्यन्त वाक्यानि न्यायामृते २-परिच्छेदे-२८ भङ्गं भागशः अनुकरोति ।।

(२) सूत्रभाष्ये आनन्दमयाधिकरणोदाहृत स्मृतिः ।।

(३) विष्णुतत्त्वविनिर्णयोदाहृत नारायणश्रुतिः ।।

ततश्चान्तर्याम्यैक्यमेवात्रोच्यते । उक्तं च अन्तर्यामिणि नियम्यानन्त्यादिना भेदप्रसक्तिः । तथा च श्रुत्यन्तरं 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति । अन्यथा 'य एष आदित्ये पुरषो दृश्यते सोऽहमस्मि' इति छान्दोग्ये 'स एनान् ब्रह्म गमयति' इति भेद-परोत्तरवाक्यविरोधः ॥

किञ्च 'स एतमेवं विद्वानुपास्ते' इत्युत्तरवाक्ये उपास्तिश्रवणात् त्वन्मते चोपास्यस्यारोपितत्वान्नानेनैक्यसिद्धिः । 'योऽसावसौ पुरुषः सोऽहमस्मि वायुः' (ईश-उ-१६) इतीशावास्ये च 'वायुरनिलममृतमथेदं भस्मान्तं शरीरम्' इत्युत्तरवाक्यविरोधः । नहि शरीरादेरपि जीवैक्यम् । 'अग्ने नय सुपथा राये अस्मान्' (ई-उ-१०) इत्यादिभेदपरोत्तरवाक्यविरोधश्च । 'तद्योऽहं सोऽसौ योऽसौ सोऽहमस्मि' इत्यैतरेये 'चक्षुर्मित्रस्य वरुणस्याग्नेः'(ऐ-उ-२-२-४) इति भेदपरोत्तरमन्त्रविरोधः । 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवाऽवेद अहं ब्रह्मास्मि' इति बृहदारण्यके च 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणाम्'(बृ-उ-३-५-४) इति भेदपरवाक्यविरोधः । किञ्चात्रवाक्ये ब्रह्मण एव प्रकृतत्वात्, नानेन जीवब्रह्मैक्यसिद्धिः । 'य एवं वेदाहं ब्रह्मास्मि' इत्युत्तरवाक्येतु 'इति'शब्दप्रयोगात्, त्वन्मते चेतिशब्दयुक्तानाम् 'आदित्यो ब्रह्म' इत्यादीनामुपासनार्थत्वात् । 'अथ योऽन्यां देवतामुपास्ते' इत्युत्तरवाक्ये उपास्तिश्रवणाच्च नानेनैक्यसिद्धिः ॥

यद्वा अत्र 'ब्रह्म'शब्दो 'बृंहणार्थ' इति न परब्रह्मैक्यसिद्धिः । अन्यथा पूर्ववाक्ये 'आत्मानमेवावेत्' इत्यनेनैव ब्रह्मेतिज्ञानस्य सिद्धत्वात् ब्रह्मास्मीति व्यर्थम् ॥

एतेन 'अहं हरिः सर्वमिदं जनार्दनः'(वि-पु-१-२२-८७)इत्यादिस्मृतयोऽपि व्याख्याताः । 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इत्यत्राप्यन्त-र्यामिभेदज्ञानी निन्द्यते । अन्यथा पदद्वयलक्षणादिदोषात् ॥

यद्वा योऽन्यो= जीवः, अन्यां= विलक्षणां, देवतामुपास्ते । किमिति ? अन्योऽसौ= परमात्मा, अहमस्मीति न स वेद यथा पशुरित्यर्थः । अन्यथाहमर्थस्यापि विशेष्यत्वे

'देवतामुपास्ते' इत्ययुक्तम् । नच व्यवहितान्वयदोषः । यस्य येनार्थसम्बन्ध इति न्यायेन(१) सन्निधानाद्योग्यतायाः प्रबलत्वात् ।।

अथवा –

**'स्वातन्त्र्येणाऽन्यसद्भावनिषेधाय श्रुतिस्त्वियम् ।**
**अन्योऽसावन्योऽहमस्मीति पश्यन्नज्ञ इति स्म ह ।**
**आह तद्ब्रह्मणोऽधीना भिन्ना जीवस्तु सर्वदा'** (सर्वशः-पा)।।'

इत्यादि स्मृतेः स्वातन्त्र्यज्ञानी पशुरित्यर्थः ।।

केचित् 'उपास्ते' इत्यादिश्रवणात् पुंप्रयत्नसाध्यज्ञानविजातीयवृत्त्यन्तररूपोपासनाया एव निषेधः नतु ज्ञानस्येत्याहुः ।।

'स यो ह वै तत्परमं ब्रह्मवेद ब्रह्मैव भवति' इत्यत्रापि द्वितीयो 'ब्रह्म'शब्दो जीव-परः । 'बृह-जाति-जीव-कमलासन-शब्दराशिष्विति' वचनात् । 'ब्रह्माणि जीवा सर्वेऽपि'(२) इत्यादि स्मृतेश्च । 'द्वे ब्रह्मणी वेदितव्ये' इत्यादौ जीवे तत्प्रयोगाच्च । तथाच यः परमं ब्रह्म वेद स जीव एव भवति नतु परं ब्रह्मेत्यर्थः । अत एवाद्यो 'ब्रह्म'शब्दः परमत्वेन विशेषणतः(विशेषितः-पा) ।।

यद्वा 'ब्रह्म भवति' बृंहितत्वरूपब्रह्मत्वाक्रान्तो भवतीत्यर्थः । 'सम्पूज्य ब्राह्मणो भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्'(३) इतिवत् । नहि शूद्रः स्वपूज्यब्राह्मणव्यक्तिरेव भवति किन्तु ब्राह्मणत्वजात्याक्रान्तः, ब्रह्मण्यपि ब्रह्मशब्दस्य बृंहणार्थत्वात् । 'ब्रह्मत्वं बृंहितत्वं स्यात् जीवानां न परमात्मता'(परात्मता-पा) इति स्मृतेश्च । 'अस्य महिमानमिति वीतशोकः' इतिवाक्यशेषाच्च । अन्यथा पूर्वत्र 'यथा नद्यः स्यन्दमाना' इति भिन्ननदी-समुद्रदृष्टान्तोक्तिः 'परात्परं पुरुषमुपैति दिव्यम्' इति ब्रह्मप्राप्त्युक्तिश्चायुक्ता स्यात् ।।

---

(१) यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् इति श्लोक-वार्तिकोक्तन्यायेनेत्यर्थः ।।

(२) परब्रह्माणि मुक्तिगाः इति पूर्णपाठः ।। भगवद्गीतातात्पर्यद्वितीयाध्यायोदाहृतश्रुतिवाक्यम् ।।

(३) विष्णुतत्त्वविनिर्णयोदाहृत स्मृतिः ।।

किञ्च त्वत्पक्षे नित्यं ब्रह्मभूतस्यापूर्वब्रह्मभावोक्तिरयुक्ता । आरोपनिवृत्तेः साध्यत्वेऽप्यशाब्दत्वात् । 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यत्रापि जीव एव सन् ब्रह्म प्राप्नोति इति कर्तृ-कर्मभावेन भेद एवोच्यते । 'कर्माणि विज्ञानमयश्चात्मा परेऽव्यये सर्व एकीभवन्ति' इत्यत्राप्येकीभावः स्थानैक्यं सादृश्यं वा, न स्वरूपैक्यम् ।

**'अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।**
**एकीभावस्तथा प्रोक्ता नैकीभावः स्वरूपयोः'**(१)

इति वचनात् ।

**'अह्नि इतस्ततो गतो गावः सायं गोष्ठे एकीभवन्ति'**
**'एकीभूताः नृपाः सर्वे ववृषुः पाण्डवं शरैः'**
**'अस्मिन् ग्रामे महाजना एकीभूताः'**
**'कीटो भ्रमरेणैकीभूता'** इत्यादौ प्रयोगाच्च ॥

त्वत्पक्षे ऐक्यस्य प्रागेव सिद्धत्वादभूततद्भावार्थ'च्वि'प्रत्ययबाधः । तथा सकृत्प्रयुक्तस्य 'एकीभवन्ति' इत्यस्य कर्मसु निवृत्तिरित्यर्थः, विज्ञानात्मन्यैक्यमर्थ इति अनेकार्थत्वम् । तथा 'परेऽव्यये' इति श्रुतसप्तमीहानिः, अश्रुततृतीयाकल्पनापत्तिः । तथा 'निरञ्जनः परमं साम्यमुपैति' इति पूर्ववाक्येन 'परात्परं पुरुषमुपैति दिव्यम्' इति वाक्येन च विरोधः स्यात् । नापि अन्तर्यामि प्रकरणस्थं 'नान्योऽतोऽस्ति द्रष्टा' इति वाक्यम् अक्षरप्रकरणस्थं 'नान्यदतोऽस्ति द्रष्टृ' इति वाक्यं चैक्ये मानम् । 'अत' इत्यनेन प्रस्तुतं सर्वनियन्तारं परामृश्य 'अन्यो द्रष्टा नास्ति' इत्युक्ते अस्मिन् ग्रामे अयमेव सर्वनियोजकः नान्यःपुरुषोऽस्ति इत्यादौ'अन्य'शब्दस्य प्रस्तुत सदृशान्यपरतया व्युत्पन्नत्वेनेहापि सर्वनियामकद्रष्ट्रन्तरनिषेधात् । उक्तं हि 'समानमितरच्छयेनेने'त्यत्र(२) 'इतर'शब्दस्य पूर्वनिर्दिष्टसदृशपरत्वम् ॥

एवं च 'कन्दर्पः सुन्दरो लोके नान्योऽस्ति इह पुमान्' इत्युक्ते कन्दर्पतोऽन्यः पुमान्नेति

(१) आथर्वणोपनिषद्भाष्योदाहृत महावाराहस्मृतिः ॥
(२) समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् । (जै-सू-७-१-२)

न प्रतीयते किन्तु कन्दर्पसदृशः सुन्दरो नेति भासते । एवं परमात्मसदृशद्रष्टृभावोऽत्र भासते । अन्यथा अन्तर्यामिवाक्ये 'य आत्मनोऽन्तरः यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इति पूर्ववाक्येन 'एष त आत्माऽन्तर्याम्यमृतः अतोऽन्यदार्तम्' इत्युत्तरवाक्येन च विरोधः । तत्र परमात्मनोऽन्यं चेतनमङ्गीकृत्य तस्यार्तियुक्तत्वेना-स्वातन्त्र्यस्यैवोक्तेः । अक्षरवाक्ये च 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिपूर्ववाक्येन च विरोधः स्यात् । 'द्वितीयाद् वै भयं भवति'इत्यस्यापि विरोधिनः समानाद् भयं भवतीत्येवार्थः, लोके तादृशादेव भयदर्शनात् । अस्य च लोक-सिद्धानुवादित्वात् । 'समानाद्धिभयं भवेत्'(१) इति स्मृतेश्च । पूर्वत्र 'तस्मादेकाकी बिभेति' इति उत्तरत्र च 'तस्मादेकाकी न रमते' इतिश्रवणाच्च । 'यदा ह्येवैष एतस्मिन् उदरमन्तरं कुरुते' इत्यत्रापि 'एतस्मिन्' इति विशेषणात् स्वगतस्यैव भेदस्य निषेधः ॥

एवं च 'एको देवः सर्वभूतेषु गूढः' (श्वे-उ-६-११) इत्यादि श्रुतिः 'एकः एवहि भूतात्मा भूतेभूते व्यवस्थितः'(२) इत्यादिस्मृतिश्चान्तर्याम्यैक्यपरा । 'भूत'शब्दस्य 'यतो वा इमानि भूतानि जायन्ते । यत्प्रयन्त्यभिसंविशन्ति' इत्यादाविव चेतनपरत्वात् ॥

**'यावन्मोक्षं तु भेदः स्यात् जीवस्य परमस्य च ।**
**ततः परं न भेदोऽस्ति भेदहेतोरभावतः ।**
**विभेदजनकेऽज्ञाने नाशमात्यन्तिके गते ।**
**आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति'**

इत्यादिस्मृतिष्वपि 'भेद'शब्दो मित्रभेद इत्यादाविव वैमत्यार्थः ।

'जीवस्य परमैक्यन्तु बुद्धिसारूप्यमेव च' इत्यादिस्मृतेः । जीवस्य हि आमोक्षमीश्वरकाम-विरुद्धकामिता न तु मोक्षे । अत एव मुक्तः सत्यकामः । असन्तम्= अभद्रमित्यर्थः । 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' (भ-गी-१३-३) इत्यस्यापि क्षेत्रज्ञं= सर्वज्ञं, मां, सर्वक्षेत्रेष्वपि विद्धीत्यर्थः । तत्रैव ।

---

(१) 'कस्माद्भयं भवेत्तस्य समानाद्धि भयं भवेत्' इति पूर्णवाक्यम् । बृहदारण्यकभाष्योदाहृतब्रह्मतर्क-वचनम् ॥

(२) बृहदारण्यकभाष्योदाहृतब्रह्मतर्कवचनम् ॥ (३-४-२)

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।
तत्क्षेत्रं यच्च यादृक् च,तत्समासेन मे शृणु'(भ-गी-१३-२,४)

इत्युक्त्वा–

'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रिय गोचराः (भ-गी-१३-६)

इत्याद्युक्त्वा–

'एतत् क्षेत्रं समासेन सविकारमुदाहृतम्' (भ-गी-१३-७)

इत्यनेन 'यस्य पृथिवी शरीरम्' इत्यादिश्रुत्या ईश्वरशरीरतयोक्तं चेतनाचेतनात्मकं सर्वक्षेत्रमित्युक्तत्वात् । मोक्षधर्मे –

'क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते' इति
'प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम् '

इति चोक्तेश्च । नचैवं रूढार्थत्यागः । जीवेऽपि 'क्षेत्रज्ञ'शब्दस्य यौगिकत्वात् । [1]शास्त्रस्थावेति न्यायाच्चेति[2] ।

।। इति 'अहं ब्रह्मास्मि' इति श्रुत्यर्थः ।।

## ।। अथ 'स उत्तमपुरुषः' इत्यादि श्रुत्यर्थः ।।

किञ्च जीवेश्वरयोरभेदे 'स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इति विदुषः परमेश्वराश्रयत्वं प्रतीयते तदनुपपन्नं स्यात् । किञ्च तथा 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि'

---

(१) जै-सू-१-३-९ ।।

(२) इदं प्रकरणम् न्यायामृते २ परिच्छेदे २९ भङ्गम् भागशः अनुकरोति ।।

(छां-उ-८-१३-१) इति श्रुतस्य ब्रह्मलोकस्य 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म तदमृतम्' (छां-उ-८-१४-१) इति स्वरूपमुक्त्वा 'प्रजापतेः सभां वेश्म प्रपद्ये' (छां-उ-८-१४-१) इति कृतात्मनः ब्रह्मभिन्नतत्सभाप्रतिपत्तिः फलं श्रूयते । तदनुपपत्तिः ॥

नच 'अश्व इव रोमाणि विधूय पापम्' इत्युपक्रम्य 'तद्ब्रह्म तदमृतम्' इत्यवसाने एका ब्रह्मैव लोको= ब्रह्मलोक इति निर्गुणात्मविद्या, 'प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवानि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्राप्स्यसि स हाहं यशसाहं यशः' (छां-उ-८-१४-१) इति तु ब्रह्मसभाप्राप्तिफलकाऽन्या सगुणविद्येति वाच्यम् । यस्य प्रतिमा अस्ति 'तस्य नाम महद्यशः' इति ब्रह्मण एव यशोनामकत्वेन तत्सम्बन्धिन्या अस्याः विद्यायाऽनिर्गुणात्मविद्यात्वावश्यम्भावात् ॥

किञ्च 'स हाहं यशसां यशः' इत्युक्त्वा 'श्वेतमदत्कमदत्कं श्वेतम्' (छां-उ-८-१४-१) इति श्रुत्या ब्रह्मश्वेतं= निर्मलं, अदत्कम्[१]= उद्यत्सुखम् । या लोपः छान्दसः अभ्यासस्तात्पर्यार्थः । एवमर्थतया तदेव यशो विशेष्य 'लिन्दुमाऽभिगां लिन्दुऽमाभिगाम्' (छां-उ-८-१४-१) इति श्रुत्या लीनं धुनोति इति लिन्दु= अज्ञानं, माभिगाम्= मा प्रापम्, इत्यर्थतया अज्ञानाभावोक्ते अनिर्गुणात्मविद्यात्वं स्फुटम् ॥

अपि च 'श्यामं प्रपद्ये शबलं प्रपद्ये श्यामात् शबलं प्रपद्ये'(छां-उ-८-१३-१) इति श्रुत्या श्यामं= पापं, प्रपद्ये, शबलं= नानाविधं शरीरं, प्रपद्ये, श्यामात् शबलं प्रपद्ये' इति तयोर्हेतुहेतुमद्भाव उक्तः । एवमर्थया संसारनिर्वेदसाधनमुक्त्वा 'अश्व इव रोमाणि विधूय' इत्यादिना कृतात्मत्वेन ज्ञानित्वेनचोक्तस्य ब्रह्मलोकादिसम्भवमुक्त्वा ब्रह्मलोकस्य 'आकाशो ह वै नाम' इत्यादिना स्वरूपमुक्त्वा 'प्रजापतेः सभाम्' इत्याद्यन्ते 'लिन्दुमाऽभिगाम्' इत्यनेन जीवस्य संसारापादकाज्ञाननिवृत्तेराशंसनात् अनिर्गुणात्मविद्यैवेयमित्यवश्यमङ्गीकार्यमिति ॥

---

(१) 'उदत्कम्= उद्यत्सुखम्' इति ताळपत्रस्थ पाठः । परन्तु इदानीन्तन उपनिषत् वाक्ये एतत् पाठः न दृश्यते ॥

किञ्च जीवेश्वरयोरभेदे 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्याक्तं भरते विश्वमीशः' इति तद्भरर्णकर्तुः 'ईश'शब्देन स्वातन्त्र्यमुक्त्वा तदकर्तुः जीवात्मनो 'अनीशश्चात्मा मुह्यते भोक्तृभावात्' इति 'अनीश'शब्देनास्वातन्त्र्यमुच्यते, तदनुपपत्तिः ॥

**'तिलेषु तैलं दधिनीव सर्पिस्वापः स्रोतस्स्वरण्योरिवाग्निः ।**
**एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति'**

इति जीवस्य ब्रह्माधिष्ठितत्वमुच्यते । तच्चानुपपन्नं स्यात् । नचैतदभिन्नस्य तदधिष्ठितत्वमुपपन्नम् ॥

अपि च बृहदारण्यके 'स एतेन प्राज्ञेनात्मना अस्माल्लोकात्दुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्' इति परमात्मना सहितस्यैव जीवस्योत्क्रमणादिपूर्वकं मुक्तिरुच्यते । नच जीवपरमात्मनोरभेदे तदुपपद्यते ॥

किञ्च अभेदे 'को ह्येवान्यात्कः प्राण्यात्' इत्यादिना जीवेशभेदोपपादनं 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति तयोर्लब्धव्य-लब्ध-भावादिप्रतिपादनमसङ्गतं स्यात् । अत एव 'यदाह्येवैष[१] एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' इति अभेदगर्हया तस्य परमार्थत्वमुन्नीयते (उदरम्-पा) अदरम् ईषत् नु शब्दः । 'उ'शब्दो वा अवधारणार्थः । दहरमेव= अन्तरमल्पमेव= मिथ्यात्वेनाल्पकालावस्थितमेव= अभेदसहितमेव वा, भेदं यः कुरुत इति तदर्थः । अत एव 'एषोऽस्य परम आनन्दः । एषाऽस्य परमागतिः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति ज्ञानिनः प्रति परमात्मानन्दस्य परमगतित्वोक्तिः, 'भूत'शब्दितजीवानामन्यत्वोक्तिः परमात्मानन्दलेशभाक्त्वाद्युक्तिश्च सङ्गच्छते । जीवानामीश्वराभेदेच तद्वदपरिच्छिन्नानन्दत्वापत्त्या तदन्यत्वोक्तिपूर्वकं तदानन्दलेशोपजीवित्वमुच्यमानमसङ्गतमेव स्यात् ॥

किञ्च जीवेश्वरयोर्वास्तवाभेदे–

**'सूर्यो यथा सर्वलोकस्य चक्षुर्नलिप्यते चाक्षुषैः बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः'** (कठ-उ- २-२-११)

---

(१) 'एतस्मिन् अन्तरमन्तरं कुरुते' इति ताळपत्रस्थपाठः ॥

इति श्रुत्या सदृष्टान्तं जीवदुःखालेपरहितत्वोक्तिरसङ्गता स्यात् । अत एव –

'एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिंल्लोकाःश्रिताः सर्वे तदु नात्येति कश्चनैतद्वैतत्' (कठ-उ-२-२-८)

इति श्रुतौ जीवादीश्वरस्य सुप्तौ जागरणं, 'तदेव शुक्रम्' इति नित्यनिर्दोषत्वं, 'तद्ब्रह्म तदेवामृतमुच्यते' इति गुणपूर्णत्वं नित्यमुक्तत्वं, सर्वलोकाश्रयत्वं, 'तदु नात्येति कश्चन' इति परमसामर्थ्यं वैलक्षण्यमुच्यमानमुपपद्यते ॥

ननु –

'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च' (कठ-उ-२-२-९)

इति जीवेश्वरबिम्बप्रतिबिम्बभावावेदकवाक्यसमभिव्याहारात् बिम्ब-प्रतिबिम्बभावप्रयुक्त-भेदस्य च औपाधिकत्वनियमात् तादृशभेदमादाय 'सूर्यो यथा सर्वलोकस्य चक्षुः' इति वाक्येन सदृष्टान्तं जीववत् दुःखलेपराहित्यप्रतिपादनेऽपि जीवेश्वरयोर्न वास्तवाभेदहानिरिति चेत् ।

'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्'

(कठ-उ- २-२-१३)

इति श्रुत्या मोक्षसाधनज्ञानविषयतया जीवस्थत्वस्येश्वरे प्रतिपादनात् मोक्षसाधनज्ञानविषयस्य च वास्तवत्वनियमात् जीवेश्वर-बिम्ब-प्रतिबिम्बभावस्य तत्प्रयुक्ततद्भेदस्यच वास्तवत्वा-हानेः । जीवात्मस्थत्वं चेश्वरस्य 'य आत्मनि तिष्ठन्' इत्यादि श्रुत्या च वेद्यत इति न तत्र विवक्षितव्यम् । नच तत् सत्वं तद्भेदं विना युज्यते । इयं च श्रुतिः 'नित्यो नित्यानाम्' इत्यादिश्रुतिवत् जीवभेदे जीवेश्वरभेदे च मानम् । अन्यथा 'तेषां शान्तिः शाश्वती नेतरेषाम्' इति युक्त्यनुपपत्तेः । अत एव 'आत्मक्रीडा आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' इति श्रुत्यन्तरे ज्ञानिष्वपि कस्यचिदाधिक्यमुक्तमुपपद्यते । नच तादृशो ज्ञानिनः

क्रियानुपपतिः 'निष्कलं निष्क्रियं शान्तम्' इति श्रुतिप्रतिपन्ननिष्क्रियब्रह्माभिन्नत्वादिति वाच्यम् । असिद्धेः । ब्रह्मणोऽपि 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति स्वाभाविकक्रियावत्वाऽवेदनाच्च । निष्क्रियत्वश्रुतेश्च अस्मदादिसाधारणनिष्फलक्रिया राहित्यपरत्वेनाविरोधात् ॥

नच 'क्रियां वमति त्यजतीति क्रियावान्, वमेः क्विप् अनुनासिकस्य 'क्विझो लोः क्ङिति' इति दीर्घः 'मोनो धातोः' इति (पा-सू-८-२-६४(३४१) नत्वम् । तथा च क्रियावान् = क्रियारहित इत्यर्थः इति वाच्यम् । प्रतिपत्तिलाघवेन क्रियावान् इत्यस्य मतुबन्तताया एव स्वीकार्यत्वात् । क्रियावान् इत्युक्ते क्रियात्यकृत्वस्य सार्धि..प्रतीतेः । अत एव च 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा नौभिर्वा शकटैर्वा नोपजनं स्मरन्निदं शरीरम्' इति परमेश्वराश्रित यथा मुक्तो जीवस्तद्भिन्नः .इत्यर्थपरश्रुत्यन्तरे(१) क्रियाविशेष-प्रतीतिरुपपद्यते ॥

ननु 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्ते किं तत्स्वरूपमिति? जिज्ञासायां 'स उत्तमः पुरुषः' उत्तमः पुरुषः= परमेश्वरः, सः= जीव इति प्रतिपादनार्थ-मेतच्छ्रुतेः प्रवृत्तेः न जीवेश्वरभेदपरत्वमुपपद्यत इति चेन्न । परमते 'निष्क्रियं निष्कलं शान्तम्' इति श्रुत्या निष्क्रियात्वेन प्रतिपन्नेन परमेश्वरेण 'जक्षन् क्रीडन्' इति क्रियावत्त्वेन प्रतिपन्नस्य जीवस्य 'उत्तमपुरुषः सः' इत्यभेदबोधनानुपपत्तेः । 'तत्र सः पर्येति' इति 'तत्र'शब्दार्थस्य मुक्तजीवं प्रति परमेश्वराधारत्वस्यैव प्रतीतेश्च ॥

यत्तु इदं वाक्यं जीवन्मुक्तिपरमेव नतु परममुक्तिपरं । तत्र 'स्त्रीभिर्वायानैर्वा' इत्यादि-वाक्यार्थासम्भवादिति । तन्न । तत्रैव वाक्ये 'उपजनमिदं शरीरं न स्मरन्' इति विषयान्तरसञ्चाराभावस्य कथनेन परममुक्तिपरत्वस्यैवोचितत्वात् 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्'= स्वचित्तमनुकामान्नीकामभक्षः कामरूपी इमान् लोकान् सञ्चरन् इति मुक्तस्य कामान्नत्वादिप्रतिपादकश्रुतिपर्यालोचनया स्त्रीयानादिक्रीडासाधनप्रतिपादनपरोदाहृत-श्रुतेः परममुक्तिपरतया अवश्याभ्युपेयत्वाच्च ॥

---

(१) छान्दोग्यादन्यत् श्रुतिरित्यर्थः ॥

नचेष्टानिष्टरूपप्रारब्धभोगकालरूपायां जीवन्मुक्तौ कामरूपत्वकामान्नत्वादिकमुपपद्यते । नह्यनिष्टस्य द्वेषस्य दुःखादेर्मुख्यतः कामशब्दार्थत्वमुपपद्यते । नच 'कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'(बृ-उ-३-६-९) इति श्रुत्या समनस्कस्यैव कामादिधर्मत्वोक्तेर्मुक्तस्य च लिङ्गशरीररहितस्य मनःसम्बन्धाभावात् तत्प्रतिपादकमुदाहृतं वाक्यं जीवन्मुक्तिपरमेवैक्षितव्यमिति वाच्यम् । कामादेः समनस्कधर्मत्वेऽपि उदाहृतवाक्यस्य परममुक्तिपरत्वाक्षतेः । नहि मनःसत्त्वमात्रेण मुक्तस्य दुःखादिप्राप्तिः किन्तु दुष्कर्मादिसहकारेण । नच साक्षात्कृतपरमेश्वरस्य जीवस्य तादृशंकर्म सम्भवति ।।

**'भिद्यते हृदयग्रन्थिः च्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे**( आ-उ-४-१०) ।
**'तदा विद्वान् पुण्यपापे विधूय'**(आ-उ-६-८)
**'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'**(ब्र-सू-४-१-१३)

इति सञ्चितागामिकर्मणां तत्त्वज्ञाननाश्यत्वाऽवेदनात् प्रारब्धकर्मणामपि भोगादेव निवृत्तेश्चेति ।।

ननु 'तद्यो यो देवानां प्रत्यबुध्यत स एव(ष) तदभवत्'(बृ-उ-३-५-४) इति श्रुत्या 'स एष(व) तदभवत्' इति ज्ञानिनो ब्रह्मभेदाऽवेदनात् कथं जीवेश्वरयोर्वास्तवभेदोऽङ्गीक्रियते? इति चेन्न । 'तदभवत्' इति तत्सादृश्यसम्पत्तेरेव कथनेनाविरोधात्, जीवब्रह्माभेदस्य स्वतःसिद्धत्वेन परेणापि मुख्यार्थस्य त्यक्तव्यत्वात् । अन्यथा 'एष त आत्माऽन्तर्याम्यमृतः' इत्यौत्सर्गिकभेदसहचरितसम्बन्धार्थकषष्ठ्यभ्यासानुपपत्तिः । नच एष ते आत्मा= स्वरूपम् इति तदर्थः । तथासति 'अन्तर्यामि' इति स्वस्यैव स्वनियामकत्वमावेद्यत इत्यापत्तेः । 'ममात्मा भद्रसेनः' इत्यादिवाक्यवदौपचारिकार्थत्वापत्तेश्च ।।

नच बृहदारण्यके 'यः सर्वेषां भूतानामन्तरपुरषः स आत्मेति विद्यात्' इति स्वस्वरूपत्वेन परमात्मवेदनमिष्टसाधनमिति बोधनात्, जीवब्रह्माभेदो दुर्वार एवेति वाच्यम् । स यः सर्वेषां भूतानां=जीवात्मानाम्, अन्तरः पुरुषः= वेदविशिष्टःपुरुषः, सः, मे, आत्मेति= मम स्वामीति, विद्यादिति, सर्वजीवभिन्नस्य परमात्मनः स्वस्वामित्वेन ज्ञानमिष्टसाधनमिति

तदर्थोपगमात् । नच'अन्तर'शब्दस्य भेदमात्रवाचित्वेन न भिन्नवाचित्वमिति वाच्यम् । 'विज्ञानमानन्दं ब्रह्म' इत्यादावानन्दशब्दवत् अस्य 'अन्तर'शब्दस्य मत्वर्थीयाच्प्रत्ययान्तत्वोपगमात् । अन्यथा 'आनन्दं ब्रह्म'इति नपुंसकत्वानुपपत्तेः ॥

एतेन 'यः पृथिव्या अन्तरः' 'यो अब्द्योऽन्तरः' इत्यादौ 'अन्तर'शब्दो व्याख्यातः । तथा च भगवत्सूत्रं 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते (ब्र-सू-१-२-२०) इति । अत एव **'आत्मेत्येवावसीयते तत् पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मीति कृतकृत्यो भवति'**[१] इति **परमहंसोपनिषदि** अद्वैतज्ञानिनः कृतकृत्यतोक्तेरद्वैतमेव तत्त्वमिति निरस्तम् ।

'अहं मनुरभवं सूर्यश्च' इति वामदेववाक्यवत् तदुपपत्त्या तस्याद्वैतज्ञानिनं कृतकृत्यत्वोक्तिताऽसिद्धेः ॥

किञ्च जीवेश्वरयोरभेदे 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति 'अक्षरात्परतःपरः' इति 'न प्रज्ञानघनम्' इत्यादिश्रुतयस्तद्भेदप्रतिपादकाः न प्रमाणं स्युः । तथा –

**'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरःसर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।**
**उत्तमःपुरुषस्त्वन्यः'** (भ-गी-१५-१६-१७)

इत्याद्या स्मृतयश्च न प्रमाणं स्युः । नच ता औपाधिकभेदावेदकाः (वाचकाः-पा) । 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः' इत्यादिश्रुत्या जीवेशभेदस्यौपाधिकत्वनिषेधात् । तच्च वक्ष्यामः ।[२] ॥ इति 'स उत्तमपुरुषः' इत्यादि श्रुत्यर्थः ॥

## ॥ अथ कैवल्योपनिषदर्थविचारः ॥

ननु कैवल्योपनिषदि –

**'स ब्रह्मा स हरिः सेऽन्द्रः सोऽक्षरः परमः स्वराट्'**
**स विष्णुः सः प्राणः स कालोऽग्निः स चन्द्रमाः'** (कै-उ-१-८)

---

(१) 'आत्मन्येवावस्थीयते तत्' इति इदानीन्तनमुद्रित पाठः ॥
(२) 'प्रपञ्चो यदि विद्येत इति श्रुत्यर्थनिरूपणप्रस्तावे' अस्मिन् प्रकरणान्ते वक्ष्यतीत्यर्थः ॥

इत्युपक्रमात् –

'तत्परं [१]ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्' ।। (कै-उ-१-१६)

तत्त्वमेव=यथार्थमेव, नात्रोपचारशङ्का कार्येत्यर्थकाभ्यासात् अपूर्वत्वात्, 'परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति' इति तद्भूयफलात्,

'स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादि विचित्रभोगैः स एव जाग्रत्परितृप्तिमेति' (कै-उ-१-१२)

इति संहारस्य मायिकत्वोपपत्तेश्च, जीवब्रह्मभेदो न वास्तवः किन्तु तदभेद एवेति चेन्न । 'स ब्रह्म' इति उपक्रमे ब्रह्म-हरि-इन्द्र-शब्दित-चतुर्मुख-सूर्य-इन्द्राणां 'नारायणाद् ब्रह्मा जायते । नारायणादिन्द्रो जायते'(ना–अथ-उ-१) 'चक्षोः सूर्यो अजायत'(ऋ-सं-९०-१०-१३) इत्यादि श्रुत्या परमेश्वरजातत्वाऽवेदनात् । 'काकाज्जातः काकः, श्येनाज्जातः श्येनः' इति-वत् 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिवच्च 'स ब्रह्म' इत्यादिसामानाधिकरण्यव्यपदेशोपपत्त्या तस्याभेदोपक्रमत्वासिद्धेः । 'तत्परं ब्रह्म सर्वात्मा= सर्वस्यान्तर्यामी' इति वा स्वामीति वा अर्थेति, तद्वाक्यपर्यालोचनयाऽप्यभेदानवधारणात् । 'विश्वस्यायतनं महत् । सूक्ष्मात्सूक्ष्मतरं नित्यम्' इति वाक्यपर्यालोचनयापि भेदस्याऽवश्यकत्वात्, 'वालाग्रशतभागस्य'(श्वे-उ-५-९) इत्यादिना जीवस्य सूक्ष्मत्वप्रमितेरिति 'तत्त्वमेव त्वमेव तत्' इत्यस्यापि वाक्यस्य, ततः पूर्वोक्त परं ब्रह्म तद्रूपं, तत्त्वमेव= परतत्वमेव, त्वं= यथार्थभूतजीवसन्निहितम्' इति स्थूलारुन्धतीन्यायेन परब्रह्मरूपतत्त्वप्रतिपत्त्यर्थत्वात् । तद्बलेनापि जीवेशाभेदानवधारणाच्च ॥

'परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति' इति वाक्यस्यापि अभेद-विरोधिप्रतिप्रवेशकर्मत्वाऽवेदकत्वेन प्रत्युत भेदस्यैवापत्तेश्च । 'स एव माया परिमोहितात्मा' इत्यस्यतु, ननु 'तत्त्वं'पदार्थयोर्वास्तवभेद एवास्त्वित्यङ्गीकारे किं बाधकमिति शङ्कायां

(१) 'यत्परं ब्रह्म' इति इदानीन्तनमुद्रितपाठः ॥

तन्निरासाय 'तत्त्वं'पदार्थभूतजीवस्वरूपप्रतिपादनमुखेनेश्वरस्य जीववैलक्षण्यप्रतिपादनपरत्वे-नैवं जातीयकवाक्यबलेनापि जीवेश्वरभेदस्यैवापत्तेश्चेति ।।

।। इति कैवल्योपनिषदर्थविचारः ।।

## ।। अथ श्वेताश्वतरोपनिषदर्थविचारः ।।

एतेनैव जीवेश्वरयोर्भेदऔपाधिकआरोपितएव स्वीकार्यः, श्वेताश्वतरे तदभेदस्योपक्रमादि-लिङ्गषट्केन तात्पर्यगोचरत्वावधारणात् । भेदाभेदयोरुभयोरपि विरोधेन अनौपाधिकतया वास्तवत्वस्वीकारानर्हत्वात् । तथाहि ।।

'देवात्मशक्तिं स्वगुणैर्निगूढम्' इति 'देवश्चासावात्मा च' इति 'देव'शब्दितेश्वरस्य 'आत्म'शब्दितजीवस्य च निषादस्थपत्यधिकरणन्यायेन(१) कर्मधारयाश्रयणावश्यम्भावेनाभेदो-पक्रमात्, 'सर्वात्मानं सर्वगतं विभुत्वात्' इत्यभ्यासात्, प्रत्यक्षाद्यनधिगतत्वेनापूर्वत्वात् । नच जीवेश्वराभिन्नः(२) आत्मत्वादीश्वरवत् इत्यनुमानेन, तदभेदावगमोऽस्ति इति वाच्यम् । भेदग्राहिप्रत्यक्षेण तदनुमानस्य बाधितविषयत्वात् । नच तद्विरोधात् 'देवात्म शक्तिम्' इति वाक्यस्य नाभेदार्थः सम्भवतीति वाच्यम् । प्रत्यक्षस्य सम्भावितदोषत्वेन नित्य-निर्दोषत्वेनावधारितश्रुतितो दौर्बल्यात् । 'ज्ञा ज्ञौ द्वावीशानीशौ' इत्यादि 'अनन्तश्चात्मा विश्वरूप' इति आनन्त्यविश्वरूपत्वयोः,

'वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः सः विज्ञेयः स चाऽनन्त्याय कल्प्यते'

इत्यपरिच्छेदस्य च फलस्य श्रवणात् । 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मनावीशते देव एकः' (श्वे-उ-१-१०) 'तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवलमाप्तकामः' (श्वे-उ-१-११) एक एव स्तुतो देवः क्षरात्मना= कार्यकारणसङ्घाताभिमानेन, आविशते= तं प्रवि-शतीत्यर्थः(३)। तस्याभिध्यानात्= ज्ञानात्, यथायोगं स्वगुणज्ञानात्, तृतीयं= मायासद्भा-

(१) जै-सू-६-१-३ इत्यत्रोक्त न्यायेनेत्यर्थः ।।

(२) जीवेश्वरौ अभिन्नौ इति पाठः स्यात् ।।

(३) क्षरात्माना वीशते इति उपनिषत् पाठः । अत्र विशते इति ह्रस्वाक्षरेण अर्थः कृतः ।।

वात् मुक्तिविलक्षणं, दुःखाभावात् बन्धविलक्षणं हिरण्यगर्भलोकम्, आविशते= निर्गुणज्ञानाद् देहभेदे स्थूल-सूक्ष्मशरीरनिवृत्तौ आप्तकामः सन् विश्वैश्वर्यमाविशते' इति प्रवेशार्थवादात् विश्वेश्वरत्वरूपफलाच्च ।

'अङ्गुष्ठमात्रो रवितुल्य रूपः सङ्कल्पाहङ्कारसमन्वितो यः ।
बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः'।

आत्मगुणेन = मनो गुणेनेति विश्वरूपत्वस्योपपादनात् । 'स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति स्वकर्मभिः'(श्वे-उ-५-७) इति श्रुतेः । 'तस्याभिध्यानात् योजनात् तत्त्व-भावाद् भूयश्चान्ते विश्वमायानिवृत्तिः' इति तत्त्वभावोपसंहाराच्च ।

'एष हि देवः प्रदिशोनु सर्वाः पूर्वो हि जातः स उ गर्भेऽन्तः ।
स विजायमानः स जनिष्यमाणः प्रत्यङ् मुखास्तिष्ठति विश्वतो मुखः'
(श्वे-उ-२-१६)

'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतो मुखः'(श्वे-उ-४-३)

इत्यभ्यासात् । 'तस्मिंश्चान्यो मायया सन्निरुद्धः'

'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ।
'हृदामनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति'(श्वे-उ-३-१३)

हृदा= बुद्ध्या, मनीषा= अहङ्कारेन मनसा च, अभिक्लृप्तः= परिच्छिन्नः, इत्यन्यत्व-परिच्छेदयोरौपाधिकत्वेनोपपादनाच्चाभेदश्रुतीनामुपासनापरत्वं, यथाश्रुतेर्बाधकाभावात् भेदस्य मायिकत्वोक्तेश्चेति निरस्तम् ॥

'देवात्म'शब्दमुख्यार्थयोः देवत्व-जीवत्वाक्रान्ततया परेणाभेदास्वीकारात् । लक्षित-चिन्मात्रपरत्वे मानाभावेन 'आत्म'शब्दस्य परमात्मनि परेणापि मुख्यत्वोपगमेन 'देवश्चासा-वात्माचेति' कर्मधारयाश्रयणेऽपि परमात्मन एव देवशब्दित प्रकाशरूपत्वलाभेन 'देवात्म-शक्तिम्' इत्युपक्रमस्य जीवेश्वराभेदपरत्वासिद्धेः ॥

'सर्वात्मानं सर्वगतं विभुत्वात्' इति सर्वस्य चेतनाचेतनवर्गस्य आत्मानाम्= अन्तर्यामिणं, स्वामिनमिति वा, 'सर्वश्चासावात्मा च' तमिति कर्मधारयेऽपि 'सर्वं समाप्नोषि ततोऽसि सर्वम्' इति भगवद्वचनेन 'सर्व'शब्दस्य सर्वसमाप्तिकर्त्रर्थत्वाभिधानात्, अभ्यासस्यापि जीवेश्वरभेदविषयत्वासिद्धेः, सर्वाभिन्नत्वे तदर्थत्वेनाङ्गीक्रियमाणे 'सर्वगतं विभुत्वात्' इति सोपपत्तिकं सर्वगतत्वप्रतिपादनानुपपत्तेश्च ॥

'जीवः ईश्वराभिन्नः आत्मत्वादि'त्यनुमानेन जीवेशाभेदस्यावगतत्वेन तस्यापूर्वत्वासिद्धेः । नच भेदप्रत्यक्षविरोधेन तदनुमानं बाधितविषयमिति वाच्यम् । प्रत्यक्षस्योपहितभेदविषयत्वेन लक्षितचिन्मात्राभेदविषयतया पर्यवसायिनोऽनुमानस्य भिन्नविषयतया प्रत्यक्षबाधितत्वायोगात् । 'अहमिदानीमत्र सुख्यस्मीति' प्रत्यक्षेण च जीवे सदर्थभूतब्रह्माभिन्नत्वसिद्ध्या मानान्तराप्राप्तत्वरूपापूर्वत्वासिद्धेश्च । 'अनन्तश्चात्मा विश्वरूपः' इत्यादिनोक्तस्य आनन्त्यस्यापरिच्छेदस्य च चिन्मात्रस्वरूपत्वेनासाध्यतया फलत्वायोगात्, तदतिरिक्तत्वे च तस्य मिथ्यात्वावश्यम्भावेनेश्वरस्य वस्तुतोऽपरिच्छिन्नस्वरूपत्वासिद्धिप्रसङ्गात् ॥

'क्षरं प्रधानममृताक्षरं हरः'(श्वे-उ-१-१०) इत्यस्यापि सगुणज्ञानात् तृतीयं हिरण्यगर्भलोकम्, आविशते= निर्गुणज्ञानात्स्थूलसूक्ष्मदेहनिवृत्तौ आप्तकामः सन् विश्वैश्वर्यमाविशते इति प्रवेशार्थवादस्यापि उपक्रमाद्यनुरोधेनार्थवादत्वेऽपि बाधकं विना यथाश्रुतार्थेऽपि प्रामाण्याभ्युपगमेन मुख्यार्थप्रवेशप्रापकत्वेनाभेदविरोधित्वात्, विश्वेश्वरत्वरूपफलस्यापि, प्रसिद्धजीवे असतःपश्चाच्च सतो वैधर्म्यरूपतया जीवे ईश्वरभेदापादकत्वेन तदभेदपरत्वे लिङ्गत्वानुपपत्तेः ॥

**'अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कार समन्वितो यः ।**
**बुद्धेर्गुणेनात्मगुणेन चैव'**

इत्यादेरपि 'बुद्धेर्गुणेन आराग्रमात्रो ह्यवरोऽपि दृष्टः' इत्युक्ते आराग्रमात्रत्वस्य जीवस्थस्यौपाधिकत्वशङ्कायां तन्निवृत्त्यर्थम् 'आत्मगुणेन च' इति 'जीवस्वभाविकपरिमाणलक्षणगुणेन च' इत्यभिधानात्, तस्य चापरिच्छिन्नविश्वरूपब्रह्माभिन्नत्वविरोधितया तदनुपपादकत्वात् ॥

नच 'आत्मगुणेन'इत्यस्य मनो गुणेनेत्यर्थः । तथासति 'बुद्धेर्गुणेन' इत्यनेन गतार्थत्वापत्तेः। 'आत्मगुणेन चैव हि' इति समुच्चयार्थक'आदि''च'शब्द'एव'शब्दाद्यानर्थक्यापत्तेश्च । 'स विश्वरूपः त्रिगुणस्त्रिवर्त्म' इत्यादिश्रुतितः(श्रुतेः-पा) परमात्मपरत्वेन जीवविश्वरूपत्वे अमानत्वात् ॥

नच परमात्मनः कर्म सम्भवतीति वाच्यम् । परमात्मशक्तेरिव तत्तत्कर्मणोऽपि 'परास्य शक्तिः' इत्यादिना विधित्व-स्वाभाविकत्वाऽऽवेदनात्, अन्यथा 'ज्ञानबलक्रिया च' इति 'च'शब्दवैयर्थ्यापत्तेः । 'तस्याभिध्यानाद् योजनात् तत्त्वभावाद्' इत्युपसंहारस्यापि परमेश्वरप्रसादसहकृतात् योजनात्= निदिध्यासनात्, जातो यस्तत्त्वभावः= तत्त्वज्ञानं, तस्मात्, भूयः तत्त्वज्ञानावृत्तेरिति प्रमितः दुःखादिरूपकार्येण सह बन्धनिवृत्तिर्भवतीत्यर्थपरत्वेन जीवब्रह्माभेदार्थकत्वासिद्धेः ॥

**'एषो हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।**
**सविजायमानः सजनिष्यमाणः प्रत्यङ् मुखस्तिष्ठति विश्वतो मुखः'**

इति अभ्यासः सन्नपि नाभेदविषय इति न तस्मादभेदपरत्वसिद्धिः । 'तस्मिंश्चान्यो मायया सन्निरुद्धः' इति निरोधस्यैव मायानिबन्धनत्वप्रतीतेर्नभेदस्य मायिकत्वसिद्धिः ॥

'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मानसा अभिक्लृप्तः= श्रवणमनननिदिध्यासनैः अभिक्लृप्तः= साक्षात्कृतः, मोक्षदो भवति इति शेषः, इत्यर्थपरत्वेन 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इत्यस्य परमात्माङ्गुष्ठमात्रत्वौपाधिकत्वपरत्वासिद्धेरिति ॥

नचाभेदश्रुतीनामुपासनापरता, यथाश्रुतार्थे बाधकाभावात्,

**'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।**
**पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति'**

इत्यादौ भेदज्ञानस्य नित्यफलकत्वश्रुतेः तत्परत्वावश्यम्भावाच्च ॥

नच 'यो वेदाऽहं ब्रह्मास्मि' इति 'स इदं सर्वं भवति' इत्यादौ अभेदज्ञानस्यापि सर्वात्मकत्वरूपफलश्रुतेस्तत्परत्वमपि किन्न स्यादिति वाच्यम् । सर्वात्मकत्वप्रतिपादनेन

दुःखाद्यात्मकत्वप्रतिपादनद्वारा जीवब्रह्माभेदज्ञानस्यानिष्टापादकत्वज्ञापनमुखेन 'यो वेदाऽहं ब्रह्मास्मि' इत्यादेः अभेदनिन्दापरत्वस्यैवोन्नेयत्वात् ।।

किञ्च जीवेश्वरयोर्भेदाभावे जीवान्तःप्रविष्टस्येश्वरस्य तच्छासिताऽऽवेदकम् 'अन्तः प्रविष्टः शास्ता जनानाम्'(१)(तै-आ-३-११-२१) इत्यादिश्रुतिवाक्यम् असङ्गतं स्यात् । नच 'तदेतत् ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यम्'इतिश्रुत्या तदन्तर्बहिर्भावादेः निषेधेन मिथ्यात्वावश्यम्भावात् मिथ्याभूतान्तःप्रवेशादिना असत्यभेदसिद्धिरिति वाच्यम् ।'तदेतत् ब्रह्म' इति देशकालादिकृत-ब्रह्मपरिच्छेदराहित्यं प्रतिपाद्यत इति तद्वाक्यस्य तत्कृतपरिच्छेदवत् वस्तुष्वन्तर्बहिर्भावादि-निषेधकत्वाभावेन तदपेक्षयैव 'अन्तः प्रविष्टः शास्ता जनानाम्' इत्यादिवाक्यप्रवृत्त्युप-पत्तेरिति न श्रुतिषु जीवेश्वराभेदपरं वाक्यमेव शशविषाणायितम् । एवं जातीयकेष्वन्येष्वपि वाक्येषु उक्तरीत्या भेदपरत्वमुन्नेतुं शक्यत इति ग्रन्थभूयस्त्वभयान्न तान्यदाहृत्यास्माभि-र्योजितानि ।।

।। इति श्वेताश्वतरोपनिषदर्थविचारः ।।

## ।। अथ भेदवाक्यानां कण्टकोद्धारः ।।

## ।। अथ एकमेवाद्वितीयम् इति श्रुत्यर्थविचारः ।।

ननु 'एकमेवाद्वितीयम्' इत्यादिश्रुत्या चैतन्यातिरिक्तद्वितीयमात्रस्य मिथ्यात्वाऽवेदनाद् अचैतन्यभेदकर्माणामपि सार्वज्ञासार्वज्ञादीनां द्वितीयत्वेन मिथ्यात्वावश्यम्भावेन वस्तुत-स्तदभावे तन्नियतभेदोऽपि न वस्तुतोऽस्तीत्येव सिद्ध्यति । एवं च तत्त्वमस्यादिमहावाक्येन योग्यादिसामग्रीबलाल्लक्षितचिन्मात्राभेदबोधः सुकर इति चेन्न । तावत् चैतन्यातिरिक्तद्वितीय-वस्तुमात्रस्य मिथ्यात्वे 'एकमेवाद्वितीयम्' इति श्रुतिर्मानम्(२) । येन भेदकधर्माणामपि द्वितीयत्वेन मिथ्यात्वावश्यम्भावेन तन्नियतचैतन्यभेदोऽपि वास्तवो न स्यात् । तथाहि । न तावदापाततः प्रतीत एव श्रुतीनामर्थोऽभ्युपेयः । तथासति मीमांसानारम्भात् 'आज्यैः स्तुवते' 'आकाशादेव समुत्पद्यन्ते' इत्यादिवाक्यानां प्रसिद्धाज्यभूताकाशादिपरत्वनिरासाय

(१) '..जनानां सर्वात्मा । सर्वाः प्रजा यत्रैकं भवन्ति' इति पूर्णपाठः ।।

(२) 'श्रुतिर्न मानम्' इति पाठः स्यात् ।

तदर्थनिर्णयाय च – 'चित्राधिकरण'(१) 'आकाशाद्यधिकरणारम्भात्',

**'अन्धो मणिमविन्दत्'** (तै-आ-१-१-५५)

**'मृदब्रवीत्' 'यजमानः प्रस्तरः' 'सोमेन यजेत'**

इत्यादीनामपि प्रतीतार्थपरत्वापत्तेश्च । श्रुतीनां यथाश्रुतार्थपरत्वे 'बिभेत्यल्पश्रुताद्वेद'इत्यादि स्मृतावल्पश्रुतस्य श्रुतिभयहेतुत्वेन निन्दाभावापत्तेश्च ॥

'कश्छन्दसां योगमावेद धीर' इतिश्रुत्या वेदार्थस्य गहनत्वोक्त्यभावापत्तेश्च किन्तु पूर्वोत्तरेण मानान्तरेणचाविरुद्धः । तथाच 'सलिल एको द्रष्टा द्वैतो भवति' इत्यत्र 'सलिलादि'-पदेन 'सदेव सोम्येदमग्र आसीत्' इत्यत्र सत्वैकत्वप्रापकेण एकवचनान्त'सत्'पदेन 'अभाव'प्रापकेण 'एव'कारेण, कालविशेषप्रापकेण 'अग्र'पदेन, पूर्वेण 'तदैक्षत नामरूपे व्याकरोत्' इति ईक्षणनामरूपात्मकप्रपञ्चप्रापकेणोत्तरेण च द्वितीयवस्तुसिद्धेः 'एकमेवाऽद्वितीयम्' इति वाक्यस्य न तन्निषेधोऽर्थः । तथासति पूर्वोत्तरवाक्यविरोधात् । नहि सलिलसृष्टिकालविशेषे ईक्षण-नाम-रूप-व्याकर्तृत्वादिकं मानान्तरप्राप्तम् । येन तद्वाक्यमनुवादकं स्यात् । ततश्च द्वितीयवस्तु प्रापकवाक्यमध्यस्थं 'एकमेवाऽद्वितीयम्' इत्यद्वैतवाक्यमुपांशुयाजमध्यस्थ(२) विष्ण्वादिवाक्यवत् पूर्वोत्तरवाक्यानुसारेणैव नेयम् ॥

अपि च न तावद्'एक'शब्देन तत्रत्येन मिथ्यात्वसिद्धिः । तस्य मिथ्यात्ववाचित्वे मानाभावात् । 'एके मुख्यान्य केवला'(३)इत्यमरोक्तेः । 'एको गोत्रः' इत्यत्र एकशब्दोऽयमन्यप्रधानासहाय सङ्ख्या प्रथमसमानवाचीति कैयटोक्तेः । 'ष्णान्ताषट्' (पा.सू.१.१.२४.३६९) इति सूत्रमहाभाष्ये 'एकशब्दोऽयं बह्वर्थः । अस्ति सङ्ख्यार्थः, एको, द्वौ, बहव इति । अस्ति असहायवाची । एकाग्रयः, एकहलानीति, अस्त्यन्यार्थे वर्तते । 'प्रजामेकां रक्षत्यूर्जमेका' इत्युक्तेः(४) । 'एको बहूनां यो विदधाति कामान्' इत्यादौ सङ्ख्यादौ प्रयोगाच्च ॥

---

(१) विचित्राधिकरण इति ताळपत्रस्य पाठः ॥ चित्राधिकरणम् इति पाठः स्यात् (जै-सू-३-१-३)॥

(२) पूर्वमीमांसे उपांशुयाजाधिकरणे (जै-सू-२-२-४)चिन्तितमित्यर्थः ॥

(३) अमरकोश-नानार्थवर्गे-नान्त ॥

(४) 'नैष दोषः । एकशब्दोऽयं बह्वर्थः । अस्त्येव सङ्ख्यापदम् । तद्यथा – एको द्वौ बहव इति । अस्त्य-

यथाऽप्येकशब्दोऽनेकार्थत्वेन निश्चितः तथाऽपि न तया मिथ्यात्वसिद्धिः । मिथ्यात्वस्योक्तार्थेष्वन्यतमत्वाभावात् । सम्भवति च मत्पक्षे ब्रह्मणि जीवादितोऽन्यत्वप्राधान्ययोरन्यतरत्वपरत्वाश्रयणेन 'एक'शब्दस्य घटना । न च'एव'कारेण मिथ्यात्वसिद्धिः । विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदार्थे व्युत्पन्नत्वेन तेन स्वातन्त्र्यरूपप्राधान्यविशेषणस्य ब्रह्मरूपे विशेष्ये अयोगव्यवच्छेदमात्रलाभात् ॥

नापि 'अद्वितीय'शब्देन तत्सिद्धिः[१]। 'अब्राह्मणमानये'त्यादौ 'अब्राह्मण'शब्देन 'नञिव युक्तमन्यस्मिन् सदृशेऽर्थे प्रतीतिं जनयती'तिन्यायेन ब्राह्मणसदृशतदन्यक्षत्रियादेरिव द्वितीयसदृशतदन्यवस्तुन एव 'अद्वितीय'शब्देनोपस्थितेः । 'सुडनपुंसकस्य'(पा-सू-१-१-४३(२२९) इत्यादाविव 'नार्षेयं वृणीते'[२]इत्यादाविव वा, 'अद्वितीयम्' इत्यत्र पर्युदासस्यैव[३] एकवाक्यतार्थमाश्रयणीयत्वात् । अत एव 'अद्वितीयम्' इति कर्मधारयो, न बहुव्रीहिः । कर्मधारयापेक्षया अस्य जघन्यत्वात् । अस्तु वा बहुव्रीहिः । तथाऽपि न मिथ्यात्वसिद्धिः । महाभाष्ये 'अस्य गोः द्वितीयो न भवेत्' इत्युक्ते सदृशो गौरेवानीयते नाश्वो न गर्दभ' इत्युक्तेः । शाङ्करभाष्येऽपि[४] 'अस्य गोः द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वः पुरुषोवे'त्युक्ते अश्वसदृशद्वितीयस्यैवौत्सर्गिकतात्पर्यविषयस्य द्वितीयपदोपस्थितस्य, बाधकं विना त्यागायोगात् । अन्यथा 'द्वितीय'पदस्य सङ्कोचेन द्वितीयात्वावच्छिन्नसर्वपरत्वे सजातीयद्वितीयस्यापि तेनैवग्रहणसम्भवेनैवकारस्य कृतकार्यत्वेन वैयर्थ्यापत्तेश्च । तदवैयर्थ्याय 'अद्वितीय'पदस्य विजातीयद्वितीयमात्रपरत्वाश्रयणे च 'सलिलादि'पदसमभिव्याहृतपूर्वोत्तरवाक्यप्रापितसलिलादिविजातीयवस्तुसत्वाविरोधाय समद्वितीयपरत्वावश्यम्भावेनोक्तरीत्या 'एकमेवाऽद्वितीयम्' इत्यस्य समाभ्याधिकराहित्यार्थत्व एव पर्यवसानाच्च। उक्तं च–

---

सहायवाची । तद्यथा एकाग्रयः । एकहलानि । एकाकिभिः क्षुद्रकैर्जितमिति । अस्त्यन्यार्थे वर्तते । तद्यथा – प्रजामेकारक्षत्यूर्जमेका इति । अन्येत्यर्थः' - व्याकरणमहाभाष्यम् - सम्पुटं१ पृ-३११

(१) शब्दगतसिद्धिः इति पाठान्तरम् ॥

(२) जै-सू-१०-८-९ इत्यत्र चिन्तित न्यायमित्यर्थः ॥

(३) पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् – इति पूर्णपाठः ॥

(४) गुहाधिकरणे इत्यर्थः ॥

'यथा चोलनृपः सम्राडद्वितीयोऽस्ति भूपतिः ।
इति तत्तुल्यनृपति निवारणपरं वचः ।
नतु तद् भ्रातृतत्पुत्रकलत्रादि निवारकम्' इति ।[१]

तस्मात् 'एकमेवाद्वितीयम्' इति श्रुतिर्नमिथ्यात्वे मानं, किन्तु उक्तरीत्या समाभ्यधिकरहितं सच्छब्दार्थभूतं ब्रह्मेत्यत्र इति ॥

॥ इति 'एकमेवाद्वितीयम्' इति श्रुत्यर्थः ॥

## ॥ अथ 'नेह नानास्ति किञ्चन' श्रुत्यर्थः ॥

नापि 'नेह नानाऽस्ति किञ्चन' इति श्रुतिस्तत्रमानम् । 'असाकल्ये तु चिच्च न'[२] इत्यमरोक्तेः । तद्व्याख्याने 'करोति किञ्चिदभ्यासात् अपात्रे कुशलैर्देयं न किञ्चन धनं सदा' इत्युदाहृतत्वात्[३] लोके किञ्चित्-किञ्चन-कश्चित्-कश्चन-काचित्-काचनेति तुल्यार्थत्वेन बहुलं प्रयोगदर्शनाच्च ॥

'किञ्चन'शब्दस्तावदल्पत्ववाचीत्यविवादम् । 'नाना'शब्दश्चाप्यनेकत्ववाचीत्यप्यविवादम् । एवं च 'यदेवेह तदमुत्र यदमुत्र तदन्विह' इति (कठ-उ-२-१-१०) पूर्ववाक्ये अनुपसञ्जातविरोधिनि इदमाढ्य(द्य)र्थाङ्गीकारेण तन्निष्ठस्य ब्रह्मण ऐक्यमुक्त्वा तमेवदन्याद्यर्थमिहेति[४] सर्वनाम्ना परामृश्य तद्रूपाधारस्य परस्परभिन्नतया तन्निष्ठस्यैकदाविरुद्धानेकदेहसम्बन्धे सति वस्तुनो नानात्वदर्शनात् नानात्वमिति शङ्कानिरासाय तत्र किञ्चन= किञ्चिद्वस्तु ब्रह्मरूपं, नानाऽस्ति= नानेकमस्तीति तत्रत्यस्य ब्रह्मरूपस्य वस्तुन उक्तमेवैक्यं पुनः स्थाप्यत इति, न तद्वाक्यं मिथ्यात्वे मानमिति । नच महतो ब्रह्मणोऽल्पत्ववाचि-'किञ्चन'शब्देन ग्रहणमिति वाच्यम् । परिमाणतोऽनल्पेऽपि ब्रह्मणि प्रकृति तत्कार्यभूतवियदाद्यर्थेष्विव सङ्कुचधिक्याभावेन तद्विवक्षयापि 'किञ्चन'शब्देन ब्रह्मणो ग्रहणसम्भवात् ।

---

(१) न्यायामृते उदाहृत श्लोकोऽयम् ॥

(२) 'यत्तद्यतस्ततो हेतौ असाकल्येतु चिच्च न'इति अमरकोश-अव्ययवर्गः ।

(३) इदानीन्तनमुद्रितअमरकोशसुधाव्याख्याने 'करोति' इत्यादिवाक्यं न दृश्यते ॥

(४) 'तमेवेदमाढ्याद्यर्थम् इहेति सर्वनाम्ना' इति पाठः स्यात् ॥

नहि घटाद्यपेक्षया महदपि गगनं घटादिष्वपि सङ्ख्याधिक्याभावविवक्षया असकलम्= अल्पम्=किञ्चित् इति वा, न व्यवह्रियत इत्यस्ति । तथाचेह विद्यमानं किञ्चन ब्रह्मरूपं किञ्चिद्वस्तु, न नाना= नानेकम् इति पूर्वोत्तरवाक्यपरामर्शेन फलितोऽर्थः । ततश्च कथं 'नेह नाना' इति वाक्यं मिथ्यात्वपरम् । अन्यथा इदं चाद..ञ्व(श्व)नेति तद्वाक्याकारः स्यात् । अपिच अस्य वाक्यस्य मिथ्यात्वपरत्वे 'नाना किञ्चनापि इह नास्ति' इति, 'अपि'शब्दाध्याहारप्रसङ्गः ॥

नच 'किञ्चन'शब्दस्य सनिर्धारितैकव्यक्तिविशेषवाचित्वेऽपि नियामकाभावात् 'किञ्चन नेह' इति निषेधस्तादृशसर्वनिषेधः पर्यवस्यति । तथा च 'अपि' शब्दाध्याहारं विनैवेष्टसिद्धिरिति वाच्यम् । तथाऽपि 'इह न किञ्चन नास्ति' इत्येतावतैव मिथ्यात्वापादकसकलप्रपञ्च निषेधस्य सिद्ध्या 'नाना' इति विशेषणोपादानवैयर्थ्यात् । नच ब्रह्मण्यनेकत्वमप्रसक्तम् । गुरुतरविचित्रकार्यभेदेन नियामके च तस्मिन् नियम्यानन्त्येन स्थानभेदेन तात्पर्यापरिज्ञानदशायां 'यदेकमव्यक्तमनन्तरूपम्' इत्यादिना च तत्रानेकत्वप्रसक्तिसम्भवात् । अवतारेषु भिन्नभिन्नकालीनमत्स्यादिविग्रहरूपेषु प्रत्यक्षादिना तदधिष्ठात्रानेकस्य प्रसक्तस्य 'अन्योऽन्यतर आत्मा प्राणमयः' इत्यादि श्रुतितात्पर्यापरिज्ञानदशायां कोशानेकत्वप्रयुक्ततदन्तरात्मानेकत्वस्यापि प्रसक्तेश्च ॥

किञ्चास्य मिथ्यात्वपरत्वाङ्गीकारे 'यदेवेह तदमुत्र' इत्यादिपूर्ववाक्येन 'इहामुत्र'इति शब्दनिर्दिष्टप्रतिपन्नोपाधौ 'इह'इति प्रत्यभिज्ञाते तद्भेदप्रयुक्तभेदवत्तया प्रसक्तस्य 'इहामुत्र' इति शब्दनिर्दिष्टप्रतिपन्नोपाधिवत् सङ्ख्याधिक्याभावेनाल्पत्वेन प्रसक्तस्य ब्रह्मण एव 'नाना किञ्चन' इत्यनुवादपुरस्सरं 'नेह न'इति निषिद्धतया मिथ्यात्वप्रसङ्गः । नचात्र 'इह'शब्देन ब्रह्मणो ग्रहणात् 'नाना''किञ्चन'शब्देन प्रपञ्चस्यैव ग्रहणात् 'नेह न' इति तस्यैव (निषिद्धतया प्रपञ्चस्यैव-पा) मिथ्यात्वं सिध्यति नतु ब्रह्मण इति वाच्यम् । अत्र'इह'शब्देन पूर्ववाक्यस्थ-'इह'शब्दार्थस्यैव प्रत्यभिज्ञानाविरोधाय ग्रहणौचित्यात् 'नाना किञ्चन'शब्दाभ्यामपि पूर्ववाक्ये 'इहामुत्र'शब्दार्थनिष्ठत्वेन प्रतीतस्य ब्रह्मण एव ग्रहणौचित्याच्च ॥

किञ्च 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः 'किञ्चन'शब्देन प्रपञ्चग्रहणेऽपि 'विनञ्भ्यां

नानाञौ न सह'(पा-सू-५-५-२७(१८२८) इति पाणिनिस्मरणात् । 'पृथग्विनान्तरेणर्ते हिरुङ् नानाच वर्जने'[१] इत्यमरोक्तेश्च, 'नाना'शब्दस्य 'विनेति'शब्दतुल्यार्थत्वसम्भवात् ।।

अत्र 'इह'शब्देन सर्वनामत्वेन शब्दोपात्तपूर्वसन्निहितपरामर्शित्वसम्भवे त्यागाऽयोगेन, तेन पूर्ववाक्योपात्त'इहामुत्र'शब्दार्थपरामर्शात्, 'इहामुत्र किञ्चन= अल्पं, जगत् नाना'-प्रकरणात् पूर्ववाक्ये 'इहामुत्र'शब्दार्थे अभिन्नत्वेन प्रतिपन्नब्रह्म विना नास्तीत्यल्पस्य जगतः महाब्रह्माविनाभूतत्वप्रतिपादनतापरतयैव योजयितुं शक्यस्यास्य वाक्यस्य प्रत्यक्षाद्यनेक-प्रमाणविरुद्धजगन्मिथ्यात्वपरत्वेन परकीयो योजनाग्रहो न युक्तः ।।

किञ्च 'इह किञ्चन'शब्दाभ्यां ब्रह्मजगतोर्ग्रहणेऽपि, इह= ब्रह्मणि, किञ्चन, जगत्, नाना= विना, नास्ति' इत्युक्ते केन इत्यपेक्षिते प्रकरणाद्ययोग्यत्वाच्च'इह' शब्दार्थभूतस्यैव 'यदेवेह तदमुत्र' इति पूर्ववाक्ये यत्तच्छब्दाभ्यामुपात्तस्य ब्रह्मण एव 'अनेन' इति सम्बन्धात्, ब्रह्मणि ब्रह्माविनाभूतं जगत्तिष्ठतीत्येव वाक्यार्थलाभात्, नास्य वाक्यस्य ब्रह्मणि जगन्निषेधकत्वं युक्तम् । नचात्र अनेन विना जगन्नास्तीति वाक्यार्थलाभेऽपि तदभावव-न्निष्ठाभावप्रतियोगित्वमात्रं लब्धम्, नतु तस्य तत्र जगतः सत्त्वमिति वाच्यम् । अनेन वाक्येन तदलाभेऽपि 'यस्मिन् द्यौः' इत्यादिवाक्येन तत्र तस्य सत्त्वसिद्ध्यवैकल्यात् । तथा च स्मृतिः । 'न तदस्ति विना यस्मान्मयाभूतं चराचरम्'(भ-गी-१०-३९) इति ।।

किञ्च 'नेह नाना' इतिवाक्यात् पूर्वं बृहदारण्यके 'तस्मिन् शुक्लमुतनीलमाहुः पिङ्गलं हरितं लोहितं च'(बृ-उ-६-४-९) इत्यादिना ब्रह्मरूपानेकत्वप्रसक्तौ 'नेह नाना'इत्यनेन तन्निषेधात् न तेन ब्रह्मणि जगतो निषेधः । नचैवं श्रुत्या तन्निषेधे फलाभावः । तथातथा श्रुतिजन्यज्ञानस्य 'तरति शोकमात्मवित्' इत्यादिश्रुत्या शोकतरणसाधनत्वाऽवेदनात् । अत एव 'य एवं विद्वानमृत इह भवति' इत्यादौ ज्ञानप्रकाशवाचि'एवं'शब्दः सङ्गच्छते । अन्यथा परपक्षे वेदान्तानामखण्डार्थपरत्वव्युत्पादनं न स्यात् । नच सुप्तौ निष्प्रपञ्चतायाः पुरुषार्थत्वदर्शनात् तद्व्युत्पादनं सफलमिति वाच्यम् । मूर्च्छायां तस्याः अपुरुषार्थत्वस्यापि दर्शनात् । नच 'द्वितीयाद् वै भयं भवति' इति द्वितीयस्य भयहेतुत्वात् निष्प्रपञ्चतोद्देश्य 'तस्मादेकाकी न रमत' इति तस्याः असुखसाधनत्वाऽवेदनान्न सोद्देश्या स्यात् ।।

(१) अमरकोशअव्ययवर्गः ।

अपि च अनिर्धारितैकवस्तुवाचिना 'किञ्चन'शब्देन विनिगमनाविरहेणेतरवत् अविद्या-निवृत्तिरूपमुक्तेरपि ग्रहणात् 'अविद्यास्तमयोः मोक्षः सा संसार उदाहृतः' इति पराभ्युपगताया मुक्तेरनाद्यनन्तभूतब्रह्ममात्रत्वे प्रायश्चित्तादिसाध्य अनादिसान्तदुःखादिप्रागभावः, तदपि योग-क्षेमसाधारणसाध्यत्वसम्भवेन तया श्रवणादिसाध्यज्ञानसाध्यत्वानुपपत्तेः । प्रतियोगिसाध्या-भावत्वेन रूपेण लाघवात् साध्याभावत्वरूपेण वा निवृत्तिलक्षणेनाक्रान्ततया निवृत्तित्वा-नुपपत्तेः ।।

।। इति 'नेह नानास्ति किञ्चन' श्रुत्यर्थः ।।

## ।। अथ अद्वैत्यङ्गीकृताविद्यानिवृत्तिरूपमोक्षसाधनत्वविचारः ।।

'स्वर्गकामश्चैत्यवन्दनं कुर्यात्' इत्यादिवेदबाह्यवाक्यजन्यभ्रमेण चैत्यवन्दन इव –

**'तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः'**
**'तरति शोकमात्मवित्'**
**'तमेवं विद्वानमृत इह भवति'**

इति वेदवाक्यजन्यमोक्षसाधनत्वभ्रमेण तादृशब्रह्मज्ञानाय तदुपायत्वेनावगते श्रवणादौ प्रवृत्त्यु-पपादनसम्भवेऽपि श्येनचैत्यवन्दनफलत्वस्येव ब्रह्ममात्रात्मकाविद्यानिवृत्तिरूपमुक्तौ वस्तुतो ब्रह्मज्ञानफलत्वाभावे 'स्वर्गकामश्चैत्यवन्दनं कुर्यात्' इतिवाक्यवत् 'तमेवं विद्वानमृत इह भवति' इत्यादिवैदिकवाक्यस्य तत्त्वाऽवेदकलक्षणाप्रामाण्यापत्तेश्च । अविद्यानिवृत्तिब्रह्मस्वरूप-मात्रत्वे संसारदशायामपि तत्सत्वेनाविद्यारूपप्रतियोगिसमानकालत्वापत्तिश्च । नहि निवृत्तेः प्रतियोगि समानकालत्वं शक्याभ्युपगमः । लोके प्रमाणसिद्धतद्विरोधश्चेदतिप्रसङ्गात् ।।

किञ्चैवमिदानीमिव मोक्षकालेऽप्यविद्यायास्तत्प्रयुक्तदुःखादेश्च दुर्निवारत्वमिदानीमपि तन्निवृत्तिरूपमुक्तेः सत्त्वं च निश्चिन्वन्विमर्शकारी को वा मुमुक्षया ब्रह्मसाध्य तदुपाय-भासश्रवणादिकं कुर्यात् । नहि सिद्धेश्च कस्यापि दृष्टचरी ।।

किञ्चैवमिदानीमिव मोक्षदशायामपि ब्रह्मचैतन्यावरकाविद्यायाः दुर्वारत्वेनापरिच्छिन्न-ब्रह्मानन्दापरोक्ष्याभावप्रसङ्गः । परेणानावृतसंविदभेदस्यैवापरोक्ष्यप्रयोजकत्वस्वीकारात् ।।

किञ्चैवमहमर्थतद्धर्मभूतसुखदुःखादीनां घटादीनां चापरोक्ष्याभावप्रसङ्गः । [(१)]आ संसारमधिष्ठानभूतब्रह्मचैतन्यस्याज्ञानावृतत्वेन तत्राध्यस्तानामहङ्कारतद्धर्मभूतसुखदुःखादीनां घटादीनां चानावृतसंविदभेदायोगात् । नचाहङ्कारतद्धर्मभूतसुखदुःखादीनामनावृतजीवचैतन्ये एवाध्यासो नत्वासंसारमज्ञानावृतब्रह्मचैतन्ये इति वाच्यम् । तथाऽपि घटादीनामतथात्वेनापरोक्ष्याभाव तादवस्थ्यात् । 'घटः सन्' 'पटः स्फुरति' 'घटो दृष्टः' इत्यादिप्रतीत्या घटादीनां ब्रह्मचैतन्याभेदेऽप्यनावृत तदभेदाभावात् । नच घटाद्याकारान्तःकरणवृत्त्या तदज्ञाननिवृत्तेरभिव्यक्तब्रह्मचैतन्याभेदसत्त्वात् तेषामापरोक्ष्यमिति वाच्यम् । वृत्तेर्जडत्वेन तदज्ञाननिवर्तकत्वायोगात् । नच वृत्तेर्जडत्वेऽपि तदुपहितचैतन्यस्याजडत्वात्तत एवाज्ञाननिवृत्तिरिति वाच्यम् । वृत्तेरधिष्ठानभूतानाद्यविद्यावृतब्रह्मचैतन्यं प्रत्युपाधित्वेन तद्भेदसम्पादकत्वेऽपि जडत्वेन तदावरकाज्ञानानिवर्तकतया तदुपहितचैतन्यस्यापि प्राग्विद्यमानाधिष्ठानब्रह्मचैतन्यवदनावृतत्व तादवस्थ्यात् ॥

किञ्च घटादिस्थलेऽप्यज्ञाननिवृत्तेर्ब्रह्ममात्रतया घटाद्याकारान्तःकरणवृत्तिसाध्यत्वानुपपत्तिस्तदवस्था । नच तत्तु अविद्यानिवृत्तिरन्यैवोक्तबाधकमिति वाच्यम् । तथासति मुक्तिरूपाविद्यानिवृत्तिरिति अन्यैवास्तु । तत्रापि बाधकस्योक्तत्वात् । नचैवम् अद्वैतश्रुतिविरोधः । सत्यभूतद्वितीयवस्त्वङ्गीकारे एव तद्विरोधात् । अविद्यानिवृत्तेरसत्यत्वात् । नचैवं तस्याज्ञाननिवर्त्त्यत्वापत्त्या मोक्षरूपनित्यपुरुषार्थत्वानुपपत्तिरिति वाच्यम् । मोक्षनित्यपुरुषार्थत्वाऽवेदकशास्त्रप्रामाण्यान्यथानुपपत्त्या तदतिरिक्तसत्यस्यैव ज्ञाननिवर्त्यतायाः स्वीकार्यत्वात् । यदसत्यं तदज्ञाननिवर्त्यमिति केवलनियम एव श्रुत्यपेक्षया दुर्बले तथा सङ्कोचादित्युक्तम् ॥

यत्तु अहङ्कारतद्धर्मभूतसुखदुःखादीनामनावृतजीवचैतन्याभिन्नत्वेन नापरोक्ष्यानुपपत्तिरिति, तन्न । जीवचैतन्यस्यापि वस्तुगत्या अनाद्यविद्यावृतब्रह्मचैतन्याभिन्नत्वेन अनावृतत्वायोगात् । तस्य तस्य कल्पित-औपाधिको वा भेदोऽस्ति इति चेन्न । कल्पितस्यौपाधिकस्य वा स्वाभाविकाभेदकार्याप्रतिबन्धकत्वात् । वह्नौ 'गुञ्जापुञ्जोऽयं न वह्निः'

---

(१) 'सा संसार' इति ताळपत्रस्थपाठः ।

इति कल्पितवह्निभेदस्य स्वाभाविकाभेदकार्यभूतदाहाद्यप्रतिबन्धकत्वदर्शनात् । मुखे दर्पणाद्युपाधिकृतभेदसत्त्वेऽपि स्वाभाविकाभेदकार्यभूतावदातत्वाद्यप्रतिबन्धकत्वदर्शनाच्च ॥

किञ्च जीवब्रह्माभेदस्य अविद्यावदनादित्वेन वैपरीत्यापातेन चाविद्याकल्पितत्वायोगात् । अत एव तदुपाधिकेऽपि । एवं जीवब्रह्मणोरारोपितस्यौपाधिकस्या वा, भेदस्य सत्त्वेऽपि ब्रह्मवज्जीवस्यापि स्वाभाविकभेदप्रयुक्तापरिच्छिन्नानन्दापरोक्ष्यं दुर्वारम् ॥

किञ्च 'अहमज्ञो मामन्यं च न जानामि' इति जीवचैतन्यस्याप्यज्ञानात् तत्त्वानुभवबलात् न अहङ्कारतद्धर्मभूतसुखदुःखादीनामनावृतजीवचैतन्यस्याभिन्नत्वाभावेन पराभिमतप्रयोजकाभावादापरोक्ष्यं युक्तम् ॥

अपि च 'अहमज्ञः' 'घटे ममाज्ञानं' 'ममान्तःकरणम्' 'मम मनः' 'अहं सुःखी' 'अहं दुःखी' इति अज्ञानान्तःकरणादीनामहमर्थाद्भिन्नत्वेनैव तदनुभवात् कथं तेषामनावृतजीवचैतन्यस्याभेदः । येन तेषामापरोक्ष्यं स्यात् ॥

किञ्चाविद्यानिवृत्तिब्रह्मस्वरूपमात्रत्वपक्षे अविद्याया इव तत्कल्पितस्य तदुपाधिकस्य जीवब्रह्मभेदस्य तन्नियतापरिच्छिन्न-परिच्छिन्न-ज्ञानानन्दादेश्च कालत्रयेऽपि सत्त्वस्य दुर्वारतया स्वरूपतः, केषाञ्चित् प्रवाहतश्च, प्रमाण-तदाभाससिद्ध-पदार्थमात्रानन्त्यप्रसङ्गः । नहीदानीमेवोत्तरत्र कदापि जगत्प्रवाहसामग्रीविघटकस्य विघटनस्य वा ब्रह्मातिरिक्तस्य कस्यचिदनागतस्यानङ्गीकारे तत्प्रवाहविच्छेदः सम्भवतीति शक्यमभ्युपगन्तुम् । वेदान्तजन्यचरमवृत्तिरेव तद्विघटिका, अविद्यानिवृत्तिश्च विघटनमङ्गीक्रियत इति चेन्न । अविद्यानिवृत्तेर्ब्रह्मस्वरूपमात्रत्वे वेदान्तजन्यवृत्तेश्चरमत्वायोगात्, यत्किञ्चिदपेक्षया परमत्वस्याकिञ्चित्करत्वात् उक्तदोषानतिवृत्तेश्च(१) ॥

एतेन निर्विशेषानाद्यन्तर्भूतब्रह्ममात्रत्वेऽप्यविद्यानिवृत्तेः तादृशप्रत्यङ्ब्रह्मैक्यस्य वा, मुक्तिपदार्थस्य शास्त्रप्रामाण्यादनन्यगत्या ज्ञानसाध्यत्वं सर्वेणाप्यङ्गीकार्यमिति निरस्तम् । ब्रह्मातिरिक्तत्वेन घटादिवत् साध्यत्वाङ्गीकारेऽप्युक्तरीत्या लोकवेदाविरोधेनैव मोक्षनित्य-

(१) 'उक्तदोषनिवृत्तेश्च' इति पाठः स्यात् ।

पुरुषार्थत्वाऽवेदकशास्त्रप्रामाण्यसम्भवेनानन्यगतिकत्वाभावात् । अन्यथा क्लृप्तहान्याद्यापत्तेः।। एतेन अविद्यानिवृत्तिरेवमुक्तिः, सा च ब्रह्मातिरिक्तमिथ्याभूताऽप्युक्तरीत्या नित्याऽस्त्विति प्रत्युक्तम् । 'निवृत्तिरात्ममोहस्ये'ति पराभ्युपगमात् । एवं प्रत्यक् ब्रह्मैक्यमुक्तित्वपक्षोऽपि प्रत्यूढम् । परेण तस्य ब्रह्ममात्रत्वाङ्गीकारेण मिथ्याभ्युपगमायोगादित्यलं पल्लवेन ॥

।। इति अद्वैत्यङ्गीकृताविद्यानिवृत्तिरूपमोक्षसाधनत्वविचारः ।।

## ।। अथ प्रसङ्गात् 'नेह नानेति' श्रुत्या जगन्मिथ्यात्वार्थकनिराकरणम् ।।

किञ्च इह = ब्रह्मणि, किञ्चन नास्ति, इत्युक्तेऽपि न जगन्मिथ्यात्वसिद्धिः । ब्रह्मणोऽ-न्यत्र स्वोपादाने प्रकृत्यादौ स्वदेशकालयोश्च सत्वसम्भवात् । ब्रह्म चाविद्यावत् न जगदु-पादानं किन्तु निमित्तकारणमात्रमिति अस्माभिः शिक्षायां प्रपञ्चितमिति[१] नेह तत्प्रपञ्चः क्रियते । अन्यथा'इह'इति किं? चिन्मात्रं विवक्षितं?,किं वा अस्मदभिमतं चैतन्यम्? नाद्यः । अप्रसक्तप्रतिषेधत्वापत्तेः । निर्विशेषचिन्मात्रस्योक्तरीत्या नृशृङ्गादिवत् असत्त्वेन तत्र जगन्निषेधस्येष्टत्वात् । नहि नृशृङ्गेनैक्यं नेति निषेधो न केनापि क्रियत इत्यस्ति । श्रुतावप्यसत्कारणत्वनिषेधवत् तत्र जगत्स्थितिनिषेधस्यापि सम्भवाच्च । न द्वितीयः । बृहदारण्यके 'नेह नाना' इत्यस्मात् पूर्वेण 'यस्मिन् पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः' (बृ-उ-६-४-१७) इति वाक्येन, तत उत्तरेण 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वरः एष सर्वाधिपतिः एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरणमेषां लोकानां सम्भेदाय'(बृ-उ-६-४-२२) इति वाक्येन च विरोधः स्यात् । नहि मिथ्याभूतं रजतं शुक्तौ प्रतिष्ठितमित्युच्यते । न वा गन्धर्वनगर-वन्ध्यासुतपत्तनयोरसंभेदा-यासौ यत इति श्रुतादिवाक्यं भ्रमादिदोषमूलमपि प्रमाणत्वेन स्वीकृतमभिप्रयुक्तैः । तस्मात् 'नेह नाना' इति श्रुतिरपि न जगन्मिथ्यात्वे मानम् । किन्तु 'इहामुत्र'इति पूर्ववाक्योपात्त-विरुद्धनानादेशसम्प्रसक्तब्रह्मानेकत्वादिनिषेध एवेति 'नेह नाना'इति श्रुत्यर्थः ।।

---

(१) 'नेतिनेतीत्यादि श्रुतीनां न तत् सद्रूपत्वनिषेधपरत्वमिति' विभागे अद्वैतशिक्षायां प्रपञ्चितमित्यर्थः ॥ पु-सं-१८९

केचित्तु[१] न 'एकमेवाद्वितीयम्' इति श्रुतिर्जगन्मिथ्यात्वे मानम् । 'सदेव सोम्येदमग्र आसीत्' इति पूर्ववाक्येन 'इदम्'शब्दितस्य जगतः 'सदेव'इति सत्= एकान्तां नेदा.. विवेदनेन विरोधात् । नच ब्रह्मव्यतिरिक्तजगदसत्वं तदर्थः । [२]तथा तस्याश्रुतकल्पना-पत्तेः । नहीदं 'सदेवासीत्' इत्यस्य'असदासीदि'त्यर्थः सम्भवति । किञ्चैवं पूर्ववाक्येनैव जगन्मिथ्यात्वसिद्धेः 'एकमेवाद्वितीयम्' इत्युत्तरवाक्यं न मिथ्यात्वपरमङ्गीकार्यं पौनरुक्त्या-पत्तेः ॥

किञ्च 'हे सोम्य सदेव= सर्वदैव इदं ब्रह्मा अग्रे' उत्तरत्र 'तदैक्षत नामरूपे व्याकरोत्' इति नामरूपव्याकरणश्रवणात्ततः प्राक्काल आसीत्तदा कीदृश आसीत् इत्यपेक्षिते एकः एवं= नामरूपव्याकरणार्थं, स्वतन्त्रकारणान्तरसहायरहितमेव, अद्वितीयं नामरूपात्मकद्वितीय-शब्दितप्रपञ्चप्रागभावविशिष्टम् इत्यर्थप्रतिपादनार्थं प्रवृत्ततया न तस्य जगन्मिथ्यात्वपरत्वं युक्तम् ॥

नापि 'नेह नाना'इति श्रुतिस्तत्रमानम् । यद्यपि तत्र 'किञ्चन'शब्दो निर्धारितैकवाची । तथाऽपि विनिगमकाभावेन 'इह किञ्चन'इत्युक्तेऽपि प्रपञ्चमात्रस्य तथात्वेन निषेधसिद्धेः, 'नाना'इत्यस्य वैयर्थ्यमिति । नच भेदस्य विशेषतो निषेधाय तत् । तथाऽपि वैयर्थ्यानुद्धारात् 'नाना'इत्यौत्सर्गिक-भवितृ-प्रधाननिर्देशस्य 'द्व्येकयोः'[३](पा-सू-१-४-२२(१८६) इत्यादिवत् भावप्रधाननिर्देशत्वकल्पनापत्तेश्च । 'नाना''किञ्चन'शब्दयोः सामानाधिकरण्येन अन्वये भेदमात्रनिषेधलाभेऽपि तद्विशिष्टप्रपञ्चनिषेध(ा)लाभाच्च ॥

'इह नाना न किञ्चन'इति वचनवृत्त्याश्रयणे चाश्रुतसमुच्चयकल्पनापत्तेर्वाक्यभेदापत्तेश्च । काठके 'तं देवाः सर्वे अर्पितास्तादुनात्येति कश्चन' (कठ-उ-२-१-९) इति पूर्वत्र

**'मध्ये आत्मनि तिष्ठति'**
**'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्माभवति गौतम'**

---

(१) केचित्तु इत्यस्य श्रुतिरपि न जगन्मिथ्यात्वे मानमित्याहुः इत्यनेनान्वयः- पु.३१४ ॥

(२) तथा सतीति पाठः स्यात् ॥

(३) द्व्येकयोर्द्विवचनैकवचने इति हि सूत्रम् ॥

पुरुषार्थत्वाऽवेदकशास्त्रप्रामाण्यसम्भवेनानन्यगतिकत्वाभावात् । अन्यथा क्लृप्तहान्याद्यापत्तेः।। एतेन अविद्यानिवृत्तिरेवमुक्तिः, सा च ब्रह्मातिरिक्तमिथ्याभूताऽप्युक्तरीत्या नित्याऽस्त्विति प्रत्युक्तम् । 'निवृत्तिरात्ममोहस्ये'ति पराभ्युपगमात् । एवं प्रत्यक् ब्रह्मैक्यमुक्तित्वपक्षोऽपि प्रत्यूढम् । परेण तस्य ब्रह्ममात्रत्वाङ्गीकारेण मिथ्याभ्युपगमायोगादित्यलं पल्लवेन ।।

।। इति अद्वैत्यङ्गीकृताविद्यानिवृत्तिरूपमोक्षसाधनत्वविचारः ।।

## ।। अथ प्रसङ्गात् 'नेह नानेति' श्रुत्या जगन्मिथ्यात्वार्थकनिराकरणम् ।।

किञ्च इह = ब्रह्मणि, किञ्चन नास्ति, इत्युक्तेऽपि न जगन्मिथ्यात्वसिद्धिः । ब्रह्मणोऽ-न्यत्र स्वोपादाने प्रकृत्यादौ स्वदेशकालयोश्च सत्वसम्भवात् । ब्रह्म चाविद्यावत् न जगदु-पादानं किन्तु निमित्तकारणमात्रमिति अस्माभिः शिक्षायां प्रपञ्चितमिति[१] नेह तत्प्रपञ्चः क्रियते । अन्यथा'इह'इति किं? चिन्मात्रं विवक्षितं?,किं वा अस्मदभिमतं चैतन्यम्? नाद्यः । अप्रसक्तप्रतिषेधत्वापत्तेः । निर्विशेषचिन्मात्रस्योक्तरीत्या नृशृङ्गादिवत् असत्त्वेन तत्र जगन्निषेधस्येष्टत्वात् । नहि नृशृङ्गेनैक्यं नेति निषेधो न केनापि क्रियत इत्यस्ति । श्रुतावप्यसत्कारणत्वनिषेधवत् तत्र जगत्स्थितिनिषेधस्यापि सम्भवाच्च । न द्वितीयः । बृहदारण्यके 'नेह नाना' इत्यस्मात् पूर्वेण 'यस्मिन् पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः' (बृ-उ-६-४-१७) इति वाक्येन, तत उत्तरेण 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वरः एष सर्वाधिपतिः एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरणमेषां लोकानां सम्भेदाय'(बृ-उ-६-४-२२) इति वाक्येन च विरोधः स्यात् । नहि मिथ्याभूतं रजतं शुक्तौ प्रतिष्ठितमित्युच्यते । न वा गन्धर्वनगर-वन्ध्यासुतपत्तनयोरसंभेदा-यासौ यत इति श्रुतादिवाक्यं भ्रमादिदोषमूलमपि प्रमाणत्वेन स्वीकृतमभिप्रयुक्तैः । तस्मात् 'नेह नाना' इति श्रुतिरपि न जगन्मिथ्यात्वे मानम् । किन्तु 'इहामुत्र'इति पूर्ववाक्योपात्त-विरुद्धनानादेशसम्प्रसक्तब्रह्मानेकत्वादिनिषेध एवेति 'नेह नाना'इति श्रुत्यर्थः ।।

---

(१) 'नेतिनेतीत्यादि श्रुतीनां न तत् सद्रूपत्वनिषेधपरत्वमिति' विभागे अद्वैतशिक्षायां प्रपञ्चितमित्यर्थः ।। पु-सं-१८९

केचित्तु[१] न 'एकमेवाद्वितीयम्' इति श्रुतिर्जगन्मिथ्यात्वे मानम् । 'सदेव सोम्येदमग्र आसीत्' इति पूर्ववाक्येन 'इदम्'शब्दितस्य जगतः 'सदेव'इति सत्= एकान्तां नेदा.. विवेदनेन विरोधात् । नच ब्रह्मव्यतिरिक्तजगदसत्वं तदर्थः । [२]तथा तस्याश्रुतकल्पना-पत्तेः । नहीदं 'सदेवासीत्' इत्यस्य'असदासीदि'त्यर्थः सम्भवति । किञ्चैवं पूर्ववाक्येनैव जगन्मिथ्यात्वसिद्धेः 'एकमेवाद्वितीयम्' इत्युत्तरवाक्यं न मिथ्यात्वपरमङ्गीकार्यं पौनरुक्त्या-पत्तेः ॥

किञ्च 'हे सोम्य सदेव= सर्वदैव इदं ब्रह्मा अग्रे' उत्तरत्र 'तदैक्षत नामरूपे व्याकरोत्' इति नामरूपव्याकरणश्रवणात्ततः प्राक्काल आसीत्तदा कीदृश आसीत् इत्यपेक्षिते एकः एवं= नामरूपव्याकरणार्थं, स्वतन्त्रकारणान्तरसहायरहितमेव, अद्वितीयं नामरूपात्मकद्वितीय-शब्दितप्रपञ्चप्रागभावविशिष्टम् इत्यर्थप्रतिपादनार्थं प्रवृत्ततया न तस्य जगन्मिथ्यात्वपरत्वं युक्तम् ॥

नापि 'नेह नाना'इति श्रुतिस्तत्रमानम् । यद्यपि तत्र 'किञ्चन'शब्दो निर्धारितैकवाची । तथाऽपि विनिगमकाभावेन 'इह किञ्चन'इत्युक्तेऽपि प्रपञ्चमात्रस्य तथात्वेन निषेधसिद्धेः, 'नाना'इत्यस्य वैयर्थ्यमिति । नच भेदस्य विशेषतो निषेधाय तत् । तथाऽपि वैयर्थ्यानुद्धारात् 'नाना'इत्यौत्सर्गिक-भवितृ-प्रधाननिर्देशस्य 'द्व्येकयोः'[३](पा-सू-१-४-२२(१८६) इत्यादिवत् भावप्रधाननिर्देशत्वकल्पनापत्तेश्च । 'नाना''किञ्चन'शब्दयोः सामानाधिकरण्येन अन्वये भेदमात्रनिषेधलाभेऽपि तद्विशिष्टप्रपञ्चनिषेध(ा)लाभाच्च ॥

'इह नाना न किञ्चन'इति वचनवृत्त्याश्रयणे चाश्रुतसमुच्चयकल्पनापत्तेर्वाक्यभेदापत्तेश्च । काठके 'तं देवाः सर्वे अर्पितास्तादुनात्येति कश्चन' (कठ-उ-२-१-९) इति पूर्वत्र

'मध्ये आत्मनि तिष्ठति'
'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्माभवति गौतम'

---

(१) केचित्तु इत्यस्य श्रुतिरपि न जगन्मिथ्यात्वे मानमित्याहुः इत्यनेनान्वयः- पु.३१४ ॥

(२) तथा सतीति पाठः स्यात् ॥

(३) द्व्येकयोर्द्विवचनैकवचने इति हि सूत्रम् ॥

इत्युत्तरत्र च भेदप्रमितेः । 'इह नाना न'इति तन्निषेधानुपपत्तेश्च ।।

अपि च 'सर्वेभ्यः कामेभ्यः'[१] इत्यत्र 'सर्व'शब्दवदत्र 'किश्चन'शब्दः सर्वनामत्वात् प्रकृतपर इति स्थिते वाक्यशेषस्थ'घृत'शब्दसन्निहितअक्तशब्दस्य घृतरूपविशेषे पर्यवसानात् 'एवं धर्मान् पृथग् पश्यंस्तानेवानुविधावति' इति वाक्यशेषस्थ'धर्म'शब्दसन्निहित 'किश्चन'शब्दस्य धर्माख्यविशेषे पर्यवसानमिति च स्थिते, इह= ब्रह्मणि, किश्चन= धर्मादिकं,नाना,नास्ति'इत्युक्ते ब्रह्मधर्माणामेव नानत्वनिषेधः सिध्यति । 'स विशेषणे हि'[२]इति न्यायात् 'न जीर्णमलवद्वासाः स्नातकः स्यात्' इत्यादौ तथा दर्शनाच्च । धर्माणामेव स्वरूपेण निषेधे हि 'नेह नाना' इत्यत्र 'नाना'इत्यस्य 'एवं धर्मान् पृथक्' इति वाक्यशेषे 'पृथक्'-इत्यस्य च वैयर्थ्यम् । किश्चैतद्वाक्यस्य मिथ्यात्वाभिप्रायत्वे काठके 'ईशानो भूतभव्यस्य' (कठ-उ-२-१-५) इति पूर्वेणोत्तरेण च वाक्येन विरोधः । नहि 'अयं राजा वन्ध्यासुतस्येशान' इति वाक्यं कदापि प्रमाणभावं भजते । स्यादेवं च ब्रह्मणो निर्द्धर्मकत्वपक्षः, धर्मधर्मिणोरत्यन्तभेदपक्षः, तयोर्भेदाभेदपक्षश्च निरस्तावगम्यत इति कथं तेन जगन्मिथ्यात्वसिद्धिः?

किश्च 'इमौ स्निग्धाविव[३] अस्मिन् ग्रामे न विरोधः' इत्यादौ 'इव'शब्दोपात्तानां ब्रह्मधर्माणां एवं परस्परभेदधर्मित्वप्रतियोगित्वप्रसक्तिसम्भवे तादृशभेदनिषेधपरत्वमेव युक्तं, 'नेहनाना'इत्यस्य नतु तदनुत्पात्तब्रह्म-तद्धर्मव्यतिरिक्तप्रपश्चनिषेधपरत्वम् । नहि 'किश्चन'-शब्दस्य वाक्यशेषस्थधर्माख्यविशेषपरत्व इव तदन्यप्रपश्चपरत्वे मानमस्ति । तस्मात् 'नेहनाना' इति श्रुतिरपि न जगन्मिथ्यात्वे मानमित्याहुः ।।

।। इति प्रसङ्गात् नेहनानेति श्रुत्या जगन्मिथ्यात्वार्थक निराकरणम् ।।

अन्येतु सर्वस्यापि जडाजडस्य 'यस्यात्मा शरीरम्' 'यस्य पृथिवी शरीरम्' इत्यादिश्रुत्या ब्रह्मशरीरत्वागमात् तत् शरीरस्य च तद्विशेषणत्वात्= तद्विशिष्टं ब्रह्म द्वितीयरहितमिति 'एकमेवाद्वितीयम्' 'नेह नाना' इत्यादिश्रुतेरर्थ इत्याहुः ।।

---

(१) 'सर्वेभ्यः कामेभ्यः दर्शपूर्णमासौ' इत्यादिना पूर्वतन्त्रे विचारितमित्यर्थः ।।

(२) 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतो विशेष्यबाधः' इति न्यायादित्यर्थः ।।

(३) 'इमौ स्निग्धौ अस्मिन् ग्रामे' इति ताळपत्रस्थ पाठः ।।

अपरे तु परमते 'सर्वगन्धः सर्वरसः' इत्यादिश्रुतिरिव 'अद्वितीयम्' इत्यादिश्रुतिरपि नाम्नि ब्रह्मत्वस्येवाविद्यमानस्य द्वितीयराहित्यस्योपासनार्थं प्रवृत्ता नत्वर्थतत्वप्रतिपादनार्थमित्याहुः ।। इतरे तु प्रपञ्चे अभिनिवेशनिषेधपरा तन्मिथ्यात्वश्रुतिरियमित्याहुः ।।[१]

एतेन 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति पूर्ववाक्यबलात् जगन्मिथ्यात्वसिद्धिरिति निरस्तम् । अत्रापि 'इह'शब्देन ब्रह्मणः आधारत्वोक्तौ 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इत्यादिश्रुतिप्रतिपन्नार्थानामाधेयत्वोक्तौ 'नाना'शब्दस्य भवितृप्रधानत्वोक्तौच, इह= ब्रह्मणि, विद्यामानानि तत्त्वानि, योगानेव पश्यति, यस्तानि नानेवच वस्तुतो ब्रह्मतो, नाना= अभिन्नानि पश्यति, स, मृत्योः मृत्युमाप्नोति' इत्यर्थपरतयोदाहृतपूर्ववाक्यस्याभेददृष्टनिषेधकत्वेन मिथ्यात्वपरत्वासिद्धेः । आधारत्वेन ब्रह्मैव गृहीत्वा आधार-आधेयत्वेन ज्ञानानन्दादिब्रह्मधर्मग्रहणेऽपि 'य इह= ब्रह्मणि, विद्यमानान् ज्ञानानन्दादिधर्मान्, अनेव= अमनुष्य इव, पशुवदिति यावत्, न पश्यति= नालोचयति= न विचार पथं प्रापयतीत्यर्थः, मृत्युमाप्नोति इत्यर्थपरत्वेन मिथ्यात्वपरत्वासिद्धेश्च । तथा च स्मृतिः ।

**'नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।**
**वर्तमानस्तु सन्न्यासी पतत्येव न संशयः'** इति ।।

**'श्रवणादि विना नैव जातुतिष्ठेदतन्द्रितः'**(तं-सा-सं) इति च । पश्यतेरालोचनार्थत्वे च 'पश्यार्थैश्चानालोचने' (पा.सू. १.८.२५/४०९) इति पाणिनिसूत्रमेव मानमिति न किञ्चिदनुपपन्नमिति । [२]केचिद्वस्तुतस्त्वत्र 'इव' शब्दो भेदाभेदपरः ।

**'भवेदेकत्र संयोग इव शब्दो विरुद्धयोः ।**
**धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षित'**

इति वचनात् ।।

---

(१) अन्ये तु इत्यारभ्य आहुः इत्यन्तं वाक्यं भागशः न्यायामृते १ परिच्छेदे-२९ भङ्ग वाक्यमनुकरोति ।।
(२) केचित्तु इत्यस्य अन्वयं न दृश्यते । अतः 'वाक्यार्थप्रतीत्या परानभिप्रेतार्थ परं स्यादि'त्यनन्तरं 'इत्याहुः इति' पाठः स्यात् ।।

तथा च 'इह= ब्रह्मणि, विद्यमानं ज्ञानानन्दादिकं, यो, नानेव= सन्निधानात् आधारभूतेन ब्रह्मणा भिन्नाभिन्नं, पश्यति, सः मृत्योर्मृत्युमाप्नोति इत्यर्थपरतया ब्रह्मणः तद्धर्माणां च भेदाभेदनिषेधपरमेवेदं वाक्यं न मिथ्यात्वपरम्, अन्यथा 'नानेव पश्यति' नतु वस्तुतो नानेति वाक्यार्थप्रतीत्या परानभिप्रेतार्थपरं स्यात् । अतस्तेनापि हठात् प्रतीयमानार्थपरत्वं त्यक्त्वा विमर्शसिद्धार्थपरत्वमेवाश्रयितव्यम् ।। इति 'मृत्योस्स मृत्युम्' इति पूर्ववाक्यार्थः ।।

।। इति 'नेह नानास्ति किञ्चन' श्रुत्यर्थविचारः ।।

## ।। अथ 'यत्रत्वस्येति' श्रुत्यर्थविचारः ।।

नापि 'यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इतिश्रुतिस्तत्रमानम् । अत्र हि पूर्वत्र 'स यथा सैन्धवखिल्य' इत्यादिना सैन्धवखिल्यस्य समुद्र इव विज्ञानघनस्य जीवस्य ब्रह्मणि स्थितिर्मोक्ष इति स्वमतमुक्तम् । नह्युदकराशिरत्रसमुद्रः, किन्तु तटाकादिवत् तदाश्रयः खातो वरुणो वा । पूर्वत्र 'स यथा सर्वासामपां समुद्र एकायनम्' इत्युक्तेः । नचाऽऽप एवाऽपामयनम् । नचेश्वरस्थानीयाभ्यां खातवरुणाभ्यां सैन्धवखिल्यस्याभेदः । नापि पूर्वमुक्तस्थानीयाभिरद्भिः । एतच्च परमप्रकृतार्थनिरूपण प्रस्तावे वक्ष्यते ।।

एवं श्रुतिः स्वमतमुक्त्वा 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इतिवाक्ये 'अविनाशी' इत्यनेन अनात्मनाशो मोक्ष इति बौद्धमतम् 'अनुच्छित्तिधर्मा' इत्यनेन अशेषविशेषणगुणोच्छेदो मोक्ष इति वैशेषिकादिमतं च निरस्य, अद्वितीयचिन्मात्रविशेषो मोक्ष इति मते अनिष्टं प्रसञ्जयितुं 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादिना प्रसङ्गाङ्गां व्यतिरेकव्याप्तिं निरूप्य 'यत्र त्वस्य' इत्यादिना यत्र= येषां मते त्वात्ममात्रावशेषो मोक्षः,तत्तर्हि केन कं पश्येत्= न केनाऽपि किञ्चित् । तथाचेष्टस्य रूपादेरीश्वरस्य [१]स्वस्य चाज्ञानादन्धादेरिवातिदुःखं मोक्षे स्यादित्याह इत्यनिष्टप्रसङ्गोऽह्यत्राभिप्रेतः । उक्तं हि भारते 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्'[२] इति ।

(१) स्वस्यचाज्ञानादग्धादेरपीति दुःखं इति ताळपत्रस्थपाठः ।।

(२) महाभारतं –शान्तिपर्वम् -३०१-८३ ।।

अन्यथा न विद्यते उच्छित्तिर्येषां ते अनुच्छित्तयः, अनुच्छित्तयो धर्मा यस्यासावनुच्छित्तिधर्मेति बहुव्रीहिगर्भबहुव्रीह्याश्रयणे धर्मानुच्छित्त्युक्तिविरोधात् । 'अनुच्छित्तिः धर्मो यस्ये'ति विग्रहाश्रयणे च 'अविनाशी' इत्यनेन पुनरुक्तिः । 'अनुच्छित्तिः' इत्येतावतैव विहितार्थ-लाभात् 'धर्म'पदवैयर्थ्यं च ॥

'यत्र हि द्वैतमिव' इत्यत्र 'इव'शब्दस्तु द्वैतस्य परमते मिथ्यात्वात्, परीत्या चापाद-नीयत्वादल्पत्वाद्वा, पुराणे 'दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात्' इति लोके च अल्पज्ञे अयं [१]विद्वानिवेति प्रयोगात्, 'उपमार्थे तथाऽल्पत्वे इव शब्दः प्रयुज्यते'[२] इति वचनाच्च । अन्यथा वाक्यशेषे 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इति सर्वाधार-त्वोक्तिः, 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान्' इति 'स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथक् धूमा' इति च, भिन्नानां समसत्ताकानां च दुन्दुभि तच्छब्दाग्निधूमादीनां दृष्टान्ता-नामुक्तिश्चायुक्ता स्यात् । नहि दुन्दुभ्यादौ तच्छब्दादिरध्यस्तः किन्तु तदधीन इति । न तत् श्रुतिरपि मिथ्यात्वे मानमिति ॥

अन्येतु मोक्षे देहेन्द्रियादिहीनस्य केवलस्यात्मान एव भावात् सर्वविषयकज्ञाननिषेधिकै-वेयं श्रुतिः नतु प्रपञ्चनिषेधिकेत्याहुः ॥[३]

॥ इति यत्रत्वस्येति श्रुत्यर्थः॥

## ॥ अथ यद्द्वैतं न पश्यति इति श्रुत्यर्थः ॥

नापि 'यद्द्वैतं न पश्यति पश्यन् वै तत् न पश्यति । नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते । अविनाशित्वान्न तु तद्द्वितीयमस्ति । ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रुतिः तत्र मानम् । पूर्वत्र हि 'शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा' इति नाडीस्थब्रह्मरूपविशेषाणां विलक्षणशौक्ल्यादिगुणत्वमुक्तम् । तेन तेषामभेदः प्राप्तः । तथा 'तद्वा अस्यैतदाप्तकाममात्मकाममकाममरूपम्' इति षष्ठ्या रूप-रूपिभेदश्च, तन्निराकर्तुं

(१) अल्प एवायम् इति ताळपत्रस्थ पाठः ॥

(२) बृहदारण्यकभाष्योदाहृत (६-३-३०)शब्दनिर्णयवाक्यम् ॥

(३) इदं प्रकरणं न्यायामृते-१परिच्छेदे-३०-भङ्गं-भागशः अनुकरोति ॥

तद्रूपाणामभेदोऽत्र उच्यते । 'हृदयं ब्रह्म'इति श्रुत्या 'तस्यैतदेव निरुक्तं हृदयम्' (छां-उ-८-३-३) इत्यादिश्रुत्या च ब्रह्मणिप्रसिद्धेन हृदयनिमित्तकेन हृदयस्य भवतीति पूर्वत्र 'हृदय'शब्देन निर्दिष्टं ब्रह्म यत्स्वगुणादिकं द्वैतं= स्वस्मात् भिन्नं,न पश्यतीति,तद् द्वितीयं नास्ति= द्वितीयत्वेन नास्ति,कुतः? पश्यन् सर्वज्ञ एव सन्, ईश्वरो न तत् पश्यति । नहि द्रष्टुरीश्वरस्य दृष्टेर्विपरिलोपो बाधो विद्यते । नित्यत्वात् ॥

यत्तु जीवजडादिकं स्वस्माद्विभक्तं पश्येत् तत्ततोऽन्यत् इति श्रुत्यर्थप्रतीतेः,'पश्यति' इति दर्शनकर्तुरेव पदिन्यायेन(१) 'यद्द्वैतम्'इत्यत्र प्रतियोगित्वेनान्वयात् 'यद्द्वैतम्' इति यच्छब्दस्य नतु तदिति व्यवहिततच्छब्दान्वयस्तु 'यत्तदोर्नित्यसाकाङ्क्षत्वात्' आकाङ्क्षामात्रस्य सन्निधानात्, बलीयस्त्वाद्युक्तः । उक्तं हि जैमिनि सूत्रे 'आनन्तर्यमचोदना' (जै-सू-३-१-२४) इति । उक्तं च वार्तिके–

**'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः ।**
**अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्'** इति ।

अन्यथा यद्विभक्तं तन्नास्तीत्येतावतैव विवक्षितार्थलाभात्, शेषवैयर्थ्यम् । कथं च त्वत्पक्षे नित्ये चैतन्यमात्रे 'नहि द्रष्टुर्दृष्टेर्विपरिलोपः- नहि घातुर्घातेर्विपरिलोपः- नहि स्प्रष्टुः स्पृष्टेर्विपरिलोपेत्यादिनोक्तं(२) दृष्टित्वघातित्वस्पृष्टित्वादिकं द्रष्टादिकं द्रष्टृत्वादिसम्बन्धश्च ॥

किञ्च पूर्वत्र 'यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्यश्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियते एवमेवाऽयं पुरुषः'(बृ-उ-६-३-१९) इति । 'स यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् एवमेवाऽयं पुरुषः'(बृ-उ-६-३-२१) इति सम्भिन्नं सत्यं नीड-श्येन-स्त्री-पुरुषादि दृष्टान्तोक्तिः, 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति जीवेश-भेदोक्तिश्चायुक्ता स्यात् । तस्मान्नेयमपि श्रुतिस्तत्र मानम् ॥

॥ इति 'यद् द्वैतम् न पश्यति' इति श्रुत्यर्थविचारः ॥

---

(१) जै-सू-४-१०-२५ इत्यत्रोक्तन्यायेनेत्यर्थः ॥

(२) ''नहि यस्माद् द्रष्टुर्दृष्टिकर्तुर्या दृष्टिस्तस्या दृष्टेर्विपरिलोपो विनाशः न विद्यते'' । इत्यादि शाङ्करभाष्यस्य अर्थतोऽनुवादोऽयम् ॥

यद्वा एतत्सर्वं जगद्वा व्यवस्थितत्वेन पश्यन्=जानन्, लोकः द्वैतं न पश्यति इति यत् । तन्न । किन्तु पश्यति=पश्यत्येव । ननु पश्यतु लोको द्वैतम् । तथाऽपि दर्शनविषयस्य द्वैतप्रपञ्चस्यसत्त्वं कुतः?। तद्विषयत्वमात्रेण पारमार्थिकत्वे शुक्तिरूप्यादेरपि तत्त्वापत्ति-रित्यत उक्तं 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'इति । कुतो न विद्यते? इत्यत उक्तम् 'अविनाशित्वात्' इति । अदर्शनादित्यर्थः । 'णश अदर्शने'इति धातुर्विपूर्वकात् घञन्तोऽय-मिति । बाधदर्शनादिति फलितोऽर्थः । नन्वेवमीश्वरातिरिक्तद्वैतप्रपञ्चस्य पारमार्थिकत्वे 'एकमेवाद्वितीयम्' इत्यादि तन्निषेधो निर्विषयःस्यादित्यत उक्तं- नतु तद् द्वितीयमस्ती-त्यादि । 'तु'शब्दो विशेषार्थो भिन्नक्रमः । तथाचायमर्थः । तत्तु द्वितीयं नास्ति यत्ततः प्रकृतपरमेश्वरात् सम्यक् भिन्नं= विभक्तं= परस्परभिन्नं च पश्येत्, यस्य= परमेश्वरात् भिन्नस्य परस्परं भिन्नस्य च, दर्शनम्= इष्टसाधनम्, मोक्षरूपेष्टसाधनत्वं,विद्ध्यर्थः, विधिश्च लिङ्-लोट्-तव्यादिरिति सुप्रसिद्धम् ॥

एवं च मोक्षसाधनभूतं ज्ञानगोचरवस्तुद्वितीयं नास्तीति पर्यवसितम् । 'एकमेवाऽ-द्वितीयम्' इत्यादि द्वितीयनिषेधोऽपि तादृशद्वितीयविषय इति न तस्य निर्विषयत्वप्रसङ्गः । अन्यथा प्रपञ्चविधि-निषेधश्रुतीनां व्याहतभाषित्वप्रसङ्गादयमेवार्थोऽङ्गीकार्यः इति । तथा च श्रुतयः । 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय' 'तमेवं विदित्वाऽ-तिमृत्युमेति नान्यः पन्था विमुक्तये' 'तमेवैकं जानथात्मानं अन्या वाचो विमुञ्चथ । अमृतस्यैष सेतुः' इत्यात्मैक्यस्यैव पारमार्थिकत्वे 'आत्मानमेकं विजानथ' इत्येतावतैव विवक्षितार्थलाभात् शेषवैयर्थ्यं स्यात् ॥

यद्यपि 'द्वे ब्रह्मणी वेदितव्ये'इति जीवेशोभयज्ञानमिष्टसाधनत्वेन श्रुतम् । तथाऽपि जीवज्ञानस्येशज्ञानसाधनतयेष्टसाधनत्वसम्भवादविरोधः । नहीशज्ञानस्यैव जीवात्मज्ञानस्य मोक्षसाधनत्वं श्रूयते । प्रत्युत 'तमेवं विदित्वाऽति मृत्युमेति नान्यः पन्थाः' 'अन्या वाचो विमुञ्चथ' इति च तन्निषेध्यत इत्यलमनुपयोगात्[१] । 'पङ्कजं कुमुदमानय' इत्यादाविव सम्भवादवयवार्थमात्रपरत्वमवसीयते 'अन्यत्'इत्यस्य विवरणं वा 'विभक्त'पदमिति ॥

(१) इत्यलमुपयोगात् इति ताळपत्रस्थ पाठः ॥

यद्वा 'नाहमीश्वर'इत्यादिब्रह्मान्यद्वितीयात्मग्राहान्वयो नायुक्तः । अत्र श्रुतौ दृष्टेर-विनाशित्वेन बाधाभावोक्तिर्दोषाजन्यत्वेन प्रमात्वसूचनद्वारा तद्विषयस्य वेदान्तजन्यचरमवृत्ति-विषयभूतब्रह्मस्वरूपवत् परमार्थः ।

**।। अथ वाचारम्भणश्रुत्यर्थः ।।**

नापि 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतिस्तत्रमानम् । 'वाचारम्भण'शब्दा-न्मिथ्यात्वस्य वाक्यार्थविधया प्रतीत्यभावात्, रूढेरभावेन पदार्थविधयापि तस्य ततोऽ-प्रतीतेश्च । नच आरभ्यत इत्यारम्भणमिति योगाश्रयणात् तत्सिद्धिः । वाचारब्धकाव्यादेरिव तदारब्धस्याप्यमिथ्यात्वेनोपपत्तेः । 'आरम्भण'शब्दस्य कृदन्तत्वेन 'तद्योगे षष्ठ्यैवेति' तृतीयानुपपत्तेश्च । वागालम्बनमिति मात्रशब्दान्तर्भावेन व्याख्याने मानाभावाच्च । अश्रुत-कल्पनात् । 'नामधेयम्'इत्यस्यापि नाममात्रं ह्येतदिति परेण व्याख्यानेन पौनरुक्त्याच्च(१)। 'मृत्तिका' इत्यत्रार्थविवक्षायाम् 'इति'शब्दवैयर्थ्याच्च ।।

पदार्थविपर्यासे खल्वत्रेतिशब्दः । सच शब्दप्रकरणे प्रसक्तं शब्दपदार्थकत्वं निवार्यार्थ-पदार्थकत्वं व्यवस्थापयति । यथा 'नवेति विभाषा' (पा-सू-१-१-४४(२४) इति अर्थप्रकरणेतु शब्दपदार्थकत्वं यथा गौरित्ययमाहेति । उक्तं हि महाभाष्ये 'नवेति विभाषेत्यत्र इतिकरणः क्रियते सोऽर्थ निर्देशार्थो भविष्यति तद्यथा गौरित्ययमाहेति, गोशब्दादितिकरणःप्रयुज्य-मानो गोशब्दं स्वस्मात् पदार्थात् प्रच्यावयति सोऽस्मात् प्रच्युतशब्दपदार्थकः सम्पद्यते इति'। अत्र चार्थप्रकरणादेवार्थपदार्थकत्वे सिद्धे किं 'इति' शब्देन । नचात्र 'इति'शब्दः-प्रकारार्थकः । तथा सति विवक्षितप्रकारस्यानुपादानाद् विनिगमकाभावेन घटशरावोदञ्चनादि मृत्तिकाप्रकाराणां सर्वेषामपि ग्रहणे मृत्तिकावद्घटादि-तत्प्रकाराणामसत्यत्वापत्तेः, दृष्टान्ता-नुपपत्तेः, अवधारणानुपपत्तेश्च । अवधारणबलेन तत्प्रकाराणामेव सत्यत्वापातात् ।।

तदुक्तं –

---

(१) श्रुणु, वाचारम्भणम्= वागारम्भणम्=वागालम्भनमित्येतत् । कोऽसौ विकारो नामधेयम् ?। वागालम्भनं मात्रं नामैव केवलं न विकारो नाम वस्त्वस्ति ।। इति शङ्करभाष्यस्य तात्पर्यमेतत् ।।

'वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।
पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता' इति ।।

तस्मात्, वाचा= वागिन्द्रियेण, आरम्भणम्= उत्पादनं यस्य साङ्केतिकशब्दस्य = भाषाशब्दस्य, तन्नामधेयं विकारः । कर्मणि घञ् विकृतम् । संस्कृतापभ्रंशरूपेण विक्रियमाणात्, मृत्तिकेत्यादि संस्कृत नामधेयमेव तु, सत्यं, नित्यम् । 'नास्य जरयै तज्जीर्यते न वधेनास्य हन्यते''एतत्सत्यं ब्रह्मपुरम्'(छां-उ-८-१-५) इत्येतच्छ्रुतावेवोत्तरत्र 'सत्य'शब्दस्य नित्ये प्रयोगात् । 'सदा'शब्दाद् 'अव्ययात्त्यप्'(पा-सू-४-२-१०४(१३२४) इति त्यबन्तस्य 'सत्य'शब्दस्य नित्ये प्रयोगसम्भवाच्च ।।

नचैवं 'सदात्यमि'तिप्रयोग इति स्यात् नतु 'सत्यम्'इति वाच्यम् । 'आतो धातोः' (पा-सू-६-४-१४०(२४०) इत्यत्र 'आत'इति योगविभागाद्वा 'बहुलं छन्दसि' (पा.सू. २-२-३९) इति बहुलग्रहणाद्वा आकारलोपसम्भवात् । 'सदातनं सत्यमिति नित्यमेवोच्यते बुधैः' इति वचनाच्च इह विकृतत्वप्रतियोगिन एव 'सत्य'शब्देन विवक्षणीयत्वाच्च ।।

'टापश्चापि हलन्तानां यथा वाचा निशादिशा' इति वचनात् 'वाचारम्भणम्' इति समासस्साधुः । तस्मात् तत्सादृश्याद् एकविज्ञानेन सर्वविज्ञाने मृत्पिण्ड-मृण्मयादि-दृष्टान्ताः प्रधानज्ञानादप्रधानज्ञाने संस्कृतापभ्रंशदृष्टान्ताः भाषाशब्दज्ञानाद्धि यत्फलं तच्चाधिकं च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानात् भवतीति तज्ज्ञो विद्वानित्युच्यते । तदर्थं'यथा सोम्य'इत्यादिकं 'तनूर्वर्षिष्ठैः'(१)इत्यादिवदनुषञ्जनीयम् । कथं च ब्रह्म विवर्तपक्षे मृत्पिण्ड-मृण्मयादिदृष्टान्ताः । ब्रह्माविद्याविशिष्टं सदुपादानमपीति चेन्न । मुमुक्षुज्ञेय-शुद्धब्रह्म-ज्ञानेनैव सर्वविज्ञानप्रतिज्ञानात् । अन्यथा अविद्याया अपि 'येनाश्रुतम्' इति प्रतिज्ञावाक्योक्तज्ञेय-कोटित्वापातात् अनाद्यविद्यादिकं प्रत्युपादानत्वायोगाच्च ।।

उपादानत्वाभिप्रायत्वे 'मृदा ज्ञातया मृण्मयं विज्ञानं स्यात्'इत्येतावतैव विवक्षितार्थलाभात् मृत्पिण्डादिवाक्यत्रये प्रत्येकं श्रुतानाम् 'एकशब्द' 'पिण्डशब्द' 'सर्व'शब्दानां वैयर्थ्याच्च । नहि सर्वं मृण्मयादिकमेकमृत्पिण्डादिविकारः । नखनिकृन्तनस्यान्त्यावयवित्वे-नानुपादानत्वाच्च ।।

---

(१) 'अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगत्वात्' इति जैमिनिसूत्रे(१-१-४८) विचारितम् ।।

मृत्त्वे निश्चितेऽपि घटादौ संशयादिदर्शनाच्च । नच घटादेरपि मृद्यस्तत्वात् विवर्तपक्षेऽपि तद् दृष्टान्तो युक्तः । मृत्त्वज्ञानेऽपि घटाद्यनिवृत्तेर्व्यवहारदशायां मृदादिवत्कारकव्यापारसाध्यस्य जलाहरणादि समर्थस्य च अवस्थाविशेषरूपस्य घटादेरपि सत्त्वात् । तत्त्वविवक्षायां तु मृदोऽपि सत्त्वोक्त्योगाच्च । शुक्त्यादितत्त्वज्ञानेन रूप्यादिज्ञानदर्शनाच्च ॥

यत्तूक्तं वाचस्पतिना 'शुक्तौ ज्ञातायां रूप्यं तत्त्वतो ज्ञातं भवति इति । सा हि तस्य तत्त्वम् । एवं ब्रह्मज्ञानात् सर्वं तत्त्वतो ज्ञातं भवति'(१) इति । तन्न । एवं हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवति इत्यर्थः स्यात् । तत्त्वयुक्तं । सर्वसाधारण्यात् । 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति श्रुतिगत'अश्रुतादि'पदायोगाच्च ॥

किञ्चासाधारणं स्वरूपम् असाधारणधर्मो वा तत्त्वम् ,नतु भ्रमाधिष्ठानम् । तथात्वे हि ब्रह्माद्यनधिष्ठानमानन्दः शुक्तितत्त्वादिकं ब्रह्मशुक्त्यादितत्त्वं न स्यात् । नच शुक्तिः शुक्तिज्ञाननिवर्त्यस्य रूप्यस्य स्वरूपम्, असाधारणधर्मो वा । नचानेकारोऽप्यानुगतमधिष्ठानम् एकैकस्यारोपितस्याऽसाधारणम् । किञ्चैवं शुक्तौ रूप्यधीरानन्दादौ ब्रह्मादिधीरिव प्रमा स्यात् । तत्तत्त्वे तद्धीत्वात् । तस्मात् परमते एकविज्ञानेन सर्वविज्ञानमयुक्तम् । अस्मत्पक्षे तु प्रधानपुरुषज्ञानाह्वानपूजनादौ(२) 'जनपदः सर्वोऽपि ज्ञात आहूत' इत्यादेः, पुराणादौ च –

**'शशास पृथिवीं सर्वां सशैलवनकाननम् ।**
**नाशिता पृथिवी सर्वा धार्तराष्ट्रेण दुर्नयैः'(३)**

इत्यादेश्च व्यवहारस्य दर्शनात्, प्रधानभूतब्रह्मज्ञानादप्रधानभूतदेवतादिज्ञानफलसिद्धेस्तद्युक्तम् । 'ज्ञानादेव सर्वेकामाः सम्पद्यन्ते' इतिश्रुतेः । 'तावान् सर्वेषु देवेषु ब्राह्मणस्य विजानतः'(भ-गी-२-४६) इति स्मृतेश्च ॥

(१) आरम्भणाधिकरणे भामतीवाक्यम् ॥

(२) प्रधानपुरुषज्ञानाह्वानपूजनादौ इति ताळपत्रस्थ पाठः ॥

(३) बृहदारण्यकभाष्योदाहृत(३-५-४)वाक्यम् ॥

'यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृण्मयाः ।
विज्ञायन्ते तथा विष्णोः मादृश्याज्जगदेव च ।।
अनन्याधीन विज्ञानादन्याधीनं तथैव च ।।
मृदयोलोहनाम्नां हि ज्ञानात्साङ्केतिकं यथा'(१) ।।

इत्यादिस्मृतेश्च ।।

एतेनैकविज्ञानेन सर्वविज्ञानान्यथानुपपत्तिर्मिथ्यात्वे मानमिति निरस्तम् । केचित्तु, सूक्ष्माव्यक्तादिविशिष्टस्य ब्रह्मणो महदादिविशिष्टात्मना परिणामात्, कार्य-कारणयोश्चा-भेदात्, कार्यस्यकारणारितेकेणासत्वपरेयं, श्रुतिर्न तु मिथ्यात्वपरेत्याहुः ।।

।। इति वाचारम्भणश्रुत्यर्थः ।।

## ।। अथ 'इदं सर्वं यदयमात्मा' इति श्रुत्यर्थः ।।

नापि 'इदं सर्वं यदयमात्मा' इत्यादि श्रुतिस्तत्रमानम् । जडाजडयोरैक्यासम्भवेन ब्रह्मव्यतिरेकेणासत्त्वस्यात्राभिप्रेतत्वादिति युक्तम् । 'सर्वेषु भूतेष्वेतम्' (ऐ-आ-३-२-३) इति श्रुतेः 'सर्वं जलं लवणम्' इतिवत् सर्वव्याप्त्या वा, 'सहि सर्वस्यकर्ता' इति श्रुतेः 'आयुर्वै घृतम्' 'ब्राह्मणोऽस्य मुखमासीत्' इतिवत् निमित्तत्वेन वा, 'यस्मिन् द्यौः पृथिवी च' इत्यादिश्रुतेः 'राजा राष्ट्रम्' 'ब्राह्मणो वै सर्वा देवता' इतिवत् सर्वाधारत्वेन वा, 'न ऋते त्वत्क्रियते किञ्चन' (ऋ-सं-१०-११२-९) इत्यादिश्रुतेः, 'यजमानः प्रस्तरः' इतिवत् तत्सिद्ध्या वा, 'आदित्यो यूपः' इतिवत् सारूप्येण वा, सामानाधिकरण्योपपत्तौ सर्वप्रमाणबाधितायाः 'यः पुरुषः सः स्थाणुः' इतिवत् यत्सर्वत्वेन प्रतीतं तदात्मन्यध्यस्तमिति पदद्वयलक्षणाया अयोगात् । उक्तं च महाभाष्ये ''अन्तरेणापि निमित्तं निमित्तार्थोऽवगम्यते । 'आयुर्वैघृतम्' 'दधि त्रपुसं प्रत्यक्षो ज्वरः' इति । अन्तरेणापि वतिमतिदेशोऽवगम्यते । अब्रह्मदत्तं ब्रह्मदत्तेत्याह ब्रह्मदत्तमवदितिगम्यते'' इति । 'पुरुष एवेदं सर्वम्' 'पुरुषेणैवेदं सर्वं व्याप्त-मातृणा(मावृणा-पा)दाकरीषात्' इतिश्रुतौ,

(१) छान्दोग्यभाष्योदाहृतसामसंहितावाक्यम् ।।

'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः ।
सर्वस्य च सदा ज्ञानात् सर्वमेनं प्रचक्षते ।
पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदधीनत्वात् (तदीयत्वात्-पा) नतु सर्वस्वरूपतः'(१)

इति भारते ॥

'सर्वं समाप्नोषि ततोऽसि सर्वः'इति गीतायां चान्यथा व्याख्यातत्वाच्च । अन्यथा 'इदं सर्वम्'इत्यस्य 'सर्वं तं परादाद्योऽन्यत्रात्मानं सर्वं वेद'इति पूर्वेण 'स यथादुन्दुभेः' इत्यादिनोत्तरेण,'पुरुष एवेदं सर्वम्' इत्यस्य 'स भूमिं विश्वतो वृत्वा'इति पूर्वेण 'उतामृतत्वस्येशानः' इत्युत्तरेण, 'ब्रह्मैवेदं सर्वम्' इत्यस्य 'अस्यां पृथिव्यां तेजोमयोऽमृतमयः स यश्चायमप्सु तेजोमयोऽमृतोमयः'इत्यादिना पूर्वेण, 'सर्वं खल्विदं ब्रह्म' इत्यस्य 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्' इत्यदिनोत्तरेण 'सर्वाणि भूतान्यात्मैव' इत्यस्य 'सर्वभूतेषु चात्मानम्' इत्यादिना पूर्वेण 'याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः' इत्युत्तरेणात्र च विरोधः ॥

॥ इति 'इदं सर्वं यदयमात्मे'त्यादि श्रुत्यर्थः ॥

## ॥ अथ 'यस्मात्परं ने'ति श्रुत्यर्थः ॥

नापि 'यस्मात् परं नापरमस्ति'(श्वे-उ-३-९) इतिश्रुतिस्तत्रमानम् । 'यस्मात्, परमात्मनः परं न, अपरं त्वस्ति तच्च किञ्चित्= अल्पम्' इत्यर्थपरत्वेन मिथ्यात्वे तस्या अप्रमाणत्वात् । तथाच श्रुती 'पुरुषान्न परं किञ्चित्'(कठ-उ-१-३-११) इति 'पादोऽस्य विश्वा भूतानि' इति च । नहि 'यस्मात् परं नास्ति अपरं नास्ति' इति नञनुषङ्गकल्पने मानमस्ति । किञ्च- परापरयोरुभयोरप्यसत्त्वे 'तेनेदं पूर्णं पुरुषेण सर्वम्'(श्वे-उ-३-९) 'ततो यदुत्तरतरम्'(श्वे-उ-३-१०) इति वाक्यशेषविरोधः । तदभावे इदमिति निर्दिष्टं केन पूर्णं स्यात् उत्तरतरं वा । 'यस्मान्नाणीयो न ज्यायोऽस्ति' इत्यत्रतु 'अणोरणीयान्महतो

(१) महाभारते उद्योगपर्वणि -७०-११

महीयान्' इत्यादिश्रुत्यन्तरसंवादात् वाक्यशेषविरोधादुभयत्रापि नञ्श्रवणाच्चोभयनिषेध इति ॥

॥ इति 'यस्मात्परं ने'ति श्रुत्यर्थः ॥

**॥ अथ 'मायामात्रमि'ति श्रुत्यर्थः ॥**

**'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः'** (मा-उ-२-९)

इति आद्यश्लोकेन भास्कराद्यङ्गीकृतं भेदप्रपञ्चस्य स्फटिकलौहित्यादिवदिदं प्रथमतयोपाध्यधीनोत्पत्तिकत्वं वा, तदधीनस्थितिकत्वं वा, औपाधिकत्वं निरस्य,

**'विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते'** (मा-उ-२-१०)

इति द्वितीयश्लोकेन मायावादाद्यङ्गीकृतं भेदप्रपञ्चस्याज्ञानकल्पितत्वमज्ञानलक्षणदोषप्रयुक्तभानत्वमारोपितत्वं निरस्यत इति तवाऽपि न भेदप्रपञ्चमिथ्यात्वे मानत्वेनोपन्यसनीयौ । तथाहि । प्रपञ्चो= द्वैतप्रपञ्चो, यदि विद्येत= यद्युपाध्यधीनोत्पत्तिकस्तदधीनस्थितिको वा स्यात् 'विदसत्तायां', 'विद्लृलाभे' इति च धातोः, स्थितिस्तदुत्पत्तिरपि लाभरूपैव पर्यवस्यतीतिकृत्वा, तर्हि 'निवर्तेत न संशयः' । औपाधिकस्योपाधिनिवृत्त्या निवृत्त्यवश्यम्भावात् । नच तन्निवृत्त्या निवर्तते । मोक्षेऽपि 'भुक्तभोगामजोऽन्यः' (श्वे-उ-४-५) इति भेदश्रवणात् । तस्मान्नौपाधिक इति तर्कशरीरप्रतिपादकवाक्यरूपतया तदौपाधिकत्वप्रतिपादकत्वायोगात् । नचैवं व्याख्याने मानाभावः । 'प्रपञ्चो यदि विद्येत = यदि सन् स्यात्, तर्हि 'निवर्तेत'इत्यस्य ब्रह्मण्येव व्याभिचारेण यथाश्रुत्यर्थानुपपत्तेरेव तत्प्रमाणत्वात् ॥

नचैवमुत्तरार्धे 'मायामात्रमिदं द्वैतम्' इति द्वैतप्रपञ्चस्य मायाधीनत्वोक्तिर्विरुद्ध्यत इति वाच्यम् । भास्कराद्यभ्युपगतस्य भेदोपाधेः सत्यत्वेन पराभिमतमायात्वासम्भवात्, 'माया'-'मिथ्या'शब्दयोरपर्यायत्वात्, 'कुसृष्टिः कुह नामा' इत्यमरोक्तेश्च । तस्मात् भेद प्रपञ्चो न जपाकुसुमाद्युपाधिकस्फटिकलौहित्यादीव उपाध्यधीनोत्पत्तिको वा, तदधीनस्थितिको वा,

किन्तु अनाद्यनन्तः । नचैवं श्रुतौ 'उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवम्' इति तदुत्पत्तिश्रवणविरोधः । उपाधेः कृत्यसम्भवेन लक्षणाया आवश्यकत्वेन 'क्रियते' इत्यस्य ज्ञाप्यत इत्यर्थपरत्वात् । नचैवं व्याख्यानं 'मायामात्रमिदं द्वैतम्' इति भेदप्रपञ्चस्य मायोपाधिकत्वप्रतिपादकोत्तरार्धविरुद्धम् ॥

इदं= प्रत्यक्षादिप्रमाणसिद्धम् द्वैतं, भेदप्रपञ्चः, अद्वैतं= स्वविरोधि द्वितीयरहितं, 'अस्मिन् ग्रामे अयमद्वैतः' इत्युक्ते 'द्वैत'शब्दात्प्रतिद्वन्द्विन एव द्वितीयस्य प्रतीतेः । तथाच 'अद्वैत' शब्दस्य भेदप्रपञ्च स्वविरोधिद्वितीयरहित इत्येवार्थः । ननु तदेव कुत इत्यत आह- 'मायामात्रम्'इति । अत्र'माया'शब्देन ईश्वरेच्छोच्यते । तन्मात्रं= तदधीनमित्यर्थः ।

'विष्णोरिच्छावशत्वात्तु मायामात्रमितीरितम्'(१)इति स्मृतेः । अन्यथा पूर्ववाक्ये 'स्वप्रमाया सरूपेति सृष्टिरन्यैर्विकल्पिता'(मा.उ.१.१३) इति भेदप्रपञ्चस्य पराभिमतस्वप्नमायासरूपत्वं मतान्तरत्वेनोक्त्वा 'इच्छामात्रं प्रभोः सृष्टिः' (मा-उ-१-१४) इति ईश्वरेच्छाधीनत्वस्य श्रुतिमतत्वेनानुक्तिप्रसङ्गात् । 'प्रभवः सर्वभावानां सतामिति विनिश्चयः' (मा.उ.१.१२) इति पूर्ववाक्ये पदार्थमात्रत्वानुक्तिप्रसङ्गाच्च । 'निवर्तेत न संशयः' इति विपर्यये पर्यवसानलब्धानिवर्त्त्यत्वाविरुद्धार्थस्यैवेह वक्तव्यत्वेन सच्छब्दस्यान्यार्थपरत्वाश्रयणायोगाच्च । 'अद्वैतः सर्वभावानाम्'(मा.उ.२.२) इत्यादिश्रुतेरपि 'सर्वपदार्थानां मध्ये ईश्वरः प्रतिद्वन्द्वरहितः' इत्यर्थपरत्वेन तद्विरोध शङ्काऽनवकाशाच्च ॥

'इदं द्वैतं, मायामात्रम्= ईश्वरेच्छाधीनम्' इति कृत्वा, अद्वैतम्= अप्रतिद्वन्द्वीत्येतदवास्तवं किन्न स्यादित्यत आह 'परमार्थत'इति । 'यवागुमात्रमेतस्य जीवनम्' इत्यादौ 'मात्र'शब्दस्याधीनत्वार्थकत्व दर्शनात् । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति भारतवचनाच्च । 'मायामात्रम्' इत्यस्येच्छाधीनत्वमात्रलाभेऽपि पूर्ववाक्ये 'इच्छामात्रं प्रभोः सृष्टिः' इति श्रवणात् अत्रापि तदुत्तरवाक्ये 'प्रभोः'इत्यस्य व्यवधानेऽपि आकाङ्क्षाबलादिच्छामात्रार्थकेन 'माया'शब्देनान्वयात् ईश्वरेच्छाधीनत्वलाभ इति न किञ्चिदनुपपन्नम् । अन्यथा श्लोकद्वये'यदि'शब्दद्वयं द्वितीयश्लोके 'यदि'शब्दमहिमलब्धेन यदि केनचित् कल्पितः

(१) भागवततात्पर्यनिर्णयोदाहृत(भाग-ता-११-८) मायावैभव वाक्यम् ॥

स्यादिति अवश्याध्याहर्तव्येन 'स्यात्' इत्यनेन सहितं श्रूयमाणं लिङ्गत्रयं च व्यर्थं स्यात् । अतस्तर्कशरीरप्रदर्शनपरमेव श्लोकद्वयं, प्रकारान्तरासम्भवात् ॥

यद्वा द्वैतप्रपञ्चस्य स्वातन्त्र्यशङ्कायामाह'मायामात्रम्'इति । नचैवं पूर्वार्धव्याख्यानम् 'अद्वैतं परमार्थतः' इत्येतद्विरुद्धमिति वाच्यम् । 'परमार्थतः' इति ल्यब्लोपनिमित्ता पञ्चमी परमार्थमुत्तमार्थमपेक्ष्येति । तथाचोत्तमार्थमीश्वरमपेक्ष्य अद्वैतमिति तदर्थ इति तद्विरोधाप्रसरात् ॥

द्वितीयश्लोकश्चैवं मायावादिमतनिरासपरो द्रष्टव्यः । तथा हि । 'विकल्प्यते' इति विविधप्रकारेण ज्ञाप्यत इति कर्मव्युत्पत्त्या 'विकल्पो' भेदप्रपञ्च उच्यते । सः 'केनचित्' विशिष्य निर्वचनीयेन 'माया'शब्दितपराभिमताज्ञानेन यदि कल्पितः स्यात्= स्वातन्त्र्याभावाधिकरण एव यद्यारोपितः स्यात्, तर्हि विनिवर्तेत, अद्वैतज्ञानात्, नच विनिवर्तते, तस्मात्, केनचित् न कल्पितः ॥

ननु यदि न केन विकल्पितः तदा कल्पितोऽयमित्यनादिप्रवाहः कुत इत्यत आह 'उपदेशादयं वाद' इति । अनादिमायावादिमतमाश्रित्य पूर्वपूर्वीय तथाविधोपदेशात्, अयं प्रवाद न प्रमाणमूल इत्यर्थः । ननु तेषामपि सः उपदेशः किं मूल इत्यत आह 'अज्ञाते द्वैतं न विद्यते' इति= वेदतात्पर्ये अज्ञाते, द्वैतं न विद्यते= द्वैतप्रपञ्चो न विद्यत इति बुध्यत इति । तथा च वेदतात्पर्याज्ञानप्रयुक्ताद्वैतप्रपञ्चभावभ्रमात् स उपदेश इति । तस्मात् श्लोकद्वयमपीदं न प्रपञ्चमिथ्यात्वे मानम् । नचाभेदस्यौपाधिकत्वे मानमिति ॥

एतेन–'अनादिमायया सुप्तो यदाजीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा' (मा-उ-२-८)

इत्येतत् श्लोकद्वयात् पूर्वश्लोको व्याख्यातः । अवस्थात्रयरहितं देहतोऽप्युत्पत्तिरहितं परमात्मानम्, अद्वैतं= प्रतिद्वन्द्वरहितं, श्रवणादिसम्पत्त्यनन्तरं जीवो, यदा बुध्यते= निर्विचिकित्सितं साक्षात्कुरुते तदा, अनादिमायया सुप्तः प्रबुध्यते= प्रकृतिबन्धरहितो भवति इति योजनायाः स्फुटत्वादिति ॥

एतेन –

**'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः'**

इत्यस्य प्रपञ्चो= भेदप्रपञ्चो, यदि विद्येत= यदि सन् स्यात्, 'विद सत्तायाम्' इति धातुपाठस्मृतेः, तर्हि संशयो= भ्रमबन्ध इति यावत्, न निवर्तेत इति प्रसङ्गाकारप्रदर्शनपरत्वम् । विपर्ययपर्यवसानस्तु –

**'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।**
**अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा'**

इति पूर्वमन्त्रोक्तः 'अनिद्रास्वप्न'शब्दौ अविद्या-तत्कार्यनिवृत्तिपरौ । स्वमतमुपसंहरति 'मायामात्रमिदं द्वैतमद्वैतं परामार्थतः' इति । नच मायामात्रम्= इच्छामात्रमित्यर्थः । तथासति 'निवर्तेत न संशयः' इत्येतदनानुगुण्यात् । नापि 'अद्वैतः परमार्थतः' ल्यब्लोपेन ईश्वरमपेक्ष्येत्यर्थः । तथासति 'अद्वैतं परमार्थो हि द्वैतिनो तथ्यदर्शिनः'[१] इत्युपसंहारेण, 'ओम् इत्येतदक्षरम् । इदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति । सर्वं ओङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव । सर्वं ह्येतद् ब्रह्म अयमात्मा ब्रह्म'(मा-उ१-२) इत्युपक्रमेण 'सोऽयमात्मा चतुष्पात्' इत्यादिना अध्यारोपितत्वेन ज्ञापयितुमवस्थात्रयमनूद्य 'तस्याऽयमादेशो नान्तःप्रज्ञम्'(मा-उ-२-१) इत्यादिप्रतिषिध्य 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत' इत्यभ्यासेन(मा-उ-४-१) 'संविशत्यात्मनाऽऽत्मानं य एवं वेद' इति(मा-उ-४-१)फलेन, 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतम्' इत्युपपत्त्याच विरोधात् ।

**'विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते'**

इति वा विपर्ययपर्यवसानं द्रष्टव्यम् । तथाहि । केनचित् ज्ञानेन कर्मणा वा विकल्पो

---

(१) 'द्वैतिनो तथ्यदर्शिनः' इति पाठः इदानीन्तनपाठे नोपलभ्यते ॥

विनिवर्तेत= नष्टमर्हः । 'अर्हेकृत्यतृचाश्च' (पा-सू-३-३-१६९(२८२२) इत्यर्हार्थे लिङ् । यदि कल्पितो भवति तदैव विनिवर्तितुं योग्यो नान्यथा । अतः कल्पित इति ।।

नचात्र 'यदि'शब्दप्रयोगात् यदि कल्पितः स्यात् निवर्तेत नतु निवर्तते । अतो न कल्पित इत्येव तत्कार्यं 'यद्वृत्तयोगः प्राथम्यम्' इत्याद्युद्देश्यलक्षणमिति, यदियोगात् कल्पितत्वस्यैवापादकत्वौचित्यादिति वाच्यम् । आपादकत्वस्य 'यदि'शब्दाव्यापकत्वात् । यदि वेदाः प्रमाणमिति अनारोपितेऽपि 'यदि'शब्ददर्शनात् विपर्ययपर्यवसानस्य 'अद्वैतं बुध्यते तदा' इति पूर्वोक्तबाधितत्वाच्चेति निरस्तम् ।।

प्रपञ्चो यदि सन्, स्यात्, संशयो न निवर्तेतेति प्रसङ्गशरीराङ्गीकारे वैयधिकरण्यात् । प्रपञ्चगतसत्त्वस्य संशयगतनिवृत्तिप्रतियोगित्वानापादकत्वात् । तत्सत्त्वेऽपि विशेषदर्शनादिना निवृत्त्युपपत्तेः 'संशय'शब्दस्य बन्धपरत्वाङ्गीकारे मुख्यार्थत्यागापत्तेर्लक्षणापत्तेश्च ।।

एतेन संशयशब्दवत् प्रपञ्चशब्दोऽपि बन्ध पर एव । अत आपाद्यापादकयोर्वैयधिकरण्यमिति निरस्तम् ।

'संशय'शब्दस्यैव बन्धपरत्वे मानाभावात्,अतोऽन्यतर वैयर्थ्यप्रसङ्गाच्च । प्रपञ्चो= बन्धो, यदि सन् स्यात्, ब्रह्मवत् न निवर्तेत' इत्येतावतैव तर्कशरीरपूर्तेः ब्रह्मैव संसरति ब्रह्मैवमुच्यत इति पक्षे, सद्रूपे ब्रह्मण्येव 'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः' इति संसारत्वेन पराभ्युपगतबन्धापरनामकाविद्यानिवृत्तेः सत्त्वेन व्यभिचारापत्तेश्च ।।

'अद्वैतं परमार्थतः' इत्युक्ताद्वैतपरमार्थोपपत्तिरूपं यत् 'मायामात्रमिदं द्वैतम्' इति 'द्वैत'शब्दितभेदप्रपञ्चस्य मायामात्रत्वं तत्प्रतिपादकवाक्यानुसारेणापि 'प्रपञ्चो यदि विद्येत' इति प्रसङ्गशरीरप्रदर्शकवाक्यगत'प्रसङ्ग'शब्दस्य 'द्वैत'शब्दितभेदप्रपञ्चपरताया एवाऽऽश्रयितुमुचितत्वाच्च । 'अद्वैतं परमार्थो हि द्वैतिनो तथ्यदर्शनम्' इत्युपसंहारानुरोधेनाऽपि 'प्रपञ्चो यदि विद्येत' इति 'प्रपञ्च'शब्दस्य द्वैतपरताया एवौचित्याच्च ।।

एवं सति 'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्' इत्यादि 'सर्वं ह्येतद् ब्रह्म' 'अयमात्मा ब्रह्म' इत्युपक्रमश्चानुकूलितः स्यात् । अन्यथा परस्यैव तद्विरोधापत्तिः ।।

एतेनैव–

'विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते '

इति श्लोकेन वा पूर्वश्लोकोक्तप्रसङ्गस्य विपर्ययपर्यवसानं प्रदर्श्यत इति द्रष्टव्यम् । तथाहि । केनचित् ज्ञानेन कर्मणा वा विकल्प्यत इति विकल्पो=बन्धः, विनिवर्तेत=नष्टुमर्हः । 'अर्हे-कृत्यतृचश्चेत्यर्हार्थे लिङ्' । यदि कल्पितो भवति तदैव निवर्तितुं योग्यो नान्यथा अतः कल्पित इति निरस्तम् ॥

'यदि'शब्दाद्यदि विकल्प्यते= प्रत्यक्षादिना ज्ञायत इति विकल्पो, भेदप्रपञ्चः, केनचित् पराभिमताप्रामाणिकानिर्वचनीयाज्ञानेन, कल्पितः= आरोपितः, स्यात् तर्हि शुक्ति-रूप्यादिवत् निवर्त्तेत, नतु निवर्तते अतो न कल्पित इति यथाश्रुतयोजनायाः बाधकं विना त्यागायोगात् । 'यदि'शब्दयोगात् कल्पितत्वस्यैवापादकत्वाश्रयणौचित्याच्च आपादकत्वस्य 'यदि'शब्दव्यापकत्वमौत्सर्गिकमिति बाधकं विना कल्पितत्वस्यापादकत्वात्यागाच्च॥

एतेनैव यदि वेदाः प्रमाणमित्यनारोपितेऽपि 'यदि' शब्दो दृश्यत इति निरस्तम् ॥

यत्तु 'मायामात्रम्'इत्यस्य इच्छामात्रमित्यर्थो न सम्भवति, निवर्तेत संशय इत्येत-दनानुगुण्यादिति । तन्न । 'निवर्तेत न संशय'इत्यस्योक्तरीत्या परोक्तार्थपरत्वानुपपत्तेः ॥

यदपि(१)'अद्वैतं परमार्थतः'इत्यत्र 'परमार्थतः'इति ल्यब्लोपे पञ्चमी, तेन परम-श्चासावर्थश्च परमार्थः । सर्वोत्तमार्थ ईश्वर इति, तमपेक्ष्य अद्वैतमित्यर्थ इति' अर्थवर्णन-मयुक्तम् । 'अद्वैतं परमार्थोहि द्वैतिनो तथ्यदर्शनम्' इत्युपसंहारविरोधात् । तथोक्तरीत्योप-क्रमविरोधादभ्यासविरोधादुपपत्तिविरोधाच्च । अद्वैतरीत्या नानार्थवर्णनमुपपद्यत इति । तदपि न ॥

अतथ्यदर्शी ब्रह्मातिरिक्तं सर्वम्, अतथ्यं= मिथ्येति, यः, पश्यति= जानीते सोऽतथ्य-दर्शी, ततो भिन्नो द्वैतीत्यनेनोच्यते तस्य तस्य मते परमार्थो अद्वैतं हीति, अतथ्यदर्शिनो=

---

(१) यद्यपि इति ताळपत्रस्थ पाठः ॥

मायावादिनोऽतथ्यदर्शित्वेन, प्रतिपादनद्वारा निन्दां स्पृशेरधित्वाद्वैतमित्यनेन तदन्यत्व-प्रतिपादनमुखेन तदन्यस्य सत्यवादित्वं सूचयित्वा तन्मते 'परमार्थो हि' इति 'हि'शब्देनोत्तमार्थः । सङ्कोचाभावात् सर्वोत्तम ईश्वररूपोऽर्थो अद्वैतं नानेक इत्यर्थे प्रमाणप्रसिद्धत्वं प्रतिपादयतो 'अद्वैतं परमार्थो हि द्वैतिनो तथ्यदर्शिनः' इत्युपसंहारस्य 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति ल्यब्लोपे पञ्चमीत्याद्यस्मत्कृतव्याख्यानाविरोधित्वात् । अन्यथा 'द्वैत'शब्दितभेदमात्रनिरासपरत्वे 'अद्वैतं परमार्थो हि' इत्यस्य 'अजमनिद्रमस्वप्नमद्वैतम्' (मा-उ-२-८)इति पूर्ववाक्ये मायासम्बन्धनिरासहेतुज्ञानविषयभूताद्वैतस्य जीवात् व्यावर्तकं शरीरतोत्पत्तिराहित्यरूपम् अजत्वमनिद्रत्वमस्वप्नत्वं च नोच्येत । 'ओमित्येदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भविष्यत् सर्वमोङ्कार एव यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव । सर्वं ह्येतद् ब्रह्म । अयमात्मा ब्रह्म' इत्युपक्रमेऽपि 'ओमित्येतदक्षरमिदं सर्वम्' इत्याधार-आधेयभावप्रतिपादकेनारम्भात् 'यच्चान्यत् त्रिकालातीतम्' इति त्रिकालातीतस्य वस्तुतः कस्यचित्, 'यच्चान्यत्'इत्यन्यत्वेन मध्ये परामर्शात् 'सर्वं ह्येत् ब्रह्मेति' 'अयमात्मा ब्रह्म' इत्येनन जीव-ब्रह्मणोरिवाभेदसम्भवेन बाधायां सामानाधिकरण्यस्यैव वक्तव्यत्वाच्च ॥

भेदमात्रनिरासपरत्वाभावेनोपक्रमस्याप्यस्मदुक्तपूर्ववाक्यार्थाविरोधित्वाच्च । 'सोऽयमात्मा चतुष्पात्'(मा-उ-१-३) इत्यादिना अध्यारोपितत्वेन ज्ञापयितुमवस्थात्रयमनूद्य 'तस्याऽयमादेशो नान्तः प्रज्ञम्' इत्यादिना प्रसिद्ध्या 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत'(मा-उ१-४-) इत्यभ्यासस्यापि नाभेदमात्रनिरासकत्वमभ्युपगमार्हम् । तथात्वे हि 'न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनम्' इति जीवासाधारणधर्मनिषेधपूर्वकम् 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत' इति अमात्रत्व- तुरीयत्व- अव्यवहार्यत्व- प्रपञ्चोपशमत्व-शिवत्वरूपजीवव्यावृत्तधर्मपुरस्कारेणाद्वैतत्वप्रतिपादनायोगात् । 'धूमोऽस्ती'तिवाक्यस्य वह्नाविव जीवव्यावृत्तधर्मप्रतिपादकवाक्यस्य स्वव्यापारे जीवात् भेदेऽपि तात्पर्यस्य बाधकं विना त्यागायोगाच्च ॥

एतेन 'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते' 'स आत्मा स विज्ञेय' इत्येवं जातीयकान्यान्यपि श्रुतिवाक्यानि व्याख्यातानि ।

'एवं संविशत्यात्मानं य एवं वेद' इति फलविरोधोऽपि निरस्तः । 'आत्मानं संविशति' इति परमेश्वरस्य कर्मत्वेन जीवस्य तत्प्रवेशकर्तृत्वेन ततः प्रतीत्या तस्यापि भेदमात्रनिरास-परत्वासिद्धेरिति ॥

यद्वा तर्हि 'अद्वैतः सर्वभावानाम्' इति श्रुतमद्वैतं कथमुपपद्यत इत्यत आह-'अद्वैतं परमार्थतः' इति । ल्यब्लोपनिमित्ता पञ्चमी । परमं स्वतन्त्रमीश्वररूपमर्थमपेक्ष्य तदि-त्यर्थः । 'स्वतन्त्रं परमार्थाख्यम्' इति स्मृतेः । परिभाषायाश्च कार्यार्थत्वेन 'आण्णद्याः' (पा-सू-७-३२-११२(२६८) इत्यादाविव असतिबाधके 'कृत्रिमाकृत्रिमयोः कृत्रिमेकार्यसम्प्र-त्ययः'इतिन्यायेन पारिभाषिकस्यैव ग्राह्यत्वात् । यववराहाधिकरणन्यायेन(१) शास्त्रे शास्त्रीया-र्थस्यैव ग्राह्यत्वाच्च ॥

किञ्चास्ति स्वतन्त्रे अर्थेऽपि परमत्वम् । नच तात्त्विकेऽपि कॢप्तावयवशक्त्यैव काल्प-निकादुत्तमार्थत्वेनैव परामर्थशब्दसम्भवे समुदायशक्तिकल्पना युक्त । अत एव प्रोक्षण्यधिकरणे(२) 'प्रोक्षणीय'शब्दस्य जले योग एव नतु रूढिरित्युक्तम् ॥

उक्तं च वार्तिके-

**'भवेतां यदि वृक्षस्य वाजिकर्णौ कथञ्चन ।**
**अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत्'** इति ॥

स्वतन्त्र एव च परमत्वं मुख्यम् । नच मुख्ये सम्भवत्यमुख्यग्रहणं युज्यते । 'परमार्थ'-शब्दस्य तात्त्विके योगरूढ्यङ्गीकारेऽपि मानान्तरैः पूर्वोत्तरवाक्यैश्चाविरोधाय योगेन स्वतन्त्र -ग्रहणमेव युक्तम् । तथा च 'सर्वभावानां' मध्ये अयमद्वितीय इत्युक्ते तस्य स्वातन्त्र्यमेव सिद्ध्यति नतु सर्वासत्त्वमित्यर्थः ॥

केचित्तु 'अविनाशी परमार्थः स्यात्' इतिवचनात् 'अद्वैतं परमार्थत' इत्यस्याद्वितीयं ब्रह्माविनाशी इत्यर्थ' इत्याहुः ॥

एवं भेदस्योपाधिकृतत्वं निरस्य कल्पितत्वं निरस्यति 'विकल्प' इति । तर्कत्वान्न च

(१) जै-सू-१-३-८'तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्' इत्यत्रोक्तन्यायेनेत्यर्थः ॥

(२) जै-सू-१-४-११'प्रोक्षणीष्वर्थसंयोगात्' इति प्रोक्षण्यधिकरणेत्यर्थः ॥

निवर्तते, तस्मात् न कल्पित इति विपर्यये पर्यवसातव्यम् । 'अयं वादो ज्ञाते द्वैतं न विद्यते' इत्यस्य तत्वे अज्ञाते तु द्वैतं न विद्यत इत्यर्थः । श्लोकयोरतर्करूपत्वेच 'यदि'-शब्दद्वयं लिङ्प्रत्ययचतुष्टयं च व्यर्थं स्यात् ॥ तदुक्तम्–

'इत्यत्र यदि शब्दौ च निवर्तेतेति च द्वयम् ।
विश्वस्य सत्यतामाहुर्विद्येतोत्पत्तिमेव च'इति ।

स्पष्टीकृतश्चायमर्थः श्रुत्यन्तरे ॥

सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नशमाप्नुयात् ।
नच नाशं प्रयात्येष नचासौ भ्रान्तिकल्पितः ॥
कल्पितश्चेन्निवर्तेत नचासौ विनिवर्तते ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्' इति ॥[१]

यत्त्वत्र परैर्विपरीतश्रुतय उन्नीतास्ताः पञ्चरात्रादिभेदागमपक्षपातादुन्नीता नतु पाठक - प्रसिद्धाः । सर्वा(नचा) वेदार्थोपबृंहकस्मृतीतिहासपुराणेषु या श्रुतित्वेन परिगृहीता इति न ता उपन्यस्य व्याख्यायन्त इति स्वग्रन्थे उदाहृतश्रुतयो न व्याख्याता इति । तादृश-श्रुतीरुदाहृतवतां महात्मनां निन्दनं तत्तु स्वाज्ञानविजृम्भितम् । 'अम्बुवदग्रहणात्' (ब्र-सू-३-२-१९) इति सूत्रे 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्न' इत्यादि श्रुतीरुदाहरतां स्वाचार्याणामेव निन्दने तुल्यन्यायेन पर्यवस्यतीति किं बहुनोक्तेनेत्युक्तमस्माभिरधस्तात् ॥

केचितु एकस्मिन्नेवात्मनि देहभेदेन देवमानुष्यत्वादिप्रपञ्चमिथ्यात्वपरेऽयं श्रुतिरित्याहुः ॥

॥ इति 'मायामात्रमिदं द्वैतम्' इति श्रुत्यर्थः ॥

## ॥ अथ 'अनन्तम्' इति श्रुत्यर्थः ॥

यत्तु 'सत्यं ज्ञानमनन्तम्' इति 'अनन्त'शब्दः प्रपञ्चमिथ्यात्वे मानमिति तत्त्वप्रदी-पिकोक्तम् । तन्न । 'अन्त'शब्दो हि परिच्छेदे व्युत्पन्नः । नतु परिच्छिन्ने । तथाचा-भेदस्यापरिच्छेदरूपत्वेऽपि यथा देशाद्यपरिच्छेदाभिप्रायेणाकाशोऽनन्त इत्युक्ते देशादे-

---

(१) विष्णुतत्त्वनिर्णयोदाहृत परमश्रुतिः ॥

राकाशतुल्यतया सत्त्वे सत्येव तदपरिच्छेदमात्रं सिद्ध्यति, नतु देशादेर्मिथ्यात्वं, तथेहापि घटादेर्वस्तुनो जीवचैतन्यवत् ब्रह्मतुल्यतया सत्त्वे सत्येव(न) विरुद्धांशत्यागेन ब्रह्मण्यभेद-रूपं वस्त्वपरिच्छेदमात्रं सिध्येत् । नतु घटादिरूपस्य वस्तुनो मिथ्यात्वम् । जीवस्वरूपं सत्यं वियदादिप्रपञ्चस्तु मिथ्येति विभागस्त्वद्याप्यसिद्धः । वस्तुतः अभेदो नापरिच्छेदः । परिच्छिन्नाद्भेदाभावे अपरिच्छिन्नत्वायोगात् । कालापरिच्छिन्नेऽपि परमाण्वादौ देशपरिच्छेदेन परिच्छिन्नत्वबुद्धिवत् उभयापरिच्छिन्ने गगनादौ भेदमात्रेण परिच्छिन्नत्वबुद्धेरभावाच्च । 'अनन्त'पदेनैव परिच्छिन्नाद्व्यावृत्तेः परेणैवोक्तत्वाच्च । भिन्न इत्यर्थे परिच्छिन्न इत्य-प्रयोगाच्च । तस्मात् देशकालगुणापरिच्छेद एव अनन्तशब्दार्थः ॥

॥ इति 'अनन्तमि'ति श्रुत्यर्थः ॥

## ॥ अथ इन्द्रो मायाभिरिति श्रुत्यर्थ विवरणम् ॥

**'इन्द्रो मायाभिः पुरुरूप'**(बृ-उ-४-५-१९) इत्यत्रापीश्वरस्य विचित्रशक्तिभिर्मत्स्याद्य-नेकरूपत्वमेवोच्यते । नत्वज्ञानेन घटादिरूपत्वम् । 'रूपं रूपं प्रतिरूपो बभूव' इति पूर्वोक्तानां जीवाख्यप्रतिबिम्बानि प्रतिबिम्बभूतभगवद्रूपाणामेव इह 'रूप'शब्देन प्रत्य-भिज्ञानात् । उत्तरत्र च **'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि च'** (बृ-उ-४-५-१९) इति 'हरि'शब्दवाच्यविष्णुरूपाणां बहुत्वोक्तेः । 'तदेतत् ब्रह्मापूर्वमनपरम्' (४-५-१९) इत्यादिना तेषां रूपाणां ब्रह्मत्वोक्तेः । चिन्मात्रस्यैव नानारूपप्रपञ्चाधिष्ठानत्वेन परमैश्वर्यवाचीन्द्रशब्दास्वारस्याच्च ॥

नच 'तदस्य रूपं प्रतिचक्षणाय' इति पूर्ववाक्यगतवर्जनार्थक'प्रतिचक्षण'शब्दानुरोधेन 'इन्द्र'शब्दस्यापि लक्षणया चिन्मात्रपरत्वमिति वाच्यम् । 'प्रतिचक्षण'शब्दस्य विचक्षण-शब्दवत् वर्जनादन्यार्थत्वेन तद्बलेनेन्द्रशब्दस्य लक्षणया चिन्मात्रपरत्वासिद्धेः । 'प्रतिचक्षणाय' प्रतिनियतकर्मनैपुण्यायेत्यर्थः । 'मायान्तु प्रकृतिं विद्यात्' इत्यस्यापि 'मायया सन्निरुद्धः' इति पूर्वोक्ता या माया सा प्रकृतिस्त्रिगुणात्मकं प्रधानमित्यर्थः । नतु या प्रकृतिर्जगदुपादानं सा माया, मिथ्येति पूर्वनिर्दिष्ट'माया'शब्दार्थस्य बुभुत्सितत्वात् प्राथम्येन मायाया एवोद्देश्यत्वाच्च । प्राथम्यस्योद्देश्यत्वे व्याप्यत्वस्यौत्सर्गिकत्वात् बाधकं विना तत्त्यागाऽ-

योगाच्च । 'प्रकृति'शब्दस्य श्रुतिषु प्रधाने प्रसिद्धत्वाच्च । 'तान्यज्ञस्य मायया सर्वानवयजामहे' इत्यादौ 'माया'शब्दस्य सत्येऽपि प्रयोगाच्च ॥

॥ इति इन्द्रो मायाभिरिति श्रुत्यर्थ विवरणम् ॥

## ॥ अथ अतोऽन्यदार्तमिति श्रुत्यर्थः ॥

यत्तु 'अतोऽन्यदार्तम्'(बृ-उ-५-५-१) इति वाक्यं विश्वमिथ्यात्वे मानमिति कौमुद्युक्तम् । तत्त्वतितुच्छम् । अत्रान्तर्यामिणः प्रकृतत्वाद् 'एतत्'शब्दस्य च प्रकृतपरत्वात् । 'अन्य'शब्दस्य च 'ब्राह्मणादन्यमानय' 'समानमितरच्छ्येनेन' इत्यादाविव प्रकृतसमानजातीयान्यपरत्वात् ब्रह्मणोऽन्यज्जीवजातम् 'आर्तं'= दुःखीति जीवब्रह्मभेदस्यैव तेनोक्तेः, नहि जीवादन्यस्यार्तिः सम्भवति । नच 'आर्त'शब्दस्येषत्सत्यार्थकत्वात् ईषत् सत्यत्वस्य च मिथ्यात्व एव पर्यवसानमिति वाच्यम् । 'आर्तो जिज्ञासुरर्थार्थी'(भ-गी-७-१६) इत्यादौ 'आर्ति'शब्दस्य दुःखिनिबहुलप्रयोगदर्शनेन रूढत्वेनायौगिकत्वात् । यौगिकत्वे अऋतमिति स्थिते गुणे अर्तमित्यापत्तेश्च । 'ऋतं सत्यं परं ब्रह्म' 'ऋतं पिबन्तौ सकृतस्य लोके' (कठ-उ-१-३-१) इत्यादौ 'ऋत'शब्दस्य सत्ये सुकृते च बहुलप्रयोगदर्शनेन रूढत्वात् धातुत्वे मानाभावात् । 'उपसर्गादृतिधातौ' पा-सू-६-१-९१(७४) इति वृद्धिविधायकसूत्रविषयत्वानुपपत्तेश्चेति । 'आर्ति'शब्दोऽपि दुःखे रूढ एव न यौगिकः । अतो न स दृष्टान्त इति ॥

॥ इति अतोऽन्यदार्तम् इति श्रुत्यर्थः ॥

## ॥ अथ जगदसत्त्ववाचिपुराणाद्यर्थः ॥

पुराणादिषु क्वचित् जगतोऽसत्त्वोक्तिरसाधुत्वात्, 'नासत्पुरुषमाश्रयेत्'इत्यादिवत् 'सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते'(भ-गी-१७-२६) इति

'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ नच तत्प्रेत्य नो इह'(भ-गी-१७-२८)

इति गीतोक्तेश्च । 'सच्छब्दः साधुवाचकः' इति विष्णुपुराणोक्तेश्च ॥ अस्वातन्त्र्याद्वा ॥

'सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे नचापरे ।
अस्वातन्त्र्यात्तदन्येषामसत्वं विद्धि भारत' इति भारतोक्तेः ॥

अन्यथा अत्यन्तासत्त्वापातात् । अवस्तुत्वोक्तिः अपारमार्थिकत्वोक्तिश्च परिणामित्वाद्विनाशित्वाच्च ।। यत्तु –

**कालान्तरेणाऽपि नान्यं संज्ञामुपैति वै ।**
**परिणामादिसद्भूतं** (सम्भूतां)**तद्वस्तु नृप तच्च किम् ।**
**अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते'**

इति विष्णुपुराणोक्तेः । मिथ्यात्वोक्तिः वृथात्वात् । 'मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति'(भ-गी-१८-५९) इत्यादिवत् सदोषत्वाद्वा । मिथ्योपपदात् 'कृञोऽभ्यासे (पा-सू-१-३-७१(२७४०) इति सूत्रे वृत्तौ 'पदं मिथ्या कारयते' इत्युदाहृत्य 'स्वरादि दुष्टमसकृदुच्चारयतीत्यर्थ' इत्युक्तत्वात्, न्यासे पदमञ्जर्यां च 'एतेन मिथ्या शब्दस्यार्थमाचष्ट' इत्युक्तत्वात् । अतात्विकत्वोक्तिस्तु विकारित्वात् । **'तद्वदेव स्थितं यत्तु तात्त्विकं तत् प्रचक्षते'** इति कौर्मोक्तेः । अविद्यमानत्वोक्तिस्तु जीवसम्बन्धित्वेनाविद्यमानत्वात् । **'अविद्यमानं जीवस्य प्रतिभाति तदीयत'** इति स्कान्दोक्तेः। मिथ्यात्वोक्तिरपि अनित्यत्वात् । **'मिथ्येति शास्त्रे यद्देवि जगतोऽनित्यतोच्यते'** इति पाद्मपुराणोक्तेः । स्वप्नादिसाम्योक्तिरपि अनित्यत्वादेव ।

**'अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः ।**
**स्वप्नादिसाम्यं जगतो नतु बोधनिवर्त्यता'**

इति वचनात् । मायामयत्वोक्तिस्तु प्राकृतत्वात् । 'मायां तु प्रकृतिं विद्यात्'इति श्रुतेः ।

**'त्रिगुणा प्रकृतिर्माया तज्जत्वाद्विश्वमीदृशम् ।**
**अनाद्यनन्तकालेषु मायेत्याहुर्विपश्चितः'**

इति स्मृतेश्च । अन्यथा 'स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता' इत्यादिश्रुतिभिः,'न मायेत्यवधार्यताम्' इत्यादिस्मृतिभिः,'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र-सू-२-२-१९) इत्यादि सूत्रैस्तत्रैव पूर्वोत्तरवाक्यैश्च विरोधः स्यात् ।।

।। इति जगदसत्त्वादिवाचिपुराणाद्यर्थः ।।

## ।। अथ 'कविर्मनीषी' इत्यादि श्रुत्यर्थः ।।

किञ्च विश्वमिथ्यात्वाङ्गीकारः –

'कविर्मनीषी परिभूः स्वयम्भूः याथातथ्यतोऽ-
र्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः'(ई-उ-८)
'यच्चिकेत सत्यमित्तन्न मोघम्'(ऋ-सं-१०-५५-६)
'विश्वं सत्यं मघवानायुवोरिदापश्च न प्रमिनन्ति व्रतं वाम्'

(ऋ-सं-२-२४-१२)

इत्यादितत्सत्यत्वाऽवेदकश्रुतिविरुद्धः। नच 'कविर्मनीषी'इति श्रुत्या न विश्वसत्यत्वसिद्धिः । तत्प्रापकशब्दाभावात् । यथातथाशब्दस्य सत्ये अप्रसिद्धेः । 'शाश्वतीभ्यः समाभ्यः' बहु-वत्सरेभ्योऽनन्तरं यथा पूर्वम्, अर्थान् जगत् व्यदधात्= असृजत् इति तदर्थप्रतीतेः । तस्य च 'धाता यथा पूर्वमकल्पयत्'(ऋ-सं-१०-१९०-३) इति श्रुत्यन्तरानुगुणत्वाच्चेति वाच्यम् । यथातथमिति पदार्थानतिवृत्तावव्ययीभावात् ष्यञि, 'याथातथ्य'शब्दनिष्पत्तेस्तत्समभि-व्याहारेण च विधीयमानार्थानां सत्यत्वलाभावश्यम्भावात् कवित्वमनीषित्वादिविशेषणविशिष्टस्य जगद्विधातुरीश्वरस्य तद्विधानानुकूलकृतेस्तदपरोक्षज्ञाननियतत्वेन तत्कृतेरिव तदपरोक्ष-ज्ञानस्य पदार्थानतिवृत्तिसम्बन्धावश्यम्भावेन प्रमितित्वस्य दुर्वारतया प्रमितेश्च पदार्थानतिवृत्तौ पदार्थसत्यत्वस्य दुर्वारत्वात् । नच, श्रुत्या नच जगत्सत्यत्वं प्रतिपादनीयं तत्सत्यत्वस्य प्रत्यक्षत एव सिद्धेरिति वाच्यम् । योग्येषु जगत् शब्दार्थान्तःपातिषु कतिपयेषु प्रत्यक्षतः सत्यत्वसिद्धावपि घटपटादिस्वर्गनरकादियोग्यायोग्यजगत् शब्दार्थमात्रे ततः तदसिद्धेः ।।

किञ्च कालत्रयाबाध्यत्वरूपस्य ज्ञानजन्यनिवृत्तिप्रतियोगित्वाभावरूपस्य वा सत्यत्वस्य प्रत्यक्षायोग्यतया तस्य श्रुत्यैवाऽवेदनमावश्यकम् । नच तस्यापि ग्राह्याभावाभावरूपग्राह्य-रूपतया प्रत्यक्षेणैव सिद्धेः न तदर्थं श्रुत्यपेक्षेति वाच्यम् । तथासति 'सुख्यहमस्मि दुःख्यहमस्मि' इत्यादिप्रत्यक्षेणाहमर्थशरीरप्रविष्टजीवचैतन्ये त्रिकालाबाध्यज्ञानानिवर्त्त्यरूप-सत्पदार्थभूत-ब्रह्मचैतन्याभेदं गृह्णतैव ब्रह्मणि तद्रूपसत्यत्वस्य जीवचैतन्ये तादृशब्रह्माभेदस्य च ग्रहणात् ज्ञानार्थं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतेः 'तत्त्वमसि'इत्यादि श्रुतेश्चोपासना-भावप्रसङ्गात् ।।

नच निर्विचिकित्स तज्ज्ञानार्थं तच्छ्रुत्युपासनेति वाच्यम् । विश्वसत्यत्वावेदकश्रुतेरपि निर्विचिकित्सविश्वसत्यार्थज्ञानार्थमेवोपासनेति साम्यात् । नच निष्कम्पप्रवृत्त्यन्यथानुपपत्त्या प्रत्यक्षतोऽपि निर्विचिकित्सज्ञानसिद्धेर्न तदर्थं श्रुत्यपेक्षेति वाच्यम् । तुल्यन्यायतयोक्तरीत्या प्रत्यक्षेणैव जीवब्रह्मभेदादिसिद्धेस्तदर्थं तत्त्वमस्यादिमहावाक्यानाम् अस्मन्मीमांसाऽनपेक्षापत्तेः ॥

एतेन 'द्वयोः प्रणयन्ति' इतिवाक्यं यथा चातुर्मास्यमध्यपर्वणोश्चोदकप्राप्तं प्रणयनान्तरमेव विधत्ते तथा 'कविर्मनीषी'इत्यादि श्रुतिरपि प्रत्यक्षाप्राप्तं सत्यत्वान्तरमेव मेयतो विधत्ते इति तद्वदिह वैयर्थ्याभावात् 'याथातथ्यतोऽर्थान् व्यदधात्'इत्यादेर्जगदुत्पत्तिविधायकत्वेनार्थवत्वादिति परास्तम् ॥

'सत्यं ज्ञानमनन्तं ब्रह्म'इत्यादेरपि परप्राप्तिसाधनज्ञानविषयसमर्पकतया अर्थवत्त्वेन तद्विषयभूत ब्रह्मसत्यत्वादिप्रतिपादनपरत्वाभावप्रसङ्गात् । निर्विचिकित्स तज्ज्ञानस्योक्तत्वेन प्रत्यक्षत एव प्राप्तेः । किञ्च 'अर्थान् व्यदधात्'इति वाक्येनैव जगद्विधिसिद्धेः 'याथातथ्यत' इत्यस्य वैयर्थ्य तादवस्थ्यम् ॥

यद्वा 'याथातथ्यतः' इत्यत्र 'यथा'शब्देनैव सादृश्यवाचिना विवक्षितार्थलाभात्, न यथातथाशब्दात् ष्यञ्, किन्तु 'अद्वैतं परमार्थो हि द्वैतिनो तथ्यदर्शिन' इत्यत्र वाक्येव अत्रापि 'तथ्यत'इति 'तथ्य'शब्दोऽन्य एवेति । एवं च(यथा-पा) 'धाता यथा पूर्वमकल्पयत्' इति श्रुत्यन्तरानुसारेण 'पूर्वकल्पनीयसदृशात् तथ्यतः ब्रह्मवत् परमार्थभूतान् वियदादिपदार्थान् व्यदधात्' इति तदर्थो लभ्यत इति । नचैवं 'याथा'इति दीर्घानुपपत्तिः । 'हारे त्वा शूद्रा'(छा-उ-४-२-३) इत्यत्रेव तदुपपत्तेः । तथाच जगत्सत्यत्वमेव तच्छ्रुतिपर्यायगोचर इति सिद्धम् ॥

एतेन 'यच्चिकेत सत्यमित्तन्नमोघम्' इति श्रुतिर्नजगत्सत्यत्वे मानम् । अत्र 'सत्य'शब्दस्य प्रयोजनवत्त्वपरत्वात् 'न मोघम्' इति वैयर्थ्यनिषेधानुरोधेन तथैव विज्ञातव्यत्वात् । 'मोघमन्नं विन्दते' इत्यादौ 'मोघ'शब्दस्य निष्फलदर्शनात् । नच 'न मोघम्' इत्यपि न मोघात्मकमित्येवार्थ इति वाच्यम् । 'अथ धीरा अमृतत्वं विजि(दि)त्वा

ध्रुवमध्रुवेष्विह न मोघयन्ते' इति संसारमोघताऽवेदकश्रुतिविरोधात् । नचास्यामेवश्रुतौ वैयर्थ्यमर्थो 'मोघ'शब्दस्येति वाच्यम् । भोगापवर्गेऽस्मिन् वैयर्थ्यानुपपत्तेः । अथवा यत्, इत्= इदम्, इदादेश आर्षः । सत्यं= पञ्चमहाभूतात्मकं, जगच्चिकेत तत्सफलभोगादिसम्भवादित्यर्थ इति निरस्तम् ॥

'सत्यं ज्ञानमनन्तं ब्रह्म' 'तत्सत्यं स आत्मा' इत्यादावप्यत्र 'सत्य'शब्दस्येव प्रयोजनवत्त्वपरतायाः सुवचत्वेनाबाध्यार्थकत्वानाश्रयणप्रसङ्गात् । 'प्रयोजन'शब्देन साध्यमात्रविवक्षायां ब्रह्मणोऽपि तृणकाष्ठादेरितिवत् साध्यसत्वेन प्रयोजनत्वसम्भवात् । स्वेष्टत्वे सति स्वसाध्यमिह प्रयोजनं विवक्षितमिति चेत् । न । तृणकाष्ठादिजडस्येच्छाभावेनोक्तप्रयोजनवत्त्वस्य बाधितत्वात् प्रकृते 'सत्य'शब्दस्य तत्परत्वानुपपत्तेः । जीवचैतन्यस्य तादृशप्रयोजनवत्त्वेन 'सत्य'शब्दस्य तत्परत्वाङ्गीकारे च 'यच्चिकेत तत्सत्यम्' इति सर्वसम्बन्धितया अवगतप्रयोजनवत्त्वस्य जीवचैतन्ये एव सङ्कोचापत्तेः । 'तन्न मोघम्' इत्यनेनैव निष्प्रयोजनत्वशङ्कावारणेन 'सत्य'शब्दस्य प्रयोजनवत्त्वपरताया अवक्तव्यत्वाच्चान्यतरवैयर्थ्यापत्तेः ॥

किञ्च 'सत्य'शब्दस्य अबाध्यार्थे रूढत्वेन बाधकं विना न तत्परता त्यागार्हा । नच तस्य प्रयोजनवत्त्वेऽपि रूढौ मानमस्ति । अन्यत्र तत्प्रयोगस्य कथञ्चित् उपपादनीयत्वात् 'अन्याय्यश्चानेकार्थत्वमि'तिन्यायात् । अपि चेश्वरज्ञानवत् तदिच्छाया अपि सङ्कोचकाभावेन सर्वविषयत्वेन तदिच्छाविषयत्वे सति तत्साध्यत्वरूपप्रयोजनवत्वस्येश्वरजन्ये प्रपञ्चमात्रे, असत्वेन प्रत्युत 'सत्यं ज्ञानम्' इत्यादिब्रह्मपरवाक्य एव 'सत्य'शब्दस्य तादृशप्रयोजनवत्त्वपरत्वाङ्गीकारप्रसङ्गः । प्रकृते च तस्य तत्परत्वासम्भवेन अबाध्यर्थकत्वप्रसङ्ग इति सुवचम् ॥

एतेनैव सत्यम्= पञ्चमहाभूतात्मकं, यत्, इदं चिकेत तन्न मोघम्, सप्रयोजनमिति परकीयं व्याख्यानान्तरमप्यपास्तम् । बाधकं विना 'सत्य'शब्दरूढार्थस्याबाध्यत्वस्य त्यागानर्हत्वात् । अन्यथा घटमानयेत्यादावपि एकाक्षरनिघण्टुपर्यालोचनया अन्यार्थपरत्वमङ्गीकृत्य रूढसिद्धघटरूपार्थत्यागप्रसङ्गात् ॥

## ।। अथ 'विश्वं सत्यम्' इति श्रुत्यर्थविचारः ।।

यत्तु-

'विश्वं सत्यं मघवानायुवोरिदापश्च न प्रमिनन्ति व्रतां वाम्' इत्येतन्न विश्वसत्यत्वे मानम् । हे मघवानौ= इन्द्रौ, इदं वा विश्वं व्रतं= भवदर्थं, सर्वं कर्म, सत्यं= सफलं, युवयोर्वृतं आपश्च, नच । 'न'शब्दोऽप्यर्थः आपो देव्योऽपि, प्रमिनन्ति= जानन्ति सफलत्वेनेत्यर्थः, प्रमिनन्ति आश्चरन्तीत्यर्थो वा । यद्वा वयं प्रमितानाम्= अव्रतानीतिवदतीति निरस्तम् ।।

हे मघवानौ= इन्द्रौ, इत्= इदं विश्वम्, सर्वं वा वृतं= भवदर्थं वृतं, सत्यं फलम् आपश्च न प्रमिनन्ति इत्येकान्वयाङ्गीकारे 'युवयो'रित्यस्य केनाऽप्यन्वयाभावेन अध्ययनविध्यापादितफलवदर्थावबोधानुत्पादकतयाऽदृष्टार्थत्वने हुंफडितिशब्दवत् केवलादृष्टार्थत्वापत्तेः। अर्थावबोधरूपदृष्टफलासम्भवे एव केवलादृष्टार्थत्वस्य आश्रयितुमुचितत्वात् । 'वृत'शब्दस्य आवृत्तिमङ्गीकृत्या परोक्तरीत्या दृष्टार्थत्वायाऽनेकान्वयादयुक्तत्वञ्च ।।

हे मघवानौ, युवयोः सम्बन्धि, इदं= विश्वं सङ्कोचकाभावात् प्रत्यक्षादिसिद्धं सर्वं, सत्यं= ब्रह्मवदबाध्यं, अत एव= तादृशविश्वान्तर्गतत्वादेव, वां वृतं= भवदर्थं, व्रतं= कर्मविशेषं आपश्च न= अबभिमानिन्यो देवता अपि, प्रमिनन्ति= प्रमित्या विषयीकुर्वते इति 'सत्य'शब्दस्य रूढ्या प्राप्तमर्थमत्यजन्नेवानेकान्वयस्य(१) 'वृत'शब्दावृत्तिं च विना सम्भवेन 'विश्वं सत्यम्' इति श्रुतेर्ब्रह्मसत्यत्वे 'सत्यं ज्ञानमनन्तम्' इत्यादिश्रुतिरेव जगत्सत्यत्वे प्रमाणभावस्य निष्प्रत्यूहत्वात् । नचैवं योजनासम्भवे 'सत्य'शब्दस्याबाध्यत्वरूपमुख्यार्थत्यागो युज्यते, न वा व्रतशब्दावृत्तिरङ्गीकारार्हेति ।।

।। इति 'विश्वं सत्यम्' इति श्रुत्यर्थविचारः ।।
।। इति 'कविर्मनीषी' इत्यादिश्रुत्यर्थः ।।

---

(१) प्राप्तमर्थमत्यञ्चैवानेकान्वयस्य इति ताळपत्रस्थ पाठः ।।

## ।। अथ भगवद्गीतार्थविचारः ।।

अपि च जगन्मिथ्यात्वाङ्गीकारे,

> 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
> अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ।।
> एतां दृष्टिमवष्टभ्य नष्टात्मनोऽल्पबुद्धयः ।
> प्रभवन्त्युग्रकर्माणः क्षयाय जगतोहिता' (भ-गी-१६(८,९)

इति भगवद्वचनेन निन्दितत्वादपि न युक्तः । नच 'असत्यम्' इत्यस्य [१]न सत्यमसत्यमिति नार्थः, किन्तु न विद्यते सत्यं यस्मिन् जगत् इति तदसत्यमित्यर्थ इति वाच्यम् । तथासति 'अनीश्वरम्' इत्यनेन पौनरुक्त्यापत्तेः । बहुव्रीहेर्जघन्यत्वेन नञ्तत्पुरुषाश्रयणस्यैवोचितत्वाच्च ।।

'अनीश्वरम्' इत्यत्र तु प्रकारान्तरासम्भवेन जघन्यत्वेऽपि बहुव्रीहेरनन्यगत्यैवाश्रयणादिति । तस्मात् 'एकमेवाद्वितीयम्' इत्यादिश्रुतीनां ब्रह्मव्यतिरिक्तद्वितीयमिथ्यात्वपरत्वायोगात् जीव-ब्रह्मसाधारणधर्मत्वेन श्रुतिप्रतिपन्नानां ब्रह्मातिरिक्तद्वितीयत्वेन मिथ्यात्वासिद्धेः, प्रत्युत'यच्चिकेत सत्यम्' इत्यादिश्रुत्येश्वरज्ञानविषयकोटिनिविष्टतया तेषां सत्यत्वस्यैव सिद्धेः 'चिती संज्ञाने' इति धातुपाठस्मृतेः तत्तदसाधारणधर्माऽवेदकश्रुतीनां धूमोऽस्तीति व्यापकवह्निसम्भव(सद्भाव-पा)परवाक्यस्येव व्यापकतत्तद्व्यावृत्तौ तात्पर्यावश्यम्भावात्तदवश्यम्भावाभावेऽपि तत्परश्रुतिप्रतिपन्नजीवब्रह्मसाधारणसत्ताभूतधर्मैस्तद्भेदस्य अनुमातुं शक्यत्वेन तत्परस्परभेदसिध्यवैकल्याच्च । तत्प्रयुक्तास्वातन्त्र्यस्य कदाप्यनपायात् संसारदशायामिव मुक्तिदशायामपि जीवात्मा परमेश्वराधीन एवेति सर्वमवदातम् ।।

।। इति भगवद्गीतार्थविचारः ।।

* * * * *

(१) 'न सत्यमसत्यमसत्यमिति' इति ताळपत्रस्थपाठः ।।

## ।। अथ 'विश्वं सत्यम्' इति श्रुत्यर्थविचारः ।।

यत्तु-

'विश्वं सत्यं मघवानायुवोरिदापश्च न प्रमिनन्ति व्रतां वाम्' इत्येतन्न विश्वसत्यत्वे मानम् । हे मघवानौ= इन्द्रौ, इदं वा विश्वं व्रतं= भवदर्थं, सर्वं कर्म, सत्यं= सफलं, युवयोर्वृतं आपश्च, नच । 'न'शब्दोऽप्यर्थः आपो देव्योऽपि, प्रमिनन्ति= जानन्ति सफलत्वेनेत्यर्थः, प्रमिनन्ति आश्वरन्तीत्यर्थो वा । यद्वा वयं प्रमितानाम्= अव्रतानीतिवदतीति निरस्तम् ।।

हे मघवानौ= इन्द्रौ, इत्= इदं विश्वम्, सर्वं वा वृतं= भवदर्थं वृतं, सत्यं फलम् आपश्च न प्रमिनन्ति इत्येकान्वयाङ्गीकारे 'युवयो'रित्यस्य केनाऽप्यन्वयाभावेन अध्ययनविध्यापादितफलवदर्थावबोधानुत्पादकतयाऽदृष्टार्थत्वने हुंफडितिशब्दवत् केवलादृष्टार्थत्वापत्तेः। अर्थावबोधरूपदृष्टफलासम्भवे एव केवलादृष्टार्थत्वस्य आश्रयितुमुचितत्वात् । 'वृत'शब्दस्य आवृत्तिमङ्गीकृत्या परोक्तरीत्या दृष्टार्थत्वायाऽनेकान्वयादयुक्तत्वञ्च ।।

हे मघवानौ, युवयोः सम्बन्धि, इदं= विश्वं सङ्कोचकाभावात् प्रत्यक्षादिसिद्धं सर्वं, सत्यं= ब्रह्मवदबाध्यं, अत एव= तादृशविश्वान्तर्गतत्वादेव, वां वृतं= भवदर्थं, व्रतं= कर्मविशेषं आपश्च न= अबभिमानिन्यो देवता अपि, प्रमिनन्ति= प्रमित्या विषयीकुर्वते इति 'सत्य'शब्दस्य रूढ्या प्राप्तमर्थमत्यजन्नेवानेकान्वयस्य(१) 'वृत'शब्दावृत्तिं च विना सम्भवेन 'विश्वं सत्यम्' इति श्रुतेर्ब्रह्मसत्यत्वे 'सत्यं ज्ञानमनन्तम्' इत्यादिश्रुतिरेव जगत्सत्यत्वे प्रमाणभावस्य निष्प्रत्यूहत्वात् । नचैवं योजनासम्भवे 'सत्य'शब्दस्याबाध्यत्वरूपमुख्यार्थत्यागो युज्यते, न वा व्रतशब्दावृत्तिरङ्गीकारार्हेति ।।

।। इति 'विश्वं सत्यम्' इति श्रुत्यर्थविचारः ।।
।। इति 'कविर्मनीषी' इत्यादिश्रुत्यर्थः ।।

---

(१) प्राप्तमर्थमत्यश्चैवानेकान्वयस्य इति ताळपत्रस्थ पाठः ।।

## ।। अथ भगवद्गीतार्थविचारः ।।

अपि च जगन्मिथ्यात्वाङ्गीकारे,

'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ।।
एतां दृष्टिमवष्टभ्य नष्टात्मनोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोहिता' (भ-गी-१६(८,९)

इति भगवद्वचनेन निन्दितत्वादपि न युक्तः । नच 'असत्यम्' इत्यस्य [१]न सत्यमसत्यमिति नार्थः, किन्तु न विद्यते सत्यं यस्मिन् जगत् इति तदसत्यमित्यर्थ इति वाच्यम् । तथासति 'अनीश्वरम्' इत्यनेन पौनरुक्त्यापत्तेः । बहुव्रीहेर्जघन्यत्वेन नञ्तत्पुरुषाश्रयणस्यैवोचितत्वाच्च ।।

'अनीश्वरम्' इत्यत्र तु प्रकारान्तरासम्भवेन जघन्यत्वेऽपि बहुव्रीहेरनन्यगत्यैवाश्रयणादिति । तस्मात् 'एकमेवाद्वितीयम्' इत्यादिश्रुतीनां ब्रह्मव्यतिरिक्तद्वितीयमिथ्यात्वपरत्वायोगात् जीव-ब्रह्मसाधारणधर्मत्वेन श्रुतिप्रतिपन्नानां ब्रह्मातिरिक्तद्वितीयत्वेन मिथ्यात्वासिद्धेः, प्रत्युत'यश्चिकेत सत्यम्' इत्यादिश्रुत्येश्वरज्ञानविषयकोटिनिविष्टतया तेषां सत्यत्वस्यैव सिद्धेः 'चिती संज्ञाने' इति धातुपाठस्मृतेः तत्तदसाधारणधर्माऽवेदकश्रुतीनां धूमोऽस्तीति व्यापकवह्निसम्भव(सद्भाव-पा)परवाक्यस्येव व्यापकतत्तद्व्यावृत्तौ तात्पर्यावश्यम्भावात्तदवश्यम्भावाभावेऽपि तत्परश्रुतिप्रतिपन्नजीवब्रह्मसाधारणसत्ताभूतधर्मैस्तद्भेदस्य अनुमातुं शक्यत्वेन तत्परस्परभेदसिध्यवैकल्याच्च । तत्प्रयुक्तास्वातन्त्र्यस्य कदाप्यनपायात् संसारदशायामिव मुक्तिदशायामपि जीवात्मा परमेश्वराधीन एवेति सर्वमवदातम् ।।

।। इति भगवद्गीतार्थविचारः ।।

* * * * *

---

(१) 'न सत्यमसत्यमसत्यमिति' इति ताळपत्रस्थपाठः ।।

## ।। प्रथमपरिच्छेदोपसंहारः ।।

ये नित्यं पदवाक्यमानसरणीसंशीलनालङ्कृताः
तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।।
या चानेकविनेयषट्पदततेः सम्फुल्लमल्ली सदा
सैषा वाक् विजयीन्द्रसंयमिमणेर्ज्ञानार्थिभिः सेव्यताम् ।।१।।

वाणीपाणिविपञ्चिका विलसितं व्याकुर्वती वैरिणां
श्रेणीं कुण्ठितलोचनां विदधती नाणीयसा तेजसा ।
एणी पाणिविभूषित(षण)प्रणयिनी द्रोणीसुधायाः सदा
वाणी श्रीविजयीन्द्रसंयमिमणेः क्षोणीसुरैः सेव्यताम् ।।२।।

धर्मोज्जीवनमात्रलोलुपतया कर्णाटसिंहासने
स्थित्वाऽपि क्षितिरक्षणं विदधतः श्रीरङ्गरायस्य यः ।
प्राणो रायसनारसिंहसाचिवस्तेनार्थितस्तन्मुदे
अकार्षीत् श्रीविजयीन्द्रसंयमिमणिः श्रुत्यर्थसारं सुधीः ।।३।।

इति श्रीमत्परमहंसपारिव्राजकाचार्याणां पदवाक्यप्रमाणपारावारपारीण-
धुरीणानां श्रीमत्सुरेन्द्रपूज्यपादानां शिष्येण श्रीमद्विजयीन्द्रभिक्षुणा विरचिते
श्रुत्यर्थसारे जीवेश्वरभेदस्य पारमार्थिकत्वेन श्रौतत्वसमर्थनं नाम प्रथमः परिच्छेदः ।।

श्री नृसिंहायनमः ।। श्रीः ।। प्रथमपरिच्छेदं समाप्तम् ।।

* * * * *

## ।। अथ श्रुत्यर्थसारे द्वितीयःपरिच्छेदः प्रारभ्यते ।।

### ।। अथ जीवेश्वरभेदस्य आनुमानिकत्वसमर्थनं नाम द्वितीयः परिच्छेदः ।।

अपि च ईश्वरस्य जगत्कारणत्वादिहेतुभ्योऽपि जीवात् धर्मिसमसत्ताकभेदसिद्धेर्न तयोर्वास्तवाभेदो युक्तः । न चेश्वरे तदसिद्धिः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्या तत्र तत्सिद्धेः । नच 'विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति'(तै-उ-३-३) इति श्रुत्या जीवेऽपि जगत्कर्तृत्वाद्यावेदनात् साधारणेन तेन कथमीश्वरे जीवात् भेदसिद्धिरिति वाच्यम् । अन्ने ब्रह्मत्वस्येव जीवे जगत्कर्तृत्वादेः प्रत्यक्षादिबाधितत्वात् । परमते 'विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते' इति जीवे जगत्कर्तृत्वादिप्रतिपादनस्योपासानार्थत्वेनातत्परत्वाच्च । मत्पक्षे च तच्छ्रुतेर्ब्रह्मपरत्वेन जीवपरत्वस्यैवानुपगमाच्च । एवं परमते अन्यदप्येवं जातीयकं वाक्यमुपासनार्थमिति जगत्कर्तृत्वादेरतिप्रसक्तिर्नाशङ्क्येति ।।

अत एव 'आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ति' 'सैषा भार्गवी वारुणीविद्या। परमे व्योमन् प्रतिष्ठिता'(तै-उ-३-३) इति आनन्दे ब्रह्मण्येव जगत्कर्तृत्वपरिसमाप्त्युक्तिः । अत एव च जीवस्य जगत्कारणत्वेनोपासना न प्रकरणविच्छेदिका । तस्यास्तद् ब्रह्मप्राप्त्यर्थत्वेन प्रासङ्गिकत्वेन वा प्रकरणाविच्छेदकत्वादिति परैकदेश्यभ्युपगमः । मम तु आनन्दवदन्नप्राणमनसामपि ब्रह्मत्वेन तत्र जगत्कर्तृत्वादिसत्त्वेऽपि न दोषः । जगत्कर्तृत्वादिहेतवश्च केवलव्यतिरेकिण इति दृष्टान्ताभावो न दोषायेति ।

### ।। अथ श्वेताश्वतरश्रुत्यर्थविचारः ।।

नन्वीश्वरस्य जगत्कारणत्वादिहेतुभ्यो जीवात् भेदमात्रसिद्धावपि न ततो धर्मिसत्तासमानसत्ताको भेदः सिध्यति । जगत्कारणत्वादेः मिथ्यात्वेन तेन धर्मिसत्तासमानसत्ताकभेदसिद्ध्यनुपपत्तेः ।।

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुत्या परमेश्वरस्य कार्यतत्करणयोर्निषेधात् । उपसंहारे 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इति

तस्य निष्क्रियत्वोक्तेश्च । 'न तस्य कार्यं करणम्' 'निष्क्रियम्' इति च प्रतिषेधेन 'परास्य शक्तिः' इति श्रुत्याऽपि मिथ्याशक्तेरेव प्रतिपादनं क्रियत इति वक्तव्यत्वादिति चेन्न । 'किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन' इति ब्रह्मणः कारणतानिर्वाहकं 'किम्' इति प्रश्नानन्तरं 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति ब्रह्मवादि-दर्शनगोचरतया 'देवात्मशक्तिम्' इति तन्निर्वाहकत्वे स्वाभाविकशक्तेरेवोपक्रमे निश्चयात् । 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि'(१) इत्यभिधानेन 'आत्म'शब्दस्य स्वभावार्थत्वात् । अन्यथा 'देवात्मशक्तिम्' इत्यत्र 'देवशक्तिम्' इत्येतावतैव विवक्षितार्थलाभेन 'आत्म'शब्दवैयर्थ्यात् । यद्यपि मध्ये –

**'छन्दांसि यज्ञाः क्रतवो दक्षिणाश्च(२)भूतं भव्यं यच्च वेदा वदन्ति ।**
**अस्मान् मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः'** (श्वे-उ-४-९)

इति 'माया'शब्दः श्रूयते । तथाऽपि 'माया'शब्दस्योपक्रमानुसारेण स्वाभाविकशक्तिपरत्वं युक्तं नतु मिथ्यार्थत्वमिति । अत एव 'मायां तु प्रकृतिं विद्यात्' इति स्वभावार्थक-'प्रकृति'शब्देन 'माया'शब्दार्थव्याख्यानरूपपरामर्शः । 'प्रकृत्या चारुः' इत्यादौ 'प्रकृति'-शब्दस्य स्वभावार्थकत्वं सुप्रसिद्धम् । अन्यथा 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति शक्तेः स्वाभाविकत्वप्रतिपादनविरोधः स्यात् । नच वाच्यं 'श्रूयते स्वभाविकी' इत्यत्र अस्वाभाविकी इति पदविभाग इति । बाधकं विनाऽनुमानिकाकार-प्रश्लेषकल्पनानुपपत्तेः,ज्ञानादिस्वाभाविकत्वासिद्ध्यापत्तेश्च ॥

नचोक्तरीत्या मध्ये श्रुतस्य 'माया'शब्दस्योपक्रमानुसारेण स्वाभाविकशक्तिपरत्वेऽपि 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी' इति तस्याः कण्ठत एव स्वाभाविकत्वप्रति-पादनेऽपि पदशक्तेस्तया निर्वाह्यस्येशजगत्कारणत्वादेर्वा न पारमार्थिकत्वं सिद्ध्यति । किन्तु तेन तदनागन्तुकत्वमात्रं सिद्ध्यतीति वाच्यम् । स्वाभाविकधर्मिसमसत्त्वनियमेन 'मायिनन्तु महेश्वरम्' इति परमेश्वरधर्मत्वेन श्रुत'माया'शब्दिततत्स्वाभाविकशक्तेस्तन्निर्वाह्यस्य जगत्का-रणत्वादेश्च ईश्वरचैतन्यरूप धर्मिसमसत्वस्याप्यकामेनाप्यङ्गीकार्यत्वात् ॥

(१) स्वभावो ब्रह्मवर्ष्मच । इति इदानीन्तन पाठः ॥ अमरकोष नानार्थवर्ग नान्तः ॥
(२) क्रतवो व्रतानि इति पाठान्तरम् ॥

यद्यपि च प्रकृतिशब्दस्तदुशब्दितजगदुपादानपरः(१) उपादानमात्रपरः । तथाऽपि जगदुपादानस्य यावद्धर्म्यनुवर्तमानत्वादुपादानत्वात् उपादानत्वसहकारिशक्तित्वाच्च, प्रधानतः 'शक्तिप्रकृति'शब्दाभ्यामभिधानेऽपि उक्तप्रमाणात् सम्भवाच्च, 'प्रकृति'शब्देन तद्ग्रहणमविरुद्धमिति ॥

नच सत्यत्वे ब्रह्मवन्निवृत्तिर्वा ज्ञाननिवृत्तिर्वा न स्यात्,निवृत्तिश्च 'माया'शब्दितायाः शक्तेः 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रूयत इति वाच्यम् । 'तम आसीत्' इति श्रुत्या ब्रह्मवत् सत्वेन प्रतिपन्नस्यापि तमःशब्दितस्याज्ञानस्य परेण ज्ञानेन निवृत्त्यङ्गीकारात् । नचेश्वरचैतन्यमात्रनिष्ठाज्ञानसत्वं मानान्तरप्राप्तम् । यतः 'तम आसीत् तमसा गूळमग्रे' इत्यनुवादः स्यात् ॥

किञ्च 'माया'शब्दितेश्वरशक्तेः निवृत्तिर्नास्त्येव, अनादेरनौपाधिकस्य भावस्य ब्रह्मवत् निवृत्त्यभावनियमात् 'अनादि मायया सुप्तः'इत्यादिना मायाया अनादित्वश्रवणात् । नच केवलनियमात् तन्निवृत्तिश्रुतिर्बलीयसीति वाच्यम् । मायायाऽपि 'गौरनाद्यन्तवती' इत्यादिनोत्तरावधिराहित्यस्य श्रुतत्वात् 'आकाशवत् सर्वगतश्च नित्यः' इति माया विक्षेपरूपस्य तदुपादानकस्याकाशस्य नित्यत्वश्रवणात् तन्निर्वाहाय तदुपादानभूतमायाया अपि अनिवृत्त्यवश्यम्भावाच्च ॥

एतेन 'गौरनाद्यन्तवती' इति मायानन्तत्वप्रतिपादकश्रुतेः 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुत्या तुल्यबलत्वेन प्रतिरोधात् सिद्धान्त्यभिमतार्थासाधकत्वमिति निरस्तम् ॥

नच –

**'न तस्य कार्यं करणं च विद्यते । न तत्समश्चाभ्यधिकश्च दृश्यते',**
**'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'**

इति परमेश्वरस्य कार्यकृत्योः क्रियायाश्च निषिद्धत्वेन मिथ्यात्वात् तन्निरूपितत्वादिना निर्वाह्यस्य तत्कारणत्वादेः पारमार्थिकत्वमयुक्तमिति वाच्यम् । शुक्तिरूप्यादिप्रातिभासिक-

(१) 'प्रकृतिशब्दः 'तु' इतिशब्दितजगदुपादानपरः' इति पाठः स्यात् ॥

निरूप्यस्यापि तदत्यन्ताभावस्य तन्निवृत्तेश्च अज्ञाननिष्ठतत्कारणतायाश्च व्यावहारिकत्ववत् तत्कार्यकृत्योर्निषिद्धत्वेन मिथ्यात्वेऽपि तन्निरूपितेश्वरनिष्ठकारणत्वादेः पारमार्थिकत्वापत्तेः । अविद्यायाः मिथ्यात्वेऽपि 'निवृत्तिरात्मा मोहस्य' इति पराभ्युपगमात् तन्निरूप्यात्मरूपाविद्यानिवृत्तेः पारमार्थिकत्वोपगमाच्च ।।

किञ्च 'न तस्य कार्यं करणं च विद्यते' इत्यादिना परमेश्वरस्य प्रयोजनाभाव एवोच्यते नतु स्वरूपेण कार्याद्यभावः । तथा सति 'यतो वा इमानि भूतानि जायन्ते' 'नामरूपे व्याकरोत्' इत्यादिजगद्रूप-तत्कार्य-तदनुकूल-तत्कृत्याऽऽवेदकश्रुतिविरोधात् । अत एव लोकें परप्रयोजनमुद्दिश्यैव सदा प्रवर्तमानस्य कार्यरहितत्वेन व्यपदेशः प्रयोजनरहितत्वप्रतिपादनपर्यवसायी दृश्यते । अत एव च कर्षकस्य दैवात् फलाभावे कृष्यादिप्रवृत्तिरविद्यमानत्वेन व्यवह्रियते । तथा च श्रुतिः 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति । सूत्रं च 'लोकवत्तु लीलाकैवल्यम्'(ब्र-सू-२-१-३४) इत्यादि ।।

अपि च 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्युत्तरवाक्यपर्यालोचनया 'न तस्य कार्यं करणं च विद्यते' इत्यस्येतरसाधारणमस्य कार्यं कृतिर्वानास्तीत्येवार्थः । नतु कार्यमात्रं वा कृतिमात्रं वा नेति । अन्यथा= कृति सामान्याभावे, 'परास्य शक्तिर्विविधैव श्रूयते' इति विचित्रशक्तिमत्वश्रुतिविरोधः । नहि कार्याभावे तदनुकूलशक्तिमत्वमुपपद्यते । नच 'न तस्य कार्यं करणं च विद्यते' इति सामान्यनिषेधस्य विशेषनिषेधपरत्वे लक्षणाप्रसङ्गः । 'घटमानय' इत्यादाविव व्यक्तिवचनन्यायेन विशेषपरवाक्यान्तरसमभिव्याहाराच्च । सामान्यरूपेणैव निषेधस्य लक्षणां विनैव विशेषविषयत्वोपपत्तेः । अन्यथा 'आकाशवत्सर्वगतश्च नित्यः' इत्यादि श्रुत्या नित्यत्व-सर्वगतत्वाभ्यामाकाशस्यैव 'आकाशवद्'इति परमेश्वरसादृश्यप्रतिपादनात् तदविरोधाय 'न तत्सम'इति निषेधोऽपि लक्षणया विशेषविषय इति स्यात् ।।

किञ्च 'न कार्यं विद्यते' इति जन्यमात्रस्य त्रैकालिकनिषेधावेदने जन्यमात्रत्रैकालिकनिषेधस्य जनकमात्रत्रैकालिकनिषेधाविनाभूततया श्रौतजन्यमात्रत्रैकालिकभानाक्षिप्तत्रैकालिकनिषेधप्रतियोगित्वेन जनकमात्रस्य श्रौतत्रैकालिकनिषेधप्रतियोगित्वेन जन्य-

मात्रस्य च मिथ्यात्वेन जन्यमात्रस्येव जनकराशिनिष्ठस्य ब्रह्मचैतन्यस्यापि मिथ्यात्वप्रसङ्गः । 'तस्य'इति पदं विनाऽपि उक्तरीत्या 'कार्य'पदस्य सम्बन्धिशब्दत्वेन स्वप्रतिपाद्यनिषेधाक्षिप्तनिषेधप्रतियोगित्वेन कारणत्वविशिष्टमिथ्यात्वलाभात् तद्वैयर्थ्यं च स्यात् । 'कार्य'पदस्य कृत्युत्तरभविष्यदुपकृतिसाध्यपरत्वे च तन्निषेधस्य कृतिनिषेधाविनाभूततयैव लाभात् 'करणं च न विद्यते' इति कृतिनिषेधवैयर्थ्यं च । तस्मात् तदुभयावैयर्थ्याय 'न तस्य कार्यं करणं च विद्यते' इत्यस्य अस्मादुक्तार्थपरत्वाश्रयणमेव युक्तमिति ॥

यद्वा चस्त्वर्थः । 'न तस्य कार्यं' नेश्वरस्य प्रयोजनं, करणं तु विद्यत इति तदर्थः । एवं च योजनायां नञनुषङ्गो नाश्रयणीय इति अधिको लाभः । 'अणुरपि विशेषोद्ध्यवसायकर' इति न्यायात् । एवं चेश्वरप्रवृत्तिरस्मदादिप्रवृत्तिवत् न प्रयोजनसापेक्षेति तस्यास्मदादितो वैलक्षण्यं सिद्ध्यति । अत एव 'देवस्यैष स्वभावोऽयम्' इति 'न तत्समश्च' इति च श्रुतौ वैलक्षण्य प्रतिपादनम् ॥

अपि च 'न तस्य कार्यं करणं च विद्यते' इति निषेधमात्रात् कार्यकृत्योर्मिथ्यात्वे ईश्वरचैतन्ययोरपि 'न तत्समश्च'इति निषेधात् मिथ्यात्वप्रसङ्गः ॥

तथाहि । 'रामरावणयोर्युद्धं रामरावणयोरिव'(१) इत्यत्रेव 'न तत्समश्च' इत्यत्र लाघवेन तद्गतभूयो धर्मवत्त्वमात्रस्य 'सम'शब्दार्थत्वे ईश्वरचैतन्यस्यैव स्वसमत्वेन निषेधविषयत्वात् गुरुत्वेऽप्यनाद्यभियुक्तव्यवहारसिद्धतया तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य सादृश्यापरपर्यायसमत्वरूपत्वे च सच्चिदानन्दरूपत्वादिना जीवस्यापि ईश्वरसमत्वेन 'न तत्समश्च' इति निषेधविषयत्वात् । नच 'न तत्समश्च' इति विशिष्टनिषेधस्य 'स विशेषणे हि' इति न्यायेन समत्वरूपविशेषणमात्रविषयत्वमिति वाच्यम् । तथासति 'न तस्य कार्यं करणं च विद्यते' इत्यस्यापि कार्यत्वादिविशिष्टनिषेधस्योक्तन्यायेन कारणत्वादिरूपविशेषणमात्रविषयत्वापत्तेः(२) । विशिष्टवाचिशब्दस्य 'नित्यो घटः' इत्यादौ नित्यत्वान्वयार्थमिव 'न तत्समश्च'इत्यादावपि निषेधान्वयार्थं समत्वादिरूपविशेषणे लक्षणाङ्गीकारापत्तेश्च । तस्माद्

---

(१) वाल्मीकिरामायणम् - युद्धकाण्डम्-अ-१०-श्लो-२४ ॥

(२) 'कार्यत्वादिरूपविशेषणमात्रविषयत्वमिति' ताळपत्रस्य पाठः ॥

ईश्वरस्य जगत्कारणत्वादिरूपधर्मो न मिथ्या किन्त्वीश्वरचैतन्यवत् परमार्थस्सन्नेवेति तेन जीवादीश्वरस्य पारमार्थिकभेदसिद्धिरविकलेति ।।

एतेन 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इत्यादिश्रुतिरपि व्याख्याता । 'निष्क्रियम्' इत्यादिनेश्वरस्यास्मदादिसाधारणकार्यसमक्रियाराहित्यादेरेव प्रतिपादनात् । अन्यथा= सर्वथा क्रियाभावे, 'स्वाभाविकी ज्ञानबलक्रिया च' इति तस्य स्वाभाविक-क्रियावत्त्वापादकश्रुतिविरोधः ।।

किञ्च ईश्वरस्य निष्क्रियत्वाभ्युपगमे 'माया' अपरपर्याय ईश्वरशक्तेरचेतनतया जगत्क्रियाकस्मिकत्वापत्तिः । नच 'ज्ञान बलक्रिया च'इति श्रुत्यैव 'ज्ञानबलेन= ईश्वर चैतन्यसम्बन्धेन मायाशक्तौ क्रिया'इत्यर्थतया क्रियोपपत्तिरिति वाच्यम् । चैतन्यसम्बन्ध-सत्त्वेऽप्यचेतने चेतन क्रियां विना क्रियाविरहदर्शनेन जगत्क्रियानिर्वाहायेश्वरसमवेतक्रियाया अवश्याभ्युपेयत्वात् । 'ज्ञान बलक्रिया च' इति श्रुत्या 'परास्य शक्तिः'इत्युपक्रमादीश्वर एव साक्षात् क्रियासम्बन्धावेदनेन मायाशक्तौ साक्षात् क्रियासम्बन्धस्य तयानुपस्थापनात् ।।

यत्तु- 'ज्ञानबलक्रिया च' इति श्रुतौ, ज्ञानं बलं क्रिया च, इति न द्वन्द्वः, स्त्रीलिङ्गादेकवचनात्सेति । तन्न । द्वन्द्वाभावेऽपि द्वन्द्वसमासादिव 'मुखनासिकावचनो-ऽनुनासिक' (पा-सू-१-१-८-(९) 'मयादाभिविधौच य'[१]इत्यादाविव ज्ञानबलाभ्यां युता क्रिया ज्ञानबलक्रिया चेति, तत्पुरुषादपि विवक्षितार्थलाभोपपत्तेरिति ।।

एतेनैव –

'न तस्य कार्यं करणं क्रियारूपं च विद्यते ।
स्वज्ञानात् कल्पितं विश्वमात्मन्येवेति च श्रुतिः'

इति सौरपुराणवचनं व्याख्यातम् ।। न तस्य ईश्वर कार्यं= प्रयोजनम् । चस्त्वर्थः । करणं क्रियारूपं तु विद्यते, ईश्वरप्रवृत्तिरस्मदादिप्रवृत्तिवत् न प्रयोजनाभिसन्धिपूर्विका ।

---

(१) मर्यादाभिविधौ च यः इति पाठः स्यात् ।।

'स्वज्ञानात्' इत्यत्र ब्रह्मशब्दानन्तराद्वा नञ्प्रश्लेषात् स्वस्य समन्तात् ज्ञानं स्वज्ञानं[१] तस्मात्, कल्पितं= दृष्टम् इति तदर्थोपपत्तेः ॥

॥ इति श्वेताश्वतरश्रुतिविचारः॥

## ॥ अथ भगवद्गीतार्थविचारः ॥

किञ्च जगत्कारणत्वप्रयोजकेश्वरशक्तेरपारमार्थिकत्वे 'एतां विभूतिं योगं च तत्त्वतो वेत्ति' (भ-गी-१०-७) इति तत्तात्विकत्वावेदकस्मृतिविरोधः ।

एतेनत्वपशब्दस्य[२] सत्येशक्तिर्न तु सत्यत्वे, तथाच विभूत्यादौ यत्सत्यमधिष्ठानं तज्जानातीत्यर्थः तत्स्मृतेरिति निरस्तम् ।

तथाऽपि विभूत्यादिकं तत्त्वतः परमार्थं जानातीत्येव ततोऽर्थप्रतीत्या विभूत्यादेस्तदधिष्ठानकत्वस्यापदार्थवाक्यार्थतया, ततः सर्वथा प्रतीत्यभावात् 'सर्वमेतदृतं मन्ये' इत्यादि वाक्यान्तरानुसारेणास्मदुक्तार्थपरताया एव विज्ञातव्यत्वाच्च ॥

'सर्वमेतदृतं मन्ये'(भ-गी-१०-१४) इत्यनेन 'अहमादिर्हि देवानाम्' (भ-गी-११-२) इत्याद्युक्त जगत्कर्तृत्वादेः (कारणत्वादेः-पा) परमार्थत्वप्रतिपादनमन्यथा विरुद्धं स्यात् ॥

नच –

**'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥**

**नादत्ते कस्यचित्पापं नचैव सुकृतं विदुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः'**(भ-गी-५-१५)

इत्येतद्विरोधात् 'सर्वमेतदृतं मन्ये' इत्यनेन जगत्कारणत्वादेरसद्वैलक्षण्यमात्रप्रतिपादनेन वक्तुर्विप्रलम्भकत्वनिरास एव क्रियते नतु परमार्थसत्व(परमार्थत्व-पा) मुच्यत इति वाच्यम् । अस्य वचनस्य तत्तज्जीवानादि तत्तत्कर्मानुसारेणैवेश्वरप्रवृत्तिः । नन्विदं प्रथमतया

(१) 'स्वंस्य समन्तात् ज्ञानं स्वाज्ञानं तस्मादित्यर्थ' इति ताळपत्रस्थ पाठः ॥

(२) 'एतेन तत्त्वतः शब्दस्य' इति पाठः स्यात् ॥

कस्यचिदेवेष्टाय कस्यचिदेवानिष्टाय तत्प्रवृत्तिरिति अर्थप्रतिपादकत्वेन 'सर्वमेतदृतं मन्ये' इत्यादि परमेश्वरजगत्कारणत्वादि प्रतिपादकवाक्यापरिपन्थितया सदसद्वैलक्ष्ण्यमात्रपरत्वा-कल्पकत्वात् । अन्यथा 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (२-१-१०) इत्यधिकरणविरोधः स्यात् ।।

।। इति भगवद्गीतार्थविचारः ।।

किञ्चेश्वरस्य जगत्कारणत्वादिकं काल्पनिकमारोपितमिति पराभ्युपगमो न सर्वथा युज्यते ।।

**'यस्तन्तु नाभ इव तन्तुभिः प्रधानजैः स्वभावतो देव एकः समावृणोति[१] ।**
**स नो ददातु ब्रह्माव्ययम्[२]'** (श्वे-उ-६-१०)

'य एको देवः प्रधानजैर्गुणैर्महदादिभिश्च स्वभावतः समावृणोति, जीवात् स नो ब्रह्म ज्ञापयतु 'स कारणं' करणाधिपाधिपः= करणाधिपानां= जीवानामधिपः 'तत् कारणं साङ्ख्ययोगाभिपन्नं[३] ज्ञात्वा देवं मुच्यते सर्वपाशैः' । साङ्ख्येन योगेन, अभिपन्नं= प्राप्तं तेषाम् 'एको बहूनां यो विदधाति कामान्' इत्युक्त कामानां कारणं, देवं ज्ञात्वा सर्वपाशैः= दुःखहेतुकर्मादिभिः, मुच्यते ।।

**'स्वभावमेकेऽकवयो वदन्ति कालं तथान्ये परिमुह्यमानाः ।**
**देवस्यैष महिमा लोके येनेदं भ्राम्यते ब्रह्मचक्रम्'** (श्वे-उ-६-१)

एके, अकवयः= अपण्डिताः स्वभावमेव कार्यं स्वतन्त्रं वदन्ति । अन्ये, कालं तदुभयं, तु शब्देन व्यावर्तयति । एष लोके देवस्यैष महिमा स्वभावः येन= देवेन, ब्रह्मचक्रम्= जीवजातम् । माण्डूकोपनिषदि च 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति पठ्यत इति तद्विरोधात् ।।

(१) स्वमावृणोत् इति शाङ्करभाष्यपाठः ।।
(२) ब्रह्माप्ययम् इति शाङ्करभाष्यपाठः ।।
(३) योगाधिगम्यम् इति इदानीन्तन पाठः । विजयीन्द्रस्वामिभिः योगाभिपन्नम् इति पाठं स्वीकृतम् ।।

यत्तु 'प्रधानजैः स्वभावत' इत्यस्य स्वभावैर्वासनाभिरित्यर्थः, 'योनिस्वभावादधितिष्ठत्येकः' यश्च 'स्वभावं पचति विश्वयोनिः प्राच्यांश्च स सर्वान् परिणामयेद्यः' । 'योनि स्वभावात्' अविद्यमानवासनायाः, स्वभावं= वासनां, पचति= व्यक्ताकारेण, प्राच्यान्= पूर्वोत्पन्नान्, परिणामयेत्= धर्मरक्षणावस्थारूपेण' इति परव्याख्यानम् । तदयुक्तम् ॥

स्वभावतः स्वभावम् इत्यनयोरविद्या वासनारूपार्थत्वे मानाभावात् । 'कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वा प्रकृतिस्वभावात्'(भा-११-२-३६) इत्याद्यनादिवृद्धव्यवहारेण 'स्वभाव' शब्दस्यानौपाधिकानागन्तुक यावद्धर्म्यनुवर्तमानधर्मिविशेषे एव प्रसिद्ध्यवधारणाच्च ॥

'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा'

इति माण्डूकोपनिषदि 'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे' इति मतान्तरमुक्त्वा श्रुत्या स्वमताभिधाने 'स्वभाव'शब्दोपादानेन जगत्कारणत्वादिकमीश्वरस्यानौपाधिकानागन्तुकधर्मविशेष एवेति प्रतिपादनाच्च ॥

ईश्वरस्य जगत्कारणत्वादिनिर्वाहक-मायाऽपरनामकशक्तिमत्वप्रतिपादके 'परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी' इति वाक्ये 'स्वभाविकी' इत्यस्य, मायिकी= मिथ्याभूतेति, परकीय व्याख्यानमयुक्तमेवेति ॥

किञ्च 'तत्कारणं साङ्ख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति मोक्षकारणीभूतज्ञानविषयत्वाभिधानान्यथानुपपत्त्या परमेश्वरगतकारणत्वस्य पारमार्थिकत्वमवश्यमभ्युपेयम् ॥

नच 'चित्रगुमानय' इत्यादौ चित्रगवीनामिव ईश्वरविषयकारणत्वस्य प्रधानक्रियात्वान्नोक्तदोषावकाशः इति वाच्यम् । तत्र चित्रगवीनां प्रधानक्रियान्वय इव ईश्वरनिष्ठकारणत्वस्य ज्ञानरूपप्रधानक्रियान्वये बाधकाभावात् । 'दण्डी प्रैषानन्वाह' इत्यादौ विशेषणस्यापि दण्डस्य प्रधानक्रियान्वयोपलब्धेश्च ॥ 'आग्नेयोऽष्टाकपाल' इत्यादाविव 'तत्कारणं साङ्ख्ययोगाभिपन्नं ज्ञात्वा' इत्यादावपि विशिष्टविध्युपपत्तेश्च ॥ एतेन –

'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'

इति मुण्डकोपनिषद्वचनं व्याख्यातम् ॥

नच तदुक्तधर्माणामीश्वररूपधर्मिपरिचायकतोपपत्तौ न प्रधानक्रियान्वयो अङ्गीकार्य इति वाच्यम् । तथासति 'आग्नेयोऽष्टाकलाप' इत्यादावपि द्रव्यदेवतयोर्यागपरिचायकतयोपादानोपपत्तेर्भावनान्वयो नाङ्गीकार्य इति सुवचत्वात् ॥

## ॥ अथ 'वेदाहमेतं पुरुषं महान्तम्' इति श्रुत्यर्थविचारः ॥

किञ्च तत्तद्वाक्योपपत्तेरीश्वरधर्माणां ज्ञानरूपप्रधानक्रियानन्वये 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यते'इति 'एवं'शब्देन अत्रोक्तानां शाखान्तरोक्तानां च ईश्वरगुणानां मोक्षकारणीभूततत्त्वज्ञानविषयत्वानुक्तिप्रसङ्गः । तत्त्वज्ञानविषयाणां च तेषां ब्रह्मवत् सत्यत्वं दुर्वारमिति किमनुपपन्नं? कथमन्यथा तत्र 'वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे' इति तत्र धर्मविशिष्टस्य परमेश्वरस्य तमसःपारवर्तित्वोक्तिः ॥

एतेन –

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचिन्त्यधीरः नामानि कृत्वाऽभिवदन्यदास्ते'

इति पूर्वमन्त्रे हिरण्यगर्भानुभवाभिनयरूपे यः पुरुषः सर्वाणि रूपाणि= देवादीनि, विचिन्त्य= निर्माय, नामानि= देव-असुर-मनुष्यादीनि च, कृत्वा धीरः= धियि= बुद्धौ, रमत इति धीरः, अन्तःकरणावच्छिन्नः सन्, अभिवदन्= व्यवहरन्, आस्ते, तं महान्तं तमसः पारं पुरुषं वेद' इत्यर्थे जीवब्रह्मैक्यस्योक्तत्वात् तस्य 'एवं विद्वान्' इत्यत्रापि परामर्शे तद्विरोधिनां गुणानाम् 'एवं'शब्दबलादुपसंहार एवानुपपन्न इति निरस्तम् ॥

सकलनामरूपकर्तृत्वस्य परमेश्वरासाधारणधर्मत्वेन आकाशाधिकरणन्यायेन अत्रत्य 'हिरण्यगर्भादि'वाचकशब्दस्य परमेश्वरपरतायाः आवश्यकत्वेन 'वेदाहमेतं पुरुषं महान्तम्' इत्यादि पूर्वमन्त्रस्य परमेश्वरानुभवाभिनयरूपत्वेन हिरण्यगर्भानुभवाभिनयरूपत्वासिद्धेः । एवं

च 'महान्तं तमसः पारं पुरुषं वेद' इत्यर्थ परत्वेऽपि तस्य कथं जीवब्रह्मैक्योक्तित्वमिति न जानीमः ?

अत एव, तस्य= हिरण्यगर्भस्यैव 'एवं विद्वान्'इत्यत्रापि परामर्शे तद्विरोधिनां गुणानां चोपसंहारो युक्त इति प्रत्यूढम् । अस्मदुक्तरीत्या 'एवं विद्वान्' इत्यत्रापि परमेश्वरस्यैव 'तम्'इति परामर्शेन गुणेषु विरोधि शङ्काया एव अप्रसरात् ।।

यत्तु 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति पूर्वपक्षतयाऽयमुपन्यास इति । तन्न। 'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे' इति मतान्तरमुपन्यस्य 'देवस्यैष स्वभावः' इति अस्य श्रुत्या स्वमतत्वेनोपन्यासात्, श्रुतिमतस्य सिद्धान्तत्वेन पूर्वपक्षत्वायोगादिति । तदेवं जगत्कारणत्वादिहेतूनां जीवादीश्वरस्य भेदसाधकत्वेनोक्तानां पारमार्थिकत्वे बाधकाभावादुक्तरीत्या साधकसद्भावाच्च, स्वधर्मसमसत्ताकाभेदसाधकत्वं प्रत्यूढमिति । तथा च सूत्रम् 'अनुपपत्तेस्तु न शारीरः' (ब्र-सू-१-२-३) इति ।।

किञ्च ब्रह्मजीवयोः सर्वशक्तितद्व्यतिरेकाभ्यां च परस्परं भेदसिद्धिः । नचेश्वरस्य सर्वशक्तित्वमसिद्धम् । 'परास्य शक्तिः' इति श्रुत्या तस्य तद्वताऽऽवेदनात् । नच सा जीवसाधारणी । जीवे तद्व्यतिरेकस्यानुभविकत्वात् । नचेश्वरे सर्वशक्तिः काल्पनिकी स्वाभाविकी । तस्याः स्वाभाविकत्वश्रवणात् । नच 'स्वाभाविकी' इत्यस्य मायिकीत्यर्थः, 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्युपक्रमावगतेश्वरशक्तेः 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' इति मध्ये मायात्वोक्तेरिति वाच्यम् । निरस्तत्वात्[१]। 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः' (भ-गी-१०-७) इति 'सर्वमेतदृतं मन्ये यन्मां वदसि केशव'(भ-गी-१०-१४) इति च तत्पारमार्थिकत्वाऽवेदकस्मृतेश्च ।

नच 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरम्' इति श्रुत्या ब्रह्मणः पूर्वत्वप्रतिषेधात् अन्यथासिद्धनियतपूर्वत्वरूपकारणत्वस्यापि प्रतिषेधात्, अवच्छेद्यस्यैवाभावेन तदवच्छेदकतया तन्निर्वाहकशक्तेरप्यभावः स्वत एव पर्यवस्यतीति वाच्यम् । 'अपूर्वमनपरम्' इत्यनेन

(१) तथाऽपि माया शब्दस्योपक्रमानुसारेण स्वाभाविकशक्तिपरत्वं युक्तम् इत्यादिना निरस्तत्वादित्यर्थः ।।

दैशिकपौर्वापर्यशून्यत्वप्रतिपादनव्यापकत्वस्यैव प्रतिपादनात् । नचैवम् 'अनन्तरम्' इत्यनेन पौनरुक्त्यम् । ब्रह्मणो व्यापकत्वेन मूर्तवस्त्वन्तरसम्बन्धस्यावर्जनीयतया तत्प्रयुक्तौपाधिक-भेदप्रसक्तौ 'अनन्तरम्' इत्यनेन तन्निरासात् ॥

किञ्च सत्येच्छाशक्तिमत्वादीश्वरस्य जीवाद्भेदसिद्धिः । नच सत्येच्छात्वमसिद्धम् । 'सत्यकामः सत्यसङ्कल्पः'(छां-उ-३-१४-२) इति श्रुत्या तत्सिद्धेः । नच 'अथ परमात्मानमनुविद्य व्रजन्त्येतां श्वसस्यान् कामान् तेऽक्षय्यालोका भवन्ति' इत्युपासनार्थत्वान्न तद्वाक्यस्य सत्यकामे तात्पर्यमिति वाच्यम् । ब्रह्मसद्रूपत्वादीनां तज्ज्ञानार्थत्वेऽपि 'सत्यं ज्ञानम्' इत्यादेस्तत्परत्ववदुपासनार्थत्वेऽपि तत्परत्वोपपत्तेः । **'अथ येऽन्यथातो विदुस्ते क्षीण लोका भवन्ति'** इति तद्विपरीतज्ञानगर्भतया तत्परत्वसिद्ध्यवैकल्यात् । 'एष सर्वेश्वरः एष भूताधिपतिरेष भूतपालः एष सेतुर्विधारण एषां लोकानामसम्भेदाय' (बृ-उ-६-४-२२) इति श्रुतसर्वेश्वरत्वादिभ्यश्चेश्वरस्य जीवात् भेदसिद्धिः । नच मिथ्याभूताः[१]। **'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्'**[२] (बृ-उ-६-४-२२) 'तदेतत् ऋचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य' (बृ-उ-६-४-२३) इत्यादिना सर्ववशित्वादीनां नित्यत्वोक्तेर्मिथ्यात्वानुपपत्तेः । मिथ्यात्वे च ज्ञाननिवर्त्यत्वावश्यम्भावात् । नित्यत्वस्य च निवृत्तिरहितरूपत्वात् ब्रह्मैव ब्रह्मणस्त-स्येत्यर्थः । अस्याः विद्यायाः मोक्षफलत्वेन तत्परदृष्टान्तन्यायेन मिथ्याविषयत्वानुपपत्तेश्च ॥

एतेन सत्यकामत्वादिधर्माणामपि मिथ्यात्वशङ्का निरस्ता । तेषामपि मोक्षकारण-भूतानां(भूतायां-पा) बृहदारण्यकदहरविद्यायामुपसंहारात् । तथाच सूत्रं 'कामादितरत्र तत्र चाऽऽयतनादिभ्यः'(ब्र-सू-३-३-४०) इति । नच सर्वेश्वरत्व-भूतपालत्वादीनां **'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तर आकाशस्तस्मिन् यदन्तरस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्'**(छां-उ-८-१-१) इति छान्दोग्यगतायामपि सगुणदहर-

---

(१) नच अमिथ्याभूताः इति ताळपत्रस्थ पाठः ॥

(२) तालपत्रे 'स न साधुकर्मणा कनीयान् इति' पाठः दृश्यते ॥

विद्यायामन्तर्हृदयरूपायतनसाम्येन कचित्‘आकाश’पदप्रतिपाद्यब्रह्मविषयत्वेऽपि ब्रह्म-विद्यात्वाविशेषाच्चोपसंहारे उपासनाविषयत्वेन मिथ्यात्वमिति वाच्यम् । उपासनाविषयत्व-स्यात्मनि व्यभिचारेण मिथ्यात्वाव्याप्यत्वात् । ‘असन्नेव स भवति । असद् ब्रह्मेति वेद चेत्’ इतिश्रुत्या मिथ्योपासनायाः निषिद्धत्वाच्च । न वेदनं नोपासना[1] येन ‘असन्नेव स भवति’इति तन्निषेधः स्यात् किन्तु ज्ञानमेवेति वाच्यम्। उपासनायाऽपि ज्ञानविषयत्वात्।

नचोपासनायाः ज्ञानत्वे विधेयत्वानुपपत्तिः, ज्ञानस्य प्रमाणपरतन्त्रत्वेन कृत्यसाध्यत्वात्, कृतिसाध्यस्यैव च विधिगोचरत्वादिति वाच्यम् । इष्टसाधनत्वस्यैव विध्यर्थत्वेन कृति-साध्यत्वस्य तथात्वेन साक्षात्कृत्यसाध्येऽपि ज्ञाने इष्टसाधनत्वस्य विधिबोध्यत्वोपपत्तेः । विधिबोध्यत्वस्यैव विधेयत्वरूपत्वात् । अन्यथा याग-नमस्कारादेर्ज्ञानविशेषरूपत्वेन प्रमाण-परतन्त्रापराधत्वेनाविधेयत्वप्रसङ्गात् । अत एव ‘विज्ञानं ब्रह्म चेद्वेद’ इत्यादावुपासनाया ज्ञानार्थकस्य विदेः प्रयोग उपपद्यते ।।

एतेनोपासना मानसक्रियाविशेष एव नतु ज्ञानविशेषः । तथात्वे तस्य कृत्यसाध्य-त्वेनाविधेयत्वापत्तेरिति निरस्तम् ।।

साक्षात्कृतिसाध्यत्वस्य ज्ञानविशेषरूपयाग-नमस्कारादावप्यसत्वेनाविधेयत्वापातात्, परम्पराकृतिसाध्यत्वस्य च उपासनायाः ज्ञानविशेषरूपत्वेऽपि सम्भवात् । ‘नच रमन्त्यहोऽसदुपासनयाऽत्महन’ इत्यादिस्मृत्याऽप्यसदुपासनाया निषेधाच्च ।।

।। इति ‘वेदाहमेतं पुरुषं महान्तम्’ इति श्रुत्यर्थविचारः ।।

## ।। अथ उपसनावाक्यानां युक्तायुक्तविमर्शा ।।

ननु ‘नाम ब्रह्मेत्युपासीत’‘योषितमग्निं ध्यायीत’ इत्यादिश्रुतिविहितोपासनादेर्नाम-ब्रह्मत्वादेर्बाधितत्वेनासदर्थ[2]विषयताऽकामेनापि स्वीकार्येति चेन्न । ‘नाम ब्रह्म’ इत्यत्र ‘नाम्नि ब्रह्म’ इत्यर्थविज्ञानात् ‘योषितमग्निं ध्यायीत’ इत्यत्रापि परस्त्रीसंश्लेषाग्निसंश्लेषवत्

---

(१) नचेदं नोपासना इति पाठः स्यात् ।।

(२) ‘विषयताकमेनापि इति’ ताळपत्रस्थ पाठः ।।

अनिष्टहेतुरित्यर्थविज्ञानात् । तथा च श्रुतिः 'नागम्यां गच्छेदिति'। नचैवं मुख्यार्थत्यागो दोषः । प्रमाणं विना मुख्यार्थत्यागस्यैव दोषत्वात् । 'असन्नेव स भवति । असद् ब्रह्मेति वेद चेत्' 'नच रमन्त्यहोऽसदुपासनयाऽऽत्महन' इतिश्रुतिस्मृतिभ्यामसदुपासनायाः निषिद्धत्वेन वेदवैदिकविहितोपासनायास्तदन्यथानुपपत्त्यैवासद्विषयत्वापादकमुख्यार्थत्वस्य त्याज्यत्वात् । अन्यथा योषिदग्निर्नेति योषित्वव्यतिरेकं निश्चिन्वतो योषित्यग्नित्वबुद्धेरेवासम्भवेन तज्जन्यसंस्काराभावात् तदग्नित्वविषयकस्मृतिरूप ध्यानस्यैवासम्भवेन 'योषितमग्निं ध्यायीत' इति विधेरेव निर्विषयत्वप्रसङ्गः ॥

नच तद्यतिरेकं निश्चिन्वतोऽपि तत्र तदाहार्यारोपस्य संस्कारानादीपकत्वेन[१],तथाऽपि तद्विधेर्निर्विषयत्व तादवस्थ्यात् । तदाधायकत्वे च तत एव स्मृतिविशेषरूपध्यानसम्भवेन विधिवैयर्थ्यात् ॥

एतेन स्मृतिमात्रस्य ध्यानत्वेनाविच्छिन्नस्मृतिसन्तानस्यैव तत्त्वेन कृतिसाध्यत्वात् योषिति अग्नित्वेन ध्यानविधिरुपपद्यते । अन्यथा 'निदिध्यासितव्यः' इति ब्रह्मविषयकनिदिध्यासनविधिरपि व्यर्थः स्यादिति निरस्तम् ॥

आहार्यारोपस्य संस्कारानाधायकत्वेन स्मृतिसामग्र्या एव बाधितत्वेन 'योषितमग्निं ध्यायीत' इति विधेः परपक्षे निर्विषयत्वस्यैवापादनादिति । तथाच स्मृतिः 'नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिका'[२]इति ॥

एतेन ध्यानं मानसीक्रिया इति निरस्तम् । तथा सति पूर्वकालीन-तदनुभव-तदाहित-संस्कारनिरक्षेपत्वप्रसङ्गात् । ध्वंसान्यसंस्कारसापेक्षस्य स्मृतित्वनियमेन ज्ञानविशेषरूपत्वस्य दुर्वारत्वाच्चेत्यलम् ॥

तथाचोपासनामात्रस्याप्यमिथ्यात्वात् सगुणदहरविद्याविषयत्वेऽपि नोक्तगुणानां मिथ्यात्वं किन्तूक्तरीत्या सत्यत्वमेवेति ॥

---

(१) 'संस्कारानाधायकत्वम्' इति पाठः स्यात् ॥

(२) तैत्तिरीयोपनिषद्भाष्योदाहृतवेदार्थविवेकवाक्यम् ॥

किञ्च 'एष नित्यो महिमा ब्राह्मणस्य' इति श्रुत्या ईश्वरमहिम्नो नित्यत्वमुच्यत इत्यविवादम् । नचेश्वरस्य सर्ववशित्वादिधर्मातिरेकेण महिमा नामान्योऽस्ति, इति छान्दोग्योक्ततद्गुणानामपि नित्यत्वं दुर्वारमेव । 'सत्यः सो अस्य महिमा' इति ब्रह्ममहिम्नो जगत्कारणत्वादिलक्षणस्य साक्षात्सत्यत्वश्रुतेश्च । 'महिमा'शब्देन विनिगमकाभावेन ब्रह्मा-साधारणधर्ममात्रस्यापि ग्राह्यत्वात् । नचात्रभूममात्रस्यात्मत्वमुच्यत इति शङ्क्यम् । भूम्नोऽपि ब्रह्मधर्मत्वेन तथाऽपि ब्रह्मधर्मसत्यत्वपरत्वानपायात् । 'यो वै भूमा तत्सुखम्' इति भूम्नो ब्रह्मभिन्नत्वावगमेऽपि 'यदेष आकाश आनन्दो न स्यात्' इति ब्रह्माभिन्नत्वावगमेऽपि आनन्दस्य 'आनन्दं ब्रह्मणो विद्वान्' 'एषोऽस्य परम आनन्दः' इति च श्रुतिबलेन धर्मत्वात् 'सत्यः सो अस्य महिमा' इति श्रुतिबलेन धर्मत्वोपपत्तेः, भिन्नासाधारणधर्मेणेवा भिन्नासाधारणधर्मेणापि जीवादीश्वरभेदस्य सुसाधुत्वात् 'अनादिमध्यान्तमनन्तवीर्यम्' (भ-गी-११-१९) इति वीर्यरूपब्रह्मधर्माविनाशित्वस्मृतेश्च ॥

नच 'अनन्तं वै मनोऽनन्ता वै विश्वे देवाः'इत्यादावपरिसङ्ख्यार्थत्वेऽप्यनन्तशब्दो दृष्टः, अत एव च श्रुतिः 'विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' (ऋ-सं-१-१५४-१) इति । यः पार्थिवानि रजांसि विमवतान् सः विष्णोः, वीर्याणि प्रवोचं, नुकं= वितर्कं वदेत्, न वदेत् वेत्यर्थः । तथा च 'अनन्तवीर्यम्' इति नेश्वरवीर्यनित्यत्वसिद्धि-रिति वाच्यम् । 'अनन्तवीर्यम्' इति 'विक्रमस्त्वम्' इति पृथगभिधानेन 'अनादिमध्यान्त-मनन्तवीर्यम्' इति 'अनन्त'शब्दस्याविनाशित्वार्थकत्वौचित्यात् । अन्यथा पुनरुक्तेः ॥

नच, भूमधर्मेण नेश्वरस्य जीवात् भेदानुमानं युज्यते । तस्य मुक्तजीवसाधारणत्वात् 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति श्रुत्या मुक्तस्यापि ईश-महिमोक्तेरिति वाच्यम् । भूम्नो 'महिमा'शब्दार्थत्वेऽपि जीवव्यावृत्ततया जीवात् भेदानु-मापकत्वानपायात् । 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यत्र च 'महिमा'शब्देन 'पितुःराज्येऽभि-षिक्तस्य पुत्रस्य पितुर्महिमा दृश्यते' इत्यादाविव तद्धर्मसदृशधर्मस्यैवाभिधानात् । नहि तदन्यस्य तदसाधारणधर्मप्राप्तिर्भवतीति दृष्टचरम् ॥

अत एव न जीवादीश्वरस्य भेदोऽभ्युपेय इत्युच्यत इति चेन्न । 'जुष्टं यदा पश्यति'इति मुमुक्षुमहिम्नोः ज्ञानसाध्यत्वाऽवेदनेन तस्य तत्पूर्वकालीनेशमहिमत्वानुपपत्तेः । 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप'(ऋ-सं-७-९९-२) इति ब्रह्ममहिम्नः केनाऽप्यनवाप्यत्वश्रवणाच्च । तव 'महिम'शब्दितस्य सार्वज्ञादिधर्मरूपस्य 'केवलो निर्गुणश्च' इति निषेधात् मिथ्यात्वं, 'सत्यः सो अस्य महिमा' इति तस्य साक्षात्सत्यत्वश्रवणात् होममात्रानुवादत्वेन आहवनीयस्येव, 'स'इति श्रुत्युक्तमहिममात्रानुवादत्वेनात्र सत्यत्वविधानप्रतीतेः । 'सत्यः सो अस्य' इत्यस्यैन्द्रसूक्तसत्वेऽपि 'तत्त्वायामि सुवीर्यम् तत् ब्रह्म पूर्वचित्तये' (ऋ-सं-८-३-९) इति ब्रह्मश्रुत्या 'इन्द्रे सूर्यमरोचयत्' 'इन्द्रे ह विश्वा भुवनानि येमिरे'[१] (ऋ-सं-८-३-६) इत्यादिसूर्यप्रकाशकत्वादिलिङ्गैश्च ज्योतिरधिकरणन्यायेन[२] सूक्तस्य परमेश्वरपरत्वात् ॥

नच 'य एवं वेद स विष्णुरेव भवति' (ना-अथ-उ) इति 'सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्' (कठ-उ-१-३-९) इति श्रुतिभ्यामनवाप्यत्ववचनं तज्ज्ञानशून्यविषयमिति वाच्यम् । तथासति जीवब्रह्माभेदस्य ज्ञानसाध्यत्वेनानागन्तुकत्वक्षतेः । 'विष्णुक्रमान् क्रमते विष्णुरेव भूत्वेमान् लोकानभिजयति' (तै-सं) इतिवत् 'स विष्णुरेव भवति' 'स विष्णुरेव भवति' (ना-अथ-उ) इति श्रौतव्यपदेशोपपत्तेश्च । विष्णोः पदं= लोकम् इत्यर्थविज्ञानाच्च । 'पदं व्यवसितत्राणस्थान लक्ष्माङ्घ्रिवस्तुषु'[३] इत्यभिधानेन वस्तुन इव स्थानस्यापि 'पद'-शब्देन ग्राह्यत्वात् । 'पद'शब्दस्य स्वरूपार्थकत्वेऽपि तस्य प्राप्तिकर्मत्वावगत्या 'राजपदं प्राप्नोति' इत्यादाविव तत्सदृशस्वरूपमाप्नोति इत्यर्थपरत्वोपपत्तेश्च ॥

एतेन 'ब्रह्मविदाप्नोति परम्' 'क्षरात्मानावीशते देव एकः' 'तस्याभिध्यानात्' 'तृतीयं देहभेदे विश्वैश्वर्यं केवलमाप्तकामः' 'आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम्' (तै-सं-१-१६) इत्यादि श्रुतेर्मुक्तेर्व्यभिचार इति निरस्तम् ।

---

(१) 'सुवानास इन्दवः' इति पूर्णपाठः ॥

(२) ॐज्योतिश्चरणाभिधानात् ॐ(ब्र-सू-१-१-२४) इति सूत्रोक्त न्यायेनेत्यर्थः ॥

(३) अमरकोश नानार्थवर्गः -थान्तः ॥

'ब्रह्म ज्येष्ठा वीर्यासम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ।
ऋतस्य ब्रह्म प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः'

परमेश्वरेण हिरण्यगर्भादीनि, वीर्याणि= कार्याणि, अथवा ब्रह्मणा ज्येष्ठानि, वीर्याणि, सम्भृतानि, ज्येष्ठं ब्रह्मा दिवमाततान= अभ्याप्तवत्, तेन ब्रह्मणा कः स्पर्धितुं अर्हति? न कोऽपि, तद्भावभाक्तोऽपि न भवतीत्यर्थकश्रुतिविरोधात् । 'नारायणात् ब्रह्मा जायते' 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इति श्रुतिपर्यालोचनया, 'ब्रह्मा देवानां प्रथमं तु (प्रथमोत-पा) जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः' इति श्रुतेः 'देवानां मध्ये प्रथमं तु नारायणात् ब्रह्मजज्ञे उत ब्रह्मणा स्पर्धितुं कोऽर्हतीति' प्रथमं चतुर्मुखस्य ब्रह्मणो नारायणोत्पन्नत्व महिम्नो तेन सह स्पर्धितुं कोऽर्हतीति? परमेश्वरजन्यचतुर्मुखभावना-र्हत्वेनेतरस्य प्रतीतेः, तच्छ्रुतिसूचितकैमुत्यन्यायेनापि जीवस्येश्वरभावव्यतिरेकसिद्धेश्च ॥

एतेनैव 'स एष सम्प्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति मुक्तेः पुरुषोत्तमत्वरूप परमेश्वरधर्मश्रवणात्, न तेन जीवभेदसिद्धिः व्यभिचाराद्विरोधाद्वेति निरस्तम् ॥

उपसम्पत्तव्य परं ज्योतिष एव तत्र पुरुषोत्तमत्वोक्तेः । तत्परं ज्योतिरुपसम्पद्य स एष सम्प्रसादो= जीवः, स्वेन रूपेण= दुःखाद्यशबलितस्वीयरूपेण, अभिनिष्पद्यते, स उत्तम-पुरुषः इति योजनोपपत्तेः। तथा च स्मृतिः 'उत्तमपुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति । अन्यथा=परमेश्वरपुरुषोत्तमत्वस्याश्रुतित्वे, तत्स्मृतौ 'उदाहृतः'इत्यस्य निरालम्बनत्वापत्तेः॥

अस्तु वा 'तस्याभिध्यानात्' 'तृतीयं देहभेदो विश्वैश्वर्यं केवलमाप्तकाम' इत्यादि श्रुतिप्रतिपन्नं विश्वेश्वरत्वादिकं मुक्तेऽपि, तथाऽपि तस्य परमेश्वराधीनतया नान्याधीनस्यैव तस्य 'विश्वैश्वर्यादि'शब्दमुख्यार्थत्वेन, 'कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुरा-काशमध्य' इत्यादिश्रुतिप्रतिपन्नं जीवात् भेदे हेतुत्वेन विवक्षितमिति न तस्य मुक्तजीवे व्यभिचारशङ्कावकाशः । नच मुख्ये सम्भवत्यमुख्यग्रहणं युज्यते । परमेश्वरनिष्ठत्वेन च विश्वैश्वर्यम् अनन्याधीनं, नतु तदितरनिष्ठम् । तथा च स्मृतिः –

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' (भा-२-१०-१२)

इति ।। नच –

'मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माऽद्वयमस्म्यहम्' (के-उ-१-१९)

इति श्रुतिपर्यालोचनया जगत्कारणत्वादिरूपविश्वैश्वर्यं जीवेऽपि संसारदशावृत्तिः प्रतीयत इति वाच्यम् । अस्याः श्रुतेः परमेश्वरानुभवाभिनयरूपत्वेन जीवपरत्वासिद्धेः । अन्यथा

'एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।
समस्तसाक्षिं सदसद्विहीनं प्रयाति नित्यं परमात्मरूपम् '

इत्युपसंहारविरोधात् । सर्वज्ञत्वादिरूपविश्वैश्वर्यस्य संसारिण्यनुपलम्भबाधितत्वाच्च, जीवस्यापि ईश्वरवत् सार्वज्ञे तस्य क्वचिदपि संशयविपर्ययभावापत्तेश्च[१] । परेणापि सर्वज्ञत्वादेरन्तःकरणोपाधिप्रयुक्तप्रतिबिम्बभावे जीवेनाङ्गीकारात् । नच 'नेह नानाऽस्ति किञ्चन'इति प्रतिषेधात् सर्वेश्वरत्वादयस्तात्विका ईश्वरे न सन्तीति तद्रूपभेदसाधकहेतूनामीश्वरेऽसिद्धिः, काल्पनिकाश्च ते न पारमार्थिकहेतुसाधक इति वाच्यम् । 'एकधैवानुद्रष्टव्यम्' इति पूर्ववाक्यानुसारेण 'नाना'शब्दस्य भावप्रधानतया तस्येश्वरनानात्वनिषेधपरत्वात् विचित्रप्रासादादिदृष्टान्तेन भूभूधरादिविचित्रकार्यरूपलिङ्गाभासात् नानात्वप्राप्त्युपपत्तेः ।।

एतेनैव –

'यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति'

इति वाक्यं व्याख्यातम् ।।

इह= भूभूधरादौ यः कर्ता स एव, अमुत्र= भुवःस्वर्महादौ, जनक इति तदर्थविज्ञानात्

(१) 'विपर्ययाभावापत्तेश्च' इति पाठः स्यात् ।।

नित्यशरीरत्वाच्च ईश्वरस्य जीवात् भेदस्थितिः । **'स्थिरैरङ्गैः पुरुरूप उग्रः'** (ऋ-सं-२-३३-९) **'अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्'** इति श्रुतिभ्यां,

**'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्ये न दृष्टपूर्वम्'** (भ-गी-११-४७)

इति'

**'अविकाराय शुद्धाय नित्याय परमात्मने ।**
**सदैकरूपरूपाय विष्णवे सर्वजिष्णवे'** (म-भा-अनु-प)

इति सदैकरूपरूपाय= नित्यशरीराय ।

**'नान्तोऽस्ति यस्य नच यस्य समुद्भवोऽस्ति वृद्धिर्नयस्य परिणामविवर्जितस्य ।**
**'नोपक्षयं च समुपैत्यविकल्पवस्तु यस्तं नतोऽस्मि पुरुषोत्तममीशमीड्यम्'**

इत्यादिस्मृतिभिश्चेश्वरशरीरनित्यत्वसिद्धेः ॥

'नान्तोऽस्ति यस्य' इत्यत्र देहत इत्यर्थः । नच **'स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः'** (ऋ-सं-१-८९-८)इत्यादाविव 'स्थिर'शब्दः सावधिकतरस्थेमपरेति वाच्यम् । 'अपि सर्वं जीवितं मर्त्यमेव'(कठ-उ-१-१-२६) इतिश्रुत्या प्राणभृत् शरीरस्यैव तथात्वोपपत्तेः । इह तु सङ्कोचे मानाभावात् । 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति मुमुक्षुज्ञानं प्रतीश्वरशरीरस्य विषयत्वाऽवेदने तच्छरीरस्य सत्यत्वसिद्धेश्च ॥

नच –

**'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः'** (आ-उ-१-१-६)

इति श्रुतेरीश्वरस्य शरीरमेव दुर्लभं तन्नित्यत्वादिकं च दूरे इति वाच्यम् । तत्र ज्ञानातिरिक्तशरीरस्यैव निराकरणात्

**'योऽयं विज्ञानमयः'**(बृ-उ-६-३-७) **'प्राणेष्वनन्तरोऽवाह्यः कृत्स्नः'**
**'विज्ञानघन'**(बृ-उ-४-४-१२) इति श्रुतिभ्यां

'न मेऽस्ति पूर्वं न परं नचान्तरं न बाह्यमस्यैव सदा मुनीश्वराः ।
यथैव सिन्धूत्थ घनोरसात्मास्तथैव विज्ञान घनोऽहमात्मिका'

इति वासिष्ठलैङ्गचोक्त्या चेश्वरस्य ज्ञानमयशरीरसिद्धेः ॥

'मूर्तौघनः'[१] इत्यनुशासनात्, 'यदात्मको भगवान् तदात्मिका व्यक्तिः । किमात्मको भगवान् ज्ञानात्मक' इत्यादिश्रुत्यन्तराच्च तच्छरीरस्य ज्ञानरूपत्वसिद्धेः, 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' इतीश्वशरीरस्यापरिच्छिन्नत्वोक्तेश्च । न केवलमीश्वरः स्वरूपेण मितरहितः किन्तु तन्वापीति तदर्थः ॥

ननु 'अचिन्त्यमव्यक्तमनन्तरूपम्' (कै-उ-१-१६) इति श्रुतौ च रूपस्याविनाशित्वसिद्धेः । 'तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्'(कै-१-७)[२] इतिश्रुतौ तस्याः रूपत्वप्रतीतेः 'अनन्त'शब्दस्यापरिमितपरत्वेनाऽप्युपपत्तेः ॥

एतेन 'तेजोमयं विश्वमनन्तमाद्यम्' इत्येतदपि व्याख्यातम् ।

'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नाना वर्णाकृतीनि च'(भ-गी-११-५)

इति शरीरानेकसङ्ख्यात्वोपक्रमात् 'सदैकरूपरूपाय' इति विष्णवेऽप्यविकारित्वनिर्वाहाय, सदैकरूपमन्यद् रूपम्= शरीरम्, यस्य तस्मै, न कदापि शरीरतादात्म्यमस्यास्तीत्यर्थः । 'एके मुख्यान्यकेवलाः' इत्यमरोक्तेरिति चेन्न ।

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ।
भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप' इति(भ-गी-११-५३,५४)

---

(१) काशिकायाम् (३-३-७७)अनुशासनादित्यर्थः ॥

(२) तथादिमध्यन्तम् इति ताळपत्रस्थ पाठः ॥

इति पूर्वोक्तरूपस्य तत्त्वज्ञानविषयत्व, मुक्तोपसृप्यत्वयोः प्रतीतेः सत्यत्वागमात्, संयद्वामत्व-वामनित्व-भामनित्वेभ्योपीश्वरस्य तद्व्यतिरेको जीवस्य च भेदसिद्धिः ॥

॥ इति उपसनावाक्यानां युक्तायुक्तविमर्शः ॥

## ॥ अथ छान्दोग्य,श्वेताश्वतरश्रुत्या ईश्वरस्य जीवाद्भेदसिद्धिकथनम् ॥

'एतमेव संयद्वाम इत्याचक्षते'

'सर्वाण्येनं वामानि नयन्ति'

'एष उ एव वामनिः एष ह्येव वामनि नयति'

'एष उ एव भामनिः एष ह्येव भामनि नयति' (छा-उ-४-१५-२,३,४)

इति कल्याणाश्रयत्वकल्याणप्रापकत्व-प्रकाशप्रापकत्वादिभ्य, 'एव'कारेण चान्यत्र तत्प्रतिषेधिकाभ्यः श्रुतिभ्यः ईश्वरानीश्वरयोः तद्वत्व-तद्रहितत्वयोश्च सिद्धेः । नच 'तं यथा यथोपासते तथैव भवति' इति जीवस्याप्युपासितवतस्तादृत्त्वश्रवणात् तत्र व्यभिचार इति वाच्यम् । अनन्याधीनतादृशधर्माणामेव तत्तच्छब्दमुख्यार्थतया जीवगतानां च तेषामुपासना कृतेश्वरप्रसादायत्तत्वेनान्याधीनत्वेनान्याधीनतया मुख्यत्वाभावात्, मुख्ये सम्भवत्यमुख्यग्रहणायोगादिति ॥

नच 'साक्षी चेता केवलो निर्गुणश्च' इति चेताचेतितातिलोप आर्ष, गुणप्रतिषेधात्, नेश्वरे वामनित्वादय इति वाच्यम् । गुणशब्देन धर्ममात्रग्रहणे 'एष आत्मा अपहतपाप्मा' 'विशोको विजरो विमृत्युः' इति श्रुतिप्राप्तापहतपाप्मत्वादीनामपि प्रतिषेधप्रसङ्गात् । 'गुण'शब्दस्य धर्ममात्रपरतया 'निर्गुणः'इति सामान्यनिषेधस्य विहितेतरहेयधर्मनिषेधपरत्वौचित्याच्च । अन्यथा 'केवलो निर्गुणश्च' इति समुच्चयप्रसिद्ध'च'शब्दानुपपत्तेः ॥

'आनन्दं ब्रह्मणो विद्वान्' इत्यानन्दस्य 'यः सर्वज्ञः सर्ववित्' इति ज्ञानस्य, 'सदेव सोम्येदमग्र आसीत्' इति सत्तायाः, 'तमक्रतुं पश्यति वीतशोको धातुःप्रसादान्महिमानमीशम्' इति आत्मनः, 'अस्य महिमानमिति वीतशोकः' इति महिम्नः, सद्धर्मत्वेन प्राप्तानां प्रतिषेधे निरानन्दत्वादिना ब्रह्मणो अपुरुषार्थत्वप्रसङ्गाच्च । नच तद्धर्मकत्वाभावेऽपि तद्रूपत्वेनैव पुरुषार्थता स्यादिति वाच्यम् ।

**'मनोमयोऽयं पुरुषो भास्सत्यः'** इति

**'मनोमयः प्राणशरीरो भारूपःसत्यसङ्कल्पःआत्मा'** (छा-उ-३-१४-२) इति

**'विज्ञानमानन्दं ब्रह्म'**

**'आनन्दो ब्रह्मेति व्यजानात्'**इति

**'धातुः प्रसादान्महिमानमीशम्'**

**'भूमानं भगवो विजिज्ञासो यो वै भूमा तत्सुखम्'** (छां-उ-७-२३-१)

इति च ज्ञानादीनामीश्वराभिन्नत्वाऽवेदनेऽपि तद्रूपत्वेन पुरुषार्थत्वेऽपि च,

**'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः'**

**'आनन्दं ब्रह्मणो विद्वान्'**

**'एषोऽस्य परम आनन्दः'**

**'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'**

इत्यादिश्रुत्या तेषां ब्रह्मधर्मत्वाऽवेदनेनानन्दादिधर्मवत्वेनापीश्वरस्य पुरुषार्थत्वानपायात् । लोके तद्वत एव तद्दाने समर्थत्वेन दृष्टतया तत्स्वरूपत्वेन दृष्टस्यातथात्वेनैव दृष्टतया च सत्यज्ञानानन्दादिमत्वेनैवेश्वरस्य तदर्थिनं प्रत्युपासनत्वेन पुरुषार्थता नान्यथेत्यवश्यमङ्गी-कर्तव्यात्वाच्च ॥

अपि च राजादेश्चेतनस्य दातुर्ज्ञानधनाद्यर्थिनं प्रति ज्ञानधनादिमत्वेनैव पुरुषार्थत्ववत्, तत्त्वेन पुरुषार्थताया अदृष्टत्वेन सर्वपुरुषार्थदातृत्वेन श्रुतिस्मृत्यादिप्रतिपन्नस्येश्वरस्य 'नित्यो नित्यानां चेतनश्चेतनानाम्' इति सकलचेतननियामकचेतनत्वेनश्रुतस्य सत्यज्ञानानन्दादि-धर्मवत्वेनैव पुरुषार्थताया वक्तव्यत्वात् ॥

यद्यपीश्वरस्य सच्चिदानन्दादिरूपधर्मकत्वं तद्दातृत्वादिकं चेश्वरस्य श्रुत्यादिसिद्धम् । तथा च तद्रूपत्वेनैव तस्य पुरुषार्थत्वसम्भवेन तद्वत्वेनापि पुरुषार्थत्वाङ्गीकारे गौरवम्, तथाऽपि श्रुतसकलपुरुषार्थदातृत्वनिर्वाहाय तद्वत्वेनैव पुरुषार्थत्वाङ्गीकारो न्याय्यः । तद्दातुस्तद्वत्वेनैव पुरुषार्थत्वादित्युक्तम् । नचैवं गौरवम् । दातृत्वान्यथानुपपत्तिकल्प्यत्वेन तद्वत्वेन पुरुषार्थत्वस्य प्रामाणिकत्वात् । किञ्चानन्दादेः सम्बन्धविशेषरूपाश्रयत्वेनैव

पुरुषार्थत्वदर्शनेनेश्वररूपानन्दस्य स्वस्मिन् तथाविधसम्बन्धाभावेन स्वाश्रयत्वस्यैवाभावात्, कथं तत्वेन पुरुषार्थत्वनिर्वाहः?॥

नचानन्ददुःखाभावयोर्लाघवेन तत्वेनैव पुरुषार्थता । तथा सति वैरिसुखादेरपि पुरुषार्थत्वापत्तेः । नहि लोके स्ववैरिणः सुखमस्तु दुःखाभावोऽस्त्विति कोऽपीच्छति । नच 'आनन्दं ब्रह्मणो विद्वान्' इत्यादौ 'घटस्य स्वरूपम्' इत्यादाविव षष्ठ्युपपत्तेर्नानन्दादेस्तद्बलेनेश्वरधर्मत्वसिद्धिरिति वाच्यम् । 'एवं धर्मान् पृथक् पश्यन्स्तानेवानुविधावति' इत्यादिश्रुत्येश्वरस्य धर्माननङ्गीकृत्य तेषामीश्वरभिन्नत्वमात्रनिषेधात्, धर्मधर्मिभावे भेदनियतत्वस्यौत्सर्गिकत्वेन साधके सति तस्य त्याज्यत्वात्, प्रकृते भेदनिषेधस्यैव बाधकत्वात् ॥

किञ्च 'येनावृतं नित्यमिदं हि सर्वं यः कालकालो गुणी सर्वविद्यः'(१) (श्वे-उ-६-२) इतिश्रुत्या परमेश्वरस्य कण्ठत एव गुणत्वप्रतिपादनेन 'आनन्दं ब्रह्मणो विद्वान्' इत्यादाविवेश्वरसम्बन्धित्वेन श्रुतानन्दादीनामेव गुणत्वसिद्धिः । नच 'केवलो निर्गुणश्च' इत्यादि गुणनिषेधानुरोधेन 'यः कालकालो गुणी'त्यत्र 'अगुणी' इति च्छेदाश्रयणीयेति वाच्यम् । बाधकं विना आनुमानिकाकारप्रश्लेषानाश्रयणात् । 'केवलो निर्गुणश्च' इत्यत्रापि 'अनिर्गुण' इति च्छेदसम्भवेन तस्य बाधकत्वानवधारणाच्च । 'निर्गुण'इति धर्मसामान्यनिषेधपरस्य 'एको देवः सर्वभूतेषु गूढः' इत्यादिविशेषगुणविधायकपूर्ववाक्याविरोधाय तदितरहेयगुणविषयत्वस्यैव न्याय्यत्वाच्च । अन्यथा समुच्चेतव्याभावेन 'निर्गुणश्च'इति समुच्चयार्थक'च'शब्दानुपपत्तिरित्युक्तम् (२)॥

किञ्च 'अगुणि'इति च्छेदाश्रयणेऽपि न गुणसामान्याभावसिद्धः । गुणाभावरूपधर्मस्यैव तेन विधानात् तत्र 'अ'कारस्य 'अनश्व' इत्यादाविव 'नार्षेयं वृणीते' इत्यादाविव च प्रतीतैकवाक्यता निर्वाहाय पर्युदासस्यैवावश्याश्रयितव्यत्वेच ईश्वरे गुणिमात्रभिन्नत्वापत्त्या जीवात् भेदस्यापि दुर्निवारत्वापाताच्च । नच 'तत्त्वमसि' इत्यादि जीवेश्वरभेदप्रतिपादक-

---

(१) 'सर्वं ज्ञः कालकारो गुणी सर्वविद्यः' इति शाङ्करभाष्यपाठम् ॥

(२) 'तथासति समुच्चयप्रसिद्ध चकारानुपपत्तेः' इति प्रथमपरिच्छेदे उक्तम् इत्यर्थः ॥

श्रुत्यविरोधायात्र 'गुणि'शब्देन जीवव्यतिरिक्तमेव विवक्षितमिति वाच्यम् । तथापीश्वरे जडभेदाऽनिवारणात् । 'अगुणी सर्वविद्यः' इत्येतदविरोधाय 'तत्त्वमसी'त्यस्यैवान्यार्थपरत्वाश्रयणापत्तेश्च ॥ नच 'अगुणी' इत्यस्य सामान्यत्वेन 'तत्त्वमसी'त्यस्यच विशेषविधित्वेन 'अगुणी' इत्यस्यैव सङ्कोचो युक्त इति वाच्यम् । तुल्यन्यायतया 'एको देवः' इत्यादिविशेषविध्यनुरोधेन 'केवलो निर्गुणश्च' इति सामान्यनिषेधस्य विशेषपरत्वाश्रयणमित्युक्तमेव । तस्मात् संयद्वामत्वादिगुणवतः ईश्वरस्य तद्रहितजीवात् भेदसिद्धिरविकलेति ॥

॥ इति छान्दोग्य-श्वेताश्वतरश्रुत्या ईश्वरस्य जीवाद्भेदसिद्धिकथनम् ॥

नचोपासनाविषयत्वात्संयद्वामत्वादिना पारमार्थिकत्वेन न तत ईश्वरस्य जीवात् पारमार्थिकभेदसिद्धिरिति वाच्यम् । तथासत्युपासनाविषयत्वापराधेन संयद्वामत्वादीनां **'स आत्मानमुपासीत मनोमयः प्राणशरीरं भारूपमाकाशात्मानं कालरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वविदमत्याप्तमवाक्यानादरम्'** इत्याद्युपासना विधिप्रतिपन्नात्मात्मत्व-मनोजवत्वादि(जयत्वादि-पा)धर्माणां वा व्यावहारिकत्वस्याप्यापत्तेः । तैरीश्वरे जीवात् व्यावहारिकभेदस्याप्यसिद्ध्यापत्तेः ॥

नच तेषां 'नेह नाना' इत्यादिना निषिद्धत्वेन पारमार्थिकत्वव्यतिरेकसिद्धेः दैवादेव व्यावहारिकत्वमापतितमिति वाच्यम् । निषिद्धत्वमात्रेण पारमार्थिकत्वत्यागे च तत एव तेषां व्यावहारिकत्वप्रातिभासिकत्वत्यागापत्तेः । प्रकारान्तरासम्भवादेव तेषां तत्त्वमाश्रीयत इति चेन्न । शून्यवाद्यभ्युपगतप्रकारान्तरसत्वादित्यलम् ॥

## ॥ अथ जीवचैतन्यस्य अपहतपाप्मत्वादिधर्माणां निराकरणम् ॥

अपहतपाप्मत्वादेश्च जीवेशयोः पारमार्थिकभेदसिद्धिः । 'एष आत्मा विपापो विजिघित्स' इत्यादिश्रुत्यैव तत्सिद्धेः ॥

नच 'तत्सुकृत तत् दुष्कृतैर्विधूनते विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति जीवेऽप्यपहतपाप्मत्वादिकमस्तीति वाच्यम् । जीवनिष्ठापहतपाप्मत्वादेरीश्वरज्ञानसाध्यत्वादीश्वरे च तस्य स्वतः सिद्धत्वेन तस्यैष(व)अपहतपाप्मादिशब्दमुख्यार्थत्वात् ॥

ननु 'अनन्वावगतं पुण्येनानन्वावगतं पापेन तीर्णो हि तदा हृदयस्य शोकान्भवति' (छां-उ) इति स्वापविषये संसारिष्वप्यहतपाप्मत्वं स्वाभाविकमस्तीति अवगम्यत इति चेन्न । संसारिगतापहतपाप्मत्वस्य कारणाधीनतयाऽऽत्मस्वरूपत्ववत् तदनधीनत्वरूप-स्वाभाविकत्वायोगात् । पाप्मनोऽन्तःकरणपरिणामत्वेनान्तःकरण इव संसारिचैतन्ये ज्ञान-जन्यतन्निवृत्तेरभावेन तदत्यन्ताभावस्यैव सत्त्वेन तस्यात्यन्ताभावस्य कारणानधीनतया तत्स्वाभाविकत्वं युज्यत इति चेन्न । **'पापीयान् भवति' 'पापिनां पापगणानां यः करोति नराधम'** इत्यादिश्रौतस्मार्तादिव्यवहारसिद्धपापसम्बन्धस्य मृत्परिणामभूतघटादि-सम्बन्धस्य भूतलादाविव प्रमाणसिद्धत्वेन जीवचैतन्येऽपि प्रमाणसिद्धसम्बन्धेन तदत्यन्ता-भावस्यासिद्धेः । प्रमाणसिद्धसम्बन्धेनैव तदत्यन्ताभावस्य साधनानधीनतया स्वाभाविकत्वौ-चित्याच्च । अपहतपाप्मत्वस्य जीवचैतन्यस्वभावत्वे ब्रह्मणीव तत्रापि सर्वदा संसारानुप-लम्भप्रसङ्गाच्च । ब्रह्मवद्वस्तुतो(वस्तुनो-पा) संसारित्वापत्तेश्च ॥

ननु वस्तुतो जीवात्मनि न संसारः 'हृदयस्य शोकः कामा यस्य हृदि स्थिताः' इत्यन्तः-करणस्यैव संसाराभ्युपगमात् । नचैवं जीवे संसारानुपलम्भप्रसङ्गः । तस्योपलम्भारोप इत्यभ्युपगमात् इति चेन्न । अथाऽपि संसारभ्रम-तदत्यन्ताभावरूपवैधर्म्येनैव जीवेश्वरभेद-सिद्ध्यनपायात् । नच तद्भ्रमोऽप्यन्तःकरणमात्रधर्म इति शक्यमभ्युपगन्तुम् । तथासति प्रमातिरेकेण परमते संसारपदार्थस्यैवाभावेन जीवचैतन्यस्यच कदापि न तादृशसंसार-सम्बन्धोऽस्तीति, तत्त्वज्ञानेन संसारनिवृत्त्यर्थं मुमुक्षुरूपाधिकारिविशेषणाभावादेव, श्रवणादौ प्रवृत्त्यभावापत्तेः । यस्याज्ञानं भ्रमस्तस्येति पराभ्युपगमात् । भ्रममात्रस्याविद्यादित्रितयान्तः-करणस्य च तादृशभ्रमाश्रयत्वेन बन्धमोक्षयोरवैयधिकरण्याय जीवचैतन्यस्यैव संसारित्वा-पादकभ्रमाधारतया अवश्याभ्युपेयत्वाच्च । अन्तःकरणवृत्तिविशेषमात्रस्य प्रमाणवृत्तित्वेन भ्रमत्वानुपपत्तेश्च ॥

यत्तु प्रमाणाधीनान्तःकरणवृत्तिरेव प्रमाणं नतु तद्वृत्तिमात्रम् । तथाच दोषाधीनान्तः-करणवृत्तेरपि भ्रमस्सम्भवतीति । तन्न । एवमप्यन्तःकरणस्यैव भ्रमवत्वेन जीवचैतन्यस्या-तथात्वेनासंसारित्वापत्त्या श्रवणादिजनितनिर्विचिकित्साज्ञानेनापि न तस्य मुक्तिः, किन्तु

अन्तःकरणस्यैवेत्यापत्तेः । भ्रमोपादानमज्ञानमिति पराभ्युपगता अज्ञानलक्षणस्यान्तःकरणेति व्याप्त्यापत्तेश्च ।।

एतेनैवाविद्यावृत्तिरूपभ्रमः, स एव जीवचैतन्यस्य बन्ध इति प्रत्युक्तम् । तस्याऽप्यविद्यापरिणामभूतस्याऽप्यविद्या मात्रधर्मत्वेन जीवचैतन्यधर्मस्यायोगेन तं प्रति बन्धत्वानुपपत्तेः । तथाचास्मिन् पक्षेऽपि जीवचैतन्यस्योक्तरीत्या बन्धाभावादेव न तस्य मोक्षः । किन्तु अविद्याया एवेत्यापन्नम् । नह्यन्यनिष्ठेन बन्धत्वेन स्वीकृतेन दुःखादिविषयकभ्रमेणान्यस्य जीवचैतन्यस्य स्वानिष्ठेन बन्धत्वं युज्यते । नच 'तरति शोकमात्मवित्' इत्यादिश्रुत्या जीवचैतन्यस्यैव मुक्त्याऽवेदनात् तत्प्रामाण्यनिर्वाहाय तस्यैवान्तःकरण तादात्म्यापन्नस्य अविद्या तादात्म्यापन्नस्य वा, तदुभयधर्मभूतभ्रमदुःखादिरूप बन्धवत्वमभ्युपगतमिति वाच्यम् । 'एष आत्माऽपहत पाप्मा' 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतिप्रामाण्यनिर्वाहाय –

'अयमात्मा ब्रह्म' 'तत्त्वमसि' इति
'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'

'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूत योनिं परिपश्यन्ति धीराः'

'नान्तःप्रज्ञं न बहिःप्रज्ञं चतुर्थः शिवोऽद्वैतः'
'चतुर्थं शिवमद्वैतं मन्यन्ते स आत्मा स विज्ञेय'

इत्यादिश्रुतिप्रतिपन्ननिर्विशेषचैतन्याभिन्नत्वश्रुतिप्रतिपादकश्रुतिप्रामाण्यनिर्वाहाय च 'तरति शोकमात्मवित्' इत्यादिमोक्षप्रतिपादकश्रुतीनामपि 'एतत् सर्वं मन एव' इति सावधारणश्रुतिप्रामाण्यनिर्वाहायान्तःकरणविषयत्वोपपत्तेस्तदनुसरणाय चैतन्यान्तःकरणादितादात्म्यापन्नत्वस्यानङ्गीकार्यत्वात् ।।

नच 'ब्रह्मवेद ब्रह्मैव भवति' इत्यादिश्रुत्योक्तरीत्या अज्ञानान्तःकरणयोरेव ब्रह्मवित्वात्, तयोश्च जडत्वेन चैतन्याभेदायोगेन जीवचैतन्यस्यैव कथञ्चित् बन्धवत्वं, तन्निवर्तकज्ञानवत्वं चाङ्गीकृत्य तस्यैव च ज्ञानसाध्यब्रह्माभिन्नत्वं बोध्यत इति वाच्यम् । जडत्वेन चैतन्यभेदा-

योग इत्यस्यानुमानतया तदपेक्षया तदभेदाऽवेदकश्रुतेः प्रबलत्वेनोदाहृतश्रुतीनां मुख्यार्थमित्युक्त्यैव तत्प्रामाण्यापगमस्योचितत्वात् । तस्मादपहतपाप्मत्वादिकं जीवचैतन्ये साधनाधीनतया स्वाभाविकं नेत्येवमकामेनापि स्वीकार्यमिति न कोऽपि दोषः ॥

॥ इति जीवचैतन्यस्य अपहतपाप्मत्वादिधर्माणां निराकरणम् ॥

नचैवं बन्धः प्रामाणिक इति सिद्धान्तविरोधः,'परं ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते' इति अपहतपाप्मत्वादेर्बन्धस्य च स्वाभाविकत्वौपाधिकत्वप्रतिपादकश्रुतिविरोधश्चेति वाच्यम् । अस्यापदार्थत्वादवाक्यार्थत्वाच्च ॥

'स्वेन रूपेणाभिनिष्पद्यते' इत्यस्य कारणानधीनाऽनागन्तुकस्वरूपेण समानाधिकरणदुःखप्रागभावा-समानकालीनदुःखनिवृत्तिविशिष्टेन 'हेतूच्छेदपुरुषव्यापारादिति'न्यायेन तादृशदुःखप्रयोजकाज्ञानादिनिवृत्तिविशिष्टेन वाऽऽकारेणावस्थितो भवतीति । 'तरति शोकमात्मवित्' इत्यादिवाक्यान्तरपर्यालोचनयार्थप्रतीतेर्बन्धः प्रामाणिक इति सिद्धान्तरवस्यापि अनादिः सान्त इत्यर्थपरत्वेन तद्विरोधाप्रसराच्चेति, ज्ञानाज्ञानाभ्यां च जीवेशयोः परस्परभेदसिद्धिः । नच तत्र ज्ञानाज्ञाने असिद्धे । 'ज्ञाज्ञौ द्वावजावीशानीशौ' इतिश्रुत्या तत्र तत्सिद्धेः, 'पुरमेकादशद्वारमजस्यावर्जचेतसः।(१) अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते' (कठ-उ-२-२-१) इति 'दश वै पुरुषे प्राणाः आत्मैकादश' इति 'आत्म'शब्दार्थमनःसहितानां बहिरिन्द्रियाणां प्रमातुरर्थसम्बन्धोपायत्वेन द्वारत्वं तद्योगि, अवर्जचेतसः= नित्यचैतन्यस्वरूपस्य, अजस्य= परमेश्वरस्य, पुरं= देहम्, इममधिष्ठाय, न शोचति, जीवः ईश्वरवदलिप्यमानस्तिष्ठतीत्यर्थः । विमुक्तश्च= अधुनाप्यज्ञानशून्य एव, विमुच्यते, देहावसाने, एवं कठवल्लीश्रुतौ संसारदशायामेव शोकहानेरविद्याहानेश्चोक्तेः कथं जीवस्याज्ञानमिति चेन्न ।

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम'

इत्यशुद्धमुदकं शुद्धे सिक्तं तादृगेव यथा भवति, एवं ब्रह्मणि सायुज्यं गता, विजानतः=

(१) 'अजस्यावक्रचेतसः इति' इदानीन्तनपाठः । विजयीन्द्रस्वामिभिः अवर्जचेतसः इति पाठं गृहीत्वा अर्थः कृतः ॥

परमात्मस्वरूपं साक्षात् कृतवतो, जीवस्यात्मापि= स्वरूपमपि, ब्रह्मसदृशमेव भवतीत्यर्थे पूर्वमन्त्रे उक्तस्य ज्ञानिन एव ज्ञानतत्प्रयुक्तशोकाद्यभावो युक्तः । दृष्टान्तानुसारेण प्राप्तात्माशुद्धेर्ज्ञाननिवर्त्यार्या अज्ञानरूपत्वे एव पर्यवसानात् । नचाज्ञानमन्तःकरणनिष्ठमेवेति जीवे तदभावः स्वाभाविक इति वाच्यम् । 'अहमज्ञ' इत्यनुभवेन 'ममान्तःकरणे ज्ञानम्' इत्यननुभवेन च, जीवे एव अज्ञानस्यसिद्धेः ॥

'अनीशश्चात्मा मुह्यते भोक्तृभावात्' इति श्रुतिप्रतिपन्नभोक्तृभावरूपहेतुतोऽपि जीवस्याज्ञानसिद्धेश्च । **'स यथा प्रियया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं एवमेवाऽयमात्मा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्'** इति सुप्तिकाले जीवस्य बाह्यान्तरगोचराज्ञानवत्वस्य श्रुतत्वाच्च । 'तुरीयं तत्सर्वदृक् सदा' इति परमेश्वरस्याज्ञानविरोधिसर्वविषयकसाक्षात्कारवत्वस्यसदाविद्यमानत्वश्रुत्या सार्वकालिकाज्ञानाभाववत्वस्य जीवव्यावृत्तस्य सिद्धेश्च ॥

ननु –

**'अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कार समन्वितो यः ।**
**बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यपरोऽपि दृष्टः'**

इति जीवात्मनोर्ज्ञानवत्त्वावगमात् कथं तत्राज्ञानं वास्तवम्? तादृशाज्ञानाभावे च कथं ततो वास्तवभेदसिद्धिः?, अत एव छान्दोग्ये 'अहरहरेताः प्रजाः ब्रह्मगच्छत्यत एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः'(छां.उ.८-३-२) इति 'अनृतत्वम्' अज्ञानस्य श्रूयत इति चेत् । तच्छुत्या 'रवितुल्यरूपः' इति रवितुल्यस्वरूपत्ववर्णनेन जीवस्य स्वप्रकाशज्ञानरूपत्वसिद्ध्या 'अहम्' इत्यनुभवेन च तद्विषयकज्ञानाभावसिद्धावपि परमात्मविषयकज्ञानाभावत्वस्यासिद्धेः । अन्यथा 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यनीशात्मनो जीवस्याज्ञानवत्वाऽवेदकश्रुतेर्निर्विषयत्वोपपत्तेः[१]॥

यत्तु ''तथाऽपि न तदज्ञानं वास्तवं 'अनृतेन हि प्रत्यूढाः' इति तस्यानृतत्वश्रवणादि''ति। तन्न । 'तम आसीत्तमसा गूळमग्रे' इति 'तमः'शब्दिताज्ञानस्य परमेश्वरस्वरूपाच्छादकत्व-

(१) 'निर्विषयत्वापत्तेः' इति पाठः स्यात् ।

प्रतिपादनपूर्वकम् 'आसीत्' इति सत्त्वाभिधानेन छान्दोग्यगत'अनृत'शब्दस्याज्ञानविरोधिपरत्वोपगमात् । गत्यर्थस्य ज्ञानार्थत्वं सुप्रसिद्धमेव । तथा च श्रुत्यन्तरम् 'अन्यद्युष्माकमन्तरं बभूव' इति । तथाच जीवस्य कथञ्चित् सविषयकाज्ञानराहित्येऽपि परमात्मविषयकपारमार्थिकाज्ञानवत्त्वं दुर्वारमेव ।।

तथाचोक्तं 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः'(भ-गी-५-१५) इति । नच ज्ञानमन्यदेव । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्या ज्ञानरूपत्वस्य ब्रह्मलक्षणत्वप्रतीतेः 'अनन्त'शब्दसमभिव्याहारेण ज्ञानरूपत्वरूपब्रह्मलक्षणस्यापरिच्छिन्नज्ञानरूपत्वे एव पर्यवसानात् ।।

वस्तुतस्तु 'अङ्गुष्ठमात्रो रवितुल्यरूपः' इत्यन्तं पूर्ववाक्यं परमेश्वरपरमेव न जीवपरम्[१]। 'शब्दादेव प्रमितः' (ब्र-सू-१-३-२४) इत्यधिकरणे 'अङ्गुष्ठमात्रः पुरुषो मध्यः'(कठ-उ-२-१-१३) इत्येतद्वाक्यगताङ्गुष्ठमात्रत्वस्य परमात्मधर्मत्वव्यवस्थापनात् । रवितुल्यरूपत्वस्य जीवात्मनि योग्यानुपलब्धिबाधितत्वाच्च ।।

यद्यपि परमात्मन्यपि तस्य योग्यानुपलब्धिस्तुल्या । तथाऽपि 'परास्य शक्तिर्विविधैव श्रूयते' 'विचित्रशक्तिः पुरुष पुराणो नचान्येषां शक्तयस्तादृशास्स्युः'[२] इत्यादिश्रुतिप्रतिपन्नविचित्रशक्त्या परमात्मना स्वनिष्ठरवितुल्यरूपत्वं श्रवणादिसाधनसम्पत्तिरहितानस्मदादीन् प्रति आच्छाद्यते, स्वातन्त्र्यात् स्वेच्छयैव कांश्चित् प्रति तदाच्छाद्यते कांश्चित्तु प्रति साक्षात्कारगोचरः क्रियत, इति न तद्वाक्यस्य परमात्मविषयत्वे काऽप्यनुपपत्तिः । अत एव **'सङ्कल्पाहङ्कारसमन्वितो यः बुद्धेर्गुणेनात्मगुणेन चैव ।**[३] **'ह्याराग्रहमात्रो ह्यपरोऽपि दृष्टः'** इति तदुत्तरवाक्यमपि हिशब्दसहितभिन्नार्थक'अपर'शब्द-'आराग्रमात्र'शब्दसमभिव्याहृतमुपपद्यते । अत एव तदुत्तरवाक्ये **'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः'**(श्वे-उ-३-५) इति 'जीव'शब्दः । अन्यथा'अङ्गुष्ठमात्र'परिमाणान्तरव्यावर्तक'मात्र'पदवैयर्थ्यात् इत्युक्तम् ।।

---

(१) 'परमेश्वरपरमेव जीवपरम् इति' ताळपत्रस्थपाठः ।।

(२) 'आत्मनि चैवं विचित्राश्च हि'( ब्र-सू-२-१-२९) इत्यत्र भाष्योदाहृतश्वेताश्वतरश्रुति वाक्यम् ।।

(३) 'यः स बुद्धेर्गुणेनात्मगणेन चैव' इति ताळपत्रस्थ पाठः ।।

यत्तु 'अनृत'शब्दस्यासत्येव प्रसिद्धे 'ऋत'शब्दित ज्ञानविरुद्धं न तदर्थः । तथासति प्रसिद्धार्थत्यागापत्तेरिति । तन्न । 'नानृतं वदेत्' इत्यादौ 'अनृत'शब्दस्यासद्विषये स्वरूपेण सत्ये प्रसिद्धत्वेन 'अनृतेन हि प्रत्यूढाः' इत्यत्रापि 'अनृत'शब्दस्यासद्विषयकस्वरूपसद्वस्तु परत्वापत्त्या 'अनृत'शब्दित-ज्ञानतिरस्कृत-प्रकाशानां जीवचैतन्यानामेवासत्वापातात् । नच 'अनृत'शब्दस्य 'तदेवर्तं तदुसत्यमाहुः' (म-ना-उ-१-६) इति श्रुतौ 'ऋत'शब्दस्य सत्ये प्रयोगात् 'ऋतं न भवतीत्यनृतम्' इत्यज्ञानस्य सत्यभिन्नत्वप्रतीतेः, तस्य च मिथ्यात्वं विना निर्वाहायोग इति वाच्यम् । तथाऽपि 'नानृतं वदेत्' 'सत्यं वद' 'सत्यकामः' 'सत्यवाक्यो दृढव्रत' इत्यादेः स्वविषयाप्रवर्तमानस्य 'अनृतादि'शब्दस्य असदसर्थके वस्तुनि च[१].....न्नत्वेन 'अनृतेन हि प्रत्यूढाः' इत्यत्रापि तस्य ज्ञानी स्वविषयके प्रवर्तमानस्याद्यर्थविषयकवस्तु परत्वावश्यम्भावेन, तद्विषयत्वेन स्वीकृतस्य ब्रह्मचैतन्यस्य जीवचैतन्यस्य वा, सद्वैलक्षण्यापत्तेः । तत्परिहारायास्मदुक्तार्थपरत्वस्यैव स्वीकार्यत्वात् । 'अथ न स पुनरावर्तते न स पुनरावर्तते'(छा-उ-८-१५-१) इति मुक्तस्य अनावृत्तिश्रवणात् मुक्तेः सादित्वे च तदनुपपत्तेरनादिमुक्तजीवो वाच्यः । नच जीवस्यानादितो मुक्तत्वं बन्धकाज्ञानस्य स्वरूपेण सत्यत्वे वास्तवं युज्यते ॥

किञ्च संशय-विपर्यय-मिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्तस्तन्नित्य बोधस्तत्स्वरूपमेवावस्थिति –

**'स शान्तमचलमद्वयविज्ञानघन एवास्मि ।**

**तदेव परमं धाम तदेव शिखा'**(प-हं-उ-१)[२]

इति **परमहंसोपनिषद्वाक्य**पर्यालोचनयाऽप्यज्ञानस्य नित्यनिवृत्तत्वमपेक्षितव्यम् । नच तत्संशयादिहेतुभूतस्याज्ञानस्य मिथ्यात्वं विना युज्यते ॥

अपि च मायामधिकृत्य 'नित्यनिवृत्ताऽपि मूढात्मेव' इति 'दृष्टाऽस्य सत्वमसत्वं च दर्शयति' (नृ-उ-ता-उ-९) तथा 'नाविद्याऽनुभवात्मनि' (नृ-उ-ता-उ-९)[३] इति तापनीय-

(१) व्युत्पन्नत्वेन इति पाठः स्यात् ॥

(२) 'तं शान्तमचलमद्वयानन्द विज्ञानघन एवास्मि' इति इदानीन्तन पाठः ॥

(३) 'किञ्चनानुभूयते नाविद्याऽनुभवात्मनि स्वप्रकाशे' इति पूर्ण पाठः ॥

वचनेन अविद्यायाःकण्ठरवेणैव नित्यनिवृत्तत्वमावेद्यते, नित्यनिवृत्तत्वं च त्रिकाल-सर्वदेशीय-निषेधप्रतियोगित्वरूपं मिथ्यात्वरूपं मिथ्यात्वे एव पर्यवस्यति । तथा च कथं तादृशाज्ञानवत्व-तद्राहित्याभ्यां जीवेश्वरयोर्वास्तवभेदसिद्धिरिति चेन्न । (१)मुक्तेः सादित्वेऽपि श्रुतिबलेनैव मुक्तस्यानावृत्त्युपपत्तेरज्ञानस्य नित्यनिवृत्तत्वे तन्निवर्तकज्ञानार्थं श्रवणादीनामनपेक्षितत्वेन तद्विध(धि)वैयर्थ्यात् । अविद्यानिवृत्त्यनिवृत्तित्वाऽवेदकोदाहृत-श्रुतिवचनस्य –

'तद्विष्णोःपरमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम्' (ऋ-सं-१-२२-२०)

इत्यादिश्रुति(प्रति)पन्नाज्ञानविरोधः सदा परमात्मस्वरूपविषयकज्ञानवन्नित्यविषयत्वोपपत्तेः । नचैवमपि नित्यनिवृत्तिप्रतिपादकश्रुत्युपपत्तौ नित्यसूरि-तदितरसाधारण-जीव-चैतन्यमात्रेऽपि तदत्यन्ताभावस्वीकारो युक्तः । येन त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वरूपं तस्मिन् मिथ्यात्वं सिद्ध्येदिति, जीवमुक्तेरनादित्वे अर्चिरादिगतिवैयर्थ्याच्च । अनाद्यविद्या-काम-कर्मरूपदुःखहेतूच्छित्तेरेव मुक्तित्वेन तस्याः आगन्तुकत्वेऽपि ध्वंसरूपतया नित्यत्वोपपत्तेश्च । ध्वंसनित्यत्वस्य च लोकतः सिद्धत्वात् ॥

नच दुःखनिवृत्तिमात्रस्य मोदो निरतिशयसुखस्य वा, स्वरूपभूतनित्यसुखाङ्गीकारपक्षे, तदभिव्यक्तेर्वा साधनाधीनतयोत्पत्तिमत्वे उत्पन्नस्य च भावस्य विनाशित्वनियमात्(२) तन्नाशाऽवश्यम्भावेन वैशेषिकादिस्वीकृतमुक्तितो न विशेष इति वाच्यम् । तथासति= जीव-ब्रह्मैक्यस्य मुक्तित्वपक्षेऽपि, तस्य 'ब्रह्मवेद ब्रह्मैव भवति' इति श्रुतिप्रतिपन्नज्ञानरूप-साधनाधीतयोत्पत्त्यवश्यम्भावेनोक्तनियमात् विनाऽवश्यम्भावेन दोषसाम्यात् । ज्ञानेनैक्याभिव्यक्तिरिति स्वीकारेऽपि उक्तदोषसाम्याच्च । आवरणानिवृत्तिरेवाभिव्यक्तिरिति स्वीकारेऽपि तस्याऽपि ज्ञानादिरूपसाधानाधीनत्वेन मां प्रति त्वदुक्तदोषस्यैवापाताच्च । 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इति श्रुत्या 'अविनाशी'त्यनेनापौनरुक्त्यायोच्छित्तिरहितधर्म-वत्त्वं तात्पर्यतः प्रतिपाद्यत इत्यङ्गीकारे च समः समाधिः, 'धर्म'पदवैयर्थ्यं च भवति॥

---

(१) 'चेन्न । न मुक्तेः 'इति ताळपत्रस्थ पाठः ॥

(२) 'निगमनात् इति' ताळपत्रस्थ पाठः स्यात् ॥

यत्तु 'अनृत'शब्दस्यासत्येव प्रसिद्धे 'ऋत'शब्दित ज्ञानविरुद्धं न तदर्थः । तथासति प्रसिद्धार्थत्यागापत्तेरिति । तन्न । 'नानृतं वदेत्' इत्यादौ 'अनृत'शब्दस्यासद्विषये स्वरूपेण सत्ये प्रसिद्धत्वेन 'अनृतेन हि प्रत्यूढाः' इत्यत्रापि 'अनृत'शब्दस्यासद्विषयकस्वरूपसद्वस्तु परत्वापत्त्या 'अनृत'शब्दित-ज्ञानतिरस्कृत-प्रकाशानां जीवचैतन्यानामेवासत्वापातात् । नच 'अनृत'शब्दस्य 'तदेवर्तं तदुसत्यमाहुः' (म-ना-उ-१-६) इति श्रुतौ 'ऋत'शब्दस्य सत्ये प्रयोगात् 'ऋतं न भवतीत्यनृतम्' इत्यज्ञानस्य सत्यभिन्नत्वप्रतीतेः, तस्य च मिथ्यात्वं विना निर्वाहायोग इति वाच्यम् । तथाऽपि 'नानृतं वदेत्' 'सत्यं वद' 'सत्यकामः' 'सत्यवाक्यो दृढव्रत' इत्यादेः स्वविषयाप्रवर्तमानस्य 'अनृतादि'शब्दस्य असदसर्थके वस्तुनि च[१].....न्नत्वेन 'अनृतेन हि प्रत्यूढाः' इत्यत्रापि तस्य ज्ञानी स्वविषयके प्रवर्त-मानस्याद्यर्थविषयकवस्तु परत्वावश्यम्भावेन, तद्विषयत्वेन स्वीकृतस्य ब्रह्मचैतन्यस्य जीव-चैतन्यस्य वा, सद्वैलक्षण्यापत्तेः । तत्परिहारायास्मदुक्तार्थपरत्वस्यैव स्वीकार्यत्वात् । 'अथ न स पुनरावर्तते न स पुनरावर्तते'(छा-उ-८-१५-१) इति मुक्तस्य अनावृत्तिश्रवणात् मुक्तेः सादित्वे च तदनुपपत्तेरनादिमुक्तजीवो वाच्यः । नच जीवस्यानादितो मुक्तत्वं बन्धकाज्ञानस्य स्वरूपेण सत्यत्वे वास्तवं युज्यते ॥

किञ्च संशय-विपर्यय-मिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्तस्तन्नित्य बोधस्तत्स्व-रूपमेवावस्थिति –

**'स शान्तमचलमद्वयविज्ञानघन एवास्मि ।**
**तदेव परमं धाम तदेव शिखा'**(प-हं-उ-१)[२]

इति **परमहंसोपनिषद्वाक्य**पर्यालोचनयाऽप्यज्ञानस्य नित्यनिवृत्तत्वमपेक्षितव्यम् । नच तत्संशयादिहेतुभूतस्याज्ञानस्य मिथ्यात्वं विना युज्यते ॥

अपि च मायामधिकृत्य 'नित्यनिवृत्ताऽपि मूढात्मेव' इति 'दृष्टाऽस्य सत्वमसत्वं च दर्शयति' (नृ-उ-ता-उ-९) तथा 'नाविद्याऽनुभवात्मनि' (नृ-उ-ता-उ-९)[३] इति तापनीय-

(१) व्युत्पन्नत्वेन इति पाठः स्यात् ॥

(२) 'तं शान्तमचलमद्वयानन्द विज्ञानघन एवास्मि' इति इदानीन्तन पाठः ॥

(३) 'किञ्चनानुभूयते नाविद्याऽनुभवात्मनि स्वप्रकाशे' इति पूर्ण पाठः ॥

वचनेन अविद्यायाःकण्ठरवेणैव नित्यनिवृत्तत्वमावेद्यते, नित्यनिवृत्तत्वं च त्रिकाल-सर्वदेशीय-निषेधप्रतियोगित्वरूपं मिथ्यात्वरूपं मिथ्यात्वे एव पर्यवस्यति । तथा च कथं तादृशाज्ञानवत्व-तद्राहित्याभ्यां जीवेश्वरयोर्वास्तवभेदसिद्धिरिति चेन्न । [१]मुक्तेः सादित्वेऽपि श्रुतिबलेनैव मुक्तस्यानावृत्त्युपपत्तेरज्ञानस्य नित्यनिवृत्तत्वे तन्निवर्तकज्ञानार्थं श्रवणादीनामनपेक्षितत्वेन तद्विध(धि)वैयर्थ्यात् । अविद्यानिवृत्त्यनिवृत्तित्वाऽवेदकोदाहृत-श्रुतिवचनस्य –

'तद्विष्णोःपरमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम्' (ऋ-सं-१-२२-२०)

इत्यादिश्रुति(प्रति)पन्नाज्ञानविरोधः सदा परमात्मस्वरूपविषयकज्ञानवन्नित्यविषयत्वोपपत्तेः । नचैवमपि नित्यनिवृत्तिप्रतिपादकश्रुत्युपपत्तौ नित्यसूरि-तदितरसाधारण-जीव-चैतन्यमात्रेऽपि तदत्यन्ताभावस्वीकारो युक्तः । येन त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वरूपं तस्मिन् मिथ्यात्वं सिद्ध्येदिति, जीवमुक्तेरनादित्वे अर्चिरादिगतिवैयर्थ्याच्च । अनाद्यविद्या-काम-कर्मरूपदुःखहेतूच्छित्तेरेव मुक्तित्वेन तस्याः आगन्तुकत्वेऽपि ध्वंसरूपतया नित्यत्वोपपत्तेश्च । ध्वंसनित्यत्वस्य च लोकतः सिद्धत्वात् ॥

नच दुःखनिवृत्तिमात्रस्य मोदो निरतिशयसुखस्य वा, स्वरूपभूतनित्यसुखाङ्गीकारपक्षे, तदभिव्यक्तेर्वा साधनाधीनतयोत्पत्तिमत्वे उत्पन्नस्य च भावस्य विनाशित्वनियमात्[२] तन्नाशाऽवश्यम्भावेन वैशेषिकादिस्वीकृतमुक्तितो न विशेष इति वाच्यम् । तथासति= जीव-ब्रह्मैक्यस्य मुक्तित्वपक्षेऽपि, तस्य 'ब्रह्मवेद ब्रह्मैव भवति' इति श्रुतिप्रतिपन्नज्ञानरूप-साधनाधीतयोत्पत्त्यवश्यम्भावेनोक्तनियमात् विनाऽवश्यम्भावेन दोषसाम्यात् । ज्ञानेनैक्या-भिव्यक्तिरिति स्वीकारेऽपि उक्तदोषसाम्याच्च । आवरणानिवृत्तिरेवाभिव्यक्तिरिति स्वीकारेऽपि तस्याऽपि ज्ञानादिरूपसाधानाधीनत्वेन मां प्रति त्वदुक्तदोषस्यैवापाताच्च । 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इति श्रुत्या 'अविनाशी'त्यनेनापौनरुक्त्यायोच्छित्तिरहितधर्म-वत्त्वं तात्पर्यतः प्रतिपाद्यत इत्यङ्गीकारे च समः समाधिः, 'धर्म'पदवैयर्थ्यं च भवति॥

(१) 'चेन्न । न मुक्तेः 'इति ताळपत्रस्थ पाठः ॥

(२) 'निगमनात् इति' ताळपत्रस्थ पाठः स्यात् ॥

एतेन 'अनुच्छित्तिर्धर्मो यस्योसौऽनुच्छित्तिधर्मा' इति लाघवादेक एव बहुव्रीहिः नतु 'अनुच्छित्तयो धर्मा यस्य सोऽनुच्छित्तिधर्मेति' बहुव्रीहिगर्भबहुव्रीहिर्जघन्यवृत्तिद्वयाङ्गीकारे गौरवात् । नचैवं 'धर्म'पदवैयर्थ्यम् । यथोक्तविशेषणविशेष्यभावाङ्गीकारे तच्छङ्कानवकाशादिति निरस्तम् ॥

'अविनाशी' इत्यनेन पुनरुक्तितादवस्थ्यात् 'अनुच्छित्ति'रिति बहुव्रीहिबलेनैव नित्यत्वस्य धर्मत्वलाभेन 'धर्म'पदवैयर्थ्य-तादवस्थ्याच्चेति ॥

एतेन अविद्यानिवृत्तित्ववचनं नोक्तरीत्या सदाज्ञानवत् सूरिविषयत्वेनोपपपन्नम् । **'नित्यनिवृत्तापि मूढैरात्मैव दृष्टाऽस्य सत्वमसत्वं च दर्शयति'**[१] **'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशात् स्वसृष्टान् प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव'**[२] 'नाविद्याऽनुभवात्मनि' इत्यादिश्रुतीनां परमात्मविषयत्वप्रतीत्योक्तज्ञानविषयत्वे मानाभावादिति निरस्तम् ॥

'तुरीयं तत्सर्वदृक् सदा' इति श्रुत्येश्वरस्यापि सदा सर्वविषयकसाक्षात्कारत्वाऽवेदनेन, तथाऽपि तद्विषयक-तच्छ्रुतीनामप्यज्ञानविरोधिज्ञानवद्विषयत्वानपायात् ॥

यत्तु जीवस्यनित्यमुक्तत्वे अर्चिरादिगतिवैयर्थ्यं न, तस्यामोक्षार्थत्वाभावेऽपि ब्रह्मलोकावास्यर्थत्वसम्भवात् । तथा च श्रुतयः–

**'कामान्यः कामयते मन्यमानः स कामभिर्ज्जायते तत्र तत्र ।**
**पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः'**(आथ-उ-३-२-२)

**'तमेवं विद्वानमृत इह भवति'**
**'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिस्थिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते**(कठ-उ-२-३-१४)

---

(१) 'मूढैरात्मेव' इति इदानीन्तनपाठः ॥

(२) 'देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढो इव व्यवहरन्नास्ते माययैव इति' इदानीन्तन पाठः ॥

'योऽकामो निष्काम आप्तकाम आत्मकामो नास्य प्राणा
उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माऽप्येति'(१)

इत्याद्याः । अन्यथा 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मभावस्य वेदनसमानकालत्व-विरोध इति । तन्न । नित्यमुक्तस्य ब्रह्मलोकावाप्त्यर्थार्चिरादिगत्यादिप्रयोजनशून्यत्व-तादवस्थ्यात् । ब्रह्मभावस्य तद्वेदनसमानकालीनत्वोक्तिस्तु 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजति' इतिवदुपपन्नः ॥

किञ्च ब्रह्मवज्जीवचैतन्यमात्रस्य नित्यनिवृत्ताज्ञानवत्त्वेन नित्यमुक्तत्वे 'तद्यो यो देवानां प्रथमं प्रत्यबुध्यत स एव तदभवद्' इति सावधारणश्रुत्या क्रमेण ब्रह्मभावलक्षण-मुक्त्युक्तिः विरोधः । 'स सामभिरुन्नीयते ब्रह्मलोकम्' (ष-प्र-उ-५-५) 'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' (ष-प्र-उ-५-६) इति श्रुत्या अर्चिरादिमार्गेण ब्रह्मलोकं गतस्योपासकसज्जीवस्य ब्रह्मलोक एव मुक्तिसाधनीभूतज्ञानस्योत्पत्तिर्नहीति प्रतिपादना-नुपपत्तिः । तदन्येषाम् इहैव= श्रवणादिसाधनसम्पत्तिमताम् 'इहैव', सन्तोऽथ विद्मः तद्वयं नचेदिहावेदीन्महती विनष्टिः' (बृ-उ-६-४-१४) इतिश्रुत्या मोक्षसाधनब्रह्मज्ञानोत्पत्त्युक्त्यनुपप-त्तिश्च स्यात् ॥

अपि च –

'ब्रह्मवेद ब्रह्मैव भवति'
'यो वेदाऽहं ब्रह्मास्मीति'
'स इदं सर्वं भवति'
'तद्वैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च'

इति श्रुतिभिर्ब्रह्मभावस्य ज्ञानसमानकालत्वप्रतीतेः, मुक्तेः सदातनत्वेन तत्साधनत्वा-भिमतज्ञानस्य तदसाधनत्वापत्तिः, मुक्तिवत् श्रवणादिसाधनानापेक्षत्वापत्तिः । तथा अर्चिरादि-मार्गानपेक्षत्वापत्तिश्च स्यात् । नचैवं ताः श्रुतयः 'प्रतितिष्ठन्ति ह वै एता

(१) योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रमन्ति ब्रह्मैव सन् ब्रह्माप्येति बृ-उ-६-४-६ ॥

रात्रीरुपयन्ति'[१] इत्यादि श्रुतिवदर्थवादरूपा इति वाच्यम् । रात्रिः सत्रोपाय न प्रमित-फलयोरिव ब्रह्मवेदन-तद्भावरूपफलयोः समानकालताप्रतिपादनव्यपदेशनिर्वाहाङ्गीकारे[२] तयोरिव ज्ञानब्रह्मभावयोः, साध्य-साधनभावप्रत्यायकविधिकल्पनं विना तच्छ्रुतीनामर्थवाद-रूपत्वस्वीकारायोगात् । नच निष्फलविधिकल्पनमुपपद्यते । नच नित्यसिद्धस्य ब्रह्मभावस्य ज्ञानफलत्वं युज्यते । तस्मात् ''जीवाः ब्रह्मवन्ननित्यमुक्ताः''॥

एतेन नित्यमुक्तत्वरूपहेतुः ब्रह्मण्येव ब्रह्मभिन्नत्वरूपसाध्याभावव्याप्तत्वेन विरुद्ध इति निरस्तम् ॥

मुक्तेः सादित्वस्यैवोपेयत्वेन जीवस्येश्वरात् भेदस्य साधने बन्धनिवृत्तेरेव हेतूकरणेन परमेश्वरस्य च जीवात् भेदसाधने नित्यमुक्तत्वस्य हेतूकरणेन विरोधशङ्काऽप्रसरात् ॥

किञ्च सर्वज्ञत्व-सत्यकामत्व-सत्यधृतित्वादि-धर्मवत्वादीश्वरस्य, जीवस्य च तद्रहित-त्वात् तयोः पारमार्थिकभेदसिद्धिः । नच तेषामपारमार्थिकत्वेन न ततः सत्यभेदसिद्धिः इति वाच्यम् । 'सत्यकामः सत्यसङ्कल्पः सत्यधृतिः' 'सत्यः सो अस्य महिमा' 'सत्यधर्माय दृष्टये'(ई-उ-१५) इत्यादिना तेषां सत्यत्वाऽवेदनात् । नच तेषां मुक्तजीवसाधारण्यात् कथं तयोस्ततो मुक्तभेदसिद्धिरिति वाच्यम् । जीवसार्वज्ञादीनामन्याधीनत्वादीश्वरे च तद्विपर्ययात् । अन्यथा संसारिष्वपि सर्वज्ञत्वादिकं प्रथेत ॥

ननु जीवे ईश्वरापेक्षभेदवत् सर्वज्ञत्वाद्यभावस्याव्यावहारिकस्याङ्गीकारात् न संसारिषु तत्प्रथाप्रसङ्गः । जीवेन च तन्निवृत्तौ तदभेदावाप्तिवत् सर्वज्ञत्वादेरपि सिद्धस्यैव आप्तिरिति चेन्न । वास्तवस्वाभेदमादायेश्वरस्यैव[३] जीवस्यापि तमादाय सार्वज्ञाद्यापत्त्या तत्र व्यावहारिकस्यापि तदभावस्य अलब्धपदत्वात् व्यावहारिकाज्ञाननिवृत्तेः पारमार्थिकब्रह्म-स्वरूपत्ववत् व्यावहारिकसार्वज्ञादिनिवृत्तेरप्यद्वैतश्रुत्यविरोधाय पारमार्थिकब्रह्मस्वरूप-रूपत्वावश्यम्भावेन स्वतःसिद्धतया ज्ञानसाध्यत्वानुपपत्तेरेवाप्तिकर्मत्वानुपपत्तेश्च । नहि

---

(१) जै-सू-(४-३-१७) विचारितश्रुतिः ॥

(२) प्रतिपादव्यपदेशानिर्वाहाङ्गीकारे इति ताळपत्रस्थपाठः

(३) 'ईश्वरस्येव' इति पाठः स्यात् ॥

यद्यदभावात् प्रागेव स्वीयतया प्रमाणसिद्धं तत्तस्मिन् जातेऽपि तेन तेन प्राप्तमित्यविगीत-व्यवहारोऽस्ति ॥

किञ्च जीवस्य वस्तुतः सर्वज्ञेश्वराद्भिन्नत्वेन तदपेक्षव्यावहारिकभेदवत्वं युक्तम् । अन्यथा सर्वज्ञेश्वरेऽपि स्वापेक्षव्यावहारिकभेदवत्वप्रसङ्गात् । एतेन जीवंप्रति कुतः स्वस्मिन् विद्यमानमपि सार्वज्ञादिकं न स्फुरति? तस्य अविद्याऽवृतेश्वरचैतन्ये एव जीवेन आरोपितत्वात् । ईश्वरचैतन्ये विद्यमानं तत् तं प्रति श्रुत्येव तस्य स्वं प्रत्यनावृतत्वादिति निरस्तम् ॥

सार्वज्ञादेः स्वस्मिन् जीवारोपितत्वेनेश्वरस्फुरणविषयत्वे तुल्यन्यायतया जगत्कारण-सङ्घातस्य तेनासत्वेनैव निश्चयात् । अनेनेदं जगद्भवत्विितीच्छयेश्वरस्य तत्र प्रवृत्त्यभाव-प्रसङ्गात् । नहीदं मिथ्येति जानन् तत्र प्रवर्तमानो दृष्टचरः । सत्त्वेनेश्वरस्फुरणविषयत्वे च जीवस्येवेश्वरस्यापि भ्रान्तत्वापत्तेश्च ॥

वस्तुतस्तत्कल्पकजीवाभिन्नत्वेन जीवस्येवेश्वरस्यापि तत् कल्पकत्वस्य दुर्वारत्वात् । वस्तुतो कल्पकेश्वराभिन्नत्वेन जीवस्येश्वरस्येव तदकल्पकत्वापत्तेश्च (जीवस्येवेश्वरयोः कल्पकत्वा-पत्तेश्च-पा)। नच कल्पितभेदमादाय जीवेश्वरयोः कल्पकत्व-अकल्पकत्वव्यवस्थेति वाच्यम् । जीवस्य वस्तुतो कल्पकेश्वरभिन्नत्वेनेश्वरेणेव जीवेनाऽपि भेदकल्पनाऽयोगात् ॥

यद्यपि दर्पणाद्युपाधिसन्निधाने प्राग्भिन्नत्वेन निश्चितेऽपि मुखादौ भेदकधर्मकल्पनवत् एकस्मिन्नेव चैतन्ये अविद्योपाधिसन्निधाने चैतन्यभेदे भेदकधर्मकल्पनं सम्भवतीह । तथाऽपि तत्रेवात्र कल्पितभेद-भेदकधर्मवतः सकाशादन्यस्य कल्पकस्याभावेन चैतन्यभेद-भेदकधर्म-कल्पनमयुक्तम् ॥

यद्यपि च 'गौरोऽहं दर्पणे' इति कल्पनं गौरदेवदत्तेनैव क्रियते । तथाऽपि निर्विशेष-चैतन्यस्य निर्विशेषचैतन्यमदज्ञान इति तत्कल्पनाभिन्न....यरूपश्रुत्याद्यभावेन तथाविध-चैतन्यस्यैव स्वस्मिन् उपाधिवशात् भेद-भेदक-धर्मकल्पकत्वमयुक्तमेव । 'अनृतेन हि प्रत्यूढाः' 'तमसा गूढमग्रे'इत्यादिश्रुतौ 'अनृता'दिशब्दित'अज्ञान'सम्बन्धः चैतन्ये

प्रतीयते । तथाऽपि नासौ चैतन्यस्योक्तविधकल्पनकल्पकः । तच्छुत्या चैतन्यस्य तिरस्कृतत्वाऽवृतत्वयोरेव प्रतीतेः ॥

किञ्च दर्पणोपाधिसन्निधानात् गौरदेवदत्तादेरुक्तरीत्या भेदादिकल्पकत्ववत् निर्विशेषचैतन्यस्यैव स्वस्मिन् ज्ञानोपाधिसम्बन्धात् भेदकल्पकत्वे तत्र सर्वज्ञत्वादीनां कल्पितत्वासम्भवेन पारमार्थिकत्वप्रसङ्गः ॥

एवं च वस्तुतश्चैतन्यस्य निर्विशेषत्वभङ्गः उपाधेः सोपहितं यादृशं तत्र बिम्बत्वतदाश्रयभेद-प्रतिबिम्बत्वनियत-मालिन्यादिधर्मकल्पकत्ववत् बिम्बे-बिम्बत्वातिरिक्तधर्मकल्पकत्वादर्शनात् । अन्यथा बिम्बनिष्ठमवदातत्वादिकमपि कल्पितं स्यात् । चैतन्ये निर्विशेषत्वं च कल्पितं स्यात् ॥

किञ्चैवं प्रतिबिम्बत्वाभिमते जीवचैतन्ये किञ्चिज्ज्ञत्वादिकमप्यनुपाधिनिष्ठत्वात् कल्पितत्वासम्भवेन पारमार्थिकं स्यात् । नहि अज्ञाने अन्तःकरणेव उपाधौ किञ्चिज्ज्ञत्वादिकमस्ति । येन स्वनिष्ठधर्मासङ्गतत्वेन तयोरुपाधित्व-किञ्चिज्ज्ञत्वादेः औपाधिकत्वेन कल्पितत्वं सिद्ध्येत् । प्रत्युत जडत्वादिकमेवोपाधिप्रयुक्तं जीवचैतन्यस्य स्यात् । अपि च उपाधिनिमग्नोपहितभेदादिकल्पको दृष्ट इति व्यापकचैतन्यमज्ञानाद्युपाधिनिमग्नं न स्वस्मिन् भेदादिकल्पकमङ्गीकर्तुं शक्यम् । अन्यथा अदृष्टकल्पनाद्यापत्तेः ॥

एतेन चैतन्यभेदमात्रमेवौपाधिकं बिम्ब-प्रतिबिम्बभूतजीवेश्वरचैतन्ययोः सर्वज्ञत्वकिञ्चिज्ज्ञत्वादयो धर्मा अनौपाधिका एव, 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतिनिषिद्धत्वात् मिथ्याभूताः । अत एव तत्रारोपिता इति निरस्तम् ॥

तैत्तिरीयवाजसनेयिनाम्- 'एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान्' इत्यादिश्रुत्या प्रतिपन्नस्य सार्वज्ञादिनित्यत्वस्य श्रुतिमिथ्यात्ववत् अत्याज्यत्वेन तथाविधसार्वज्ञादिभिरपि जीवाद्भेदसिद्ध्यवैकल्यात् । जीवस्येश्वराद्भिन्नतया नित्यमिथ्याभूतसार्वज्ञादिराहित्यादेरेव सिद्धेश्च ॥

नच 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय' इत्यादिजीवेश्वरबिम्बप्रतिबिम्बभावाऽवेदकश्रुत्यनुरोधेन तद्भेदस्य लौकिकवदौपाधिकत्वावश्यम्भावेनोपाधि-

निवृत्त्या निवृत्तिर्दुवारेति वाच्यम् । एवं हि लोकवादेवौपाधिकत्वेन(१) अभिमतस्याज्ञानादेः स्वनिमग्न चैतन्यभेदं प्रति उपाधित्वाभावप्रसङ्गात् । नच दण्डस्यैक्येऽपि तस्यैव जलान्तः-प्रविष्टार्धभागस्य तज्जले प्रतिबिम्बनाभावेऽपि तदप्रविष्टार्धभागस्य तत्र प्रतिबिम्बनवदेकस्यैव चैतन्यस्योपाधित्वेन अभिमताज्ञानादिनिमग्नभागस्य तत्र अप्रतिबिम्बनेऽपि अनिमग्नचैतन्य-भागस्य तत्र प्रतिबिम्बनमविरुद्धमिति वाच्यम् । जले दण्डार्धभागः प्रतिबिम्बत इति प्रत्यक्षतोऽज्ञानादौ चैतन्यार्धभागः प्रतिबिम्बत इति प्रत्यक्षाभावात् श्रुत्यादेरभावाच्च तथा-विधकल्पनायाऽनिर्मूलत्वात् ॥

किञ्च श्रौतबिम्ब-प्रतिबिम्बभावोन्नीतचैतन्यभेदस्यौपाधिकत्वेन तन्निवृत्त्या निवृत्तावपि नित्यत्वेनावगतमिथ्याभूतसार्वज्ञ-तद्व्यतिरेकोन्नीतचैतन्यभेदस्यानौपाधिकत्वावश्यम्भावेन यावत् सार्वज्ञाद्यवस्थानावश्यम्भावात् । नहि भेदकधर्मोऽस्ति भेदो नास्ति इति दृष्टचरः ॥

## ॥ अथ धातुः प्रसादात् महिमानमीशम् इति श्रुत्यर्थविमर्शः, तत्रस्थ 'महिम' शब्दार्थविवरणञ्च ॥

'धातुः प्रसादान्महिमानमीशम्' इत्यादिश्रुत्या महिम्नः परमेश्वराभिन्नत्वाऽवेदनादत्रापि श्रुतौ नित्यत्वं महिम्न उच्यमानमीश्वरनित्यत्वमादायैव पर्यवस्यतीति सार्वज्ञादेरतद्धर्मत्वेन तत्र जीवाद्भेदसाधकत्वमेवायुक्तमिति वाच्यम्(२) । प्रतियोगित्व-अनुयोगित्व-विशेषणत्वविशेष्य-त्वदृश्यत्वमिथ्यात्व-ज्ञेयत्वाभिधेयत्वादीनां धर्म्यभिन्नत्वेऽपि धर्मत्ववत् सार्वज्ञादीनाम् ईशा-भिन्नत्वेऽपि तद्धर्मत्वोपपत्तेःभेदकत्वोपपत्तेश्च । अन्यथा प्रतियोगित्वादेर्भूतलनिष्ठघटा-भिन्नत्वेऽपि तन्निष्ठभेदप्रतियोगित्वेन अतन्निष्ठाद्व्यावृत्त्यभावापत्तेः । तथा च श्रुतिः – 'एवं धर्मान् पृथग्पश्यन् तानेवानुविधावति' इति । सार्वज्ञादिषु धर्मत्वमङ्गीकृत्य तेषा-मीश्वराद्भेदनिषेधोपपद्यते । उक्तं च परैरपि 'अभेदेऽप्यानन्दाविषयानुभवो नित्यत्वं चेति सन्ति धर्मा' इत्यादि ॥

नच 'महिम'शब्देनोदाहृतश्रुत्यनुसारेणेश्वरस्वरूपमेवोच्यते न सार्वज्ञादिधर्माः, तेषां 'नेह

(१) लोकवदेव औपाधिकत्वेन इति पाठः स्यात् ॥

(२) नच वाच्यम् इति पाठः स्यात् ॥

नानाऽस्ति किञ्चन' इत्यादिश्रुत्या मिथ्यात्वावगमात्, मिथ्याभूतानां च तेषां सत्यभूतेश्वराभिन्नत्वाऽयोगादिति वाच्यम् । मिथ्याभूतानामपि 'सर्वं ह्येतद्ब्रह्म' 'अयमात्मा ब्रह्म' 'इदं सर्वं यदयमात्मा' इत्यादिश्रुतिप्रतिपन्नेश्वरसर्वाभिन्नत्वनिर्वाहाय ईश्वराभिन्नस्यावश्याङ्गीकर्तव्यत्वात्, मिथ्यात्वस्येव सर्वाभिन्नत्वस्यापि श्रौतत्वाविशेषात् । 'यन्मिथ्या न तत् सत्यम्' इति नियमस्य श्रुत्यपेक्षया दुर्बलत्वात् । तर्हि मिथ्याभूतसार्वज्ञाद्यभिन्नतया ब्रह्माऽपि मिथ्याभूतमापाद्यत इति चेत् । किं कुर्मो वयम् । श्रौतसत्यत्ववत् श्रौतमिथ्याभूतार्थाभिन्नत्वस्याप्यत्याज्यत्वात् । अन्यथा मिथ्याभूतार्थाभेदवत् सच्चिदानन्दरूपत्वस्याप्यविशेषेण त्यागे ईश्वरचैतन्यस्य वेदबाह्याङ्गीकृतशून्याविशेषप्रसङ्गात् ॥

किञ्च 'महिम'शब्दार्थो न स्वरूपमात्रम् । तथासत्यपकृष्टवस्तुनोऽपि स्वरूपसत्वाविशेषेण तदादाय 'अस्य महिमाऽस्तीति' व्यवहारापत्तेः । किन्तु तद्वस्तुगतोत्कर्ष एव । नचेश्वरे सार्वज्ञाद्यतिरेकेण उत्कर्षो नामास्ति । अतो 'महिम'शब्दार्थः ईश्वरसार्वज्ञादिरूप एव वाच्य इति किमनुपपन्नम् ॥

नचैवमपि 'यादृशो यक्षस्तादृशो बलिः' इति न्यायेन मिथ्याभूतसार्वज्ञादिभिः सिद्धं जीवेश्वरभेदो मिथ्याभूत एव स्यान्न पारमार्थिक इति वाच्यम् । उक्तरीत्या नित्यसार्वज्ञादितः सिद्ध्यतो भेदस्य त्वद्रीत्या पारिभाषिकमिथ्यात्वेऽपि यावत् धर्म्यनुमानत्वानपायात्[१] । धर्मिणश्च अनन्तत्वश्रुत्या नित्यत्वस्यावश्यमभ्युपगन्तव्यत्वात् ॥

एतेन 'सर्वं ह्येतद्ब्रह्म' इत्यादिब्रह्मसर्वाभिन्नत्वप्रतिपादकश्रुतिः बाधायां सामानाधिकरण्यरूपमभेदमाचष्ट इति निरस्तम् । 'अयमात्मा ब्रह्म' इति जीवब्रह्मणोः स्वरूपाभेद प्रतिपादकोत्तरवाक्यस्याप्युक्तक्रमानुसारेण बाधायां सामानाधिकरण्यरूपाभेदार्थकत्वापत्तेः । उपसंहारप्राबल्याश्रयणे च 'अयमात्मा ब्रह्म' इति चरमश्रुतिवाक्यवत् 'सर्वं ह्येतद्ब्रह्म' इति पथमनुश्रुतवाक्यस्य(प्रथमश्रुतवाक्यस्य-पा) अस्वरूपेणैव ब्रह्मणः सर्वाभिन्नत्वापत्तेः ॥

किञ्च 'नेह नानाऽस्ति किञ्चन' इत्यादिना ब्रह्मणि भिन्नवस्तुमात्रनिषेधे जीवब्रह्माभेदस्यापि कुतश्चित् भिन्नत्वेन निषेधप्रसङ्गः । नचाभेदस्य भेदस्येव प्रत्यक्षाद्यप्राप्तत्वेन

---

(१)　धर्म्यनुवर्तमानत्वानपायात् इति पाठः स्यात् ॥

निषेधः, अन्यथा अप्रसक्तनिषेधत्वापत्तेरिति(प्रतिषेधत्वापत्तेरिति-पा) वाच्यम् । ब्रह्मणि 'यस्मिन् द्यौः' इत्यादिना वियदादेरिव 'तत्त्वमसि' इत्यादिना जीवाभिन्नत्वस्य प्रसक्तेरित्यलं प्रसक्तानुप्रसक्त्या ॥

॥ इति 'धातुः प्रसादात् महिमानमीशम्' इति श्रुत्यर्थविमर्शा, तत्रस्थ'महिम'शब्दार्थविवरणञ्च ।

## ॥ अथ 'एकधैवानुद्रष्टव्यम्' इत्यादिश्रुतीनां परोदीरितार्थनिरसनम् ॥

एतेनैव 'वास्तवसार्वज्ञेश्वरभेदमादाय जीवमात्रस्य सर्वज्ञत्वादिकमापादनार्हम् । सर्वज्ञत्वादीनामारोपितत्वेन आनन्दादिवत् स्वरूपरूपत्वाभावात्, जीवात् भेदकल्पनापुरस्सरमेव तेषामारोपात् । नच तेषामारोपितत्वादेवेश्वरेऽपि ते न स्युरिति वाच्यम् । इष्टापादनात् । द्विचन्द्रादिधर्मव्यवहारवद्यावदविद्यं तद्व्यवहारोपपत्तेः सर्वेश्वरत्वादिप्रतिषेधश्च । 'अथ तस्याऽयमादेशः' इत्याद्युक्तः 'एकधैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन' इति भेदमात्रस्य निषेधेन 'किञ्चन'शब्दोपात्तत्वाच्च नेश्वरमात्रप्रतियोगिक भेदनिषेधस्तत्प्रतिपाद्यः । श्रुतिमन्तरेण लाघवानुगृहीतकार्यलिङ्गेनाऽपि ईश्वरनानात्वनिषेधोपपत्तेः । नैष तच्छ्रुतेः अन्यथासिद्धो विषयः । नच 'यदेवेह तदमुत्र' इत्यादिना कर्त्रैक्यमुच्यते । तथासत्यध्याहारप्रसङ्गादिति' निरस्तम् ॥

उक्तरीत्या कल्पितसर्वज्ञत्वादिना तद्राहित्येन च जीवेश्वरपरस्परभेदसिद्ध्यवैकल्यात् । यावदविद्यं व्यवहारव्यवस्थामङ्गीकुर्वता तां निवृत्त्यनन्तरमपि तन्निवृत्तिमात्र तच्छून्यत्वरूपव्यावर्तकधर्मयोरङ्गीकार्यत्वेन ताभ्यामपि जीवेश्वरभेदसिद्ध्यवैकल्याच्च । द्विचन्द्रादिधर्मव्यवहारस्येव जीव-ब्रह्म-किञ्चिज्ज्ञत्व-सर्वज्ञत्वादिव्यवहारस्य तदैक्यनिश्चयपूर्वकत्वाद्यभावेन आरोपितचैतन्यभेदादिविषयकत्वेन निर्वाहाऽयोगाच्च ॥

यत्तु 'अथ तस्यायमादेश' इत्यादिना सर्वेश्वरत्वादिनिषेधः क्रियत इत्युक्तम् । तन्न । तेन तत्तजीव-तत्तद्वस्तु-धर्मराहित्यप्रतिपादनपूर्वकं 'तत्त्वमस्या'दिवाक्यतात्पर्यभ्रमप्रयुक्तजीवेशाद्यभेदभ्रमनिरासाय ईशे जीवाद्यभेदनिषेधस्यैव करणात्, अत एव 'न प्रज्ञानघन' इति स्फुटजीवाभेदनिषेधः॥

यदपि 'एकधैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन' इति भेदमात्रं निषिध्यते नत्वीश्वरमात्रप्रतियोगिकभेदः, श्रुतिमन्तरेण लाघवानुगृहीतकार्यलिङ्गेनापि ईश्वर-नानात्व-व्यतिरेकसिद्धेर्नै-

तच्छ्रुतेः अनन्यथासिद्धविषय इत्यादि । तदपि न । 'एकधैवानुद्रष्टव्यम्' इति उपासक-विशेषं प्रति एकप्रकारमात्रविषयकेश्वरानुदर्शनशब्दितस्योपासनस्येष्टसाधनत्वं बोध्यत इति तस्य चैतन्यभेदनिषेधकत्वासिद्धेश्च ॥

अन्यथा प्रकारभावि'धा'प्रत्ययस्य 'अनु'शब्दस्य च वैयर्थ्यात् । 'एकधैवानुद्रष्टव्यम्' इति 'एव'कारेण अयोग्योपासना व्यवच्छेदकरणात्, न तद्वैयर्थ्यम् । भिन्नक्रमो वा 'एव'-कारः । 'नेह नानाऽस्ति' इत्यनेनापीश्वरनानात्वमेव निषिध्यते । 'द्व्येकयोः' इत्यादिवत् 'नाना'शब्दो भावप्रधान इत्युपगमात् । नचाऽत्र मानाभावः । 'किञ्चन'शब्दसमभिव्याहारस्यैव तत्र मानत्वात् । अन्यथा= भवितृप्रधानत्वे, 'इह नाना न अस्ति' इत्येतावतैव भिन्न-मात्रनिषेधसिद्धेः । 'किञ्चन' इत्यस्य वैयर्थ्यात् । अत एव तैत्तिरीयकश्वेताश्वतर-अथर्वशिरःप्रभृत्युपनिषत्सु –

'विश्वतः चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः'

इति मन्त्रे 'एक'शब्देन जगत्कर्तृ-नानात्वनिषेधः । नच श्रुतिमन्तरेण लाघवानुगृहीत-कार्यलिङ्गेनापि तन्नानात्वव्यतिरेकसिद्धेर्नायं श्रुतेरनन्यथासिद्धो विषयः । तस्यानुमानस्य 'भूभूधरादिकं नानाकर्तृजन्यं विचित्रगुरुतरकार्यत्वात् गोपुरप्राकारादि तादृशकार्यवत्' इत्यनु-मानेन प्रतिरुद्धतया सम्भावकत्वेन कर्त्रैक्यनिश्चायकत्वात् । अन्यथा दृश्यत्वादिहेतुनैव श्रुतिमन्तरेण जगन्मिथ्यात्वसिद्धेस्तदपि न मिथ्यात्वश्रुतेरनन्यथासिद्धो विषय इति सुवचत्वात् ॥

'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति'

'नैषा तर्केण मतिरापनेया प्रोक्तान्यनेनैव सुज्ञानाय प्रेष्ठ'

'अव्यपदेश्यमैकात्म्यप्रत्ययसारम्'

'आधारमानन्दमखण्डबोधम्'[१] (कै-उ-१-१४)

---

(१) 'यस्मिन् लयं यान्ति पुरत्रयं च'इति पूर्णपाठः ॥

'निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम्'(१)(त्रिपु-ता-उ-५-९)
इत्यादिश्रुति-स्मृतिभिरीश्वरस्यानुमानगम्यत्वनिषेधाच्च ॥

किञ्चानुपलब्धप्राक्कोटिषु भूभूधरादिषु कार्यत्वमेव कुतः? येन लाघवतर्कानुगृहीतेन तेन तत्र कर्तृनानात्वनिषेधः सिद्ध्येत् । नच सावयवत्वेन तत्र कार्यत्वं सेत्स्यतीति वाच्यम् । सावयवत्वस्यैव दुर्वचत्वात् । कथञ्चिद्द्रव्यसमवेतद्रव्यत्वादिरूपत्वेन सुवचत्वेन(वा?) अनुपलब्धप्राक्कोटित्वादेव भूभूधरादीनां तन्त्वादिषु पटादीनामिव क्वचित् समवाये मानाभावेन तेषु सावयवत्वस्याप्यसिद्धेः । आवाभ्यां समवायानभ्युपगमाच्च ॥

नच प्रदेशत्वे सति द्रव्याश्रयत्वमेवावयवत्वम् । तथासति भूतलादिप्रदेशस्यापि घटादिकं प्रत्यवयवत्वप्रसङ्गः । नच अयुतसिद्धद्रव्याश्रयभूतप्रदेशत्वमवयवत्वं तदाश्रितद्रव्यत्वं च सावयवत्वमिति वाच्यम् । तथासति कलधौतप्रदेशमाश्रित्योत्पन्नं मलिनद्रव्यं प्रति तदाश्रयभूतकलधौतप्रदेशस्याप्यवयवत्वप्रसङ्गादित्यलम् ॥

॥ इति 'एकधैवानुद्रष्टव्यम्' इत्यादिश्रुतीनां परोदीरितार्थ निरसनम् ॥

## ॥ अथ 'सत्यकामः' इत्यादिश्रुत्यर्थविवरणम् ॥

ननूक्तरीत्या सार्वज्ञ-तद्व्यतिरेकाभ्यां जीवेशपरस्परभेदसिद्धावपि न सत्यकामत्व-सत्यधृतिभ्यामीश्वरस्य जीवाद्भेदसिद्धिः, तयोर्जीवसाधारण्यादिति चेन्न । 'सोऽकामयत बहुस्यां प्रजायेयेति' 'द्यावाभूमी जनयन् देव एकः' 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा'(ऋ-सं-१-१५४-४) इत्यादिश्रुतिपर्यालोचनया कार्यमात्रविषयकसत्यकामत्वस्य पृथिव्यादिविषयकसत्यधृतिमत्वस्य च हेतुत्वेन विवक्षितत्वात् तादृशसत्यधृतिकामयोर्जीवव्यावृत्तत्वादिति, कामस्य सत्यत्वं विषयाव्यभिचारित्वमप्रतिहतत्वं वा ॥

यद्वा काम्यत इति कामः, सत्यः= अबाधितः, काम्यमानोऽर्थो यस्य स तथोक्तः । एवं 'सत्यधृतिम्' इत्यत्रापि ध्रियत इति धृतिः, सत्या= अबाध्या, धृतिर्यस्य स तथेत्यर्थः । अथवा 'सत्यम् अबाध्यमेव काम्यत' इति सत्यकाम इति विग्रहः । 'सत्यसङ्कल्पः' इत्यत्रापि 'सत्यमबाध्यमेव सङ्कल्पयती'ति विग्रहो द्रष्टव्यः ॥

---

(१) 'अप्रमेयमनाद्यन्तं यज्ज्ञात्वा मुच्यते बुधः' इति पूर्णपाठः ॥

अथवा 'सत्यकामः सत्यसङ्कल्पः सत्यधृतिः' इति श्रुतौ बहुव्रीहिप्रायपाठात् 'सप्तमी-विशेषणे बहुव्रीहौ' (पा-सू-२-२-३५(८९८) इति पूर्वपदार्थस्यैव विधेयत्वं सिद्ध्यति । अत्र च सत्ये कामो यस्य स सत्यकामः, सत्ये सङ्कल्पो यस्य स सत्यसङ्कल्पः,सत्ये धृतिर्यस्य स सत्यधृतिरिति विग्रहः । सत्यं कामयते यः सत्यकामः,सत्यं सङ्कल्पयति यः स सत्य-सङ्कल्पः, इति व्याख्याने लक्षणाया अभावः । बहुव्रीह्याश्रयणे तु लक्षणेति यद्यपि विशेषोऽ-स्ति । तथाऽपि 'सत्यधृतिः'इत्यत्र बहुव्रीहिं विना गत्यभावात् 'सत्यकामः सत्यसङ्कल्पः' इत्यत्रापि बहुव्रीहेर्जघन्यत्वेऽपि सर्वत्र तज्जनितबुद्धेरवैरूप्यलाभाय त्रिष्वपि पदेषु बहु-व्रीह्याश्रयणे तु लक्षणेष्वेवमुक्तिः । माऽस्तु वा पदद्वये बहुव्रीहिः । तथाऽपि नः नो हानिः । परमेश्वर-काम-सङ्कल्प-विषयस्याबाध्यत्वरूपसत्यत्वसिद्ध्यनपायात् । 'सत्यसङ्कल्पः' इत्य-त्रापि सङ्कल्पयत इति विग्रहः ॥

ननु 'काम'समभिव्याहृतं 'सत्य'पदमव्यवहितफलकत्वे निरूढम् । **'त इमे सत्याः कामा अनृता पिधाना'**(छां-उ-८-३-१) इत्यत्रत्येन 'सत्य'पदेन 'स यदि पितृलोक कामो भवति सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति तेन ह पितृलोकेन सम्पन्नो महीयते' (छां-उ-८-२-१) इत्युपक्रम्य 'यं कामं कामयते तं तमाप्नोति' इत्युक्तानामव्यवहितफलकानामेव कामानां परामर्शदर्शनात् । अन्यादृशसत्यत्वस्य प्रागनुक्तस्य परामर्शानुपपत्तेः । 'तद्वा अस्यैतदाप्तकाम-मात्मकाममकामं रूपं शोकान्तरम्' इतिश्रुतेः, परमेश्वरे कामाभावेनात्मकामत्वेनैव सत्य-कामत्वं वाच्यम् । प्रपञ्चमायिकत्वश्रुत्या सङ्कोचेन व्यावहारिकसत्यकामता परत्वेन वा । अन्यथा काम्यमानप्रतिषेधपराकामश्रुतिविरोधात् ॥

'तद्वा अस्यैतद्' इति 'छन्दा अपहतपाप्माऽभयं रूपम्' इतिश्रुतेश्च । तथा च न सत्यकामत्वविशेषणबलेन काम्यमानप्रपञ्चसत्यत्वमबाध्यत्वरूपं सिद्ध्यतीति चेन्न । 'सर्वं ह्येतद् ब्रह्म' इति प्रथमश्रुतवाक्यस्य बाधायां सामानाधिकरण्यपरत्वेऽपि 'अयमात्मा ब्रह्म' इति तदुत्तरवाक्यस्य सम्भवात् प्रागुक्तबाधसामानाधिकरण्यपरत्वं त्यक्त्वा स्वरूपेणाभेद-परत्वाश्रयणवत्, 'सत्यकामः सत्यसङ्कल्पः सत्यधृतिः' इति वाक्ये 'काम'पदसमभिव्याहृत-'सत्य'पदस्योक्तव्युत्पत्त्या प्रागुक्ताव्यवहितफलकत्वरूपसत्यत्वस्यैव परामर्शार्हतया च

कथञ्चित् तत्परत्वेऽपि 'सत्यसङ्कल्पः सत्यधृतिः' इति तदुत्तरवाक्ये 'सत्य'पदस्यासम्भवादेव प्रागुक्ताव्यवहितफलकत्वरूपसत्यत्वपरत्वं त्यक्त्वा अबाध्यत्वरूपसत्यत्वपरताया एव आश्रयणात् ॥

किञ्च 'त इमे सत्याः कामाऽनृतापिधाना' इति वाक्ये 'काम'पदसमभिव्याहारमात्रेण अव्यवहितफलकत्वे 'सत्य'पदस्य रूढताऽस्तीति कृत्वा तत्परत्वाङ्गीकारो न युक्तः । तस्य तत्र निरूढावेव मानाभावात् । व्यवधानेन कामेनाविषयीभूतफलप्राप्तिमत्यपि फलव्यभिचारिकामनाभावत्वेन 'असौ सत्यकामः' इत्यपि अविगीतव्यवहारात् फलाव्यभिचारस्य च कामनायाः विषयाबाधेनैव वाच्यत्वात् । नहि वस्तुतः 'शुक्तिरूप्यकामः सत्यकामः' इति व्यवह्रियते ॥

अत एव 'त इमे सत्याः कामाः' इति पदस्य मुख्यार्थपरत्वमेव नान्यपरत्वमिति ज्ञापनाय तत्र वाक्ये 'अनृतापिधाना' इति पदम् अनृतैः= बाधितार्थैः, पिधानरहिता= छादनरहितार्थपरमुपपद्यते । अन्यथा 'सत्याः कामाः'इत्यनेनैव त्वदुक्तार्थलाभेन 'अनृतापिधान'पदवैयर्थ्यात् । 'अपिधान'शब्देनैव[१] 'पिधान'शब्देनापि अपिधान, तिरोधानाद्यर्थप्रतिपादनात् अपेरेवाल्लोपे तत् तुल्यार्थकत्वाश्रयणात् अपेरल्लोपस्य वागुरिणा स्वीकारात् । तथा चोक्तम् ।

'वष्टिवागुरिरल्लोपमवाप्योरुपसर्गयोः ।
अपां चैव हलन्तानां यथा वाचा निशा दिशा' इति ॥

किञ्च 'स यदि पितृलोककामो भवति सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति' इति सामग्र्यन्तरविलम्बान्नविलम्बः, सङ्कल्पमात्रमेव तत्पितृणामुत्थानसामग्रीत्यर्थकश्रुतित एवाव्यवहितफलकत्वस्य मुक्तकामनायाः अभावात्, तदर्थं 'काम'पदसमभिव्याहृत'सत्य'शब्दस्य तत्र निरूढिरङ्गीकार्या । अन्यलभ्यार्थस्यैव शब्दवृत्तिविषयत्वात् । अन्यथा 'सर्षप'शब्दश्रवणानन्तरं सर्षपस्यैव तन्यूनत्वस्यापि प्रतीतेः, तत्रापि 'सर्षप'शब्दस्य वृत्तिरङ्गीक्रियेत ।

---

(१) शब्देनेव इति पाठः स्यात् ॥

तस्मात् 'सत्यकामः सत्यसङ्कल्पः' इत्यादौ बाधकं विना 'सत्य'पदस्यामुख्यार्थपरत्वानाश्रयणात्, अबाधित्वरूपमुख्यार्थपरत्वमेवाश्रयितव्यमिति ॥

॥ इति 'सत्यकामः' इत्यादि श्रुत्यर्थविवरणम् ॥

## ॥ अथ प्रसङ्गात् 'यद्वैतं न पश्यतीति' श्रुतेः परोदीरितार्थनिरसनम् ॥

एतेन 'यद्वैतं न पश्यति पश्यन्वै तं न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत्पश्येत्'

'ऐकात्म्यप्रत्ययसारम् प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते'
'अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा'
'अथाऽयमादेशो नेति नेति'
'अथ नामधेयं सत्यस्य सत्यम्' इति
'प्राणा वै सत्यं तेषामेष सत्यम्'

इत्यादिश्रुतिभिर्ब्रह्मव्यतिरिक्तस्य सर्वस्यैव निषेधात् तदविरोधाय 'सत्यकाम' इत्यादौ 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादाविव 'सत्य'पदस्य न मुख्यार्थपरत्वं युक्तं किन्तु तदन्यपरत्वमेवेति निरस्तम् ॥

'यद्वैतं न पश्यति'इति श्रुतौ 'पश्यन्वै तद्' इत्यत्र 'पश्यन्वा एतद्' इति पदविभागः । 'वा'शब्दो व्यवस्थितविकल्पार्थः । एतत्= प्रमाणसिद्धं, सर्वं, प्रपञ्चम्, व्यवस्थितत्वेन साक्षात् कुर्वन्, ईश्वरः, यद्वैतं, न पश्यति= न पश्यति कदाऽपि, कुतोऽपि, न साक्षात्कुरुते, यत्तदोर्नित्यसाकाङ्क्षत्वात्, तदिति लभते, तत्तद्वैतं नहि= नास्तीत्यर्थः ॥

नन्वसदपि द्वैतमात्मत्वाविशेषादस्मदादिवत् सर्वज्ञेश्वरोऽपि किन्न पश्येदित्यत आह- द्रष्टुरीश्वरस्य दृष्टेः= साक्षात्कारस्य, विपरिलोपो= बाधो, नतु विद्यते इति । तत्कुत इत्यत आह 'अविनाशित्वात्' इति । तर्हि द्वैतमेव किमपि नास्तीत्यत आह 'तद्वितीयमस्ति' इति, तदेव द्वितीयं किमित्यत् आह 'ततोऽन्यद् विभक्तं यत्पश्येत्' इति । ततः= प्रकृतात् स्वस्मात् ईश्वरान्यत्, विभक्तं= परस्परभिन्नं, यत् पश्येत् इति । अर्हार्थे लङ् । यद्

ईश्वरभिन्नम्= अन्योन्यभिन्नं च तद्दर्शनार्हं तदेव द्वितीयमस्तीत्यर्थपरत्वेन, 'तद्द्वैतं न पश्यति' इति श्रुतेरीश्वरातिरिक्तमात्र निषेधपरत्वासिद्धेः ॥

यद्वा यत् ततः= स्वात्मनोऽन्यत्, भिन्नं= विभक्तम्= अन्योन्यभिन्नं, 'विभाग'शब्दित-गुणविशिष्टं वा, पश्येत्, द्रष्टुः= ईश्वरस्य साक्षात्कारार्हं, तद्द्वितीयमस्ति इत्येतत्परश्रुत्यर्थः ॥

नन्वस्मदादिदर्शनगोचरशुक्तिरूप्यादिवत् ईश्वरदर्शनगोचरस्तं भिन्नमन्योन्यभिन्नं वियदा-दिवस्तुजातरूपं द्वितीयमपि माऽस्तु दर्शनमात्रगोचरत्वाविशेषादित्यत आह- द्रष्टुः= ईश्वरस्य, दृष्टेः= स्वभिन्नवियदादिप्रपञ्चगोचरसाक्षात्कारस्य, विपरिलोपो= बाधो, नतु विद्यत इति । शुक्तिरूप्यादिविषयकास्मदादिज्ञानात् प्रपञ्चगोचरेश्वरदर्शनस्य 'तु'शब्दो विशेषमाह । स एव क इत्यत आह 'अविनाशित्वात्' इति ॥

एवं चाबाधितेश्वरज्ञानार्हतया जीव-जडात्मकद्वितीयप्रपञ्चस्यैव पारमार्थिकसत्वं नतु तदर्हस्येश्वरनानात्वादिरिति पर्यवस्यतीति, 'यदविनाशि तदबाध्यमिति' नियमस्तु ब्रह्मण्येव सकलप्रतिपन्न इति । नच बाधितत्वेन सर्वं पश्यतोऽपीश्वरस्य सर्वज्ञत्व-सर्वदृक्त्वगोचर-श्रौतव्यवहारभाक्त्वं सम्भवति । येन एतद्वाक्यगतेन 'एतत् पश्यन्' इत्यनेन 'तुरीयं सर्वदृक् सदा' इत्यादिना च ईश्वरस्य स्वव्यतिरिक्तसर्वप्रपञ्चरूप-द्वितीयसाक्षात्कारवत्वप्रतिपादन-परेणाविरोध इत्युच्येत । अन्यथा तत्र तत्र तत्पदार्थव्यतिरेकं जानन् शुक्तिरूप्यादिमिथ्यात्वं पश्यंश्च तज्ज्ञः तद्दर्शीति च व्यवहारप्रसङ्गः ॥

अथवा ज्ञातलोको 'यद्द्वैतं न पश्यति= प्रमाणेन नोपलभ्यो, न पश्यति, नालोचयति= न विचारयतीति यावत् । पश्यतेश्च 'पश्यार्थैश्चानालोचने'(पा-सू-८-१-२५(४०९) इति ज्ञापकात् आलोचनार्थत्वमपि, तेन न पुनरुक्तिः । 'तद्द्वैतं नहि = नास्ति' इति प्रसिद्धं, 'पश्यन् वै तत् पश्यति'आलोचयति चेत्, न, तस्मात् द्वैतं न दृश्यमानमालोच्यमानं च, परमार्थसदेवेति वाक्यशेषः । (१)ननु द्वैतस्य द्रष्टृलोकदृष्टिगोचरत्वेऽपि शुक्तिरूप्यादिवत् मिथ्यात्वमेव किन्न स्यादित्यत आह 'द्रष्टुर्दृष्टेर्विपरिलोपो= बाधो, नतु विद्यते' इति ॥

---

(१) ननु द्वैतस्येति ताळपत्रस्थ पाठः ॥

ननु दर्शनत्वाविशेषात् बाध एव कुतो नेत्यत उक्तम् 'अविनाशित्वात्' इति । 'नाहमीश्वरो' 'नाहं सर्वज्ञः' 'मम तत्राज्ञानम्' 'ममान्तःकरणम्' 'अहं दुःखी' इत्यादि-द्वैतदर्शनस्य साक्षित्वेन अविनाशित्वात् तत्र वृत्तिरूपानित्यदर्शनतुल्यतया न सम्भावित-दोषजन्यत्वप्रयुक्त बाधशङ्केति भावः ॥

यद्वा 'अविनाशित्वात्' शुक्तिरूप्यादिदर्शन इव अद्वैतप्रपञ्चदर्शने, विपरिलोपो= बाधो, नतु विद्यते, अदर्शनादित्यर्थः । 'नश अदर्शने' इति धातुर्घञन्तो विपूर्वक इत्युक्तम्॥

ननु यत्परमार्थसद्वैतमस्ति इत्युच्यते तत् किं प्रतियोगिकभेदवत्वेन दर्शनमर्हत् सद्द्वितीयमस्ति इत्यत, उक्तं 'तत् द्वितीयमस्ति' इत्यादि । यत्ततः प्रकृतपरमेश्वरादन्यत्, भिन्नं= विभक्तं=विभागशब्दितगुणयुक्तम्, अन्योन्यभिन्नं वा, पश्येत्, तत् तेन दर्शनार्हं तत् द्वितीय-मस्तीत्यर्थः । अहार्थे लङ्। 'अर्हेकृत्यतृचश्च'(पा-सू-३-३-१६९(२८२२) इति स्मरणादिति॥

यद्वा 'एतत्= सर्वं, जगत् वा व्यवस्थितत्वेन, पश्यन्= साक्षात् कुर्वन्, ईश्वरः 'अथ तस्याऽयमादेशो नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञम्' इत्यादिना, द्वैतं न पश्यति, न पश्यतीति यद् उच्यते, तत्= तत्तु, द्वितीयं नास्ति= मिथ्येति कृत्वा, नहि । ननु मिथ्येति कृत्वैव तथोच्यत इत्यस्त्वित्यत उक्तं 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति । 'नहि'इत्यस्य आकाङ्क्षादिबलात् सन्निहित-असन्निहित-वाक्यद्वयेनापि सम्बन्धः । नचात्र प्रमाणाभावः । विरुद्धार्थत्वेन भासमानश्रुतिद्वयस्य नित्यनिर्दोषत्वेन स्वतः प्रामाण्यान्यथानुपपत्तेरेव तत्र मानत्वात् । नहि 'नान्तः प्रज्ञम्'इत्यादिश्रुतेः 'यः सर्वज्ञः सर्ववित्''तुरीयं तत्सर्वदृक् सदा' इत्यादिश्रुतेश्चेश्वरसर्वविषयकज्ञानवत्व-तद्राहित्यप्रतिपादकत्वेन न विरोधभानमित्यस्ति ॥

ननु तथाऽपि तद्विरोधभानशक्तिः कथमित्यत उक्तं 'अविनाशित्वात्' इति । तथा च 'नान्तःप्रज्ञं न बहिःप्रज्ञम्' इत्यादिना यत्परमेश्वरस्यान्तर्बाह्यतद्विशेषरूपवस्तुदर्शनाभाव-वचनम्, तत्तदनित्यत्वप्रयुक्तमित्युक्तं भवति । नहि परमेश्वरस्यापि तद्वस्तुनाशकाले तद-स्तीति दर्शनमभ्युपगमार्हम् । तथासति शुक्तिरूप्यादिदर्शन इव भ्रान्तत्वापत्तेः । तथा चोदाहृतश्रुतिद्वयस्य विवक्षाभेदेन दर्शन-तदभावप्रतिपादकत्वं नतु तद्विषयस्य द्वैतस्य मिथ्या-त्वशब्दितासत्वादिति 'यद्वैतं न पश्यति' इत्यादिना प्रतिपाद्यत इति पर्यवसितम् ॥

'ततोऽन्यद् विभक्तं यत् पश्येत्= यत् तथाविधं, दर्शनार्हं, तत्तु द्वितीयं नास्ति' इति पूर्ववत् प्रतियोगिविशेषणं, द्रष्टव्यमिति । अन्यथा 'ततोऽन्यं नास्ति' 'ततो द्वितीयं नास्ति' इत्यनयोरन्यतरेणैव सर्वमिथ्यात्वसिद्धेः । इतरस्य= श्रुतिशरीरप्रविष्टस्य सर्वस्य पदस्य, वैयर्थ्यं स्यात् । 'पश्यन् वै तं न पश्यति' इत्यादि 'मे माता वन्ध्या' इत्यादिवत् व्याहतं च । नहि 'पश्यन् पश्यन् वै तत्' इति यत् तन्न पश्यति न पश्यतीति' निषेधार्थमनुवादः । तथासति 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इतीश्वरस्य द्वैतगोचरदर्शनस्य बाधाभावप्रतिपादनानुपपत्तेरिति ॥

एतेन[१] 'यत् द्वैतं न पश्यति पश्यन् वै तं न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येत्'(बृ-उ-६-३-२३) इत्यादिश्रुतिभिर्यद्द्वैतं यन्न पश्यति तत्र ज्ञानाभावात् न पश्यतीति न मन्तव्यम् । पश्यन्= जानन्, एव हि, न पश्यति द्रष्टुर्दृष्टेर्विपरिलोपो= बाधो, न विद्यते, अविनाशित्वात् । कथं तर्हि न पश्यति तद्द्वितीयं? न ह्यपश्यन् अन्यद् विभक्तम् अस्तीति ज्ञानस्य विद्यमानत्वोक्तेः कथं तदभाव इति चेन्न । 'पश्यन्' इति प्रत्ययार्थस्य विवक्षितत्वात् । अन्यथा 'नैतद् द्वितीयम्' इति प्रतिषेधानुपपत्तेः । दृष्टिश्रुतिमत्यादीनामपि द्वितीयत्वात् । दृष्टेर्द्रष्टाश्रुतेः श्रौतेत्यादिभेदव्यपदेशात् । नचान्यत् विभक्तमस्तीति पृथक् वाच्यम् (वाक्यम्-पा) । तथासति 'पश्यन् वै तन्न पश्यति' इत्यस्यायोगात् । 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति मात्रासंसर्गस्त्वस्य भवति' इत्येतेन च विरोधात् । तस्मात् 'यत् विभक्तं= द्वैतं, पश्येत्, तद्द्वितीयं, नास्ति' इत्येवैकं वाक्यम् ॥

ननु स्वस्याप्यन्यापेक्षया द्वितीयत्वात् कथमिदमुक्तमित्यत उक्तं 'ततश्चैतन्यादन्यत् द्वितीयं नास्तीति' । ननु जीवान्तराज्ञान-तत्कार्याणां सत्वात् कथमिदमुक्तमत आह 'यद्विभक्तं पश्येत्' इति । द्रष्टुमर्हति न, परकीयाविद्यातत्कार्यादिकं मुक्तेन न दृश्यमित्यर्थः । कथं तर्हि ईश्वरस्य सर्वज्ञत्वं?, तस्य मुक्तादनन्यत्वेन द्वितीयदर्शनानुपपत्तेरिति चेन्न । दर्शनविज्ञान-श्रवण-मननादीनामनिषेधादनुभवमात्रस्य चानिषेधात् ॥

---

(१) एतेनेत्यस्य 'ईश्वरात् स्यादतिरेक एव व्यवहार इति रहस्यमिति निरस्तम्'(पु.३९०) इत्यनेनान्वयः ॥

एवं 'यत्र वा अन्यदिव स्यात् तत्राऽन्योन्यत् पश्येत् अन्योऽन्यत् शृणुयात् अन्योऽन्यत् विजानीयात्' (बृ-उ-६-३-३१) इत्याद्यपि व्याख्यातम् । अत एव 'यत्र नान्यत् पश्यति नान्यत् श्रुणोति'इत्यादि भूमलक्षणस्य नासम्भवः,हिरण्यगर्भादीश्वरादतिरिक्तस्य ब्रह्मण एव प्रमातृ-प्रमेय-विभाग-शून्यस्य परमसुखस्य भूमत्वोपगमात् । एवं मुक्तस्येश्वरात् स्यादतिरेक एव व्यवहार इति रहस्यमिति निरस्तम् ॥

'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा'इति धर्माणां,[१]नित्यत्वाऽवेदकश्रुति-विरोधेन, 'यद्वैतं न पश्यति' इत्यादेः परोक्तार्थानुपपत्तेः । नच तत्र'उच्छित्ति'शब्द 'अपचयपरः'[२], 'उच्छित्ति'शब्दस्य ध्वंसापरनामकनिवृत्तौ रूढत्वेन तत्र बाधकं विना लक्षणया 'अपचय'परत्वाकल्पनात् । नच धर्मनित्यत्वस्यानाकाङ्क्षितत्वात् 'उच्छित्ति'शब्दस्य 'अपचय'परत्वं, तथा च 'अनुच्छितिधर्मा= अपचयधर्मा, न भवति इति वाक्यार्थो विज्ञायत इति वाच्यम् । आत्महानं मुक्तिरिति यतः 'अविनाशी वा अरेऽयमात्मा' इत्यनेन निराकृत्य, तर्ह्यात्महानं मुक्तिरिति पक्षो माऽस्तु, अशेषविशेषगुणोच्छेद एव मुक्तिरिति पक्ष एव तर्ह्यस्तु, इति शङ्का 'अनुच्छित्ति धर्मा' इत्यनेन निरस्यत इति, धर्मे नित्यत्वप्रति-पादनस्याप्याकाङ्क्षितत्वात्, 'न विद्यते उच्छित्तिं' विना साध्वस इति यावत् । स एषां ते अनुच्छित्तयः, अनुच्छित्तयो धर्मा यस्यासावानुच्छित्तिधर्मा' इति बहुव्रीह्युपगमेन तत् पक्ष-निरासलाभात् । नच 'उच्छित्तिः' 'अपचय'धर्मो न विद्यते यस्येति, त्रिपदबहुव्रीह्याश्रयणे वा, उच्छित्तिधर्मो यस्य सो उच्छित्तिधर्मा स न भवतीति बहुव्रीहिगर्भ-तत्पुरुषाश्रयणे वा लाघवम्, अन्यथा तु गौरवमिति वाच्यम् । तथासति 'धर्म'पदवैयर्थ्यप्रसङ्गात् । तेन विनाऽपि समासबलेनैवोच्छित्तेर्धर्मत्वलाभात्, 'न विद्यते उच्छित्तिर्यस्येति' विग्रहवाक्येन प्रसक्तोच्छित्तिधर्मस्यैव निषेधव्यत्वात् वसोः शक्रस्य'उच्छित्ति'पदस्य अपचयपरत्वे लक्षणापत्तेश्च ॥

---

(१) धर्माणां धर्माणाम् नित्यत्वावेदक इति ताळपत्रस्थ पाठः ॥

(२) 'उपचयपरः 'इति ताळपत्रस्थ पाठः ॥ एवमग्रेऽपि उपचय शब्दः दृश्यते । तत्र 'अपचय' इति कृतम् ॥

ध्वंसपरत्वे च 'अविनाशी'इत्यनेन पौनरुक्त्यापत्तेश्च । अत एव 'उच्छित्ति'शब्दस्य 'अपचये' लक्षणोपेयत इति चेन्न । अत एव'उच्छित्ति' शब्दस्य 'अपचय'रूपामुख्यार्थपरत्वं त्यक्त्वा 'धर्म'पदावैयर्थ्याय बहुव्रीहिगर्भबहुव्रीहिरेवाभ्युपेयत इति सुवचत्वात् ॥

ननु 'एतावदरे खल्वमृतत्वम्' इत्यमिथ्याऽत्मज्ञानेन च अमृतत्वं फलमुक्त्वा 'तद्वा इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य सञ्ज्ञाऽस्ति' इति 'तदिदम्'शब्दपरामृष्टस्य जीवस्य ब्रह्मत्वप्रतिपादनपूर्वकं कार्य-कारण-सङ्घातनिवृत्तिमुक्त्वा मुक्तस्य तमनुविनाश उक्त इव प्रतिभाति । तत्र पूर्वोक्तामृतत्वविरोध-माशङ्कमाना मैत्रेय्याह 'अत्रैव मा भगवान्नमूमुहदिति' । याज्ञवल्क्यः समाधत्ते ।'न वा अरे मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इत्यत्र संसर्गस्त्वस्य (धर्मामात्रसंसर्गस्त्वस्य-पा) भवति इति । मीयन्त इति मात्रा विषयाः, तैः, पुनरस्यासंसर्गो भवति दृश्यासंसर्गेण विशेषविज्ञानाभाव एवोक्तः नतु विनाश इत्यर्थः ॥

विषयसम्बन्धनाशेऽपि अपयन्विषयन् 'धर्मो विकरोति हि धर्मिणमि'त्यात्मनो विकारेण नाशावश्यम्भाव इत्याशङ्कानिवृत्तये 'अनुच्छित्तिधर्मा' इत्युक्तम् । तदेतत् कथमित्याशङ्क्य मिथ्यावस्तुसम्बन्धेन द्रष्टृदृश्यभावः, तन्निवृत्तौ नात्मनः काचित् क्षतिरित्याह 'यत्र हि द्वैतमिव भवति' इत्यादिना । तत्रैवं सति कः प्रसङ्गो धर्मनित्यता निरूपणस्य, प्रत्युत धर्म-धर्मिभावे तद्विशेषविज्ञानस्यैव प्रसङ्गे 'तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति' इति प्रतिज्ञैव व्याहन्येतेति चेन्न । 'तद्वा इदम्' इत्यादिना 'तदिदम्'शब्दपरामृष्टस्य जीवस्य ब्रह्मत्वप्रतिपादनपूर्वकं कार्यकारणसङ्घातनिवृत्तिमुक्त्वा तमनुनाश उक्त इव प्रतिभाति । तत्र पूर्वोक्तामृतत्वविरोधमाशङ्कमाना 'मैत्रेय्याह' इत्यादि वदतो मुक्तात्मनो विनाशाभावप्रति-पादनमनेन क्रियत इति तावदभ्युपगतम् । तेन चात्महनं मुक्तिरिति पक्षो निराक्रियत इति कथं नोपेयत इति सुवचत्वात् । अविनाशित्वप्रतिपादनेन तत्पक्षनिरासस्यापि प्रतीतेः ॥

यदुक्तं 'न वा अरे मोहं ब्रवीमि अविनाशी वा अरेऽयमात्मा' संसर्गस्त्वस्य भवति विषयैः पुनरस्यासंसर्गो भवति दृश्यासंसर्गेण विशेषविज्ञानाभाव एवोक्तो नतु विनाश इत्यर्थः । विषयसम्बन्धनाशेऽपि अपयन्= उपयन् 'धर्मो विकरोति हि धर्मिणाम्' इत्यात्मनो

विकारेण नाशावश्यम्भाव इत्याशङ्कानिवृत्तये 'अनुच्छित्तिधर्मा' इत्युक्तमिति । तन्न । 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' इति स्थूलदेहयोगप्रयुक्तं निरूप्य देहद्वयवियोगप्रयुक्तनाशे निरूपिते, ननु जीवस्य मुक्तौ स्थूल-सूक्ष्मदेहद्वयनाश एव नतु स्वरूपनाश इत्यङ्गीकारे तर्हि मुक्तिरेव न स्यात् । आत्मस्वरूपहानस्यैव मुक्तिरूपताया अभ्युपेयत्वात् । अन्यथा= आत्मस्वरूपसत्वे इदानीमिव मुक्तिसमयेऽपि तन्नियतदेहसंयोग-वियोगरूपोत्पत्तिमरणयोः अवर्जनीयत्वेन 'एतावदरे खल्वमृतत्वम्' इत्यात्मज्ञानफलत्वे-नोक्तामृतत्वाभावप्रसङ्गादिति, साङ्ख्यरीत्या मोक्षपदार्थतत्वनिश्चयाय मैत्रेय्याशङ्कितत् समाधानायाऽह याज्ञवल्क्यः 'न वा अरे मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्ति-धर्मा' इति । तथा च आत्मज्ञानसाध्या मुक्तिर्नात्महानरूपा किन्तु देहमात्रवियोगरूपम् इत्यभावरूपैव पर्यवस्यति अन्यथा= आत्मस्वरूपस्यैवासत्वे, कस्य मुक्तिः? न कस्यापीति स्यात् ॥

किञ्च पुरुषेणार्थ्यमानं हि वस्तु पुरुषार्थो भवति । नह्यात्मस्वरूपहानमर्थ्यमानं दृष्टम् । तस्मात् आत्महानं न मुक्तिरात्मनोऽविनाशित्वादिति समानाभिप्रायः । तर्हि माऽस्तु आत्महानं मुक्तिरिति पक्षः, वैशेषिकादिरीत्या अशेषविशेषगुणोच्छित्तिर्धर्मा इति ॥

ननु मुक्तावपि धर्म-धर्मिभावसत्वे विषयसत्वेन संज्ञाप्रसङ्गात् 'न प्रेत्य संज्ञाऽस्ति' इति प्रतिज्ञा व्याहन्येतेति चेन्न । स्थूल-सूक्ष्मदेहसम्बन्धरूपसामग्रीविरहप्रतिपादनपूर्वकस्य 'न प्रेत्य संज्ञाऽस्ति' इति वाक्यस्य संज्ञाविशेषाभावपरत्वेन तत्सामान्यनिषेधत्वाभावेन व्याघातात् । अन्यथा= मुक्तौ स्वरूपानन्दाननुभवे, पुरुषार्थत्वाभावप्रसङ्गात् । नचाऽना-वृतानन्दत्वेनैवानन्दस्य पुरुषार्थत्वं नत्वनुभूयमानतयेति वाच्यम् । तथासति तथाविध-दातृसुखस्यापि पुरुषार्थत्वापातात् । नच स्वीयसुखेन तथास्वेनानुभूयमानत्वातिरेकेण सुखस्वीयत्वस्यैव दुर्वचत्वात्, स्वसमवेत सुखत्वस्य समवायानभ्युपगमपराहतत्वात्, वस्तुतः स्वाभिन्नानावृतसुखत्वस्य दातृसुखेऽपि सत्वात् । नच कल्पितभेदप्रतिहतस्वा-भिन्नानावृतसुखत्वेन पुरुषार्थता । तदपेक्षया सुखे स्वेनानुभूयमानत्वस्यैव लघुत्वेन पुरुषार्थत्वादित्यलम् । नचात्म-तत्स्वरूपसुखानुभवौ न सञ्ज्ञेत्यस्ति । 'ज्ञा अवबोधने' इति धातुः, तस्मात् प्रतिज्ञा न व्याहन्यते । तस्याः विशेषपरत्वस्यावश्यकत्वात् ॥

किञ्च 'न प्रेत्य सञ्ज्ञाऽस्ति' इति प्रतिज्ञावाक्यस्य विज्ञानसामान्याभावपरत्वे 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' 'आप्नोति स्वाराज्यम्' इति मुक्तस्य विहारविशेषादि-प्रतिपादनविरोधः । तथा 'सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति' (छां-उ-८-२-१) इत्यादि सत्यसङ्कल्पत्वादि प्रतिपादनविरोधः । नच विज्ञानविनियतसङ्कल्पो विज्ञानं विनोपपद्यते । विहारविशेषादेरपि विज्ञाननियतत्वाच्च ॥

किञ्चात्मस्वरूपरूपविज्ञानस्य 'नित्यं विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिना नित्यत्वाऽवेदनात् तदविरोधाय 'न प्रेत्य संज्ञाऽस्ति' इत्यस्य विशेषविषयत्व-मावश्यकम् । तथाच प्रतिज्ञावाक्यार्थविवरणरूपस्य '[1]माया संसर्गस्य भवतीति' वाक्य-स्यापि प्रतिज्ञानुसारेण विषय-विशेषसंसर्गपरत्वमेव वाच्यम् ॥

एवञ्च तादृशविषयसम्बन्धानन्त्येन तन्नाशस्याप्यानन्त्यात्, तन्नाशपूर्वं प्रतियोगि-संसर्गप्रयुक्तअपचयस्य तन्नाशे सति प्रतियोगिविरहप्रयुक्तापचयस्य तावद्विरहसंसर्गप्रयुक्त-अपचयस्य च दुर्वारत्वेन 'अनुच्छित्ति'शब्दस्य लक्षणयाऽपचयपरत्वाश्रयणेऽपि 'अनुच्छित्ति-धर्मा' इत्यनेनात्मापचयाभावासिद्धेः । 'अपचय'शङ्कानिवृत्त्यर्थत्वासम्भवात् । नह्युक्तरीत्या सर्वाधिष्ठानत्वेन सकलपदार्थसम्बन्धनाशवत्त्वेन च श्रुतिप्रतिपन्ने चैतन्ये 'अपचय-सत्वयोः' सत्यत्वेन तत्र तद्बुद्धेरर्थव्यभिचारतया प्रसक्तिमात्ररूपत्वाभावेन तत्र तदभावप्रतिपादनपरत्वेन त्वदभ्युपगतस्य 'अनुच्छित्तिधर्मा'इत्यस्य सत्यवाक्त्वमुपपद्यते । नह्यसत्यवचनशतेनापि तदर्थसिद्धिरभ्युपगमार्हा । नच चैतन्य विषयवत् तत्सम्बन्धनाशोऽपि मिथ्याभूत इति वाच्यम् । श्रुतमिथ्यात्वस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपत्वेन तत्प्रविष्टस्य च त्रैकालिकनिषेधस्य परेण प्रतियोगिसत्ता-भिन्नसत्ताकत्वाभ्युपगमेन प्रतियोगि-तन्नाश-सत्वाविरोधात् प्रमाणेन यत्र प्रतियोगि तन्नाशयोः प्रतीतिस्तत्रैव तदत्यन्ताभावस्य मिथ्यात्व-व्यवहारप्रयोजकस्य क्वापि प्रमाणेन प्रतीत्यदर्शनाच्च ॥

॥ इति प्रसङ्गात् 'यद्वैतं न पश्यतीति' श्रुतेः परोदीरितार्थनिरसनम् ॥

---

(१) 'मात्रासंसर्गस्त्वस्य भवति' इति स्वारसिक पाठः ॥

नहि भूतलादौ कलञ्जभक्षणादौ वा प्रमितमिष्ट(प्रमितघटेष्ट-पा)साधनत्वादिकं निषिद्धत्वेनात्यन्ताभावप्रतियोगित्वेन स्वीकृतं मिथ्येति व्यवह्रियत इत्यस्ति । नच विषयसम्बन्धनाशस्य प्रपञ्चनाशतया प्रपञ्चनाशस्य च 'प्रपञ्चोपशमः शिवोऽद्वैतं' 'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते' इत्यादिश्रुत्या ब्रह्ममात्रत्वागमात् न तस्य तत्कृतोपचय इति वाच्यम् । 'मात्रासंसर्गस्त्वस्य भवतीति' चैतन्यविषयसम्बन्धनाशस्य ज्ञानसाध्यत्वावगमात् । ज्ञानसाध्यब्रह्ममात्रत्वानुपपत्तेः । अन्यथा तस्य ज्ञानसाध्यत्वाऽवेदकश्रुत्यप्रामाण्यापातात् । तथा च 'प्रपञ्चोपशमःशिव' इत्यादौ प्रपञ्चस्योपशमो यस्मिन् इति व्यधिकरणबहुव्रीहिरेव आश्रयणीयः, नतु 'प्रपञ्चस्योपशमः' इति षष्ठीतत्पुरुष इति । एवं 'चतुर्थःशिवोऽद्वैत' इति 'अद्वैत'शब्देऽपि 'न विद्यते द्वैतं यस्मिन्' इति बहुव्रीहिरेव नतु द्वैतभावोऽद्वैत इति नञ् तत्पुरुषः, तदाश्रयणस्य 'नेह नानाऽस्ति किञ्चन' 'एकमेवाद्वितीयम्' इति ब्रह्मचैतन्यस्य प्रपञ्चाभावस्याधारत्वाऽवेदकश्रुतिविरोधात् । नच परेण भेदं विना क्वचिदाधाराधेयभावोऽङ्गीकृतः ॥

ननु प्रपञ्चाभावस्य ब्रह्मस्वरूपरूपत्वेऽपि कल्पितभेदमादाय आधाराधेयभावोऽप्युपपद्यत इति चेन्न । तथासति प्रपञ्चाधारे ब्रह्मचैतन्ये वस्तुतः प्रपञ्चाभावस्यासत्वेन तस्य मिथ्यात्वाभावापत्तेः । किञ्चैवं सर्वत्राभावमात्रस्याधिकरणस्वरूपत्वप्रसङ्गेन योग्याधिकरणस्वरूपाभावस्य योग्यत्वेन तत्प्रमित्यर्थं षष्ठप्रमाणाङ्गीकारानुपपत्तिः ॥

यत्तु अधिकरणरूपस्यापि तस्य प्रतियोगिनिरूप्यत्वग्रहाय षष्ठप्रमाणापेक्षेति । तन्न । 'इदं तस्माद्दीर्घम्' 'इदं तस्माद् ह्रस्वम्' इति योग्यपरिमाणविशेषे ह्रस्वादिनिरूप्यत्वग्रहणवत् अधिकरणस्वरूपाभावे प्रतियोगिनिरूप्यत्वग्रहणोपपत्तेः । निरूपकतावच्छेदकप्रकारकनिरूपकज्ञानेनैव तन्निरूप्ये तन्निरूप्यत्वग्रहोपपत्तौ तदर्थमतिरिक्तप्रमाणस्यानभ्युपेयत्वात् । अन्यथा दीर्घादिपरिमाणग्रहणस्थलेऽपि ह्रस्वादिपरिमाणनिरूप्यत्वग्रहाय क्लृप्तप्रमाणान्यप्रमाणाङ्गीकारप्रसङ्ग इत्यलम् ॥

एतेन गुरुणा अभावस्याधिरकरणस्वरूपत्वमङ्गीकुर्वता तद्ग्रहाय षष्ठप्रमाणानङ्गीकारो निष्प्रमाणकः, अन्वयव्यतिरेकसिद्धानुपलब्धकारणताया दुर्निवारत्वादिति(दुर्निरासत्वादिति-पा)

प्रत्यूढम् । अधिकरणस्वरूपग्राहकचक्षुरादिप्रत्यक्षत एव तत्स्वरूपभूताभावप्रमितिसिद्धेः अधिकरणरूपाभावगतप्रतियोगिनिरूप्यत्वस्यापि प्रतियोगिनि प्रतियोगित्वस्येव तदन्यत्वेन तद्ग्राहकेणैव प्रतियोगिज्ञानसहकृतेन ग्रहोपपत्तेश्च ॥

किञ्च 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते'(तै-उ-२-१६) 'मायाधारो निराधारः' इति निरधिकरणत्वेन श्रुति-स्मृति-प्रतिपन्नस्य ब्रह्मचैतन्यस्य प्रपञ्चाभावत्वानुपपत्तिः, अभावस्य साधिकरणत्वनियमात्, अन्यथा निरवधिकबाधोऽप्यङ्गीक्रियेत । अत एव –

'नैवेह किञ्चनाग्र आसीत्'
'मृत्युनैवेदमावृतमासीत्'
'इदं वा अग्रे नैव किञ्चन आसीत्'
'नेह नानाऽस्ति किञ्चन'

इत्यादिश्रुतिष्वभावस्य साधिकरणत्वेन निरूपणम् ॥

किञ्च ब्रह्मचैतन्यरूपाभावे बाधकं विना लोकसिद्धाभावसाधिकरणत्वनियमत्यागे लोकसिद्धसप्रतियोगिकत्वत्यागप्रसङ्गः । नचेष्टापत्तिः । प्रपञ्चमिथ्यात्वासिद्धिप्रसङ्गात् । ब्रह्मचैतन्यरूपाभावस्य निष्प्रतियोगिकत्वेन तं प्रति प्रपञ्चस्याप्रतियोगित्वादिति । तस्मात् ब्रह्मचैतन्यरूपाभावस्य प्रपञ्चाविरोधितया तदन्तर्गतविषयसम्बन्ध तन्नाशकृतोपचय-अपचयाविरोधित्वात्, चैतन्ये तस्य सत्वेन विषयसम्बन्धनाशप्रयुक्तापचयाभावबोधनाय 'नानुच्छित्तिधर्मा' इत्यस्य प्रवृत्तिः । किन्तूक्तरीत्या वैशेषिकाद्यङ्गीकृतस्य विशेषगुणोच्छेदस्य न मोक्षपदार्थत्वमिति प्रतिपादनयेति किमनुपपन्नम् ॥

वस्तुतो 'न प्रेत्य संज्ञाऽस्ति'इति वाक्यपर्यालोचनया संज्ञायाः प्रेत्यभावात् प्राक् सत्त्वं तदनन्तरमसत्वं प्रतीयमानं ध्वंसापरनामकनाशप्रतियोगित्वरूपत्वेनैव पर्यवस्यति । एवं संज्ञा नाशे संज्ञावतो जीवचैतन्यस्य किं गतम्? इत्यपेक्षिते 'मात्रासंसर्गस्त्वस्य भवतीति' तस्य 'मात्रा'शब्दार्थभूतविषयाणां च ज्ञातृ-ज्ञेयभावरूपसम्बन्धनाश एव प्रतीयत इत्येव वाच्यं नत्वपचयः । तस्यापदार्थत्वादवाक्यार्थत्वाच्च । न घटादिधर्मिस्वरूपनाशेऽपचयविनाशत्वं

पश्यता तेन नाशेन घटाद्यपचयोऽनुमातुं शक्यः । नच धर्मिस्वरूपसत्वेऽपि तद्गतयत्किञ्चित् धर्मनाशमात्रेण तत्रापचयवत्वव्यवहारो दृश्यते । तथासति व्याधि-तत्प्रयुक्तदुःखादिनाशेऽपि तस्मिन् 'अयमपचितः' इति व्यवहारप्रसङ्गात् ॥

नच 'नाश-अपचययोः' सद्यो व्यभिचारं जानता सहचारदर्शनमात्रेण स्वेनैव निराकर्तुं शक्यः, 'अपचय'शङ्का याज्ञवल्क्यं प्रति मैत्रैय्या कर्तुमर्हा । येन 'अनुच्छित्तिधर्मा' इति तच्छङ्कानिरासकं याज्ञवल्क्यवचनमित्युच्येत । नच 'न प्रेत्य संज्ञाऽस्ति' इत्यस्य, 'मात्रा-संसर्गस्त्वस्य भवति' इत्यस्य च संज्ञामात्रासंसर्गात्यन्ताभावपरत्वं शक्याभ्युपगमम् । तथा-सति ताभ्यामेव वाक्याभ्यां संज्ञा-मात्रासंसर्गयोः मिथ्यात्वसिद्ध्या 'अनुच्छित्ति धर्मा' इत्यनेन तन्मिथ्यात्वस्याप्रत्याय्यत्वात् । अन्यथा ताभ्यामेव कृतकार्यत्वेनास्य वैयर्थ्यात् । यत्र यदत्यन्ताभावस्तिष्ठति इति निश्चीयते तत्र तस्याधिकरणात्मना यावद्धर्मिसत्वेन स्व-प्रतियोग्यभावप्रयुक्तापचयानापादकत्वाच्च । नहि गवि अश्वत्वं कदापि नास्तीति निश्चिन्वन् गौरश्वत्वव्यतिरेकप्रयुक्तापचयवतीति व्यवहारेति[१] । ततश्च 'अपचय'शङ्कानिवृत्तये 'नानु-च्छित्ति धर्मा'इत्यस्य प्रवृत्तिरिति सिद्धम् ॥

एतेनोक्तशङ्कानिवृत्तये 'अनुच्छित्तिधर्मा' इत्युक्तं, तदेव कथमित्याशङ्क्य, मिथ्यावस्तु-सम्बन्धेन द्रष्टृ-दृश्यभावः । तन्निवृत्तौ नात्मनः काचित् क्षतिरस्तीत्याह 'यत्र हि द्वैतमिव भवति'इत्यादिना । तत्रैव[२] सति कः प्रसङ्गो धर्मनित्यतानिरूपणस्येति प्रत्युक्तम् । 'अप-चय'शङ्काया एवानुदयस्योक्तत्वात् ॥

एतेनैव 'अनुच्छित्तिधर्मा' इत्यनेन नित्यधर्मत्वप्रतिपादने विषयविशेषरूपगुणज्ञान-सुखादिविशेषणाविनाभूततद्विषयकसंज्ञा प्रसज्येतेति 'न प्रेत्य संज्ञाऽस्ति' इति प्रतिज्ञैव व्याहन्येतेति परास्तम् ।

उक्तरीत्या प्रतिज्ञाया विशेषविषयत्वावश्यम्भावे धर्म-धर्मि-तद्रूपसंसर्गगोचरसंज्ञा-सत्त्वेऽपि व्याघातशङ्काऽप्रसरात् । अन्यथा ज्ञेयमात्राभावप्रयुक्तज्ञानामात्राभावे 'नहि द्रष्टुर्दृष्टे-

(१) व्यवहरति इति पाठः स्यात् ॥

(२) तत्रैवं सति इति पाठः स्यात् ॥

र्विपरिलोपो विद्यते' 'नहि स्रष्टुर्सृष्टेर्विपरिलोपो विद्यते' 'नहि घातुर्घातेर्विपरिलोपो विद्यते' इत्यादिदृष्ट्यादिबाधाभावाऽवेदनविरोधः । नच द्रष्ट्रादीनां दृष्ट्यादीनां च भेदान्वयः, एवं च दृश्यबाधस्तेनोच्यमानो न विरोधीति वाच्यम् । द्रष्टृत्व-दृष्टित्वादि-उपहितानां तेषां परस्पर-भिन्नत्वेन 'तेजस्तिमिरम्' 'गौरश्वः' 'यजमानः प्रस्तरः' 'सोमेन यजेत' इत्यादिवत् द्रष्टा-दृष्टिरित्यादिरूपाभेदान्वयायोगात् दृष्ट्यबाधस्य दृश्यबाधं विना निर्वाहायोगेन प्रमा-प्रवृत्तिविषयब्रह्मवत् अबाधितदृष्टिविषयाणामबाध्यत्वस्य दुर्वारत्वाच्च । 'नान्तः प्रज्ञम्' इत्यादेश्च 'तुरीयं तत् सर्वदृक् सदा' इत्याद्यविरोधाय व्यवस्थाया तत्तदर्थविषयकेश्वर-ज्ञानपरत्वमित्यङ्गीकर्तव्यत्वाच्च । नहि नित्य-अनित्यविचित्रप्रपञ्चः सर्वदा-सर्वत्र-सर्वथा-सत्वेनेश्वरज्ञानगोचर इत्यस्ति । तथासति तस्य नित्यभ्रान्तत्वापत्तेः । नचैवमीश्वरवादिना केनाऽप्युपगतम् ॥

किञ्च दृश्यमात्रस्य बाध्यत्वे तद्विषयकज्ञानमात्रस्याप्रामाण्यं दुर्वारमिति अप्रामाण्य-स्यैवोत्पत्तौ स्वतस्त्वापत्तेः, नहि शुक्तिरूप्यादि(१)ज्ञानेऽपि बाधितार्थगोचरत्वादन्यदप्रामाण्यं नामास्ति ॥

किञ्चैवं प्रत्यक्षमात्रवदनुमितिमात्रवच्च (२)यदवेदोपजीविशब्दजन्यप्रतीतिमात्रस्यापि बाधितार्थकत्वाविशेषे तस्य स्वतःप्रामाण्यनिर्वाहाय तत्करणभूतवेद-वेदोपजीविशब्दमात्रे भ्रम-प्रमाद-विप्रलिप्सा-करणापाटवादिदोषराहित्यसिद्धये अपौरुषेयत्वाद्यभ्युपगमो निरर्थकः स्यात् । नच यागादौ स्वर्गादिरूपेष्टसाधनत्वादेर्वेदेन प्रतिपन्नस्थलेनापि प्रमाणेनानिषेधात् प्रामाण्योपपत्तिः । तर्हि तस्यैव स्वर्गादिरूपेष्टसाधनत्वादेर्ब्रह्मवत् पारमार्थिकत्वप्रसङ्गः,भूतलादौ प्रत्यक्षादि प्रतिपन्नस्य घटादेरपि पारमार्थिकत्वप्रसङ्गश्च । नहि तत्र घटादिर्मानान्तरेण निषिध्यते । नच तस्याऽपि 'नेह नानाऽस्ति किञ्चन' इत्यादिप्रमाणेन ब्रह्मणि निषेधात् अपारमार्थिकत्वमिति वाच्यम् । तर्हि याग-स्वर्गसाधनत्वादेरपि तेनैव ब्रह्मणि निषेधात् तत्प्रतिपादनपरस्य 'स्वर्गकामो यजेत' इत्यादेर्बाधितार्थत्वेनाप्रामाण्यतादवस्थ्यप्रसङ्गात् ॥

---

(१) तर्हि शुक्तिरूप्यादि इति ताळपत्रस्थ पाठः ॥

(२) यद् वेदोपजीविशब्दजन्य इति पाठः स्यात् ॥

## ।। अथ स्वाप्नस्य वेदसमानार्थत्वनिरसनम् ।।

नच भूतलादौ घटादेः प्रत्यक्षेणैव प्रतीतिः, स्वाप्नप्रतीतितुल्यतयेति, न तया तस्य तत्र सत्वसिद्धिरिति वाच्यम् । एवं हि स्वाप्नप्रतीतितुल्यया 'तत्त्वमस्यादि'वाक्यजन्यया 'तत्त्वम्'पदार्थभेदगोचरया अपरोक्षप्रतीत्याऽपि तदभेदसत्वात् शब्दे क्लृप्ता ये दोषाः भ्रमादयः तद्रहितेन 'तत्त्वमस्यादि'वाक्येनोत्पन्ना अपरोक्षप्रतीतिः सविषयसत्वाव्यभिचारिणीति चेत्, तर्हि प्रत्यक्षे क्लृप्तदोषरहितेन चक्षुरादिनोत्पन्ना भूतलादौ घटादिसत्वगोचरापरोक्षप्रतीतिरपि तदव्यभिचारिणीति साम्यात् । वेदे क्लृप्तदोषराहित्यग्राहिप्रतीतेरपि प्रतीतिवत् सविषयत्वं विनैवोपपत्तेश्च(प्रतीतित्वादेव स्वाप्नप्रतीतिवत् सविषय सत्वं विनैवोपपत्तेश्च-पा) । क्लृप्तदोषरहितत्वेन स्वप्ने निश्चितात्पराभिमतवेदान्तार्थविरुद्धार्थकात्, उपक्रमादिषड्विधतात्पर्यलिङ्गोपेतात्, फलाविसंवादिप्रवृत्तिजनकज्ञानसाधनभूतात्, स्वाप्नवेदादपि 'तत्त्वमस्यादि'जाग्रद्वेदतुल्यत्वाविशेषेण स्वाप्नबहूपपत्तिसहितत्वेन प्रबलतया च [१]अवधारिता तदर्थस्यासिद्धिप्रसङ्गाच्च ।।

अत एतद्वेदापेक्षया दुर्बलत्वेनावधारितस्य तत्पराभिमतार्थस्य साधकत्वेनाभिमतस्य तत्त्वमस्यादिजाग्रद्वेदान्तस्य तादृशस्वाप्नवेदान्तेन बाधप्रसङ्गश्च । नच स्वाप्नावस्थादोषत्वयुक्तेन स्वाप्नवेदान्तेन जनिता सा बुद्धिर्भ्रान्तिः । स्वाप्नावस्थायाः दोषत्वे मानाभावात् । अन्यथा जाग्रदवस्थादोषयुक्तेन 'तत्त्वमस्यादि'वेदान्तेन जनिता अभेदबुद्धिरेव भ्रान्तिरिति सुवचम् ।।

नच स्वाप्ने दृष्टस्य तादृशवेदान्तस्य तदर्थस्य जाग्रदवस्थायां बाधादसत्वेनावधारितेन तेन 'तत्त्वमस्यादि'वेदान्तस्य तद्विपरीतत्वेनावधारितस्य कथं बाध इति वाच्यम् । जाग्रदवस्थायां दृष्टस्य 'तत्त्वमस्यादि'वेदान्तस्य पराभिमततदर्थस्य च स्वप्नावस्थायां बाधादसत्वेनावधारितेन पराभिमत'तत्त्वमस्यादि'वेदान्तार्थविरुद्धार्थस्य स्वाप्नवेदान्तस्य तदधिकबलत्वेनावधारितस्य कथं बाध इति साम्यात् । स्वप्नोत्थिते त्वदुक्तो यो बाधस्तस्यापि प्रत्यक्षत्वेन स्वाप्नप्रतीतितुल्यतया स्वगोचरस्वाप्नवदेव तदर्थासत्वासाधकत्वापत्तेश्च ।।

तस्मादुभयसमाधेयत्वात् स्वप्नदृष्टान्तेन प्रत्यक्षप्रतीतेरर्थासाधकत्वं नापादनीयम् ।

---

(१) अविधारिता इति ताळपत्रस्थ पाठः ।।

अन्यथाद्वैतवशसम्पन्नेन[१] भ्रमादिशब्ददोषरहितेनोपक्रमादि-षड्विधतात्पर्यलिङ्गोपेतेन फल-सम्बन्धिवेदविरुद्धार्थेन शुक-बालादिवाक्येनापि सत्प्रतिपक्षितत्वात्, लोकप्रसिद्धाद्वेदायित-तदभिमतार्थसिद्धिप्रसङ्ग[२] इत्यपि त्वया मां प्रत्यभिधीयतेत्यलमतिपल्लवेन ॥

ननु स्वप्नपदार्थमात्रस्येश्वरस्रष्टृत्वश्रवणात् तावन्मात्रमेव भासते सामग्रीसत्वात्, नतु जाग्रदवस्थातोऽपि तज्ज्ञाने चक्षरादेरुपरतत्वेन सामग्रीविरहात् । तथा च तदा स्वप्ने प्रमाणसिद्धमपि जाग्रदर्थभानमेवासिद्धम् । एवं सति तद्विशेषभूत'तत्त्वमस्यादि'पराभिमतार्थपर-वेदान्तभानस्यैवाभावे त्वदुक्तरीत्या स्वाप्नवेदान्तेन जाग्रत्तद्वेदान्तार्थविरुद्धार्थेन ततोऽधिक-बलत्वेन अवधारितेन तस्य बाध एव कथमिति चेत् । किमिह कथं 'स इदं सर्वमसृजत' इत्यादिश्रुत्या जाग्रत्पदार्थमात्रस्यापि स्रष्टृत्वप्रतीतेः । प्रामाणिकत्वेऽपि सामग्रीविरहात् स्वाप्नपदार्थस्य जाग्रदवस्थायां भानमेवासिद्धमिति सुवचत्वात् । न्यायसाम्यात् 'स्वप्ने दृष्ट-मिदानीं ने'ति बाधस्यापि विशिष्टस्य जाग्रदवस्थायामेवेश्वरस्रष्टृत्वस्य वक्तुं शक्यत्वात् ॥

एतेन स्वप्नद्रष्टृभिन्नदूरदेशस्थगज-तुरगादिनेन्द्रियसम्प्रयोगासम्भवात् दुरपह्नवदनुभव-निर्वाहाय श्रुतिप्रतिपन्नेश्वरस्रष्टृत्वनिर्वाहाय च सम्भवसामग्र्यैकदेश एव तदुत्पत्तिरभ्युपेया । एवं चावैरूप्याय विलक्षणसामग्रीकल्पनागौरवदोषपरिहाराय च स्वप्ने परिदृश्यमानः सर्वोऽ-प्यर्थस्तदैवोत्पद्यत इत्येवाङ्गीकारो युक्त इति परास्तम् ॥

स्वाप्नपदार्थगोचरसाक्षात्कारस्य मानसत्वपक्षे साक्षिरूपत्वपक्षे च अस्मिन् जन्मन्य-नुभूतानां तदनुभवाहितसंसारेण[३] तज्जन्यस्मृत्यावोपनीतानामेव कवि-काव्य-मूलभूतानां संसर्गज्ञानवत् संसर्गगोचरस्य साक्षात्कारस्य मानसस्य साक्षिरूपस्य वा सम्भवेन, तन्निर्वाहाय स्वप्नावस्थायां तेषाम् उत्पत्तेरनभ्युपेयत्वात् । नचैवं स्वाप्नपदार्थानाम् ईश्वरस्रष्टृत्वाऽवेदक-श्रुतिर्निर्विषया स्यादिति वाच्यम् । तस्याः प्रागननुभूतप्रत्यक्षोत्पन्नस्वाप्नपदार्थविषयत्वेनो-पपत्तेः । नच तेषाम् अस्मिन् जन्मन्यननुभवेऽपि प्राक् जन्मन्यनुभवसम्भवेन तदाहित-

---

(१) अन्यथा अद्वैतवशसम्पन्नेन इति पाठः स्यात् ॥

(२) अर्थासिद्धि प्रसङ्गः इति पाठः स्यात् ॥

(३) संस्कारेण इति स्वारसिक पाठः ॥

तद्गोचर-संस्कार-तज्जन्यस्मृतिभ्यामुपनयसम्भवात्, स्वप्नावस्थायां जाग्रदवस्थायां कवि-काव्यमूलभूतसंसर्गविषय इव संसर्गविषये मानससाक्षात्कारस्य, साक्षिप्रत्यक्षस्य वा, अङ्गी-कार एव न्याय्यः, अन्यथा सामग्र्यन्तरस्वीकारापत्तेस्तत्र चेष्टापत्तौ च स्वाप्नपदार्थमात्रस्यैव सृष्टिश्रुतेर्निर्विषयत्वप्रसङ्गपरिहाराय तदैवोत्पत्तिः किन्नाङ्गीकार्या विशेषहेत्वभावादिति वाच्यम् । एतज्जन्मनीव प्राग्जन्मन्यप्यनेकपदार्थानामननुभवसम्भवेन, सम्भवे वा, प्राग्भ-वीयतद्गोचरसंस्काराणां प्रबलव्याध्यादिनेव बहुकालव्यवधानेन नाशेन चोपनायकाभावात्, स्वाप्नकाले एव तेषाम् उत्पत्तेरभ्युपेतव्यत्वात् । नहि अस्मिन् जन्मन्यननुभूता स्वाप्न-प्रत्यक्षगोचरा प्राग्जन्मन्यननुभूता एवेत्यत्र नियमे मानमस्ति । अन्यथा अनादित्वेन प्रमाण-सिद्धानां जीवानां प्राग्भवे त्रैवर्णिकदेहसम्भवेनार्थज्ञानपर्यन्त साङ्गवेदाध्ययनसम्भवात्, त-ज्ज्ञानजनितसंस्कारजानुष्ठेयवेदार्थगोचरस्मरणेनैव अस्मिन् जन्मनि तदनुष्ठानं नत्विदानीन्त-नार्थज्ञानपर्यन्ताध्ययनगोचरवेदजन्यतदर्थज्ञानेनेति स्यात् । नचैवमिदानीं तर्हि चिराध्ययना-दिकरणं विफलमिति वाच्यम् ।

तस्य –**'यो अनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः'**

इत्यादिस्मृतिप्रतिपन्नप्रत्यवायपरिहारार्थत्वात् ।।

किञ्च प्राग्जन्मन्यननुभूतसर्वपदार्थानामिदानीं तदनुभवजनितोद्बुद्धसंस्कारजस्मृतिविष-यत्वनियमे तदन्तर्गतवेदानुपूर्व्यामपि तथाविधसंस्कारेण स्मृतिप्रसङ्गः । तस्मात् जाग्रदवस्था-यामिव स्वाप्नवास्थायामपि अननुभूताऽपि पदार्थाः प्रत्यक्षोत्पन्ना एव, परस्परसंसृष्टतया च साक्षात्कारगोचरावश्यमभ्युपेयाः । एवं च स्वाप्न-सृष्टिप्रतिपादकश्रुतिस्तद्विषयत्वेनोपपन्ना निर्विषयत्वशङ्कामेव नार्हतीति किमनिष्टम् ।।

अपि च जाग्रत्प्रत्यक्षमात्रस्यापि प्रत्यक्षत्वापराधेन स्वाप्नप्रत्यक्षवत् बाधितार्थकत्वेन स्वविषयसत्वव्यभिचारित्वे रजतात्मकतया प्रत्यक्षेण विषयीकृतशुक्तेर्वस्तुतः तदनात्मकत्ववत् 'तत्त्वमसीत्या'द्यानुपूर्वकशब्दात्मकतया प्रत्यक्षेण गृहीतवाक्यस्यापि वस्तुतः तदानुपूर्वीक-शब्दानात्मकत्वप्रसङ्गः ।।

किञ्च प्रत्यक्षविशेषमात्रेण प्रत्यक्षे क्लृप्तदोषजन्यपरीक्षितप्रत्यक्षस्यापि स्वाप्नप्रत्यक्षबाधितार्थकत्वे वा, 'अग्नौ वह्निः'इति प्रत्यक्षेण 'गुञ्जापुञ्जे वाग्निरि'ति प्रत्यक्षेणेव वह्नित्वाद्यसिद्धिप्रसङ्गः । वह्निबुद्ध्या स्पृष्टेन गुञ्जापुञ्जेनेव गुञ्जापुञ्जबुद्ध्या स्पृष्टत्वेन(स्पृष्टेन-पा) वह्निनाप्यदाहापत्तिश्च ॥

॥ इति स्वाप्नस्य वेदसमानार्थत्वनिरसनम् ॥

## ॥ अथ असत्ख्यातिवादविचारः ॥

किञ्च स्वाप्ने प्रत्यक्षीकृतगजतुरगादेरपि न स्वरूपेण बाधः । तथात्वे च 'नेदं रजतम्' इतिवत् किन्तु शुक्तिरितिवच्च 'अयं न गज' इति 'किञ्चायमयमिति' च प्रतीतिप्रसङ्गात् । अपितु 'अत्र गजो नेति' देशविशेषगजादिसंसर्गस्यैव बाधः । एवं च तत्र तत्संसर्ग एव स्वरूपेण मिथ्याभूत इत्यागतं नतु गजो मिथ्याभूत इति ॥

ननु स्वाप्ने देशविशेषसंसृष्टगजादिप्रतीतेः तस्यैव स्वप्नोत्थितेन निषेधेन स एव संसृष्टस्य गजादेः स्वरूपेण वा बाधो वाच्यः । अन्यथा 'शुक्तौ नेदं रूप्यम्' इति विशेषदर्शनात् क्रियमाणो निषेधोऽपि शुक्तिरजततादात्म्यस्यैव बाध इति स्यात्, नतु तत्तादात्म्यापन्नस्य विशिष्टस्य रजतस्येति स्यादिति चेन्न । इष्टापत्तेः । अन्यथाख्यातिवादिनैवमेव स्वीकारात् । असत्ख्यातिवादिनाऽत्र कथं विशिष्टस्य बाधोऽभ्युपेयते । जरन्नैयायिकाभ्युपगतान्यथाख्यातिरीत्यैव संसर्गमात्रस्य बाधाभ्युपगमे लाघवादन्यथा गौरवात् ॥

एवमेवाभ्युपगमे बाधकाभावाच्चेति चेन्न । मया निषेधबुद्धिमात्रं(१) बाध इत्यभ्युपगम्यते । किन्तु भ्रमविशेषदर्शनपूर्वकत्रिकालसर्वदेशीयनिषेधबुद्धिः । अस्ति च शुक्तिरूप्यादौ तथा निषेधबुद्धिः, प्राग्विशेषदर्शनात् । 'शुक्ताविदं रूप्यम्' इति भ्राम्यतो विशेषदर्शनानन्तरं नेदं रूप्यं किन्तर्हि शुक्तिः कालत्रयेऽपीदं रजतं' 'कुत्रापीदं(२) रजतं नास्ति नासीन्न भविष्यति, असदेवेदं रजतं प्रत्यभात्, मिथ्यैवेदं रजतमभात्' इति सर्वस्य स्वस्वानुभवसिद्धा । न च वर्तमानमात्रग्राहिप्रत्यक्षं शुक्तिरूप्यादिनिषेधे अतीतानागतवर्तमानसाधारण-

---

(१) मया न निषेधबुद्धिमात्रं इति पाठः स्यात् ॥

(२) ननु कुत्रापीदं रजतम् इति ताळपत्रस्थपाठः ॥

सर्वदेश-सर्वकालसम्बन्धग्राहिसामग्रीविरहान्नभवितुमर्हतीति वाच्यम् । किमेवं वदतोऽनुभव एव तादृशो नेति वक्तुमुद्योगः? किं वा तादृशमनुभवसिद्धमभ्युपेत्य तत्र सामग्री केति प्रष्टुमुद्योगः? नाद्यः । अनुभवमकल्पयत उन्मत्तवदुपेक्षणीयत्वेन उत्तरानर्हत्वात् । न द्वितीयः । अनुभवसिद्धतादृशानुभवरूपकार्यान्यथानुपपत्त्या काचित् सामग्रस्तीति कल्पनात् । अन्यथा अद्भुतबुद्धि-महाभयकारि- घनगर्जितविद्युदिन्द्रचापादिरूपप्रत्यक्षोत्पन्नानुभवसिद्धकार्याणामपि का सामग्रीति? प्रश्नकरणसम्भवेन विशिष्यवचनानर्हसामग्रीकतया आकस्मिकत्वस्वीकारप्रसङ्गः । नह्ययमनुभवोऽन्यथाख्यातिरीत्या इह दर्पणादावस्ति, इति प्रमाणसिद्धरजतविषयतया निर्वाहार्हः ॥

नहि तादृशं रजतं भ्रमविशेषदर्शनपूर्वकत्रिकालसर्वदेशीयनिषेधप्रतियोगित्वेन स्वीकारार्हम् । तथासति शुक्तिरूप्यवदेव काकमुकुटाद्यर्थक्रियासामर्थ्याभावप्रसङ्गात् । कूर्मरोमादिवत् स्वरूपत्वापाताच्च । किं वा देशकालयोः स्वावयवेषु च प्रतिपन्नोपाधित्वेन पराभ्युपगतेषु प्रतिपत्तिविषयीभूतसकलसम्बन्धेन(सकलस्वरूपेण-पा) प्रमाणसिद्धस्य रजतादेः सर्वत्र प्रतिपन्नोपाधौ तादृशसकलसम्बन्धेन स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वे इतोऽतिरिक्तमिथ्यात्वबोधितत्वयोर्दुवचत्वेन 'शुक्तिरूप्यं मिथ्येति'वत् 'आपणस्थं रूप्यं मिथ्येति' व्यवहारो दुर्वारः । तद्वदेवेन्द्रियसम्प्रयोगाद्यजन्यरजताकारापेक्षधीगोचरत्वप्रसङ्गश्च । तस्मात् 'नेदं रूप्यम्' इति भ्रमविशेषदर्शनपूर्वको निषेधो असत्ख्यातिवादे विशिष्टविषय एव सिद्ध्यति ॥

ननूक्तरीत्या त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वेनानुभवसिद्धमेवानिर्वचनीयं रजतम् अपरोक्षप्रतीतिविषयत्वान्यथानुपपत्त्या दोषसंस्काराधिष्ठानेन्द्रियसम्प्रयोगादिसामग्रास्वपतीति(१) समसमयमेवोत्पद्यत इति वादे किं बाधकमिति चेत्? उच्यते । 'एतावन्तं कालं शुक्त्यज्ञानमासीत्, भ्रम आसीत्' इति विशेषदर्शनानन्तरभाविप्रतीत्या शुक्त्यज्ञानभ्रमयोः सत्वाऽवगाहनेन तदज्ञानकार्यतया शुक्तिरूप्यस्यानिर्वचनीयत्वनिर्वाहस्तावत्सम्भवति ॥

किञ्च शुक्त्यज्ञानोपादानकत्वे अस्य रजतस्य 'इदं रजतमि'ति शुक्तीदमंशे रजताऽभेदप्रतीत्यनुपपत्तिः । नहि मृदुपादानको घटः स्वानुपादानभूततत्त्वाद्यभिन्नतया प्रतीयमानो

(१) सामग्र्याः स्वपीति पाठः स्यात् ॥

दृष्टचरः । अपि चाज्ञानोपादानकत्वे मृदूपादानघटे 'मद् घटः' इति घटस्योपादानानुविद्धतया प्रतीतिवत् 'रजतमज्ञानम्' इति शुक्तिरूप्यस्यापि स्वोपादानभूतशुक्त्यज्ञानानुविद्धतया प्रतीतिप्रसङ्गः । नहि कदाऽपि कस्याऽप्येवं प्रतीतिरस्ति ॥

किञ्चेदानीन्तन सर्वं रजतं प्रसिद्धरजतावयवोपादानकमेव दृष्टमिति क्लृप्तसामग्रीं विना रजतोत्पत्त्यङ्गीकार एवायुक्तः । किञ्चोत्पत्तौ प्रमाणसिद्धायां सामग्री कल्पते । नहि शुक्तिरूप्ये कदाऽप्युत्पत्तिरनुभवसिद्धा । येन विजातीयमेवेदं रजतमित्यङ्गीकृत्य तदुत्पत्तिनिर्वाहाय क्लृप्तसामग्रीविलक्षणसामग्र्यङ्गीक्रियेत ॥

अपि च शुक्तिरूप्यादेरनिर्वचनीयत्वे ख्यातिबाधान्यथानुपपत्तिं प्रमाणत्वेन स्वीकुर्वतानात्यन्ताभावमात्रं बाधत्वेनोच्यते किन्तु निवृत्तिरेव । नहि शुक्तियाथात्म्यज्ञानेन तदज्ञानं निवृत्तमिति शुक्तिज्ञानस्येव शुक्तिरूप्यं निवृत्तमिति, शुक्तिरूप्यनिवृत्तिरप्रत्यक्षाप्यनुमीयत इति वाच्यम् । अस्या कल्पनायाः शुक्तिरूप्यस्य तदज्ञानोपादानत्वसिद्ध्यधीनत्वेनाऽन्योन्याश्रयात् । नच कदाचित्कापरोक्षप्रतीतिरूपख्यात्यन्यथाऽनुपपत्त्या शुक्तिरूप्यस्योत्पत्ति कल्पनानन्तरमुत्पन्नस्य भावस्य निवृत्तिनियमेन तन्निवृत्तिसिद्धिरविकलेति वाच्यम् । तथासति 'ममाज्ञानं निवृत्तमत्र घटनाशो वृत्त' इत्यपरोक्षप्रतीतिविषयत्वेऽप्यज्ञानघटयोस्तत्प्रतीतिकाले सत्वाभावात् 'सोऽयं देवदत्त' इत्यपरोक्षप्रतीतेः तत्राऽरोपविषयासत्वेऽपि सत्वाच्च ॥

किञ्च प्रतीतेरपरोक्षत्वे विषयेन्द्रियसम्प्रयोगजन्यत्वं वा विषयजन्यत्वं वा तन्त्रम्, लाघवात् । नतु यावत् तज्जन्यत्वं, गौरवात् । एवं च शुक्तिरूप्यासत्वेऽपि तदपरोक्षप्रतीतिः स्वात्मलाभाय तत्र तदुत्पत्तिं न कल्पयेदेव, तस्याः ख्यातिबाधान्यथानुपपत्त्या न शुक्तिरूप्यस्यानिर्वचनीयत्वसिद्धिः ॥

यत्तु 'अज्ञानं निवृत्तम्' 'अत्र घटध्वंसो जातः' 'सोऽयं देवदत्त' इत्यादिप्रतीतीनां प्रतियोगि तत्तांशे अनुयोग्याद्यंश इव नापरोक्षत्वं किन्तु स्मृतिरूपत्वमेव । नचैवं प्रकृते शुक्तौ 'इदं रूप्यमि'ति ज्ञानस्य पुरोवर्त्त्यंश इव रजतांशेऽप्यपरोक्षत्वात्, अत एव 'इदं रजतं साक्षात्करोमि' इत्यनुव्यवसाय इति । तन्न । अञ्जनादि-सहकारिसामर्थ्यात् कठिनतर-स्थूलावयवि-भूप्रदेशान्तरितनिधिनिक्षेपादिना सन्निकर्षाभावेऽपि चक्षुषस्तत्साक्षात्कारजनक-

त्ववत् दोषलक्षणसहकारिसामर्थ्यात् शुक्तिरूप्यासन्निकर्षे अधिष्ठानभूतशुक्तिमात्रसन्निकृष्टस्य चक्षुषस्तत्साक्षात्कारजनकत्वोपपत्तेः । विषयसत्त्वं हि सन्निकर्षप्रयोजकतयोपयुज्यते, नत्वन्यथा । यत्र सन्निकर्षं विनाऽपि अन्वयव्यतिरेकाभ्यां सहकारिविशेषणादेव तत्प्रयोज्यत्वे- नाभिमतस्य साक्षात्कारस्योपपत्तिः । तत्र विषयसत्वमावश्यकमिति अकामेनाप्यङ्गीकार्यम् । एवं च तत्रासतोऽन्यत्र सत्वं तत्साक्षात्कारं प्रति अप्रयोजकत्वात् अन्यत्र सत्वे मानाभावाच्च, अत्यन्तासत एव शुक्तिरूप्यस्य ख्यातिरेव सूपपादेति सर्वमनवद्यम् ।।

।। इति असत्ख्यातिवादविचारः ।।

केचित्तु[१] चक्षुर्व्यापारानान्तरं 'भूतले घटो ध्वस्तः' 'चत्वरेऽस्मिन् घटो नास्ति' 'सोऽयं देवदत्त' इति प्रतीत्यनन्तरं 'चक्षुषा घटध्वंसोऽत्र दृष्टः' 'चत्वरं घटाभावं पश्यामि साक्षात्करोमि' 'इदानीं स एव देवदत्तः तत्र साक्षात्कृतः' 'तमिमं देवदत्तं साक्षात्करोमि' इत्यनुव्यवसायेन घटध्वंसादिप्रतीतीनामिव चक्षुर्व्यापारानन्तरं विशेषदर्शनकाले शुक्तौ 'इदं रजतम्' इति ज्ञानानन्तरम् 'इदं रजतं जानामि' 'इदं रजतं पश्यामि साक्षात्करोमि' इति तद्रजतप्रतीतेरनुव्यवसायेन प्रत्यक्षत्वं विषयीक्रियत इत्यविवादम् । तत्र प्रतियोगितत्तांश इव रजतांशो सन्निकृष्ट एव प्रत्यक्षकाले असन्नेव विषय इत्यस्तु । नचैवमङ्गीकारेऽति- प्रसङ्गः ।........ अभावाभेदप्रत्यक्षसामग्रीत्वेन प्रतियोगितत्ताप्रत्यक्षत्वेन कार्य- कारणभावस्यैवाधिष्ठानभासकसामग्रीत्वेनाध्यासप्रत्यक्षत्वेन कार्यकारणभावस्यैवातिप्रसङ्ग- भञ्जकत्वात् । नच रजतप्रत्यक्षे रजतेन्द्रियसंयोगस्य विशेषसामग्रीत्वात् तदभावे रजत- प्रत्यक्षमेव न भवितुमर्हतीति वाच्यम् । रजतध्वंसादिप्रत्यक्षस्योक्तानुभवेन सत्यपि रजत- प्रत्यक्षत्वे रजतेन्द्रियसंयोगाजन्यत्वोपगमात् । नहि रजतेन्द्रियसंयोगजन्यत्वं तस्य कथमपि सम्भवति ।।

एतेन रजतेन्द्रियसंयोगजन्यतावच्छेदकं लाघवात्,(तत् रजतप्रत्यक्षत्वमेव-पा) एवंच शुक्ति- रूप्यप्रत्यक्षत्वमेव नतु तत्प्रत्यक्षप्रमात्वं गौरवात्, एवं च शुक्तिरूप्यप्रत्यक्षस्य जन्यत्वा- ङ्गीकारे सामग्रीबाधात् बाधो वज्रलेपायित इति तत्प्रत्यक्षमजन्यमेव साक्षिरूपमास्थेयम् ।

---

(१) केचित्तु इत्यस्य परामर्शादन्यथाख्याति.......असत्ख्यातिरेव युक्तेत्याहुः पु.४०८ इत्यनेनान्वयः ।।

नचैवं दोषसंस्कारसम्प्रयोगाविलम्बनात् तद्विलम्बो न स्यादिति वाच्यम् । तेषां रजतरूप-विषयमात्रोत्पादकत्वेन तत्प्रत्यक्षं प्रत्यजनकत्वात्, तद्विलम्बेन रजतप्रत्यक्षाविलम्बा-सिद्धेरिति परास्तम् ॥

एवं ह्यभावप्रत्यक्ष-प्रत्यभिज्ञाप्रत्यक्षयोः प्रतियोगितत्तांशे सन्निकर्षं विनाऽपि प्रत्यक्षत्व-दर्शनेन तन्निर्वाहाय तदंशेऽपि तयोः साक्षिप्रत्यक्षरूपत्वापत्तेः । तत्र तत् रजतभेदेनानुभूयत (ज्ञानभेदो नानुभूयत-पा) इति चेत् । न । शुक्तिरजतप्रत्यक्षस्थलेऽपि तद्भेदानुभवसाम्यात् । तत्र क्लृप्तसामग्रीविरोधात्(सामग्रीविरहात्-पा) । तथा ज्ञानद्वयस्वीकारे तत एवाभावप्रत्यक्षादि-स्थलेऽपि तद्भेदस्वीकारस्य दुर्निरासत्वात् ॥

किञ्च ज्ञानभेदाननुभवेऽपि तदङ्गीकारे स्वाङ्गुलीयकभूतरजतादिविषयकस्य 'इदं रजतम्' इत्याद्याकारस्यापि ज्ञानस्य भेदाङ्गीकारापत्तेः ॥

अपि च सामग्रजन्यसाक्षिप्रत्यक्षस्यैव रजतप्रत्यक्षत्वे तज्ज्ञानस्य यावत् स्वावस्थानं तदाकारत्वनियमेन रजतज्ञानत्वेन स्वीकृतस्य साक्षिणो रजतोत्पत्तेः प्रागपि पश्चादपि सत्वात्, रजतसत्वसमय इव रजताकारत्वप्रसङ्गः । नहि तज्ज्ञानं सत् स्वकाले क्वापि तदाकारं दृष्टचरम् ॥

नन्वनित्यज्ञाने एवायं नियमो नतु नित्यानित्यसाधारणज्ञानमात्रे, तथात्वे तवापि नित्यत्वेन स्वीकृतेश्वरज्ञानसाक्षिज्ञानयोरपि सर्वदा वर्तमानेष्वेवातीतानागतवस्तुष्वपि अस्ती-त्याकारतापत्तिः । अतो नित्यानित्यसाधारणज्ञानमात्रे तदाकारत्वप्रयोजकं विषयसत्वमेव वाच्यं, नतु यावत् स्वसत्वमिति चेन्न । रजतध्वंसप्रत्यक्ष-प्रत्यभिज्ञाप्रत्यक्षयोः प्रतियोगि-तत्तांशे विषयसत्वं विनाऽपि प्रतियोगि-तत्ताकारत्वदर्शनेन व्यभिचारात् ॥

किञ्च नित्यस्य वाऽनित्यस्य वा ज्ञानस्य तत्तदाकारवत्वं न विषयसत्वप्रयुक्तमभ्युप-गन्तुं शक्यम् । 'घटो भविष्यति' 'घटो ध्वस्तः' इति प्रतीतेरपि घटाकारत्वदर्शनेन प्रागभावप्रध्वंसकालेऽपि घटसत्वाभ्युपगमप्रसङ्गात् । तथाच घटादिध्वंसाद्यवभासकसामग्र्या एवेदृशस्वभावोऽङ्गीकार्यः । तत्प्रतियोग्याद्यभावेऽपि तज्ज्ञाने तदाकारत्वसम्पादकत्वमिति प्रकारान्तरासम्भवात् । एवं च ज्ञानसामग्र्याः क्वचिद्विषयं विनापि तदाकारत्वसम्पादकत्व-

स्वभावकल्पनात् भ्रमसामग्र्या अपि विषयं विनैव तदाकारत्वसम्पादकत्वस्वभावमात्राङ्गीकारो युक्तः । अन्यथा साक्षिज्ञाने स्वाकारत्वप्रयोजकाप्रामाणिकानिर्वचनीयरजताद्युत्पादकानन्त-सामग्रीरूपधर्मिकल्पनापत्तिः । तथाविधधर्मिकल्पनात् तथाविधस्वभावरूपधर्ममात्रकल्पनस्य ज्यायस्त्वात् ॥

ननु त्वदभ्युपगतभ्रमसामग्र्या एव मया साक्षिरूपभ्रमविषयभूतानिर्वचनीयरजतादि-सामग्रीत्वाभ्युपगमादावयोः साम्यम् । एतावांस्तु विशेषः । यत्त्वया विषयासत्त्वमङ्गीकृत्य तद्भासकसामग्र्यङ्गीक्रियते, मया तु तस्या एव सामग्र्याः रजतादिविषयोत्पादकसामग्रीत्व-मङ्गीकृत्य तद्रजतादेः सामग्र्यजन्यसाक्षिभास्यत्वमङ्गीक्रियत इति चेन्न । शुक्तिरूप्यादेः साक्षिभास्यत्वपक्षे शुक्तिज्ञानप्रतिबन्धकतयाऽवश्याङ्गीकार्यो यो दोषस्तत्सहकृतेदमाकारा-धिष्ठानज्ञानसामग्र्यास्त्वदभ्युपगताया एवाऽनिर्वचनीयरजताद्युत्पादकसामग्र्या कल्पनाया तादृशरजतोत्पत्तिं विनैव साक्षिणि तदाकारत्वसम्पादकत्वस्वभावमात्रकल्पने लाघवात् । अन्यथाऽनिर्वचनीयरजताद्यनन्तविषयसामग्र्याः कल्प्यत्वेन बहुकल्पनागौरवात् । नचेद-माकारवृत्तिसामग्र्येवोक्तदोषसहकृतानिर्वचनीयरजतादिसामग्री, नतु तदतिरिक्ता सा, अतो न कल्पनागौरवमिति वाच्यम् । तथासत्येकसामग्रीप्रसूतत्वेनेदमाकारवृत्तितदभिव्यक्त-चैतन्यभास्यानिर्वचनीयरजतयोरभेदप्रसङ्गात् । दोषसहकृतज्ञानसामग्रीजन्यत्वेनेदमाकारवृत्ते-र्भ्रमत्वप्रसङ्गश्च । रजततज्ज्ञानयोरभेदे 'रजतं जानामि' इति ज्ञाने रजतकर्मकत्वानुभव-विरोधश्च । साक्षिणो दोषाजन्यज्ञानत्वेन प्रमात्वनियमात्, प्रमाविषयस्य च चरमवृत्ति-विषयब्रह्मवत् तद्विषयभूतरजतस्याबाध्यत्वप्रसङ्गश्च । अन्यथा ब्रह्मणोऽपि दोषजन्यज्ञान-विषयत्वाविशेषात् शुक्तिरूप्यवत् ज्ञाननिवर्त्यत्वरूपबाध्यत्वप्रसङ्गः ॥

किञ्च साक्षिणि स्वाकारत्वसम्पादनार्थं रजतादिरूपविषयसत्वाङ्गीकारेण 'इदं रजतमत्र नास्ति नासीन्न भविष्यति' इति तत्र तस्य त्रैकालिकनिषेधानुभवविरोधः । नहि प्रतियोगिदेश एव विना विरोध्यभावसम्पादकं तदभावाभ्युपगमो युक्तः । नच समानसत्ताकयोरेव प्रतियोगि तदभावयोः समानदेशत्वं विरुद्धं नतु भिन्नसत्ताकयोरपि, रजताभावश्चात्र रजतापेक्षयाऽधिक-सत्ताक इति वाच्यम् । लाघवेन प्रतियोगि-तदभावयोः समानदेशताविरोधे सत्वस्यैव

प्रयोजकत्वात्, समानसत्वस्य सत्त्वापेक्षया गुरुत्वेन तत्राप्रयोजकत्वात् । तर्हि 'कालत्रयेऽपि इदं रजतमत्र नास्तीति' विशेषदर्शनजन्यप्रमितिविषयत्वेन न शुक्तौ रजतात्यन्ताभावस्यावरणीयत्वेन अन्यत्र स्वरूपेणासतो रजतस्य शुक्तावपि स्वरूपेणाभावे तस्य कूर्मरोमादिवदत्यन्तासत्वमेव स्यात् नत्वनिर्वचनीयमिति चेत् । अस्तु तथा अन्यथाऽगतेऽर्थे किं कुर्मः?

ननु प्रतियोगितदभावयोः सत्वेनैव समानदेशे विरोधाभ्युपगमे 'यत्रैव वृक्षे कपि संयोगः तत्रैव तदभावो न स्यादिति' चेन्न । समानसत्वस्य प्रयोजकत्वाङ्गीकारेऽप्येतद्दोषसत्वात् । तत्रैकावच्छेदेन प्रतिपत्तिविषयीभूतसकलसम्बन्धेन प्रतियोगि-तदभावयोः समानदेशताविरोधे तुल्यसत्वं प्रयोजकमित्यङ्गीकारे तु प्रयोजकशरीरप्रविष्टशिष्टतुल्यसत्त्वे तुल्यत्वांशं परित्यज्य सत्त्वमेव लाघवात्, तत्र प्रयोजकमिति अस्मदुक्तौ त्वदुक्तदोषअप्रसराच्च । अन्यथा= समानसत्वमात्रेणैव विरोधे, वृक्षेकपिसंयोग-तदभावयोरविरोधोपपादनाय शाखाद्युपाधिकृतस्य वृक्षे औपाधिकभेदस्य त्वयाऽनङ्गीकारप्रसङ्गः ॥

अपि च इन्द्रियसम्प्रयोगसंस्कारयोरनुभवस्मृती प्रत्येव हेतुत्वेनावधारितयोस्तद्विषयभूतरजताद्युत्पादकत्वाङ्गीकारे अक्लृप्तकल्पनाप्रसङ्गः ॥

एतेन अपरोक्षप्रतीतेर्विषयसत्वाऽविनाभूतत्वनियमात् शुक्तिरूप्यस्य स्वप्रत्यक्षकाले शुक्तिदेशे सत्वं दुर्वारम् । एवं चापरोक्षप्रतीत्यन्यथाऽनुपपत्त्या प्रसिद्धस्य रूप्यस्य कादाचित्कत्वाऽन्यथानुपपत्त्योत्पादकसामग्री कल्प्यते । नचैवं गौरवः । अन्यफलमुखगौरवत्वेनादोषत्वात् । नचाऽतीतघटादिप्रत्यक्षे विषयसत्वमेव दुर्लभमिति वाच्यम् । अतीतघटाद्यंशे तस्य स्मृतित्वोपगमात् । अभावप्रत्यक्षात् प्रतियोगिघटादिज्ञानस्य भिन्नत्वोपगमाद्वा नोक्तनियमभङ्गः । अनिर्वचनीयत्वं च तस्य शुक्तिरूप्यादेः ख्यातिबाधान्यथानुपपत्त्या सिद्ध्यतीति निरस्तम् ॥

'कालत्रयेपीदं रजतमात्रं न' इत्यादिविशेषदर्शनपूर्वकानुभवेन तदपरोक्षप्रतीतिकालेऽपि तत्र तस्यासत्वावधारणेन प्रतीतेरापरोक्ष्येऽपि अतीतादिगोचरज्ञानवद्विषयसत्वं विनाऽप्युपपत्त्योक्तनियमासिद्धेः । अन्यथा प्रतीतत्वस्यैव विषयसत्वाविनाभूतत्वावधारणात्, अतीतानागतगोचरज्ञानबलेन तद्विषयीभूतस्य घटादिप्रतियोगिनोऽपि प्रत्यक्षागोचरं सत्वं कल्प्यं

स्यात् । तदानीन्तनविषयसत्वे लाघवेन तदा प्रतीतत्वस्य तन्त्रत्वात्, प्रतीतत्वस्यापरोक्षत्वापेक्षया सामान्यरूपत्वेन विषयसत्ताव्याप्यत्वस्य स्वीकार्यत्वात्, तत्र तद्व्यतिरेकावधारणेन सत्त्वकल्पनाया बाधे प्रकृतेऽप्युक्तरीत्या शुक्तिरूप्यादेरपरोक्षप्रतीतिकालेऽपि ख्यातेरेवावधारणात्, तदा तत्सत्वकल्पनाबाध इति साम्यात् ॥

यदुक्तमभाव(यत्तूक्तमभाव-पा)ज्ञानप्रत्यभिज्ञे प्रतियोगितत्तांशयोः स्मरणात्मके इति अपरोक्षत्वरूपविषयसत्वापादकाभावान्नोक्तनियमभङ्ग इति । तन्न । 'शुक्ताविदं रूप्यम्' इति ज्ञानस्यापि रजतांशे रजतगोचरसंस्कारान्वयव्यतिरेकानुविधायित्वात् स्मृतित्वमिति सुवचत्वात् । 'स्मरामी'त्यनुभवस्तु उभयत्र समः । तव व्यावहारिकरजतगोचरसंस्कारात् प्रातिभासिकरजतोत्पत्तिवत् मम सत्यरजतगोचरसंस्कारात् असद्रजतगोचरस्मृत्युत्पत्तिरपि तुल्यम् ॥

अपि च 'चक्षुषा इदं रजतं पश्यामि' इत्यनुभवबलेन इदमाकारप्रतीतेः चक्षुर्जन्यत्वस्वीकार एव युक्तः, नतु साक्षिरूपत्वस्वीकारः । अन्यथा सत्यस्थलेऽपि 'चक्षुषा घटं पश्यामि' इत्यनुभवबलेन घटादिप्रतीतेश्चक्षुर्जन्यत्वासिद्धिप्रसङ्गः साक्षिरूपत्वप्रसङ्गश्च ॥

यत्तु अभावप्रत्यक्षप्रत्यभिज्ञास्थले प्रतियोग्यंशे तत्तांशे च स्मरणं सन्निकृष्टाभावमांसपिण्डदेवदत्त प्रत्यक्षाद्भिन्नमेव ज्ञानमिति । तन्न । तथासति अभावे घटादिप्रतियोगिकत्वासिद्धिप्रसङ्गात् । तत्रेदं....नाश्रयादेवासिद्धिप्रसङ्गाच्च । घटपटमात्रगोचरज्ञानयोरिव तयोरपि परस्परासम्बन्धार्थगोचरत्वात् ॥

यदुक्तं ख्यातिबाधान्यथानुपपत्त्या शुक्तिरूप्यादिकमनिर्वचनीयमेव सिद्ध्यतीति । तन्न । ख्यात्यनुपपत्त्या सत्वं, बाधान्यथानुपपत्त्याऽसत्वं, चेति सदसद्रूपत्वाङ्गीकारेणैव तदुपपत्त्या तस्या अनिर्वचनीयत्वसिद्धिपर्यन्तधावनाऽनवकाशात् । नच सदसद्रूपत्वमेकत्र विरुद्धमिति वाच्यम् । एकत्र त्वदभ्युपगतानिर्वचनीये सद्वैलक्षण्य-असद्वैक्षण्यरूपनिषेधसमुच्चयवत् सत्व-असत्वरूपविधिसमुच्चयस्याप्यविरुद्धत्वोपपत्तेः । तस्माद् 'असदेव रजतं प्रत्यभात्' इत्युत्तरकालीनपरामर्शात् अन्यथाख्यात्यनिर्वचनीयख्यात्योः उक्तदूषणग्रासाच्च असत्ख्यातिरेव युक्तेत्याहुः ॥

परत्रेदृशीं [१]प्रक्रियामातिष्ठन्ते । तथाहि । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इतिश्रुतेश्चैतन्यमेव सर्वस्य भासकं वाच्यम् । तच्च 'ब्रह्म'शब्दितं चैतन्यम् 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतेः स्वतोऽसङ्गोदासीनस्वभावमास्थेयम् । 'यत्साक्षादपरोक्षाद्ब्रह्म'इति श्रुतेरपरोक्षैकरसमित्यपि स्वीकार्यम् । पदार्थेषु प्रपञ्चान्तर्गतेषु कतिपयपदार्था एव योग्याः नतु सर्वे इति सकलवैदिकसम्प्रतिपन्नव्यवस्थासिद्धये कतिपयपदार्थेष्वेवापरोक्षत्वेनानुभवसिद्धेषु योग्यशब्दितेषु तदपरोक्षत्वम् अपरोक्षैकरसचैतन्यसम्बन्धप्रयुक्तमेव वाच्यम् । स सम्बन्धोऽपि न संयोगादिरूपस्तत्प्रयोजकातिप्रसङ्गात् । नहि कृष्णवस्तुसम्बन्धमात्रेण धवलप्रसादादेः कार्ष्ण्यमस्ति, तत्सम्बन्धकाकादेर्वाधावल्यम् । तथा च तत्तत्पदार्थापरोक्षत्वनिर्वाहायापरोक्षचैतन्येन तेषां पदार्थानामभेदतादात्म्यापरनामक एव सम्बन्धो वाच्यः । सोऽपि चैतन्यजडयोर्न वास्तवः सम्भवतीति अन्यप्रयुक्तो मिथ्याभूतश्च वाच्यः । नहि वस्तुतोऽसङ्गैकस्वभावचैतन्यस्य जडस्य चानन्यप्रयुक्तवास्तवः स सम्बन्धो युज्यते । नच भेदादिनिष्ठपदानां सम्बन्धोऽस्तु गुणगुणिनोः संयोगसम्भवे समवायवदिति वाच्यम् । घटादेर्द्रव्याभिन्नत्वेनैव द्रव्यत्ववत् सम्बन्धान्तरेण तत्र विद्यमानस्य गुणकर्मादिर्द्रव्यत्वाभावेनापरोक्षाभेदेनैवापरोक्षाभिन्नब्रह्मवत् पदार्थानामपरोक्षत्वस्य निर्वाह्यत्वात् । नच जडाजडयोरभेदायोगः । वास्तवस्य तस्याऽयोगेऽपि अन्यप्रयुक्तस्यावास्तवस्य सम्भवात् ।

'सर्वं ह्येतद् ब्रह्म' 'अयमात्मा ब्रह्म' इत्यादिश्रुत्या सर्वस्यापि ब्रह्मात्मकत्वावेदनेन दर्शनेन च, सच वाऽपरोक्ष्यप्रयोजको नान्यः । तस्मिन् च श्रुतिप्रतिपन्नो तादात्म्यसम्बन्धे सत्यपि प्रमातृजीवचैतन्यस्य घटादिरपरोक्ष इति तत्तादात्म्यस्य विषयापरोक्ष्यस्वरूपफलोपाधानप्रयोजकसम्बन्धरूपत्वप्रयोजकतया विषयाकाराकारितान्तःकरणवृत्तिरविद्यावृत्तिश्चोपेया, सैवाऽन्तःकरणवृत्तिश्च चैतन्यविषययोः तादृशसम्बन्धसम्पादिका सती परोक्षचैतन्यावान्तःकरणाभिभवसम्पादनद्वारा विषयेनावृतचैतन्याभेदं सम्पादयन्ती तदापरोक्ष्यव्यवहारहेतुर्भवति । तथा स्वस्वरूपभूतैकोपाध्यवच्छिन्नत्वसम्पादनद्वारा प्रमातृ-प्रमेय-चैतन्ययोरभेदे सम्पादिते प्रमातृचैतन्यस्य 'घटमपरोक्षं जानामि' इत्यादिव्यवहारश्च भवति । वृत्तेश्च विषयाकारत्वं

---

(१) परे तु ईदृशीम् इति पाठः स्यात् ॥

'मुद्रामुद्रितलाक्षादिन्यायेन केदाराद्यन्तःप्रविष्टजलन्यायेन' विषयाकारसदृशाकारत्वमेव । अत एव यत्र न तादृशीवृत्तिस्तत्र विषयेनैवाऽपरोक्षत्वव्यवहारः ।।

एवं च सति 'शुक्ताविदं रूप्यम्' इतिज्ञानमिदमंश इव रजतांशेऽपि अनावृताधिष्ठानचैतन्यसम्बन्धसत्वादपरोक्षार्थविषयं सत् न स्मरणरूपमभ्युपगमार्हम् । अभावप्रत्यक्षप्रत्यभिज्ञास्थलेतु प्रतियोगितत्तारूपाविव वायोरतीतत्वेनातीतत्वेऽपि (रूपविपर्ययोरतीतत्वेनानीतत्वेऽपि-पा) देशकालव्यवहिततया इन्द्रियसम्प्रयोगाभावाद्विषयोपरागप्रयोजकतदाकारवृत्तेरेवाभावात् तदापरोक्ष्यप्रयोजक-साक्षिचैतन्यसम्बन्धरहित-प्रतियोग्यादिविषयतया तदंशे स्मरणरूपमेव स्वीकारार्हम् । तथाचापरोक्षज्ञानमात्रं विषयाविनाभूतमेव सर्वमिति नोक्तनियमभङ्ग इति । तन्न । 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतेरितरप्रकाशस्येश्वर प्रकाशाधीनत्वाऽवेदनेन ईश्वरप्रकाश एव सर्वस्य प्रकाश इति आवेदनात् । 'अनुभाति'-इत्यस्य 'तस्य भासा सर्वमिदं विभाति' इत्यस्य च इतरभानस्य तदधीनत्वप्रतिपादकतायाः स्फुटप्रतीतेः । अन्यथा 'अनु'शब्दस्य 'तस्य भासा' इति तृतीयान्तस्य चानुपपत्तेः । 'राजपुत्र्यपि भर्तारं गच्छन्तमनुगच्छति' इत्यादिशब्दाद् भार्यागमनस्य तत्र गमनाधीनप्रतीतेरानुभविकत्वाच्च । 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यादौ 'सर्व'शब्दस्येव 'तमेव भान्तम्' इति श्रुतौ 'सर्व'शब्दस्य सूर्यादिप्रकृतप्रकाशपरत्वेनासङ्कुचितवस्तुमात्रपरत्वासिद्धेश्च ।'इदं' शब्दस्वारस्येन तथा सङ्कोचस्य न्यायप्राप्तत्वाच्च । अन्यथा

'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' (भ-गी-१५-६)

इतीतरप्रकाश्यत्वाभावानुक्तिप्रसङ्गाच्च । प्रकाशैक्ये तत्प्रकाशस्यैवेश्वरप्रकाशत्वात् । 'असङ्गोऽह्ययं पुरुषः' इति सङ्गमात्रनिषेधात् सर्वस्येतरस्येश्वरप्रकाश-प्रकाश्यत्वरूप-सङ्गस्याप्यसिद्धेश्च । 'नेह नानाऽस्ति किञ्चन' इत्यादिना ब्रह्मातिरिक्तमात्रस्यापारमार्थिकत्वाऽवेदनात् त्वदीश्वरप्रकाश-प्रकाश्यत्वस्यापि तथाविधसङ्गत्वेनातिरिक्तासङ्गाभावेनासङ्ग इति तादृशसङ्गस्यैव निषेद्धव्यत्वाच्च ।'तमेव भान्तम्' इत्यादेस्तद्भास्यत्वस्य (तद्भास्यरूप-पा) सङ्गलक्षणप्रतियोग्युपस्थापकतया वैयर्थ्येन तदविरोधोपपत्तेश्च । 'यत्साक्षादपरोक्षात् ब्रह्म' इति श्रुति-

प्रतिपन्नापरोक्षैकरस चैतन्येन जीवात्मना इव सर्वप्रपञ्चस्यापि 'सर्वं ह्येतत् ब्रह्म' 'अयमात्मा ब्रह्म' इति तल्पवदभेदस्य श्रवणात् जीवचैतन्यस्य नित्यापरोक्षवद् वियदादेरपि व्यवहित-घटादेरपि च तत्तदाकारवृत्तिनैरापेक्षेणैवापरोक्षत्वापत्तेश्च । चैतन्ये वास्तवाऽपरोक्षाभेदेनैवा-परोक्ष्यदर्शनेन घटादेरपि आपरोक्ष्यनिर्वाहाय तादृशचैतन्येन वास्तवभेदस्यैवाभ्यु-पेयत्वाच्च ।।

लाघवेन वास्तव-अवास्तव-साधारण-तदभेदस्यैवापरोक्षप्रयोजकत्वे अवास्तवारोपित-तदभेदस्य शब्दाभासादिना योग्य-अयोग्यप्रपञ्चमात्रे परीक्षितप्रत्यक्षादितो निर्विचिकित्स भेदप्रत्ययकालेऽपि तादृशचैतन्याभेदाध्यासस्य सुलभत्वे तस्य सर्वस्यापि घटादिवज्जीव-चैतन्यवच्चापरोक्ष्यप्रसङ्गाच्च ।।

अपि च 'ममाऽत्र अज्ञानम्' 'अहमज्ञः' 'ममान्तःकरणम्' 'मम मनः' 'अहं दुःखी' 'अहं सुखी' इति अज्ञानादीनां प्रमातृचैतन्यसंसृष्टतया तद्भिन्नत्वेन ग्रहेऽपि आपरोक्ष्यदर्शनेन विषयापरोक्ष्ये अपरोक्षाभेदस्याप्रयोजकत्वानुपपत्तेश्च ।।

एतेन पारमार्थिकजीवचैतन्ये पारमार्थिकोऽपरोक्षाभेदः, व्यावहारिके व्यावहारिकोऽ-परोक्षाभेदः, प्रातिभासिके प्रातिभासिकोऽपरोक्षाभेदः, तत्तदापरोक्ष्ये प्रयोजकः सामान्यतो विषयापरोक्ष्यमात्रे अपरोक्षाभेदः प्रयोजकः, सामान्ये सामान्यस्य, तद्विशेषे तद्विशेषस्य, प्रयोजकत्वात्, अतो नातिप्रसङ्ग इति निरस्तम् ।।

'अहमज्ञानमहमन्तःकरणमहंमनोऽहं दुःखम्' इति कदाऽप्यननुभवेन अज्ञानादेरहमर्थभूत-व्यावहारिकापरोक्षचैतन्याभेदं विनाऽप्यापरोक्ष्यसत्वात् स्वाप्न-गज-तुरगादीनां प्राति-भासिकानां व्यावहारिक-प्रमातृचैतन्येऽन्तःकरणतद्वृत्त्युपहितसाक्षिचैतन्येन भेदग्रहे सत्येवा-परोक्ष्यानुभवाच्च ।।

एतेन स्वाप्नपदार्थानां शुद्धचैतन्ये एव भेदेनाध्यासात्, तेषामापरोक्ष्यमनुपपद्यत इति परास्तम् । 'अयं गजो महान्, अयं न तथा, अयन्त्वनेन पथा गच्छति, अयं च अत्रैव राजद्वारि तिष्ठति' इति स्वाप्नानुभवेनेदन्त्वोपहितमर्थाभेदानुभवेन शुद्धचैतन्यस्य तदधिष्ठाने एव मानाभावात् ।।

अपि च सुप्तौ 'एतावन्तं कालं सुखमहमस्वाप्सम्, एतावन्तं कालं न किञ्चिदवेदिषम्' इत्यौत्तरिकपरामर्शकल्प्य तथाविधाऽनुभवस्य करणान्तरजन्यस्यासम्भवेनावाभ्यां साक्षिरूपतया स्वीकृतस्य अहमर्थ-स्वाप-सुखाज्ञानादिकं प्रति कालमाधारतया विषयीकुर्वत एवासिद्धेस्तेषां चैतन्याभेदाननुभवेनापरोक्ष्याभावप्रसङ्गः ॥

अपि च 'अयं स्वर विशेषेण मम पुत्रः इति प्रागेव निश्चित' इदानीं चक्षुषा प्रत्यक्षीक्रियत इत्यनुभवेनान्वयव्यतिरेकाभ्यां जातिविशेषाक्रान्तज्ञानविषयत्वमेव विविक्षयाऽपरोक्ष्यव्यवहारहेतुः अपरोक्षविषयमात्रानुगतत्वात् नत्वपरोक्षानुवृतचिदभेदो वास्तवाऽवास्तवसाधारणः गौरवाद्विषयमात्राननुगतत्वाच्च । नच ज्ञानेन अपरोक्षव्यवहारहेतुर्जातिविशेषः, विषयेतु तादृशजात्याक्रान्तज्ञानविषयत्वं तद्धेतुरिति तवाननुगमः, ममतूभयत्रानावृतचैतन्याभेद एवाननुगतोऽपरोक्षव्यवहारहेतुरिति लाघवमिति वाच्यम् । अज्ञानादेस्तादृशाभेदाननुभवेऽपि प्रत्युत तद्भेदानुभवेऽपि आपरोक्ष्यदर्शनेन सर्वत्र त्वदुक्तप्रयोजकस्यासत्त्वात् । अनावृतचैतन्याभेदापेक्षया लाघवेनापरोक्षज्ञानविषयत्वस्यैव अपरोक्षव्यवहारहेतुत्वाच्च । नच चैतन्यस्यापरोक्षवृत्तेश्च स्वात्मनि वृत्तिविरोधेन स्वविषयत्वाभावेन तत्रापरोक्षस्य व्यवहारे प्रयोजकान्तरस्वीकारे पक्षद्वयेऽप्यनुगमदोषस्तुल्य इति वाच्यम् । उपहिताऽनुपहितयोर्भेदसत्वेनान्योन्याविषयत्वे वृत्तिविरोधाप्रसरात् ॥

एतेन[१] विषयत्वाभावेन तत्रापरोक्ष्यानावृत(विषयस्यापरोक्ष्ये अनावृत-पा) तदुपहितचैतन्याभिन्नत्वहेतुस्तज्ज्ञानत्वेनाभिमतायाः वृत्तेस्तु तत्तद्विषयाकारायस्तादृशविषयोपहितचैतन्याभिन्नचैतन्यावच्छेदकत्वं वा तादृशचैतन्योपाधित्वं वाऽपरोक्ष्यव्यवहारहेतुः, चैतन्यमेव ज्ञानं वृत्तिस्तु तत्सम्बन्धाज्ज्ञानमित्युच्यत इति कश्चित्पक्षः । ज्ञानत्वसामान्यं चैतन्य इवेन्द्रियादिजन्यवृत्तावप्यस्ति इति कश्चित्पक्षः ॥

तत्र द्वितीयपक्षे आपरोक्षव्यवहारे उक्त प्रयोजकः । आद्य पक्षे तु तत्तदाकारवृत्त्याऽवच्छिन्नस्य तदुपहितस्य वा चैतन्यस्य तत्तदंशे अपरोक्षत्वं नाम तत्र तदिन्द्रिययोग्य-वर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं वा तादृशविषयोपहितचैतन्याभिन्नत्वं वा द्रष्टव्यम् । वृत्तेश्च

---

(१) एतेनेत्यस्य 'प्रत्यासत्तित्वाकल्पनादिति निरस्तम्' पु.४१३ इत्यनेनान्वयः ॥

योग्यसन्निकृष्टवर्तमानविषयांशे एव तदाकारत्वम् अतथाभूतेतु न्याय नय इति[१] तद्विषयकत्वमात्रं, तेनैव च तत्र परोक्षत्वव्यवहारः, अत एव 'सन्निकृष्टपर्वतेऽयं वह्निमान्' इत्यनुमित्यनन्तरं 'तत्र पर्वतं साक्षात्करोमि वह्निं च अनुमिनोमि' इति लोकोऽनुव्यवस्यति ॥

नचैवमेकत्र च प्रत्यक्षानुमितित्वयोरङ्गीकारे जातिसाङ्कर्यापत्तिः, परापरभावादिति वाच्यम् । उपाधिसाङ्कर्यवत् जातिसाङ्कर्यस्यादोषत्वात् । ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मज्ञानबाध्यत्वश्रवणात् निवृत्त्यवश्यम्भावेन समवाये मानाभावेन च, नित्यत्वे सत्यनेकसमवेतत्वादिरूप पराभिमतजातित्वविशिष्टपदार्थस्यैवाप्रामाणिकत्वाच्च ॥

भूतत्वमूर्तत्वयोरिव प्रत्यक्षानुमितित्वादीनामजातित्वाच्च । नचानुमितेरिन्द्रियार्थसम्प्रयोगजन्यत्वे विनिगमकाभावेन विषयजन्यत्वस्याप्यवारणेन वह्न्यादिरूपसाध्यसत्वस्थले 'वह्निमानयम्' इति विशिष्टप्रतीतिबलेन संयुक्तसमवायादिवत् संयुक्तसंयोगस्यापि प्रत्यासत्तित्वसम्भवेन पर्वतरूपविशेष्यांश इव वह्निरूपविशेषणांशेऽपि प्रत्यक्षत्वं दुर्वारमिति वाच्यम् । 'पर्वतं साक्षात्करोमि नानुमिनोमि' 'वह्निमनुमिनोमि न साक्षात्करोमि' इत्यनुभवबलेन वह्न्यंशे तस्याः साक्षात्कारत्वाभावेन संयुक्तसंयोगस्य तत्र सतोऽपि प्रत्यक्षरूपफलाभावेन प्रत्यासत्तित्वाकल्पनादिति निरस्तम् ॥

विषयाकारवृत्तिस्थले एव विषय-तद्गोचरवत्त्योरपरोक्षव्यवहारः, नतु तत्प्रयोजकेन्द्रियसम्प्रयोगरहितज्ञानविषयस्थले इति, तादृशस्थले अपरोक्षव्यवहारनिर्वाहकतयाऽन्वयव्यतिरेकप्राप्ततादृशवृत्तिविषयत्वमात्रेण परोक्ष्यव्यवहारोपपत्तौ 'सर्वं ह्येतद् ब्रह्म' इत्यादिश्रुतिप्रतिपन्ने सर्वस्य चैतन्याभेदे भावे सत्यपि तस्य तत्प्रयोजकत्वाकल्पनात् । चैतन्यभेदमात्रस्य विषयाकारवृत्तिं विना विषयवृत्त्यपोरक्षव्यवहारत्वादर्शनेन तादृशवृत्तेरावश्यकत्वात् प्रमाणाप्रमाणविषयाकारवृत्तेः प्राभाकरमत इव स्वप्रकाशनाज्ञानादिविषये सर्वत्रापरोक्षव्यवहारहेतोः सम्भवात्, विषयोपहितचैतन्यस्य तादृशवृत्त्युपहितचैतन्यविषयत्वेन तादृशवृत्त्युपहितचैतन्यस्यापि तद्वृत्तौ स्वाकारार्पकविषयोपहितचैतन्यस्य विषयत्वेन च सर्वत्रापरोक्षव्यवहारस्थले अपरोक्षज्ञानविषयत्वस्यैवानतिप्रसक्तस्य तद्व्यवहारप्रयोजकत्वसम्भवे

(१) न्याय नय इव इति पाठः स्यात् ॥

तदन्यस्यातिप्रसक्तस्य तत्राप्रयोजकत्वाद्वा, उक्तप्रयोजकनिरूपणस्यानावृतसंविदभेदार्थतया पर्यवसानात् ॥

तस्य च अनावृतसंविदभेदस्य 'अहमज्ञो ममाज्ञानमहंदुःखी' इत्याद्यनुभवकालानाम् अपरोक्षव्यवहारगोचराज्ञानादावभावेनाव्यापकत्वात् । अनावृतसंविद्विषयत्वस्यैव सार्वत्रिकत्वेनापरोक्षस्य व्यवहारप्रयोजकतयाऽऽदरणीयत्वात् विषयाकारवृत्तेरपि स्वकाले साक्षिरूपानावृतसंविद्विषयत्वसत्त्वेनापरोक्ष्योपपत्तेश्च । अज्ञानान्तःकरण-तद्धर्मभूतकाम-सङ्कल्प-दुःखादेः स्वोपहितानावृतचिद्विषयत्वात् अज्ञानान्तःकरणपरिमाणभूतयोग्यदुःखकामानुपहितचैतन्यस्यापि अन्तःकरणावच्छिन्नचैतन्यरूपसाक्ष्यपरोक्षविषयत्वात् तदुपहितचैतन्यरूपसाक्ष्यपरोक्षज्ञानविषयत्वाद्वा, तादृशसाक्षिचैतन्यस्यापि अज्ञान-काम-दुःखाद्यवच्छिन्नचैतन्यरूपापरोक्षज्ञानविषयत्वादज्ञानाद्युपहितचैतन्यरूपापरोक्षज्ञानविषयत्वाच्च । अपरोक्षज्ञानविषयत्वमेव विषये ज्ञाने वा, परोक्षव्यवहारे हेतुरिति(१) वक्तुं शक्यत्वात् । नच तादृशवृत्त्याद्यवच्छिन्नचैतन्यस्य, तदुपहितचैतन्यस्य वाऽन्तःकरणावच्छिन्नचैतन्यरूपसाक्षिविषयत्वे, तदुपहितचैतन्यरूपसाक्षिविषयत्वे वा, ...नत्वे तस्य साक्षित्वेनाभिमतस्य द्विविधचैतन्यस्य विषयाकारवृत्त्यवच्छिन्नचैतन्यविषयत्वं तदुपहितचैतन्यविषयत्वं वेत्यत्र विशेषहेतुरस्ति । अपरोक्षव्यवहाररूपकार्यकल्प्यस्य तस्य प्रमाणसिद्धतत्कार्यस्थले सर्वत्र कल्प्यत्वात्, सर्वत्रानुगतस्यापरोक्षव्यवहारप्रयोजकस्यास्मदुक्तस्यानतिप्रसक्तस्य सम्भवतः त्यागायोगात्, ज्ञानत्वस्यैवापरोक्षत्वजातेर्नित्यानित्यापरोक्षवृत्तिस्वरूपभूतज्ञानगतत्वपक्षेऽपि अपरोक्षज्ञानविषयं तद्व्यवहारे हेतुरिति न कश्चिद्दोषः ॥

नच ब्रह्मव्यतिरिक्तस्य सर्वस्य बाध्यत्वेन निवृत्त्यवश्यम्भावात् पराभिमतजातित्वविशिष्टमेवाप्रामाणिकमिति वाच्यम् । त्रिकोणावयव सम्बन्धादौ शापस्पर्शमणिसम्बन्धादिवत् (त्रिशङ्कायसखण्डादौ शापस्पर्शमणिसम्बन्धादिवत्-पा) नाशकाभावे ब्रह्मज्ञानपर्यन्तमविद्यात्मकजातिसत्त्वे बाधकाभावात् 'यादृशो यक्षस्तादृशो बलिः' इति न्यायेन तत्र तादृशप्रामाणिकत्वसत्त्वाविरोधाच्च ॥

---

(१) अपरोक्षव्यवहारे हेतुरिति पाठः स्यात् ॥

यत्तु तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वं नाम तत्तदिन्द्रिययोग्यवर्तमान-विषयावच्छिन्नचैतन्याभिन्नत्वमिति । तन्न । 'वह्निमानयं प्रदेशः' इति सन्निकृष्टवह्निविशिष्ट-प्रदेशप्रत्यक्षवत् 'अयं पर्वतो वह्निमान्' इत्यनुमितेः समानाकारत्वेऽनुभवसिद्धे सत्यपि रूपा-दिना संयुक्तसमवायवत् पर्वते वर्तमानवह्निना संयुक्तसंयोगरूपचक्षुःसन्निकर्षे च सत्यपि वह्न्यंशप्रत्यक्षत्वाभावात् । नच ज्ञानस्य विषयाकारत्वप्रयोजकसम्बन्धः इन्द्रियस्य विषयेण साक्षात्संयोग एव नतु संयुक्तसंयोग इति वाच्यम् । तथा सति गुणकर्मादिप्रत्यक्षस्या-तदाकारत्वापातात्, नचैवम् । तथा सति स्वतस्तदंशे अज्ञानविषयत्वापातात्, स्वप्ने गज-तुरग-शुक्तिरूप्यादिविषयकाऽविद्यावृत्तेः स्वविषयसंयोगं विनाऽपि तदाकारत्वोपगमाच्च ॥

मुद्रामुद्रितलाक्षादौ केदारप्रविष्टोदकादौ तदाकारत्वप्रयोजकतया संयोगो दृष्टः क्लृप्तत्वात् । वृत्तावपि विषयाकारप्रयोजनत्वेनाङ्गीक्रियत इति चेन्न । गुणकर्मादिगोचरवृत्तेः स्वाप्नपदार्थशुक्तिरूप्यादिगोचरवृत्तेरज्ञानादिगोचरवृत्तेश्च विषयेन्द्रियसंयोगं विनाऽपि विषया-कारत्वदर्शनेन घटादावपि तद्गोचरवृत्तेर्घटाद्याकारत्वेऽपि, चक्षुर्घटादिसंयोगस्य व्यभिचारेण तत्र कारणत्वानुपपत्तेः । 'वह्निमान्' इति प्रत्यक्ष-अनुमिति-शब्द-ज्ञानानां तुल्याकारत्व-स्यानुभवसाक्षिकत्वे, विषयेन्द्रियसंयोगजन्यवृत्तावेव तदाकारत्वं नान्यत्रेत्यङ्गीकारस्यानुभव-बाधितत्वाच्च । शब्दमात्रजन्यापरोक्षचरमवृत्तेर्विषयेन्द्रियसंयोगं विनैव अखण्डाद्याकारत्वोप-गमाच्च ॥

तद्विषयसन्निकृष्टकरणजन्यत्वस्यैव तद्गोचरवृत्तेःतदाकारत्वे प्रयोजकत्वस्य वक्तव्यत्वात्, प्रत्यक्षे संयोगादेरनुमाने व्याप्तेः, शब्दे वाच्यवाचकभावस्य, करणसन्निकर्षस्य सत्त्वेन, विषयेन्द्रियसंयोगस्येव वृत्तिमात्रगततदाकारत्वाव्यभिचारात्, प्रमाणसिद्धप्रत्यक्षानुमित्या-दिगततदाकारतानिर्वाहकस्यैव तत्र प्रयोजकत्वकल्पनात् । उक्तत्वेन तदाकारत्वाभाव-प्रसङ्गात् । सादृश्यं पदार्थान्तरमिति पक्षेऽपि, निर्धर्मकब्रह्मचैतन्यगोचरचरमवृत्तेर्तदा-कारत्वापत्तेश्च ॥

नापि विषयाकार एवऽऽकारो यस्य स तथोक्तः, तस्य भावस्तदाकारत्वमिति वाच्यम् । तथा सति सत्यज्ञानत्वादिपूर्वब्रह्मसाधारणाकारवत्या यया कयाचित् वृत्त्यापि

संसारापादकमूलाज्ञाननिवृत्त्यापत्तेः । **'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थितः'** इति पराभ्युपगमेन ज्ञानमात्रस्यापि ब्रह्मचैतन्यस्य विषयत्वात् । तस्मात् ज्ञानस्य तत्तदर्थविषयत्वमेव तदाकारत्वं वाच्यं नान्यत् । ज्ञानस्यार्थविषयत्वं नाम तत्तदर्थोल्लेखित्वम् । तच्चातीतानागतवर्तमानात्यन्तासज्ज्ञानेषु सर्वत्रास्तीति नाव्याप्तिः ॥

एतेन वृत्तेर्विषयाकारत्वेनेन्द्रियार्थसन्निकर्षजन्यत्वम्, अर्थसन्निकृष्टकरणजन्यत्वं, वा प्रयोजकं[१] किन्तु लाक्षायां मुद्राकारत्वे तत्संयोगवद्विषयसंयोग एव । स च संयोगोऽननुगतकरणप्रयोज्य इत्यन्यदेतदिति निरस्तम् ॥

'वह्निमान्' इति प्रत्यक्ष-अनुमित-शब्दज्ञानेषु तुल्याकारत्वस्य अवशिष्टतया प्रत्यक्षज्ञान इवानुमिति शाब्दज्ञानयोरनुमेयाद्यंशेऽपि वह्न्यादिरूपवृत्तेः संयोगप्रसङ्गात् । तुल्याकारत्वविशेषेऽपि तदंशे वृत्तेः संयोगानङ्गीकारे योग्यपर्वतांशेऽपि अपरोक्षवृत्तेरपि संयोगानङ्गीकारप्रसङ्गाच्च । मुद्रामुद्रितलाक्षादौ त्रिकोणत्वाद्यथाकारस्य संयोगान्वयव्यतिरेकानुविधायिन इव ज्ञाने त्रिकोणत्वाद्याकारस्य संयोगाद्यन्वयव्यतिरेकानुविधायिनः प्रत्यक्षतोऽनुभवाभावेन 'घटाकारं स्तम्भाकारं च ज्ञानम्' इत्यादिशब्दाभिलापसाम्यमात्रेण ज्ञानतद्विषययोः संयोगाकारणकर्माननुभवेन सामग्रीबाधात्, बाधितस्य संयोगस्य कल्प्यत्वाच्च । ज्ञाने स्वविषयवृत्ति धर्मप्रकारकत्वातिरिक्तस्यान्विष्यमाणस्य विषयाकारत्वस्य अलाभाच्च । नह्यन्यथासिद्ध(अन्यथासिद्धि-पा)प्रमाणं विना समानशब्दत्वमात्रेणार्थैक्यमभ्युपगमार्हम् । नानार्थशब्दमात्रोच्छेदप्रसङ्गात् । विशेष्यवृत्तिधर्मस्य प्रकारत्वं नाम प्रतियोगित्वाऽनुयोगित्वादिवत् स्वरूपसम्बन्धविशेष एवेति न कश्चित् क्षुद्रोपद्रवः । स च स्वरूपसम्बन्धविशेषज्ञाननिष्ठ एव विषय निरूप्यः ॥

अत एव ''तादृशस्वरूपसम्बन्धविशेषभानं यत्र संशयविपर्ययोः सत्वं प्रमाणसिद्धं तत्रैव तदापादकदोषेण प्रतिरुध्यते । यत्र तु न संशयविपर्ययौ स्तः तत्र कल्पकाभावात् दोष एव नास्ति । तत्र तद्भानमिति सम्प्रदायः । अत एव घटादौ 'अयं प्रमेयवान्' इति ज्ञानस्य घटत्वादिप्रकारनिश्चयत्वात्, भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वमिति पक्षे तादृशनिश्चयकालेऽपि 'घटोऽयम्' इति निश्चयकाल इव तत्र संशयविपर्ययाभावप्रसङ्ग इति'' परास्तम् ॥

---

(१) वा न प्रयोजकम् इति पाठमिति भाति ॥

तादृशनिश्चये सत्यपि घटत्वादिवैशिष्ट्यगोचरसंशयविपर्ययोरानुभविकत्वेन तदापादक-दोषेणैव तद्वैशिष्ट्यस्य प्रमेयत्वेऽपि, यदंशे प्रतिबन्धात् भानं नोदेति इति कल्पनात् तस्य वस्तुतो भासमानवैशिष्ट्यप्रतियोगित्वमस्तीति अस्यैवासिद्धेः । फलबलेनैव सामग्र्याः कल्पनात् । तस्मात् ज्ञानस्य स्वविशेष्यवृत्तिधर्मप्रकारमेव स्वविषयाकारत्वं न तु कुल्या-द्वारा केदारप्रविष्टोदकवच्चतुष्कोणत्वादिकम् । तत्र मानाभावात् । उक्तरीत्या अस्य सामग्री-बाधेन बाधितत्वाच्च ॥

नचापरोक्षज्ञानवत् परोक्षज्ञानस्यापि विषयाकारत्वे तत इवऽततोप्यज्ञानविपर्ययादि-निवृत्तिप्रसङ्ग (निवृत्तेः-पा) इति वाच्यम् । इष्टापादनात् । वह्न्याद्यनुमितिशाब्दज्ञानेनापि 'मम तदज्ञानं निवृत्तम्' इत्यनुभवात् । 'पीतः शङ्खो न किन्तु श्वेत एवेति' परोक्षज्ञानेन तत्र पीतत्वभ्रमानिवृत्तिस्तु श्वैत्यापरोक्षज्ञानाभावादेव । तथा च अन्वयव्यतिरेकात् तदज्ञानं तु तत एव निवृत्तम् ।

नचैवं भ्रमानुपपत्तिः । अज्ञानस्य तदुपादानत्वात् । अन्वयव्यतिरेकाभ्यां तत्तदाकाराप-रोक्षज्ञानत्वेनैव वा तत्तदज्ञानादिविरोधित्वकल्पनात्, तत्तद्विषयवृत्तिधर्मप्रकारकत्वं ज्ञानस्य विषयाकारत्वमिति पक्षे, अन्तःकरणस्येन्द्रियद्वारा निस्सरणादिकमकल्पकमिति लाघवम् । अन्यथा परपक्षे गौरवं च ॥

किञ्च घटादिगोचरवृत्तेः घटाकारत्वादिनिर्वाहाय घटादिरूपविषयेण संयोगाङ्गीकारे, चरमवृत्तेरप्यखण्डाकारत्वादिनिर्वाहायाखण्डैकरसचैतन्येनापि संयोग एवाभ्युपेयः, तस्यैव तदाकारत्वे हेतुत्वदर्शनात्, एवं च दृग्दृश्ययोराध्यासिक एव सम्बन्धोऽन्यस्य सम्बन्ध-स्यानिरूपणादिति साधुसमर्थितो अद्वैतवादः ॥

वृत्तिवद्वियदादेरविद्योपहितचैतन्येन संयोगसम्भवात् । तथा च वृत्तेर्विषयाकारत्व-निर्वाहाय न विषयेण सह तस्या न संयोगो वाच्यः । नचैवमतीतानागतादिरूप-विषयाकारत्वं, ज्ञाने प्रयोजकविषयसम्बन्धाभावात् आकस्मिकमेव स्यादिति वाच्यम् । अस्मदुक्तविषयाकारत्वनिर्वाहाय गत्यन्तराभावेनादृष्टविशेषस्यैवाभ्युपगमात् ॥

## ।। अथ 'पुङ्गतमेवाज्ञानं न विषयगतमि'त्यस्य विवरणम् ।।

एतेन पूर्वोपस्थितत्वमेव तन्निर्वाहकमिति प्रत्यूढम् । तस्य प्रकारत्वेनाभिमत इव फलीभूतज्ञाने विशेष्यत्वेनाभिमतेऽपि सत्वेनातिप्रसक्तत्वात् । एतेन वृत्तिरूपज्ञानस्य निस्सरणाभावे विषयेण सम्बन्धस्यैवाभावात् विषयगतावरणनिवृत्तिरेव न स्यादिति निरस्तम् ।।

नच न पटलवद्विषयावरणभूतज्ञानस्यापि 'अहमज्ञः' 'मामन्यं च न जानामि' 'घटं न जानामि' इत्याद्यनुभवबलेन घटादिगोचरज्ञानस्येव पुङ्गतत्वात् समानविषयकयोर्ज्ञानाज्ञानयोश्च पुङ्गतत्वेनैव समानाधिकरणतया निवर्त्य-निवर्तका-भावसम्भवेन तदुत्पत्तये वृत्तेर्निर्वृत्त्य(निर्गत्य-पा)कल्पनात् पुङ्गताज्ञानेनैव शुक्त्यादिविषयकेण शुक्तौ रजतरूपस्य विक्षेपस्यागन्तुकदोषघटितसामग्री तदुत्पत्त्युपपत्तौ तद्गताज्ञानस्य सत्त्वे मानाभावात् । नचोपादानभूताज्ञानस्य तत्त्वाभावे तत्र तत्र रजतमेव नोत्पद्यतेति वाच्यम् । अज्ञानस्यान्वयव्यतिरेकाभ्यां कारणत्वेऽपि तस्य तद्रजतोपादानत्वे मानाभावात् । प्रत्युत 'इदं रजतम्' इति प्रतीत्या इदमर्थस्यैव रजताभेदावगाहनात् । रजतं प्रति तदुपादानत्वस्यैवोचितत्वात् । ज्ञानस्य तदुपादानत्वपक्षेऽपि तदुपादानत्वेन क्लृप्तरजतावयवान्योपादानत्वस्य तुल्यत्वात् । अज्ञानस्य तदुपादानत्वे च 'अज्ञानं रजतमिति' तदनुविद्धतया[१] प्रतीत्यापत्तेश्चेत्युक्तम् ।।

'मम तत्र ज्ञानमिति'वत् 'मम तत्राज्ञनम्' इत्यनुभवेन विषय-विषयिभाव-सम्बन्धस्यैव सिद्ध्या विषये ज्ञानस्य वाऽज्ञानस्य तदतिरिक्तसम्बन्धस्य सत्त्वे मानाभावाच्च । 'मम तत्र प्रात्यक्षिकं ज्ञानं जातमन्यत्रानुमानिकमपरत्र तु शाब्दं ज्ञानमिति' अनुभवेन प्रत्यक्ष-परोक्ष-साधारण-ज्ञानस्य परेणाऽपि विषयेण-विषय-विषयि-भावान्यसम्बन्धस्यानुगतस्यासम्भवेनानभ्युपेयत्वात् । तस्माद्विषयगताज्ञाने प्रमाणाभावात् नयनपटलवत् तस्य पुङ्गतत्वे तत्सद्भावात् बाधकाभावाच्च, पुं-गतमेवाज्ञानं नतु विषयगतमिति सिद्धम् ।।

।। इति पुङ्गतमेवाज्ञानं न विषयगतमित्यस्य विवरणम् ।।

---

(१) तदनुविधितया इति ताळपत्रस्थ पाठः ।।

एतेन शुक्त्यवच्छिन्नचैतन्यावारकाज्ञानं वा तदुपहितचैतन्यावारकाज्ञानं वाऽऽगन्तुक-दोषात्, क्षुभितं रजताकारतया परिणमते,(१) तदेवाऽविद्यकं रजतमिदमाकारावृत्त्यभिव्यक्तेद-मंशसम्बन्धि-चैतन्यरूपसाक्षिसम्बन्धसत्त्वात्, 'इदं रजतम्' इति तेनैव साक्षिणा भासते, नृशृङ्गादिवत् शुक्तिरूप्यस्यात्यन्तासत्वे च सम्बन्धाभावात् अतीतादिवत्, साक्षिचैतन्य भास्यत्वमेव न स्यादिति निरस्तम् ॥

तादृशचैतन्यावारकाज्ञानस्योक्तानुभवेन पुं-गतत्वेन सिद्धेः । तादृशचैतन्यगतत्वे माना-भावात् । प्रतीयमानस्य रजतस्य अविद्यापरिणामत्वसिद्धेः (असिद्धेः-पा) । 'इदं रजतम्' इति प्रतीतेः चक्षुरन्वयव्यतिरेक्यनुविधायितया ज्ञानभेदे मानाभावेन प्रत्युत तदैक्यस्यैवानुभव-सिद्धत्वेन च चाक्षुषत्वस्यैव न्याय्यत्वाच्च । नच असन्निकृष्टत्वात् रजतस्य तस्य न चक्षुषा भानं सम्भवतीति वाच्यम् । 'नेदं रजतम्' 'काल त्रयेऽपीदं रजतं न' 'न कदापि' 'न क्वापीदं रजतमस्ति' 'असदेवेदं रजतं प्रत्यभात्' इत्यनुभवेन त्रिकालसर्वदेशीयनिषेधप्रति-योगित्वरूपनिःस्वरूपत्वेनानुभवसिद्धेन शुक्तिरजतेनातीतादिनेव चक्षुषः सन्निकर्षाभावात्, साक्षिणोऽपि तेन सन्निकर्षाभावस्य तुल्यत्वेन परेणापि दोषमहिम्नैव तद्भानस्य वक्तव्यत्वा-च्च ॥

निःस्वरूपत्वेनानुभवसिद्धस्य शुक्तिरूप्यादेः 'घटाकाशोऽल्पः' इतिवत् 'शुक्तिचैतन्यं रजतम्' इति वा, 'शुक्तिचैतन्याज्ञानं रजतम्' इति वाऽनुभवाभावेन तादृशचैतन्ये आध्यासिकसम्बन्धस्यापि कल्पकाभावेनाकल्प्यत्वाच्च । अन्यथा शुक्त्यवच्छिन्नं तदुपहितं वा चैतन्यमधिष्ठानं तद्रजतावच्छिन्नं तद्रजतोपहितं वा चैतन्यमध्यस्यत इति कल्प्यं स्यात् । अनुभवाभावस्योभयत्र साम्यात् । शुक्तिरूप्यप्रतीत्यनुभवसिद्धचाक्षुषत्वत्यागे कारणा-भावाच्च ॥

विशेषदर्शनानन्तरं 'मम शुक्ताविदं रजतम्' इति भ्रमो निवृत्तः, प्राग्विशेषदर्शनात् 'तत्र मम रजतभ्रमो जात' इतिवत् शुक्तिरूप्याभिमतो निवृत्तमिति स्वोत्पन्नमिति कदाऽप्यननुभवेन अनादिनित्यसाक्षिभास्यत्वे रजतरूपविषयस्यागमापायित्वाभ्यां साक्षिणः उत्पादविनाशो-

(१) परिणाम मते इति ताळपत्रस्थ पाठः ॥

पद्मन्नासम्भवेनेदमाकारवृत्तेरेव रजतविषयत्वमात्राङ्गीकारे भ्रमोत्पादविनाशप्रत्ययस्याभ्रमत्व-मङ्गीकृत्य सूपपादत्वसम्भवात्, अनादिनित्यसाक्षिभास्यत्वपक्षे तदसम्भवाच्च ।।

ननु 'इदं रजतम्'इति ज्ञानस्य सत्यज्ञानवेदकत्वे रजतांशे निर्विषयत्वमेव स्यादिति चेन्न। असद्रजतरूपविशेषतयोल्लेखित्वेन तज्ज्ञानस्य तदभावरूपनिर्विषयत्वापादनासम्भवात्, तदुल्लिखितस्यात्यन्तासत्त्वापादनस्य चेष्टत्वात् । नचासद्रजतविषयांशे इन्द्रियसन्निकर्षा-जन्यत्वेनाप्रत्यक्षत्वापत्तिः । निक्षेपज्ञानस्याञ्जनादिसहकृतचक्षुर्जन्यत्वेन तदंशे सन्निकर्ष-जन्यत्वेऽपि प्रत्यक्षत्ववत् असद्रजतांशे सन्निकर्षाभावेऽपि दोषरूपसहकारिविशेष-सहकृत-चक्षुर्जन्यत्वेनैव प्रत्यक्षत्वोपपत्तेरित्युक्तमेव । तस्मादसतोऽप्यपरोक्षतया प्रतीतिरुपपद्यत इति सर्वमनवद्यम् ।।

## ।। अथ स्वाप्नपदार्थानां सत्यत्वसमर्थनम् ।।

एतेन स्वाप्नगज-तुरगादि-प्रतीतिरप्येवमेव असदर्थविषयिण्यपरोक्षप्रतीतिरूपा स्वी-क्रियतामिति निरस्तम् । शुक्तिरूप्यादिप्रतीतिवत् स्वाप्नगजतुरगादि-प्रतीतेरसद्गजतुरगादि-विषयत्वे साधिष्ठानभ्रमत्वावश्यम्भावेन 'नेदं रूप्यं किन्तु शुक्तिः' इत्यादिप्रकारेणेव 'नायं गजः किन्तु अमुक' इत्यादिप्रकारेणाधिष्ठानाध्यस्तयोर्भेदोपलम्भप्रसङ्गात् । नहि तत्रैवात्र[१] विशेषदर्शन-पूर्वाधिष्ठान-अध्यस्त-परस्परभेदोपलम्भः स्वाप्नोत्थितस्य अनुभवसिद्धोऽस्ति । येन तद्वदेव स्वाप्न-पदार्थगोचर-प्रतीतेरधिष्ठाने असद्गजाद्यभेदविषयतया भ्रमत्वं स्यादि-त्युच्येत । नच निरधिष्ठानो भ्रमः सम्भवति अङ्गीकृतो वा । केशोण्ड्रकादिभ्रमस्यापि प्रमा-मण्डलाद्यधिष्ठानतया[२] व्यभिचाराभावेन भ्रमस्य साधिष्ठानत्वनियमात् । अन्यथा निर-वधिकोऽपि बाधोऽङ्गीक्रियेत ।।

किञ्च निरधिष्ठानभ्रमस्याप्यङ्गीकारे 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तत्त्वमसि' इत्यादि-वेदान्तजन्यचरमवृत्तेरपि तादृशभ्रमत्वप्रसङ्गः । अत एव स्वाप्नो न निरुपाधिकभ्रमो निरधि-ष्ठानश्चेति परास्तम् । नापि सोपाधिको भ्रमः । 'लोहितः स्फटिक' इत्यादाविवोपाध्य-

(१) नहि तत्रेव अत्र इति पाठः स्यात् ।।

(२) प्रभामण्डलाद्यधिष्ठानतया इति पाठः स्यात् ।।

न्वयव्यतिरेकाऽनुविधायित्वेन, तत्त्वे मानाभावात् । अपि च निरुपाधिकभ्रमत्वेऽधिष्ठानगत-विशेषदर्शननिवर्त्त्यत्वप्रसङ्गः । स्वाप्नोत्थितस्य 'गजोऽपि नास्ति, तुरगोऽपि नास्ति' इति प्रतीतिस्तु न बाधः, अधिष्ठानगतविशेषदर्शनपूर्वकत्वाभावात् । नहि स्वाप्नगजतुरगादि-प्रतीतौ विशेषदर्शनेनाप्रामाण्यज्ञाने सत्येव स्वप्नोत्थिस्य 'गजोऽपि नायं तुरगोऽप्ययं न' इति प्रतीतिरित्यस्ति । येन तन्निषेधप्रतीतेर्बाधकत्वमभ्युपगमार्हं स्यात् । निषेधप्रतीतिमात्रस्य बाधत्वे भूतलादावानीतापसारितघटादौ, नष्टघटादौ च 'अत्र नास्ति घटः' इत्यादि-प्रतीतेरपि अनाधारत्वप्रसङ्गादित्युक्तम् । स्वप्नोत्थितस्य 'राजद्वारि गजो नास्ति'(१) इत्यादि प्रतीतिरपि 'स्थूलो गजो नास्ति' इत्यादिप्रतीतिवत् तत्कालमेवोत्पन्नस्य विशिष्टस्यैव निषेधः नतु राजद्वाररूपाधिकरणे गजादिसंसर्गमात्रस्य निषेधः ॥

नच स्वप्नावस्थायां स्मृत्युपनीते संस्कारोपनीते वा, राजद्वारि तदुपनीतस्य गजादेः मनसा साक्षिणा वा, संसर्गमात्रं प्रतीयत इति वाच्यम् । तथासति स्वाप्नकामिन्याद्या-लिङ्गनादिप्रयुक्तसुखादिकार्यासत्वप्रसङ्गात् ॥

तस्य वस्तुसत्त्वप्रयुक्तत्वेन भयकम्पादिकार्यस्यसर्पादिज्ञानमात्रसाध्यत्ववत्, तदज्ञान-मात्रासाध्यत्वात्, सत्यपि सर्पादिसम्बन्धे निद्रामुद्रितलोचनस्य तज्ज्ञानाभावेन भयाद्यभाववत्, सत्यपि कामिन्यालिङ्गनादिज्ञाने तदालिङ्गनाद्यभावेन सुखादिकार्याभावदर्शनेन, तत्सत्वस्यैव तद्धेतुत्वेन स्वीकार्यत्वाच्च । नच तत्साक्षात्कार एव तद्धेतुः, नतु तदज्ञानमात्रं साक्षात्कारस्य, त्वन्मते विषयासत्वेऽपि शुक्तिरूप्यादिसाक्षात्कारवदुपपत्तेर्न तस्य सत्त्वसिद्धिरिति वाच्यम् । परकीयतदालिङ्गनं स्वयं साक्षात्कुर्वत्यपि तदालिङ्गनाभावादेव सुखविशेषाभावदर्शनात्, स्वस्मिंस्तदालिङ्गनवत्वसाक्षात्कारविरहादेव तत्र सुखविशेषाभावो नतु तदसत्वादिति चेन्न । तथासति शीतार्तस्य वस्तुतो कृष्णवर्त्मानमेव गुञ्जापुञ्जवह्नित्वेन साक्षात्कुर्वत-स्तन्निरासार्थं स्पृशतोऽपि साक्षात् वह्निं स्पृशत इव शीतपरिहारप्रसङ्गात् । स्वस्मिंस्त-दालिङ्गनवत्वसाक्षात्कारापेक्षया स्वस्मिंस्तदालिङ्गनवत्वस्यैव(२) लघुत्वेन सुखविशेषं प्रति हेतुत्वस्य वक्तव्यत्वाच्च ॥

---

(१) रजत द्वारि इति ताळपत्रस्थ पाठः ॥

(२) स्वस्मिंस्तदनालिङ्गनवत्वस्यैव इति पाठः स्यात् ॥

विनिगमाभावेन स्वस्मिन् तदालिङ्गनवत्वसाक्षात्कारस्येव, स्वस्मिन् साक्षात्क्रियमाण-वदालिङ्गनवत्त्वस्यापि सुखविशेषं प्रति हेतुत्वस्य वक्तव्यत्वाच्च । नचैवं स्वप्नकामिन्या-लिङ्गनादिना जाग्रदवस्थापन्नसुखविशेषवत् स्वाप्नवह्निस्पर्शेनाऽपि दाहप्रसङ्गः । नचैवम् । तथासति स्वाप्नोत्थितस्य स्वीयदेहे तत्प्रयुक्तस्थो अव्रणाद्युपलम्भप्रसङ्गादिति वाच्यम् । स्वाप्न-स्वीयदेहान्तरे एव तत्कृत दाहाद्यपगमात् तद्देहे तदानीन्तन जाग्रद्देहात् भेदज्ञानमात्रस्य बाधकत्वबलेन भ्रमत्वोपगमाच्च । नच तदा अणोर्जीवस्य देहान्तरप्रवेशे जाग्रद्देहस्य निर्जीवत्वप्रसङ्गः, नचेष्टापत्तिः । तदाऽपि जाग्रद्देहात्मकत्वप्रयुक्तकार्योपलम्भादिति वाच्यम् । फलबलेन अणोरपि जीवस्य सङ्कोचविकासात्मकान्तःकरणद्वारकसम्बन्धेन जीवत्वस्य देह-द्वयेऽप्यभ्युपगमात् । एतच्च प्रपञ्चितमस्माभिः शिक्षायाम् ।।(१)

किञ्च स्वाप्नप्रपञ्चस्य जाग्रत्प्रपञ्चवत्सत्यत्वाभावे तत्सृष्टिश्रुत्यप्रामाण्यप्रसङ्गः । शुक्ति-रूप्यादिवत् प्रातिभासिकत्वेच अर्थक्रियाभावप्रसङ्गाच्च । किञ्च स्वाप्नप्रपञ्चस्य नृशृङ्गादिवदसत्वे स्वाप्नदेवतादिकृत-अनुग्रह-निग्रहप्रयुक्तकार्यानुपलम्भप्रसङ्गः, तदुपदिष्टमन्त्रादेरपि स्वाप्न-पदार्थत्वाविशेषेणासत्त्वापत्त्या पुनः चरणादिना फलसाधनत्वाभावप्रसङ्गश्चोच्चारणानर्हत्व-प्रसङ्गश्च । नह्यसत उच्चारणार्हत्वमभ्युपगमार्हम् ।।

एतेन स्वप्ने उपलभ्यमानगजतुरगादिपदार्थानां क्लृप्तगजतुरगादिसामग्रीविरहादुत्पत्त्यादिकं नास्त्येव । तत्प्रतीतिस्तु भ्रान्तिः, अन्यथा क्लृप्तसामग्र्राविरहेऽपि स्वाप्नगजाद्युत्पत्त्यङ्गीकारे किमपराद्धम्, शुक्तिरूप्याद्युत्पत्त्यङ्गीकारेणेति तस्य तदङ्गीकारप्रसङ्ग इति निरस्तम् ।।

'आत्मनः आकाशः सम्भूतः' इत्यादिना जाग्रत्वियदादिप्रपञ्चस्येव 'अथ रथान् रथयोगान्' इत्यादिना स्वाप्नप्रपञ्चस्यापि सृष्ट्यादेः श्रुतत्वेन कल्पकसत्वेन तदुचितसामग्री-कल्पनात् । तथा च सूत्रं **'सन्ध्ये सृष्टिराह हि'** (ब्र-सू-३-२-१) इति ।।

यद्यपि तत्राकाशादीनां पूर्वपूर्वस्योत्तरोत्तरहेतुत्वं विशिष्य श्रुतम्, अत्र तु सृष्टिश्रवणादेव तदुचितहेतुः कल्प्यत इति विशेषोऽस्ति । तथाऽपि सोऽकिञ्चित्कर एव, प्रमितिकार्यस्यैव

---

(१) अद्वैतशिक्षा-जीवस्याणुत्वे अनुपपत्तिनिरासप्रकरणे- 'सङ्कोचविकासस्वभावस्यान्तःकरणस्य योगप्रभाव-लब्धमहाविकासत्वेन युगपदनेकशरीरैः सह संयोगसम्भवेन' इत्यादिना प्रपञ्चितम् ।। पुट-सं-२११-पं-४

सामग्रीकल्पकत्वादिति, न काचिदनुपपत्तिः । नच शुक्तिरूप्यादेरुत्पत्त्यादिकं श्रुतम् । नच घटाद्युत्पत्त्यादिकमिव प्रत्यक्षादितोऽवगन्तुं शक्यम् । येन तन्निर्वाहायाक्लृप्ताऽपि सामग्री कल्प्येत ॥

एतेनैव स्वाप्नपदार्थस्य नियतद्रष्टृग्राह्यत्वेन शुक्तिरूप्यादिवदसत्वं स्यादिति निरस्तम् । सुखदुःखादिवत् प्रतिनियतग्राह्यत्वेऽपि सत्त्वोपपत्तेः । असत्वे ह्येषाधीनभानत्वस्यैव प्रयोजकत्वाच्च । नचात्रापि स्वप्नावस्थारूपदोषप्रयुक्तभानत्वमेवास्तीति वाच्यम् । तद्दोषत्वे मानाभावात् । अन्यथा तद्दोषकल्पनस्य स्वाप्नप्रपञ्चाध्यस्तत्वसिद्ध्यधीनत्वेन अन्योन्याश्रयात् । नच निषेधबुद्धिमात्रं बाध इति शक्यमभ्युपगन्तुम् । तत्रातिप्रसङ्गस्योक्तत्वात् । नहि स्वप्नस्य भ्रमत्वसिद्धेः प्राक् स्वप्नोत्थिततन्निषेधबुद्धेर्भ्रमपूर्वकत्वं शक्याभ्युपगमम् । अननुभूयमानविशेषदर्शनपूर्वकत्वं वा । येन तन्निषेधबुद्धेर्बाधत्वनिश्चयः स्यात् ॥

एतेनैव स्वाप्नपदार्थानां जाग्रदर्थगोचरज्ञाननिवर्त्यत्वेन मिथ्यात्वं स्यादिति निरस्तम् । दुःखादेः सुहृद्दर्शनरूपादिज्ञाननिवर्त्यत्वेऽप्यमिथ्यात्वदर्शनादित्युक्तम् । एतेन स्वाप्नगजादीनां देहान्तरुत्पत्तौ देहविदारणप्रसङ्गः । बहिरुत्पत्तौ तु बहिरिन्द्रियाणां तदोपरमात् मनसः साक्षिणो वा बहिरस्वातन्त्र्यात् तत्प्रतीतिरेव दुर्लभेति निरस्तम् ॥

अन्तःकरणसंस्कारोपादानकत्वेन तेषामन्तरेवोत्पत्त्युपगमात् । नचैवं देहविदारणप्रसङ्गः । स्वाप्नगजादीनां बहिरुत्पत्तौ सूक्ष्मत्वेन तेषामकठिणत्वेन वा तदभावोपपत्तेः । सूक्ष्मा एव तदुत्पद्यन्त इति पक्षे, तद्गतस्थौल्यादिज्ञानं भ्रम एवेति किमनुपपन्नम् (किमनुचितम् -पा)॥

एतेनैव संस्कारस्य गुणत्वेनोपादानत्वायोगः, द्रव्यत्वायोग्योपादानकत्वेनायोग्यत्वप्रसङ्ग इति निरस्तम् । त्र्यणुकादिवदयोग्योपादानकत्वेऽपि योग्यस्योपपत्तेरिति, तस्मात् शुक्तिरूप्यादाविव नाऽत्र बाधकाभावात्, साधकसम्भवाच्च(साधकसद्भावाच्च-पा) जाग्रदर्थ इव स्वाप्नपदार्था अपि सत्या एव, ततस्तत्प्रतीतिरपि प्रमैवेति सिद्धम् ॥

केचित्तु[१] स्वाप्नपदार्थाबाधितप्रतीतिविषयाः सत्या एव, बाधितबुद्धिविषयास्तु जाग्रत्

(१) केचित्तु इत्यस्य सात्मकत्व-सज्जीवत्वोपगमादित्याहुः (पु.४२९) इत्यनेनान्वयः ॥

शुक्तिरूप्यादिवत् असत्याः, अत एव **'यद्येतेषां किञ्चित् पश्येत्** (ऐ-उ-३-२-४) इति स्वाप्ने-कृष्णवत्स-कृष्णधेनुः-कृष्णदन्तपुरुषादिदर्शने प्रायश्चित्तं श्रूयते । नहि तद्दर्शनविषयस्यासत्त्वे प्रायश्चित्तविधानमुपपद्यते । अन्यथा ब्रह्मवित् ब्राह्मणमेव चण्डालत्वेन पश्यतः स्पृशतश्च प्रायश्चित्तविधिप्रसङ्गः । नहि लोके 'अयं ब्रह्मविदेवायं ब्राह्मण' इति विशेषदर्शनान्तरं प्रायश्चित्तमनुतिष्ठति ।

**'चन्द्रमा इवादित्यो दृश्यते', 'अथाऽपि च्छिद्र इवादित्यो दृश्यते',**
**'यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा',**
**'अथाऽपि यत्र भूमिं ज्वलन्तीमिव पश्येत'** (ऐ-उ-३-२-४)

इत्यादि श्रुतिप्रतिपन्नं चन्द्रादिसादृश्यमादित्यादौ सदेवोत्पद्यते । **'च्छिद्रां वा च्छायां पश्येत्'** इत्यादावपि 'वा'शब्द 'इव'शब्दार्थो द्रष्टव्यः । धूमकेतुवत् नक्षत्रपुच्छादिवच्च तात्कालिकस्यापि सम्भवात् । वह्निनिष्ठदाहानुकूलशक्तावेव 'स्यामेव प्रहरमेनमादहेत्' इति मन्त्रसामर्थ्यादितर-दाहे कर्तव्ये अकुञ्चितायां पुरुष[१]विशेषं प्रति कुण्ठितत्ववत् अदृष्टविशेषरहितात् प्रत्यक् च्छिद्र एवादित्यो तादृशादृष्टं विशेषवन्तं पुरुषविशेषं प्रति च्छिद्रवस्त्वन्तरसादृश्यस्य पदार्थान्तररूपस्योत्पत्तौ बाधकाभावात् ॥

नचैवं स्वाप्नपदार्थानां सत्यत्वे कश्चन स्वाप्नपुरुषं हन्तुमुद्युक्तस्य स्वाप्नगजस्य केनचित् स्वाप्नपुरुषेण क्रियमाणो दृश्यते सुप्तेनेति । तावता(म)पि सत्यता स्यात् । नचैवं तथासति स्वाप्नोत्थितस्येदं, सर्वमसत् मिथ्यैवेति तद्विषये बाधान्यथापत्तेरिति वाच्यम् । इष्टापादनात् । विशेषदर्शनं विना तत्र जायमानायाः 'तदेतत्सर्वमसद्' इत्यादिबुद्धेश्च बाधत्वायोगेन, जाग्रत्पदार्थमात्रवैलक्षण्यमात्रविषयत्वात्, जाग्रत्पदार्थनाशस्थले तदवयव-कपाल-मालाद्युपलम्भात्, स्वाप्नगजादिनाशस्थले तदुपलम्भाभावादिनापि वैलक्षण्यसत्वात्, लोके दरिद्रसम्पन्नवैलक्षण्यप्रयुक्तस्यासन्मिथ्येत्यादिव्यवहारदर्शनात्, वेदेऽपि **'मिथ्याप्रयुक्तो न तमर्थमाह'** इति तत्र वैलक्षण्यकृतमिथ्याव्यवहारदर्शनाच्च । तथा च सूत्रं 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र-सू-२-२-२९) इति । नच स्वाप्नगजस्य तादृशपुरुषस्यच निर्जीवत्वात्,

---

(१) अकुण्ठितायां पुरुष इति पाठः स्यात् ॥

जीवत्वेन नाशानुकूलव्यापारस्यैव हननपदार्थत्वात्, तत्र कथं तत्सम्भव इति वाच्यम् । स्वाप्नपुरुषाणामपि सात्मकत्व-सजीवत्वनियत-मुखविकास-ह्रास-तन्म्लान-लतादिकार्य-दर्शनाविशेषेण सात्मकत्व-सज्जीवत्वोपगमादित्याहुः ।।

तस्मात् बाधकाभावात्, स्वाप्न-गजतुरगादिगोचरप्रतीतिः प्रमैवेति, न तद् दृष्टान्ता-वष्टम्भेन भूतलादौ घटादेः प्रत्यक्षेण सत्वसिद्धिरित्ययुक्तम् । तथाच शब्दे क्लृप्तदोषरहित वेदजन्यप्रतीतिरिव प्रत्यक्षे क्लृप्तदोषरहितचक्षुरादिजन्यप्रतीतिरपि प्रमितिरूपैव वाच्या । एतदेवाह काण्वीश्रुतिः 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति ।।

।। इति स्वाप्नपदार्थानां सत्यत्वसमर्थनम् ।।

एवं चाबाधितदृष्टिविषयतया द्वितीयसत्यत्वे दुर्वारे सति, मिथ्यावस्तुसम्बन्धतया द्रष्टृ-दृश्यभावनिवृत्तेरेवायोगात् । 'न प्रेत्य संज्ञाऽस्ति' इति प्रतिज्ञाया विशेषविषयत्वा-वश्यम्भावेन तदविरोधाय 'मात्रासंसर्गस्त्वस्य भवति' इति तदुत्तरवाक्यस्य नेयत्वात् तस्य द्रष्टृ-दृश्यभावमात्रनिषेधकत्वायोगात् । स्वरूपानन्दानुभवप्रतिबन्धकतया प्रतिकूलस्य अविद्या-तत्कार्यादेर्निवृत्तावपि लोके प्रतिकूलनिवृत्तेरपचयापादकत्वादर्शनेन अज्ञानादिप्रति-कूलनिवृत्तिप्रयुक्तापचयशङ्काया एवानुदयात् । तच्छङ्कानिवृत्तये 'अनुच्छित्तिधर्मा' इत्युक्तम् । तदेव कथम्? इत्याशङ्क्य, मिथ्यावस्तुसम्बन्धेन हि द्रष्टृ-दृश्यभावाभावेति, न तन्नि-वृत्तावात्मनः काचित् क्षतिरस्तीत्याह -'यत्र हि द्वैतमिव भवति' इत्यादिनेति ।।

परोक्तौ तद्वाक्यद्वयावतारोऽसङ्गत एवेत्यस्मदुक्तरीत्या 'अनुच्छित्तिधर्मा' इत्येतद् वैशेषिकाद्यभिमतमोक्षस्वरूपनिराकरणार्थमेव प्रवृत्तम् इत्यकामेनापि स्वीकार्यम् ।'यत्र हि द्वैतमिव भवति' इत्यादि तु मायावाद्यङ्गीकृतमोक्षस्वरूपनिराकरणाय प्रवृत्तम् । तथाहि ।।

पूर्वत्र 'स यथा वै सैन्धव खिल्य' इत्यादिना सैन्धवखिल्यस्य समुद्र इव विज्ञानघनस्य जीवस्य ब्रह्मणि स्थितिर्मोक्ष इति श्रुतिः स्वमतमुक्त्वा, मध्ये 'अविनाशी'त्यादिना बौद्ध-वैशेषिकाभिमतमोक्षस्वरूपं निराकृत्य, मायावाद्यभिमतमोक्षस्वरूपनिराकरणे 'अप्रतिषिद्ध-मनुमानं भवति' इति न्यायेन तस्यापि स्वमतत्वप्रसक्तौ अद्वितीयचिन्मात्रावशेषो मोक्ष इति तन्मतेऽनिष्टं प्रसञ्जयितुं 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादिना

अनिष्टप्रसङ्गाङ्गं व्यतिरेकव्याप्तिमुक्त्वा 'यत्र त्वस्य' इत्यादिना, यत्र= येषां मते, तु, आत्ममात्रावशेषः, तर्हि 'केन कं पश्येत्?' न केनापि किञ्चित् । तथा चेष्टारूपादेरीश्वरस्य स्वस्याज्ञानबन्धादेरिवातिदुःखं मोक्षे स्यादित्याहेति तद्वाक्यपर्यालोचनया प्रतीतेरिति । तस्मात् 'अनुच्छित्तिधर्म'शब्देन उपक्रमाद्यविरोधाद्धर्मनित्यत्वमेवोच्यत इति सिद्धम् ।।

।। इति 'यत्र हि द्वैतमिव भवति' इति श्रुतेः परोदीरितार्थनिरसनम् ।।

किञ्च सविशेषनित्यचैतन्यस्य पराभिमतनिर्विशेषचैतन्याद् भेदे दुर्वारे कथं द्वितीयाभावो न प्रामाणिकः स्यात् । नच सविशेषचैतन्यस्य नित्यत्वे मानाभावः । 'एको नारायणः आसीत् न ब्रह्मा नच शङ्करः'(१) 'न ब्रह्मा नेशान' इत्यादिश्रुत्या महाप्रलये प्रमितस्थितिकस्य 'नित्यो नित्यानां चेतनश्चेतनानाम्' इति श्रुत्या इतरनित्यचेतनापेक्षया नित्यचेतनत्वप्रतिपादनेन शरीरतोऽपि लब्धनित्यत्वस्य –

**'आनन्दरूपममृतं यद्विभाति',**
**'आप्राणखात् सर्व एवानन्दः आप्राणखात् सर्व एव सुवर्णः',**
**'मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः',**
**'यदात्मको भगवांस्तदात्मको व्यक्तिः किमात्मको भगवान्**
**ज्ञानात्मकः ऐश्वर्यात्मकः',**
**'सर्वतः पाणिपादं तत्सर्वतोऽक्षि शिरोमुखम्',**
**'आदित्यवर्णं तमसः परस्तात्',**
**'यदा पश्यः पश्यते रुग्मवर्णम्',**
**'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्'** (म-ना-उ-२४-१),
**'विश्वतः चक्षुरुत विश्वतोमुखः',**
**'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्'**(म-ना-उ-१३-१),
**'यदेकमव्यक्तमनन्तरूपम्'**

इत्यादिश्रुतिभिः, सावयवत्वेन-स्वरूपत्वेन-प्रतिपन्नस्य पुराकल्पापाये **'स्वकृतमुदरीकृत्य-विकृत्यम्'** इत्यादौ साक्षान्महाप्रलये एवाऽवधारितावयवविशेषस्य **'पश्यन्त्यदो रूपमदभ्र-**

(१) गीतातात्पर्यप्रथमाध्यायोदाहृतश्रुतिः ।।

चक्षुषः सहस्रपादोरुभुजाननाद्भुतः' इत्यारभ्य 'एतन्नानावताराणां निदानं बीजमव्ययम्' (भा-१-३-५) इत्यत्र –

'सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ।
परमानन्दसन्दोहाः ज्ञानमात्राश्च सर्वशः'

इत्यादौ प्रतिपन्ननित्यदेहस्य,

'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नाना विधानि दिव्यानि नाना वर्णाकृतीनि च ।
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरो मुखम्'

इत्यादिभगवद्वचनप्रतिपन्नविचित्रानन्तावतारस्य

'स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः'
'परो मात्रया तन्वा वृधान'
'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्',
'श्रीः सत्यं तप'

इत्यादीनि 'शाश्वतान्यङ्गे बिभ्रत् शूलपाणिरजायत' इत्यादि श्रुतिभिर्नित्यत्वेन मोक्षसाधन-ज्ञानविषयत्वेन मुक्तप्राप्यत्वेन मितिरहितत्वेन कालतःपरिच्छेदरहितत्वेन शाश्वतश्री-प्रभृत्याश्रयत्वेन प्रतिपन्नाङ्गस्य च निर्विशेषादन्यत्वेन द्वितीयसत्त्वस्य दुर्निवारत्वात्, श्री-प्रभृतीनां शाश्वतत्वरूपनित्यत्वश्रवणाच्च, चैतन्यान्यस्य सर्वस्य ज्ञाननिवर्त्यत्वरूपमिथ्या-त्वाङ्गीकारानुपपत्तेश्च ॥

नच 'अतोऽन्यदार्तम्' इत्यादि ब्रह्मचैतन्यान्यमिथ्यात्वाऽवेदकश्रुत्यविरोधाय श्रीप्रभृती-नाम् 'अमराः निर्जराः' इतिवत् सङ्कुचितशाश्वतकत्वमिति वाच्यम् । 'श्रीःसत्यं तपः' इत्यादीनि 'शाश्वतानि'इत्यस्य 'अतोऽन्यदार्तम्'इत्येतदपेक्षया विशेषशास्त्रत्वेन अनेनैव तत्सङ्कोचस्योचितत्वात् । नच –

'तस्मात् यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्मात्' (ऋ-सं-१०-९०-९)

इति श्रुताऽनित्यताकप्रायपाठेन 'शाश्वत'शब्द एव सङ्कोचो न्याय्य इति वाच्यम् । तद्वाक्य-सम्प्रदायप्रवर्तनमात्रपरत्वेनोपपन्नतया सङ्कोचाप्रसक्तेः । अन्यथा –

**'वाचा विरूप नित्यया'**(ऋ-सं-८-६४-६)
**'यावद् ब्रह्मविष्ठितं तावती वाक्'**(ऋ-सं-१०-११४-८)

इति श्रुत्या,

**'स्वयम्भुरेषो भगवान् वेदो गीतस्त्वया पुरा ।**
**शिवाद्या ऋषिपर्यन्ताः [१]स्मर्तारोऽस्य न कारकाः'**

इत्यादि स्मृत्या, च देशतः कालतश्च ब्रह्मवत् परिच्छेदराहित्याऽवेदन विरोधात् ॥

नचैवम् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'आत्मनो वा अरे यो दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इति एकविज्ञानसर्वविज्ञानप्रकरणे पठितस्य 'स यथा द्वेधाऽग्नेः पृथक् धूमा विनिस्सरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यद् ऋग्वेदो यजुर्वेदः सामवदोऽथर्वाङ्गिरस' इत्यादिना सदृष्टान्तं वेदाना-मीश्वरोत्पन्नत्वावेदनविरोध इति वाच्यम् । एतद्वाक्येनाबुद्धिपूर्वक क्लृप्तसाधारण(क्लृप्त्यसुप्ति-साधारण-पा)निश्वासवाचिनश्च 'निश्वसित'शब्देन वेदचतुष्टयग्रहणेन तस्याबुद्धिपूर्वकोच्चारण-विषयत्वज्ञापनपरतया तदुत्पत्त्यप्रतिपादनात् । अन्यथा 'वाचक'शब्देनैव तद्ग्रहणसम्भवात्, तदवाचक'निश्वसित'शब्देन तद्ग्रहणानुपपत्तेः ॥

किञ्च वेदस्योत्पन्नत्वाङ्गीकारे –

'यज्ञेन वाचः पदवी यमायन्तामन्वविन्दन् ऋषिषु [२]प्रविष्टाम्',
'नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्' (क-उ-१-३-१६)
'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा'

इत्यादि [३]वेदनित्यत्वादनादित्व-साम्प्रदायिकव्याख्यातत्वाऽवेदकश्रुतिस्मृतिविरोधः ।

(१) स्मार्तयोऽस्य इति ताळपत्रस्थ पाठः ॥
(२) निशिषु प्रविष्टाम् इति ताळपत्रस्थ पाठः ॥
(३) वेद नित्यत्व-अनादित्व इति पाठः स्यात् ॥

'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्'(तै-उ-१-२३) 'तेन प्रोक्तम्' (पा-सू-४-३-१०१(१४८१) इत्यादौ 'प्रोक्त'शब्दस्य व्याख्यानपरत्वदर्शनात्, न वा अवान्तरप्रलये वेदविद्यमानता पराः, तथा सङ्कोचे मानाभावात् ।।

किञ्च 'धर्मिणो हि प्रतिष्ठाग(ह)ममृताप्ययस्य च' इत्यादिना धर्मनित्यत्वाऽवेदनात् ब्रह्ममात्रनित्यत्वाङ्गीकारस्तदविरुद्धः । 'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' (भ-गी-४-८) इत्यादेः धर्मस्य चोदानालक्षणस्य अग्निहोत्रादेः प्रवाहतो नित्यस्य 'अहं प्रतिष्ठा स्थिति प्रयोजक' इति तदर्थाङ्गीकारेऽपि प्रवाहतो नित्यत्वस्य सजातीयप्रागभावव्याप्यध्वंसप्रतियोगित्वरूपत्वेन यावत् ब्रह्मकार्यानुवृत्तिप्रसङ्गात् । तस्मात् जीवेश्वरयोरुभयोरपि व्यावर्तकनित्यधर्मवत्वेन धर्मिसत्वं यावत् तावत्परस्परभेदसत्त्वसिद्धिदुर्निवारा ।।

किञ्च –

'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन'
'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवात्र पुण्यचितो लोकः क्षीयते'
'विष्णोर्लोके महीयते'(१)
'ब्रह्मणः सायुज्यं सलोकतां यन्ति'

'यो वै तां ब्रह्मणो वेद अमृतेनावृतां पुरीम् ।
तस्मै ब्रह्मच ब्रह्माच आयुःकीर्तिं प्रजां ददुः' (तै-आ-१-११५)

इत्यादिश्रुतिपर्यालोचनया ज्ञानान्मुक्तप्राप्यतदाश्रयभूतनित्यलोकविशेषप्रतीतेश्चैतन्यमात्रनित्यत्वाङ्गीकारो प्रामाणिकः । अमृतेनावृतां= मुक्तैर्व्याप्ताम् इत्यर्थः । 'ब्रह्म च ब्रह्मा च' इति 'च'शब्दःपरस्परसमुच्चयार्थौ, मुक्तरुद्रादिसमुच्चयार्थश्च । अन्यथा 'ददुः'इति बहुवचनानुपपत्तेः ।।

ननु 'एकमेवाद्वितीयम्' 'नेह नानाऽस्ति किञ्चन' इत्यादौ ब्रह्मव्यतिरिक्तद्वितीयमात्रस्य निषिद्धत्वात् द्वितीयपदार्थान्तर्गतवैष्णवलोकानामेव मिथ्यात्वे कथं तेषां नित्यत्वसिद्धिः? मिथ्यात्वे ज्ञानान्निवृत्त्यवश्यम्भावादिति चेन्न । 'एकमेवाद्वितीयम्' इत्यादिश्रुतीनां मिथ्यात्व-

(१) ऋग्वेदखिले नवममण्डलान्ते पठितवाक्यम् ।। यत्र तत् परमं पदम् इति पूर्वार्धम् ।।

परत्वस्य निरस्तत्वात्[१]।। प्रमाणप्रतीतत्वमात्रेण मिथ्यात्वस्य श्रुत्यर्थत्वायोगात् । अन्यथा 'असदेवेदमग्र आसीत्' इत्यादिना प्रतीतस्य जगदसत्वस्य तच्छ्रुत्यर्थत्वप्रसङ्गात् ।।

'जर्तिलयवाग्वा वा जुहुयात् गवीधुक यवाग्वा वा' इत्यादिना प्रतीतस्यारण्यक-तिल-गोधूम-साधितयवागुहोमेष्टसाधनत्वस्यापि तदर्थत्वप्रसङ्गाच्च । किन्तु तत्तात्पर्यविषयत्वेन तात्पर्यं च प्रमाणाविरोधे सत्येवोपक्रमादिभिः सिद्ध्यति नतु केवलैस्तैः ।।

अत एव 'जर्तिलय वाग्वा वा जुहुयात्' इत्यादौ केवलापूर्वतासत्वेऽपि तदर्थस्य 'अथो खल्वाहुरनाहुतयो वै जर्तिलाश्च गवीधुकाश्च' इत्युत्तरवाक्यनिषेधतया (निषिद्धतया-पा) स्तुतित्वेनोपयोगसत्वेन च, न तद्वाक्यतात्पर्यविषयत्वमिति । 'न चेदन्यं प्रकल्प-येत्प्रक्लृप्तार्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च'(जै-सू-१०-८-७) इति दशमे निर्णीतम् । अन्यथा= प्रमाणाविरोधस्यापरिहार्यत्वे, 'जर्तिलयवाग्वा वा जुहुयात्' इत्यादिना जर्तिल-यवागूहोमादेः 'स्वर्गकामो यजेत' इत्यादिना जर्तिलयवागूकर्तव्यतावत् (यागादेर्व्यवहारिक-कर्तव्यतावत्-पा) व्यावहारिककर्तव्यतासिद्धिप्रसङ्गः । 'यजमानः प्रस्तरः' 'सोमेन यजेत' इत्या-दिना प्रत्यक्षविरोधस्यानादरणीयत्वात् । प्रस्तरयजमानयोः, सोमद्रव्ययागयोश्च तात्विकस्य व्यावहारिकस्य वा अभेद(अभेद्य-पा) अभेदसिद्धिप्रसङ्गश्च[२] ।।

यत्तु अत्र प्रयोजनाभावात् विध्याकाङ्क्षादेरभावेन न 'यजमानः प्रस्तरः' इत्यादिना प्रस्तर-यजमानयोः, याग-सोमद्रव्ययोर्वा तात्विकस्य व्यावहारिकस्य वा अभेदेऽस्य सिद्धिरिति । तन्न । प्रमाणस्य परप्रयोजन नैरपेक्ष्येणैव स्वविषयसाधकत्वस्वाभाव्यात् । नच मानान्तरस्य तथाविधस्वाभाव्येऽपि विधि-अर्थवाद-मन्त्र-नामधेयात्मकस्य वेदस्याध्ययन-विधिना फलवदर्थावबोधपर्यन्तत्वावधारणात् प्रयोजनाभावादेव न तेन तदभेदो बोध्यत इति वाच्यम् । अपौरुषेये पुमिच्छाघटिततात्पर्यासम्भवेन, प्रयोजनवत्प्रतीतिजनकत्वरूपस्यैव तस्य वाच्यतया तादृशस्य च तात्पर्यस्यापूर्वतादेरव्यभिचाराय स्वीकर्तव्यत्वेन 'हुंफडादि'-वैदिकशब्द इव दृष्टप्रयोजनस्याभावेऽपि तदभेदबोधे अदृष्टप्रयोजनस्यावश्याभ्युपेयत्वात् ।

---

(१) एकमेवेति श्रुत्यर्थनिरसनप्रस्तावे प्रथमपरिच्छेदे निरस्तत्वात् इत्यर्थः ।।

(२) अभेदाभेदसिद्धिप्रसङ्गश्च इति पाठः स्यात् ।।

'प्रस्तराभिन्नयजमानस्य जनकः' 'सोमाभिन्नयागस्य च जनक ईश्वरः' इति मोक्षसाधनभूतेश्वरगोचरविशिष्ट-वैशिष्ट्यबोधकहेतुतया तदभेदज्ञानस्य दृष्टार्थत्वोपपत्तेश्च ॥

किञ्चैवं देवताविग्रहादेः प्रयोजनाभावेन विद्ध्याकाङ्क्षागोचरत्वाभावात् 'वज्रहस्तः पुरन्दरः' इत्याद्यर्थवादेन तद्विग्रहवत्वाद्यसिद्धिप्रसङ्गः । द्रव्यदेवतयोरिव तद्विग्रहस्यायागशरीरत्वात्, तस्मात् वेदवाक्यस्य तत्परत्वसिद्धौ प्रमाणविरुद्धार्थ एव अपूर्वतादेः लिङ्गत्वं नतु तद्विरुद्धार्थेऽपि इत्यवश्यमास्थेयम् । एवं च कथं 'एकमेवाद्वितीयम्' इत्यादिनोदाहृतश्रुतिसिद्धनित्यभावानां वैष्णवलोकादीनां मिथ्यात्वसिद्धिः? ततश्च सर्वज्ञत्वादीश्वरगुणानाम् 'एष नित्यो महिमा ब्राह्मणस्य' 'सत्यः सो अस्य महिमा' इत्यादिश्रुतिप्रतिपन्ननित्यत्वसत्यत्वयोर्बाधकाभावात्, जीवे च तेषामसत्वेन तद्वत्व-तदभाववत्त्वाभ्यां नित्यः पारमार्थिकश्च जीवेश्वरयोः परस्परभेदो निष्प्रत्यूहमेव सिद्ध्यतीति सिद्धम् ॥

### ॥ अथ अथर्वशिरोपनिषदि उपक्रमादितात्पर्यलिङ्गेन भेदकथनम् ॥

ननु सर्वज्ञत्वादिधर्म तद्व्यतिरेकाभ्यां न वास्तव चैतन्यभेदोऽभ्युपगमार्हः । 'अहमेवैकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तोऽभ्यतिरिक्तः' (अथ-शि-उ-१) इत्युपक्रमात्,

> 'एष हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।
> सं विजायमानः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति विश्वतो मुखः'

इत्यभ्यासात्,

> 'प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन् क्रोधो यत्र तृष्णा क्षमा च ।
> तृष्णां छित्वा हेतुजालस्य मूलं बुध्या सञ्चिन्त्य स्थापयित्वा तु
> रुद्रे रुद्र एकत्वमाहुः' (अथ-शि-उ-४)(१)

यं प्राणेषु मनसश्चान्तर्लिङ्गं लीनमाहुः यस्मात् क्रोधादिस्तं जीवं संसारकारणसमूहस्य

(१) 'यस्मिन् क्रोधो या च तृष्णा क्षमां च तृष्णं च हित्वा हेतुजालस्य मूलम् । बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे रुद्र एकत्वमाहुः' इति इदानीन्तनपाठः ॥

मूलभूतां तृष्णाम् । उपलक्षणमेतत् । क्रोधादिकं च, छित्वा, रुद्रे, तं= जीवं, स्थापयित्वा, रुद्र एकत्वं फलमाहुरिति फलश्रुतेः, 'पुरस्तात् ज्योतिरहमेकः= सर्वे च मामेव सर्वे देवा अहमेवेत्यर्थः' । मां यो वेद स सर्वान् देवान् वेद मदात्मकत्वात् इत्युपपत्तेः, **'अपाम सोमममृतामभूम । अगन्म ज्योतिरविदाम देवान्'** समं परमेश्वरं च मया सहितमिति यावत् । अपाम सोमम् अवलोकितवन्तं स्म ज्योतिर्ब्रह्मस्वरूपमिति सकलदेवविज्ञानार्थ-वादात्, **'ओमादौ मध्ये भूर्भुवः सुवरं ते शीर्षं जन ओं विश्वरूपोऽसि'** इत्युपसंहाराच्च, तदभेद एव तात्पर्यावधारणात् । अत एवाऽह 'अहमेवैकः प्रथमम्' इत्याद्युपासनार्थमुपदिष्टं नतु वस्तुत इति निरस्तमिति चेन्न ।।

उपक्रमात् तावज्जीवेश्वराभेदपरत्व(१)अवधारणसम्भवात् 'देवा ह वै स्वर्गं(२) लोकमायंस्ते रुद्रमपृच्छन् को भवानिति । सोऽब्रवीत्' (अथ-शि-उ-१) इति पूर्ववाक्यपर्यालोचनया 'रुद्र'शब्दितस्यैकस्यैव 'अहमेवैकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्युपक्रमे भूत-भविष्यत्-वर्तमानात्मकसकलकालव्यापित्वस्यैव प्रतीतेः ।

नापि –

> **'एष हि देवः प्रदिशोनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स विजायमानः(३) स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति विश्वतो मुखः'**
> (अथ-शि-उ-५)

इत्यभ्यासात्, तत्परत्वसिद्धिः । अत्र वाक्ये 'एतत्'शब्दपरामृष्टस्य सकलकालव्यापित्वेनोक्त-रुद्रस्यैव गर्भान्तस्थेन जातत्व-जायमानत्व-जनिष्यमाणत्व-रूपधर्मोपन्यासात् तेषां च जीवधर्मत्वकल्पनादिति वाच्यम् । उपक्रमे देहविशेषविशिष्टचैतन्यवाचि'रुद्र'शब्दश्रवणात्, तादृश'सर्व'शब्दचैतन्यस्य सकलकालव्यापित्वेन प्रतीतेः, 'अहमेवैकस्तादृशः न मत्तोऽप्य-तिरिक्त' इति इतरस्य सकलकालव्यापित्वनिषेधप्रतीतेश्च, अनुपसञ्जात-विरोध्युपक्रमानु-

---

(१) जीवेश्वरभेदपरत्वेति पाठः स्यात् ।।

(२) लोकमागमस्य ते देवा लोकमायन् ते इति ताळपत्रस्थ पाठः ।।

(३) स एव जातः इति इदानीन्तन पाठः ।।

सरणीयोपक्रमे श्रुतस्य 'रुद्र'शब्दितस्य अस्मदादिवज्ज्ञातत्व-जायमानत्व-जनिष्यमाणत्वानां मुख्यानामभ्यासवाक्यार्थस्यानङ्गीकार्यत्वात् । 'यस्मिन् क्रोधादिस्तं रुद्रे स्थापयित्वेति' फलवाक्यत्वाभिमतादपि जीवेशभेदस्यैव प्रतीतेश्च । रुद्रे जीवस्थापनप्रयोजकत्वेन 'एकत्वं प्राहुः' इति प्राधान्योक्तेश्च ॥

'पुरस्तात् (१)ज्योतिरहमेकः सर्वे च मामेव मां यो वेद स सर्वान् देवान् वेद' इत्युपपत्तिवाक्यस्यापि 'सप्तमी-पञ्चमी-प्रथमान्तेभ्यो दिग्-देश-कालेष्वस्ताति' इति स्मरणात् । 'पुरस्तात्' इति पञ्चमी, सा च ल्यब् लोपनिमित्ता । 'पुरस्तात्= पूर्वकाल-मारभ्य, अहमेको ज्योतिः, 'एक'शब्दोऽत्र प्रधानवाची । 'एके मुख्यान्य केवला' इत्य-मरोक्तेः । 'एको गोत्र' इत्यत्र 'एकशब्दोऽयमन्यप्रधानासहायसङ्ख्याप्राथम्यसमानवाचीति' कैय्यटोक्तेश्च । तेन प्रधानभूतं ज्योतिरहमित्यर्थः । सर्वे च मामेव, 'च'शब्दस्त्वर्थः । सर्वे तु ज्योतीरूपाः सूर्यादयः मामेवानु तथा, मदधीनज्योतिरूपा इत्यर्थः । 'न तत्र सूर्यो भाति न चन्द्र तारकम् । नेमा विद्युतो' इत्युक्त्वा 'तमेव भान्तम्' इत्यादिश्रुत्या तथैव विभा-वनात् । नच 'सर्वे च देवा अहमेव' इति तदर्थः, 'मां यो वेद स सर्वान् वेद' इत्युत्तर-वाक्यानुरोधादिति वाच्यम् ।

**'चन्द्रमा मनसो जातश्चक्षोस्सूर्योऽजायत ।**
**मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥**

इत्यादि वाक्यपर्यालोचनया अस्मच्छब्दार्थभूतब्रह्मवेदितुरेव तदवयवस्थतत्तद्देवताऽवेदन-सम्भवाभिप्रायेणैव 'यो मां वेद स सर्वान् वेद' इति वाक्यार्थावगमेऽपि वाक्यार्थसम्भवेन तदात्मकत्वेन तद्वेदनस्यैतद्वेदनरूपत्वम् इत्यर्थपरत्वानङ्गीकारात् । अन्यथा 'अङ्गान्यन्या देवताः'(तै-उ-१-१३) इति परमेश्वराङ्गोत्पन्नदेवतानां तदन्यत्वप्रतिपादनानुपपत्तेः। उदाहृत-वाक्यानुसारेण 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिसामानाधिकरण्यनिर्देशेन 'अङ्गानि देवता' इति सामानाधिकरण्यनिर्देशस्योपपत्तेः । 'अपाम सोमममृता अभूमागन्म ज्योति-रविदाम देवान्' इत्यादिसकलदेवविज्ञानार्थवादस्याप्युदाहृतवाक्यानुरोधेनोपपत्तिवाक्य-

(१) ज्योतिरहमेव सर्वे व्योममेव स सर्वे समा यो मां वेद इति इदानीन्तन पाठः ॥

तुल्यस्यार्थत्वस्यैव वर्णनीयत्वाच्च । अन्यथा उक्तरीत्या भेदपरोपक्रमादिविरोधापत्तेः । 'ओमादौ मध्ये भूर्भुव च ते शीर्षं जन ओं विश्वरूपोऽसि' इत्युपसंहारस्यापि ओम् आदी नामादिमध्यान्तशीर्षत्वप्रतिपादनपूर्वकं 'विश्वरूपोऽसि' इति विश्वमेव= जगदेवरूपमाकारः शरीरं यस्य स विश्वरूपः, इति परमेश्वरस्य जगच्छरीरकत्वप्रतिपादनपरत्वेनऽभेदप्रतिपादनपरत्वासिद्धेः ॥

साक्षात् प्रयत्नाधिष्ठानेनैव सर्वस्य परमेश्वरशरीरत्वनिर्वाहसम्भवात् । नह्यस्मदादिशरीरस्यापि साक्षात् प्रयत्नाधिष्ठितत्वे तदन्यदेव(अन्यदेव-पा) शरीरत्वं नतु तदिति नियमे मानमस्ति ॥

भोगावच्छेदकत्वादिशरीरलक्षणस्य शरीरावयवमिति चाप्तत्वेन प्रत्युत तस्यैव तल्लक्षणत्वापत्तेः । चेतनाचेतनप्रपञ्चस्य परमेश्वरशरीरत्वे

**'आकाश शरीरं ब्रह्म'** (तै-उ-१-१७)
**'यस्यात्मा शरीरम्'**
**'यस्य पृथिवी शरीरम्'**
**'यस्य मृत्युः शरीरम्'**
**'यस्याव्यक्तं शरीरम्'**

इत्यादि श्रुतीनामेव मानत्वात् । अत एव, 'विश्वं नारायणं देवम्' इत्यादिश्रौतनिर्देशः । अनिकृष्ट-शरीरावयवकशब्दानां शरीरपर्यन्तधावनस्य आबालव्युत्पत्तिसिद्धत्वादिति । तस्माद् 'अहमेवैकः प्रथममासम्' इत्याद्युपक्रमात् 'एषो हि देवः प्रदिशोऽनुसर्वा' इत्याद्यभ्यासात्, 'प्राणेष्वन्तमर्नसो लिङ्गमाहुः' इत्यादिफलश्रुतेः, 'पुरस्तात् ज्योतिरहमेक' इत्याद्युपपत्तेः, 'अपाम सोमममृता अभूम' इत्यादिसकलदेवविज्ञानार्थवादात्, 'ओमादौ मध्ये (१)भूर्भुवः सुवरं ते जन ओं विश्वरूपोऽसि' इत्युपसंहाराच्च, नाभेदपरत्वसिद्धिः । किन्तु उक्तरीत्या तद्वाक्यानां भेदपरत्वमेवसिद्ध्यतीति ॥

**॥ इति अथर्वशिरोपनिषदि उपक्रमादितात्पर्यलिङ्गेन भेदकथनम् ॥**

---

(१) भूर्भूवः सुवचोन्ते शीर्षं जन इति ताळपत्रस्थपाठः॥

किञ्च 'अहमेवैकः प्रथममासम्' इति सावधारणवाक्येन सकलकारणत्वेनावगतस्य तस्यैव स्वकार्यकोटिनिवेशासम्भवः । नच रूपान्तरेणापि जडं प्रतीव चैतन्यस्य चैतन्योपादानत्वं निमित्तत्वं वा सम्भवति अङ्गीकृतं वा । जीव-ब्रह्म-तद्विभागानां परेणानादित्वोपगमात्[१]। अपि चेश्वरस्य मुख्योत्पत्त्यङ्गीकारे 'प्रजापतिश्चरति गर्भे अन्तः अजायमानो बहुधा विजायते'(तै-सं-३-१३-३९) 'तस्य धीराः परिजानन्ति योनिम्'(तै- सं-३-१३-४०) इति जन्माभावप्रतिपादनविरोधः । 'बहुधा विजायते' इति प्रकारेण सिद्धजन्मविरुद्धजन्मप्रतिपादनानुपपत्तिः ॥

## ॥ अथ उपनिषत् पुराणादौ तत्र तत्र जीवेशाभेदनिरसनम् ॥

नन्वेतादृशममुख्यं जन्म परमेश्वरेण किमर्थमङ्गीक्रियत इत्यपेक्षायां तदङ्गीकृतस्यामुख्यजन्मनो योनिं= कारणं= प्रयोजनं, धीराः= धिया रमन्त इति बुद्धिविशेषशालिनः, परिजानन्ति, इति साधारणजन-दुर्वाण्यप्रयोजकत्वेन तदमुख्यजन्मानुक्तिप्रसङ्गश्च ॥

'अस्यात्रर्दुवसतेर्हि लाभादन्यो न दृश्यते'[२]इत्यादौ कारणवाचिनोऽपि प्रयोजनपरत्वं प्रसिद्धमेव । नच 'प्रजापति'शब्दस्य रुद्रशब्देनैकार्थ्यं कथमिति वाच्यम् ।

**'अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् ।**
**शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः'**(म-ना-उ-१-१)

इति प्रथमं 'प्रजापति'शब्दितस्यैव मध्ये 'तदेव ब्रह्म परमं कवीनामाहुः' इति 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' 'दिवं च पृथिवीं च' (म-ना-उ-१-६६) इति परब्रह्म-धातृशब्दाभ्यां तदनन्तरम् 'अणोरणीयान् महतो महीयान्' इत्यारभ्य 'धातुः प्रसादान्महिमानमीशम्' इति 'ईश्वर'शब्देन,

**'यो देवानां प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षिः ।**
**हिरण्यगर्भं पश्यतः जायमानम्'**

(१) ईशो जीव विशुद्धा चित् ...इति प्रमाणेन अनादित्वोपगमात् इत्यर्थः ॥

(२) 'अस्यात्र वसतेर्हि दुर्लभादन्यो न दृश्यत' इति पाठः स्यात् ॥

इति 'रुद्र'शब्देन 'तस्य प्रकृतिलीनस्य यः परः स महेश्वरः'(म-ना-उ-१२-१३) इति 'महेश्वर'शब्देन 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवम्' इति 'नारायण-हरि-शिव-अच्युतशब्देनोपसंहारे,

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः'(म-ना-उ-२४-१)

इति 'विरूपाक्ष'शब्देन च व्यवहारदर्शनेन 'रुद्र'शब्दितस्यैव जगत्कारणत्वेनावधारितस्य प्रकृते 'प्रजापति'शब्दार्थेनैक्योपगमस्यावश्यकत्वात् । तथाच स्मृतयः

'सृष्टिस्थित्यान्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः'(वि-पु-१-६६)

'सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चहरेति संज्ञाः श्रेयांसि तत्र खलु सत्वतनौ नृणां स्युः'
(भा-१-२-२४)

इत्याद्याः । अनेन स्थितिकर्तृत्वं 'हरि'शब्दपर्यायाणां सृष्टिकर्तृत्वं 'विरिञ्च'शब्दपर्यायाणां संहारकर्तृत्वं 'हर'शब्दपर्यायाणां प्रवृत्तिनिमित्तमिति विभावितमिति द्रष्टव्यम् । अत एव तत्र पुराणादौ तथैव व्यवहार उपलभ्यते ॥

नन्वेवमपि जीवेश्वराभेदो दुर्वारः । त्वया जीवत्वेनाङ्गीकृताभ्यां रुद्र-प्रजापति-शब्दित शिव-हिरण्यगर्भाभ्याम् ईश्वरत्वेनाङ्गीकृतस्य 'नारायण'स्योदाहृतवाक्यैरभेदाऽवेदनात् । नच 'रुद्र-प्रजापति'शब्दयोः तत्र तत्र कारणवाक्ये श्रुतयोर्नारायणपरत्वं बाधकं विना शक्याभ्युपगममिति चेन्न ।

'एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी'
'एको नारायण आसीत् न ब्रह्मा न शङ्करः'[१]

इत्यादि श्रुत्या सर्गाद्यसमये नारायणस्यैव देहविशेषविशिष्टस्य सत्वमावेद्यरुद्रहिरण्यगर्भयो-

(१) भारततात्पर्यनिर्णयप्रथमाध्याये उदाहृतश्रुतिः ॥

रसत्वाऽवेदनेन नारायणवत् तयोः कृत्स्नजगत्कारणत्वानुपपत्तेः । कृत्स्नजगत्कारणस्यैव 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति' इत्यादिना तत्वमेव मोक्षसाधन-विषयस्य ब्रह्मणो लक्षणमित्यभिधानेन 'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्यादिकारणवाक्यगत'आकाशादि'शब्दानामिव तद्गतत्वादिविशेषण रुद्र-प्रजापतिशब्दयो-रपि मोक्षसाधनज्ञानविषयभूतब्रह्माद्यन्यस्मिन् नारायण एव प्रवृत्त्यवश्यम्भावात् । अत एव 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' इति तैत्तिरीयश्रुतौ नारायणस्य महाज्ञेयत्वोक्तिः । अत एव च श्रुत्यन्तरे 'नारायणोऽसौ परमो विचिन्त्यः मुमुक्षुभिः कर्मपाशादमुष्मात्'(१) इति नारायणस्य मुमुक्षुभिर्विशेषेण निदिध्यासितव्यत्वोक्तिश्च । नच अथर्वशिरसि 'अहमेवैकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चित् मत्तो व्यतिरिक्तः' इति 'प्रथम'शब्दसम-भिव्याहारेणावधारणेन च रुद्रस्य त्रिकालव्यापित्वं श्रूयते, तदविरोधाय 'न ब्रह्मा नेशान' इति महोपनिषद्गतनिषेधो, न, तद्विषयोऽङ्गीकार्य इति वाच्यम् । 'अहं मनुरभवं सूर्यश्च' इत्यादिवामदेववाक्यवदथर्वशिरोवाक्यस्यास्य रुद्रान्तर्यामिनारायणविषयत्वेन तद्विरोधशङ्काया एवासत्वात् । अन्यथा= अस्य अन्तर्यामिविषयत्वाभावे, 'नान्यः कश्चिन्मत्तो व्यतिरिक्त' इति रुद्रवाक्यानन्तरं 'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं सम्प्राविशत्' इति प्रथम-पुरुषप्रयोगो न स्यात् । 'प्राविशम्' इत्युत्तमप्रयोग एव स्यात् । नच प्रागन्तर्यामिणः शब्दानुपस्थितत्वात् 'सोऽन्तरात्' इति 'तत्'शब्देन तत्परामर्शो युज्यते, प्रत्युत रुद्रस्यैव 'रुद्रोऽहं'शब्दाभ्यामुपस्थितत्वेन 'तत्' शब्देन तस्यैव परामर्शो युक्त इति वाच्यम् । 'तेन रक्तं रागात्' इत्यादाविव शब्दानुपस्थितस्यापि बुद्धिसन्निहितस्य 'तत्'शब्देन परामर्शो-पपत्तेः ॥

'ते रुद्रमपृच्छन् को भवानिति सोऽब्रवीदहमेवैकः प्रथममासं वर्तामि च भविष्यामि च' इति प्रश्नप्रतिवचनदर्शनात् प्रतिवचनानुसारेण 'को भवान्' इति प्रश्नस्यापि, भवान् किं? प्रथममासीत् किं?, वर्तते वर्तिष्यते च, इत्यभिप्रायत्वावश्यम्भावात्, वर्तमानत्वेन रुद्रं साक्षात्कृतवतां च देवानां तस्मिन् विषये प्रश्नासम्भवात्, घटनाय प्रश्नस्य तदन्तर्यामि-

---

(१) विष्णुतत्त्वविनिर्णयोदाहृतनारायणश्रुतिः

विषयत्वावश्यम्भावेन 'को भवान्' इति प्रश्नस्य 'भवदन्तर्यामी कः?' इत्यर्थत्वेनान्तर्यामिणो नारायणस्य शब्दोपस्थितत्वसम्भवाच्च ॥

अत एवानुपसञ्जातविरोध्युपक्रमानुसारेण 'सोऽन्तरादन्तरं प्राविशत्' इति चरमश्रुत-वाक्यस्य 'प्राविशत्' इति प्रथमपुरुषश्रवणेऽपि 'व्यत्ययो बहुलम्' इति स्मरणात् उत्तम-पुरुषस्य प्रथमपुरुषादेश इत्यङ्गीकार्यमिति निरस्तम् । प्रतिवचनानुसारेण प्रश्नवाक्यस्यास्म-दुक्तार्थपरत्वावश्यम्भावेन उपक्रमस्यैव रुद्रान्यपरत्वावधारणात् ॥

यद्यपि 'तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् । नारदं प्रति (परि-पा) पप्रच्छेति' वाल्मीकिवाक्यवत्, 'गोर्नर्दीयत्स्वाहे'ति भाष्यकारवाक्यवच्च(१), 'सोऽन्तरादन्तरं प्रावि-शत्' इति प्रथमपुरुषप्रयोगः सम्भवति । तथाऽपि प्रश्नान्यथानुपपत्त्या उपक्रमस्यान्य-परत्वनिश्चयात्, 'अहमेवैकः प्रथममासम्' इति रुद्रवाक्यत्वेन प्रतीयमानस्यापि स्वान्तर्याम्य-भिप्रायत्वावश्यम्भावेन 'सोऽन्तरादन्तरम्' इति तदुत्तरवाक्ये तदन्यान्तर्यामिपरत्वमादायैव प्रथमपुरुषप्रयोग उपपद्यत इति, वाल्मीक्यादिवाक्य इव नास्मदर्थभेदमारोप्य तत्प्रयोगो नोपपादनीय इति ॥

एतेन 'को भवान्' इत्युदाहृतप्रश्न-प्रतिवचनयोः रुद्रान्तर्यामिपरत्वेऽपि गुणभूत-मूर्तित्रयान्तर्गतरुद्रस्यैव तत्'रुद्र'शब्दार्थत्वात् तदन्तर्यामी परशिव एवास्त्विति निरस्तम् । 'परशिव'शब्देन नारायणाभिधाने इष्टापादनात् । तदन्यस्य रुद्रान्तर्यामित्वे मानाभावात् । सुबालोपनिषदिनारायणस्यैव पाठतः सर्वान्तर्यामित्वाभिधानेन तदन्यस्य तथात्वाश्रयणे तद्वि-रोधापत्तेश्च । एतच्च अस्माभिः परतत्त्वप्रकाशिकायां प्रपञ्चितमिति(२) ग्रन्थगौरवभयात् नेह प्रपञ्च्यते ॥

## ॥ अथ नारायणअथर्वशिरोपनिषत् विचारः ॥

अपि च 'न ब्रह्मा नेशान'इति ईशानाभिधान(३)श्रुतिप्राप्तस्यैव त्वदभिमतस्य परशिवस्य साक्षादेव निषेधात् –

(१) व्याकरणमहाभाष्यवचनम् ॥

(२) नारायण एव मुमुक्षु ज्ञेयं परं तत्वम् इत्यादिना प्रपञ्चितमित्यर्थः ॥ पुट-सं-१२ ॥

(३) ईशाभिधान इति ताळपत्रस्थ पाठः ॥

'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति ।
नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते' (ना-अ-शि-उ-१)

इत्यादिनारायणोपनिषद्वाक्येन नारायणात् ब्रह्मोत्पत्त्यनन्तरं रुद्रस्योत्पत्तिप्रतीतेस्तदविरोधाय 'अहमेवैक प्रथममासम्' इति वाक्यावगतं रुद्रस्य प्राथम्यं स्वानन्तरभाविकार्यावधिकमेवाश्रयणीयं नतु नारायणवत् कार्यमात्रापेक्षया । अन्यथा 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' (ऋ-सं-१०-१२१-१) इति 'अग्र' शब्दश्रवणाच्चतुर्मुखब्रह्मणोऽपि कार्यमात्रापेक्षया प्राथम्यमङ्गीकार्यं स्यात् ॥

नन्वत्र 'अहमेवैकः प्रथममासम्' इति सावधारण'प्रथम'शब्दश्रवणात्, हिरण्यगर्भवाक्ये तदभावात् तत्रैव नोदाहृतवाक्यविरोधाय सङ्कोच आश्रयितव्यः । नचैवम्, 'नारायणात् रुद्रो जायते' इति रुद्रस्य नारायणात् उत्पत्तिश्रवणविरोधः । तत्र 'रुद्र'शब्दस्य परशिव-तदितरसाधारणतया सामान्यशब्दस्य तदन्यपरत्वेऽप्युपपत्तेरिति(१)चेत्, तथाऽपि 'अहमेवैकः प्रथममासम्' इति विहितस्य रुद्रपूर्वकालसत्वस्य 'न ब्रह्मा नेशान' इति प्रतिषेधात्, 'षोडशिग्रहणाग्रहणवत्' विहितत्व-प्रतिषिद्धत्वनिर्वाहाय रुद्र-सत्व-असत्वयोरुभयोरपि अङ्गीकर्तव्यत्वेन विरुद्धयोस्तयोरेकदा सत्वासम्भवेन कालभेदेन तदाश्रयणे आवश्यके, यदैव तदसत्वं तत्कालीनसृष्टावेव तस्य कारणत्वासम्भवेन सार्वकालिककृत्स्नजगत्कारणत्वायोगात् । तथाविधजगत्कारणत्वस्यैव 'परब्रह्म'शब्दितमुमुक्षुज्ञेयपरतत्वलक्षणत्वात् । नच ईशानाभिधानश्रुतिप्राप्तः परशिवात् पराभिमताज्जन्यः सम्भवति । नच 'ईशान'शब्दे 'रुद्र'-शब्दः साधारणः । तस्य पराभिमत'परशिव' एव मुख्यत्वात् । नच 'नेशान' इति मुख्यस्य निषिद्ध इत्यङ्गीकारे किञ्चित् बाधकमस्ति । येन तस्य तदन्यविषयत्वमाश्रयणीयं स्यात् ॥

ननु 'स एकः' 'स एको रुद्रः, स ईशानः, स भगवान् स महेश्वरः, स महादेवः' इति परब्रह्मनामान्युक्तत्वात् निर्वचने 'अथ कस्मादुच्यते एकः यः सर्वान् लोकान् गृह्णाति सृजति विसृजति वासयति तस्मात् उच्यते एक'(२)(अ-शिख-उ-४) इति'एक'शब्दस्य परमेश्वरे

(१) तदनतपरत्वेऽप्युपपत्तेरिति इति ताळपत्रस्थपाठः ।
(२) 'अथ कस्मादुच्यते एको यः सर्वान्प्राणान् सम्भक्ष्य सम्भक्षणेनाजः संसृजति विसृजति.....इत्यादि'

निरुक्तत्वात् 'एको ह वै नारायण आसीत् न ब्रह्मा नेशान' (म-उ-१-१) इति महोपनिषद्-वाक्यस्य, एकः= परमेश्वरः, नारायण आसीत्, ब्रह्मादयस्तु कार्यभूताः नारायण आसन् इत्यर्थपरत्वेनाऽतःपरमेश्वरस्यैव सर्गाद्यसमये अबाश्रितत्वप्रतीतेर्न नारायणापरपर्यायगुणभूत-मूर्तित्रयान्तर्गतविष्णोस्तदा सत्वसिद्धिः ॥

अत एव ब्रह्मविष्ण्वादीनामथर्वशिखायां 'सर्वमिदं ब्रह्म-विष्णु-रुद्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्नकारणं कारणानां ध्याता ध्याता रुद्रः कारणात्तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्य' (अ-शिख-उ-१-२) इतीति निषेधः, तत्रैव ध्यायी परमकारणत्वेन[१] 'ईशानं प्रध्यायितव्यम्' इति पूर्ववाक्ये ईशानध्यानं विधाय 'सर्वमिदं ब्रह्म-विष्णु-रुद्रेन्द्रास्ते सम्प्रसूयन्ते' इति देवप्रमुखत्वद्योतनाय विशिष्य नामग्रहणपूर्वकम् ईशानात् ब्रह्म-विष्णु-रुद्राणामुत्पत्तिप्रतिपादनं च । तथा च महोपनिषदि 'न ब्रह्मा नेशान' इति सर्गाद्यकालसत्वनिषेधो नास्मदभिमतपरशिवविषयः । तथासत्येकस्यैव परशिवस्य अबाश्रितत्वेन सर्गाद्यसमये सत्वं विधाय, निषेधतो महोपनिषद्वाक्यस्य व्याहतभाषित्वेना-प्रामाण्यापातादिति चेन्न ।

'आपो नारा इति प्रोक्तः आपो वै नरसूनवः ।
ताः अस्यायनं पूर्वं तेन नारायणः स्मृतः'[२]

इत्यादि स्मृत्या योगस्य, 'विष्णुर्नारायणः कृष्णः'[३] इत्यादि कोशेन रूढेश्च सिद्धेर्योगरूढिभ्यां विष्णुरेव मुख्योऽर्थ इति, तस्य केवलयौगिकत्वासिद्धेः । अन्यथा= केवलयौगिकत्वे, 'नारायण'शब्दस्य 'पूर्वपदात्संज्ञायामगः'(पा-सू-८-४-३(८५७) इति शास्त्रप्रवृत्त्यसम्भवेन तत्र णत्वानुपपत्तिप्रसङ्गः । 'स एकः' 'स एको रुद्रः' 'स ईशानः' इत्याद्युदाहृतवाक्ये परब्रह्मपरे निरुक्तिबलेन 'एक'शब्दस्य परब्रह्मनिष्ठत्वेऽपि 'एको ह वै नारायणः' इति सामानाधि-

---

इदानीन्तन पाठः । एवमुत्तरत्रापि तत्रतत्र अथर्वशिखोपनिषदि व्यत्यस्त पाठः दृश्यते ॥

(१) ध्येयं परमकारणत्वेन इति पाठः स्यात् ॥

(२) सूत्रभाष्ये अन्तःस्थत्वाधिकरणे उदाहृत व्यासस्मृतिः ॥

(३) अ-को-स्वर्गवर्गः ।

करण्यनिर्देशेन बाधकाभावेन च योगरूढिभ्यां 'नारायण'शब्दमुख्यार्थस्य विष्णोरेव परब्रह्माभिन्नत्वप्राप्त्या तस्यैव सर्गाद्यसमये सत्वसिद्धेश्च । 'न ब्रह्मा नेशान' इति पराभिमत-परशिवस्य 'ब्रह्म'शब्दार्थभूतहिरण्यगर्भवत् तदा सत्वनिषेधस्य दुर्वारत्वात् ।।

किञ्च 'एको ह वै नारायण आसीत्' इति 'एक'शब्दः सङ्ख्यावाच्येन वाच्यम्, नतु निरुक्तार्थपरः । अन्यथा 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' (ऋ-सं-१०-१२१-१) इत्यादावपि 'एक'शब्दस्य निरुक्तिबलेन पराभिमतपरशिवपरत्वापत्त्या तस्य च 'हिरण्यगर्भ'शब्दसामानाधिकरण्येन पराभिमतपरशिवस्यापि हिरण्यगर्भाभिन्नत्वं तद्वाक्यार्थः स्यात् । नचैवम् । ब्रह्मविष्णुरूपोपाध्युपहितचैतन्याभ्यां शिवोपाध्युपहितचैतन्यस्य अद्वैतवादिनापि शैवेनाधिक्यस्वीकारात् मूर्तित्रयस्याप्येकोपाध्युपहितत्वे च 'न ब्रह्मा नेशान' इति 'एको ह वै नारायण आसीत्' इति चैकदैव सत्त्वासत्त्वाऽवेदनानुपपत्तेः ।।

यत्तु ब्रह्मविष्ण्वादीनामथर्वशिखायां 'ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णु-रुद्रेन्द्रास्तेसम्प्रसूयन्त सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां ध्याता ध्याता रुद्रः कारणन्तु ध्येय'[१] इत्यादिना कारणानां कारणं नेति परमकारणत्वं प्रतिषिद्ध्य 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूत्ते' इति तेषां मध्ये ईशानकार्यत्वमुक्त्वैशानस्य ध्येयत्वे 'कारणन्तु ध्येय' इति 'तु'शब्दसमभिव्याहारेण तदेव परमकारणत्वं प्रयोजकमित्या-वेदनात्, 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इति वाक्यस्यादिसर्गे नारयणसत्वं नार्थः किन्तूदाहृतवाक्यपर्यालोचनया 'ईशानात् कचित् कल्पविशेषे नारायण एव, आसीत्= उत्पन्नः, न ब्रह्मेशानौ' इत्यर्थ इति । तन्न । 'कारणं कारणानां ध्याता' इत्यनेन ध्याता कारणानां कारणं न परमकारणं नेत्यभिहिते ध्यातैवेक इत्याकाङ्क्षायां 'ध्याता रुद्र'इति वाक्यस्य प्रवृत्तेः, ततो रुद्रस्यैव परमकारणत्वप्रतिषेधसिद्धेर्ब्रह्मविष्ण्वोस्तादृशकारणत्व-निषेधेऽपि व्यापारकल्पने मानाभावात् ।।

यदपि 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इति ब्रह्म-विष्ण्वादीना-मीशानकार्यत्वावधारणात् विष्ण्वपरनामकस्य नारयणस्य 'एको ह वै नारायण आसीन्न

(१) 'ध्याता रुद्रा' इत्यादि पाठः इदानीन्तनपुस्तके नोपलभ्यते ।।

ब्रह्मा नेशान' इतिवाक्यस्यापि सर्गकाले सत्वं नार्थः किन्तु ईशानात् तत्समये क्वचित् कल्पविशेषे वा नारायण आसीत्= उत्पन्न, इत्येवार्थो वाच्य इति । तदपि न । अत्रैव महोपनिषदि उत्तरत्र 'सोऽन्यत्कामो मनसाऽध्यायीत तस्य ध्यानान्तःस्थस्य ललाटात् स्वेदोऽपतत् । स्वेदात् बुद्बुधमभवत् । बुद्बुधात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत'(१) (म-उ-१-१) इति नारयणादीशानस्यैवोत्पत्त्यवधारणात् । तदविरोधेनैव 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इति पूर्ववाक्यस्यार्थ आश्रयणीय इत्युक्तार्थपरत्वाश्रयणायोगात् । नहीशानादन्यत्र 'त्र्यक्ष-शूलपाणि'शब्दौ प्रसिद्धौ ॥

किञ्च 'एको ह वै नारायण आसीत्' इत्यस्य परोक्तार्थपरत्वे 'पुरुषो ह वै नारायणोऽकामयत प्रजा सृजेयेति । नारायणाद्ब्रह्मा जायते । नारायणात् रुद्रो जायते' इति नारायणोपनिषदि 'रुद्र'शब्दितस्येशानस्य नारायणात् 'ब्रह्म'शब्दितहिरण्यगर्भोत्पत्त्यनन्तरमुत्पत्तिप्रतीतेस्तद्विरुद्धम् ॥

किञ्च 'पदि न्यायेन'(जै-सू-४-१-२५) 'अपरिमिताधिकरण न्यायेन'(जै-सू-६-७-१०) वा 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इति ब्रह्मविष्ण्वादीनां कार्यत्व प्रतीत्यनन्तरं कार्यस्य कारणस्य व्यपेक्षत्वेन किं तत् कारणमिति अपेक्षायां सन्निधानात् 'ध्यायीतेशानम्' इति ध्याने विधिगत'ईशान'शब्दार्थस्य कारणत्वमाश्रित्य तत्प्रत्यायकशब्दकल्पनेन तस्य कारणत्वकल्पनं प्राकरणिकम्, 'ईशानस्य' तु नारायण कार्यत्वं, 'नारायणात् ब्रह्मा जायते नारायणात् रुद्रो जायते' इति नारायणोपनिषद्वाक्येन 'एको ह वै नारायण आसीत् न ब्रह्मा नेशान' इति तत्र 'ब्रह्मा चतुर्मुखोऽजायत । रुद्र त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इति महोपनिषद्वाक्येन च प्राप्तम् । तथा च वाक्येन प्रकरणबलात्, न प्रकरणात् ब्रह्मविष्ण्वादीनामीशानकार्यत्वसिद्धिः । प्रकरणात् वाक्यस्य प्राबल्यं 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां-समवाये पारदौर्बल्यमर्थविप्रकर्षात्'(जै-सू-३-३-१४) इति पूर्वतन्त्रे सिद्धम् ॥

अपि च 'न ब्रह्मा नेशानो नेमे द्यावापृथिवी' इति पृथिव्यादितुल्यतया ब्रह्मेशानयोरपि

(१) 'स्वेदोऽपतत् । स्वेदात् बुद्बुधमभवत् बुद्बुधात् इति' पाठः इदानीन्तनपुस्तके नोलपभ्यते ॥

सर्गाद्यसमये सत्वस्यैव निषेधात् तस्य ब्रह्मविष्णुशब्दित-हिरण्यगर्भनारायणौ प्रति पूर्ववर्तित्वाभावेन कारणत्वमेव प्रमाणविरुद्धमिति । 'ध्यायीतेशानम्' इति ध्यानविध्यपेक्षित-प्राशस्त्यमात्रसमर्पकत्वेन 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इति 'विरोधे गुणवादः स्यादिति' न्यायेन गुणवादरूपार्थवाद एव सन्, न यथा श्रुतार्थसाधकः । देवताधिकरणन्यायेनार्थ-वादादपि स एवार्थः सिध्यति यः प्रमाणविरुद्धो न भवति ॥

अयं च ब्रह्मविष्ण्वादीनामीशानजन्यत्वरूपार्थः प्रमाणविरुद्धो इत्युक्तम् । नच 'न ब्रह्मा नेशान' इत्यत्र 'ईशान'शब्दः परशिवान्यपरः । ईशानाभिधानश्रुतेः, परशिवे एव मुख्यत्वात्, बाधकं विनाऽन्यार्थपरत्वाङ्गीकारे 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इत्यत्र 'ब्रह्मादि'शब्दानामपि चतुर्मुख-नारायणादन्यपरत्वाङ्गीकारप्रसङ्गः । नच 'एको ह वै नारायण आसीत्' इत्यस्य एको नारायणः, आसीत्= परशिवादुत्पन्नः, इत्यर्थे मानमस्ति । येन एतद्वाक्यानुसारेण 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इति वाक्यस्यापि ब्रह्मविष्ण्वादीनां परशिवजन्यत्वरूपोऽर्थ इत्याश्रीयेत । नहि 'एको ह वै नारायण आसीत्' इत्यत्र 'परशिवात्' इत्यध्याहारे मानमस्ति ॥

नच 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इति वाक्यमेव मानमिति वाच्यम् । अत्रापि ब्रह्मविष्ण्वादीनां परशिवजन्यत्वस्य शब्दतोऽप्रतीतेः,सन्निधेः प्रकरणाच्च तदर्थपरत्वकल्प-नस्योक्तरीत्या वाक्येन बाधितत्वात् । अन्यथा अन्योन्याश्रयात् । सिद्धे 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इत्यस्य ब्रह्मविष्ण्वादीनां परशिवकार्यत्वरूपार्थे प्रमाणसम्भवात् । 'एको ह वै नारायण आसीत्' इत्यत्र 'परशिवादि'त्यध्याहारसिद्धिः । सिद्धे च तस्मिन् तद्वाक्यानुरोधेन 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इत्यस्य ब्रह्मविष्ण्वादीनां परशिवजन्यत्वरूपार्थकत्व-सिद्धिरिति ॥

नच 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्' इति श्वेताश्वतरे हिरण्यगर्भस्य रुद्रापर्यायपरशिवजन्यत्वं प्रमितमिति वाच्यम् । श्वेताश्वतरस्थ'रुद्र'शब्दस्य तत्पर्यायाणाम् ईश-हर-भवादिशब्दानां चोपक्रमाद्यनुरोधेन महो-

पनिषत्- नारयणोनिषदनुसारेण च नारायणपरत्वस्यैव अवधारणात् । उपपादितं चैतत् अस्माभिः परतत्वप्रकाशिकाय ाम् (१)।।

अपि च हिरण्यगर्भस्य प्रसिद्धरुद्रजन्यत्वे बृहदारण्यके 'ललाटात्क्रोधजो रुद्र' इति रुद्रस्य ब्रह्मणो ललाटात् उत्पत्तिप्रतिपादनविरोधः । तथा सुबालोपनिषदि 'त्र्यक्षं बन्धपरशुमजीजनत्'(सु-उ-१-१) इति पराभिमतपरशिवस्य तदुत्पन्नत्वप्रतिपादनविरोधः । तथाचाथर्वणब्राह्मणे 'संवत्सरे कुमारोऽजायत' इति 'कुमार'शब्दितरुद्रस्य तज्जन्यत्वप्रतिपादनविरोधः । तथा शतपथब्राह्मणे 'इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमः' इति रुद्रस्येन्द्रादितुल्यतया जन्मप्रतिपादनविरोधः । तथा सामवेदे प्रपदनामके मन्त्रे 'विरूपाक्षाय दन्तात् जये(२) समुद्राय विश्व व्यचसे' 'तथाय विश्ववेदसश्चात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः' इति रुद्रस्य विरूपाक्षाभिधानश्रुतिप्रसिद्धस्य ब्रह्मजन्यत्वप्रतिपादनविरोधः ।।

अपि च ब्रह्मणो रुद्रज यत्वे शतपथब्राह्मणे एव 'संवत्सरे कुमारोऽजायत तं प्रजापतिरब्रवीत् कुमार किं रोदि षे? यत् श्रमात् तपसोऽधिजातोऽसि इति । सोऽब्रवीत् । अनपहतपाप्मा वा अहमस्मि' इत्यादिना प्रजापतिना रुद्रं प्रति 'कुमार किं रोदिषि' इति कुमारत्वपुरस्कारेण सम्बोध्य रोदनप्रश्नाद्यनुपपत्तिः । नच उदाहृतमिदं सर्वं वाक्यं गुणभूतमूर्तित्रयान्तर्गतरुद्रपरमिति वाच्यम् । विरूपाक्षाभिधानश्रुतिप्रसिद्धस्य परेण गुणभूतमूर्तित्रयान्तर्गतत्वानङ्गीकारात् । विरूपाक्षादिशब्दाभिधेयस्य गुणभूतमूर्तित्रयान्तर्गतस्य सत्वे मानाभावात् । तेषामुभयवाचित्वे अनेकार्थत्वाङ्गीकारापत्तेश्च । नचैवम् । अन्यायश्चानेकार्थत्वमिति न्यायात् ।।

एतेन –

'सोमः पवते ज नेता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः'(ऋ-सं-९-९६-५)

---

(१) अत्र ब्रूमः । नारायणरूपमेव मुमुक्षुज्ञेयं परं तत्वम् ,,,,.एतेन नारायणस्य विश्वात्मकत्वे...इत्यादिना ग्रन्थे तत्रतत्र उपपादितम् इत्यर्थः ।।

(२) विरूपाक्षाय दण्डं जयेति क्वचित् पाठः ।।

इति विष्णोः सोमजन्यत्व प्रतीतेः 'नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते' इति ब्रह्मरुद्रयोर्नारायणजन्यत्वप्रतीतेः, 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्' इति ब्रह्मणां 'हिरण्यगर्भ'शब्दितस्य रुद्रजन्यत्वप्रतीतेः, एककाले तेषाम् अन्योन्यमुत्पाद्योत्पादकभावाभावसम्भवात् तत्प्रामाण्यनिर्वाहाय कल्पभेदेनैव तथोत्पाद्योत्पादकभाव आश्रयणीयः । एवं च सति कथं ब्रह्म-विष्णु-रुद्राणां कार्यकोटि-निविष्टत्वप्रयुक्त-गुणभूतत्वाभावः । परस्परकार्यत्वप्रतिपादनादिति ॥

यत्तु गुणभूतमूर्तित्रयान्तर्गतपरशिवे मानाभाव इति । तन्न । श्वेताश्वतरे

**'किं कारणं ब्रह्म कुतस्म जाता जीवाम केन क च सम्प्रतिष्ठाः ।**
**अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्'**

इति जगत्कारणभूतं ब्रह्मशब्दितं वस्तु किमप्यस्तीति सामान्यतो निश्चितवतां, 'ब्रह्मवादिनां कारणं ब्रह्मेति' कारणभूतं ब्रह्म किं देवतारूपम् इति? प्रश्नप्रतीतेरुत्तरत्र 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशम्' इति वाक्यदर्शनात् तस्यैतत् प्रश्नोत्तरत्वेन योजनीयत्वात् । तत्र च ईशानाभिधानश्रुतिसद्भावात् तदभिध्येयगुणभूतमूर्तित्रयान्तर्गतः पर-शिवमूर्तित्रयकारणभूतश्च ॥

अत एव अथर्वशिखायां 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतैः' इति ब्रह्म-विष्णु-रुद्राणां भूतेन्द्रियतुल्यतया 'ईशान'शब्दितपरशिवकार्यत्वमुक्त्वा 'कारणं कारणानाम्' इति तेषां परमकारणत्वं प्रतिषेध्य 'कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाश मध्य' इति ईशानस्य ध्येयत्वे 'कारणन्तु ध्येय' इति विशेषार्थक-'तु'शब्दसमभिव्याहृत'कारण'शब्देन मूर्तित्रयसहितकृत्स्नजगत्कारणत्वं प्रयोजकमुक्तमिति निरस्तम् ॥

'सोमः पवते जनिता मतीनाम्' इति मन्त्रस्य कर्मसमवेत-सोमलता-रूपार्थप्रकाशकत्वेन रुद्रपरत्वे मानाभावात् । नहि तत्परत्वे अन्यत्रोपक्रमादिकं लिङ्गमस्ति । नच अनेन मन्त्रेण कर्मसमवेत-सोमलतारूपार्थप्रकाशत्ववत् सोमलतारूपार्थसमवेतद्युपृथिव्यादिजनकत्व-प्रकाशनं न कार्यं फलाभावादिति वाच्यम् । कर्मासमवेतस्यापि धर्मस्य कर्मसमवेत-

विशेषणतया तत्राविद्यमानस्यापि मन्त्रेण प्रकाशनमभ्युदयकारीत्यस्यार्थस्य पूर्वतन्त्रे 'अवतं तेषामितरार्थं प्रयुज्यते' इति अपरिमिताधिकरणे(जै-सू-६-७-१०) स्थितत्वात् । तत्र ह्यसमवेतविशेषणस्याभिधानं मन्त्रश्रुतिविशेष(ण)-विशिष्ट-रूपप्रकाशनं नियमादृष्टद्वाराभ्युदय-कारीति सिद्धान्तितम् ।।

यत्तु ब्रह्मविष्णुजन्यत्ववत् अन्योन्यजन्यत्ववच्च विष्णोर्ब्रह्मजन्यत्वस्य ईशानजन्यत्वस्य च क्वाप्यश्रवणात् 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इत्याथर्वशिखावाक्यस्यापि 'ध्यायीतेशानम्' इति ध्यानविध्यपेक्षितप्रकाशस्य समर्पकतया अर्थवादभूतस्य 'न ब्रह्मा नेशान' इति सर्गाद्यसमये नारायणसत्वकाले निषिद्धसत्त्वतया विष्णु-शब्दित-नारायणं प्रति ईशान-कारणत्वस्य बाधिततया 'विरोधे गुणवादः स्यात्' इति न्यायेन गुणवादरूपार्थवादत्वेन रुद्ररोदन-वपोत्खननाद्यर्थवादवत् प्रतीयमानार्थप्रामाण्यायोगात् ।।

ननु तथाऽप्युदाहृतवाक्यपर्यालोचनया हिरण्यगर्भ-ईशानयोर्ब्रह्माणं प्रत्यण्डपद्मयोरिव कल्पभेदेनान्योन्यजनकत्वं दुर्निरसनमिति चेन्न । विष्णोरिव ब्रह्मणोऽपि प्रसिद्धशिवजन्यत्वे मानाभावात् । 'यो देवानां प्रथमं पुरस्तात् । विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानम्' (म-ना-उ-१२-१२) इति तैत्तिरीयवाक्ये 'हिरण्यगर्भ'शब्दितब्रह्मणः जन्मप्रतीतावपि शब्दतो रुद्रजन्यत्वाप्रतीतेः ।।

अपरिमिताधिकरणन्यायेन सन्निहितरुद्रजन्यत्वकल्पनप्राकरणिकत्वेन 'नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते' इति रुद्रस्य नारायणात् हिरण्यगर्भोत्पत्त्यनन्तरमुत्पत्ति-प्रतिपादनपरवाक्येन बाधात् 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्' इति श्वेताश्वरवाक्येन हिरण्यगर्भस्य साक्षात् रुद्रजन्यत्वावेदनेऽपि तत्रत्य 'रुद्र'शब्दस्योपक्रमादिना नारायणपरत्वावधारणेन तेनापि वाक्येन हिरण्यगर्भस्य नारायण-जन्यत्वस्यैव सिद्ध्या रुद्रजन्यत्वासिद्धेः । एतच्च प्रतिपादितमस्माभिरधस्तात् ।।

।। इति नारायणअथर्वशिरोपनिषत् विचारः ।।

* * * *

**।। अथ उपनिषदि तत्रतत्र श्रुतशिवादिशब्दानां नारायणपरत्वसमर्थनम् ।।**

एतेनैव **'ब्रह्माधिपतिः ब्रह्मणोधिपतिः ब्रह्मा शिवो मेऽस्तु सदा शिवोम्'** (म-ना-उ-२२-१) इति तैत्तिरीयोपनिषदि सदाशिवस्य ब्रह्माधिपतित्वाऽवेदनात् **'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्'** इति परब्रह्मत्वाऽवेदनाच्च कार्यभूत-रुद्रादन्य एव साम्बःपरशिवः(साम्बसदाशिवः-पा) । अत एव तत्रैव **'अम्बिकापतय उमापतये पशुपतये नमो नमः'**(म-ना-उ-२३-१) इति साम्बत्वावेदनमपीति निरस्तम् ।।

अत्र 'सदाशिव'शब्दस्य सर्वदा शुद्धि-माङ्गल्यादि-गुणयोगेन नारायणपरत्वात् । अत एव 'शाश्वतं शिवमच्युतम्' इति नारायणं प्रस्तुत्य पूर्वत्र तस्य नित्यशिवत्वावेदनं कृतम् । नचैवं सति अम्बिकापतित्व-उमापतित्व-पशुपतित्वप्रसिद्धिबाधः स्यादिति वाच्यम् । 'न तस्येश कश्चन तस्य नाम महद्यशः' इति 'पतिं विश्वस्यात्मेश्वरम्' इति पूर्वत्र सर्वेश्वरत्वेन सर्वपतित्वेनावेदितस्य सर्वान्तर्गताम्बिकापतित्वाद्यावेदनाविरोधात् । अम्बिकापतित्वादीनां लिङ्गतया 'विश्वं नारायणं देवमक्षरं परमं पदम्'(म-ना-उ-१३-१)[१] 'विश्वं नारायणं' 'हरिं शाश्वतं शिवमच्युतम्' इत्यादि अनन्यसाधारणाभ्यासरूपनारायणाभिधानश्रुत्या अयम् 'अन्तःसमुद्रे कवयो वयन्ति' इति प्राक्प्रतिपादितसमुद्रान्तःस्थत्वप्रसिद्धरूपलिङ्गप्रतिपादकेन 'समुद्रेऽन्तर्विश्वशम्भुवम्' इति पुनर्वचनेन साक्षितया 'उत्तमपुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति स्मृतिपर्यालोचनया उत्तरत्र श्रुतावुदाहृतत्वलाभवता 'तस्याः शिखायाः मध्ये परमात्मा व्यवस्थितः' (म-ना-उ-१३-१२) इति 'परमात्म'शब्देन च सहितया तेषां बाधाच्च ।।

'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' इति, विश्वस्यआत्मानम्= अन्तर्यामिणम्, पूर्वत्र नारायणस्य सर्वान्तर्यामित्वावेदनात् 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्' इति 'विरूपाक्ष'परब्रह्मत्वावेदनस्य तदन्तर्याम्यभिप्रायत्वेन नेतव्यतया तद्विरोधशङ्कायाऽप्यप्रसराच्च । नहि विरूपाक्षस्य विश्वशब्दार्थेऽन्तर्भावाङ्गीकारेऽत्र किमपि बाधकमस्ति । अन्यथा 'विरूपाक्ष'शब्दार्थस्यैव पराभिमतस्य 'ऋतं सत्यं परं ब्रह्म' इत्यनेन परब्रह्मत्वप्रतिपादनं 'नारयणः परं ब्रह्म तत्वं नारायणः परः' इति नारायणस्य परब्रह्मत्व-

(१) 'देवमक्षरं प्रभुं विभुम्' इति ताळपत्रस्थ पाठः ।।

परतत्वरूपत्वप्रतिपादकासञ्जातविरोधिपूर्वस्यैकवाक्यता विघटकं स्यात् । नहि पूर्वोत्तर-वाक्ययोः परस्परविरुद्धार्थपरत्वे एकवाक्यता सम्भाविनी । नच 'नारायणं परं ब्रह्म' इत्यत्र पञ्चमीतत्पुरुषाश्रयेणोक्तदोषप्रसर इति वाच्यम् । तस्य 'नारायणः परं ब्रह्म' इति श्रुत्यन्तराननुसारित्वात् । पञ्चमीतत्पुरुषस्य कर्मधारयापेक्षया विभक्त्यर्थलक्षणादोषग्रस्ततया जघन्यत्वेन कर्मधारयस्य चा ाथात्वेन तदाश्रयणस्यैव न्याय्यत्वात् । अन्यथा 'निषाधस्थ-पत्यधिकरण'(जै-सू-६-१-५१)विरोधात्[१] । अत एव 'नारायणं महाज्ञेयम्' इति ज्ञेयेषु नारायणस्य महाज्ञेयत्वोक्तिः ॥

अपि च पराभिमतविरूपाक्षस्य परब्रह्मत्वे पूर्वत्र 'यमन्तः समुद्रे कवयो वयन्ति' इति योगवृत्तिप्रार्थित'नारायण'शब्दार्थं, समुद्रान्तस्थत्वं, योगरूढिभ्यां नारायणशब्दमुख्यार्थे पराभिमत'शिव'शब्दार्थादन्यस्मिन् एव चेतनविशेषे प्रसिद्धं धर्ममुक्त्वा तद्धर्मविशिष्टत्वस्यैव 'तदेव ब्रह्म परमं कवीनामाहुः' इति ज्ञानिनां मते परब्रह्मत्वावेदनविरोधः ॥

ननु तथाऽपि नचानेनेष्टसिद्धिः ।

**'अम्भस्य पारे ।ुवनस्य मध्ये नाकस्य पृष्टे महतो महीयान् ।**
**शुक्रेण ज्योतींषि समनु प्रविष्टः प्रजापतिश्चरतिगर्भेऽन्तः'**

इत्युपक्रमे प्रजापतिश्रुतेः सत्वात्, योगरूढिभ्यां 'प्रजापति'शब्दमुख्यार्थस्य हिरण्यगर्भस्यैव परमोपक्रमानुरोधेन कृत्स्न-उपनिंषत्प्रतिपाद्यत्वापातादिति चेन्न । शिव-परब्रह्मत्वमङ्गीकुर्वतापि एतच्छङ्कासमाधानस्य कर्तव्यत्वात् अस्माभिरेतत् शङ्का(शूकस्य-पा)समाधानस्य परतत्त्वप्रका-शिकायामेव करणाच्च ॥

'न ब्रह्मा नेशान' इति निषिद्धसत्वस्य 'नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते' इतिश्रुत्यवगतजन्मनश्च योगरूढिभ्यां 'प्रजापति'शब्दमुख्यार्थस्य हिरण्यगर्भस्य पराभिमतशिवात् कार्यकोटिनिविष्टतया 'यतो वा इमानि भूतानि जायन्ते' 'जन्माद्यस्य यतः' (ब्र-सू-१-१-२) इति श्रुति-सूत्राभ्याम् उक्तकृत्स्नजगत्कारणत्वरूपपरत्व-ब्रह्मलक्षण-वत्वासम्भवेन तद्गतः, एवं च 'कवि'शब्दितज्ञानिनां मते परब्रह्मत्वेन तद्घटनाय अस्य

(१) निषेधस्थे पत्यधिकरणविरोधात् इति ताळपत्रस्थ पाठः ॥

'प्रजापति'शब्दस्य परेणाऽपि रूढिं त्यक्त्वा प्रजानां पतिरिति योगार्थमात्रपरताया अङ्गीकार्यत्वाच्च । विस्तृतं चैतदन्यत्र ॥

तस्मात् 'ब्रह्माधिपतिर्ब्रह्मणोधिपतिः' इति, 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम्' इति श्रुतिभ्यां न नारायणातिरिक्त(१)परशिवापरनामकपरब्रह्मसिद्धिरिति । अपि च 'ब्रह्माधिपतिः' इति वाक्यं विष्णुपरमेव वाच्यम् । 'ब्रह्मा शिवो मेऽस्तु सदाशिवोम्' इति 'ओङ्कार'समभिव्याहारात् ओङ्कारस्य च पालनापरपर्यायरक्षणार्थत्वात् पालनत्वस्य विष्णुसाधारणधर्मत्वप्रसिद्धेः । तथाच पाणिनिस्मृति-पुराणादिसूत्रेषु-'अवतेष्टिलोपश्च' इति । यद्यप्यवते रक्षणवदन्येऽप्यर्थाः सन्ति । तथाऽपि 'उमा'शब्दस्य धान्यविशेषार्थत्वेऽपि प्रचुरव्यवहारात् ततो पार्वत्या इव, अवतेर्गत्या अन्यार्थवाचित्वेऽपि प्रचुरव्यवहारात् ततो झडिति रक्षणमेव प्रतीतं भवतीति(२) न किञ्चिदनुपपन्नम् । अत्र च वाक्ये प्रथम'ब्रह्म'शब्दो जीववाची, तत्परः द्वितीयो वेद परः, 'तेने ब्रह्म हृदा य आदिकवये'(भा-१-१-१) इत्यादौ 'स्रवत्यनोङ्कृतं ब्रह्म'(३) इत्यादिश्रुतौ च तस्य वेदे प्रयोगात्, तृतीयश्च गुणपूर्तिपरः, 'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तोऽह्यस्मिन् गुणाः' इतिश्रुतेः । अशिव इति पदविभागः । तस्य समन्तात् मङ्गलकर इत्यर्थः । एवं 'सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु'(म-ना-उ-२५-१) 'पुरुषो वै रुद्रः' इत्यादिवाक्यं 'विश्वं भूतं चित्रं बहुधा जातं जायमानं च यत्' (म-ना-उ-२५-२) इति पूर्ववाक्येन सहितं रुद्रसर्वात्मकत्वप्रतिपादकमपि पूर्वोत्तरवाक्याविरोधाय नारायणपरमेवास्थेयमिति दिक् ॥

एतेन–

'तस्याः शिखायाः मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स ईशान'(म-उ-१-१) इति
'स ब्रह्म स शिवः स हरिः सेऽन्द्रः सोऽक्षरः परमः स्वराट्' इति,

---

(१) क्वचित् 'श्रुतिभ्यां इत्यनन्तरं ...नारायणपरशिव' इति पाठान्तरं दृश्यते ॥
(२) रूढिरक्षणमेव प्रतीयत...भवतीति इति क्वचित् पाठः ॥
(३) सप्तदशाध्यायगीतातात्पर्योदाहृतश्रुतिवाक्यम् ॥

'स ब्रह्मा स शिवः सेऽन्द्रः सोऽक्षरः परमः स्वराट्' इति,

'स एव विष्णुः सः प्राणः स कालोऽग्निः स चन्द्रमाः' इति च,

तत्र तत्र विष्णोरीशानाद्यभेदप्रतिपादनात् तेषां च त्वया जीवत्वाङ्गीकारात् जीवब्रह्माभेदो न अप्रमाणिक इति निरस्तम् । एतच्छ्रुतीनामपि तत्तत्पदमुख्यार्थाभेदे प्रमाणत्वस्य परेणाप्यनभ्युपगमात्, तत्तद्युपाध्युपहितानामेव तत्तत्पदमुख्यार्थत्वात्,

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम् ।
ऊर्ध्व रेतं विरूपाक्षं विश्वरूपाय वै नमो नमः'

इत्यादि श्रुत्योपहितचैतन्यस्यैव सत्यत्वप्रतीतेः । तस्योपाधिसत्यत्वं विना निर्वाहा-योगात्, भिन्नभिन्नोपाध्युपहितचैतन्यानां च भेदावश्यम्भावात्, 'सिंहो माणवकः' 'यजमानः प्रस्तरः' इत्यादाविवोदाहृतवाक्येषु ब्रह्मेशानादिगुणयोगेनाऽपि 'स ब्रह्मा स ईशानः' इत्यादि-सामानाधिकरण्यनिर्देशोपपत्त्याऽवश्यं तदभेदप्रमाणत्वानुपपत्तेश्च । 'दधि त्रपुसं प्रत्यक्षो ज्वरः' 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादाविव जनकेऽपि जन्यवाचिपदप्रयोगोपपत्तेश्च । 'यो देवानां नामधा एक एव' इत्यादि श्रुत्या–

'स्थित्यादयो हरिविरिश्च हरेति संज्ञाः परः पुरुष एक इहास्य धत्ते।'

'सृष्टिस्थित्यन्तरकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः'

इत्यादि स्मृत्या च एकस्यैव परब्रह्मणः सकलदेवानां मुख्यार्थत्वस्य सृष्टिकर्तृत्व-संहार-कर्तृत्वरूप-प्रवृत्तिनिमित्तान्यादाय हरि-विरिश्च-हरपर्यायभूत-सर्वशब्दवाच्यत्वस्य चावेदनेन श्रौतसामानाधिकरण्यनिर्देशोपपत्तेश्च । नच देवानामपि तत्तन्नामधारिणां विद्यमानत्वेन 'नामधा एक एव' इति श्रुतावधारणानुपपत्तिः । अवधारणस्य परब्रह्मेतर देवानां मुख्यार्थ-त्वस्य व्यतिरेकावेदकत्वेनोपात्तत्वात् (उपपन्नत्वात्-पा)। नच तेषां तदभेदादेवावधारणोप-पत्तिरस्त्विति वाच्यम् ।, तत्तद्देवानां तत्तदुपाध्युपहितत्वेनानुपहितचैतन्यरूप परब्रह्मतो भेदस्य परेणोपगात् । नच तादृशचैतन्यस्य वाच्यत्वे एव मानाभावात्, तद्विशेषभूत-

तत्तद्देवानाम् अवाच्यत्वमसम्भवीति वाच्यम् । 'क्षरं प्रधानममृताक्षरं हरम्' (श्वे-उ-१-१०) इत्युपक्रम्य –

**'सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।**
**आत्मविद्या तपो मूलं तद्ब्रह्मोपनिषत् पदम्'**(श्वे-उ-१-१६)

इति श्वेताश्वतरवचनात्, 'शिवरूपमस्मि' इत्युपक्रम्य 'वेदैश्च सर्वैरहमेव वेद्यः' इति कैवल्योपनिषद्वचनात्, 'सर्वे वेदाः यत्पदमामनन्ति' इति काठकवचनात्, 'तत्त्वौपनिषदं पुरुषं पृच्छामि' इत्यारण्यकवचनात्, 'सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव' इति च बहुवचनात्, 'ब्रह्मैव वाचः परमं व्योम' इति याजुषवचनात्, 'तासां सर्व वचसां प्रतिष्ठा यत्र शाश्वती' 'वचसां वाच्यमुत्तमम्' इत्यादेश्च परब्रह्मणोऽपि वाच्यत्वसिद्धेः ॥

नच –

**'यद्वाचानभ्युदितम्'**

**'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः ।**
**न विद्म न विजानीम'**(के-उ-१-३)

इति तलवकारोक्तेः, 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' **'अवचनेनैव प्रोवाच'** **'न शब्द गोचरो यस्य योगि ध्येयं परं पदम्'** इत्यादेश्च वाच्यत्वनिषेधप्रतीतेस्तेषां वाक्यानां वाक्यार्थपरत्वमेव नतु शब्दवाच्यत्वपरत्वमिति वाच्यम् ।

**'एतमेव ब्रह्मेत्याचक्षते'**

**'इन्द्रं मित्रं वरुणमग्निमाहुः'**

**'अथ कस्मादुच्यते ब्रह्मेति तस्मादुच्यते परं ब्रह्मेति'**

**'तदेवर्तं तदु सत्यमाहुः तदेव ब्रह्म परमं कवीनाम्'**

इत्यादिश्रुतिभिः कण्ठरवेणैव तस्य वाच्यत्वप्रतिपादनात् । नचोक्तनिषेधानुपपत्तिः । 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुत्या प्रपञ्चस्येव 'यद्वाचानभ्युदितम्' (के-उ-१-५) इत्यादि श्रुत्याऽपि वाच्यत्वस्य निषेधबलेन मिथ्यात्वेऽपि स्वरूपतो सत्वालाभात् ॥ एतेन –

'तमेकं परमात्मानमादिकर्तारमीश्वरम् ।
ईयुर्बहुविधं त्वज्ञा इन्द्रं मित्रमिति श्रुतेः'

इति सौरपुराणवचनं निरस्तम् । 'इन्द्रं मित्रम्' इत्यादिश्रुत्याऽपि परब्रह्मणः इन्द्र-मित्रादि-शब्दवाच्यत्वस्यैव आवेदनेन तस्य तदभेदानावेदनात् । अन्यथा 'बहुः'(१)इत्यस्य वैयर्थ्यात् । 'ईयुर्बहुविधं त्वज्ञा' इति सौरवचनस्योदाहृतश्रुत्यविरोधाय 'अइति'(२) श्रुतेः, अज्ञाः= ब्रह्मज्ञानिनः परमात्मानं, बहुविधं= बहुप्रवृत्तिनिमित्तभूतधर्मयुक्तम्, 'इन्द्रं मित्रम्' इति श्रुतेः, अर्क-इन्द्रादि-शब्दानां मुख्यमाहुः' इत्यर्थात् । अन्यथा तत्र पूर्वार्धे 'आदिकर्तारमीश्वरम्' इति आदिकर्तृत्वादिरूपविधोक्तिविरोधः । तत्तत्प्रवृत्तिनिमित्तकृत-विशेषाभावे 'सर्वं ह्येतत् ब्रह्म' इति सामान्यैक्ये च सर्वात्मकत्वसिद्धेः । 'इन्द्रं मित्रम्' इत्यादि शब्दविशेषणतत्तदात्मकत्वप्रतिपादनवैयर्थ्यं च ॥

नच 'अश्वत्थः सर्व वृक्षाणाम्'(भ-गी-१०-२६) इत्यादिवत् तदवैयर्थ्यम् । तस्याऽपि विशेषविवक्षयैव प्रवृत्त्युपगमात् । अन्यथा न्यायतौल्येन तत्रापि तथा प्रतिपादनस्य व्यर्थत्वे-नादृष्टान्तत्वात् ॥

एतेनैव –

'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः'(म-ना-उ-१०-७)

इति प्रणवतात्पर्यविषयत्वेन महेश्वरमुक्त्वा,

'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम्'

इति तस्य नारायणनामोक्तिः (नारायणाभेदोक्तिः-पा),'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' इति नारायणे उक्तस्य महाज्ञेयत्वस्य महेश्वरेऽपि 'ओङ्कारो वेद पर ईशः शिव एको ध्येयः

(१) आहुः इति क्वचित् पाठः ॥

(२) अ इति ब्रह्म इति ऐतरेयश्रुतेः इत्यर्थः ॥

शिवङ्करः सर्वमन्यत्परित्यज्येति श्रवणं सर्वम् अन्यत् परित्यज्य शिव एकः शिवङ्करः ध्येय' (अ-शिख-उ-२) 'इत्याह परमाश्रुतिराथर्वणे खल्विति' स्मृतिश्च,

'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमोऽस्तु'

इति सर्वात्मकत्वस्य च श्रवणात्[१] तयोर्भेदेऽनुपपन्नमेव स्यादिति परास्तम् ।।

महेश्वर-नारायणशब्दयोरभिन्नार्थत्वस्योक्तरीत्या मयाप्यङ्गीकारात् । 'यमन्तः समुद्रे कवयो वयन्ति' इति समुद्रशायित्वलिङ्गेन नारायणमुपक्रम्य 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इत्यवधारणात्, 'नारायणः परं ब्रह्म तत्वं नारायणः परः' इति श्रुत्यन्तराच्च, नारायण एव परं ब्रह्मेत्यवधारणात्, हिरण्यगर्भ-पराभिमतमहेश्वरयोः 'न ब्रह्मा नेशान' इति कार्यत्वेनावगतयोस्तादृशपरब्रह्मभूतनारायणभेदायोगादुक्तरीत्यैव प्रतीयमान-तदभेदस्यैव वर्णनीयत्वाच्च ।।

एतेनैव कैवल्योपनिषदि –

'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूत योनिं समस्त साक्षिं तमसः परस्तात् ।।

स ब्रह्मा स शिवः सेऽन्द्रः सोऽक्षरः परम स्वराट् ।
स एव विष्णुः सः प्राणः स कालोऽग्निस्सचन्द्रमाः' (के-उ-१-७,८)

इति उमासहायस्य 'स एव विष्णुः' इति विष्ण्वभेदमुक्त्वा मध्ये सर्वात्मकत्वं चोक्त्वा 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विमुक्तये' इति तज्ज्ञानस्यैव मोक्षसाधनत्वप्रतिपादनात्, 'इन्द्रं मित्रं वरुणमग्निमाहुः' 'सर्वं च मामेव यो वेद स सर्वान् देवान् वेद' इतिश्रुत्यन्तरेऽपि इन्द्राद्यभेदमुक्त्वा स्वज्ञानस्यैव सर्वदेवज्ञानत्वावेदनात्तस्य च तदभेदं विना अयोगात्,

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः' (म-ना-उ-१२-१)

---

(१) श्रवणं इति कचित् पाठः ।।

इति विरूपाक्षाभिधानश्रुतिप्रसिद्धस्य परब्रह्मत्वोक्तेः ।'विश्वाधिको रुद्रो महर्षिः' इति रुद्रस्य तस्यैव विश्वाधिकत्वप्रतिपादनात् हरि-हरयोरभेदस्वीकार आवश्यकः ।। एवं च –

'यो रुद्रः सः स्वयं विष्णुर्यो विष्णुः स महेश्वरः ।
इति मत्वा भजेद्देवं स याति परमां गतिम्'

इति स्मृतिश्चानुकूलिता भवति । ततश्च तत्सर्वात्मानुभवादद्वैतं तत्त्वं तद्बाधाच्च द्वैतांशे तज्ज्ञानमनुवाद इति सिद्ध्यति । तथा च प्रागुक्तजीवेश्वरभेदविषयकानुमानानामुदाहृत-श्रुतिभिर्बाधितविषयत्वमिति निरस्तम्, दत्तोरत्वात् । अस्य कैवल्योपनिषद्वाक्यस्यापिनारा-यणसर्वात्मकत्व-सर्वान्तर्यामित्व-प्रतिपादनपरसुबालोपनिषदनुरोधेन 'उमासहाया'दिशब्दित-पराभिमतशिवान्तर्यामिप्रतिपादनपरत्वेनोपपत्तेश्च । महाभारते–

'नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा'(१)

इति रुद्रेण स्वनाम्नां गोविन्दनामत्वाभिधानेन उमासहायादिशिवनाम्नां नारायणपरत्वेन कैवल्योपनिषदः उमासहायत्वादिविशिष्ट-नारायणमात्रपरत्वोपपत्तेश्च ।।

'तान्येव मम नामानि'(२)इत्यवधारणेन स्वस्य गोविन्दनामव्यतिरिक्तनामाभावज्ञापनेन तेषां नाम्नां गोविन्दे एव साक्षात्सम्बन्धत्वलाभेन मुख्यत्वावगतेश्च । विस्तृतं चैत-दन्यत्र (३)।।

।। इति उपनिषदि तत्रतत्र श्रुतशिवादिशब्दानां नारायणपरत्वसमर्थनम् ।।

* * *

(१) हरि-वं-भ-प-८८-६१

(२) 'तस्यैव मम नामानि' इति ताळपत्रस्थपाठः ।।

(३) तुरीयशिवखण्डने 'हे गोविन्द लोके यानि तव नामानि रूढ्या प्रवर्तमानाः शब्दाः महान्ति च नामानि योगरूढिभ्यामभिधायकाः शब्दाः तान्येव मम नामानि सन्ति नतु स्वातन्त्र्येण नामानिसन्ति ...इत्यादिना' त्रयोदशविभागे शिवपरत्वाक्षेपखण्डनभागे विस्तृतमित्यर्थः ।।

## ।। अथ 'यस्मात्परं नापरमस्ति किञ्चित्' इति श्रुत्यर्थविचारः ।।

यत्तु द्वैत वादो 'यस्मात्परं नापरमस्ति किञ्चित्' (श्वे-उ-३-९) इति परापरवस्तुमात्र-निषेधश्रवणात् तद्विरुद्धः । नच 'अपरमस्ति किञ्चित्' इति वाक्यान्तरं भेदसाधकम् । भेदस्य प्रत्यक्षादिसत्वेन (सिद्धत्वेन-पा) अनुवादत्वप्रसरात् । नच प्रत्यक्षानधिगतो पूर्वो भेदः श्रुत्यर्थ इति वाच्यम् । तस्याऽपि स्वतः प्रामाणभूतप्रत्यक्षत एव सिद्धेः । प्रयोजनाभावेन श्रुत्या तादृशत्रिकालाबाध्यत्वप्रतिपादनाङ्गीकारायोगाच्चेति (बाध्यवदप्रतिपादनाङ्गीकारायोगाच्चेति-पा) । तन्न । श्रुत्या तादृशभेदप्रतिपादनस्य दार्ढ्यार्थत्वात् । 'द्विर्बद्धं सुबद्धं भवति' इति न्यायात् । 'नेह नानाऽस्ति किञ्चन' इति भेदनिषेधस्य(१) अप्रसक्तप्रतिषेधत्वपरिहाराय वेदैकसमधिगम्ये, पराभिमतचैतन्ये, प्रत्यक्षेण भेदस्य प्राप्तेः, श्रुत्यैव प्राप्तेर्वक्तव्यत्वाच्च । 'यस्मात् परं न' इति परमात्मनः सकाशादुत्कृष्टं वस्तुप्रतिषिद्धच ततो परमपकृष्टं वस्त्वस्ति इति योग्यायोग्यप्रपञ्चमात्रे, तस्य सत्वविधानार्थत्वेन च नानुवादत्वाच्च । अन्यथा 'यस्मान्नाणीयो न ज्यायोऽस्ति'(श्वे-उ-३-९) इत्यत्रेव 'यस्मात् परं न अपरं नास्ति' इति 'न'कार-द्वयश्रवणप्रसङ्गः । नच 'अपरमस्ति' इत्यत्र नञनुषङ्गे मानमस्ति । अन्यथा 'यस्मात् किञ्चिन्नास्ति' इत्येतावतैव पराभिप्रेतार्थसिद्धेः, तत्र श्रुतावितरभागवैयर्थ्यात् । नच अपरम्= किञ्चिदल्पम् अस्ति इति पृथक् वाक्यार्थाङ्गीकारे 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इत्युत्तरवाक्यविरोधः । नचेश्वरो जीवादप्यणीयान् इति नाणीय इत्यस्यार्थ इति युक्तम्, जीवादपि अणीयसोऽस्मात् किञ्चिदल्पं सम्भवतीत्यस्य 'यस्मान्नाणीयः' इति शब्दार्थ-पर्यालोचनया निरासप्रतीतेरिति वाच्यम् । 'नाणीयः' इत्यनेन जीवादपि न्यूनपरि-माणत्वावेदनेनाविरोधोपपत्तेः । नहि 'यस्मान्नाणीयः' इत्यनेन 'ईश्वरादन्यदल्पं नास्तीति' निषिध्यते, 'येनापरं किञ्चिदल्पमस्ति' इत्यनेनास्य विरोधः शङ्केत ।।

।। इति 'यस्मात्परं नापरमस्ति किञ्चित्' इति श्रुत्यर्थविचारः ।।

* * *

---

(१) इत्यभेदनिषेधस्येति पाठः स्यात् ।।

## ।। अथ अणोरणीयान् अहमेव तद्वत् इति श्रुत्यर्थविचारः ।।

अत एव –

'अणोरणीयान् महतो महीयान् आत्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुं पश्यतिवीतशोकः धातुःप्रसादान्महिमानमीशम्'

इत्येवं जातीयकं जीवहृदयगुहानिहितत्वाऽवेदकमीश्वरस्योपपद्यते ।।

यत्तु 'अणोरणीयान्' इति वाक्येन नेश्वरस्याणोरणीयत्वमुच्यते । अपि तु 'महतो महीयानात्मास्य जन्तोर्गुहायाम् 'अणोरणीयान्' जीवभावेन स्थितः ।'तमीश्वरं धातुः प्रसादान्महिमानं महान्तं पश्यति' इत्येवोच्यते । अन्यथा 'अणोरणीयानहमेव तद्वत्' इति जीवस्याणोरणीयस्त्वाऽवेदकश्रुतिविरोध इति । तन्न । 'अणोरणीयानहमेव तद्वत्' इति श्रुत्या जीवेश्वरयोः 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वरूप'सादृश्यस्यैव प्रतीतेस्तदविरोधाय 'अणोरणीयान्' इति वाक्यस्यार्थपरत्वायोगात् । 'अहमेव तद्वद्' इत्यहमर्थस्य मध्यमपरिमाणत्वेन तत्र 'अणीयान्' इत्यणीयस्त्वविधानानुपपत्तिरवधारणानुपपत्तिश्च ।।

नच 'अहम्'शब्दस्य अहङ्कारोपहितचैतन्यार्थकत्वात् नोक्तदोष इति वाच्यम् । तथासति उपहितचैतन्यस्यानुपहितचैतन्यरूपेश्वरात् भिन्नत्वेन तद्हृदयगुहायां जीवाभावेनेश्वरस्य निवेशानुपपत्तेः। तथाऽपि 'अणोरणीयान्' इत्यस्योक्तार्थपरत्वायोग एवेति ।।

किञ्च 'अणोरणीयानहमेव तद्वत्' इति श्रुतौ 'अहं'शब्दो न जीवपरः, किन्तु ईश्वरपर एव 'सोऽहं नामाभवत् । तस्योपनिषदहम्' इति, 'हन्ति पाप्मानं महान्ति च । य एवं वेद' इति श्रुतिभ्याम् ।। एतेनेश्वरस्याणीयस्त्वाङ्गीकारोऽनन्तश्रुतिविरुद्धः । अत एव अथर्वशिरसि 'अथ कस्मादुच्यतेऽनन्त यस्मादुच्चार्यमाण एवाद्यन्तं नोपलभते तिर्यगूर्ध्वमधस्तात् तस्मादुच्यतेऽनन्त'(१) (अ-शि-उ-१-४) इति श्रूयत इति निरस्तम् ।।

'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो'

---

(१) अथ कस्मादुच्यतेऽनन्तो यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तोनोपलभ्यते । तस्मादुच्यतेऽनन्तः इति इदानीन्तनपाठः ।।

'य आत्मनि तिष्ठन् आत्मनोऽन्तरः'
'य आत्मा सर्वान्तरः'

इतिश्रुतिभिस्तस्य सर्वान्तरत्वस्यापि विधानात् । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'आकाशवत्सर्वगतश्च नित्यः' इत्यादिश्रुत्या सर्वगतत्वेन प्रतिपन्नस्य ईश्वरस्य न सर्वान्तरत्वेऽनुपपत्तिरिति चेन्न । श्रुतित्वाविशेषेण(श्रुतत्वाविशेषण-पा) अनन्तत्ववत्-सर्वगत-त्ववत् सर्वान्तरत्ववच्च ईश्वरस्याणीयस्त्वस्यापि दुर्वारत्वात् । अन्यथा विनिगमकाभावेन महतो[१] महीयस्त्वस्यापि त्यागप्रसङ्गात् ॥

किञ्च जीवभावेन प्रवेशे 'य आत्मनि तिष्ठन्' इति जीवेश्वरयोः आधार-आधेयभाव-वेदनविरोधः । आधार-आधेयभावस्य भेदाविनाभावस्यौत्सर्गिकत्वात् । नहि जीवेश्वरयोर्भेदे बाधकं पश्यामः । अन्यथा= भेदं विनैव आधार-आधेयभाववत्वं विनैव, जीवेश्वरभावादि-सम्भवादौपाधिकभेदस्याप्यनङ्गीकारप्रसङ्गः । नच 'स्वे महिम्नि प्रतिष्ठितः' इत्यादौ तादृश-भेदं विनाऽपि आधार-आधेयभावो दृश्यत इति वाच्यम् । वृक्षतन्मूलयोरिवेश्वरतन्महिम्नो-रप्यौपाधिकभेदस्य त्वयेषितव्यत्वात् । अन्यथा वृक्षतन्मूलयोरपि तदनभ्युपगमप्रसङ्गः । अत एव –

'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते'(ई-उ-६)

'सर्वेषु भूतेष्वेतम्'
'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'

इत्यादौ परमेश्वरस्य भूताद्यर्थानां च आधार-आधेयभावप्रतिपादनं, ततः –

'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः । (भ-गी-४-३४)
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि च पाण्डव ॥
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' (भ-गी-४-३५)

(१) महीयस्तस्यापि इति ताळपत्रस्थ पाठः ॥

इत्यादौ आधार-आधेयभावप्रतिपादनम् । नचैषाधारत्वे 'सप्तमीपरदारेषु मातरं पश्येत्' इत्यादिलौकिकवाक्य इव लोकेषु 'पञ्चविधं सामोपासीत' (छां-उ-२-३-१) इति वेद इव चेति नच वाच्यम् । 'यस्तु सर्वाणि भूतानि आत्मन्येव' इत्यादौ आधारसप्तमीत्वे बाधकाभावात् । अन्यथा 'भूतले घटं पश्यतीति' 'घटे रूपं पश्यति' इत्यादावप्याधारसप्तमी न स्यात् । नचैवम् । भूतलाद्याश्रितघटाद्यसिद्धिप्रसङ्गात् । तस्मादुक्तानुमानैर्जीवेश्वरादीनां परस्परपारमार्थिकभेदसिद्धिर्दुर्निवारा ॥

**॥ इति अणोरणीयान् अहमेव तद्वत् इति श्रुत्यर्थविचारः ॥**

**॥ इत्यनुमानेन जीवेश्वरादीनां परस्परपारमार्थिकभेदसिद्धिकथनम् ॥**

किञ्च 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्'(म-ना-उ-१२-१३) इति द्वितीयस्येश्वरेण पूरणीयत्वप्रतीतेस्तस्य सत्यत्वमावश्यकमिति, द्वितीयप्रपञ्चस्येश्वराद्धर्मिसमसत्ताको भेदो दुर्वारः । नच मायिकस्यापि द्वितीयस्य पुरुषेण पूरणीयत्वं श्रुतिरावेदयतीति वाच्यम् । 'मायिक'शब्देन प्रकृतकार्याभिधाने इष्टापादनात् । मिथ्याकार्याभिधानस्य 'मे माता वन्ध्येति'वत् शब्दाभिलापमात्रत्वापत्तेः । नहि स्वरूपेण त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वेन स्वीकृतस्य कार्यत्वमभ्युपगमार्हम् । तथासति नृशृङ्गादेरपि तदभ्युपगमप्रसङ्गोऽविशेषात् । नहि नृशृङ्गादेः प्रागभाव-प्रतियोगित्वादिरूपं कार्यत्वं प्रामाणिकम् । नच 'न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव' इति तापनीयवचनात्, 'मायामात्रमिदं द्वैतम्' इति माण्डूकोपनिषद्वचनात्,

'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।
इत्याह हि परा साध्वी श्रुतिः सत्यार्थवादिनी'

इति स्मृतेश्च, द्वितीयस्य मायिकत्वं दुर्वारमिति वाच्यम् । 'मायिकत्व'शब्देन प्रकृतिकार्यत्वोक्तादिष्टापादनात् मिथ्याकार्यत्वोक्तेश्च । 'मिथ्या'शब्दार्थस्य पराभिमतस्य नृशृङ्गादिवदत्यन्तासद्रूपत्वे एव पर्यवसानेन तत्र कार्यत्वासम्भवस्योक्तत्वात् । 'माया चाविद्याच स्वयमेव भवति'(नृ-उ-ता-उ-९) इति श्रुत्या माया-अविद्याशब्दयोरेकार्थत्वप्रतीतेः । 'विद्यां चाविद्यां च'(ई-उ-११) इत्यादाविव 'विद्या'शब्दस्य कर्मार्थत्वदर्शनात्, 'मायिकत्व'शब्देन

कर्मजन्यत्वाभिधानेनापीष्टापत्तिरेव । नहि वियदादिद्वितीयप्रपञ्चोऽस्माभिर्नकर्मजन्य इत्युपेयते । 'तान् यज्ञस्य मायया सर्वानव यजामहे' इत्यादाविव 'माया'शब्दस्य सामर्थ्यार्थकत्वेपीष्टापत्तिरेव । द्वितीयप्रपञ्चस्यास्माभिरीश्वरसामर्थ्यकृतत्वाङ्गीकारात् ॥

यद्यपि लोके 'माया तत्र न कर्तव्या' 'माययैव निर्मिता' इत्यादौ 'माया'शब्दस्य वञ्चनादौ मणिमन्त्रादावपि प्रयोगो दृष्टः । तथाऽपि न 'माया'शब्दः उदाहृतश्रुतिषु तदर्थकः सम्भवति इति न तदुद्भाव्यदूषितमिति दिक् ॥

**॥ अथ जगतः सत्यत्वसमर्थनम् ॥**

किञ्च द्वितीयस्य जगतो मिथ्यात्वे सत्येन प्रतीत्यनुपपत्तिः । नच 'इदं रजतम्' इति भ्रमवदधिष्ठानब्रह्मसत्तामादाय सत्वेन प्रतीतिरुपपन्ना । नहि शुक्तिरूप्येऽधिष्ठानश्रुतिगतेदन्त्वातिरिक्तमिदं च अस्तीति वाच्यम् । 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' (श्वे-उ-४-२०) 'नैनं चक्षुषागृह्यते नैव(नापि) वाचा नान्यैर्देवैस्तपसा कर्मणा वा' इति देवैरिन्द्रियैश्चक्षुरादिभिरगम्यत्वावेदनविरोधात् । नच जीवचैतन्यरूपैव सत्ता 'घटः सन् पटः सन्' इत्याद्याकारेण मनसा विकल्प्यत इति वाच्यम् । ब्रह्मण एव सर्वाधिष्ठानत्वेन जीवसत्ताया जगदनधिष्ठानत्वात् ॥

ननु जीवस्याप्यननुगतसत्ताकारेणास्त्येव जगदधिष्ठानत्वम् । तथा च श्रुतिः 'सोऽकामयत बहुस्यां प्रजायेयेति । स इदं सर्वमसृजत । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चा भवत्' इत्युपक्रम्य 'सत्यं चानृतं च सत्यमभवत्' (तै-उ-२-१४) इति । सत्यं= जीवभावेनानुप्रविष्टं ब्रह्म सत्यं, व्यावहारिकम्, अनृतं= प्रातिभासिकम्, अभवत्= तत्तादात्म्यापन्नम्, इत्यर्थमिति चेन्न । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इति श्रुतिपर्यालोचनया जीवोपाधेरनादित्वलाभेन, तन्निष्ठेश्वरभेदस्याप्यनादित्वेन 'षडस्माकमनादयः'[१] इति पराभ्युपगमेन जीवेश्वरयोरत्यन्तभेदेनेश्वरस्य जीवभावेनानुप्रवेश इत्यस्यैवायोगात् । 'अणोरणीयानहमेव तद्वत्' इति जीवस्याणोरणीयस्त्वे त्वया श्रुतेरुक्तत्वात् ।

(१) जीव इशो विशुद्धा चित् भेदस्तस्यास्तयोर्द्वयोः । अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥ इति पूर्णवाक्यम् ॥

'बुद्धेर्गुणेनात्मगुणेन चैवमाराग्रमात्रो ह्यपरोऽपि दृष्टः'
'वालाग्रशतभागस्य शतधा कल्पितस्य च'(श्वे-उ-५-९)

इत्यादि श्रुत्या जीवस्याणुपरमाण्वत्वावेदनात्, अणोश्च तस्य घटपटाद्यधिष्ठानत्वस्यैवायोगेन घटादिसत्वप्रतीतेरधिष्ठानजीवसत्ताविषयत्वानुपपत्तेश्च ।।

तस्मात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिजन्यप्रतीतिः यथा नाधिष्ठानसत्त्वविषयिणी तथा 'घटः सन्' इत्यादि सत्वप्रतीतिरपि नाधिष्ठानसत्वविषयिणीत्येव वाच्यम् । अपि च जीवचैतन्याधिष्ठानकत्वेऽपि न 'घटः सन्' इत्यादि सत्वप्रतीतिरुपपद्यते । जीवचैतन्यस्य सत्वे एव मानाभावात् । नहि 'सत्यं ज्ञानमनन्तं ब्रह्म' इति ब्रह्मसत्यत्व इव जीवः सत्य इति श्रुतिरस्ति । नच 'तत्त्वमसि' इति जीवस्य सत्यब्रह्माभेदवेदनात् सत्यत्वमस्तीति वाच्यम् । 'सर्वं ह्येतत् ब्रह्म' इति श्रुत्या जडस्यापि सत्यब्रह्माभेदवेदनात् जीवस्येव वास्तवं सत्यत्वमस्तीति सुवचत्वात् ।।

किञ्च 'तत्सत्यमित्याचक्षते । यदिदं किञ्च'(तै-उ-२-१४) इतिश्रुत्या प्रपञ्चमात्रस्य सत्यत्वेन अनादिवृद्धव्यवहारविषयत्वावेदनात् ब्रह्मवत् सत्यत्वं दुर्निरासम् । नच ''यत् किञ्चन 'इदं सत्यमित्याचक्षते' व्यवहरन्ति नतु सत्यमेवेति तच्छ्रुत्यर्थः । अन्यथा 'सत्य-अनृतयोः' प्रकृतत्वेन तत्रोभयत्र सत्वविधानानुपपत्तिरिति'' वाच्यम् । तथासति 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति' इति ब्रह्मसत्व-असत्वज्ञानयोरेव वेद इति सत्व-असत्वकारणाभिधानात्, अनिर्वचनीयरजतादेरिव ब्रह्मणोऽप्यनिर्वचनीयस्यैव सत्वेन असत्वेन च वेदनसम्भवात्, तत्रापि तच्छ्रुत्या सत्वासिद्धिप्रसङ्गात् ।।

किञ्च 'एतमेव ब्रह्मेत्याचक्षते= परिच्छिन्नत्वेनानुभवसिद्धमात्मानमेव 'ब्रह्मेत्याचक्षते' इत्यर्थप्रतीतेः, तच्छ्रुतितोऽप्यात्मनः वास्तवपूर्णत्वसिद्धिर्न स्यात् । अपि च 'इदं सर्वमसृजत । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इत्यादि वाक्यपर्यालोचनया सत्त्वादिधर्माणां सृष्टवियदादिपदार्थधर्माणामेव सतां वियदादिस्वसृष्टपदार्थानुप्रवेशकृतत्वेन आत्मधर्मत्वलाभवत् स्वसृष्ट'सत्यानृत'पदार्थानुप्रवेशकृतत्वेनैव तद्धर्माभ्यां

सध्यामेव सत्यानृतत्वाभ्यामात्मसत्यत्वानृतत्वे नतु तस्य ते वास्तव इति लाभेन 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तत् सत्यं स आत्मा' इत्यादेरपि सत्यवस्तुप्रवेशकृत सत्यत्वमादायैवात्मनि प्रवृत्तिरिति वक्तुं शक्यत्वेन चानृतत्वस्येव सत्यत्वस्याप्यात्मधर्मत्वाभावप्रसङ्गः ।।

'तदनुप्रविश्य । सच्चाभवत् त्यच्चाभवत् । निरुक्तं चाभवत्, अनिरुक्तं चाभवत्, निलयनं चाभवत्, अनिलयनं चाभवत्, विज्ञानं चाभवत्, अविज्ञानं चाभवत्, सत्यं चाभवत्, अनृतं चाभवत्' अत्र किमेवमभवदित्यपेक्षिते, 'समानकर्तृकयोः पूर्वकाले क्त्वा' (पा-सू-३-४-२१(३३२०) इति स्मरणात्, सृष्ट्यनुप्रवेशक्रियाकर्तुः 'सोऽकामयत' इति 'तत्'शब्दपरामृष्टस्य सदादिरूपेण भवनक्रियाकर्तृत्वं लभ्यते, तस्य सद्रूपेण भवने किं कारणमित्यपेक्षिते आह- 'सत्यं यदिदं किञ्च' इत्यादि । यत्= यस्मात् कारणात्, इदं= जगत्, सत्यम्, किञ्च= अनादिवृद्धास्तज्जगत् सत्यम् इत्याचक्षते, तस्मात् तदनुप्रविश्य सत्यमभवत् इति वाक्यार्थप्रतीतेर्जगत्कर्तुः सत्यजगदनुप्रवेश एव स्तुत्यरूपत्वे कारणमिति पर्यवस्यति ।।

एवं सति द्वितीयप्रपञ्चस्य सत्यत्वेन प्रतीतिरधिष्ठानात्मसत्यत्वमादायैवेति पराङ्गीकार एव तच्छ्रुत्यर्थापरिज्ञानप्रयुक्त एवेति । जगत्सत्यत्वप्रयुक्तमेवात्मनः सत्यत्वमिति वैपरीत्यापत्तिश्चेत्यपि वदन्ति ।। तथा च 'तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यत्र पूरणीयत्वेनाभिमतम्, इदं= सर्वशब्दप्रतिपाद्यं, द्वितीयं, न पररीत्या मायिकमिति स्थितम्।।

## ।। अथ 'वाचारम्भणं नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेः परोक्तार्थनिरसनम् ।।

एतेन[(१)] छान्दोग्ये 'स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यम्' इति, स यः= परमेश्वरो जीवभावेन अणिमा इदं सर्वम्, एतदात्मकं= तदात्मस्वरूपं, सत्यम् इति प्रतीतेः । परमेश्वरस्य सर्वाभेदोऽवश्यमङ्गीकार्यः । कथं जडाजडयोस्तादात्म्यमिति श्रुतेरनुभवाच्चेति का कथन्ता? नहि घटः सन् इति नानुभूयते । युक्तिविरोधस्तु नानिष्टः,तत एव विकारमिथ्यात्वसाधनात् 'वाचारम्भणं विकारो नामधेयम्' इति वाचा व्यवहारः । आरभ्यते यस्मिन् तद् 'वाचारम्भणम्' व्यवहारपदभूतो घटादिविकारः । नामधेयं= प्रसिद्धमात्रं,

(१) एतेन इत्यस्य 'मृदंशे सत्ये सन्देहाभावादिति निरस्तम्' पु.४६२ इत्यनेनान्वयः ।।

प्रसिद्धवाचिनोऽभिधानवाचिनो वा नामशब्दात्, स्वार्थे धेयूप्रत्ययः विकल्पमात्रं नतु विकारो वास्तव इत्यर्थः । नचैवं 'नामधेय'पदे व्यतिरेकलक्षणाप्रसङ्गो दोषः । 'मृत्तिकेत्येव सत्यम्' इत्यवधारणानुरोधेन 'नामधेय'शब्दे तदतिरिक्ताभावलक्षणायास्तन्मिथ्यात्वलक्षणाया वा, न्याय्यत्वात् 'सत्य'पदस्य मिथ्यात्वव्यतिरेके शक्तत्वात् । कथं तर्हि 'एकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं भवति' इत्युक्तमित्यत आह 'मृत्तिकेत्येव सत्यम्' सर्वो विकारः मृत्तिकेत्येवार्थः । 'सत्य'वाक्यार्थपरामर्शार्थत्वात्, 'इति'शब्देन व्यर्थः[(१)] घटादीनां सर्वेषां मृदात्मकत्वात्कस्मिंश्चित् मृण्मये ज्ञाते सर्वानुगतमृदाकारज्ञानात् सर्वमपि ज्ञातं भवत्येवेति न काचिदनुपपत्तिः । नच घटे विज्ञातेऽपि मणिक-मल्लिकादौ[(२)] सन्देहदर्शनात् कथं सर्वं मृण्मयविज्ञानमिति वाच्यम् । एतच्छङ्कासमाधानार्थमेव 'मृत्तिकेत्येव सत्यम्' इत्युक्तेः, मिथ्याभूतविकारसन्देहेऽपि मृदंशे सत्ये सन्देहाभावादिति निरस्तम् ।।

श्रुतेरनुभवाच्च जडाजडयोरभेदे अजडवत् जडस्यापि सत्यतायाः दुर्वारत्वेन 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रः' इति श्रुतिप्रतिपन्न'चित्र'-शब्दितसविशेष-सत्यभूत-विश्वाभिन्नत्वेनाजडस्यापि वास्तवसविशेषताया दुर्वारत्वापत्तेः । 'वाचारम्भणं विकारो नामधेयम्' इति विकारनाम्नोरपि 'स य एषोऽणिमैतदात्म्यं इदं सर्वं तत्सत्यम्' इति जडा-जडयोरिवाभेदाऽवेदनेन नाम व्यतिरेकेण विकारसत्यत्वस्य तन्मि-थ्यात्वस्य वा, अपदार्थत्वादवाक्यार्थत्वाच्च । नहि 'सोऽयं देवदत्तस्तत्त्वमसि' इत्युक्ते देवदत्तादिव्यतिरेकेण इदमाद्यर्थाभावो वा तन्मिथ्यात्वं वा प्रतीयत इत्यस्ति ।।

नच 'मृत्तिकेत्येव सत्यम्' इत्वधारणबलात् 'नामधेय'शब्दस्य तदतिरिक्त-अभाव-लक्षकता वा, तदतिरिक्तमिथ्यात्व लक्षकता वा, युक्ता । 'सत्य'पदस्य मिथ्यात्वव्यतिरेके शक्तत्वात् 'इति'शब्दस्य च वाक्यार्थपरामर्शत्वेन अवैयर्थ्यादिति वाच्यम् । 'इति'शब्दस्य प्रकारार्थत्वेन मृत्तिकाप्रकार-घटत्व-मणिकत्व-मल्लिकत्वादिप्रकार एव सत्यो न मृत्तिकेति वैपरीत्यस्यैव आपातात् । किञ्च 'इति' शब्दस्य अर्थप्रकरणे श्रुतस्य 'गौरित्ययमाहेत्यादाविव'[(३)]

(१) इति शब्दो न व्यर्थ इति पाठः स्यात् ।।

(२) मल्विकादौ इति ताळपत्रस्थ पाठः ।।

(३) व्याकरणमहाभाष्यवाक्यम् ।।

उत्सर्गे सिद्धस्य शब्दपदार्थकत्वस्य व्युत्पत्तिसिद्धस्य बाधकं विना त्यागाऽयोगेन 'मृत्तिका'-शब्द एव सत्यः नतु तदर्थभूतामृत्तिकेति सावधारणतद्वाक्यार्थः(तद्वक्यस्यार्थः-पा) किं न स्यात्? तथाचैवमपि अवधारणोपत्तौ तदनुरोधेन 'नामधेय'शब्दस्य 'मृत्तिका'तिरिक्त-विकारभावलक्षकत्वं वा, तन्मिथ्यात्वलक्षकत्वं वेत्याश्रयणमयुक्तम् । लक्षणां विनैव वाक्यार्थ-घटनायां सम्भवन्त्यां तदाश्रयणस्यानुचितत्वात् ॥

किञ्च मृत्तिकाव्यतिरिक्ततद्विकारस्यैव अभावे मिथ्यात्वे वा, 'एकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं भवति'इत्युक्त्यनुपपत्तिः । नहि विकारस्यैव अभावे मिथ्यात्वे च मृज्ज्ञानेन तद्विकारज्ञानं विधातुं शक्यम् । अत एव 'मृत्तिकेत्येव सत्यम्' इत्यस्य सर्वो मृद्विकारः मृत्तिकेत्येवार्थः= सत्य इत्यर्थ, इति निरस्तम् ।

मृत्तिकेव सत्येत्येतावतैव पराभिमतार्थसिद्धेः 'इति'शब्दवैयर्थ्यात् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्युक्ते सामानाधिकरण्यनिर्देशात् विकाराभिन्ननामधेयाभिन्न-मृत्तिकायामेव 'आग्नेयोऽष्टाकपालो भवति' इत्युक्ते द्रव्यदेवताविशिष्टयागे एवेष्टसाधनत्व-विधानवत् सत्यत्वविधानलाभेनावधारणेनातथाभूतारोपितमृद्विकारे एव सत्यत्वव्यतिरेकस्यैव लाभाच्च । तस्मात् न परोक्तस्तद्वाक्यार्थः ॥

एवं च 'एकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं भवति' इति वाक्यमप्यनुकूलितं भवति । अन्यथा= विकारस्यैव स्वरूपेणाभावे, 'सर्वमृण्मय'शब्दस्तत्र विज्ञातत्वाऽवेदकं विज्ञातं भवति इति 'एष'शब्दश्च व्यर्थः स्यात् । 'स एषोऽणिमैतदात्म्यमिदं सर्वम् तत्सत्यम्' इति 'इदं''सर्व'शब्दपरामृष्टविकार-अविकारात्मक-कृत्स्नजगत्सत्यत्वावेदकश्रुति-विरोधश्च । 'यदिदं सर्वं तत्सत्यम्' इति स्फुटमेव वाक्यार्थप्रतीतेः । नच सन्निहित'इदं-सर्व'शब्दार्थं परित्यज्य 'तत्सत्यम्' इति 'तत्'पदेन 'ऐतदात्म्यम्' इति प्रत्ययार्थं प्रत्युपसर्जनभूत'ऐतदात्म्य'परामर्शे प्रमाणमस्ति ॥

अपि च एकमृज्ज्ञाने मृद एव ज्ञातत्वात् कथं? सर्वमृण्मयविज्ञानम् । अन्यथा मणिकादौ संशयाभावापत्तेः । नच मृदाकारेण तत्र सन्देह एव नेति वाच्यम् । 'विकारो नामधेयं मृत्तिका' इति विकार-विकारिणो अभेदाऽवेदनेन 'मृत्तिकेत्येव सत्यम्' इत्यव-

धारणेन कारणान्तराभावनिश्चयेन च, वाचारम्भणादिवाक्यश्राविणो मणिकादिविषयकचाक्षुषः संशयाद्यभावापातात् ।।

अपि चैवम् 'एकेन मृत्पिण्डेन विज्ञातेन' इत्यत्र 'एक'शब्द'पिण्ड'शब्दयोर्वैयर्थ्यम् । मत्पक्षे तु प्राधान्यवाचिनस्तस्य 'एक'शब्दस्य लोके प्रधानज्ञाने सत्यप्रधानं सर्वं मृज्ज्ञानमपि प्रयोजनसद्भावासद्भावाभ्यां ज्ञातत्वेन व्यवह्रियत इति तादृशार्थज्ञापकत्वेनावैयर्थ्यात् । 'पिण्ड'शब्दस्यापि विकारगतसादृश्यद्योतकतया सार्थकत्वात् ।।

किञ्चैवं प्रतिज्ञाविरोधप्रसङ्गः । 'येनाश्रुतंश्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छां-उ-६-१-१) इति प्रतिज्ञा नहि ...श्रुतेन ब्रह्मणा अश्रुतमन्यत् श्रुतं भवति । नच श्रुतमश्रुतं च ब्रह्मैवेति वक्तुं शक्यम् । व्याहतेः ।।

यत्तु ''नानाविकारावच्छिन्नं चैतन्यमेव नानाभूतं सर्वमुक्तं तदेव च 'अश्रुतं' प्रति स्वयमश्रवणात् एकेन श्रुतेन ब्रह्मणा विकारापादितभेदव्युदासे श्रुतं भवती''ति अत्र परिहारकथनम् । तन्न । 'ऐतदात्म्यमिदं सर्वम्' इति अवच्छेदकत्वाभिमतनानाविकाराणामपि चैतन्याभिन्नत्वावेदनात् । तेषां तस्य च अवच्छेद्यावच्छेदकभावे एव मानाभावात् । नहि भेदं विना तस्यैव अवच्छेदकत्वमवच्छेद्यत्वं च सम्भवति ।।

किञ्च नानाविकारावच्छिन्नचैतन्यस्यैव असत्वेन, तस्य च श्रुतत्वेन अश्रुतत्वासम्भवः । अवच्छेदकभूतविकाराणामश्रवणेऽपि चैतन्यस्य श्रुतत्वाक्षतेः । न ह्यनेकावच्छिन्नदेवदत्ते यत्किञ्चिदवच्छेदकज्ञानाभावदशायां ज्ञानं तज्ज्ञानं न भवतीत्यस्ति ।।

किञ्च अवच्छेदकस्यैकत्वेऽवच्छेदक नानात्वेऽपि न तस्य सर्वव्यवहारभाक्त्वम् । नहि कटक-मकुटाद्यनेकावच्छेदकावच्छिन्न एकस्मिन् संम्राजि(संम्राजिना-पा) नानाभूतत्वं वा, सर्वत्वं वाऽस्ति । तत्र तदस्तित्वेऽपि अनेकेष्विव तत्र सर्वत्वव्यवहारस्य मुख्यत्वाभावात् । अन्यथा एकस्यैव गमनागमनाभ्यां 'सर्वो गतः सर्व आगतः' इति अविगीतव्यवहार-प्रसङ्गात् ।।

एतेन नानाविकारावच्छिन्नं चैतन्यमेव नानाभूतं सर्वमित्युच्यते तदेवाश्रुतं प्रति

स्वयमश्रवणात्, एकेन श्रुतेन ब्रह्मणा तत्तद्विकारापादितभेदव्युदासे श्रुतं भवतीति न प्रतिज्ञा-विरोध इति निरस्तम् ॥

विकाराणामवच्छेदकत्वे भेदापादकत्वस्यैव अयोगात् । नहि दण्डकुण्डलादिना नानाऽव-च्छेदकावच्छिन्नोऽपि देवदत्तो नाना भवति । तथासति 'दण्डावच्छिन्नोऽयं कुण्डलावच्छिन्नात् भिन्न' इति प्रतीत्यापत्तेः ॥

किञ्च अवच्छेदकव्यक्तीनामानन्त्यात् ब्रह्मायुषोऽपि प्रति चैतन्यस्य श्रुतत्वासम्भवेन, येन श्रुतेन ब्रह्मणा श्रुतमन्यत् श्रुतं भवतीति वाक्यं निर्विषयमेव स्यात् । एतेनैव व्यक्तीनाम् आनन्त्येऽपि प्राणिनां स्थावरादिरूपेण क्रोढीकृत्य विचारो युज्यते । एवं निषेधबुद्धीना-मप्यविद्यात्वेन भूतत्वेन भौतिकत्वेनेन्द्रियादित्वेन च प्रतिषेध्यानुपस्थाप्यसुकरत्वमिति निरस्तम् ॥

तथाऽपि प्रतिपदं विचारानिर्वाहात् प्रतिपदं प्रतिषेध्योपस्थितेरसुकरत्वाच्च । तथाच एकविज्ञानेन अनन्तानां विज्ञानम् 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति श्रुतिप्रतिपन्न-चैतन्याभेदमङ्गीकृत्य वा, लोके प्रधानज्ञाने सति तदन्येषामप्रधानानां ज्ञानाभावेऽपि प्रयोजनसद्भावासद्भावाभ्यां तेष्वपि ज्ञातत्वादिव्यावहारदर्शनात् तद्रीत्या वा, 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति श्रुतेरसम्भवदर्थकत्वं निरसनीयम्, नान्यथा तत्र चावेदपक्षस्योक्तदूषणगणग्रासात् दृष्टानुसारित्वात् कल्पनाया औपचारिकपक्ष एवानुसरणीय इति न किञ्चिदनुपपन्नम् ॥

एतेनैव कथं तर्हि 'एकविज्ञानेन अन्येषामनन्तानां विज्ञानम्' इत्यपेक्षिते छान्दोग्ये 'ऐतदाम्त्यमिदं सर्वम्' इति तन्निर्वाहायोक्तं सर्वस्यैकात्मत्वं वक्तुं 'सदेव सोम्येदमग्र आसीत्' इति चोपक्रान्तमिति निरस्तम् ॥

यत्तु '' 'वाचारम्भणं विकारो नामधेयम्' इत्येतस्य संस्कृतवाग्विकाररूपमपभ्रंशात्मकं नामे''ति व्याख्यानम् । तदयुक्तम् । तच्छब्दस्य कार्यत्वे कूटस्थत्वे वा, शब्दान्तरा-नारम्भकत्वेनापभ्रंशानां संस्कृतविकाररूपत्वासम्भवात् अशक्यासाधुवर्णान्तरव्यक्तेरेवाप-भ्रंशत्वात् । एकसंस्कृतविज्ञाने तदुच्चारणशक्तिविज्ञातापभ्रंशानां.....नादर्शनाच्च । 'मृत्तिकेत्येव

सत्यम्' इति 'मृत्तिका'शब्दस्य परमते सत्यत्वावधारणानुपपत्तेश्च । नच 'सत्यमिति' नित्यमित्यर्थः । प्रकृताखिलविज्ञानानुपयोगात् अशब्दार्थत्वाच्च ॥

किञ्चैकविज्ञाने सर्वविज्ञानस्य मुख्यैव(मुख्यस्यैव-पा) सम्भवे प्रधानविज्ञाने तदुपसर्जन-विज्ञानव्यवहारदर्शनात् सर्वविज्ञानमिदं गौणमित्याश्रयणानुपपत्तिः । गौणत्वे मृत्लोहादि-दृष्टान्तैरुपपादनानुपपत्तिश्चेति दूषणं तदप्येवमेव अपास्तमिति द्रष्टव्यम् ॥

तथाहि । शब्देषु तद्भवत्व-तत्समत्वाद्यनेकविधानादनाद्यविगीतवृद्धव्यवहारविषयत्व-मस्ति इत्यविवादम् । शब्दस्य कार्यत्वे कूटस्थत्वे वा, द्रव्यस्य मृत्पिण्डादेर्घटाद्यारम्भकत्व-वच्छब्दान्तरानारम्भकत्वेऽपि तद्भावव्यवहारभाजी अपभ्रंशे अनाद्यविगीतवृद्धव्यवहारा-लम्बनतया किञ्चिद्रूपं तावदास्थेयम् । तच्चान्विष्यमाणं तादृशशब्देष्वसाधुत्वे सति साधुशब्द-सदृशत्वे च सति साधुशब्द इव शक्ततावच्छेदकीभूतानुपूर्वीविशेषवत्वेन ज्ञातत्वमेवेति स्वीकार्यम् ॥

इदमेव चापभ्रंशेषु साधुशब्दविकारोऽयमिति श्रौतस्मार्तव्यवहारेऽप्यालम्बनं 'लोकवेदाधि-करणन्यायात्' । नहि 'विकार'शब्दस्य वृद्धैस्तत्र तत्र प्रयुज्यमानस्यानुगतं प्रवृत्तिनिमित्तं सम्भवति । नच 'मुखवक्रिमा वायुविकारः श्लेष्मविकारः कण्डुः' इत्यादिवैद्यकशास्त्रीय-व्यवहारनिमित्तं मुखवक्रिमादौ वाय्वादिसमवायिकारणकत्वरूपं कनकफलभक्षणानन्तरं बहु-वल्गतिपुरुषे 'त एवेदं वल्गनं कनकफलभक्षणविकार' इत्याबालं व्यवहारलोकप्रसिद्धिः ॥

अत एव 'भूवादयो धातवः'(पा-सू-१-३-१(१८) इति सूत्रे भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यत इत्युक्त्वा, 'व'कारस्य मङ्गलार्थत्वं कथमित्यपेक्षिते महाव्याहृत्या अवि-कृतरूपश्रवणोपयोगितया तत्वमित्यभियुक्ता व्याचक्षाणा उपलभ्यन्ते । तथाचोक्तम् –

'भवेद्वर्णागमाद् ध्वंसः सिंहो वर्णविपर्ययात् ।
गूढात्मा वर्णविकृतेर्वर्णनाशात् पृषोदरमि'ति ॥

एवं च असाधुष्विव साधुष्वपि 'विकार'शब्दव्यवहारसत्वेन तत्रेवात्रापि वृद्धव्यवहार-निर्वाहायाकामेनापि तदालम्बनं किञ्चिद्रूपमवश्यं वाच्यमिति । 'विकार'शब्दस्य शब्दात्मक-

अशब्दात्मकवस्तुषु वृद्धैः प्रयुज्यमानस्य नानुगतं प्रवृत्तिनिमित्तं सम्भवतीति सिद्धम् । तथाच सत्यसंस्कृतवाग्जन्यमपभ्रंशरूपं नामेति व्याख्यानं नायुक्तमिति ॥

'धार्य'पर्याय'धेय'शब्दसमभिव्याहृत'नाम'शब्दसमभिव्याहारात् 'विकार'शब्दितस्यापभ्रंशरूपस्य नाम्नो धार्यत्वाभावो लब्धः । किं तर्हि धार्यं नामेत्याकाङ्क्षायामाह 'मृत्तिकेत्येव' इति । अवधारणेनापभ्रंशरूपनामकरणव्यावृत्तिः द्रष्टव्या । हेययुते किमिदं त्वया सत्यमुच्यत इत्यत्राह 'सत्यम्' इति । 'मृत्तिकेति' संस्कृतनाममात्रोपलक्षणम् । नच अपभ्रंशस्याधार्यत्वाऽवेदकशब्दाभावान्नास्य वाक्यस्योक्तार्थपरत्वं सम्भवतीति वाच्यम् । वाचा= वागिन्द्रियेण, आरम्भणम्= उत्पादनं, यस्य तद्वाचारम्भणमिति वागिन्द्रियोत्पन्नत्वेनैवानियतानुपूर्वीकत्वरूपानित्यत्वसिद्धेरपभ्रंशानां पुनः 'विकार'शब्देन प्रतिपादनं निन्दार्थमिति लाभात्, निन्दायाश्च निषेधकल्पनात् संस्कृतशब्देषु साधुभिरेव भाषितव्यं न असाधुभिः, 'न म्लेच्छित हवै नापभ्रंशत वै' 'एकः शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुक् भवति' 'व्याकृता वागुद्यत' इत्यादिप्रमाणबलात् नियमादृष्टाभ्युदयापादकानुपूर्वीकत्वरूपं नित्यत्वमपभ्रंशानां तु अतथाभूतानुपूर्वीकत्वरूपमनित्यत्वमिति संस्कृतापभ्रंशेषु पारिभाषिकनित्यत्वानित्यत्वयोरनादिवृद्धनित्य-अनित्यव्यवहारालम्बनयोः सर्वैरप्यनादरणीयत्वेन 'विकार'शब्देनापभ्रंशेषु नियमादृष्टाभ्युदयापादकानुपूर्वीकत्वराहित्य ज्ञापनेन निन्दारूपत्वसम्भवात् । एवं 'मृत्तिका इत्येव नामधेयम्' इति नियमविधेः 'सत्यम्'इत्येतस्य अर्थवादतयोपयोगसम्भवादिति । नच एकविज्ञानेन सर्वविज्ञाननिरूपणप्रस्तावे एकसंस्कृतविज्ञाने तदुच्चारणशक्तिजा विज्ञातापभ्रंशानां ज्ञानदर्शनात् 'वाचारम्भणम्'इत्यादि भवदभिप्रेतार्थकवाक्यस्यानुपयोग इति वाच्यम् । संस्कृतनामैवधार्यमिति नियमार्थं प्रवृत्तस्य अस्य वाक्यस्य मृत्तिकादिसंस्कृतनामसु प्राधान्यख्यापनेन प्रधाने ज्ञाते सर्वमप्रधानं ज्ञातप्रायं भवतीति लोकव्यवहारसूचकतयोपयोगसत्वात् ॥

ननु प्रधानविज्ञाने तदुपसर्जनविज्ञानव्यवहारदर्शनात् एकविज्ञाने सर्वविज्ञानमिदं गौणमापन्नमिति चेन्न । उक्तरीत्या मुख्यार्थासम्भवे 'यजमानः प्रस्तरः' इत्यादेरिवास्य गौणार्थपरताया एवाश्रयणीयत्वात् । नच गौणत्वे मृल्लोहादिदृष्टान्तैः उपपादनानुपपत्तिः ।

'या वै प्रज्ञा स प्राणो यः प्राणः सा प्रज्ञा' इति गौणस्यापि सामानाधिकरण्यस्य 'सह ह्येतौ शरीरे वसतः सहोत्क्रामत' इति हेतुवन्निगदेनोपपादनवत्[१] तदुपपत्तेः ॥

अत एव च 'मृत्तिकेत्येव सत्यम्' इति 'मृत्तिका'शब्दस्य त्वन्मते सत्यत्वावधारणानुपपत्तिः । 'मृत्तिका'शब्दातिरिक्तस्यापि सर्वस्य सत्यत्वाभ्युपगमादिति प्रत्यूढम् ॥

मया 'मृत्तिका'शब्द एव सत्य इति वाक्यार्थानभिधानात्, यद्वा सत्यं नित्यं मृत्तिकेति 'मृत्तिका'शब्दादिरूपमेव संस्कृतं नित्यं नामधेयं धार्यमित्यर्थः । अस्मिन्नपि पक्षे अस्य वाक्यस्योक्तरीत्यैवोपयोगो द्रष्टव्यः । नच 'सत्य'शब्दस्याबाध्यवाचिनो नित्यपरत्वे मानाभावः । 'यावद्ब्रह्म विष्ठितं तावती वाक्' 'वाचा विरूप नित्यया' इति च श्रुतिपर्यालोचनया संस्कृतवाङ्मात्रस्य नित्यत्वलाभात् 'वाचारम्भणं विकार'इति पूर्ववाक्यपर्यालोचनया वागिन्द्रियोत्पन्नस्यापभ्रंशस्य 'विकार'शब्देनानित्यविशेषरूपत्वोपस्थापनादतथाभूतमृत्तिकादिनाम्नो नित्यत्वप्रतिपादनस्यैवोचितत्वेन तत्समभिव्याहृत'सत्य'शब्दस्य अबाध्यवाचित्वेऽपि नित्यरूपार्थपरत्वावश्यम्भावात् सदाशब्दाद् 'अव्ययात्त्यप्' इति 'त्यप्'प्रत्यये 'सत्यम्' इति शब्दनिष्पत्तेर्नित्यत्वस्यापि सत्यशब्दार्थत्वसम्भवाच्च । 'सदातनं सत्यमिति नित्यमेवोच्यते बुधैः' इति स्मरणेन 'सत्य'शब्दस्य नित्यशब्दपर्यायत्वाऽवेदनाच्च । तस्माद् 'वाचारम्भणादि'वाक्याद्विश्वस्य मिथ्यात्वासिद्धेः, 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति तस्य नित्यत्वाऽवेदनाच्च 'तेनेदं पूर्णं पुरुषेण सर्वम्' इति श्रुत्या सत्यस्यैव विश्वस्य पूरणीयत्वं सिद्ध्यतीति न क्वापि द्वैतस्य अद्वैतश्रुतिविरोधः । उक्तरीत्या अद्वैतपरश्रुतीनामेव दुर्लभत्वात् ॥

॥ इति 'वाचारम्भणं नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेः परोक्तार्थनिरसनम् ॥

॥ इति जगत् सत्यत्वसमर्थनम् ॥

ननु 'अस्थूलमनणु' इत्यादि श्रुत्या स्थूलादिवस्तुनिषेधात् सर्वस्य च प्रपञ्चस्यास्थूलाणुह्रस्वादिभेदभिन्नतया सर्वनिषेधसिद्धिरिति चेन्न । 'अणोरणीयान् महतो महीयान्' इत्यादिश्रुत्या परमात्मनोऽपि स्थूलत्वावेदनेन 'वालाग्रशतभागस्य' इत्यादिश्रुत्या 'एषोऽणु-

---

(१) जै-सू-१-२-३ हेतुवन्निगदाधिकरणम् ।

रात्मा चेतसा वेदितव्यः' इत्यादिश्रुत्या च, जीवेश्वरयोरप्यणुत्वाऽवेदनेन च 'अस्थूलम्' इत्यादिश्रुत्या तयोरपि निषेधप्रसङ्गात् । नच 'न विद्यते स्थूलं यस्मात्' इति बहुव्रीहि-प्रत्यय अन्यपदार्थभूतपरमात्मातिरिक्तस्यैव स्थूलस्य निषेधात् परमात्मनिषेधप्रसङ्ग इति वाच्यम् । 'अयमनाथ' इत्यादाविव 'न विद्यते स्थूलं यस्य' इत्येव बहुव्रीह्याश्रयणसम्भवेन अन्यपदार्थस्याप्यात्मनो 'अस्थूलम्' इत्यादिना निषेधप्रसङ्ग-तादवस्थ्यात्, 'अणोरणीयान्' इत्यादेर्निषेध्यसमर्पकत्वेनाविरोधात् ।।

किञ्च अस्थूलादिवाक्यस्य स्थूलादिपर्युदासपरत्वेन न तन्मिथ्यात्वपरत्वम् । नचैवं नञो मुख्यार्थत्यागप्रसङ्गः, तस्य संसर्गाभावे शक्तस्य स्थूलान्यमित्यादिप्रयोगेण वाक्यार्थाश्रयणात्, अन्योन्याभाववति लक्षणापत्तेरिति वाच्यम् । संसर्गाभावत्वापेक्षया भावत्वमात्रस्य सामान्यरूपतया न पदप्रवृत्तिनिमित्तत्वेनापि न पदमुख्यार्थत्वात्, 'घटः घटो न' इत्यादि-वाक्यादन्योन्याभाववत्त्वस्य वाक्यार्थविधयैव प्रतीत्या तद्विशिष्टस्य न पदवृत्त्यनुपस्थाप्यत्वेन तस्य तत्र लक्षणाकल्पकाभावात्, अन्यथा 'नानुयाजेषु' इत्यादावपि पर्युदासानाश्रयण-प्रसङ्गात्, मुख्यार्थस्य तदाश्रयणे त्यागात् । नच तत्र विकल्पभयात् पर्युदासाश्रयणमिति वाच्यम् । विकल्पस्येव मुख्यार्थत्यागस्यापि दोषतयाऽविशेषात् । नच विकल्पाश्रयणे अष्टौ दोषा आपतन्ति, पर्युदासाश्रयणेतु मुख्यार्थत्यागरूप एक एव दोष, इति वाच्यम् । 'अणोरणीयान् महतो महीयान्' इत्याद्युदाहृत वाक्यविरोधेन 'अस्थूलादि'वाक्यस्यापतिता-प्रामाण्यपरिहाराय विकल्पाश्रयणे तत्प्रयुक्ताष्टदोषपरिहाराय प्रकृतेऽपि पर्युदासाश्रयणस्या-वश्यकत्वात् । नच वस्तुनि विकल्पो न सम्भवति, कर्मवत् तस्यानुष्ठानानर्हत्वादिति वाच्यम् । कर्मण इवात्मरूपस्य वस्तुनोऽननुष्ठेयत्वेपि वचनद्वयप्रामाण्यनिर्वाहाय विकल्पस्या-वश्याश्रयणीयत्वात् । वस्तुनि विकल्पासम्भव इत्यस्य युक्तित्वेन श्रुत्यपेक्षया दुर्बलत्वात् ।।

नच 'अणोरणीयान्' इत्यादिश्रुत्या अणुमहदाद्यभिन्नतया प्रतिपन्नस्य परमात्मनो 'अस्थूलम्' इत्यादिश्रुत्या पर्युदासमाश्रित्य स्थूलादिभेदबोधने तदभिप्रेतार्थासिद्धिप्रसङ्ग इति वाच्यम् । परमात्मनि तथाविधाव्याकृताकाशजीवादितो भेदस्य मयोपगमात् । नच अव्याकृताकाशे मानाभावः । 'आकाशवत्सर्वगतश्च नित्यः' इत्यादिश्रुतेरेव मानत्वात् । नच

'अस्थूलम्' इत्यादिना स्थूलत्वाद्यवच्छिन्नभेदावेदनात् परमात्मनोऽपि स्थूलत्वाद्यवच्छिन्नतयाऽस्यापि तद्भिन्नत्वप्रसङ्ग इति वाच्यम् । 'स्वर्गकामो यजेत' इत्यादि वाक्येन स्वर्गत्व-यागत्वयोरुपस्थितावपि स्वर्ग-याग-तत्कार्यत्व-कारणत्वावच्छेदकत्व अनावेदनवत्, अणोः अस्थूलादिवाक्येन स्थूलत्वादिप्रतियोग्यनुयोगि-साधारणधर्माऽवेदनेऽपि तस्य प्रतियोगितावच्छेदकत्वानावेदनेनाविरोधात् । नचैवम् 'अयं घटस्तद् घटो नेतिवत् घटो घटो नेति' प्रयोगप्रसङ्ग इति वाच्यम् । घटत्वस्य प्रतियोगितावच्छेदकत्वमभिप्रेत्य प्रयोगापादनस्य बाधितत्वेन प्रयोगादेवाप्ताप्रयोगोपपत्तेः । तदवच्छेदकत्वमभिप्रेत्य तथा प्रयोगापादनस्येष्टत्वादिति ॥

केचित्तु 'सर्वस्य ऐतदात्म्यमिदं सर्वं तत् सत्यम्' इत्यादिश्रुत्या परमात्माभेदाऽवेदनात् सर्वान्तर्गतयागादेरपि तदात्मकत्वावश्यम्भावेन पृथक् क्रियाभावेन परपक्षेऽपि वस्तु-विकल्पतादवस्थ्यम् । अपि चोक्तन्यायेन व्रीहियवयोरपि परमात्माभिन्नतया तद्विकल्पस्यैव वस्तुविकल्पत्वप्रसङ्गः । अपि च जीववत् सर्वस्यापि तदात्मकत्वेन तस्यैव विधेयत्वं-निषेध्यत्वं-विधित्वं-निषेधत्वं किं बहुना [१]प्रमाणत्वं प्रमेयत्वं-प्रमेयाभासत्वं, प्रमाणा-भासत्वं-सर्वात्मकत्वं, सद्रूपत्वम्-असद्रूपत्वं,सदसद्रूपत्वं-सदसद्विलक्षणत्वरूपत्वं पञ्चम-प्रकारत्वम्-अपञ्चमप्रकारत्वं,[२] सुखरूपत्वं-दुःखरूपत्वं-ज्ञानरूपत्वं-अज्ञानरूपत्वं चेत्या-दिकं स्यादित्याहुः ॥

## ॥ अथ मुण्डकोपनिषद्वाक्यानुसारेण जीवेश्वराभेदसिद्धिनिराकरणम् ॥

एतेन ब्रह्मणः स्थूलाद्यन्यत्वेऽस्थूलादेरपि तदन्यत्वप्रसङ्गः । नचेष्टापत्तिः । मुण्डकोपनिषदि 'शौनको ह वै महाशालोऽङ्गिरस विधिवदुपसन्नः पप्रच्छ कस्मिन् खलु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'(मु-उ-१-१-३)इत्युपक्रमात् –

**'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।**
**यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्'** (आ-१-१-७)

(१) किं बहुना प्रमाणत्वं-प्रमाणाभासत्वं-प्रमेयत्वं-प्रमेयाभासत्वम् इति पाठः स्यात् ॥

(२) पञ्चमप्रकारत्वमपपञ्चप्रकारत्वम् इति ताळपत्रस्थ पाठः ॥

इत्यादिना ब्रह्मणो जगदुत्पत्तिमभिधाय 'तदेतत् सत्यम्' इति प्रकृतस्य ब्रह्मणः सत्यत्वेन तस्योपपादनात् –

> **'तदेतत् सत्यम् । यथा सुदीप्तात् पावकाद्विष्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति'** (आ-उ-१-१-१)

इति सत्यत्वेन सद्रूपत्वादैकरूपत्वाज्जगतो ब्रह्मोपादानत्वं निमित्तत्वेन प्रतिज्ञासिद्धिमाशङ्क्य तद् व्युदासायोक्त्वा'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं[१] वरिष्ठम्'(आ-उ-२-२-१३) इत्युपसंहाराच्च सर्वस्य, ब्रह्माभेदे तात्पर्यावधारणात् तद्विरोधप्रसङ्गादिति परास्तम् ॥

सर्वस्य ब्रह्माभिन्नत्वे ब्रह्मण एव ब्रह्मोत्पत्तिः ब्रह्मण्येव ब्रह्मणो लय इत्यापातात् । 'यथोर्णनाभिः सृजते गृह्णते च' इत्यादिदृष्टान्तानुरोधेन अक्षरादुत्पन्नानां विविधानां भावानां ततो भेदस्यैव उक्तत्वाच्च(न्याय्यत्वाच्च-पा) । विविधभावाभिन्नत्वे 'अक्षर'शब्दितस्य ब्रह्मणः सविशेषत्वापत्तेश्च । 'कस्मिन् खलु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इत्युपक्रमानु-रोधेनापि ब्रह्मज्ञानात् तद्वतः सर्वज्ञत्वप्रतीत्या ब्रह्मज्ञानस्यैव सर्व(वि)ज्ञानत्वमित्यप्रतीत्या 'सर्व''ब्रह्म'शब्दार्थयोरभेदे तस्या अप्रमाणत्वाच्च । नहि तज्ज्ञानमेव तज्ज्ञानमिति ततः प्रतीयते ॥

एतेन तदन्यथाऽनुपपत्त्या विषयाभेदतः कल्प्येत । 'ब्रह्मैवेदममृतं पुरस्तात्' इत्युपसंहारेऽपि 'सप्तमी पञ्चमी प्रथमान्तेभ्यो दिग्देशकालेष्वस्तातिः'(पा-सू-५-३-२७(१९७४)[२] इति पाणिनिस्मरणात् 'पुरस्तात्' इति 'अस्ताति'प्रत्ययान्तो नानार्थत्वात्, सप्तम्यन्तादेवायम् 'अस्ताति'प्रत्यय इति यद्यपि नावधारणं सम्भवति । तथाऽपि उपक्रमाद्यनुरोधेन ऊर्ण-नाभ्यादिदृष्टान्तैरुपक्रमावगतस्य भेदस्योपपादनानुरोधेन च 'पुरस्तात्' इत्येतस्मिन् शब्देऽपि सप्तम्यन्तादेव 'अस्ताति'प्रत्यय इत्यवधारणसत्वेन प्रथमश्रुत'पुरस्तात्'शब्दानुरोधेन 'दक्षिण-

---

(१) विश्वममृतम् इति ताळपत्रस्थ पाठः ॥

(२) दिग्च्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्ताति इतिसूत्रम् ॥ ५-३-२७(१९७४)

तश्चोत्तरेणाधश्चोर्ध्वम्' इति चरमश्रुत'दक्षिणश्च'इत्यादिशब्दानां नेयत्वात् । इदं= प्रमाणसिद्धम्, ब्रह्मैव पुरस्तात्= अनादिकालमारभ्य, अमृतं= मृत्यादिदोषरहितम् इति प्रतिपादनेन 'ब्रह्मदक्षिणतश्च'इत्यादिना ब्रह्मणः सर्वगतत्वप्रतीत्या पूर्वमुक्तार्थदार्ढ्याय 'ब्रह्मैवेदम्' 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति' 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इतिश्रुतिस्मृतिभ्यां, विश्वं= विश्वोपजीव्यं, स्वतन्त्रं वा सत्, वरिष्ठम्, अमृतम् = मृत्यादिरहितेषु श्रेष्ठं= मृत्यादिरहितं, इत्यर्थप्रतीत्या अस्योपसंहारस्यापि जीवेश्वरादिभेदे एव तात्पर्यमित्यवधारणाच्च । तस्मान्न मुण्डकोपनिषद्वाक्यानुरोधेनापि अभेदसिद्धिः । न वा जडमिथ्यात्वसिद्धिरिति सिद्धम् । 'तथाऽक्षरात्सम्भवतीह विश्वम्' इत्यादिना ब्रह्मणो जगदुत्पत्तिमुक्त्वा 'तदेतत् सत्यम्' इति प्रकृतं जगत्परामृश्य तस्य सत्यत्वविधानात् । नच योग्यायोग्यसाधारणविश्वशब्दार्थमात्रे सत्यत्वं प्रत्यक्षादिप्राप्तम् । येन तथासति अनुवाद इत्युच्येतेति ॥

॥ इति मुण्डकोपनिषद्वाक्यानुसारेण जीवेश्वराभेदसिद्धिनिराकरणम् ॥

॥ अथ 'ब्रह्म तं परादाद्योऽन्यत्र' इति वृहदारण्यक श्रुत्यर्थ विवरणम् ॥

अत एव[१] बृहदारण्यकेऽपि 'आत्मनस्तु कामाय सर्वं प्रियं भवति'(वृ-उ-६-५-११) इति क्षेत्रज्ञस्य 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद सर्वं [२]तं परादाद्योऽन्यत्र आत्मनः सर्वं वेद' (वृ-उ-६-५-११) इति भेददर्शननिन्दाऽर्थवादमुक्त्वा 'इदं सर्वं यदयमात्मा' (वृ-उ-६-५-११) इति सर्वात्मत्वोपदेशाज्जीवेश्वरयोर्भेदे च द्वयोस्तयोः[३] श्रुतिप्रतिपन्नसर्वात्मकत्वमनुपपन्नमेवेति निरस्तम् ॥

'आत्मनः= परमेश्वराद् अन्यत्र= अधिकरणे, यः सर्वं वेद तं सर्वं परादाद्' इति निन्दाऽप्रतीतेः । परमेश्वरः सर्वाश्रयः इत्येव तद्वाक्यार्थावधारणात् । नचैवं सति 'यदिदं सर्वं यदयमात्मा'इति तदग्रिमवाक्यभङ्गी कथं सङ्गच्छतामिति वाच्यम् । उपक्रमाधिकरणन्यायेन (जै-सू-३-३-१) अनुपसञ्जातविरोधि-प्रथमश्रुतनिन्दाऽर्थानुवादानुरोधेनैव 'इदं सर्वं यदयमात्मा'

---

(१) अत एवेत्यस्य सर्वात्मकत्वमनुपपन्नमेवेति निरस्तम् पु. ४७२ इत्यनेनान्वयः ॥

(२) 'परादान्योऽन्यदात्मनो ब्रह्मवेदसर्वम्' इति ताळपत्रस्थ पाठः ॥

(३) 'द्वयोस्त्वयोः' इति ताळपत्रस्थपाठः ॥

इति, चरमश्रुतवाक्यस्य योजनीयत्वात् । नच 'सर्वमात्मा' इति सामानाधिकरण्यविरोधेन 'अन्यत्र'शब्दस्य 'अन्यत्र धर्मादन्यत्राधर्मात्' इतिवत् ऋतेऽर्थपरत्वमिति वाच्यम् । अर्थवादस्य प्रथमश्रुतत्वेनासञ्जातविरोधितया तदनुरोधेनैव 'इदं सर्वं यदयमात्मा' इतिच चरमश्रुतवाक्यस्य नेयत्वात् । अन्यथोपक्रमाधिकरण न्यायविरोधात् । नचैवम् 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्'(बृ-उ-४-४-५) इत्येकविज्ञानेन सर्वविज्ञानप्रतिपादनविरोधः, तथा प्रतिपादनस्य श्रवणमननाङ्क-निदिध्यासनफलभूत-परमेश्वरदर्शनापादिततत्प्रसादेन सर्वज्ञता भवतीत्यर्थविज्ञानेनाविरोधात् ॥

॥ इति 'ब्रह्म तं परादाद्योऽन्यत्र' इति बृहदारण्यकश्रुत्यर्थविवरणम् ॥

नन्वेवं सति 'कथं नु भगवः स आदेशो भवति । यथा खलु सोम्येकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छां-उ-६-१-१) इति तादर्थ्येन प्रकृति-विकारभावोपन्यासानुपपत्तिरिति चेन्न । निरस्तत्वात्[१]॥

नन्वेवं सति 'सर्वं खल्विदं ब्रह्म तज्जालान्' इति सर्वोपादानत्वेनैव सर्वत्वसमर्थनेन गौणार्थतानिरासानुपपत्तिरिति चेन्न । 'आपो वा इदं सर्वम्' इत्यादिश्रुत्या अपां सर्वात्मकत्वप्रतिपादनवत् ब्रह्मणोऽपि 'सर्वं खल्विदं ब्रह्म'इत्यादिना ब्रह्मणो गौणसर्वात्मकत्वस्यैव न्याय्यत्वात् । अन्यथा 'अपाम्'अपि, मुख्यं सर्वात्मकत्वं स्यात् । नचेष्टापत्तिः । त्रिवृत्कृतानां तद्भावस्य प्रत्यक्षबाधितत्वात् सूक्ष्माणां तु 'अग्नेरापः'इति जनिश्रुत्या तद्विरोधात् । नच 'अपाम्'सर्वात्मत्वाभावग्राहि-प्रत्यक्षादेराभासीकरणहेतोरभावादेस्तु तासां सर्वात्मकत्वं गौणं,'सर्वं खल्विदम्' इत्यादौ तु न तथा, सर्वस्य ब्रह्मात्मकतायाः[२] सोपपत्तिकत्वेन प्रत्यक्षबाधानवतारेण च वैषम्यादिति वाच्यम् । सर्वस्य ब्रह्मात्मकत्वे जीववत् मिथ्यात्वाभावप्रसङ्गात्, संसारस्यैव तथासत्यपरिच्छिन्नब्रह्मानन्दस्वरूपतया हेयत्वाभावप्रसङ्गाच्च । अविद्ययाऽप्यपरिच्छिन्नब्रह्मज्ञानस्वरूपरूपतया तदाकारकत्वाभावप्रसङ्गाच्च ॥

---

(१) प्रथमपरिच्छेदे वाचारम्भण इतिश्रुतेः परोक्तार्थनिरसनप्रस्तावे निरस्तमित्यर्थः ॥

(२) ब्रह्मकतायाः इति ताळपत्रस्थ पाठः ॥

तथाऽपि तदाकारकत्वे नित्यसंसारित्वापत्तेश्च । अनाद्यविद्यया ब्रह्मस्वरूपरूपत्वेन ब्रह्मवदनिवर्त्यत्वात्, तस्मादभेदश्रुतीनामेव दुर्लभत्वात् उदाहृतभेदश्रुतिस्तदाऽवेदित सार्वज्ञ-तदभावादिरूपलिङ्गैश्च जीवेश्वरयोः पारमार्थिकभेदसिद्धिरविकलेति सिद्धम् ॥

केचित्तु अस्तु (सन्-पा) भेदश्रुतयः तथाऽपि नाभेदपराः । उक्तरीत्या तत्र बहु-बाधकसत्वात् । नचैवं सति 'तत्त्वमस्यादि'श्रुतीनामभेदार्थत्वेन भासमानानामध्ययनविध्या-पादितफलवदर्थावबोधजनकत्वाभाव वैयर्थ्यप्रसङ्ग इति वाच्यम् । उपासनार्थत्वेन सार्थक्यो-पपत्तेः इत्याहुः । तन्न । अविद्यमानोपासनायाः प्रागेव निषिद्धत्वप्रतिपादनात् ॥

अन्येतु उपासनापरत्वे दोषमेवमाहुः । 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेद-मायात् । नास्त्यकृतः कृतेन' इति श्रुतेः कर्मविरक्तस्यैव ब्रह्मज्ञानाभिलषितत्वात् । उपासना-याश्च विहितक्रियात्वेन कर्मत्वात्,

**'यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'** (के-उ-१-६)

इति श्रुतेरुपास्यस्य मोक्षकारणब्रह्मविद्याविषयत्वनिषेधादिति । तन्न । ज्ञानस्यापि विहित-क्रियात्वेन मुमुक्षोः तत्राऽप्युपासनायामिव विरक्तिप्रसङ्गात् । 'क्रिया'शब्देन प्रतिपाद्यस्य धात्वर्थत्वस्य ज्ञान-तदितरसाधारणत्वात् कृतिविवक्षायां च ज्ञानवदुपासनायापि अकर्मत्व-तौल्यात् ॥

यत्तु 'यन्मनसा न मनुते' इत्यादिनोपास्यस्य मोक्षकारणब्रह्मविद्याविषयत्वं निषिध्यत इति । तन्न । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति उपास्य ब्रह्मणस्तेन 'तदेव' इति साधारण'तत्'शब्देन परोक्षत्वमुक्त्वा, 'इदं ब्रह्म न विद्धि' इति प्रत्यक्षसिद्धकोशा-दावुपास्य ब्रह्मत्वनिषेधेनोपास्य ब्रह्मणो मोक्षकारणब्रह्मविद्याविषयत्वानिषेधादिति । भामत्याम् ईक्षतिकर्म(ब्र-सू-१-३-१३) इति सूत्रे

'ईक्षणाध्ययनयोरेकः कार्यकारणभूतयोः ।
अर्थमौत्सर्गिकं तत्त्वविषयत्वं यथेक्षतेः'

इति 'परात्परं पुरिशयं पुरुषमीक्षते' इति ईक्षण-कर्मणः परब्रह्मण एव 'परं पुरुषमभिध्यायीते'ति ध्यातव्यत्वोक्तेश्च [१]।।

## ।। द्वितीयपरिच्छेदोपसंहारः ।।

ऐक्योपासनस्य परोक्षप्रमाप्रवाहरूपत्वाङ्गीकारेच सर्वज्ञत्वाद्युपासनस्यापि तद्रूपताया दुर्वारत्वात् । नच ऐक्यादिकं ध्येयं ज्ञेयं च, सर्वज्ञत्वादिकं तु ध्येयमेवेत्यत्र विशेषहेतुरस्ति । 'तत्त्वमसी'त्यादेरिव 'यः सर्वज्ञः' इत्यादेरविधिरूपस्यापि वस्तुनिष्ठत्वतौल्यात् सर्वमनवद्यम् ।।

ये नित्यं पदवाक्यमानसरणीसंशीलनालङ्कृता
तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।
याचानेक विनेय षट्पदततेः सम्फुल्लमल्ली सदा
सैषा वाग् विजयीन्द्र संयमिमणेः ज्ञानार्थिभिः सेव्यताम् ।।१।।

वाणीपाणिविपञ्चिका विलसितं व्याकुर्वती वैरिणां
श्रेणिं कुण्ठितलोचनां विदधती नाणीयसा तेजसा ।
एणी पाणि विभूषणप्रणयिनी द्रोणी सुधायाः सदा
वाणी श्रीविजयीन्द्रसंयमिमणेः क्षोणीसुरैः सेव्यताम् ।।२।।

।। इति श्रीमत्परमहंसपारिव्राजकाचार्य श्रीमत्सुरेन्द्रपूज्यपादशिष्येण
श्रीमद्विजयीन्द्रभिक्षुणा विरचिते श्रुत्यर्थसारे
जीवेश्वरभेदस्य आनुमानिकत्वसमर्थनं नाम द्वितीयपरिच्छेदः ।।

।। इति श्रुत्यर्थसारे द्वितीयः परिच्छेदः समाप्तः ।।

* * * * *

---

(१) परात्पर इत्यत्र 'न पदादिति जीवघनं द्रष्टव्यम् । तस्मात्तु परः पुरुषो ध्यातव्यश्च द्रष्टव्यश्च' इति 'ईक्षतिकर्मव्यपदेशात् स'इति सूत्र व्याख्यानावसरे भामतीवाक्यम् ।।

## ।। सर्वतन्त्रस्वतन्त्रविजयीन्द्रभिक्षुविरचितश्रुत्यर्थसारे तृतीयः परिच्छेदः ।।

**।। श्रीहयवदनाय नमः ।। श्री नृसिंहाय नमः ।।**

## ।। श्रुत्यर्थसारे भेदस्वरूपसमर्थनं नाम तृतीयः परिच्छेदः ।।

**।। अथ सामान्यतो भेदखण्डनोद्धारः ।।**

ननु भेदो नाम कः? यत्परत्वं श्रुतीनामुच्यते । न तावत् द्वित्वादिसङ्ख्यारूपः । **'पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत्'**(म-भा-ता-नि-१-१०) 'ऋतं पिबन्तौ सुकृतस्य' इत्यादौ त्वया परमेश्वररूपविशेषाणामत्यन्ताभेदे तद्गतद्वित्वादिसङ्ख्या प्रतिपादनपरत्व-स्वीकारात् अत एव भेदपदार्थो न पृथक्त्वरूपः । नाऽपि वैधर्म्यरूपः । तस्य वैधर्म्यत्वस्य भेदघटितमूर्ति-वैसादृश्यरूपत्वेन सादृश्यवत् भेदनिरूप्यत्वात् वैधर्म्यरहितयोर्यमळयोर्भेदा-भावापत्तेश्च ।।

नापि घटत्व-तद्घटत्वादिरूपसाधारणधर्मः स वैधर्म्यशब्दार्थोऽपि प्रकृते धर्मत्वेन सामान्यतो ज्ञातानां तेषां भेदबुद्धिं प्रत्यप्रयोजकत्वेन घटाद्यसाधारणधर्मत्वेन ज्ञातानामेव तथात्वेन तत्र तदसाधारणधर्मत्वस्य च तदितरावृत्तित्वे सति तद्वृत्तित्वरूपतया भेदनिरूप्य-त्वात् । नाप्यन्योन्याभावरूपः सः अन्योन्यशब्दार्थगवेषणायामात्माश्रयात् । पटनिष्ठस्य घटप्रतियोगिकान्योन्याभावस्य घटाद्भेदे तस्यापि तथात्वेनानवस्थानात् । ततो भेदस्य पटनिष्ठभेदरूपत्वे वाऽत्माश्रयप्रसङ्गात् ।।

नापि पटादितत्तद्धर्मिस्वरूपरूपः । तथासति प्रतियोग्यनिरूप्यत्वापत्तेः । 'इदम्' इति ज्ञानकालेऽपि पटादिस्वरूपस्य निश्चिततया पटोऽयं न वेति संशयस्यापटोयमिति भ्रमस्य च तत्र कदाप्यभावोपपत्तेश्चेति चेत् । अत्र ब्रूमः । किमेतावता भेदप्रतीतिरेव नास्तीत्युच्यते किं? वा सा कारणजन्या नेति? अथवा कारणजन्याऽपि सा बाध्यविषयेति? नाद्यः । भेदस्यैव प्रसक्ततया 'नान्योऽतोऽस्ति द्रष्टा' 'तत्त्वमसि' इत्यादेरप्रसक्तप्रतिषेधत्वापातात् । त्वया तस्य भेदभ्रमनिरासकत्वोपगमाच्च । भेदभ्रमनिरासक्षमाभेदज्ञानाय वेदान्तश्रवणाद्य-योगाच्च । स्वपरपक्षभूषणदूषणादेर्भेदाप्रतीतौ बहुविप्लवापत्तेश्च ।।

भेदो नाम कः? । अमुको वाऽथ अमुको वेति प्रश्नविकल्पयोरयोगाच्च । नहि पर्यायेण विकल्पः सम्भवति । प्रतिपादनमात्राभेदं स्वीकुर्वतः परस्य शब्दमात्रस्य पर्यायत्वात् । नच 'ऐतदात्म्यमिदं सर्वम्' इत्यादिश्रुतिः सर्वाद्वैतं न प्रत्यापयतीत्यस्ति । द्वितीये कारण-जन्यत्वमजन्यत्वेन वास्यादकारणजन्यत्वेन वा? नाद्यः । भेदप्रतीतेर्नित्यत्वापत्त्या स्वप्राति-कूल्याचरणापत्तेः । न द्वितीयः । व्याहतेः । जनकस्यैव कारणत्वात् । तृतीयेऽपि भेदस्य किं शुष्कतर्कैरेव बाध्यत्वाध्यवसायः । किं वा श्रुत्यादिना वा । नाद्यः । ऐक्यस्यापि ब्रह्मस्वरूपरूपत्वे तद्वदेव निष्प्रतियोगिकत्वाद् व्याघातः । धर्मत्वे चाद्वैतहानिरित्यादि तर्क-बाधस्य साम्यात् । त्वय्यैव वेदान्तानामैदम्पर्यं दर्शयितुमिदंशास्त्रं प्रवृत्तं न तर्कशास्त्रवत् केवलाभिर्युक्तिभिः । कश्चित् सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तमित्युक्तत्वाच्च । एवं च

**'भेदस्वरूपं धर्मो वेत्यादिरूपा विभीषिका ।**
**आकारमात्रप्रक्षेपे स्यादभेदविभीषिका ।।(१)'**

भेदाभावादन्यदैक्यं नास्तीति चेत् ऐक्याभावादन्यो भेदो नास्तीति । समं, भेददूषणेनैव ऐक्यसिद्धिश्चेत्, ऐक्यदूषणेनैव भेदसिद्धिः स्यात् । एवं च

**भेदस्य खण्डनेनैव यद्यभेदः प्रसिध्यति ।**
**अभेदखण्डनेनैव तर्हि भेदोऽपि सिध्यतु ।'**

भेद एव दूष्योऽस्माकं नत्वभेदः साध्य इति चेत्, अभेद एव दूष्योऽस्माकं नतु भेदः साध्य इतीत्यपि समम् । स्वपक्षस्य जल्पादौ त्वयाऽपि स्थाप्यत्वात्, वितण्डायां तु मयाऽप्यस्थाप्यत्वात् । नच वितण्डा तवैवेति नियमः । सत्यपि पक्षपरिग्रहे तवेव ममापि तदस्थापनेन वितण्डाधिकारात् । अन्यथा तार्किकादेः शब्दानित्यत्वादौ मीमांसकादिना सह वितण्डा न स्यात् ।।

पक्षपरिग्रहहीनस्यतु निर्मर्यादस्यापसिद्धान्तादिनिग्रहानर्हतया न वितण्डायामप्यधिकारः । नापि औपनिषदम् अन्यस्यापि तव वितण्डैवेति नियमः । त्वदिच्छाननुसारित्वात् प्राश्निका-नामुपनिषदां परपक्षनिरासमात्ररूपत्वाभावाच्च । परपक्षनिरासकेन द्वितीयाध्यायेनैव गतार्थत्वेन

(१) 'अकारमात्र प्रक्षेऽपि' इति ताळपत्रस्थ पाठः ।।

'स्वपक्षस्थापनार्थानामाद्याद्यध्यायानां वैयर्थ्यापत्तेश्च । भाषितं च त्वयैव आद्यद्वितीययोः सङ्गतिं दर्शयता स्वपक्षस्थापनं प्रथमं कृतम् । तध्यभ्यर्हितं परपक्षप्रत्याख्याना'दिति ॥

त्वया स्थाप्यं मया दूष्यमिति समयबन्धे कथमिति चेन्न । मयापि स्वानभिमतस्यास्थाप्यत्वेन त्वयापि स्वाभिमतस्यादूष्यत्वेन तथा समयबन्धायोगात्[१], त्वया भेदः स्थाप्यः मया दूष्यः इति समयबन्धे कथमिति चेत् । त्वयैक्यं स्थाप्यं मया दूष्यमिति समयबन्धे कथम्?। तदापि अस्वव्याघातकैरेव तदैक्यं दूष्यमिति चेत् भेदोऽपि तथेति न स्वव्याघातकैर्भेददूषणं युक्तम् । ब्रह्मातिरिक्तमैक्यमेव नास्तीति चेत् घटाद्यतिरिक्तो भेदोऽपि नास्तीति समम् ॥[२]

श्रुतिविरोधादैक्यदूषकास्तर्काऽभासा इति चेत्, तर्हि श्रुतिविरोधात् प्रत्यक्षादिविरोधाच्च भेददूषका अपि तथेति समं भेदस्य प्रत्यक्षादिसिद्धत्वात् श्रुतिर्नतत्परा किन्तु 'नान्योऽतोऽस्ति' इत्यादिना निषेधार्थमनुवादिनी । प्रत्यक्षं तु तर्कविरोधात् अप्रमाणमेवेति चेत्, तर्हि चैतन्याभेदस्यापि घटादौ जीवे च 'घटोऽस्ति प्रकाशते' 'घटः सन् पटः सन्' 'प्रियश्च सुख्यस्मि' 'एतावन्तं कालं निरुपप्लवः सुप्तोऽस्मि' 'सुखमहमस्वाप्सम्' इति प्रत्यक्षसिद्धत्वात् अभेदश्रुतिर्न तत्परा किन्तु 'नेह नानाऽस्ति किञ्चन' इति निषेधार्थमनुवादिनी, प्रत्यक्षन्तु तर्कविरोधादप्रमाणमेवेति सुवचत्वात् । नहि घटादिवत् तत्राहमर्थे च जीवे सच्चिदानन्दब्रह्माभेदः प्रत्यक्षादिसिद्धः न किञ्चन शब्दार्थ इत्यस्ति । न वा कुतश्चिन्मानेनेति । नच चैतन्याभेदः सत्य इत्यपि श्रुतिरस्ति । येन निषेधस्य तदतिरिक्तविषयतोच्येत ॥

किञ्च 'नासदासीत्' 'अथ तस्याऽयमादेशो नान्तः प्रज्ञं न बहिः प्रज्ञं न प्रज्ञानघनं न लक्षणम्' इत्यादिना चैतन्यस्वरूपस्यैव निषेधात् मिथ्यात्वावश्यम्भावेन तदभेस्यापि मिथ्यात्वेनैक्यादिकं दुर्निरासम् । 'यस्मिन् द्यौः' इत्यादेः 'नेह नाना' इति निषेधाय प्रतियोगिसमर्पकत्ववत् 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तत् सत्यम् स आत्मा' इत्यादेरपि 'नेह

---

(१) तथा तत्सम्बन्धायोगात् इति ताळपत्रस्थ पाठः ॥

(२) 'सामन्यतो भेदखण्डनोद्धारे-२-परिच्छेदे-१४-भङ्गे-न्यायामृते- 'भेदः किम् इत्यारभ्य भेददूषका अपि तथेति समम्' इत्यन्तं वाक्यमनुकरोति ।

नानाऽस्ति किञ्चन' 'नैवास किञ्चन' 'नासदासीन्नो सदासीत्' 'अलक्षणम्' इति निषेधाय प्रतियोगिसमर्पकत्वात् वियदादेर्ब्रह्मणि मानान्तरेणेव ब्रह्मणोऽपि ब्रह्मणि मानान्तरेण अप्राप्तितौल्यात् वियदादेर्ब्रह्मणि 'यस्मिन् द्यौः' इत्यादिश्रुत्येव ब्रह्मणोऽपि ब्रह्मणि 'आकाशवत्सर्वगतश्च नित्यः' 'य आत्मनि तिष्ठन्' 'स्वे महिम्नि: प्रतिष्ठितः' इत्यादिश्रुत्यैव प्राप्तेरप्यविशेषाच्च ॥

अपि च तर्कविरोधाद् भेदप्रत्यक्षमप्रमाणं चेत् तत एवाभेदश्रुतिरुपचरितार्था किं न स्यात् । त्वन्मतेऽपि स्वस्य स्वाभिन्नत्वात् अभेदनिरासः स्वव्याहत इति चेत् । तर्ह्यभेद-वादिमतेऽपि ब्रह्मणो अनृतात् भिन्नत्वात् भेदनिरासोऽपि स्वव्याहत इति समम् । ब्रह्मणो अनृतादपि भेदो मिथ्येति चेत् । स्वस्य स्वाभेदोऽपि मिथ्येति सुवचत्वात् ॥

'नहि सत्यमसत्येभ्यो भिन्नं नेत्युक्तितोऽपि च ।
सत्यं न सत्यमित्युक्तावधिकास्ति विरुद्धता ॥१॥

एवं च –

'शुष्कतर्कैर्भेदबाधे स्यादभेदोऽपि बाधितः ।
प्रमितत्वात् तत्र तर्कास्तुच्छाश्चेत् प्रकृतेन किं? ॥२॥[१]

न द्वितीयः । जीवेश्वराभेदपरत्वेन त्वदभिमततत्त्वमस्यादि श्रुतिजन्यज्ञानप्रामाण्यस्य श्रुतिजन्यज्ञानमात्रप्रामाण्यस्य च, 'नाहमीश्वरः' 'नाहं सर्वज्ञः' इत्याद्याकारकनित्यनिर्दोष-जीवेश्वराभेदग्राहि-स्वप्रकाशसाक्षिरूपप्रत्यक्षे प्रामाण्यं विना साक्षिप्रत्यक्षप्रामाण्यं विना च सिद्ध्ययोगेनाभेदश्रुतेः श्रुतिमात्रस्य वा नित्यनिर्दोषसाक्षिप्रत्यक्षबाधकत्वायोगात् ॥

परेण भेदपरश्रुतित्वेनाभ्युपगतस्य तत्परत्वनिरासेन भेदपरश्रुतित्वसमर्थनेन च जीवेश्वर-भेदश्रुतीनाम् एव सत्वस्योक्तत्वाच्च । 'पटः सन्' 'पृथिवी द्रव्यम्' इति ज्ञानवत् साक्षि-प्रत्यक्षस्य नानाऽऽकारत्वेऽप्येकत्वात् स्वप्रकाशत्वेन स्वस्यैव परप्रामाण्यनिश्चयत्ववत् स्व-प्रामाण्यनिश्चयत्वेनानवस्थानवकाशाच्च ॥

(१) न्यायमृत-२-परिच्छेदे-१४-भङ्गोदाहृतवाक्यमनुकरोति ॥

ननु साक्षिप्रत्यक्षस्य वृत्तिरूपज्ञानप्रामाण्यनिश्चयरूपत्ववत् स्वस्यैव स्वप्रामाण्यनिश्चयरूपत्वे एकस्यैव साक्षिप्रत्यक्षस्य घटज्ञानप्रामाण्यनिश्चयरूपत्वावस्थायामेव घटज्ञानप्रामाण्यज्ञानप्रामाण्यज्ञानं प्रमाणं तज्ज्ञानं प्रमाणम् । एवं तज्ज्ञानं तज्ज्ञानं च प्रमाणमिति सङ्ख्याकारानुभवत्वप्रसङ्ग इति चेन्न । निर्दोषत्वनिश्चयदशायां ज्ञानं प्रमाणमिति साक्षिरूपनिश्चयस्यैव तत्प्रामाण्यरूपज्ञानत्वेनेष्टापादनात् घटज्ञानं यथार्थमित्याकारकसाक्षिप्रत्यक्षस्यैव तत्प्रामाण्यनिश्चयोऽपि दोषाजन्यत्वाद्यथार्थ इत्याकारत्वात् तज्ज्ञानस्यापि 'निर्दोषं ज्ञानं यथार्थम्' इत्याकारत्वेन तत्तद्विषयघटितमूर्तिप्रामाण्यनिश्चयरूपत्वोपगमात् । नच घटज्ञानं यथार्थमिति ज्ञानं यथार्थमिति, ज्ञानं यथार्थम्, इत्यस्य घटत्ववति घटत्वप्रकारकमिति ज्ञानमिति ज्ञानं घटत्ववति घटत्वप्रकारकत्ववति घटत्ववति घटत्वप्रकारकत्वप्रकारकमिति आकारत्वप्रसङ्गेन तत्प्रामाण्यज्ञानस्यापि घटत्ववति-घटत्वप्रकारकत्ववति-घटत्ववति-घटत्वप्रकारकत्वप्रकारकम् इत्याद्याकारत्वप्रसङ्गः ।

नचेष्टापत्तिः । प्रामाण्यनिश्चयनिश्चयरूपस्य वैशेषिकादिभिरनुव्यवसायत्वेनोच्यमानस्य साक्षिप्रत्यक्षस्योक्तविधतायामनुभवबाधितत्वादिति वाच्यम् । तत्तत्प्रामाण्यशरीरनिर्वचने क्रियमाणे तथा तथा पर्यवसानेऽपि घटज्ञानं यथार्थमिति ज्ञानं यथार्थम् इत्यादिप्रकारस्य साक्षिप्रत्यक्षरूपस्य घटज्ञानं यथार्थमिति निश्चयकाल एव तज्ज्ञानं यथार्थं तज्ज्ञानमपि यथार्थं तथा तज्ज्ञानादिकमपि यथार्थमित्याकारत्वात् । नहि घटज्ञानादेर्ज्ञानं साक्ष्यादिरूपमन्यदितिवत् साक्षिज्ञानं तन्निष्ठप्रामाण्यज्ञानमन्यदस्ति । नहि ज्ञानज्ञानरूपसाक्षिनिष्ठस्य प्रामाण्यवद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपयाथार्थ्यस्य नित्यनिर्दोषस्वप्रकाशात्मकसाक्षिप्रत्यक्षस्वरूपसम्बन्धविशेषरूपादन्यद्रूपमस्ति[१]। एवं च 'यद्धि येन विना न भासत' इति न्यायेन घटज्ञानप्रामाण्यविषयतानियामकस्यैव दोषादिरूपप्रतिबन्धकाभावदशायां साक्षिनिष्ठतत्तज्ज्ञानप्रामाण्यविषयतानियामकत्वात्, अन्यथा घटज्ञानं यथार्थमित्यनुभवबलेन घटज्ञानस्य घटत्ववति घटत्वप्रकारकत्वरूपविधानायाः असिद्धिप्रसङ्गात् । 'इदं ज्ञानं यथार्थम्' इत्यनुभवस्य तद्विधताया अनुभवबाधित्वादिति सुवचत्वात् ॥

---

(१) नित्यादिर्दोषादि रूपप्रतिबन्धकाभावदशायां साक्षिनिबन्धविशेषरूपादन्यच्छरमस्ति- इति पाठान्तरम् ॥

'यदि विषयनिरूप्यं हि ज्ञानमतो ज्ञानवृत्तेराद्यो विषय' इति नियमात् सम्बन्धितावच्छेदकरूपवत्तया जायमाने सम्बिन्धिनि सम्बन्धिकनिरूपणमिति नियमाच्च व्यवसायविषयत्वरूपनियामकस्य तुल्यतया धर्मधर्मिवत्-तदुभयवैशिष्ट्यमप्यनुव्यवसाये विषय इत्यङ्गीकारे स्वप्रकाशरूपानुव्यवसायस्य स्वात्मानं प्रति व्यवसायत्वात् व्यवसायत्वात्मकद्विरूपतासत्वेनोक्तनियमद्वयादेव स्वाभिन्नानुव्यवसायानुव्यवसायस्यापि व्यवसायत्वस्योचितप्रामाण्याश्रयतया स्वविषयकत्वस्यावश्यमभ्युपेयत्वात् ॥

अन्यथा परतःपक्षेऽपि व्यवसायगोचरानुव्यवसाय तद्गोचरानुव्यवसाय तद्गोचर-तद्गोचरानुव्यवसायानां निरूप्यमाण(न)स्य प्रामाण्यस्योक्तरीत्या निर्वचनारूढस्य कदाप्यनुभावो नेति वक्तुं शक्यत्वेन, तेषामपि तथा तथाविधप्रामाण्यवत्वस्याप्रामाणिकत्वापत्तेः ॥

एवं च सति आद्यघटादिसविकल्पकज्ञानानामपि याथार्थ्यपर्यायघटत्ववद्विशेष्यकत्वसमानाधिकरणघटत्वप्रकारकत्वादिप्रामाण्यानामेव प्रसिद्धिप्रसङ्गात् । नह्याद्य घटादिसविकल्पकानां निरुक्तशरीरकप्रामाण्याश्रयत्वे अनुव्यवसायादन्यत् प्रमाणमस्ति ॥

यत्र चोक्तरीत्या अनुव्यवसायस्यैव दूरे गत्वा तथा तथाननुभवेनोत्तरोत्तरप्रामाण्यसिद्धौ तुल्यन्यायेन तृतीयानुव्यवसायस्यापि प्रामाण्ये मानाभावेन यद्विषयीभूतद्वितीयानुव्यवसायस्य तद्विषयीभूतप्रथमानुव्यवसायस्य च प्रामाण्यसिद्धौ भ्रमविषयीभूतार्थवत् तद्विषयीभूतव्यवसायप्रामाण्यस्यापि साधकाभावेनासत्वप्रसङ्गात्, सजातीयविजातीयज्ञानक्रमसिद्धये 'अनुव्यवसाय'शब्दितसाक्षिप्रत्यक्षस्यानादिनित्यताया अपि स्वीकार्यत्वाच्च ॥

नचैवं सुखदुःखादिगोचरज्ञानस्य साक्षिप्रत्यक्षरूपस्य तत्वेन तदभ्युगतस्यानुभवसिद्धोत्पादविनाशौ न स्यातामिति वाच्यम् । तत्रोत्पादकविनाशानुभवस्य सुखदुःखादिरूपविषयोत्पादविनाशविषयतयैवोपपन्नत्वेनान्यथासिद्धत्वात् । अन्यथा 'धनिनो देवदत्तस्यानाशेऽपि तद्धने नष्टे नष्टोऽयम्' इत्यनुभवेन देवदत्तस्यापि साक्षान्नाशप्रसङ्गः । नचैवं घटादिज्ञानानामप्यनादिनित्यत्वप्रसङ्गः । घटादिरूपविषये सत्यपि तत्तदिन्द्रियसम्प्रयोगान्वयव्यतिरेकानुविधायितया तत्रोत्पादानुभवस्य विषयोत्पादविनाशविषयत्वेनान्यथासिध्ययोगात् । नच तत्रोत्पादविनाशानुभवो विषयेन्द्रियसम्प्रयोगोत्पादविनाशविषयतया अन्यथासिद्धिः किं न

स्यादिति वाच्यम् । विषयेन्द्रियसम्प्रयोगस्यायोग्यतया उपनायकस्य नियमेन सत्वे मानाभावेन च घटज्ञानोत्पादविनाशानुभवस्य तद्विषयत्वेनान्यथासिद्ध्ययोगात् ॥

तथा च 'नान्योऽतोऽस्ति द्रष्टा' इत्यादेरप्रसक्तनिषेधकत्वपरिहाराय जीवेश्वरभेदप्रसक्तेरवश्यं वाच्यत्वेन तस्याश्चोक्तरीत्या अनादिनित्यनिर्दोषसाक्षिप्रत्यक्षानन्यत्वेन श्रौतनिषेधं प्रत्युपजीव्यत्वेन श्रुतिजन्यज्ञानप्रामाण्यस्य साक्षिप्रत्यक्षप्रामाण्यं विना सिध्ययोगेन च तया (श्रुत्यपेक्षया-पा) साक्ष्यादिरूपप्रत्यक्षस्यैव प्रबलताया वाच्यत्वे(१) नतु श्रुतितो भेदप्रत्यक्षस्य बाध इति सिद्धम् ॥

यद्यपि 'वाचा विरूप नित्यया' 'अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा' इत्यादिना श्रुतेरप्यनादिनित्यत्वमावेद्यत इति, तस्याः साक्षिप्रत्यक्षतौल्यमविशिष्टम् । तथाऽपि श्रुतेस्तात्पर्यभ्रमसाक्षात्कारेण भ्रमजन्यत्वदर्शनात् साक्षिप्रत्यक्षस्य प्रतिबन्धकदोषसत्वे यथावद्वस्तु विषयीकारित्वाभावेऽपि अयथावद्विषयीकारित्वस्य कदाप्यभावेनोक्तरीत्या उपजीव्यत्वेन श्रुतिप्रामाण्यसिद्धि प्रयोजकप्रामाण्यकत्वेन च ततः प्रबलत्वेन तथाविधभेदग्राहिसाक्षिप्रत्यक्षाविरोधाय भेदनिषेधश्रुतिरभेदश्रुतिश्चोपचरितार्थैव वाच्येति ॥

यद्यपि च विचारावतारात् परात् श्रुतिजन्यापातप्रतीताविव(२) दोषजन्यत्वनिश्चयात् प्रामाण्यज्ञानेऽपि मानसत्वसाक्ष्यनुभवत्वसन्देहाद्विषयानवधारणं तुल्यम् ॥

तथाऽपि प्रत्यक्षत्वेन श्रुतिशरीरसाधकश्रवणप्रत्यक्षजातीयतया साक्षिप्रत्यक्षस्योपजीव्यजातीयत्वेन प्रतियोगिभेदप्रसञ्जकतयोपजीव्यत्वेन प्रामाण्यनिश्चायकतया च श्रुत्यपेक्षया प्राबल्यसाधकानेकप्रकारसत्वेन विचारदशायामपि श्रुतेः प्रत्यक्षाविरुद्ध एवार्थ इतिवत् साक्ष्यादिरूपप्रत्यक्षस्य श्रुतिविरुद्ध एव विषय इति नियमे साधकाभावेन सामान्यतो दोषाजन्यप्रत्यक्षस्य विषयः सत्य इत्यवधारणं सम्भवतीति समाने विषये प्रत्यक्षप्राबल्यं दुर्निवारमिति ॥

एतावांस्तु विशेषः । साक्षिप्रत्यक्षं सर्वात्मना नासद्विषयं, वेदजन्यज्ञानं तु नैवमिति । यद्यपि 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्' (भा-११-२१-१७) इति प्रत्यक्षस्य प्रामाण्यं

(१) 'प्रबलतया वाच्यम् । ननु' इति पाठान्तरम् ॥

(२) 'प्रत्यक्षजन्यतापात प्रतीताविव' इति पाठान्तरम् ॥

श्रुत्या आवेद्यते । श्रुतिजन्यानुभवसाध्यस्मृतिप्रामाण्यावेदनेन तज्जनकीभूतवेदजन्यानुभवस्यापि प्रामाण्यम् । तथाऽपि प्रामाण्यावधारणकार्ये साक्षिप्रत्यक्षवत् एतच्छ्रुतेः दोषाभावमात्रसापेक्षकाभावेन आकाङ्क्षादिसापेक्षत्वेन तात्पर्यावधारणसापेक्षत्वेन च विलम्बितप्रवृत्तिकत्वेन शीघ्रप्रवृत्तिकसाक्षिप्रत्यक्षसिद्धप्रत्यक्षादिप्रामाण्यानुवादकत्वमेव तस्याः इति ॥

अन्यथा स्तनन्धयस्य स्तन्यपानप्रवृत्तौ तच्छ्रुत्यर्थाननुसन्धानप्रयुक्तविलम्बप्रसङ्गः, निष्कम्पत्वाभावप्रसङ्गश्च । साक्षिप्रत्यक्षस्य श्रुतिशरीरग्राहकतयोपजीवियच्छ्रावणप्रत्यक्षं तज्जातीयत्वेन श्रुत्यपेक्षया प्राबल्यन्तु 'नरशिरः कपालं शुचिः प्राण्यङ्गत्वात्' इत्यनुमानापेक्षया तत्रासाध्यप्रसिद्धिसम्पादकतयोपजीवीय-आगमः तज्जातीययोः 'नारं स्पृष्ट्वा स्थितस्नायुसवासा जलमाविशेत्' इत्यागमस्तस्यैवेति ॥

एतेन प्रमाणाप्रमाणज्ञानयोः प्रामाण्याप्रामाण्यग्राहकतया स्वीकृतयोः साक्षिप्रत्यक्षमानसप्रत्यक्षयोः, रजतं जानामीत्येवमाकारकत्वस्य तुल्यतया किमिदं मम प्रामाण्यज्ञानं नित्यनिर्दोषस्वप्रकाशसाक्षिरूपमुत अतथारूपं मानसं ज्ञानमिति संशयस्य दुर्निरासत्वेन जातस्यापि प्रामाण्यावधारणस्य तद्व्यभिचारित्वशङ्कास्कन्दितत्वेन निष्कम्पप्रवृत्तावनुपयोग एवेति, तदर्थं स्वतःप्रामाण्यवादिनाऽप्यप्रामाण्यशङ्काऽनास्कन्दितमेवज्ञानमनुसरणीयमिति (मनुसरन् नियममिति-पा) निरस्तम् ॥

बहुवित्तव्ययायाससाध्ये(१) कर्मणि निष्कम्पप्रवृत्त्यर्थं तज्जनकीभूतज्ञाने अप्रामाण्यशङ्कायां तन्निरासार्थं सर्वेणापि प्रामाण्यावधारणस्यानुसरणीयत्वात्, दोषजन्यत्वादोषजन्यत्वाभ्यामेव मानसत्व-साक्षिरूपत्वनिश्चयसम्भवेन उक्तसंशयनिरासोपपत्तेश्च । प्रवृत्तिश्च लोके तावद् सर्वानुभवसिद्धत्वात्(वैअनुभवसिद्धत्वात्-पा) लौकिकी वैदिकी चेति । साऽपि बहुवित्तव्यय आयाससाध्या तदसाध्या चेति द्विविधा ॥

तत्रोभयत्र बहुवित्तव्ययाऽयाससाध्यप्रवृत्तौ नान्तरीयकससामग्रीबलापादिता प्रामाण्यशङ्का निवृत्तौ कर्तव्यायामपेक्षितप्रामाण्यनिश्चयो लोकवेदयोर्निर्दोषज्ञानत्वावधारणेन दोषशङ्का निवृत्तावप्रतिबद्धसाक्षिणा मनसा वा, जायते । तत्र दोषशङ्कानिवर्तकनिर्दोषज्ञानत्वा-

(१) 'बहुवित्त व्ययाय अस्य साध्ये' इति पाठान्तरम् ॥

वधारणं, वेदे नित्यत्वावधारणाद्वा आप्तवाक्यत्वावधारणाद्वा । लोके तु प्रात्यक्षिकज्ञानादौ तदवधारणमननुगतकारणेभ्यः । एतावांस्तु विशेषः । वेदे नित्यत्वादिना निर्दोषत्वावधारणं प्रमारूपमेव इतरत्र तु प्रमाप्रमोभयरूपमिति । तत्र लोके निर्दोषज्ञानत्वावधारणानन्तरं निवृत्तायां दोषशङ्कायाम् अप्रतिषिद्धेन साक्षिणा मनसा वा प्रामाण्यावधारणे जाते ततः प्रवृत्तस्य प्रवृत्तिसम्पादितसंवाददर्शने सति संवादिप्रवृत्तिजनकं ज्ञानं वस्तुतो निर्दोषं विसंवादिप्रवृत्तिजनकं तु दोषजन्यमिति राशिद्वयस्य विभागेन निश्चये सति दोषजन्यज्ञाने प्रामाण्यस्य सत्वात् तद्ग्राहकः साक्षीदोषजन्यज्ञाने तु प्रामाण्यस्य बाधितत्वात् तत्र तद्ग्रहो मानस इति निश्चयसम्भवात् कथं तदुभयभेदानवधारणमिति ।।

यत्र च ज्ञाने दोषशङ्का वा प्रामाण्यविरोध्युपस्थितिर्वा क्वचित् क्वचित् सामग्रीविरहान्नोत्पन्नं तत्तज्ज्ञानप्रामाण्यं प्रति बाधकाभावात् स्वत एव गृह्यते, तत एव स्वतो गृहीतप्रामाण्यात् ज्ञानादेव निःशङ्काप्रवृत्तिश्च जायते । तत्रापि यत्र प्रवृत्तिसंवादो दृष्टः तज्ज्ञाने प्रामाण्यं साक्षिणैव निश्चीयते, यत्र तु प्रवृत्तिसम्वाद एव दृष्टः तत्र मनसैव प्रामाण्यं निश्चीयते इति पश्चात् प्रामाण्यग्राहकयोर्भेदोऽवधार्यते । तथा विसंवादिप्रवृत्तिजनकम् अदोषजन्यमप्रमाणं, संवादिप्रवृत्तिजनकं तु दोषाजन्यं साक्षिणैव निश्चितप्रामाण्यं चेत्यनुमीयत इति तयोः प्रामाण्यग्राहकयोः साक्षित्वमानसत्वाभ्यां भेदावधारणं न दुर्लभमिति । तथाचोक्तं 'यत्किञ्चिद्व्यभिचारस्याद्दर्शनं मानसं हि तत्'(अ-३-४-५,६) इति(१) । ननु निश्चितप्रामाण्यमेव ज्ञानं स्वविषयनिश्चायकं यदि तदा भ्रमादेव यत्र निष्कम्पप्रवृत्ति तत्र तदेव भ्रमरूपं ज्ञानं निश्चितप्रामाण्यं सदेव तादृशप्रवृत्तिजनकमित्यापतितम् । तत्र च प्रामाण्यनिश्चयः मानस एव वाच्यः ।।

अन्यथा तत्र प्रामाण्यनिश्चयस्य साक्षिरूपत्वे, भ्रमत्वावधारणात्(भ्रमत्वानिर्वाहात्-पा) अप्रमाणज्ञाने प्रामाण्यं गृह्णतो भ्रमत्वात् । साक्षिणस्तु धर्मिग्राहकमानेन प्रमात्वेनैव सिद्धत्वात् । नचाप्रमाणे प्रामाण्यनिश्चयस्यास्तु मानसत्वं, तथासति किमनिष्टमिति वाच्यम् । तस्य प्रमाणीभूतनिष्कम्पप्रवृत्ति(निश्शङ्कप्रवृत्ति-पा)क्षम-प्रथमज्ञान-प्रामाण्यनिश्चय-

(१) 'यत् क्वचिद् व्यभिचारी स्याद् दर्शनं मानसं हि तत्' इति अनुव्याख्यान पाठः ।।

रूपत्वप्रयोजकतया निश्चितप्रामाण्यत्वस्य वाच्यत्वेन ज्ञानान्तरेण तथात्वे तस्याप्येवम् इत्यनवस्था प्रसङ्गात् । स्वेनैव च तथात्वे प्राभाकरमत इव प्रथमप्रामाण्यग्राहकरूप-मानसानुव्यवसायस्यापि वृत्तिरूपस्य त्वदभिमतसादिवत् स्वविषयत्वरूपस्वप्रकाशत्वप्रस-ङ्गादिति चेन्न । 'सर्वं प्रमेयमि'ति सामान्यलक्षणा जन्यज्ञानवत् 'सर्वं ज्ञानं गुण' इत्यादि-शब्दजन्यज्ञानवच्च वृत्तिरूपस्यापि प्रामाण्यग्रहभ्रमरूपमानसानुव्यवसायस्य स्वप्राकशताया इष्टत्वात् । अन्यथा= अनुपपत्त्या ज्ञानविशेषस्य स्वप्रकाशत्वाङ्गीकारे, प्रवृत्तिरूपज्ञानमात्र-स्यान्यथानुपपत्त्यभावेन स्वप्रकाशत्वाकल्पनात् साक्ष्यपरनामकनित्यनिदोषजन्यस्वप्रकाश-भूतानुव्यवसायेनैव दूरेगत्वा अवश्याभ्युपेयेन कृतकार्यतया वृत्तिज्ञानमात्रस्य स्वप्रकाशत्वेना-न्यथासिद्धप्रमाणानवताराच्च ॥

एतेन 'अयं घटः' इति ज्ञानविषयं ज्ञानत्वात्, सर्वं ज्ञानं गुण इति शब्दजन्यज्ञानवत् साक्षिरूपज्ञाने च ईश्वरीयज्ञानवच्चेति । नचाप्रयोजकता । लाघवेन ज्ञानज्ञानत्वस्यैव स्वप्र-काशत्वे तन्त्रत्वात् । तथा चायं घट इत्यादिवृत्तिज्ञानमात्रस्य स्वप्रकाशत्वेन सिद्धत्वात् घटादिज्ञानानामेव 'घटमहं जानामि' 'पटमहं जानामि' इत्येवमाकारत्वेन मानसभ्रमवत् तत्तत्प्रमितेनेव स्वप्रामाण्यनिश्चयरूपत्वसम्भवे किं नित्यनिर्दोषस्वप्रकाशभूत-साक्षिपर-नामकसाक्ष्यपरनामकानुव्यवसायाङ्गीकारेणेति निरस्तम् ॥

'एतावन्तं कालं सुखम् अहमस्वाप्सम् न किञ्चिदवेदिषम्' इत्यादि सुप्तोत्थितपरामर्श-कल्प्यसुप्तिकालीनसुखादिगोचरानुभवस्य दुर्वारत्वात्, ज्ञानकरणमात्रोपरमस्यैव सुप्तित्वात् तदापि करणजन्यज्ञानाङ्गीकारे तत्कालस्य असुप्तित्वप्रसङ्गात् । विस्तृतं चैतदन्यत्र ॥

**'चिद्रूपत्वादकर्मत्वात् स्वयं ज्योतिरिति श्रुतेः।**
**आत्मनः सम्प्रकाशत्वं को निवारयितुं क्षमः'**

इति वदता परेणाप्यात्मस्वप्राकशत्वस्यात्यागाच्च । अनन्यथासिद्धप्रमाणेन सिद्धस्य साक्ष्य-परनामकनित्यनिर्दोषानुव्यवसायस्य वृत्तिरूपज्ञानमात्रस्य स्वप्रकाशत्वेऽप्यत्यक्तव्यत्वाच्चेति । तस्माज्जीवेश्वरभेदादि-ग्राहकनित्यनिर्दोषस्वप्रकाशसाक्षिप्रत्यक्षाविरोधाय तद्भेदनिषेधश्रुतिस्त-दभेदश्रुतिश्चोपचरितार्थैव स्वीकार्या नतु मुख्यार्थेति सिद्धम् ॥

एतेन प्रत्यक्षं भाविबाधकशङ्काग्रासात् न स्वविषयसत्तानिश्चयरूपमिति निरस्तम् । धर्मिग्राहकमानेन जीवेश्वरभेदादिग्राहकसाक्षिप्रत्यक्षस्य नित्यनिर्दोषतयैवावधारणात् तद्विषये तादृशशङ्काया एवाप्रसरात्, अन्यथा दोषजन्यचरमवृत्तिविषयेऽपि बाधकशङ्काभावित्वज्ञान-सम्भवेन वेदान्तार्थावधारणाय तदुपाये श्रवणादौ प्रवृत्त्यभावापत्तेः ॥

किञ्च परीक्षितवह्न्यौष्ण्यादिगोचरप्रत्यक्षे जीवेश्वरभेदादिगोचरप्रत्यक्षे च क्लृप्तस्य बाधकस्याभावात् शुक्तिरूप्यादिप्रत्यक्षदृष्टान्तेन प्रत्यक्षत्वादिना कल्प्यमानमपि, तच्च बाधकं किं भेदमेव गोचरयेत्? उताभेदं? यद्वा यत्किञ्चिन्निरालम्बनज्ञानयोगात्?। नाद्यः । तस्यैव भेदसाधकत्वात् । द्वितीये तदन्यस्तद्विरोधी तदभावो वा नञर्थो वाच्यः, पक्षत्रयेऽपि दुष्प-रिहारो भेदः । तदन्यत्वे तद्विरोधतदभावत्वयोरयोगात् भेदाभावादिग्राहिणापि प्रतियोगि-विलक्षणतयैव स्वविषयस्य ग्राह्यत्वाच्च ॥

वैलक्षण्यस्यैव वैधर्म्यापरनामकस्य भेदत्वात् । नच वैलक्षण्यस्य वैसादृश्यरूपत्वा-द्वैसादृश्यस्य च सादृश्यवद्भेदघटितमूर्तित्वेन भेदनिरूप्यत्वे आत्माश्रयप्रसङ्ग इति वाच्यम् । सादृश्यवद्वैसादृश्यस्य भेदनियतत्वेऽपि भेदनिरूप्यत्वात् सादृश्यवत्तस्य पदार्थान्तरत्वोप-गमात् । अन्यथा 'केतकीगन्धसदृशः सर्पगन्धः' इत्यबाधितानुभवसिद्धसादृश्यस्य सामान्ये च भूयांसि गुणावयवकर्मणाम् इति नैयायिकाद्युक्तसादृश्यरूपत्वानुपपत्त्या तदनुभवस्य निरालम्बनत्वप्रसङ्गात् । नचैवं घटपटयोरिव परमेश्वरस्य मत्स्यादितदवताराणां च परस्पर-वैलक्षण्येन तन्निमित्तो भेदः(तन्नियतो भेदः-पा) स्यादिति वाच्यम् । तत्र प्रत्यक्षादेः अप्रसरेण परस्परवैलक्षण्यासिद्धेः । प्रत्युत –

'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावविशिष्यते'

इति परमेश्वरस्य तदवताराणां च पूर्णत्वप्रतिपादनमुखेन अभेदेनावशेषस्यैव श्रुतत्वाच्च ॥

'कृष्ण केशोहि यादव'[१] इति स्मृत्यापि तदभेदावेदनाच्च । 'यदात्मको भगवान् तदा-त्मिका व्यक्तिः' इति श्रुत्या तत्तद्देहाभेदस्यैवावेदनाच्च। तस्माद्भेदाभावादिग्राहिणापि बाधकेन

(१) गीतातात्पर्ये (१३-३) उदाहृतनारायणश्रुतिः ॥

प्रतियोगिविलक्षणतयैव स्वविषयो गृह्यत इत्येव वाच्यम् । औदासीन्येन प्रवृत्तस्येदमिति ज्ञानवदबाधकत्वापातात् । अत एव न तृतीयः । एतेन बाधकं भेदभ्रमाधिष्ठानतत्वगोचरमिति निरस्तम् । तस्याऽपि भेदाद्भेदाभावे भेदविलक्षणत्वेनाग्रहणेच तज्ज्ञानस्य भेदबोधकत्वायोगात् ॥

किञ्च 'नायं भेद' इति वा, 'नास्त्यत्र भेद' इति वा, 'अन्यदेव भेदात्मना प्रत्यभात्' इति वा, बाधकज्ञानेन भवितव्यं, नेदं रजतमित्यादिवत् । तदेतत् सर्वथा भेदावगाहीति कथं तद्बाधकम् एकमेवानेकात्मना प्रत्यभादिति ज्ञानं बाधकमिति चेन्न । एकानेकयोर्वस्तुतो भेदाभावे वैलक्षण्याग्रहे च तस्य बाधकत्वायोगात् । एवं च –

भेदाद्भिन्नतया स्वार्थं बाधधीर्गाहते न वा ।
आद्ये भेदस्थिरोऽन्त्येतु न सा स्याद्भेदबाधिका ॥

तस्मात् क्लृप्तविषयत्वान्नान्योन्याश्रयादेरुत्थानम् उत्थितस्य वा भवेदाभासत्वम् ॥

एतेन यदुक्तं खण्डने निर्वचनवादिनीदं शोभते नास्मासु प्रतिभासमानोऽयं भेदः । स्वरूपादिपक्षान्तर्भावबहिर्भावाभ्यां सत्वाभ्यां वा अन्येनापि वा धर्मेणानिर्वाच्य इत्यङ्गीकारादिति निरस्तम् । तत्र तर्कबाधमात्रेणानिर्वाच्यत्वे ऐक्यस्यापि तत्प्रसङ्गात् ॥

किञ्च त्वयाऽप्यनृतजडदुःखपरिच्छिन्नाद्यनात्मके ब्रह्मण्यनृतादि-व्यावृत्तिर्ब्रह्मज्ञानाबाध्येति वाच्यम् । शून्याद्यनात्मके घटादौ शून्यादितः स्वज्ञानाबाध्यभेददर्शनात् । अन्यथा अनृतादिव्यावृत्तिबाधेन तद्भ्रान्तिनिरासकस्य सत्यज्ञानादिवाक्यस्य भ्रान्त्यन्तरहेतुत्वं स्यात् ब्रह्मण्यनृतत्वादेरधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वं च न स्यात् । नच प्रतियोगिनोऽनृतत्वात् ततो व्यावृत्तिरप्यनृता । तथासति शुक्तौ रूप्याभेदवद् बाधगम्यस्य तद्भेदस्यापि प्रातिभासिकत्वापत्त्या भ्रान्तिबाधायोगप्रसङ्गात् । एवमात्मनि देहात्मज्ञानाबाध्यभेदाभावे देहात्मैक्यस्य मिथ्यात्वं न स्यादिति त्वदीया तदैक्याध्यासोक्तिरयुक्ता स्यात् । तथा नित्यस्य अनित्यत्वात् तात्त्विकभेदाभावे साधनचतुष्टयान्तर्गता[१] नित्यानित्य-

(१) नित्यानित्यवस्तुविवेकः, इहामुत्रार्थ भोगविरागः, शमदमादि सम्पत्तिः, मुमुक्षत्वम् इति साधनचतुष्टयमिति जिज्ञासाधिकरण तात्पर्यचन्द्रिकायाम् उक्तम् ॥

वस्तुविवेको भ्रमः स्यादिति, तेनानित्यहानेन नित्ये प्रवृत्तिरयुक्ता स्यात् । एवं च प्रपञ्चे सद्वैलक्षण्यादिरूपमनिर्वाच्यत्वम् अधिष्ठानज्ञानाबाध्यमिति वाच्यम् । अन्यथा अधिष्ठान-ज्ञानाबाध्यसत्वापातात्, जगन्मिथ्यात्वप्रमाणानामतत्त्वावेदकत्वापाताच्च ।।

एवमभेदस्य भेदातात्त्विकभेदाभावे तयोरभेदस्तात्विकः स्यादिति भेददोषैरभेदबाधनमभेद-प्रमाणैर्भेदसाधनं च स्यात् । नच तात्विकभेदाभावेऽपि तात्विकभेदाभावमात्रेण व्यवस्थेति वाच्यम् । अभेदाभावे भेदध्रौव्यात् । परस्परविरोधे हि प्रकारान्तरव्यवस्थितिरिति न्यायात् । नच व्यावहारिकभेदाद् व्यवस्था । कल्पितभेदेनाकल्पितकार्यात् प्रतिबन्धात्, अन्यथा अग्नौ 'गुञ्जापुञ्जोऽयं न वह्नि'रित्यारोपित वह्निभेदमादाय वह्निं स्पृशतो दाहप्रसङ्गात् । 'वह्निगुञ्जा-पुञ्जयोरिव' 'तेजस्तिमिरयोरिव' च जीवब्रह्मणोरपि कल्पितविशेषव्यावहारिकभेदेन तात्विक-भेदस्य सामानाधिकरण्याभावापत्तेश्च,व्यावहारिकभेदस्य तात्विकभेदविरोध नियमात् ।

एवं च[१] –

'ब्रह्मणोऽनृततो भेदः सत्यश्चेद् भेदखण्डनम् ।
व्याहतं स्यादसत्यश्चेत् ब्रह्मणोऽनृतताभवेत् ।।१।।
भेदाभेदभिदा चेत् स्यात् कथं भेदो निवार्यते ।
भेदाभेदभिदा नो चेत् कथं भेदो निवार्यते ।।२।।'

किञ्च भेदस्य व्यावहारिकसत्वरक्षार्थमेव त्वयाऽप्यन्योन्याश्रयादिकमुद्धार्यम् । नह्यन्योन्या -श्रयादिदोषदुष्टस्य व्यावहारिकतापि दृष्टचरी । नहि मृदवास्तवीत्येतावता स्वजन्यघट-जन्या । अन्यथा आकाशवाय्वादेरेवान्योन्यमुपादानत्वाधिष्ठानत्वे स्यातामिति अज्ञान-ब्रह्मणोस्ते न कल्प्ये स्याताम् । [२]यदि च अन्योन्याश्रयादिदोषदुष्टस्याप्यविद्यासामर्थ्या-द्व्यावहारिकता तर्हीश्वरसामर्थ्यात् तादृशस्यापि पारमार्थिकतैवाऽस्तु ।।

अपि च कथम् अत्रापादनक्रमः?।

(१) एवं च ब्रह्मणोऽनृततो....इत्यारभ्य द्वेषस्तु किं कृतः इत्यन्तं वाक्यं न्यायामृते-२-परिच्छेदे-१४-भङ्गे-सामान्यतो भेद खण्डनोद्धार-भागं- भागशः अनुकरोति ।।

(२) 'यदि च नान्योन्याश्रयादि 'इति ताळपत्रस्थ पाठः ।।

१-यदि भेददर्शनं स्यात् तर्ह्यन्योन्याश्रयादिकं स्यात् । नच तद्युक्तम् । तस्मान्नास्ति भेददर्शनमिति वा ।

२-यदि भेददर्शनं वास्तवं स्यात् तर्ह्यन्योन्याश्रयादिकं स्यादिति वा ।

३-यदि भेददर्शनं प्रमा स्यात् तदा अन्योन्याश्रयादिकं स्यादिति वा ।

४-यदि भेददर्शनं धर्मिप्रतियोग्यादिसापेक्षं स्यात् तदान्योन्याश्रयादिकं स्यादिति वा ॥

नाद्यः । यदि भेददर्शनं न स्यात् तदा परः परमतमिव स्वमतमपि निराकुर्यात् । सकलव्यवहारकविधुरश्च स्यात् इत्यादि प्रतिकूलतर्कपराहतेर्भेदादर्शने तन्निरासायोगेन विपर्यया पर्यवसानाच्च । न द्वितीयः । वास्तवेऽन्योन्याश्रयादेरभावेन व्याप्तिवैकल्यात् । दर्शनावास्तवत्वेऽप्यभेदवद् भेदस्यापि सत्वोपपत्तेश्च । न तृतीयः । त्वया स्तम्भात् कुम्भस्य भेदप्रतीतौ कुम्भात् स्तम्भस्य भेदधीरिति प्रतीतावेवान्योन्याश्रयस्योक्तत्वेन चोरापराधवत् माण्डव्यस्य शूलप्राप्तिवत् प्रतीतिगतेनान्योन्याश्रयेण प्रमात्वनिषेधायोगात् । नच प्रतीतेर्विचारासहत्वेन भ्रमत्वम् । विचारासहप्रपञ्चान्तर्गतचरमवृत्तिवत् प्रमात्वोपपत्तेः । जीवस्य ब्रह्मैक्यप्रतीतौ ब्रह्मणो जीवैक्यधीरित्यैक्येऽप्योन्योन्याश्रयस्य वक्ष्यमाणत्वाच्च । रूप्यादिभ्रमस्यापि त्वया अख्यातिवाद्युक्तहेत्वाभावादिबाधकानामुद्धृतत्वेन विचारासहत्वाच्च । चतुर्थेऽपि सापेक्षतामात्रं निवर्ततां भेददर्शनस्य किमायातं? प्रकारान्तराभावात् । स्वयमपि निवर्तत इति चेन्न। प्रतीतेः परेणाऽप्युपेक्षणीयत्वेन निवर्तयितुमशक्यत्वात् । प्रमात्वनिवर्तने च सामर्थ्याभावस्योक्तत्वात् । अन्यथा स्वाभिमतऽद्वैतमपि न सिद्ध्येत् । किञ्च त्वत्पक्षे घटस्य पटाद्भेद इव घटेनाभेदोऽपि व्यावहारिकः । उक्तरीत्या ब्रह्मण्यनृतव्यावृत्तिरपि तात्त्विकीति कथमभेदमुपेक्ष्य भेदे प्रद्वेषः । एवं च –

'ब्रह्मण्यनृतभेदस्य सत्यत्वे कलशे स्वतः ।
अभेदस्य च मिथ्यात्वे भेदे द्वेषस्तु किं कृतः' इति ॥ (१)

॥ इति सामान्यतो भेदखण्डनोद्धारः ॥

(१) न्यायामृते -२ -परिच्छेदे -सामान्यतो भेदखण्डनोद्धारभङ्गे-उदाहृतश्लोकोऽयम् ।

## ।। अथ विशिष्यभेदखण्डनोद्धारः ।।

सम्भवति च भेदस्य द्वित्वपृथक्त्ववैधर्म्यान्योन्याभावस्वरूपरूपत्वेन निर्वाहः । भेदस्य द्वित्वस्वरूपरूपत्वे 'ऋतं पिबन्तौ' इत्यादौ ऋतपानकर्तृत्वेनोपस्थितयोः परमेश्वर-रूपयोर्द्वित्वेऽपि तयोरत्यन्ताभेदोपगमात् अतिप्रसङ्गेति दोष उक्त इति चेन्न । द्वित्वविशेषस्यैव भेदव्यवहारपरत्वोपगमात् तद्वतितत्प्रकारक-ज्ञानत्वमनियतभ्रमान्यज्ञानत्वस्य प्रमाणत्व-व्यवहारपरत्ववत् द्वित्वे विशेषस्तु वस्तुतो विरुद्धधर्मद्वयसमनियतत्वरूपधर्मयोश्च विरुद्धत्वं नाम परस्परविरहव्याप्यत्वादिरूपमिति । एवं पृथक्त्वाविशेषोऽपि भेदव्यवहारपरमुक्तरीत्यैवा--तिप्रसङ्गनिरासस्सम्भवात् ।।

नचैवमावश्यकत्वात् घटत्वविरह एव पटादौ घटभेदः पटत्वादिविरह एव घटे पटादिभेद इत्यस्त्विति वाच्यम् । तस्य भेदव्यवहारपरत्वेऽप्युक्तरीत्या द्वित्वविशेषस्य पृथक्त्वविशेषस्य च तद्व्यवहारपरत्वानपायात् । अन्यथा तद्वति तत्प्रकारकज्ञानत्व इव भ्रमान्यज्ञानत्वादौ प्रमात्वव्यवहारपरत्वाभावप्रसङ्गात् । तद्व्यवहारस्तत्र मुख्यो नेति चेत् तर्हि द्वित्वपृथक्त्व-विशेषयोरपि भेदव्यवहारो मुख्योऽस्तु ।।

किञ्चाभेदव्यवहारविरोधिस्वरूपस्य घटत्वादिधर्मविरहवत् द्वित्वविशेषेऽपि सत्वेन तस्यैव भेदपदप्रवृत्तिनिमित्तत्वेन तत्रापि भेदव्यवहारो मुख्य एव । नहि प्रवृत्तिनिमित्तवत्वाविशेषे स एव व्यवहारः कचिन्मुख्यः कचिदमुख्यः इति शक्यमभ्युपगन्तुम् । अभेदव्यवहारविरोधिस्वरूपत्वं नाम तद्व्यवहारकारणज्ञानप्रतिबन्धकज्ञानविषयतावच्छेदकस्वरूपत्वम्। एवं वैधर्म्योपि भेदः । नच वैधर्म्यस्य वैलक्षण्य-वैसादृश्यापरपर्यायस्य सादृश्यवद्भेदघटितमूर्तित्वेन भेदनिरूप्यत्वा-दात्माश्रय इति वाच्यम् । सादृश्यवद्वैधर्म्यस्य पदार्थान्तरत्वेन भेदघटितत्वात् पूर्णावयव-कर्मघटितमूर्तिसादृश्यस्य गन्धादिगुणादिष्वसत्वेन 'केतकीगन्धसदृशः सर्पगन्धः' इत्याद्य-बाधितप्रतीतिनिर्वाहकतया तत्र पदार्थान्तररूपस्यैव सादृश्यस्यैवापेक्षितव्यत्वात् । एवमन्यो-न्याभावोऽपि 'भेद'व्यवहारपदम् । अत एव स्वरूपभेदमङ्गीकुर्वाणा अपि, वैशेषिकादयः तत्तद्धर्मिस्वरूपस्य तस्यानुगतत्वेनानुगतभेदव्यवहारप्रयोजकत्वायोगेन तत्तत्प्रयोजकतया तद्धर्मस्वरूपातिरिक्तमन्योन्याभावनामानं भेदमुररीकुर्वते ।।

नचैवमपि संसर्गाभावेऽनवस्थाभिया अभावाधिकरणकाभावो नाभ्युपेय इति तत्र स्थले संसर्गाभावरूपधर्मिस्वरूपेणैव भेदव्यवहारनिर्वाह आवश्यक इति अननुगतभेदव्यवहारायोगतादवस्थ्यमिति वाच्यम् । अधिकरणभूताभावसजातीयाभावस्यैव तदनधिकरणत्वाभ्युपगमेन विजातीयाभावाधिकरणाभावस्याङ्गीकारात् । नचानुगतेन घटादिधर्मात्यन्ताभावेनैव पटादावनुगतभेदव्यवहारोपपत्तेस्तदतिरिक्तान्योन्याभावे मानाभाव इति वाच्यम् । उक्तरीत्या अन्योन्याभावापरनामकभेदस्य संसर्गाभावविशेषरूपत्वे 'इदमिदं न' इति भेदप्रतीतेरपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यधिकरणसंसर्गज्ञानसाध्यत्वापत्तेः । नहि 'घटः पटो न' इति भेदप्रतीतौ घटत्वतावच्छिन्नघटत्वस्य पटाद्यधिकरणे संसर्गबुध्यैवोत्पत्तिरित्यस्ति । घटत्वप्रकारक-घटरूपप्रतियोगिज्ञाने पटाद्यधिकरणप्रत्यक्षे च सति घटत्वत्वप्रकारकघटत्वज्ञानविलम्बात् 'घटः पटो न' इति भेदप्रतीतिविलम्बादर्शनात् ।।

किञ्चैवं घटत्वं पटादन्यदित्येव प्रतीतिप्रसङ्गः नतु घटः पटो न इति, घटत्वावच्छिन्नप्रतियोगितया प्रतीतिः । नचैवम् । अन्योन्याभावात्यन्ताभावयोर्घटत्वरूपप्रतियोगितावच्छेदकैक्याद्भेदासम्भवः । प्रतियोगितावच्छेदकाभेदवत् आरोप्य आरोप्यसम्बन्धभेदस्याप्यभावभेदे तन्त्रत्वात् । अत एवाधिकरणे प्रतियोगितावच्छेदकसंसर्गमारोप्यते । तदवच्छिन्नप्रतियोगिकान्योन्याभावोऽबद्ध इति वैशेषिकादीनाम् अभ्युपगमः ।।

एतेन अन्योन्याभाव भेद इति पक्षे 'अन्योन्य'शब्दार्थपर्यालोचनया आत्माश्रयप्रसङ्गइति निरस्तम् । तादात्म्यारोपपूर्वकप्रतीतिगोचराभावविशेषे 'अन्योन्याभाव'शब्दस्य 'यूस्त्र्याख्यौ नदी' इतिवत् परिभाषामात्रत्वात् ।।

यद्वा घटत्वादिरूपोऽसाधारणधर्म एव प्रकृते 'वैधर्म्य'शब्दार्थः । पट(भेद)व्यवहारपदम् । नच तस्य सामान्यतो धर्मत्वेन ज्ञानभेदव्यवहारकारित्वादर्शनादसाधारणधर्मत्वेन तज्ज्ञानमेव भेदव्यवहारकारीति वाच्यम् । असाधारणत्वं च घटत्वादेः तदितरावृत्तित्वे सति तद्वत् तत्त्वमेव नान्यत् । तथाच तदितरत्वं= तद्भिन्नत्वमिति भेदनिरूपणापेक्षणात् आत्माश्रय इति वाच्यम् । घटावृत्तित्वं पटत्वस्य पटावृत्तित्वं घटत्वस्येति तत्तद्धर्मस्य तत्तद्धर्म्य-

वृत्तित्वरूपत्वेष्टासाधारण्यस्य भेदघटितशरीरस्यैव सुवचत्वेन आत्माश्रयानवाकाशात् । यद्वा तत्तद्धर्मिस्वरूपरूप एव भेदोऽस्तु । तथाऽपि न कश्चित् दोषः ॥

तत्र यदुक्तं भेदस्य निरपेक्षघटस्वरूपरूपत्वे तद्वदेवभेदस्यापि निरपेक्षत्वं स्यादिति ॥ तन्न । तस्याव्याप्तेः स्वपरासम्मतेः । त्वन्मते सापेक्षायाऽप्यविद्यानिवृत्तेर्जीवब्रह्मैक्यस्य च मतद्वयेऽपि स्थितौ व्यक्तिसापेक्षस्य जातिमात्रस्य प्रतीतौ, सापेक्षस्य नीलतरत्वादि जातिविशेषस्यार्थप्रकाशात्मकज्ञानस्य ब्रह्मणि ब्रह्माभेदस्य 'अस्ति ब्रह्म' इत्यादौ काल-सापेक्षस्यास्तित्वस्य च निरपेक्षब्रह्मव्यक्त्यादिस्वरूपत्वात् व्याप्त्यभावे च अनुमानस्य तर्कस्य चाभासत्वात् । ऐक्यस्यास्वरूपरूपत्वेच सत्वेऽद्वैतहानिः । मिथ्यात्वे च तत्परस्य 'तत्त्वमसि' इत्यादेरतत्वाऽवेदकत्वं भेदस्य सत्यता च स्यात् ॥

नच 'नान्योऽतोऽस्ति द्रष्टा' 'नेह नानाऽस्ति किञ्चन' इत्यादिना जीवब्रह्मभेदस्य भेदमात्रस्य च निषेधात् न सत्यतेति वाच्यम् । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादेर्जीवब्रह्म-भेदनिषेधपरत्वस्य निरस्तत्वात् । 'नेह नानाऽस्ति' इत्यादेर्भेदनिषेधपरत्वेऽपि भेदमात्र-निषेधपरत्वाभावस्योक्तत्वाच्च । यत्र यदध्यस्तं तत्र तद्विरोधि-तज्ज्ञानाबाध्यं यथा शुक्ता-वरूप्यत्वमिति वा, यत्र यदैक्यमध्यस्तं तत्र तद्भेदस्तज्ज्ञानाबाध्यो यथा दूरस्थवनस्पत्योर्भेद इति वा, यत्र यदध्यस्तं तत्र तद्विरोधि तात्त्विकं यथा ब्रह्मण्यनृतत्वस्याध्यस्तत्वे सत्यत्वं तात्त्विकमिति वा, व्याप्तेश्च । ऐक्यस्य च निरपेक्षत्वे 'तत्त्वम्'पदार्थपराणां 'सत्यं ज्ञानम्' 'विज्ञान घन' इत्यादीनामैक्यपर-महावाक्यैकवाक्यत्वाभावेन वैयर्थ्यं स्यात् ।

नच प्रतियोगिनो भेदस्य सापेक्षत्वादैक्यं सापेक्षवदिति वाच्यम् । 'घटः पटो न' इति नञर्थस्य भेदस्यैव तादात्म्यनिषेधत्वेन वैपरीत्यस्यैवोचिततत्वात्, ऐक्ये भेदसापेक्षत्वस्य दुर्वारत्वाच्च ॥

अथ तत्र प्रतीत्योरेव सापेक्षत्वनिरपेक्षत्वे इति तयोरेव भेदः नतु तद्विषयस्य एकस्यामेव तत्तायां संस्कारसापेक्षनिरपेक्षस्मृत्यनुभवविषयत्वस्य एकस्मिन्नेव अग्न्यादौ व्याप्त्यादि-धीसापेक्षनिरपेक्षानुमितिप्रत्यक्षविषयत्वादेश्च दर्शनादिति चेत् । समं प्रकृतेऽपि । एवं च अज्ञानहानिवत् ब्रह्मरूपधीवदभेदवत्। स्वरूपत्वेऽपि भेदस्य सापेक्षत्वं हि युज्यते। अथ

तत्र स्वरूपेण निरपेक्षस्यापि ब्रह्मण अभेदत्वेन सापेक्षत्वं तर्हि स्वरूपेण निरपेक्षस्यापि घटस्य भेदत्वेन सापेक्षत्वमस्तु । प्रमेयत्वादिना निरपेक्षस्याप्यभावसादृश्यादेरभावत्वादिना सापेक्षत्वस्य स्वरूपेण निरपेक्षस्यापि दण्डादेः ब्रह्मणश्च कारणत्वेन ज्ञानत्वेन च, सापेक्षत्वस्य दर्शनात् । सप्रतियोगिकनिष्प्रतियोगिकव्यवस्थातु यदसाधारण्येन स्ववाचक-पदप्रवृत्तिनिमित्तावच्छेदेन प्रतीतौ प्रतियोगिप्रतीतिसापेक्षं तत्सप्रतियोगिकम्, अन्यत्तु निष्प्र-तियोगिकमिति । यदि च तत्रैकस्यैवार्थस्य लघुत्वकठिनत्वशब्दोल्लेखेन निरपेक्षस्यापि अगुरुत्व-अद्रवत्व-शब्दोल्लेखेन सापेक्षत्ववद् 'ब्रह्म'शब्दोल्लेखेन निरपेक्षस्याप्यभेदशब्दोल्लेखेन सापेक्षत्वं तर्हि इहापि घटशब्दोल्लेखेन निरपेक्षस्यापि भेदशब्दोल्लेखेन सापेक्षत्वमित्यस्तु ॥

एकस्यैव गमनस्य 'गच्छति' 'चलति'शब्दोल्लेखाभ्यां प्रयत्नस्य च 'करोति' 'प्रयतत' इति शब्दोल्लेखाभ्यां कर्मसापेक्षत्व-निरपेक्षत्वयोः शब्दस्वभावप्रयुक्तयोर्दर्शनात् । यदि च तत्राभेदत्वादिकमेव सापेक्षं नत्वभेदरूपो विशेष्यस्तर्हि अत्राप्यन्योन्याभावत्वरूपं भेदत्वमेव सापेक्षं नतु भेदरूपो विशेष्य इति समम् । नच तर्ह्यन्योन्याभाव एव भेदोऽस्त्विति वाच्यम् । अन्योन्याभावस्यैव स्वरूपत्वोक्तेः । उक्तं हि 'भावाभावस्वरूपत्वात् नान्योन्या-भावता पृथक्' [१]इति । उक्तं च 'न स्वरूपमात्रं भेदः किन्त्वन्योन्याभावः सच वस्तुनः सविशेषाभिन्नः' इति ॥

कथमभावस्य भावैक्यमिति चेत् अविद्यानिवृत्त्यद्वैतयोरपि कथं ब्रह्मैक्यं भावः स्वभावेन विरुद्धो नत्वन्यभावेनेति चेत् । समं प्रकृतेऽपि । अभावाभावस्य भावत्वदर्शनात् । यदि च अविद्यनिवृत्तेः ब्रह्मत्वं नाम प्राभाकरमत इवाधिकरणस्यैव निवृत्तिव्यवहारालम्बनता तर्ही-हापि घटस्यैवान्योन्याभावव्यवहारालम्बनता इत्यस्तु ॥

यदि चाद्वैतं न द्वैताभावः किन्तु तद्विरोधिभावान्तरं, द्वैताभावोपलक्षितं ब्रह्मैव वा तर्हि भेदोऽपि न तादात्म्याभावः । किन्तु तद्विरोधिभावान्तरं तदभावोपलक्षितं स्वरूपमेव वा अस्तु ॥

---

(१) 'तत्त्वविवेके' श्रीमदाचार्यैः उदाहृतश्लोकोऽयम् ॥

केचित्तु तत्तादात्म्यायोग्यत्वं वा तदैक्यप्रमिति विषयायोग्यत्वं वा तद्भेदत्वं यत्र यद्दर्शनं यत्तादात्म्याध्यास विरोधि तत्र तत्त्वं वा तद्भेदत्वमित्याहुः ।। इतरेतु 'स्ववृत्तियत्किञ्चिद्धर्मा नाधारनिष्ठयत्किञ्चिद्धर्मानाधारत्वरूपं वा स्ववृत्तिधर्माधारानिष्ठधर्माधारत्वरूपं वा स्वरूपत्वं भेदत्वम् । अनाधारत्वं चाधारत्वराहित्यं नत्वधारान्यत्वमिति नान्योन्याश्रय' इत्याहुः ।।

एतेन प्रतियोगिनिरूप्यस्य भेदस्य वस्तुस्वरूपत्वे प्रतियोगिनोऽपि वस्तुस्वरूपत्वं स्यादिति निरस्तम् । व्याप्तेः स्वपरासम्मतेः, दुःखनिवृत्तेः पुमर्थत्वेऽपि दोषाभावस्य साधकत्वप्रयोजकत्वेऽपि, अनृतव्यावृत्त्यज्ञाननिवृत्त्योरज्ञानादिप्रकाशरूपज्ञानस्य च ब्रह्म-स्वरूपत्वे अज्ञाननिवृत्तेर्मोक्षत्वेऽपि दुःखे दोषे अनृते अज्ञाने च पुमर्थत्वस्य साधकत्व-प्रयोजकत्वस्य ब्रह्मस्वरूपत्वस्य मोक्षत्वस्य चादर्शनात् । तत्राज्ञानादिकं कार्यानन्वयि-त्वेनोपलक्षणं सन्निरूपकमात्रं, नतु कार्यान्वयित्वेन विशेषणमिति चेत् । समं प्रकृतेऽपि ।।

लोके निरूपके 'लम्बकर्णमानय' इत्यादौ कार्यान्वयस्येव 'चित्रगुमानय' 'काशीवासी समागत' इत्यादौ तदनन्वयस्यापि दर्शनात् । नच व्याप्तिग्रहणेऽनुसृता लौकिकीरीति-र्व्यभिचारे नानुसरणीया । नच कर्णस्य कार्यान्वयदर्शनेन गवामपि तदापादनम् । वैपरीत्या-पत्तेः । अज्ञानादेर्ब्रह्मस्वरूपत्वापत्तेश्च ।।

ननु प्रतियोगिनः उलपक्षणत्वे कदाचित् काकाऽज्ञानेऽपि गृहज्ञानवत् प्रतियोग्यज्ञानेऽपि भेदज्ञानं स्यादिति चेत् । तर्हि अज्ञानाद्यज्ञानेऽपि कदाचित् तन्निवृत्त्यादिज्ञानं स्यात् । अथोपलक्षणस्यापि प्रतियोग्यादेर्ज्ञानमुपलक्ष्याभावसादृश्यादिज्ञानकारणं दृष्टमित्यदोष इति चेत् । समं प्रकृतेऽपि । तस्मात् प्रतियोगिन उपलक्षणत्वान्न धर्मिण्यन्तर्भावः । ।

एवं च –

'पुरुषार्थे दुःखमिव ब्रह्मण्यज्ञानवत् तथा ।
मोक्षे च मोक्षवन्नान्तर्गतं कुम्भादिकं पटे ।। १।।

तटस्थत्वेऽपि कुम्भादेरप्रतीतौ न भेदधीः ।
अज्ञानादेरप्रतीतौ तद्धान्याद्यप्रतीतिवत् ।।२।।

केचित्तु 'प्रतियोगिनो विशेषणत्वेऽपि न दोषः । शब्दोऽनित्य इत्यादौ शब्दत्वादेरिव कार्यानन्वयेऽपि विशेषणत्वोपपत्तेः' इत्याहुः ॥

ननु तथाऽपि विदारणात्मनो भेदस्य घटस्वरूपत्वे घटस्यापि विदारणम्, एवं तदवयवानामपीति परमाणुरपि नैक इति शून्यतापत्तिरिति चेन्न । अविदारणात्मकस्याभेदस्य ब्रह्मस्वरूपत्वे पारमार्थिकस्य ब्रह्मणो व्यावहारिकेण घटादिना प्रातिभासिकेन रूप्यादिना शून्येन चाप्यविदारणेन तदैक्यं स्यादिति साम्यात् । यदि च तत्र जीवाभेद एव ब्रह्मस्वरूपं नतु घटाद्यभेदः तर्ह्यत्रापि पटादिभ्यो भेद एव घटस्वरूपं नतु स्वस्मादिति समम् । एवं च

विदारकत्वेऽपि पटाद् घटस्य स्याद्विदारणम् ।
नतु स्वतो यथा ह्यैक्यं स्वेनैव न परेण तु ॥

किञ्च भेदस्य स्वस्माद्विदारकत्वेऽपि अवयवानां विभागेन सूक्ष्मत्वमेव स्यात् नतु शून्यत्वम्, नहि शून्यानां संयोगात् कस्यचिज्जन्म । येनावयवानां विभागे शून्यपरिशेषः स्यात् ॥

अपि च विदारकमपि लवित्रादिस्वयं यत्सम्बन्धि तदेव विदारयति, नतु स्वात्मानम् । ततो धर्मभेदवादे कथञ्चिदेवं वक्तव्यं नतु स्वरूपभेदवादे । वस्तुतस्तु भेदो न विदारकः किन्तु विदारणम्, भावसाधनत्वात् भेदशब्दस्य । तथा च घटोऽपि विदारणं स्यात् नतु घटस्य ।

नहि विदारणस्य विदारणम्, स्ववृत्तिविरोधात् । एवं च –

'विदारकस्य भेदस्य घटत्वे हि घटोऽपि च ।
विदारणं स्यान्न घटे स्वस्य स्वस्मिन्न वृत्तितः'

अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु न विभागरूपविदारणात्मा भेदः किन्तु अन्योन्याभावः ।

'क्रियावाचित्वमाख्यातुम् एकैकोऽर्थ प्रदर्श्यते ।
प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ॥'

इति वचनेन भिदेविर्भागोऽन्यत्वं चार्थो यतः । अन्यथा संयुक्तयोरोष्ठयोः भिन्नाविति व्यवहारो न स्यात् ।। उक्तं च –

'भेदस्य च स्वरूपत्वे ये वदन्ति च शून्यताम् ।
अद्भुतास्ते यतोऽन्यस्य प्रतियोगित्वमिष्यते । १।।

प्रतियोगिनो हि भेदोऽयं नतु स्वस्मात्कथञ्चन ।
विभागेनाल्पतैव स्यात् कुत एव च शून्यता ।।२।।

न शून्यानां हि संयोगाद् भावो वस्तुन इष्यते ।
विदारणार्थो धातुश्च विभागगुणवाचकः ।।३।।

अविदारणेऽपि ह्यास्यस्य भिन्नावोष्ठौ तु तस्य हि ।।

इति [१]।।

एतेन अनेकत्वैकार्थसमवायिनो भेदस्य घटस्वरूपत्वे घटस्याप्यनेकत्वं स्यात् । तथा तदवयवानामपीति तद्विरुद्धमेकत्वं क्वापि न स्यात् । एकत्वाभावे चानेकत्वमपि न भवेत् । तथा च सङ्ख्यारहितस्य द्रव्यस्य शून्यतापत्तिरिति निरस्तम् । ।

एकत्वैकार्थसमवायिनो घटेन घटाभेदस्य घटस्वरूपत्वे घटस्य पटेन सह धर्मिज्ञानाबाध्यमनेकत्वं ब्रह्मणा च ब्रह्माभेदस्य ब्रह्मस्वरूपत्वे भावाद्वैतमते ब्रह्मणः अभावेन सहाप्यनेकत्वं न स्यादिति साम्यात् । अथ स्वेनैकत्वेऽप्यन्येन सहानेकत्वं न विरुद्धं, तर्ह्यन्येन सहानेकत्वेऽपि स्वेनैकत्वमविरुद्धमिति समम् ।।

किञ्च भेदस्य सादृश्यादिवदन्यनिरूप्यस्यैकमात्रवृत्तित्वादनेकत्वैकार्थसमवायित्वमसिद्धम् । अपि च भेदस्यानेकत्वैकार्थसमवायित्वेऽपि यत्र भेदात्मको घटस्तस्यानेकत्वं स्यात् नतु घटस्य, कथं चानेकत्वबलेनैकत्वाभावमुक्त्वा पुनस्तेनानेकत्वाभावं वदतः न पूर्वोत्तरविरोधः । न ह्यत्र काप्यस्मद्रीतिरस्तीत्युक्तम् । येन परीत्याऽपादनमिति निस्तारः स्यात् ।।

---

(१) समयपादे वैशेषिकाधिकरणे अनुव्याख्याने उक्तम् ।।

एतेन 'भेदस्य धर्मिस्वरूपत्वे संशयादिकं न स्यात् । धर्मिज्ञानस्य संशयादिहेतुत्वात् तज्ज्ञानेनैव च तदभिन्नस्य भेदस्य ग्रहणात् भेदज्ञानस्य च संशयादि विरोधित्वादिति' निरस्तम् ।।

प्रत्यक् चैतन्ये स्वयं भातेऽपि तदभिन्नस्यैक्यस्यानवच्छिन्नानन्दस्य चाप्रकाशवद् धर्मिणः प्रकाशेऽपि तदभिन्नस्य भेदस्याप्रकाशोपपत्तेः । ऐक्यस्य प्रकाशेच तत्र विप्रतिपत्तिर्न स्यात्, तदुपदेशानर्थक्यं च स्यात् । नच स्वरूपज्ञानेनैक्यस्य स्वतो भातेऽप्यज्ञानविरोधिन्यावृत्तेर-भावात् विप्रतिपत्त्यादीति वाच्यम् । प्रत्यगर्थवदेव वृत्त्यभावेऽपि स्वतो भानेनैक्येऽपि विप्रतिपत्त्याद्ययोगात् । यदि चैक्यस्याविद्यावरणादप्रकाशः तर्हि भेदस्यापि सादृश्यादि-दोषादप्रकाश इति समम् ।। एवं च –

'स्वरूपत्वेऽपि भेदस्य युज्यते संशयादिकम् ।
स्वप्रभप्रत्यगात्मत्वेऽप्यभेदे संशयादिवत्' ।।

किञ्च भेदः स्वरूपेण प्रकाशत एव । उक्तरूपेण भेदत्वेन तु न प्रकाशते । भेदत्वे भेदज्ञानमेव संशयादिविरोधि ।।

किञ्च संशयस्थलेऽपि भेदस्य भेदत्वेन अप्रतीतिरप्यसिद्धा । प्रायः सर्वतोभिन्नमेव हि वस्तु तत्र प्रतीयते । अन्यथा सर्वकोटिकः संशयः स्यात् । किन्तु तस्य घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनेके धर्माः सन्ति तत्र सादृश्यादिवशात् यत्प्रतियोगिकत्वं न भाति तत्र संशयः । नहि निरूपकभेदेन निरूप्यभेदः । एकघटनिरूप्ययोः प्रागभावध्वंसयो-र्भेददर्शनात् । अनेकविषयनिरूप्यस्यापीश्वरज्ञानादेरनेकद्वैतनिरूप्यस्याद्वैतस्य चैक्यदर्शनाच्च ।।

केचित्तु 'स्वरूपभेदवादे भेदज्ञानं न भ्रमविरोधि । किन्त्वधिष्ठाने आरोप्यविरुद्धधर्मादि-ज्ञानम्' इत्याहुः ।।

केचित्तु 'अदोषमूलताद्रूप्येणाप्रतीतौ प्रतीतिः स्वरूपभेदलक्षणम् । शुक्तेः शुक्त्यात्मत्वेना -प्रतीतिश्च दोषमूलेति नातिव्याप्तिः । एवं च भ्रमस्थले ताद्रूप्येणाप्रतीत्यभावादभेद भ्रमो-पपत्तिः' इत्याहुः ।।

एवं च –

'सापेक्षत्वात्सावधेश्च तत्वेऽद्वैतप्रसङ्गतः ।
एकाभावादसन्देहात् न रूपं वस्तुनो भिदा'

इति श्लोकः ।

सापेक्षत्वात्सावधेश्च तत्वे द्वैतप्रसङ्गतः ।
नैकाभावादसन्देहान्न रूपं वस्तुनोऽभिदा'

इति पठनीयः । एतेन भेदस्य घटस्वरूपत्वे घटभेदयोरेकतरपरिशेषः स्यादिति निरस्तम् ॥

ऐक्यस्यानन्दस्य ज्ञानस्यच ब्रह्मस्वरूपत्वेऽप्येकतरपरिशेषः स्यादिति साम्यात् ।

तत्र वस्तुभेदाभावादिष्टापत्तिरिति चेत् । समं प्रकृतेऽपि । तथाहि । एकतरपरिशेषः स्यादिति कोऽर्थः । किं वस्तुभेदो न स्यात् किन्तु एकमेव स्यादिति ? किं वा घट इति वा भेद इति वा? व्यवहारः स्यात् नतूभयथेति? यद्वैतयोरेकस्यैवार्थक्रिया स्यात् नोभयार्थ-क्रियेति? । अथवा द्विवचनप्रयोगो न स्यादिति?

नाद्यः । इष्टापत्तेः । न द्वितीयः । प्रवृत्तिनिमित्तभेदेन तदुपपत्तेः । न तृतीयः । एकत्रैव दीपे शुक्लभास्वररूपोष्णस्पर्शावच्छेदेन प्रकाश-दाहरूपार्थक्रियावदेकत्रैव पटत्वभेदत्वावच्छेदेन तदुपपत्तेः । न चतुर्थः । अर्थप्रकाशात्मकत्वनिरुपाधिकेष्टत्वरूपयोः ज्ञानत्वानन्दत्वरूप-विशेषणयोः अनेकत्वेन विज्ञानानन्दावितिवदिहापि घटत्वभेदत्वयोरनेकत्वेन तदुपपत्तेः ॥

एतेन भेदस्य स्वरूपत्वे घटभेदशब्दयोः पर्यायत्वं स्यादिति निरस्तम् । ऐक्यब्रह्मशब्दयोः पर्यायत्वं स्यादिति साम्यात् । यदि तत्रैकार्थपर्यवसानेऽपि शुक्लः पट इत्यादाविव प्रवृत्ति-निमित्तानेकत्वादपर्यायत्वं, तर्हि प्रकृतेऽपि समम् ॥

एतेन ''भेदस्य स्वरूपत्वे 'अस्य भेदः' 'इदं भिन्नम्'इति च सम्बन्धित्वेन धी-र्नस्यात् । प्रत्युत 'घटो भेदः' इति धीः स्यादि''ति निरस्तम् । जीवब्रह्मणोरैक्यम् 'अनन्दं ब्रह्मणः' इत्यादिवदुपपत्तेः । नहि एकं ब्रह्मेतिवदैक्यं ब्रह्मेत्यस्ति । जीवब्रह्मणोरैक्यमिति व्यपदेशमात्रमिति चेत्, 'मात्र'शब्देन किं अर्थो निषिध्यते? व्यवहारस्याबाधितत्वं वा

व्यवहारनिमित्तं वा? आद्योऽपि किं ब्रह्मस्वरूपं निषिध्यते? ऐक्यं वा तत्सम्बन्धो वा? नाद्यः । निराश्रयस्यैक्यस्यानिर्वाहात् । निर्वाहे वा ब्रह्माद्वैतं शून्याद्वैते पर्यवस्येत्? न द्वितीयः । भेदोन्मज्जनापातात् । नह्युभयोदासीनतत्वसिद्धिः उभयात्मकत्ववत् । तस्यापि व्याहतत्वात् । तृतीयेऽप्यैक्यस्यान्यसम्बन्धित्वं वा, मेरुमन्दरादिवत् स्वातन्त्र्यं वा, स्यादिति प्रत्यक् ब्रह्मैक्यासिद्धिः । ऐक्यमात्रस्य मन्मतेऽपि सत्त्वेन सिद्धसाधनत्वादिकं च स्यात् । न द्वितीयः । उक्तरीत्या अर्थाबोधेन व्यवहारबाधायोगात् । न तृतीयः । निमित्ताभावे कार्या-सम्भवात् । क्लृप्तभेदाख्यनिमित्ताभावात् । व्यपदेशमात्रतोक्तिरिति चेत् । प्रकृतेऽपि तथा-ऽस्तु । एवं च –

'अपर्यायत्वैकतरा परिशेषविशेष्यताः ।
अभेदस्येव भेदस्य स्वरूपत्वेऽपि सङ्गताः ।।

तत्र गत्यन्तराभावादैक्यस्य स्वरूपत्वं सिद्धमिति अपर्यायत्वादिकं कथञ्चिन्निर्वाह्यमिति चेत् । इहापि धर्मपक्षस्य त्वयैव दूषितत्वेन पृथक्त्वान्योन्याभाववैलक्षण्यभेदवादेऽपि पृथक् पृथक्त्वादावन्ततः स्वरूपभेदस्याङ्गीकरणीयत्वेन च गत्यन्तराभावात् । तथा भेदस्य 'घटे पटानात्मको न' इत्यप्रतीतेः 'घटः पटात्मको न' इत्येव च प्रतीतेः । तत्र च पटतादा-त्म्यनिषेधरूपस्य भेदस्य मृद्घट इतिवद् घटसामानाधिकरण्येनाभेदस्यैव भानेन प्रत्यक्षात् । तथा घटतद्भेदयोरेकस्य प्रतीतावितरस्य नियमेन प्रतीयमानत्वादिलिङ्गात् 'सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशयः'(१) इत्याद्यागमाच्च भेदस्य स्वरूपत्वं सिद्धम् ।।

नच पटात् भेदस्य घटस्वरूपत्वे कुड्यस्याघटस्वरूपत्वात् तस्य पटात् भेदो न स्यादिति युक्तम् । अभेदस्य ब्रह्मस्वरूपत्वे घटतुच्छयोरब्रह्मस्वरूपत्वात् तयोः स्वाभेदो न स्यादिति साम्यात् । यदि तु ब्रह्माभेदो ब्रह्मस्वरूपं घटाद्यभेदस्तु तत्स्वरूपं तर्हि पटप्रतियोगिको भेदो घटधर्मिक एव घटस्वरूपं, कुड्यधर्मिकस्तु कुड्यस्वरूपमिति समम् ।।

यद्यपि घटकुड्यादिरूपाः पटाद्भेदाः स्वरूपेण अननुगताः । तथाप्यनेकेषु घटज्ञानेच्छादिषु घटविषयत्वस्येवेहापि पटप्रतियोगिकत्वस्य पटैक्यव्यवहारविरोधित्वादेर्वाऽनुगमात् पटाद्भिन्न इति व्यवहारानुगमः ।।

---

(१) ब्रह्मवल्ल्यां तैत्तिरीयोपनिषद्भाष्ये उदाहृत'तत्त्वनिर्णय'वाक्यम् ।।

एतेन भेदो यदि 'इदमस्माद् भिन्नम्'इति वा, अस्यामुष्माद्भेद इति वा, धर्मिप्रतियोगिघटितत्वेन गृह्यते । तदा धर्मिप्रतियोगिज्ञाने सति भेदज्ञानम् अस्यामुष्मादिति विलक्षणधर्मिप्रतियोगिज्ञानं च भेदज्ञाने सतीत्यन्योन्याश्रयः । यदि तु घटपटौ भिन्नौ इति घटपटविशेषणतया, घटपटयोर्भेद इति तद्विशेष्यतया वा गृह्येत, तदापि घटपटप्रतीतौ तद्विशेषणत्वादिना भेदप्रतीतिः, भेदप्रतीतौ च द्वित्वावच्छिन्न घटपटप्रतीतिरित्यन्योन्याश्रय एवेति निरस्तम् ॥

भेदस्य स्वरूपत्वेन स्वरूपप्रतीतेरेव भेदधीत्वेन धीद्वयाभावात् । भासमानं हि वस्तु इदं न सर्वात्मकं, किन्तु स्वयमेवेति सामान्यतः सर्वतो व्यावृत्तमनुभूयते । अन्यथा 'इदं सर्वात्मकमेव' इति विपर्ययादि स्यात् । नच सार्वज्ञापत्तिर्दोषः, सामान्यतः सर्वज्ञानस्य प्राणभृन्मात्रवृत्तित्वात् । अन्यथा सर्वोपसंहारवती व्याप्तिर्न सिध्येदिति सर्वानुमानतर्कोच्छेदः स्यात् । 'सर्व'शब्दप्रयोगादिकं च न स्यात् । 'सर्वं खल्विदं ब्रह्म'इत्यादिवाक्यार्थधीश्च न स्यात् ॥

ननु यद्यपि भेदो धर्मिस्वरूपमिति न तदपेक्षयाऽन्योन्याश्रयः । तथाऽपि प्रतियोगिस्वरूपं नेति तदपेक्षयाऽन्योन्याश्रय इति चेन्न । विद्यमानभेदस्य तदैक्येनाप्रतीतस्य स्वरूपप्रतीतिमात्रेण प्रतियोगित्वोपपत्तेः । नहि सामान्यतः सर्वस्मिन् प्रतीतेऽपि तस्य पुरोवर्त्तिनो भेदाग्रहेण पुरोवर्तिनः सामान्यतः सर्वस्माद्भेदाग्रहो दृष्टः ॥

किञ्च 'अस्तीदम्' इत्यत्र साक्षिसिद्धेन कालेन सहैव वस्तुन इव 'न जानामि'इत्यत्र साक्षिसिद्धेन विषयेण सहैव ज्ञानस्येव 'सर्वं खल्विदं ब्रह्म' इत्यत्र सर्वेण सहैवाऽज्ञानस्येव चेहापि साक्षिसिद्धेन प्रतियोगिना सहैव व्यावृत्तिप्रतीतेर्नान्योन्याश्रयः । उक्तं हि –

**'सर्वं सामान्यतो यस्मात् सर्वैरप्यनुभूयते ।**
**तस्मात् व्यावृत्तता सर्वैः सर्वस्मादनुभूयते '**(१)

इति 'सर्वस्मात्' इत्यनेन च भेदात्मकत्वेनाज्ञातं सर्वं विवक्ष्यते । यथा 'सर्वं खल्विदं ब्रह्म' इत्यत्र 'ब्रह्मात्मत्वेनाज्ञातं सर्वम्' इति न कश्चिद्दोषः ॥

(१) तैत्तिरीयभाष्योपनिषदि ब्रह्मवल्ल्यां 'तत्त्वनिर्णय'वाक्यमेतत् ॥

एतेन विशिष्य भेदप्रतीतौ स्तम्भात् कुम्भस्य भेदसिद्धौ कुम्भात् स्तम्भस्य भेदसिद्धिरित्यन्योन्याश्रयः । धर्मिणः सकाशात् भेदेन प्रतीतस्यैव प्रतियोगित्वात् । अप्रतीतभेदस्य प्रतियोगित्वे तु स्वस्यापि तत्स्यादिति निरस्तम् ॥

त्वन्मतेऽपि बिम्बादेः प्रतिबिम्बादिना, ब्रह्मणश्च, ब्रह्मणा जीवेन चाभेदेऽपि इदमनेनाभिन्नम् इति वा, अस्यामुष्माद्भेद इति वा, इमे अभिन्ने इति वा, अनयोरभेद इति वा, प्रत्येतव्यः । धर्मिप्रतियोगिभावधीः द्वित्वावच्छिन्नधीश्च भेदज्ञानाधीनेति तद्विरुद्धाभेदज्ञानानुपपत्तिरिति साम्यात् ॥

यदि च तत्राऽभेदं प्रति प्रतियोग्यादिधीर्न भेदज्ञानाधीना विरोधात्, तर्हि इहापि भेदं प्रति प्रतियोग्यादिधीरपि न भेदज्ञानाधीना असम्भवात् । 'अनयोः' इति द्वित्वधीः 'इदमस्माद्भिन्नम्' इत्यवध्यवधिमत्त्वधीश्च अपेक्षाबुध्यादिसामग्रीतः । नतु भेदज्ञानात् । नह्यवधित्वादेर्भेदकस्य ज्ञानं नियमेन भेदज्ञानाधीनम् । भेदकज्ञानानन्तरमपि भेदधीदर्शनात् । अवधित्वाद्यवच्छेदकनीलत्वादिधीमात्रेण तत्सम्भवाच्च ॥

किञ्चैवमन्यथा जीवस्य ब्रह्माभेदे ज्ञाते ब्रह्मणो जीवाभेदधीरिति तवाप्यन्योन्याश्रयः । धर्मिणः सहभेदेन प्रतीतस्यैवाभेदप्रतियोगित्वात् । अप्रतीताभेदस्य च प्रतियोगित्वे तु दहनस्यापि तुहिनाभेदप्रतियोगित्वं स्यात् । 'तत्त्वमसि'इत्यत्र 'त्वम्'पदवाच्यस्य विशिष्टस्य च तत्स्यादिति समम् । तत्र विद्यमानभेदस्यासति प्रतिबन्धके अभेदयोग्यचित्त्वादिरूपेण प्रतीतिरभेदधीहेतुः भेदभ्रमेतु दोषः प्रतिबन्धक इति नाभेदधीरिति चेत् । अत्रापि स्वरूपभेदपक्षे वस्तुतोऽन्योन्यप्रतियोगिकयोः घटपटस्वरूपभेदयोरन्योन्यप्रतियोगित्वयोग्यघटपटत्वादिरूपेण प्रतीतयोरसतिप्रतिबन्धे अन्योन्यप्रतियोगितया विशिष्टधीः । धर्मभेदपक्षेऽपि विद्यमानभेदस्यासतिप्रतिबन्धके भेदयोग्यनीलपीतत्वादिरूपेण प्रतीतिर्भेदधीहेतुः । दूरस्थवनस्पत्यादौ तु दूरादिर्दोषः प्रतिबन्धक इति न भेदधीरिति समम् । नह्युक्तविशेषणे सति स्तम्भात् कुम्भस्य भेदाग्रहेण कुम्भात् स्तम्भस्य भेदाग्रहो दृष्टः। नचान्योन्याश्रयः। संस्पर्शिनिमार्गे सति तदापादको मार्गो ग्राह्यः । 'गौर्गवयसदृशी' इत्यादावपि गवयादीनां गवादिभ्यो भेदः सन्नेव प्रतियोगित्वे हेतुः । नतु प्रतियोगिज्ञाने भेदज्ञानं हेतुः । नहि गौर्गवयसदृशीति

प्रत्यक्षधीरपि नियमेन गवयो गोभिन्न इति ज्ञानपूर्विकानुभूयते सुतरां शाब्दधीः । तत्र भेदवाचिशब्दाभावात् । अन्यथा चैत्रस्य मैत्रपितृत्वगुरुत्वादिके ज्ञाते, एव मैत्रस्य चैत्रपुत्रत्वादिज्ञानं, गवयस्य गोसादृश्ये ज्ञाते एव गोर्गवयसादृश्यज्ञानमिति सप्रतियोगिक-पदार्थज्ञानमात्रेऽन्योन्याश्रयः स्यात् । एवं च –

**'सद्भेदस्य स्वरूपेण ज्ञातस्याप्रतिबन्धके ।**
**प्रतियोगिता न भेदेन ज्ञाते तन्न मिथः श्रयः'।।१।।**

**जीवस्य ब्रह्मणा ह्यैक्ये ज्ञाते जीवैकतामतिः ।**
**ब्रह्मणीति**(ज्ञातेपीति-पा) **तवाऽपि स्यादन्यथाऽन्योन्यसंश्रयः ।।२।।**

एतेन न प्रतियोगिधीमात्रं भेदधीहेतुः । तन्निर्विकल्पकादपि भेदधीप्रसङ्गात् । किन्तु प्रतियोगित्वेन । तत्रापि नान्यं प्रति प्रतियोगित्वधीर्भेदधीहेतुः । अतिप्रसङ्गात् । किन्तु भेदं प्रति । तथा च भेदज्ञाने प्रतियोगित्वधीः । तज्ज्ञाने च भेदधीरित्यन्योन्याश्रयः इति निरस्तम् । सप्रतियोगिके सादृश्यादावभेदे च सम्यात् । तत्र सादृश्याभेदादिप्रतियोगिता-वच्छेदकगवयत्वचित्त्वादिरूपेण धीरेव सादृश्यभेदादिधीहेतुश्चेदिहापि वस्तुतः प्रतियोगिता-वच्छेदकपीतत्वादेः पीतत्वादिरूपेण धीरेव भेदधीः हेतुः ।।

यद्वा यत्र धर्मिप्रतियोगिनौ सन्निहितौ तत्र धर्मिप्रतियोगिस्वरूपयोः तद्भावयोः तद्भेदस्य च युगपद्धीः 'इदमनेन सदृशम्' इतिवत्, तथा विशेषण-विशेष्यभूतयोर्भेदर्भेदिनो र्विशेषण-विशेष्यभावस्य च युगपदेव धीः 'इमौ सदृशौ' इतिवत्, सर्वस्येन्द्रियसन्निकृष्टत्वात् योग्य-त्वाच्च । युगपदनेकज्ञानोत्पत्तेर्विरुद्धत्वेऽपि दीपसहस्र इव समूहालम्बनैकज्ञानाविरोधात् । नहि मन्मते 'दण्डी चैत्र' इति विशिष्टधीरपि विशेषणज्ञानपूर्विका । उक्तं चैतदन्यत्र[१] । यत्र तु धर्मिप्रतियोगिनोरन्यतरस्यासन्निधानं तत्रापि संस्कारसचिवेन्द्रियसन्निकर्षेणैकमेव ज्ञानमुत्पद्यते तदनेन सदृशमित्यादिवत् । अन्यथा अभेदज्ञानमपि न स्यात् । तथाच

(१) तर्कताण्डवे उक्तमित्यर्थः ।। 'अनुमित्यादौ साध्यप्रसिध्यादिनैव हेतुता न विशेषणज्ञानत्वेन ,यदि च वस्तुतो विशेषणविषयकत्वात् तत्त्वेनापि तस्य हेतुता तदा विशेष्यज्ञानत्वेन पक्षज्ञानस्य हेतुत्वमिति प्रत्यक्षेऽपिविशेष्यज्ञानस्य कारणतापातादिति' तर्कताण्डवादावुक्तमित्यर्थः ।।

नान्योन्याश्रयः । तदुक्तम् –

'धर्मित्वप्रतियोगित्वतद्भावा युगपद्यदि ।
विशेषणं विशेष्यं च तद्भावश्चैव गृह्यते ।।१।।

को विरोधः स्वरूपेण गृहीतो भेद एव तु ।
अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यत । इति ।।२।।(अनु-२-२-८)

यद्यपि व्यावृत्तिधीहेतुधीविशेषविषयत्वादिरूपव्यावर्तकत्वाद्यात्मकस्य विशेषणत्वादेर्विशिष्टज्ञानाधीनव्यावृत्तिज्ञानानन्तरं निर्णेयस्य न विशिष्टज्ञाने स्फुरणं, तथाऽपि उपसर्जनत्वादिरूपविशेषणत्वादेः ततः पूर्वं स्फुरणेन तदापादनं, तर्हि तस्यैव विशिष्टज्ञाने युगपदेव स्फुरणेन तत्समाधानम् । एतेन विशेषणविशेष्यभावेनैव भेदस्य प्रत्येतव्यत्वात् तद्भावप्रतीतेश्च भेदप्रतीत्यधीनतया दण्डचैत्रादौ दर्शनेन भेदप्रतीतिपरम्परया अनवस्थेति निरस्तम् ।।

ब्रह्म जीवाभिन्नं जगन्मिथ्या स्वपक्षो निर्दुष्टः परपक्षो दुष्ट-इत्यादावप्यभेदादेर्विशेषणादिभावेनैव प्रत्येतव्यत्वात् । तत्प्रतीतेश्च भेदप्रतीत्यधीनत्वेनानवस्थानात् न प्राथमिकाभेदादिधीरिति साम्यात् ।।

अथ दण्डादावपि भेदः सन्नेव विशेषणत्वादिहेतुः नतु भेदज्ञानं तज्ज्ञाने तथाऽननुभवात् तथा च नानवस्थेति चेत् । समं प्रकृतेऽपि । विद्यमानभेदयोः स्वरूपेण प्रतीतयोरसतिप्रतिबन्धे विशेषणत्वादिधीसम्भवादित्युक्तत्वात् ।।

किञ्च भिन्नत्वेनैव ज्ञातस्य विशेषणतायां भिन्नं ब्रह्मेति भेदधीपूर्वकं विशेषणतया ज्ञातस्याभेदस्य पुनर्ब्रह्माभेदज्ञानं न स्यात्, विरोधात् । एवं च –

'विशेषणत्वं भेदेन ज्ञानं नापेक्षतेऽन्यथा ।
न स्याद्विशेषणं ह्यैक्यं ब्रह्माभिन्नं विरोधतः' ।।१।।

किन्तु –

'अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः ।
अन्यत्वं यदि सिद्धं स्यात् कथमन्योन्यसंश्रयः ।।२।।(अनु-२-२-९)

इत्युक्तत्वादुभयतः पाशारज्जुः ।।

एतेन प्रत्यक्षं किं भेदमेव गोचरयेत्? उत वस्त्वपि? नाद्यः । भेद इत्येवाप्रतीतेः । द्वितीयेऽपि किं भेदपूर्वं वस्तु गोचरयेत्? उत वस्तुपूर्वं भेदं युगपद्वोभयं? नाद्यः । भेद-इत्येवाप्रतीतेः । बुद्धेर्विरम्य व्यापाराभावाच्च । अत एव न द्वितीयः । न तृतीयः । वस्तु-ग्रहस्य भेदग्रहहेतुत्वादिति निरस्तम् ॥

बिम्ब-प्रतिबिम्बयोर्जीवब्रह्मणोश्चाभेदग्राहि प्रत्यक्षं शब्दश्च किं भेदमेव गोचरयेदित्यादेः साम्यात् । विशिष्टधीर्विशेषणधीपूर्विकेति मते भूतले घटाभाव इति ज्ञानानन्तरमेव भूतलं घटाभाववत्' इतिज्ञानवत् 'अनयोः भेद' इति ज्ञानानन्तरमेव 'इमौ भिन्नौ' इति धियः सम्भवेन तत्पूर्विका, नेति मते तु युगपदेवोभयगोचरविशिष्टधियः सम्भवेनोक्तदोषानव-काशाच्च ॥

यच्चोच्यते भेदस्यान्योन्याभावत्वे तत्प्रतियोगिनः स्तम्भकुम्भयोस्तादात्म्यस्याप्रामा-णिकत्वेनान्योन्याभावस्याप्यप्रामाणिकत्वं स्यादिति । तन्न । रूप्यस्य द्वैतस्यात्यन्तासतश्चा-प्रामाणिकत्वेन बाधगोचरस्य रूप्याभावस्याद्वैतस्य असद्वैलक्षण्यस्य च अप्रामाणिकत्वं स्यादिति साम्यात् । यदि तत्र प्रतियोगिनो निरूपकमात्रत्वेन स्वपक्षदोषस्याप्रामाणिकत्वेऽ-पि तदभावस्य प्रामाणिकत्ववदुपपत्तिः । तर्हि प्रकृतेऽपि तथा । नह्यस्मन्मते प्रामाणिकस्यैव निषेध इति नियमः । येषां तन्नियमः तन्मतेऽपि पटे प्रमितस्य पटतादात्म्यस्य घटे निषेध इत्यस्तु ॥

तन्मतेऽन्योन्याभावसंसर्गाभावयोर्घटप्रतियोगिकत्वेऽपि यत्र प्रतियोगीनामधिकरणे समा-रोप्य निषेधावगमः स संसर्गाभावः, यत्र त्वधिकरणे प्रतियोगितावच्छेदकमारोप्य निषेधावगमः, सोऽन्योन्याभाव इति तयोर्भेदः ॥

एतेन भावादभावस्यान्योन्याभावरूपभेदस्य वक्तव्यत्वात् स्ववृत्तित्वमिति निरस्तम् । जीवब्रह्माभेदस्य स्वेनाभेदस्य वक्तव्यत्वात् स्ववृत्तित्वमिति साम्यात् । तत्राभेदान्तरं वा तस्यैव स्वनिर्वाहकत्वं वा चेदिहापि तथाऽस्तु ॥

एतेन नृशृङ्गशशशृङ्गात्यन्ताभावयोरन्योन्याभावरूपभेदस्य सत्वादभावाभावस्य च

भावत्वात् नृशृङ्ग-शशशृङ्गयोः सत्त्वं स्यात् । एवं घटध्वंस-प्रागभावयोरन्योन्याभावस्य वक्तव्यत्वादभावाभावस्यच भावत्वात् घटध्वंसादिकाले घटः स्यादिति निरस्तम् ॥

अविद्यानिवृत्तिः पञ्चमप्रकारेति मते, भावाद्वैतमते वाऽविद्यानिवृत्तेः ब्रह्मतोऽन्योन्याभावस्य वक्तव्यत्वादभावाभावस्य च भावत्वादविद्यानिवृत्तिकालेऽविद्या स्यादिति साम्यात् । यदि त्वभाव-संसर्गाभाव एव भावो नत्वन्योन्याभावस्तर्हि प्रकृतेऽपि समम् ॥

यच्चोक्तम् भेदेषु जातिरूपमौपाधिकधर्मरूपं वा भेदत्वं वाच्यम्, तत्र पुनर्भेदो वाच्यः । अन्यथा भेदत्वस्यान्यस्माद्भेदो न स्यात् । तथाचान्योन्यवृत्तिरिति । तत्र । अभेदेष्वभेदत्वं वाच्यम्, तत्र पुनरभेदो वाच्यः । अन्यथा तस्य स्वाभेदो न स्यात् । तथाचान्योन्यवृत्तिरिति साम्यात् । नच घटस्य घटाभेदः जीवस्य ब्रह्माभेदः, वेदान्तवैयर्थ्याद्यापत्तेः। अथ तत्र प्रमेयत्वाभिधेयत्वयोरिव प्रमितत्वादन्योन्यवृत्तिरदोषः, तर्हि, प्रकृतेऽपि तथाऽस्तु ।

ननु भेद किं भिन्ने वर्तते? उताभिन्ने? नाद्यः । अनवस्थाद्यापातात्। नान्त्यः । विरोधादिति चेत् । अनात्मनोऽनिर्वाच्यत्वम्, आत्मनो निर्विशेषत्वं स्वपक्षे दोषाभावः, परपक्षे दोषश्च, किं तद्वति वर्तते?, उत तद्रहिते?, इत्यादेः साम्यात् । यद्यभेदादिस्वरूपं यदि वा स्वाश्रयत्वयोग्ये वर्तते योग्यता च प्रमितिरूपकार्योन्नेया, तर्हि प्रकृतेऽपि तथाऽस्तु । एवमन्येऽपि स्वव्याघातकाः क्षुद्रोपद्रवाः परिहार्याः । नह्यत्र भेदखण्डने केनापि काप्यत्रास्वव्याघातिका अजातिरूपा युक्तिरुक्ता ॥ तदुक्तम्–

'एतादृशस्य वक्तारौ उभौ जात्युत्तराकरौ ।
मायी माध्यमिकाश्चैव तावुपेक्ष्यौ बुभूषुभिः'इति(अनु-२-२-८) ॥

॥ इति विशेष्य भेदखण्डनोद्धारः ॥

## ॥ अथ विशेषसमर्थनम् ॥

वस्तुतस्त्वस्मन्मते भेदो वस्तुनः सविशेषाभिन्नः । ततश्चाभिन्नत्वात् नानवस्थादिः । भेदप्रतिनिषेधश्च विशेषस्य सत्त्वात् न पर्यायत्वादिकम् । विशेषश्च भेदहीनेऽप्येकतरपरिशेषाभावादिनिर्वाहकः । तदुक्तम्–

'भेदहीनेऽप्यपर्यायशब्दान्तरनियामकः ।
विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ।। (अनु-१-१-२)

इति । प्रमाणं तत्रार्थापत्तिः । तथाहि । 'विज्ञानमानन्दं ब्रह्म' इत्यादिवाक्यबोध्य-विज्ञानानन्दादीनां परमतेऽपि न तावद्भेदो भेदाभेदौ वा, अखण्डार्थत्वायोगात् । 'एकधैवानुद्रष्टव्यम्' इत्याद्यैक्यश्रुतिविरोधाच्च ।।

तत्र भेदप्रतिनिधिः विशेषोऽपि नचेत् कथं तच्छब्दानामपर्यायत्वम्, पदान्तरावैयर्थ्यम्, विज्ञानानन्दयोरेकतरपरिशेषः, भ्रमाधिष्ठानत्वेन चैतन्यभानेऽपि मोक्ष इवेदानीमानन्दाप्रकाश इत्यादि भेदकार्यं स्यात् । लक्ष्यार्थभेदाभावेऽपि वाच्यार्थभेदादपर्यायत्वं व्यावर्त्त्यभेदादवैयर्थ्यं चेति चाखण्डार्थत्ववादे निरस्तम् ।।

नच सखण्डवादेऽपि प्रवृत्तिनिमित्तयोर्ज्ञानत्वानन्दत्वयोर्भेदादपर्यायत्वम् । 'एवं धर्मान्' इति श्रुत्या तयोरपि भेदनिषेधात् । अर्थप्रकाशत्वनिरुपाधिकेष्टत्वरूपयोः तयोः अर्थ-प्रकाशनिरुपाधिकेष्टरूपाश्रयविशेषसापेक्षत्वाच्च । आकाशशब्दशब्दाश्रयशब्दयोनिर्मित्तभेदा-भावेन पर्यायत्वापाताच्च । नह्याकाशशब्दस्य शब्दाश्रयत्वादन्यन्निमित्तमस्ति । विज्ञानानन्द-योरेकतरपरिशेषे च मोक्षे आनन्दप्रकाशो न स्यात् । तस्मात् विज्ञानानन्दादेरैक्यश्रुतिबला-दभेद इत्येकतरापरिशेषाद्यर्थं विशेषोऽङ्गीकार्यः ।।

एवं 'तत्त्वमसि' इत्यत्र शोधितात् तत्पदार्थाद्वाक्यार्थस्यैक्यस्य न तावत् परमते भेदो भेदाभेदो वा । ऐक्यस्य मिथ्यात्वाद्यापत्तेः । तत्र विशेषोऽपि न चेत् कथं स्वप्रकाश-चैतन्यप्रकाशेऽप्यैक्यस्याप्रकाशः, तत्प्रकाशस्य भेदभ्रमाविरोधित्वेऽप्यैक्यप्रकाशस्य तद्वि-रोधः । तस्य निरपेक्षत्वेऽप्यैक्यस्य सापेक्षत्वमित्यादि । नचाविद्यावरणादैक्यस्य प्रकाशः, विशेषाभावे अनावृतचिदभिन्नस्यैक्यस्यावरणायोगात् । नहि शुक्त्यज्ञानेन शुक्त्यंश एवावृतोऽ-नावृतश्च भवति ।।

किञ्च 'एवं धर्मान्' इति श्रुतिबलादपि विशेषसिद्धिः । अत्र हि ब्रह्मणो धर्मानुक्त्वा तद्भेदो निषिध्यते । नच भेदप्रतिनिधेरभावे धर्मधर्मिभावो धर्माणामनेकत्वं च युक्तम् । नच 'धर्मान्'इत्यनुवादः । श्रुतितोऽन्येन ब्रह्मधर्माप्राप्तेः । नचेयं श्रुतिरत्यन्तभेदनिषेधिका, भेद-

मात्रनिषेधात्तादृशभेदाभावस्य लोकत एव प्राप्तत्वाच्च । **'भेदाभेदौ च यः पश्येत् स याति तम एव च'** इत्यादिस्मृतेश्च । तदुक्तम्–

> **'उक्त्वा धर्मान् पृथक्त्वस्य निषेधादेवमेव हि** (निषेधादत एव)।
> **विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः'**

इति ॥ किञ्च गुणगुण्याद्यभेदपक्षे पटोपलम्भेऽपि शौक्ल्याद्यनुपलम्भार्थं भेदाभेदपक्षेऽपि तयोरविरोधार्थम् अत्यन्तभेदपक्षेऽपि समवायः सम्बन्धः, सत्ता सती, भेदो भिन्नः अन्त्य-विशेषो व्यावृत्तः, कालः सदाऽस्ति, देशः सर्वत्र इत्याद्यबाधितव्यवहारार्थं विशेषोऽङ्गी-कार्यः ॥

किञ्च अभावदावस्तित्वादिर्नाभावादितोभिन्नः । गुणादिष्वनन्तर्भावेन षट्पदार्थनियम-भङ्गात् । अनियमपक्षेऽप्यस्तित्वेऽप्यस्तित्वान्तरमित्यनवस्थानात् । तत्र विशेषोऽपि न चेत् कथं विशेषणविशेष्यभावादि । नच सत्ता सतीत्यादिधीर्भ्रान्तिः । सन् घट इत्यादिवद-बाधात् । नाप्युपचारः । 'देवदत्तः सिंहो न' इतिवत् 'सत्ता सती नेति' कदाऽप्यव्य-वहारात् । ननु सत्तादेः सत्ताद्यन्तराभावेऽपि स्वभावविशेषादेव सद्व्यवहार इति चेन्न । तस्यैव स्वभावविशेषस्यास्माभिर्विशेषशब्देनोक्तेः । समवायादिः स्वनिर्वाहक इति चेन्न । स्वस्य स्वयमेव निर्वाहकं हि स्वनिर्वाहकम् । विशेषाभावे च कथमेकस्यैव निर्वहणक्रियायां कर्तृत्वं कर्मत्वं च । अयं च विशेषः वस्त्वभिन्नः स्वनिर्वाहकश्चेति नानावस्था । तस्य तथात्वं च धर्मिग्राहकमानसिद्धम् । यत्र भेदाभावः भेदकार्यं च प्रमितं तत्रैव विशेषः कल्प्यत इति, न प्रमितभेदे घटपटादौ विशेषमादाय भेदत्यागः । नहि सोमाभावे पूतिका इति तल्लाभेऽपि सः । एतेनोक्तस्थले भेद एवाऽस्तु अभेदकार्यार्थं नत्वभेदप्रतिनिधिरस्त्विति निरस्तम् । तत्र भेदस्य बाधितत्वात् ॥

एवं च ब्रह्मस्वरूपभूतयोर्विज्ञानानन्दयोर्ब्रह्मभेदयोश्चैकतरपरिशेषाभावः, प्रमेयत्वादेः स्वाश्रितत्वादिकं वा भेदान्यनियम्यम्, भेदानियम्यत्वे सति नियम्यत्वात् । यत् यदि नियम्यत्वे सति नियम्यं तत्तदन्यनियम्यं यथा सम्मतम् । ब्रह्मस्वरूपभूतम् विज्ञानानन्दादिकं

वा भेदान्यैकतरपरिशेषनिर्वाहकवत् भेदहीनत्वे सत्येकतरापरिशेषरूपनिर्वाह्यत्वादित्यादि-प्रयोगो द्रष्टव्यः ॥

किञ्चायं विशेषः प्रत्यक्षसिद्धः । तथाहि । तन्तुपटादिबुद्धीनां भिन्नघटपटादिबुद्धितो वैलक्षण्यं तावदनुभूयते । तच्च न तावत् सम्बन्धविषयत्वेन, कुण्डबदरादि-बुद्धितोऽपि वैलक्षण्यानुभवात् । नापि संयोगान्यसम्बन्धविषयत्वेन घट-तदज्ञान-तदभावादि-बुद्धि-मतोऽपि वैलक्षण्यानुभवात् । नापि स्वरूपप्रत्यासत्तिसंयोगान्यसम्बन्धविषयत्वेन । घट-तद्धर्मिकान्योन्याभावादि बुद्धेः घटपटादिबुद्धितो वैलक्षण्याभावापातात् । नाप्ययुतसिद्ध-विषयत्वेन । आश्रयाश्रयिभावनियमो ह्ययुतसिद्धिः । तत्र च तदानीन्तन आश्रयाश्रयिभावः कुण्डबदरादि बुद्धावपि भाति,नियमस्तु न तन्तुपटादि बुद्धावपि । नहि प्रत्यक्षा तन्तुपटादिधीः तन्तुपटसम्बन्धनाशो वा तन्तुपटविभागो वा, न भविष्यतीत्याकारा । नापि कुण्ड-बदरादिधीस्तयोः सम्बन्धनाशो वा, कुण्ड-बदर-विभागो वा न भविष्यतीत्याकारो । नापि समवायविषयत्वेन । उक्तरीत्या सम्बन्धनित्यत्वस्य वा सम्बन्ध्ययुतसिद्धत्वस्य वा तत्राऽ-स्फुरणात् । तस्मादभेदविषयत्वेनैव वैलक्षण्यं वाच्यम् । अयं घटः 'गजाश्वादिरेव' 'सेनापत्रमेव ताटङ्कम्' इत्यादौ पुरोवर्त्तिनो घटादेरिव 'आतानवितानात्मका तन्तव एव पटः' 'शुक्लः पट' इत्यादावपि तन्त्वादिना पटस्याभेदप्रतीतेः । नचात्र पटत्व-शुक्लत्व-योरेकस्थत्वमेव भातीति वाच्यम् । पटशुक्लयोरैक्यस्यापि तत्रान्तर्गतेः । अन्यथा क्वाप्यभेदो न सिध्येत् । 'घटः पटो नेति' धीश्च भेदविषया न स्यात् । 'दण्डी चैत्रः' इत्यत्रापि दण्डिना चैत्रस्य, भेदो भात्येव । नच 'शुक्लः पट' इत्यत्र शुक्लवानेव शुक्लपदार्थ इति वाच्यम् । 'शुक्लं रूपम्' इत्यत्र यत् शुक्लं तस्यैवेह प्रतीतेः । अन्यथेहापि 'शुक्ली पटः' इति धीः स्यात् । मतुब्लोपादि कल्पनं तु व्यवहारे नतु प्रतीतौ । 'पटस्य शौक्ल्यम्' 'रूपी पटः' इत्यादिधीस्तु सम्बन्धविषया, नतु भेदविषया, 'सत्ता सती'त्यादिवत् भेदाभावेऽ-प्युपपन्ना च । पटस्य तन्त्वन्यत्वे च गुरुत्वद्वयं स्यात्, तन्तुयुक्तभूतले पटवृत्तिश्च न स्यात् । मूर्तानां सामानाधिकरण्यायोगात् । व्यवहारार्थक्रियाभेदादि तु पत्रताटङ्का-दिवदित्युक्तम् । तस्मात् तन्तुपटादिबुद्धिरभेदविषयैव । यदिचेयं केवलाभेदविषया तर्हि सामानाधिकरण्यव्यवहारं न जनयेत् । घटः कलश इत्यव्यवहारात् । तेन ज्ञायते अधिकोऽ-

प्यस्याविषयोऽप्यस्तीति । नचायं भेदः, 'पटो न शुक्ल' इत्युल्लेखापातात् । भेदाभेदविरोधाय विशेषस्य आवश्यकत्वाच्च ॥

तस्मात् योऽधिको विषयः स एव विशेष इति सिद्धम्, विशेषस्य प्रत्यक्षत्वम् । यद्वा 'शुक्लः पटः' इत्यादिसामानाधिकरण्यप्रतीतेर्भेदनिर्विशेषाभेदे च अयुक्तेः सविशेषाभेद-विषयत्वं कल्प्यत इति तस्य प्रत्यक्षत्वम् । तदुक्तम्–

**'येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् ।'** इति (अनु-२-२-६)
**अभेदेऽपि विशेषोऽस्ति व्यवहारस्ततो भवेत्'**

इति स्मृतिसिद्धश्च विशेषः । तस्मात् भेदस्य वस्तुना सविशेषाभिन्नत्वात् न कोऽपि दोष इति ॥

॥ इति विशेषसमर्थनम् ॥

## ॥ तृतीयपरिच्छेदोपसंहारः ॥

तस्मात् 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा' इत्यादिश्रुत्या 'महद्गुण-त्वाद्यमनन्तमाहुः' इत्यादिस्मृत्या च, **'सर्वधर्मोपपत्तेश्च'**(ब्र-सू-२-१-३८) इत्यादिसूत्रैश्च, सर्वज्ञत्व-सर्वशक्तित्व-सर्वेश्वरत्वाद्यनन्तकल्याणगुणत्वेन हरेरतथाभूताच्चेतनाचेतनात्मक-प्रपञ्चात् वस्तुतो अत्यन्तभेद इति सिद्धम् । अत एव भगवता सूत्रकारेण **'अथातो ब्रह्मजिज्ञासा'** इति अल्पगुणत्वेनानुभवसिद्धजीवादितो भेदकं गुणपूर्णत्वं विष्णोर्जिज्ञास्यत्वे तत्र योगरूढिभ्यां मुख्येन ब्रह्मशब्देन कारणमुक्त्वा तदुपपादनाय **'जन्माद्यस्य यतः'** इति तस्य जगत्कर्तृत्वमुक्तम् । तथाचोक्तं चन्द्रिकायाम् अस्मद्गुरुचरणैः ।

**'जिज्ञासाकारणीभूतगुणपूर्तिप्रसिद्धये ।**
**जीवादिभेदकं विष्णोर्विश्वकर्तृत्वमुच्यते ॥** [१] इति ॥

* * * * * * * * * * * *

(१) व्यासराजपूज्यचरणकृतश्रीमत्तात्पर्यचन्द्रिकायां जन्माधिकरणप्रारम्भे उदाहृतश्लोकोऽयम् ॥

ये नित्यं पदवाक्यमानसरणीसंशीलनालङ्कृताः
तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।।
या चानेकविनेयषट्पदततेः सम्फुल्लमल्ली सदा
सैषा वाग् विजयीन्द्रसंयमिमणेः ज्ञानार्थिभिः सेव्यताम् ।।१।।

वाणीपाणिविपञ्चिकाविलसितं व्याकुर्वती वैरिणाम् ।
श्रेणिं कुण्ठितलोचनां विदधती नाणीयसा तेजसा ।।
एणीपाणिविभूषणप्रणयिनी द्रोणी सुधायाः सदा ।
वाणी श्रीविजयीन्द्रसंयमिमणेः क्षोणीसुरैः सेव्यताम् ।।२।।

इति श्रीमत्परमहंसपारिव्राजकाचार्याणां पदवाक्यप्रमाणपारावारीणधुरीणानां श्रीमत्सुरेन्द्रपूज्यपादानाम् शिष्येण श्रीमद्विजयीन्द्रभिक्षुणा विरचिते श्रुत्यर्थसारे भेदस्वरूपसमर्थनं नाम तृतीयः परिच्छेदः ।।

* * * * *

## ।। अथ श्रुत्यर्थसारे चतुर्थः परिच्छेदः ।।

श्रीरस्तु ।। नन्वस्तु परमेश्वरस्य सर्वज्ञत्वसर्वशक्तित्वसर्वकर्तृत्वाद्यनन्तकल्याणगुणाकारत्वेनातथाभूताल्पगुणत्वेनानुभवसिद्धात् जीवसङ्घात् जडमात्राल्पभिन्नत्वं श्रुत्यादितः प्रमितम् । तावता का तवेष्टसिद्धिः? इष्टसिद्ध्यभावे च जीवेश्वरभेदादिस्वरूपप्रमाणादिविचारस्य करटदन्तादिस्वरूपप्रमाणादि विचारतुल्यतया निष्फलत्वेन अकर्तव्यत्वमेव स्यादिति चेन्न ।

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः'
'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति'
'अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः'

इत्यादिश्रुत्या जीवेश्वरभेदज्ञानस्य वीतशोकत्वादमृतत्वफलत्वावेदनेन तज्ज्ञानार्थं तद्विचारस्यावश्यकत्वेन तस्य निष्फल-करट-दन्त-स्वरूप-प्रमाणविचारतुल्यत्वाभावात् । नच 'द्वा सुपर्णा' इत्यादिवाक्यात् प्रत्यक्षादितश्च 'नाहमीश्वरः' 'नाहं सर्वज्ञः' इति जीवेश्वरभेदज्ञाने सत्यपि अशेषशोकोच्छेदस्य 'अमृतत्व'शब्दितमोक्षस्य च फलत्वेनोक्तस्यानुपलम्भाज्जीवेश्वरभेदज्ञानस्य तत्फलकत्वावेदकोदाहृतश्रुतिर्न यथाश्रुतार्थपरा सती आवश्यकाश्वासहेतुः स्यादिति वाच्यम् । 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिशब्दात् प्रत्यक्षादितश्च 'अहमस्मि'इति सदर्थभूत-ब्रह्माहमर्थशरीरप्रविष्ट-जीवचैतन्यपरस्पराभेदगोचरज्ञाने सत्यपि तत्फलत्वेन 'यो वेदाऽहं ब्रह्मास्मि' इति 'स इदं सर्वं भवति' 'ब्रह्मवेद ब्रह्मैव भवति' 'तरति शोकमात्मवित्' 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुत्युक्तस्य सार्वात्म्यादेरनुपलम्भेन तच्छ्रुतेरपि न यथाश्रुतार्थपरत्वेन आश्वासहेतुत्वं स्यादिति साम्यात् । नहि यागानुष्ठानान्तरमस्मिन्नेव जन्मनि तत्फलत्वेन 'स्वर्गकामो यजेत' इत्यादिश्रुत्युक्तस्य 'यन्न दुःखेन सम्भिन्नम्' इत्यादिशब्दप्रतिपन्नलक्षणलक्षितस्वर्गस्यानुपलम्भेन तच्छ्रुतेर्यथाश्रुतार्थपरत्वमित्यस्ति । नवाऽऽश्वसहेतुत्वमिति । नच प्रत्यक्षादिप्राप्ते जीवेश्वरभेदे 'द्वा सुपर्णे'त्यादिश्रुतेर्न तात्पर्यम्, अपूर्वतालक्षण-तल्लिङ्गाभावादिति शङ्क्यम् । धूमाभावेऽप्यालोकविशेषलक्षणलिङ्गेन वह्नेरिवापूर्वतालक्षणतात्पर्यलिङ्गविरहेऽपि फलरूपलिङ्गेन तच्छ्रुतेर्जीवेश्वरभेदपरत्वसिद्ध्यवैकल्यात् । अन्यथा 'अस्मि' इति प्रत्यक्षप्राप्ततया जीवेश्वराभेदस्यापि

अपूर्वतालक्षणलिङ्गविरहात् 'तत्त्वमस्यादि'श्रुतेरपि जीवब्रह्माभेदपरत्वाभावप्रसङ्गात् । नहि 'अहमस्मीति' प्रत्यक्षे जीवस्य सदभेदो न प्रतीयत इत्यस्ति । सदर्थो वा ब्रह्म नेति ।

**'अस्ति भाति प्रियं रूपं नामचेत्यंशपञ्चकम् ।**
**आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्'**

इति वदता परेणैव सदर्थस्य ब्रह्मरूपतोपगमात् । अबाध्यरूपत्वस्यैव सद्रूपत्वात् । 'अस्ति' शब्दस्य 'अस्ति ब्रह्मेति चेद्वेद' इति श्रुतावबाध्यत्वार्थे प्रयोगाच्च । 'घटोऽस्ति' 'पटोऽस्ति' 'घटःसन् पटःसन्' इति प्रत्यक्षतः प्रपञ्चस्य पारमार्थिकसद्रूपत्वाप्राप्तौ पारमार्थिकत्वाकारेण 'नेह नानाऽस्ति किञ्चन' इत्यादिप्रपञ्चनिषेधस्याप्रसक्तप्रतिषेधत्वापत्तेश्च । नच 'घटोऽस्ति' 'पटोऽस्ति' इति प्रत्यक्षे घटादेर्वर्तमानत्वरूपं सत्त्वं भाति, नतु त्रिकालाबाध्य सच्छब्दार्थ-भूतब्रह्मभेद इति वाच्यम् । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद' इत्यादावपि 'सत्''अस्ति'शब्दाभ्यां ब्रह्मणोर्वर्तमानत्वमेवावेद्यते नतु त्रिकाला-बाध्यरूपत्वमित्यापातात् । नच प्रत्यक्षस्य वर्तमानकालमात्रसम्बन्धिग्राहकत्वस्वाभाव्यात् न त्रिकालाबाध्यत्वं सम्भवतीति वाच्यम् । तथासति शुक्तौ रजताध्यासानन्तरं सति विशेषदर्शने तद्रजतस्य त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वस्य 'इदं रजतं नास्ति नासीन्न भविष्यति' इति प्रत्यक्षगोचरत्वप्रसङ्गात् । गन्धग्रहे स्वतोऽसमर्थस्यापि चक्षुषः उपनयसहकारि-सामर्थ्यात् 'सुरभि चन्दनमिति' गन्धगोचरप्रत्यक्षजनकत्वाद्वर्तमानकालमात्रसम्बन्धि-ग्राहकत्वेन प्रमितस्य प्रत्यक्षस्य भूतभविष्यत्कालसम्बन्धिग्रहे स्वतोऽसामर्थ्येऽप्युपनायक-सहकारिसामर्थ्यान्निषेधादौ भूतभविष्यत्कालसम्बन्धग्राहकत्वोपपत्तेः । अन्यथा त्रैकालिक-निषेधप्रतियोगित्वरूपबाध्यत्वस्य प्रतियोगिन एवाप्रसिद्धेस्तदभावरूपाबाध्यत्वस्यैव दुर्ज्ञान-त्वेन सङ्गतिग्रहस्यैवायोगात् । सत्यशब्दघटितश्रुतिवाक्यात् ब्रह्मणोऽबाध्यत्वरूपसत्त्वा-सिद्धिप्रसङ्गाच्च । अबाध्यत्वस्य बाध्यत्वाभावरूपत्वात् सर्वत्र प्रमितकार्यबलेनैव सामग्रीकल्पनात् । 'इदं रजतं नास्ति नासीन्न भविष्यति' इति निषेधत्रैकालिकत्वगोचर-प्रत्यक्षरूपकार्यस्य प्रमितत्वेन तद्बलेनैव तथाविधप्रत्यक्षसामग्रीकल्पनोपपत्तेश्च ॥

कालत्रयसम्बन्धि यदसत्वं 'बाध्यत्व'शब्दितं तदभावरूपस्य अबाध्यत्वशब्दितस्य सत्त्वस्य वर्तमानकालसम्बन्धित्वेनावगतेऽपि वस्तुनि प्रत्यक्षेण ग्रहसम्भवाच्च । भूतलाद्य-

धिकरणे घटत्वावच्छिन्नयत्किञ्चित् सत्त्वग्रहकाले तदवच्छिन्नसामान्याभावाभावस्येव कालत्वावच्छिन्नयत्किञ्चित्कालसम्बन्धित्वेनावगते घटादावपि कालसम्बन्धित्वावच्छिन्नसामान्याभावाभावस्य सुग्रहत्वाच्च । तस्माद् 'अहमस्मि' इति प्रत्यक्षेऽपि सदर्थवता बाध्यब्रह्माभेदो भातीत्यकामेनापि स्वीकार्यमिति । 'तत्सत्यम्' 'स आत्मा तत्त्वमसि' इत्यादिश्रुतेः प्रत्यक्षप्राप्तजीवब्रह्माभेदार्थकत्वं दुर्वारमित्युक्तमधस्तात् । तथाच यथा परमते प्रत्यक्षादितः श्रुतितश्च सत्यपि जीवब्रह्माभेदज्ञाने तत्फलत्वेन श्रुतिप्रतिपन्नफलस्येदानीमभावेऽपि कालान्तरे तत्सत्त्वनिश्चयस्तथा प्रत्यक्षादितः श्रुतितश्च सत्यपि जीवेश्वरभेदज्ञाने तत्फलत्वेन श्रुतिप्रतिपन्ननिःशेषशोकाभावस्य 'अमृतत्व'शब्दितमोक्षस्य चेदानीमभावेऽपि कालान्तरे तत्सत्ता निश्चय उपपद्यते ॥

स्वीकृतवेदप्रमाणभावैः सर्वैरपि तान्त्रिकैरिदानीमनुष्ठितकर्मणः सकाशात् । यथोक्तफलानुपलम्भप्रयुक्तवेदाप्रामाण्यशङ्कायाः कथमप्यवश्यं निवारणीयत्वात् । अत एव 'तत्त्वमस्यादि' वेदान्तवाक्यात्-प्रमाणासम्भावना-प्रमेयासम्भावना-विपरीतभावनावशात् जातमपि जीवब्रह्माभेदगोचरापरोक्षज्ञानमनिर्विचिकित्सं सत्तदज्ञाननिबर्हणासमर्थमिति परेणापि स्वीकृतम् । तच्च यदा श्रवणादिना सम्भावना-विपरीतभावनयोर्निरासो भवति । तदा निर्विचिकित्समप्रतिबद्धं सत्तदज्ञानमुन्मूलयति तस्मिंश्चेत् मूलिते तन्मूलः कर्तृत्वभोक्तृत्वाद्यनर्थः स्वप्रयोजकाभावात्, तन्निवृत्त्यन्तरमेव निवर्तत इत्यपि स्वीकृतम् । अपि चेदानीं जीवधर्मिकेश्वरप्रतियोगिकभेदप्रत्यक्षस्य सत्वेऽपि जीवप्रतियोगिकेश्वरधर्मिकभेदप्रत्यक्षाभावादेव मोक्षाभावोपपत्तिः । नच तत्र मानाभावः । 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यादिश्रुतेरेव तत्र मानत्वात् ॥

किञ्च यथा परेण शोधिते 'तत्त्वम्'पदार्थाभेदगोचरनिर्विचिकित्सापरोक्षज्ञानमात्रेण अविद्यानिवृत्तिस्तन्मूलकानर्थनिवृत्तिरखण्डानन्दानुभवश्च भवतीति स्वीक्रियते, न तथा मया जीवब्रह्मभेदगोचरनिर्विचिकित्सापरोक्षज्ञानमात्रेण दुःसहविचित्रबहुसांसारिकदुःखापादकानाद्यविद्याकामकर्मादिरूपपारमार्थिकसत्यबन्धनिवृत्तिरङ्गीक्रियते । येनेदानीमपि जीवेश्वरभेदगोचरतादृशापरोक्षज्ञानात् तादृशबन्धनिवृत्तिरिदानीमेव स्यादित्युच्येत । किन्तु श्रवणाद्यनन्तरं

यथायोग्यं बहुकालनैरन्तर्यादरानुष्ठितया सर्वोत्कृष्टकल्याणगुणविशिष्टतया भगवदुपासनया सति तत्साक्षात्कारे तदभ्यासादुपासकस्य भगवति सर्वाधिकस्नेहोदये तादृशमधिकारिणम् । दृष्टं च भगवतः प्रसादे सति तत उक्तबन्धनिवृत्तिरित्यङ्गीक्रियत इति । नच लोके ज्ञानाज्ञानयोरेव विरोधावधारणात् जातमात्रेण ज्ञानेनानाद्यविद्यानिवृत्तिसम्भवात्, मध्ये ज्ञानजन्यप्रसादे मानाभाव इति वाच्यम् । प्रसादद्वारकेन्द्रियजन्यघटज्ञानस्य तदज्ञानाविरोधित्वदर्शनेऽपि 'तमक्रतुं पश्यति वीतशोको दातुः प्रासादान्महिमानमीशम्' इत्यादिश्रुतिबलात् धातृप्रसादजन्यत्वमीश्वरज्ञानस्य अङ्गीकृत्य तस्य तदज्ञानविरोधित्वाङ्गीकारवत् घटादिज्ञानस्य नियमादृष्टनिरपेक्षस्य तदज्ञानविरोधित्वदर्शनेऽपि ईश्वरज्ञानस्य श्रवणादिनियमादृष्टसापेक्षस्यैव विधिबलात् तदज्ञानविरोधित्वाङ्गीकारवच्च(अङ्गीकाराच्च-पा) ईश्वरापरोक्षज्ञानस्य –

**'यमेवैष वृणुते तेन लभ्यः'**

**'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्'**

**'तत्प्रीणनान्मोक्षमाप्नोति सर्वं'**

इत्यादि श्रुतिबलात् लोके प्रसादरूपं द्वारं विनाऽपि तत्तज्ज्ञानस्य तत्तदज्ञानविरोधित्वदर्शनेऽपि भगवदपरोक्षज्ञानस्य तत्प्रसादद्वारैव तत्स्वरूपाऽवरक-संसारापादक-पुं-गताज्ञानविरोधित्व-स्वीकारोपपत्तेः । 'प्रियो हि ज्ञानिनोत्यर्थम्' इति स्मृत्याऽपि ज्ञानस्येश्वरप्रसादजनकत्वावेदनाच्च ॥

यद्यपि 'तेमवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था' इत्यादौ ज्ञानान्यस्य मोक्षहेतुत्वं निषिध्यते । तथाऽप्युदाहृतश्रुतिबलात् प्रसादस्य ज्ञानव्यापारत्वात् न तद्विरोधः । नहि स्वाङ्गं स्वस्य व्यवधायकमिति न्यायात् ज्ञानजन्यसंस्कारवत् । तथाच ज्ञानजन्येश्वरप्रसादस्यापि मोक्षहेतुत्वमविरुद्धमिति ॥

यद्यप्यत्र श्रुतौ प्रसादस्य ज्ञानद्वारत्वं न श्रूयते । 'तमेवं विद्वानमृत इह भवति' इत्यादिना ब्रह्मज्ञानस्यैव मोक्षसाधनत्वावगमात् । तथाऽपि श्रुत्यन्तरेण तस्यैव ज्ञानस्य प्रसादहेतुत्वावगमात्, तत्प्रसादस्य मोक्षहेतुत्वावगमाच्च, प्रसादस्य द्वारत्वमिह कल्प्यते । नहि प्रसादस्य ज्ञानजन्यत्वे सति ज्ञानजन्यमोक्षजनकत्वादतिरिक्तं द्वारत्वं नामास्ति । अत एव

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन' इति भगवत्प्राप्तौ प्रवचनादिमात्रस्य फलोपहितसाधनत्वं प्रतिषिध्योत्तरत्र 'यमेवैष वृणुते तेन लभ्यः' इति भगवत्प्राप्तिलक्षण-फलोपाधाने तत्प्रसाद आवश्यक इत्युच्यत इति । तस्मात् जीवेश्वरभेदसाक्षात्कारस्येदानीं सत्त्वेऽपि न मोक्षप्रसङ्गः ॥

एतेन भगवत्प्रसादेऽपि ज्ञानातिरिक्तसाधारणसाधनस्य सम्पादनीयस्याभावात्, साधा-रणकारणस्यच पूर्ववत् सत्त्वात् ज्ञानस्य चेदानीमपि सत्त्वेनेदानीमेव भगवत्प्रसादस्योत्पत्त्या सद्यो मोक्षप्रसङ्गः । नहि भगवत्प्रसादानन्तरमपि मोक्षरूपकार्यविलम्बे कारणं किमपि सम्भवतीति निरस्तम् ॥

ज्ञाने सत्यपि मोक्षहेतुभूतस्य भगवन्महाप्रसादस्योदये पापानां च प्रतिबन्धकत्वेनेदानीं तदभावादेव महाप्रसादाभावोपपत्तेः । तेषां च धर्मविशेषेण नाशे सति प्रसाद उदेतीत्युप-गमात् । तथाच श्रुतिः **'धर्मेण पापमपनुदति । धर्मे सर्वं प्रतिष्ठितं । तस्मात् धर्मं परमं वदन्ति'** (म-ना-उ-७९-७) इत्यादिका ॥

यद्यपि –

**'सिताऽसिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति'**
**'ये वै तन्वं विसृजन्ति धीरास्ते जनासोऽमृतत्वं भजन्ते'**(१)
**'अपाम सोमममृता अभूम'**
**'हिरण्यदा अमृतत्वं भजन्ते'**
**'अक्षय्या ह वै चातुर्मास्य याजिनो सुकृतं भवति'**
**'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'** (भ-गी-३-२०)

इत्यादिश्रुतिस्मृतिभिः कर्मणां मोक्षहेतुत्वं प्रतीयते ।

तथा –

**'ज्ञानं प्रधानं न तु कर्महीनं कर्मप्रधानं नतु बुद्धिहीनम् ।**
**तस्माद्वायोरेव भवेत् प्रसिद्धिर्नह्येकपक्षो विहगः प्रयाति ।**

(१) ऋग्वेदखिलसूक्तम् ॥

**उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।**
**तथैव ज्ञानकर्माभ्यां प्राप्यते ब्रह्म शाश्वतम्'**

इत्यादि स्मृतिषु मोक्षे जनयितव्ये, घटे जनयितव्ये, दण्डचक्रयोरिव तुल्यवत् कारणत्वं च प्रतीयते । तथाऽपि

**'तमेवं विद्वानमृत इह भवति नान्यः पन्था'**
**'न कर्मणा न प्रजया धनेन'** (म-ना-उ-१२-१४)
**'नास्त्यकृतः कृतेन'**

इत्यादि श्रुत्या कर्मणां मोक्षसाधनत्वं प्रतिषिध्य,

**'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन'**
**'कर्मणा ज्ञानमातनोति ज्ञानेनामृती भवति'**
**'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'** (भ-गी-४-३३)

इत्यादि श्रुतिस्मृतिभिः कर्मणा मृग्यमाणज्ञानसाधनत्वमवगम्यते । एवं 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादि श्रुत्या कर्मार्जितस्य पुरुषार्थस्य क्षयिष्णुत्वं च प्रतीयते । तथा **'विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः'** (आ-उ-३-१-८) इत्याथर्वणश्रुत्या **'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः'** इत्यादि-स्मृत्या च कर्मणामन्तःकरणशुद्धिहेतुत्वं च प्रतीयते । तथाचोदाहृतश्रुतिस्मृतीनामविरोधेन प्रामाण्यनिर्वाहाय तत्र कर्मणां मोक्षहेतुत्वप्रतिपादकश्रुतिस्मृतीनां सत्त्वशुद्धिद्वारा ज्ञानं सम्पाद्य तद्द्वारा मोक्षे उपयोग इत्येवमर्थपरत्वमिति न कश्चिद्विरोधः । समुच्चयप्रतिपादको-दाहृतस्मृतीनां तु बहूदाहृतप्रत्यक्षश्रुतिस्मृतिविरोधात् बाध एवेति । एवं विकल्पस्मृतीना-मपीति ॥

## ।। अथ 'विद्यां चाविद्यां च' इति श्रुत्यर्थ विचारः ।।

नच 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' (ई-उ-११) इति प्रत्यक्षश्रुत्यैव ज्ञान-कर्मणोः समुच्चयः प्रतिपाद्यत इति वाच्यम् । 'अविद्यया, मृत्युं= पापं, तीर्त्वा, ततो,

विद्यया, अमृतमश्नुते' इति वाक्यशेषे 'अविद्या'शब्दितकर्मणो 'मृत्यु'शब्दितपापविधूनने उपयोगप्रदर्शनेन पूर्ववाक्यस्यापि तदविरोधेनैव नेयत्वात् ।।

यद्वा अत्र'विद्या'शब्देन न ज्ञानं विवक्षितम् । येन पूर्वोत्तरवाक्यपर्यालोचनया ज्ञानकर्मणोः समुच्चय आवेद्यते अनया श्रुत्येति तद्विरोधः स्यात् । किन्तु 'द्वे विद्ये वेदितव्ये परापराच' इति इत्युक्त्वा 'अथ परा यया तदक्षरमधिगम्यते' इति श्रुत्याऽवश्यज्ञातव्यविद्या द्वयाऽवेदनात्, तत्र च ब्रह्मावगतिहेतोः 'परविद्या'शब्दप्रतिपाद्यत्वकथनात्, 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति न्यायात् 'विद्या'शब्देन ब्रह्मज्ञानसाधनभूतं वेदादिकमेवोच्यते । तथाच यथा कर्मणः सत्त्वशुद्धिद्वारा प्रतिबन्धकभूतपापाभावसम्पादकतया मानससाक्षात्कारे उपयोगः । तथा वेदादिशब्दविद्याया अपि शाब्दज्ञानजननद्वारा ध्यानमुत्पाद्य तद्द्वारा ब्रह्मसाक्षात्कारः ।

तथाऽपि फलीभूतया ज्ञानात्मिकया विद्यया 'विद्या'शब्दमुख्यार्थभूतया कर्मणां न समुच्चयसिद्धिरिति । तस्मात् ज्ञानवत् कर्मणां मोक्षं प्रति न स्वतन्त्रकारणत्वं स्वर्गं प्रति ज्योतिष्टोमाग्निहोत्रवत् । नापि यागं प्रति व्रीहियवयोरिव मोक्षं प्रति ज्ञानकर्मणोर्विकल्पः । न वा स्वर्गं प्रत्याग्नेयादीनामिव मोक्षं प्रति ज्ञानकर्मणोः समुच्चय इति ।।

।। इति 'विद्यां चाविद्यां च' इति श्रुत्यर्थः ।।

ननु को मोक्ष नाम? यस्य ब्रह्मज्ञानफलत्वं तत्साध्यपरमेश्वरपरमप्रसादफलत्वं चोच्यते। न तावद् 'ब्रह्मवेद ब्रह्मैव भवति' इति श्रुतिप्रतिपन्नजीवब्रह्माभेदः । तस्य नित्य-सिद्धजीवब्रह्मचैतन्यमात्ररूपत्वेन ब्रह्मज्ञानफलत्वायोगात् । नापि 'यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इति श्रुतिप्रतिपन्नसर्वात्मकत्वमेवेह मोक्षत्वेन विवक्षितमिति युक्तम् । सर्वात्मकत्वस्य सर्वान्तर्गतदुःखाद्यात्मकत्वं विनाऽयोगेन तदात्मकत्वावश्यम्भावेन तस्य पुरुषार्थत्वायोगेन स्वतः पुरुषार्थत्वस्य सुतरामयोगात् । नापि –

'ब्रह्मविदाप्नोति परम्'
'तथा विद्वान्नामरूपाद्विमुक्तः'
'परात्परं पुरुषमुपैति दिव्यम्'

इत्यादिश्रुतिप्रतिपन्नब्रह्मप्राप्तिर्मोक्ष इति युक्तम् । जीवब्रह्माभेदवादे प्राप्तेरेवायोगात् आत्ममात्रस्य वैभवमिति वादेऽपि संयोगरूपप्राप्तेरन्यतरकर्मजोभयकर्मजत्वावश्यम्भावेन विभ्वात्मनोः कर्ममात्रसम्भवेन सामग्रीबलेन बाधात् । नित्यद्रव्ययोः समवायानङ्गीकाराच्च । जीवाणुत्वपक्षे विभोः परमात्मनि जीवानां संयोगरूपप्राप्तेरन्यतरकर्मजन्यायाः सम्भवेऽपि न तस्याज्ञानफलत्वं युज्यते । नहि विनाऽपि सिद्ध्यतः तत्फलत्वमभ्युपगमार्हम् ।।

किञ्च संयोगस्यास्थिरफलत्वेन सुखदुःखाभावेतरत्वेन च स्थिर स्वतः पुरुषार्थत्वायोगः । नापि –

**'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'**

इति श्रुतिप्रतिपन्नेश्वरसाम्यं मोक्ष इति युक्तम् । अद्वैतवादे 'परमसाम्य'शब्दस्य ब्रह्माभिन्नत्वरूपतया ज्ञानसाध्यपुरुषार्थत्वानुपपत्तेः ।।

किञ्चाखण्डानन्दस्वरूपब्रह्माभिन्नत्वेऽस्य सुखरूपतैव स्यात्, नतु सुखित्वं सुखसमवायस्यैव 'अहं सुखी स्याम्' इत्यादिप्रकारकेच्छानुरोधेन स्वतः पुरुषार्थत्वावगमात् । नहि सुखं सुखमित्येव पुरुषार्थः किन्तु स्वीयसुखत्वेन । नहि स्वयमेव स्वीयमिति युज्यते । अन्यथा सुखस्य सुखमात्रत्वेन स्वतःपुरुषार्थत्वे वैरिसुखस्यापि स्वीयसुखवत् स्वतःपुरुषार्थत्वप्रसङ्गात् । नच स्वीयत्वं स्वरूपसम्बन्धविशेषः, तच्चाभेदेप्यक्षतमिति वाच्यम् । तथासति निर्विशेषात्मवादक्षतिप्रसङ्गात् ।।

नापि 'तस्याभिध्यानाद्योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृतिः' इति श्रुतिप्रतिपन्न'माया'शब्दिताऽविद्यानिवृत्तिरेव मोक्ष इति शक्यं वक्तुम् । अविद्यानिवृत्तेरपि सुखदुःखाभावेतरत्वेन स्वतःपुरुषार्थत्वानुपपत्तेः । सर्वाद्वैतवादे अविद्यानिवृत्तेरप्यात्ममात्रतया ज्ञानसाध्यपुरुषार्थत्वानुपपत्तेश्च ।।

नापि 'तरति शोकमात्मवित्' इति श्रुतिप्रतिपन्नात्यन्तिकदुःखोच्छेद एव मोक्षः, दुःखाभावरूपत्वाच्च तस्य स्वतःपुरुषार्थत्वमपि युक्तमिति वाच्यम् । तुल्यायव्ययफलत्वेना-

त्यन्तिकदुःखोच्छेदस्य पुरुषार्थत्वायोगात् । नहि मुक्तिसमये सांसारिकदुःखनिवृत्तिवत् सांसारिकं सुखमपि सम्भवति ॥

एतेन **'ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपति ब्रह्मणः सायुज्यं स लोकतामाप्नोति एतासामेव देवतानां सायुज्यं साक्षितां समानलोकतामाप्नोति य एवं वेद'**[१] (म-ना-उ-२७-१५) इति वाक्यपर्यालोचनया सायुज्य-सालोक्यप्राप्तिर्मुक्तिरिति युक्तम् । सायुज्यस्याभेदरूपत्वे तस्य ज्ञानसाध्यत्वेन तत्साध्यपुरुषार्थत्वानुपपत्तेः । सुखदुःखाभावेतरत्वाच्च । अत एव न सालोक्यमपि मोक्ष इति शक्यं वक्तुम् । अत एव 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन' इति श्रुतिवाक्यपर्यालोचनया –

**'यत्र तत्परमं पदं विष्णोर्लोके महीयते ॥**
**देवैः सकृतकर्मभिस्तत्र माममृतं कृधीन्द्रायेन्द्रो परिस्रव ।**
**यत्र तत्परमाप्यं भूतानामधिपतिम् ।**
**भावभावी च योगी च तत्र माममृतं कृधीन्द्रायेन्द्रो परिस्रव**[२]**॥**

इति परिशिष्टवाक्यपर्यालोचनया च नित्यलोकावच्छेदेन जीवस्य परमात्मप्राप्तिर्मोक्ष इत्यपि निरस्तम् ॥

तथाप्राप्तेरपि सुखदुःखाभावेतरत्वेनापुरुषार्थत्व तादवस्थ्यात् । अभेदवादे प्राप्तेरेवायोगात्, प्राप्तेर्द्वितीयसापेक्षत्वात् आत्ममात्रवैभवपक्षेऽप्युक्तदोषतादवस्थ्याच्च । नच जीवात्माणुत्ववादे, परमात्मनोऽनवच्छिन्नसुखरूपतया तत्प्राप्तेरागन्तुकसुखप्राप्तिवत् स्वतः पुरुषार्थत्वं युक्तमिति वाच्यम् । सुखस्य स्वसमवेतसुखत्वेनैव पुरुषार्थत्वात् । अन्यथा जीवात्मनस्तादृशानवच्छिन्नानन्दरूप परमात्मसंयोगवत्वस्य द्वितीयत्वदशायामपि सत्वेन तेन सुखेन 'अहं सुखी' इत्यनुभवप्रसङ्गादिति ॥

अत्राद्वैतवादिनो विदुषो जीवन्मुक्तिनामकासंसारावस्थाविलक्षणावस्थाप्रास्यनन्तरं भोगेन निवृत्तनिश्शेषप्रारब्धतया ततो अव्यवधानेनैव परममुक्तिनिर्गुणमुक्त्यपरनामिकां सविलासा-

---

(१) सायुज्यं सलोकतामाप्नोति इति इदानीन्तन पाठः ॥

(२) ऋग्वेदखिलसूक्तम् ॥

विद्यानिवृत्त्याद्यात्मिकामङ्गीकुर्वाणा जीवन्मुक्तिस्वरूपमेवमनेकधा वर्णयां बभूवुः । तथाहि । अविद्यालेशमात्रानुवृत्तिर्जीवन्मुक्तिः । सा चावरणविक्षेपशक्तिमत्त्या मूलाविद्यायाः प्रारब्ध-कर्मवर्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंश इति तेष्वद्वैतवादिषु केचिदङ्गीचक्रिरे । अन्ये तु क्षालितलशुनभाण्डानुवृत्तलशुनवासनाकल्प्योऽविद्यासंस्कारो यतस्तस्यानुवृत्ति-र्जीवन्मुक्तिरित्युररीचक्रिरे । अपरे तु दग्धपटस्य अयेनानुवृत्तामूलाऽविद्यैव जीवन्मुक्तिरित्यु-ररीचक्रिरे । तदेतत् पक्षत्रयमप्ययुक्तम् । विरोधितत्त्वगोचरनिर्विचिकित्ससाक्षात्कारोदये सति लेशतोऽप्यविद्यानिवृत्त्यसम्भवात् । अन्यथा विद्याऽविद्ययोर्विरोधस्यैव दत्तजलाञ्जलित्वा-पत्तेः ॥

नच वह्निनाशे तदीयदाहानुकूलशक्त्यनुवृत्तिर्दृष्टचरी । येनाविद्यायां निवृत्तायामपि तदीयस्य प्रारब्धकर्मवर्तमानदेहाद्यनुवृत्तिप्रयोजकविक्षेपशक्त्यंशस्यानुवृत्तिस्तद्वदेव सम्भ-विष्यतीति स्यात् । नच वह्न्यादिवदविद्या अवयवारब्धा । येन वह्निनाशेऽपि वह्नित्वाक्रान्त-तदवयवेषु दाहानुकूलशक्तिवदविद्यानाशेऽप्यविद्यात्वसामान्याक्रान्ततदवयवेषु प्रारब्धकर्म-वर्तमान देहाद्यनुवृत्तिप्रयोजकविक्षेपशक्त्यंशानुवृत्तिः सम्भवतीति च स्यात् ॥

अपि च तदवयवानामविद्यात्वाक्रान्तत्वेन वह्नित्वाक्रान्तवह्न्यवयवानां जलसेकेनेव अविद्यात्वाक्रान्ताविद्यावयवानामपि विरोधिविद्यया नाशावश्यम्भावात्, न तदीयविक्षेप-शक्त्यंशानुवृत्तिर्युज्यते । अन्यथा वह्न्यवयवेषु जलसेकेन नष्टेष्वपि दाहानुकूलशक्त्यंशा-नुवृत्तिप्रसङ्गात् । अपि च अविद्यायाः अवयवारब्धत्वे सादित्वप्रसङ्गः । नचैवम् । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इति तदनादित्वश्रुतिविरोधात् । सादित्वाभ्युपगमे अपसिद्धान्तश्च । 'षडस्माकमनादयः'इत्यभ्युपगमादप्रामाणिकानवस्थादोष परिहाराय परमा-णुवादिभिः परमाणुरूपावयवानामिव अविद्यावयव-तदवयवपरम्परायां दूरे गत्वा क्वचिदवयवे-ष्वविद्यात्वाक्रान्तेष्वनादित्वस्यावश्यमङ्गीकार्यत्वाच्च । ततो वरं प्रथमम् अविद्याया एवो-दाहृतश्रुत्यविरोधाय स्वरूपतोऽनादित्वमभ्युपेयम् । नचोदाहृतश्रुतौ मायाया एव अनादित्वं प्रतीयते नत्वविद्यायाः इति वाच्यम् । 'माया चाविद्या च स्वयमेव भवति' इति श्रुत्यन्तरेण मायाऽविद्ययोरभेदकथनात् ॥

एतेन घटावयव-तदवयवपरम्परयाघटत्वानाक्रान्तवदविद्याऽवयव-तदवयवपरम्पराया अविद्यात्वानाक्रान्तत्वमिति पक्षः प्रत्यूढः ॥

तथासति तदवयवपरम्पराया अविद्यावत् ज्ञाननिवर्त्त्यत्वाभावप्रसङ्गेनाबाध्यत्वापातात् । यतो 'ज्ञानमज्ञानस्यैव निवर्तकमिति' परेण नियमाभ्युपगमात् । अविद्याऽवयव-तदवयव-परम्परया-अविद्याकार्यत्वाभावेन तत्समनियतत्वाभावेन च तत्कार्यवत् जीवब्रह्मविभागादि-वच्चाविद्यावृत्त्यधीननिवृत्तिकत्वायोगाच्चेति ॥

एतेन अविद्याया अनादित्वेनारम्भकावयवराहित्येऽपि गगनस्येव हस्तवितस्त्यादि-प्रदेशसम्भवात् । ज्ञानेनाविद्यानाशेऽपि तत्प्रदेशविशेषस्यानाशात्तदीयस्य प्रारब्धकर्मवर्तमान-देहाद्यनुवृत्तिप्रयोजक-विक्षेपशक्त्यंशस्यानुवृत्तिकृतो जीवन्मुक्तिव्यवहार इति निरस्तम् ॥

तस्याऽप्यज्ञानत्वाक्रान्तत्वे अविद्याया इव ज्ञानोदयमात्रेण निवृत्त्यवश्यम्भावात् । तदना-क्रान्तत्वेऽपि जीवब्रह्मविभागादिवदविद्यासमनियतत्वाङ्गीकारे अविद्यानिवृत्त्यनन्तरमेव निवृत्त्य-वश्यम्भावात् । समनियतानभ्युपगमे चाविद्यानिवृत्तौ जातायामपि ब्रह्मवत् तत्प्रदर्शनवृत्त्य-भावप्रसङ्गात् । निवृत्तायामप्यविद्यायां तत्प्रदेशसत्वमङ्गीकुर्वता तत्प्रदेशं प्रत्यविद्याया व्यापकत्वस्य त्यक्तत्वेन व्यापकनिवृत्तिप्रयुक्तनिवृत्तेरप्यशक्यवचनत्वाच्चेति ॥

यद्यप्येते पक्षाः परानभ्युपगम पराहतास्तथाऽपि सम्भावनामात्रेणोद्भाव्य निराकृता इति नानुक्तोपालम्भदोषः प्रसरति ॥

एतेनैव प्रक्षालितलशुनभाण्डस्थलशुननिवृत्त्यप्रयोज्यनिवृत्तिः लशुनवासनावत् साक्षा-त्कारेणाविद्यानिवृत्तावपि तत्संस्कारस्यानुवृत्तिसम्भवात् जीवन्मुक्त्युपपत्तिरिति परास्तम् । तथासति अज्ञानवदज्ञानसंस्कारस्य ज्ञाननिवर्त्त्यत्वाभावापातेन ब्रह्मचैतन्यवदबाध्यत्व-प्रसङ्गात् । कार्यमात्रस्य साक्षात् परम्परया वा अविद्याविक्षेपत्वेनाविद्यारूपोपादानं विनोत्प-त्तिस्थित्योरयोगेनाविद्यां विना अविद्यासंस्कारस्य तद्विक्षेपभूतस्यानुवृत्तेरेवायोगाच्च ॥

किञ्च तत्त्वसाक्षात्कारेण विरोधिना निवृत्तायामविद्यायां तत्संस्कारे एव मानाभावः । नच स्फटिकलौहित्यं प्रति जपाकुसुमसम्बन्धस्येव, अग्नौष्ण्यं(उदरौष्ण्यं-पा) प्रति वह्नि-

संयोगस्येव भाण्डलशुनवासनां प्रति लशुनसम्बन्धस्येव च त्वदभिमतविद्वद्गताविद्यासंस्कारं प्रति कस्यचिदन्वयव्यतिरेकाभ्यां हेतुत्वमवगम्यते । नच तदा संस्काररूपकार्य एव मानाभाव इति वदन्तं प्रति लौहित्यादिकं प्रति स्फटिकादिवदविद्यासंस्कारं प्रति तत्त्वसाक्षात्कारवान् पुरुष एवोपादानं जपाकुसुमादिसम्बन्धवदविद्यानिवृत्तिसम्बन्ध एव तत्रोपाधिरिति वक्तुं शक्यम् । अन्यथा स्फटिकादौ लौहित्यादेरिव विदूष्य अविद्यासंस्कारस्य सोपाधिकाध्यासत्वप्रसङ्गः। वक्ष्यमाणरीत्या अविद्यानिवृत्तेः स्थायित्वेन विदूषित तत्सम्बन्धरूपोपाधेरपि स्थायितया अविद्यासंस्काररूपौपाधिकाध्यासस्य सार्वकालिकत्वप्रसङ्गश्च ।।

अपि च वह्निसंयुक्तजले प्रक्षालितनिवृत्तलशुनभाण्डे च सूक्ष्मतरादेव अवयवगतवासनानां परम्परासम्बन्धेन भानपक्षे कथं तद्दृष्टान्तेन विदूष्याऽविद्यासंस्कारानुवृत्तिस्वीकारो युज्यते । नहि संस्कारापादकमूलाविद्याया लशुनवत् सावयवत्वं सम्भवति, स्वीकृतं वा । येन तत्सूक्ष्मावयवगतः संस्कारः परम्परासम्बन्धेन विद्यमानः विदुषि भिक्षाटनादिलक्षणस्वोचितकार्यनिर्वाहक इत्यङ्गीक्रियेत । ।

अपि च अविद्यासंस्कारस्य भावनाख्य-ज्ञानसंस्कारवदतीन्द्रियत्वे तदुपादानकजीवन्मुक्ति-कालीनान्तःकरण-तत्परिणामभूत-दुःखादेरप्ययोग्यत्वापत्त्या प्रारब्धकर्मफलभोगाभावप्रसङ्गः । योग्यत्वे च साक्षात् सम्बन्धेन भानेच विदूष्याऽपि तदध्यासप्रसङ्गः । नच मिथ्येति जानतः तत्र प्रवृत्तिर्युक्ता । परम्परासम्बन्धेन योग्यत्वे च 'उष्णं जलम्' इतिवत् तद्भानस्य प्रमात्वापत्त्या तद्विषयस्य संस्कारस्यौष्ण्यवदबाधप्रसङ्गः ।।

एतेन अविद्यालेशमात्रानुवृत्तिर्वा तत्संस्कारमात्रानुवृत्तिर्वा जीवन्मुक्तिव्यवहारालम्बनमिति पक्षे तत्त्वसाक्षात्कारेणाविद्यानिवृत्तावपि न अविद्यालेशसंस्कारयोः तेन निवृत्तिः, यावत् प्रारब्धकर्म, प्रारब्धकर्मण एव तावत् तन्निवृत्तिप्रतिबन्धकत्वादिति निरस्तम् ।।

विरोधितत्वसाक्षात्कारेण लेशसंस्कारशब्दिताविद्याविलाससहिताऽऽविद्यानिवृत्तेरवश्यम्भावात् । विलासिन एवासत्वे तद्विलासस्यासत्वमिति नियमात् । प्रारब्धकर्मणां विलासनिवृत्तिप्रतिबन्धकत्वे तुल्यन्यायतया तेषामविद्यानिवृत्तिं प्रत्यपि प्रतिबन्धकत्वापत्तेः ।

तत्वसाक्षात्कारस्य स्वकाले क्षणमप्यविद्यासहिष्णुत्वे, तस्य तद्विरोधित्वे एव मानाभावेन शुक्तिरूप्याध्यासस्थले जातेऽपि तत्त्वसाक्षात्कारे पुनरपि तत्रैव कालान्तरे रजताध्यास-दर्शनात्, तेन तदज्ञानानिवृत्तिवत् श्रवणादिप्रयोज्यनिर्विचिकित्स-ब्रह्मसाक्षात्कारेणापि मूलाऽविद्याया अनिवृत्तेरेव स्वीकार्यत्वाच्च । 'यावन्ति ज्ञानानि तावन्त्यज्ञानानि' इति पक्षस्य गौरवग्रस्तत्वेन हेयतया लाघवेन विषयाज्ञानैकत्वस्यैव स्वीकार्यत्वाच्च । अन्यथा श्रवणादिना प्रथममुत्पन्नेन तत्वसाक्षात्कारेणेदानीमपि संसारापादकस्य मूलाज्ञानस्य नाशेऽपि अनन्तमूलाज्ञानसत्वमङ्गीकृत्य एकैकज्ञानेनैकैकमूलाज्ञाननाशेऽपि मूलाज्ञानान्तरसत्वेन कर्तृ-त्वभोक्तृत्वरूपबन्धाध्यासानुवृत्त्युपपादनोपपत्तेरिदानीन्तनश्रवणादिजन्यतत्त्वसाक्षात्कारसन्ततेः निर्विचिकित्सत्वाभावापराधेनेदीनां न मूलाज्ञाननिवृत्तिरित्यङ्गीकारापत्तेः । तन्निवृ-त्त्यनुभवस्य परोक्षस्थल इवोपपत्तेः । एवं सोपाधिकाध्यासस्थलेऽपि 'यावन्ति ज्ञानानि तावन्त्यज्ञानानीति' पक्षानुसारेणैकज्ञानेन एकैकज्ञाननिवृत्तिसम्भवात् ज्ञानेनाज्ञाननिवृत्तौ जनयितव्यायामुपाधिनिवृत्तेः सहकारित्वेनाकल्पनीयतया लाघवाच्च । तस्मात् लाघवेन तदज्ञानत्वेन तज्ज्ञानत्वेनैव ज्ञानाज्ञानयोर्विरोधो वाच्यः ॥

एवं च तत्त्वसाक्षात्कारोदयानन्तरमेव सविलासाऽविद्यानिवृत्तिर्दुर्वारेति ज्ञाननिवृत्त्य-नन्तरमपि तद्विलासभूत-तत्क्लेशसंस्कारयोः कथमवस्थानमिति न जानीमः ॥

किञ्च एवमज्ञानसंस्कारो नाध्यासः स्यात् । अध्यासमात्रे अज्ञानस्य विषयावरणतयो-पादानतया च कारणत्वात् । नह्युपादानाभावे भावकार्यरूपसंस्काराध्यासो युज्यते । अपि च सति तत्त्वज्ञाने तेन संस्कारजननावश्यम्भावात् तत्त्वज्ञानाहितसंस्कारस्य चाविद्या-संस्कारविरोधिनः प्रादुर्भावे सति तदा कथमविद्यासंस्कारस्तिष्ठेत् ॥

एतेन अविद्यासंस्कारं प्रति निवृत्ताऽविद्यं ब्रह्मैवोपादानमिति निरस्तम् । तस्य ब्रह्म-विवर्तत्वेऽपि परिणामतया स्वसमसत्ताकपरिणामिकारणं विना निर्वाहायोगात् । किञ्चाज्ञान-संस्कारस्य तत्त्वसाक्षात्कारानन्तरमपि सत्त्वे ज्ञाननिवर्त्त्यत्वेन पारमार्थिकत्वप्रसङ्गः । ज्ञानेनेव ज्ञानजन्यसंस्कारेणापि स्वकाले अज्ञानसंस्कारसहिष्णुतया निवृत्त्यभावेन संस्कारद्वारा तस्य ज्ञाननिवर्त्त्यत्वमस्तीति वाचोयुक्तेरप्रसराच्च ॥

एतेनैव दग्धपटन्यायेन[१] ज्ञानानन्तरं मूलाज्ञानानुवृत्तिर्जीवन्मुक्तिव्यवहारालम्बनमिति प्रत्यूढम् । तथासति तदा दग्धपटस्य समीचीनपटार्थक्रियासामर्थ्याभाववत् दग्धाविद्याया अदग्धाविद्यार्थक्रियासामर्थ्याभावापत्त्या इदानीमिव तत्त्वसाक्षात्कारोदयकाले भिक्षाटनादावप्रवर्तकत्वप्रसङ्गात् । दग्धपटवत् भिक्षाटनादिकालानुवृत्तदग्धाविद्याया सादिकार्यत्वेन परिणामत्वेन च तदुपादानतया अदग्धाविद्यान्तरस्यावश्यापेक्षणीयत्वाच्च । दग्धं पटं प्रत्यग्दग्धपटस्येव दग्धाऽविद्यां प्रत्यग्दग्धाविद्यायाम् अनुपादानमित्यङ्गीकारे च दग्धपट इव दग्धाऽविद्याया सादिभावकार्यत्वेऽनन्यस्यैव तदुपादानतयोपेक्षणीयत्वाच्च ॥

नच तदा विकारिकारणमदग्धाऽविद्यातोऽन्यत् सम्भवति । सम्भवे वा तत्किमनादि सादिर्वा? आद्येऽपि तत् किं निर्विशेषब्रह्मचैतन्यरूपं ततोऽन्यत्? अन्यदपि किं पारमार्थिकमुत अपारमार्थिकम्? नाद्यः । निर्विशेषब्रह्मचैतन्यरूपत्व व्याकोपात् । नचाविद्यां दग्धां प्रत्युपादानत्वं न विशेष इत्यस्ति । नच तत्कल्पितत्वात् स्वाभाविकवन्निर्विशेषत्वाविरोधीति वाच्यम् । कल्पकाज्ञानस्य ज्ञानेन विनष्टतया तत्कल्पितत्वस्यैवायोगात् । अकल्पितस्य च तस्य वास्तव निर्विशेषत्वविरोधित्वात् ॥

किञ्चैवं ब्रह्मणोऽविद्यावत् स्वसमसत्ताक-दग्धाविद्यापरिणामं प्रति कारणत्वापत्त्या पारमार्थिकपरिणामिकारणत्वप्रसङ्गः । न द्वितीयः । अद्वैतहानेः । नापि द्वितीयः । सादेस्तस्योपादानसापेक्षतया तदा तथाविधोपादानसत्त्वे मानाभावेन सामग्रीबाधादेव दग्धाविद्यालक्षणकार्यानुपपत्तेः । सङ्कोचे कारणाभावात् । सादिकार्यत्वेनोपादान निरपेक्षत्वाच्च । नच दग्धपटवत् दग्धाविद्योपादनसापेक्षेति वाच्यम् । यद् ध्वंसजन्यं यद् द्रव्यं तत्तदुपादानोपादेयमिति नियमात् पटारम्भकपरमाणूनामेव दग्धपटारम्भकत्वेन दृष्टान्तासम्मतेः ॥

एतेन अदग्धाविद्यायाः इव दग्धाविद्याया भिक्षाटनादिप्रवृत्त्याद्यर्थक्रियानिर्वाह इति निरस्तम् । अदग्धपटेनेव दग्धपटेन तुल्यवदर्थक्रियाकारित्वादर्शनात् । कल्पनायाश्च दृष्टानुसारित्वात् ॥

---

(१) यथा दग्धपटः किञ्चित्कालं तादृगवयवसंस्थानानुवृत्त्या अनुवर्ततेतथेत्यर्थः ॥ इति न्यायामृत-लघ्वामोद वाक्यम् ॥

किञ्च पटारूढवह्नेः पटदाहानन्तरमेव नाशवदविद्यारूढज्ञानाग्नेरविद्या दाहानन्तरमेव नाशावश्यम्भावेन दग्धपटस्यादग्धपटवत् च्छेदभेदादिक्रियां विनैव नाशवद् दग्धाविद्याया अदग्धविद्यावत् ज्ञानं विनैव नाशापत्त्या च ज्ञाननिवर्त्त्यत्वरूपबाध्यत्वाभावप्रसङ्गः । दग्धाऽविद्याया भिक्षाटनाद्यनेककालस्थायिव्यवहारनिर्वाहायाङ्गीकारात् अविद्यादाहानन्तरमपि ज्ञानाग्नेस्तावत्कालपर्यन्तावस्थाने मानाभावेन, दग्धाविद्यायाः तत्कार्यभूतभिक्षाटनादिव्यवहारस्य च ज्ञानाग्निसम्बन्धं विनैव नाशस्य कारणान्तरेणैव वक्तव्यत्वात् ॥

अपि चैवं दग्धाविद्या, अविद्यायाः तत्प्रयुक्तभिक्षाटनादिकार्यस्य च सादेरनाद्यदग्धाऽविद्यायां विना नाध्यासत्वं युक्तम् । नच दग्धत्वादग्धत्वौदासीन्येन लाघवादविद्यात्वेनैवाध्यासं प्रति प्रयोजकत्वम् । अत एव अनाद्यविद्याऽध्यासं प्रत्यपि तस्या एव स्वस्वेतराध्यासौ प्रति प्रयोजकत्वोपगमात् अध्यासमात्रस्य नाविद्याप्रयोज्यत्वनियमभङ्ग इति वाच्यम् । तथासति ज्ञानेनाविद्याध्यासस्य सर्वात्मना निरासो नेत्यापातेन ब्रह्मज्ञानार्थमयत्नापत्तेरिति दिक् ॥

तस्मात् दग्धपटन्यायेन दग्धाविद्यानिवृत्तिरेव जीवन्मुक्तिव्यवहारालम्बनमिति पक्षोऽप्ययुक्त एवेति॥

नचैवं जीवन्मुक्तिबन्धने तच्छास्त्रविरोधः । तस्य श्रवणादिविध्यर्थत्वमात्रत्वेनाविरोधात् । शास्त्रस्य जीवन्मुक्तिप्रतिपादने प्रयोजनाभावात् । अतः कृत निदिध्यासनस्य ब्रह्मसाक्षात्कारोदयमात्रेण सविलासाविद्याविलिप्सेनैव निवर्तत इत्येव तत्त्वमिति ॥

## ॥ पराङ्गीकृतजीवन्मुक्तिस्वरूपखण्डनम् ॥

एवं पराङ्गीकृतनिर्गुणमुक्त्यपरनामकपरममुक्तिस्वरूपमपि दुर्वचम् । तथाहि । न तावत् ब्रह्मसिद्धिकाररीत्या अविद्यानिवृत्तिः परममुक्तिः । सचात्मस्वरूप एवेति । आत्मस्वरूपमात्रस्य श्रवणादिसाध्याऽऽत्मतत्त्वसाक्षात्कारानन्तरमिव ततः पूर्वमपि सत्वेन प्रतियोगिजन्याभावत्वरूपनिवृत्तिलक्षणयोगित्वाभावेन तद्विशेषभूताऽविद्यानिवृत्तित्वस्यैवायोगात्। कथञ्चित् साध्याभावत्वस्य प्रागभावेऽपि सत्त्वेन ध्वंसापरनामकनिवृत्तिलक्षणत्वायोगात्, अनतिप्रसक्तधर्मस्यैव लक्षणत्वात्, प्रागभावत्व-निवृत्तित्वाद्यभावधर्माणां भावधर्मभूतभावत्वस्येव घटादि-

धर्मभूतघटत्वादेरिव, चाखण्डधर्मरूपत्वेऽपि घटत्वादेः पृथुबुध्नोदराकारत्वादिवन्निवृत्तित्वादेः प्रतियोगिजन्याभावत्वादिरूप-समनियतधर्माणां प्रमिततया दुरपह्नवत्वात् ।।

किञ्च अविद्यानिवृत्तेरनाद्यनन्तात्मस्वरूपमात्रत्वे तस्य केनापि साध्यत्वायोगात्, तत्साधनत्वेन श्रुतिप्रतिपन्नतत्त्वसाक्षात्काराय श्रवणादावप्रवृत्तिप्रसङ्गः । नच वस्तुतोऽविद्या-निवृत्तित्वेन स्वीकृतात्मस्वरूपस्य तत्त्वसाक्षात्काराध्याससाध्यत्वेऽपि तयोः साध्य-साधन-भावभ्रमात् तत्प्रयोजकसाक्षात्कारोपाये श्रवणादौ प्रवृत्तिः सम्भवतीति वाच्यम् । तथाऽपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिब्रह्मस्वरूपलक्षणपरद्वित्रिवाक्यार्थनिश्चयवतां ब्रह्मसाध्यत्व-निश्चयस्य सुलभत्वेनोक्तदोषतादवस्थ्यात् ।।

नच 'सत्यं ज्ञानमनन्तं ब्रह्म' 'नित्यं विज्ञानमानन्दं ब्रह्म' इति द्वित्रिवाक्यार्थ-निश्चयेऽधिकयत्नापेक्षाऽस्ति । येन तादृशयत्नं विना कृततद्वाक्यात् निर्विचिकित्सज्ञानो-दयासम्भवेन तद्वाक्याध्येतॄणामपि गृहीतनित्यानन्तपदतत्पदार्थसङ्गतीनां श्रवणादौ प्रवृत्ति-प्रयोजकस्य ब्रह्मसाध्यत्वभ्रमस्य सत्वेन तत्र प्रवृत्तिरुपपद्यत इत्युच्येत । तस्मादविद्यानिवृत्तेः देशतः कालतः परिच्छेदरहितात्ममात्रत्वं निश्चिन्वतामुक्तरीत्या तस्याः ज्ञानसाध्यत्व-व्यतिरेकनिश्चय सत्त्वात् तत्साधनत्वेन प्रयोजनभूतात्मसाक्षात्काराय श्रवणादावप्रवृत्तिप्रसङ्गो दुर्वार इति ।।

नन्वसति ज्ञानेऽनर्थहेत्वविद्यायाः सत्त्वात् तयाऽनर्थप्राप्तिरवश्यम्भाविनीति ज्ञानमवश्य-मपेक्षितम् । उक्तरीत्याऽनर्थहेत्वविद्या-विनिवृत्तेर्नित्यसिद्धात्मस्वरूपमात्रत्वेऽपि 'यस्मिन् सति यदग्रिमक्षणे यस्य सत्त्वं यद् व्यतिरेकेचाभावस्तत्तत्साध्यमि'ति लक्षणानुरोधेन तस्या-ज्ञानसाध्यत्वसम्भवात्, तन्निश्चयज्ञानाय श्रवणादौ प्रवृत्तिः प्रयोजक इति न काप्यनुपपत्तिः । अस्ति चात्मतत्वज्ञाने सत्यग्रिमलक्षणे आत्मरूपाविद्यानिवृत्तिसत्त्वं तद्व्यतिरेकेच तत्प्रति-योग्यविद्यारूपस्तदभाव इत्युक्तज्ञानसाध्यत्वमात्मरूपाविद्यानिवृत्ताविति चेन्न । एवं हि आकाशादेरपि दण्डसाध्यत्वप्रसङ्गात् । अस्ति च आकाशादेरपि दण्डसत्यग्रिमक्षणे सत्त्वं तद्व्यतिरेके अभाव इति केवलान्वयित्वेन तदभावस्यादुर्लभत्वात् । नचोक्तसाध्यत्वशरीर-प्रविष्टोऽभावः प्रागभाव इति नोक्तातिप्रसङ्गः इति वाच्यम् । एवं हि अविद्यानिवृत्तेरपि ज्ञानसाध्यत्वप्रसङ्गात् । नह्यनादेरात्मनः प्रागभावः सम्भवति ।।

किञ्च यत्प्रागभावरूपव्यतिरेकप्रयुक्तप्रागभावप्रतियोगि तदेव तत्साध्यमित्युच्यते, नान्यत् । अतिप्रसङ्गात् । अन्यथा हि घटार्थिनो हि दण्डादाविवाकाशाद्यर्थिनस्तत्र प्रवृत्तिः स्यात् । एवं च कथमात्मरूपाविद्यनिवृत्तेर्ज्ञानसाध्यत्वम् । नचैवं दुःखप्रागभावादेः प्रायश्चित्ताद्यसाध्यत्वप्रसङ्गः, प्रागभावस्य प्रागभावाप्रतियोगित्वादिति वाच्यम् । इष्टापत्तेः । नहि 'घटो दण्डजन्य' इतिवत् 'दुःखप्रागभावः प्रायश्चित्तजन्य' इत्यविगीतव्यवहारोऽस्ति । नहि प्राग्विद्यमानस्यैव घटस्य नाशसामग्रीविघटको घटस्य जनक इति वा घटो वा तज्जन्य इति व्यवह्रियते । किन्तु तेनासौ परिपालित एवेति ॥

यद्यपि दुःखप्रागभावादावपि प्रायश्चित्तादिसाध्यत्वव्यवहारोऽस्ति । तथाऽपि नासावविगीतः । तस्मादविद्यानिवृत्तिर्नात्मस्वरूपरूपा किन्तु तदतिरिक्तैव वाच्या । एवं चात्मस्वरूपरूपैव सा परममुक्तिव्यवहारालम्बनमिति पक्षो न युक्तः ॥

॥ इति ब्रह्मसिद्धिकारोक्तपरममुक्तिस्वरूपखण्डनम् ॥

## ॥ अथ आनन्दबोधोक्तपञ्चमप्रकाराविद्यानिवृत्तिरूपमुक्तिखण्डनम् ॥

आनन्दबोधस्तु आत्मन्येवाविद्यानिवृत्तिः । अविद्यानिवृत्तिरेव परममुक्तिः । साचात्मातिरिक्तैव किन्तु न सती अद्वैतहानेः । नाप्यसती । शुक्तितत्त्वसाक्षात्कारेण तदज्ञानं निवृत्तमित्यपरोक्षप्रतीत्यनुपपत्तेः । नापि सदसद्रूपा, विरोधात् । नाप्यनिर्वचनीया । सादेः सोपादानत्वनियमेन मुक्तावपि अनिर्वाच्याविद्यानिवृत्त्युपादानत्वेन अज्ञानापातेन अनिर्मोक्षप्रसङ्गात् ज्ञाननिवर्त्त्यत्वापत्तेश्च । नचेष्टापत्तिः । तस्या ब्रह्मज्ञानफलत्वेन नित्यपुरुषार्थत्वावश्यम्भावात् । किन्तु उक्तप्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारेत्याहुः[१] । तदपि न । अविद्यानिवृत्तेः पञ्चमप्रकाराङ्गीकारेऽपि विरोधानिस्तारात् । सदसद्रूपत्वाङ्गीकारे सत्वासत्वरूपविधिसमुच्चयविरोधवत् सत्वाभावासत्त्वाभावरूपनिषेधसमुच्चय विरोधस्यैवमपि अपरिहारात् । सत्त्वाभावासत्त्वाभावयोः परस्परविरहरूपताया वा परस्परविरहव्याप्यताया वा आवश्यकत्वात् । अन्यथा अविद्यानिवृत्तेः सदसद्रूपत्वत्यागानुपपत्तेः ॥

---

(१) 'न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षयः । यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपदन्'॥ इत्युक्तपञ्चमप्रकारमित्यर्थः ॥

अपि च पदार्थानां सत्त्वासत्त्वरूपप्रकारद्वयातिरिक्ततृतीयप्रकारस्यैवाभावात् पञ्चम-प्रकारताया अष्टमनवमरसतुल्यतया निष्प्रामाणिकत्वं दुर्वारम् । सादिकार्यत्वप्रयुक्तसोपा-दानत्वं च । तदेवं पश्चमप्रकाराविद्यानिवृत्तिरिति पक्षोऽप्ययुक्त इति ॥

॥ इति आनन्दबोधोक्तपश्चमप्रकाराविद्यानिवृत्तिरूपमुक्तिखण्डनम् ॥

(१)अद्वैतविद्याचार्याभिधानास्तु अविद्यावदविद्यानिवृत्तिरप्यनिर्वाच्यैव । नच तदनुवृत्तौ तदुपादानाज्ञानस्यापि अनुवृत्तिनियमात् अनिर्मोक्षप्रसङ्गः । तदनुवृत्तौ प्रमाणाभावात् । उत्पत्तेः प्रथमसमयमात्रसंसर्गिभावविकाररूपत्ववन्निवृत्तेरपि चरमसमयमात्रसंसर्गिभावविकार-रूपत्वोपपत्तेः(विकारपरत्वोपपत्तेः-पा)। अत एव 'यथापूर्वं पश्चाच्चोत्पत्स्यते उत्पन्न' इति भाविभूतभावेन व्यवह्रियमाणाया उत्पत्तेः प्रथमसमयमात्रे उत्पद्यत इति वर्तमानत्व-व्यवहारः । तथा 'पूर्वं पश्चाच्च निवर्तिष्यते निवृत्तः' इति भावेन भाविभूतव्यवह्रियमाणाया निवृत्तेश्चरमसमयमात्रे 'निवर्तते नश्यति ध्वंस' इति वर्तमानत्वव्यवहारः । निवृत्तेरनुवृत्तौ तु चिरशकलितेऽपि 'घटः इदानीं निवर्तते' इत्यादिव्यवहारप्रसङ्गः । आख्यातानां प्रकृत्यर्थ-वर्तमानत्वाद्यर्थाभिधायित्वात् ॥

ननु च तेषां स्वस्वाभिहितसङ्ख्याश्रयप्रकृत्यर्थ-कर्तृ-कर्मगत-वर्तमानत्वाद्यर्था-भिधायकत्वं स्वाभिहितप्रकृत्यर्थानुकूलव्यापारगतवर्तमानत्वाद्यभिधायकत्वं वाऽस्तु, तथा च निवृत्तिक्रिया कर्तृचूर्णितस्य घटस्य तद्गतनिवृत्त्यनुकूलव्यापारस्य चावर्तमानत्वान्नोक्ताति-प्रसङ्गः इति चेन्न । आद्ये उत्पन्नेऽपि घटे उत्पद्यत इति व्यवहारापत्तेरुत्पत्तिक्रियाकर्तुर्घटस्य वर्तमानत्वात् । द्वितीये आमवातजडीकृतकलेबरे उत्थानानुकूलयत्नवत्युत्थानानुदयेऽप्यु-त्तिष्ठतीति(२) व्यवहारापत्तेः । आख्यातार्थस्य प्रकृत्यर्थभूतोत्थानानुकूलस्य यत्नरूपव्यापारस्य वर्तमानत्वात् । तस्मात् प्रकृत्यर्थगतमेव वर्तमानत्वाद्याख्यातार्थ इति ध्वंसस्य स्थायित्वे चिरनिवृत्तेऽपि घटे निवर्तत इति व्यवहारो दुर्वारः ॥

यदि च मुद्गरादिशकलिते घटे ध्वंसो नाम कश्चिदभावस्तत्प्रतियोगिकः स्थायी-

---

(१) 'अद्वैतविद्याचार्याभिधानास्तु' इत्यस्य 'इति वदन्ति' इत्यनेन (पु.५३०) अन्वयः ।

(२) अनुकूलयत्नवत्युत्थानानुदये इति ताळपत्रस्थ पाठः ॥

भूतलाद्याश्रितस्तदा कपालमालापसरणे तदनपसरणेऽपि मणिकशरावादि-कपालव्यावृत्त-कपालसंस्थानविशेषादर्शने च किमिति स प्रत्यक्षो न स्यात् । कपालसंस्थानविशेषादिनाऽनुमेयो । घटादिध्वंसो न प्रत्यक्षा इति चेत्, तर्हि तेन मुद्गरापातकालीनस्योत्पत्तिवद् भावविकाररूपतया प्रतियोग्याश्रितस्य ध्वंसस्यानुमानं सम्भवतीति न ततः पश्चादनुवर्तमान-प्रतियोग्यनधिकरणाश्रिताऽभावरूपध्वंससिद्धिः । 'इह भूतले घटो ध्वस्तः' इति भूतलेऽधिकरणत्वव्यवहारस्य 'इह भूतले घट उत्पन्न' इतिवद्भावविकारयुक्त-प्रतियोग्यधिकरणविषयत्वोपपत्तेः । घटध्वंसानन्तरं भूतले घटाभावव्यवहारस्य घटापसरणानन्तरं तदभावव्यवहारवत् समयविशेषसंसर्ग्यत्यन्ताभावालम्बनतोपपत्त्या ध्वंसविषयत्वस्याकल्पनीयत्वाच्च ॥

एवं सति घटोत्पत्तेः पूर्वं तदभाव-व्यवहारोऽप्यत्यन्ताभावेन चरितार्थ इति प्रागभावोऽपि न स्यादिति चेत् । सोऽपि माभूत् । नन्वेवं 'प्रागभावाधारकालः पूर्वकालः ध्वंसाधार उत्तरकालः' इति निर्वचनासम्भवात् काले पूर्वोत्तरादिव्यवहारः किमालम्बनः स्यात्? घटादिषु प्रतियोगित्वादिव्यवहारवदखण्डकिञ्चिद्धर्मगोचरोऽस्तु । अभावरूपस्थायिध्वंसाद्यभ्युपगमेऽपि तेषु ध्वंसत्वादेरखण्डस्यैव वक्तव्यत्वात् । नच जन्माभावत्वरूपं सखण्डमेव ध्वंसत्वम् । ध्वंसप्रागभावरूपस्य घटस्य ध्वंसत्वापत्तेः । नच सप्तमपदार्थत्वरूपाभावत्वं विवक्षितम् । घटस्य प्रागभावं प्रत्यपि ध्वंसत्वाभावप्रसङ्गेन घटकाले प्रागभावोत्तरकालत्वव्यवहारस्य निरालम्बनत्वापत्तेः । नच प्रतियोग्यतिरिक्तः प्रागभावः ध्वंसः । तथासति तुल्यन्यायतया ध्वंसप्रागभावोऽपि प्रतियोग्यतिरिक्तः स्यादिति प्रागभावध्वंसस्यापि प्रागभावोऽन्यस्तस्यापि कश्चिद् ध्वंसस्तस्यापि प्रागभावोऽन्य इत्यप्रामाणिकानवधिकध्वंसप्रागभावकल्पनापत्तेः ॥

नचान्यध्वंसत्वमात्माश्रयादिशून्यं निर्वक्तुं शक्यम् । एवं प्रागभावत्वमपि । तस्मात् न पूर्वं प्रागभावेन च पश्चात् प्रध्वंसाभावो मध्ये परं कश्चित् कालमनिर्वचनीययोत्पत्ति-स्थिति-ध्वंसरूप-ध्वंसाभावरूपविकारवान् घटाद्यध्यासः । एवं चाविद्यानिवृत्तिरपि ब्रह्म-साक्षात्कारोदयानन्तरक्षणवर्ति कश्चिद्भावविकार इति तस्या मुक्तावनुवृत्त्यभावात् न तदनिर्वाच्यत्वे कश्चिद्दोष इति ॥

नन्वेवमविद्यानिवृत्तेः क्षणिकत्वे मोक्षः स्थिरपुरुषार्थो न स्यादिति चेत् । भ्रान्तोऽसि!

न ह्यविद्यानिवृत्तिः स्वयमेव पुरुषार्थेति तस्य ज्ञानसाध्यत्वमुपेयते । तस्याः सुखदुःखाभावेतरत्वात्।। किञ्चाखण्डानन्दावरकसंसारदुःखहेत्वविद्योच्छेदे अखण्डानन्दस्फुरणं संसारदुःखोच्छेदश्च भवतीति तदुपयोगितया तस्यास्तत्त्वज्ञानसाध्यत्वमुपेयत इति वदन्ति ।

अत्र ब्रूमः । यत्र घटादेर्निवृत्तिस्तत्र निवृत्त्यनन्तरम् 'अत्र घटो नास्तीति' घटासत्त्वं प्रतीयत इत्यविवादम् । तच्चासत्वं नात्यन्ताभावरूपमङ्गीकर्तुं शक्यम् । तथात्वे अन्यत्रेव घटनिवृत्तिस्थलेऽपि 'घटोऽत्र नासीत् नास्ति न भविष्यति' इति घटस्य त्रैकालिकनिषेधप्रतियोगित्वप्रतीतिव्यवहारप्रसङ्गात् । नहि तत्रत्य घटाभावस्य त्रैकालिकत्वं कदाचिदपि प्रतीयते । नच तथा प्रतीत्यभावे च निवृत्तिस्थलीयघटाभावस्यात्यन्ताभावमभ्युपगमार्हम् । किन्तु तदसत्त्वं घटादेर्निवृत्तिरूपमेव स्वीकर्तुमुचितम् ।।

किञ्च तत्रत्य घटसत्त्वस्य[१] तन्निवृत्त्यत्यन्ताभावरूपत्वे तस्य स्वदेशादन्यत्र प्रतियोगिसहिष्णु स्वभावत्वेन निवृत्तिदेशस्यच स्वदेशत्वेन तत्र घटादिरूपप्रतियोगिसत्त्वविरोधित्वेऽपि तदन्यदेशे तदविरोधिस्वभावतया, तत्रत्य घटाद्यसत्वस्य च निवृत्तेः स्वकाल एव प्रतियोगिभूत-घटादिसत्वासहिष्णुस्वभावत्वेन विरुद्धधर्माक्रान्ततया, तत्रत्य घटाद्यसत्त्वस्य नात्यन्ताभावरूपत्वमुपेयम् । किन्तु स्वकालमात्रे प्रतियोगिस्वरूपासहिष्णुस्वभावनिवृत्तिरूपत्वमेवोपेयमिति । ननु स्वानीतापसारितघटस्थले घटतदत्यन्ताभावयोरपि सादेश्य दर्शनात् प्रतियोगिसादेश्यस्यच निवृत्तिस्थलीयासत्त्वात्यन्ताभावयोः साधारणधर्मतया विरुद्धधर्माक्रान्तत्वमेवासिद्धमेवेति चेत् । न । निवृत्तिस्थलीयासत्त्वस्य घटादिरूपप्रतियोगिनाऽत्यन्ताभावस्येव सादेश्यसत्त्वेनाविरोधेऽपि निवृत्तिस्थलीयासत्त्ववत् अत्यन्ताभावस्य स्वकाले प्रतियोग्यसहिष्णुस्वभावत्वाभावेन तयोर्विरुद्धधर्माक्रान्तत्वस्य तथाऽप्यनपायात् ।।

अपि च अत्यन्ताभावस्य सर्वकालसम्बन्धित्वेन स्वकालेतरकालस्यैवाप्रसिद्धत्वात् प्रतियोगिस्वरूपसहिष्णुत्वं स्वभावस्तथा स्वाश्रयदेशान्यदेश एव प्रतियोगिस्वरूपसहिष्णुत्वं च स्वभावः निवृत्तिस्थलीयासत्वस्य तु स्वाश्रयभूतकालमात्रेऽपि प्रतियोग्यसहिष्णुत्वं स्वभाव इति तयोर्महावैलक्षण्यसत्वेन निवृत्तिस्थलीय घटाद्यसत्त्वस्यात्यन्ताभावरूपतायाः सर्वथाऽनुप-

(१) तन्निवृत्यन्यात्त्यन्ताभाव इति तालपत्रस्थ पाठः ।।

पत्तेः । निवृत्तिस्थलीयासत्वस्य च स्वोत्पादकसामग्रीविरहकाले प्रतियोगिनो घटादेः सत्त्वेनान्वयव्यतिरेकाभ्यां स्वसम्बन्धकाल एव प्रतियोगिसत्त्वासहिष्णुस्वभावत्वावधारणात् । किञ्च आनीतापसारितघटादिप्रतियोगिस्थलेऽन्यत्रेव घटादेरत्यन्ताभावाङ्गीकारे भावाभावयोर्विरोधस्य दत्तजलाञ्जलित्वापत्तेः । न तत्र घटाद्यत्यन्ताभावोऽभ्युपगमार्हः ।।

किञ्च तथासति घटादिप्रतियोगिविशिष्टभूतलादिदेशेऽपि तदसम्बद्धदेशइवेदानीमत्र घटो नास्तीति प्रतीतिव्यवहारयोः प्रामाण्यापत्तिः । तत्रात्यन्ताभावस्यानादिनित्यत्वेनामूर्तत्वेन च नाशदेशान्तरगमनयोरयोगादनभ्युपगमाच्च । अन्यथा क्लृप्तपरित्यागाक्लृप्तस्वीकारापत्तेः । विशेषात् प्रतीतिव्यवहारनिर्वाहायोत्पादविनाशशीलस्याभावान्तरस्यैव तत्र स्वीकारप्रसङ्गः । निवृत्तिवत् तावत् समयमात्रसंसर्गिभावविकाररूपाभावस्य वा तादृशप्रतीतिव्यवहारनिर्वाहकस्य स्वीकारप्रसङ्गश्च ।।

अपि चानीतापसारितघटादिस्थलैतदत्यन्ताभावाङ्गीकारे घटरूपपरिमाणयोरिवैकाधिकरण्यसम्भवेनाविरोधात् । 'प्रथमं भूतले घट' इति प्रतियोगिज्ञानानन्तरं तस्य प्रतियोगिसन्निकर्षत्वेन वा, तदज्ञानत्वेन वा, सामग्रीत्वेन तत्कालेऽत्र भूतले घटतदत्यन्ताभावाविति तदुभयगोचरसमूहालम्बनप्रमाप्रसङ्गः । नहि घटे रूपपरिमाणे इति समूहालम्बनं नेत्यस्ति ।।

अपि च घटोत्पत्तिनिवृत्त्योरिव तदत्यन्ताभावस्यापि यावद् व्यवहारसमयमात्रसंसर्गिघटधर्मिकभावविकारत्वस्य वक्तुं शक्यत्वेन घट-तदत्यन्ताभावयोः समानदेशत्वासिद्धिप्रसङ्गः । भूतलेऽत्र घटो नास्तीति प्रतीतेर्भूतले घट उत्पन्न इतिवत् भूतले घटो निवृत्त इतिवच्चोपपत्तेः ।।

ननु घटवतिदेशे स्वरूपेण तदत्यन्ताभावसत्त्वेऽपि प्रतियोगिदेशान्यदेशत्वादिरूपतत्प्रमाप्रयोजकसम्बन्धाभावात् तत्र तद्विशिष्टप्रतीतिव्यवहारप्रसङ्गो नेति चेन्न । तथासति ततोऽन्यत्र प्रतियोगिभूतघटाद्यपसरणानन्तरमप्यत्र घटो नास्तीति प्रतीतिव्यवहाराभावप्रसङ्गात् । यदा कदापि प्रतियोगिभूतघटसम्बद्धदेशस्य प्रतियोगिदेशत्वेन तदन्यदेशत्वाभावेन तद्रूपाभावप्रमा नियामकप्रत्यासत्त्यनुपपत्तेरन्यत्र घटापसरणेऽपि तत्कालस्य प्रतियोगिकालत्वानपायेन तदन्यकालत्वरूपप्रत्यासत्त्यनुपपत्तेश्च ।।

अन्योन्याभावस्याव्याप्यवृत्तित्वाङ्गीकारे च जीवेश्वरयोरपि श्रुतिप्रत्यक्षसिद्धभेदाभेदयोरपि वास्तवत्वसम्भवेन भेदमिथ्यात्वस्यानङ्गीकारापत्तेः । नच प्रतियोगिसंयोगध्वंस एव तत्राभावप्रमानियामकप्रत्यासत्तिरिति शक्यं वक्तुम् । त्वन्मते घटादिरूपप्रतियोगिसंयोग ध्वंसस्य चरमसमयमात्रसंसर्गिभावविकारत्वेन चरमसमयानन्तरं तत्तदभावेन घटाद्यत्यन्ताभावप्रमित्यभावप्रसङ्गतादवस्थ्यात् ॥

अपि च प्रतियोगिभूतघटसंयोगोत्पत्तेः प्राक् तत्र घटसंयोगध्वंसस्यासम्भवेन त्वदुक्तसामग्रीविरहात्, तत्र भूतलादौ तदत्यन्ताभावप्रमितिव्यवहारयोरभावप्रसङ्गः । नच तदापि घटसंयोगप्रागभावोऽस्ति । नचैवं क्वचित् प्रागभावप्रत्यासत्तिः क्वचित् प्रध्वंस इत्यननुगमदोषः सावधिघटसंयोगसंसर्गाभावत्वेन घटात्यन्ताभावप्रमितिनियामकप्रत्यासत्तेरनुगमसत्त्वादिति वाच्यम् । तथाऽपि घटसंयोगात्यन्ताभावस्थले तदुभयाभावेन तत्र घटाद्यत्यन्ताभावप्रमित्यभावप्रसङ्गतादवस्थ्यात् ॥

एतेन घटसंयोगसंसर्गाभावो घटात्यन्ताभावप्रमिति-नियामकप्रत्यासत्तिरिति निरस्तम् । एकवारं घटसंयोगध्वंसे यत्र जातस्तत्र पुनरपि घटानयने उक्तप्रत्यासत्तेः सत्त्वेन घटात्यन्ताभावप्रमितिप्रसङ्गात् । अपि चानीतापसारितघटादिस्थले घटोऽत्र नास्तीति प्रतीतेः प्राक् पटसंयोगात् संयोगप्रागभावविषयत्वेन घटापसरणोत्तरकालं तत्प्रध्वंसविषयत्वेन चोपपत्तौ तत्र घटात्यन्ताभावसत्त्वे एव मानाभावेन पटसंयोगप्रागभावप्रध्वंसाभावात्यन्ताभावानां तत्संसर्गाभावत्वेनानुगतानां घटात्यन्ताभावप्रमितिनियामकप्रत्यासत्तित्वकल्पनानुपपत्तिः । नहि तदा तत्र घटसंयोगप्रागभावप्रध्वंसाभावविषयत्वेनान्यथासिद्धा घटोऽत्र नास्तीति प्रतीतिः तत्र तदा घटात्यन्ताभावसाधनस्येष्टे ॥

किञ्चात्र घटाभावप्रतीतेः कदापि 'नास्त्यत्र घटो नासीन्न भविष्यति' इति घटत्रैकालिकत्वगोचरप्रतीतेरभावे तस्य घटात्यन्ताभावरूपतायां किमपि मानमस्ति । नच मानाभावेन विषयासत्वे तत्प्रमितिनियामकतया यस्य कस्यचित्प्रत्यासत्तित्वकल्पनं युक्तम् । किञ्च प्रागभावमेवानङ्गीकुर्वतो घटात्यन्ताभावप्रत्यासत्तितया तत्संयोगप्रागभावप्रत्यासत्तित्वाङ्गीकारायोगः । एवं चरमसमयमात्रसंसर्गिभावविकारो घटादेर्ध्वंस इति स्वीकुर्वतस्तादृश-

विकारस्य घटमात्राश्रितत्वेन घटात्यन्ताभावाश्रयभूतलाद्यनाश्रितत्वेन तत्रत्यघटात्यन्ताभावप्रमितिनियामकप्रत्यासत्तित्वाङ्गीकारायोगः । अपिचोक्तरीत्या उक्तस्थले घटसंयोग-प्रागभाव-प्रध्वंसयोरप्रामाणिकत्वादिना घटात्यन्ताभावप्रमितिनियामकप्रत्यासत्तित्वस्यायोगेन तत्संयोगात्यन्ताभावस्यैव पारिशेष्यात् तत्प्रत्यासत्तित्वस्य वक्तव्यतया तस्य च केवलान्वयिनो घटसंयोगात्यन्ताभावस्य घटवत्यपि सत्वेन तत्रापि घटात्यन्ताभावप्रमितिप्रसङ्गोऽन्यत्रेव दुर्वार इति किमधिकमाचरितम् ॥

एतेन समानकालीनघटसंयोगजातीयसमानाधिकरणघटसंयोगसंसर्गाभावस्यैव आनीतापसारितघटस्थलेऽन्यत्रेव घटात्यन्ताभावप्रमितिनियामकप्रत्यासत्तित्वेनोपगमात्रोक्तदोषावकाश इति निरस्तम् । ।

उक्तरीत्या घटसंयोग-प्रागभाव-प्रध्वंसयोः परेणानङ्गीकारात् । भावविकारत्वेन तद्धर्मत्वाच्च । घटात्यन्ताभावप्रमितिनियामकप्रत्यासत्तित्वस्य अयोगात् । अपि च यत्र योऽर्थः सन् तत्रैव तत्प्रत्यक्षप्रमितिनियामकतया प्रामाणिक एव कश्चनपदार्थः प्रत्यासत्तित्वेनेष्यते । नच घटवति तदत्यन्ताभावो वा तत्संयोगात्यन्ताभावो वा सम्भवति । येन तदत्यन्ताभावप्रमितिनियामकतया तत्संयोगात्यन्ताभावः प्रत्यासत्तित्वेनाश्रयणीयः स्यात् ॥

ननु घटवतिदेशे घटात्यन्ताभाव-तत्संयोगात्यन्ताभावौ कुतो न सम्भवत इति चेत् । उच्यते । भावाभावयोर्विरोधस्तावत् सकलसम्प्रतिपन्नः । तयोश्चान्यतरसत्त्वमनन्यथासिद्धप्रमाणप्रमितमन्यतरसत्त्वविरोध्यवश्यमभ्युपेयम् । अन्यथा लोकवेदयोर्भावाभावपरस्परविरोधस्योच्छेदापत्तेः । नच समसत्ताकयोरेव यथा विरोध आश्रियते, एवमेकावच्छेदेन प्रतिपत्तिविषयीभूतसम्बन्धेन प्रतियोगितदभावयोरेकधर्मिणि विरोध इत्याश्रयणीयम् । अन्यथा सुप्तावनिर्वचनीय रजतस्यात्यन्ताभावो न स्यात् । तथा वृक्षे शाखायां कपिसंयोगादिमान्, मूले कपिसंयोगात्यन्ताभावश्च न स्यात् । तथा संयोगेन घटवति भूतले समवायेन तदत्यन्ताभावः समवायेन घटवति तदवयवे संयोगेन तदत्यन्ताभावश्च न स्यात् । तथाचानीतापसारितघटस्थलेऽपि घटसंयोगकालावच्छेदेन घटतत्संयोगयोः तदत्यन्ताभावयोश्च विरोधेन घटतत्संयोगसत्त्वकाले तदत्यन्ताभावसत्त्वाभावेऽपि तदपसरणकाले तत्र तदत्यन्ताभावयोः

सत्त्वमविरुद्धम्, एवं च न काप्यनुपपत्तिरिति वाच्यम् । लाघवेन प्रतियोगितदभावयोरन्यतर-सत्त्वमात्रस्यैवैकस्मिन् धर्मिण्यन्तरसत्त्वविरोधित्वकल्पनात् ॥

नचैवं शुक्तौ प्रत्यक्षप्रतिपन्नरजतस्य सत्त्वावश्यम्भावेन तत्र तदत्यन्ताभावो न स्यात् । नच शुक्तिरूप्यं न प्रातीतिकसदित्यस्ति इति वाच्यम् । विशेषदर्शनोत्तरकालम् 'इदं रजतं नास्ति नासीन्न भविष्यति कालत्रयेऽपीदं रजतं नास्ति न क्वापीदं रजतमिति' परीक्षित-प्रबलबाधकप्रत्ययेन शुक्तावध्यस्तरजतस्य त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वावेदनेन पुरोव-र्तिशुक्तिदेशे तस्य सत्वमस्तीत्यस्यैवाभ्युपगमस्य निष्प्रमाणकत्वात् । रजतोत्पादकक्लृप्तसामग्री-बाधात्तत्र रजतोत्पत्तेरेवायोगेन तदापरोक्ष्यस्याप्याहार्यरजताद्यापरोक्ष्यवदुपपन्नत्वेन च न तत्र तत्सत्वकल्पकत्वमिति प्रतिपादितमधस्तात् । अन्यथा लाघवेनाभावविरोधे प्रतियोगिसत्त्व-मात्रं तन्त्रं चेत् परेणापि कथमाभासप्रसक्त्या अनाभासस्यैव रजतस्य तत्र स्वरूपेण निषेधः नतु प्रतिपन्नरजतस्येति नाङ्गीक्रियते? कथं वा पारमार्थिकत्वाकारेण तत्र तन्निषेध इति ॥

यदप्युक्तम् 'वृक्षे शाखावच्छेदेन प्रमितस्य कपिसंयोगस्य मूलेऽत्यन्ताभावो न स्यादिति' तन्न । इष्टापादनात् । नचैवं 'शाखायां वृक्षे कपिसंयोगो न मूले' इति प्रतीति-विरोधः । तत्प्रतीतेः शाखावच्छिन्नवृक्षाश्रितकपिसंयोगे मूलावच्छिन्नत्वात्यन्ताभावविषय-त्वेनोपपत्त्या तद्विरोधशङ्काऽनवकाशात् । एवं संयोगेन घटवति भूतलादौ समवायेन घटवति तदवयवे च 'समवायेन घटो नास्ति' इत्यादिप्रतीतेरपि समवायात्यन्ताभावमात्रविषय-तयोपपन्नत्वेन घटात्यन्ताभावविषयत्वात् न विरोधशङ्केति ॥

नन्वेवं तत्प्रतीतेरस्य विषयत्वे घटे प्रतियोगित्वोल्लेखित्वं न स्यात् कल्पनाया अनु-मानतया वह्न्यौष्ण्यानुमानस्य वह्न्यौष्ण्यप्रत्यक्षेणेव घटप्रतियोगित्वग्राहिप्रत्यक्षेण बाधादिति वाच्यम् । तथासति 'पाकेन रक्तमुत्पन्नम्' 'श्यामं नष्टम्' इति प्रतीतेरपि श्यामद्रव्यनाश-विषयत्वप्रसङ्गात् । प्रत्यक्षविरोधेन तत्प्रतीतेः श्यामरूपमात्रे नाशप्रतियोगित्वकल्पनानव-तारात् ॥

किञ्च 'अहं स्वर्गी स्याम्' 'स्वर्गो ध्वस्तः' 'सुख्यहं नष्टः' इत्यादिप्रतीत्याऽहमर्थस्य चैतन्यस्यापि साध्यत्वनाशप्रतियोगित्वप्रसङ्गः । अपि च 'इदानीं मम दुःखानुभवो गतः'

इत्याद्यनुभवेन जीवसाक्षिचैतन्यानुभवस्यापि नाशप्रसङ्गः । नचैताः प्रतीतयोः भ्रमरूपाः । बाधकाभावात् । यौक्तिकबाधस्य वह्न्यौष्ण्यानुमानवदनुभवविरोधेनानुदयात् । तस्मात् नैतत् प्रतिबन्दीमात्रम् । नचोभयसमाधेऽवस्थानमादाय प्रतिबन्ध्युद्भावनम्, प्रतिबन्ध्युद्भावनमात्रं भवति । तथा च दोषजन्यज्ञानस्यायं स्वभावो यत्स्वस्य भ्रमत्वापादकं न भवति, तदेव स्वेन विषयीक्रियते नान्यथेति सर्वैरभ्युपेयम् । एवं च न काऽप्यनुपपत्तिरिति । ततश्चा-नीतापसारित घटस्थले कदाचिदपि घट-तत्संयोगयोः सत्त्वे तत्र न तदत्यन्ताभावसत्त्व-मभ्युपगमार्हम् इति स्थितम् ॥

ननु प्रतियोगिसत्त्वमात्रमभावविरोधि अभावसत्वमात्रं वा प्रतियोगिविरोधि चेत् । देवदत्तरूपविशेष्यवति भूतलादौ दण्डादिरूपविशेषणाभावप्रयुक्तो विशिष्टाभावो न स्यादिति चेन्न । स्यादेवम् । 'दण्डी देवदत्तो नास्तीति' प्रतीतेः विशेषणाद्यभावविषयत्वेनैवोपपत्त्या दण्डावच्छिन्नदेवदत्तप्रतियोगिकाभावान्तरविषयत्वासिध्या तस्यास्तत्र प्रमाणत्वात् । अत एव घटवति पटरहिते 'घटपटौ न स्त' इति प्रतीतिर्नोभयप्रतियोगिकाभावाधारविषयेति नैया-यिकाद्यभ्युपगमः । अत एव च न व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावान्तरं तेऽभ्युप-गच्छन्ति । अन्यथा व्यधिकरणधर्मावच्छिन्नाश्रयताकाऽभावान्तरमपि किं ते न स्वीकुर्यु-रिति ॥

किञ्च समानकालीनघटसंयोगजातीयसमानाधिकरणघटसंयोगाभावो घटाद्यत्यन्ताभाव-प्रमितिनियामकप्रत्यासत्तिरिति प्रतीत्यङ्गीकारे आनीतापसारितघटादिस्थले 'घटो नास्तीति' प्रतीतिवद्घटसंयोगोऽत्र नास्तीत्यपि प्रतीतिः सर्वानुभवसिद्धा । सा प्रतीतिर्बाधकाभावात् प्रमितिरित्यप्यविवादम् । तत्र 'घटो नास्तीति' प्रतीतिवद् 'घटसंयोगोऽत्र नास्तीति' प्रतीतिरप्यत्यन्ताभावगोचरैव वाच्या । 'घटो नास्तीति' प्रतीतिरेव तत्र तदत्यन्ताभावगोचरा नतु घटसंयोगो नास्तीति प्रतीतिः घटसंयोगात्यन्ताभावगोचरेत्यत्र विशेषहेत्वाभावात् ।

एवं च यथा तत्र घटात्यन्ताभावप्रमितिनियामकप्रत्यासत्तिः घटसंयोगात्यन्ताभावरूपो-च्यते । तथा तत्र घटसंयोगात्यन्ताभावप्रमितिनियामकप्रत्यासत्तिरत्यन्ताभावान्तररूपा वाच्या । नहि तत्रात्र च घटसंयोगात्यन्ताभावप्रमितिनियामकप्रत्यासत्तित्वार्हमत्यन्ता-

भावान्तरं सम्भवति । नच संयोगोत्पत्तेः पूर्वं संयोगप्रागभावस्य संयोगध्वंसानन्तरं च तद्ध्वंसस्यैव सत्वात् तयोरेवाभावान्तरयोस्तत्प्रत्यासत्तित्वं सम्भवति इति वक्तुं युक्तम् । प्रागभावस्यैव त्वयाऽनभ्युपगमात् । ध्वंसस्याभ्युपगमेऽपि तस्य चरममात्रसंसर्गित्वेन समयान्तरे तस्यात्यन्ताभावप्रमितिनियामकप्रत्यासत्तित्वायोगात् । समयविशेषसंसर्ग्यत्यन्ताभावस्य पूर्वं पश्चाच्च सत्त्वाङ्गीकारेऽपि तस्य यत्प्रत्यासत्तित्वमुपेयं तत्संयोगात्यन्ताभावाभिन्नत्वेन तत्प्रत्यासत्तित्वायोगात्, कदाऽपि घटसंयोगरहितस्थले तत्प्रागभावप्रध्वंसयोरभावाच्च । तत्र घटसंयोगात्यन्ताभावस्य स्वस्यैव स्वविशिष्टप्रमितिनियामकप्रत्यासत्तित्वाङ्गीकारे चान्यत्र क्लृप्तप्रत्यासत्तेः सत्वात् घटसंयोगकालेऽपि तदत्यन्ताभावप्रमाप्रसङ्गो दुर्वारः ॥

नच तत्र घटात्यन्ताभाव-घटसंयोगात्यन्ताभावयोरन्योन्यप्रत्यासत्तित्वोपगमान्नोक्तदोष इति वाच्यम् । तथाऽपि घटसंयोगकालेऽन्यदेव घटवति भूतलादौ घटात्यन्ताभाव-तत्संयोगात्यन्ताभाव-प्रमितिप्रसङ्गदोषस्यानुद्धारात् । परस्परप्रत्यासत्तित्वेन स्वीकृतयोर्घटात्यन्ताभाव-तत्संयोगात्यन्ताभावयोः, तत्र तत्कालेऽपि सत्त्वात् घटसंयोगात्यन्ताभावस्य केवलान्वयित्वपक्षे तदपि तदत्यन्ताभावस्य तत्रानपायाच्च ॥

ननु घटसंयोगकाले तदत्यन्ताभाव-घटात्यन्ताभावविशिष्टभूतलादिगोचरप्रमारूपकार्यविरहात् तदा तत्र सतोरपि घटात्यन्ताभावतत्संयोगात्यन्ताभावयोस्तन्नियामकप्रत्यासत्तित्वमेव नेति कल्पित(कल्प्यत-पा) इति चेन्न । तस्य तदुभयात्यन्ताभावरूपत्वाङ्गीकारे तत्सत्त्वस्यैव प्रत्यासत्तित्वसत्त्वरूपत्वात् तदतिरिक्ताभावान्तररूपत्वाङ्गीकारायोगाच्च । अभावस्य भावधर्मसमवायित्वाभ्युपगमे भावत्वस्यैव प्रसङ्गात् ॥

एतेन घटसंयोगकालः तत्प्रमितिर्वा तत्र घटात्यन्ताभावविशिष्टप्रमा-प्रतिबन्धकस्तदत्यन्ताभावविशिष्टप्रतीतेरप्रमात्वापादकदोष इति प्रत्युक्तम् ॥

तत्र तदत्यन्ताभावरूपतदत्यन्ताभावविषयसत्त्वे तद्विशिष्टज्ञानप्रमात्वस्य दुर्वारत्वात् । दैवाद् घटतत्संयोगरूपप्रतियोगिज्ञानवतस्तत्र, तत्कालेऽपि तदुभयात्यन्ताभावविशिष्टप्रमाया वा, समूहालम्बनप्रमाया वा, दुर्वारत्वाच्च । दोषस्य यद्यपि प्रकृतकार्यप्रतिबन्धकत्वं विपरीत-

कार्यजनकत्वं च प्रमाणसिद्धम् । तथाऽपि न प्रकृते तदुभयं सम्भवति । तत्काले तत्र घटसंयोगं सन्तमजानताऽत्रेदानीं घट-तत्संयोगौ न स्त इति प्रयुक्तशब्दात् अन्ततः तदत्यन्ताभावविशिष्टप्रतीतेः(प्रमितेः-पा) सम्भवात् । नच तत्सम्भवे च तत्र घटसंयोगस्य प्रतिबन्धकत्वमभ्युपगमार्हम् । घटतत्संयोगप्रतीतेस्तु प्रतिबन्धकत्वमशक्यशङ्क्यम् । तस्या प्रतियोगिज्ञानत्वेनाभावविशिष्टप्रतीत्यनुकूलत्वात् । नच विषयाबाधस्थले तत्प्रतीतिरूपकार्यं विपरीतकार्यमिति शक्यमभ्युपगन्तुम् । येन तत्र घटसंयोगस्य विपरीतकार्यकारित्वान्यथानुपपत्त्या दोषत्वं कल्प्यत इत्युच्येत ॥

किञ्च प्रकृतेः समानकालीनप्रतियोगिजातीयाः(प्रतियोगिकतायाः-पा) समानाधिकरणप्रतियोग्यभावो विशिष्टाभावरूपो, न विशेष्याभावप्रयुक्तो विशेषणाभावप्रयुक्तो वाऽभ्युपगन्तुं शक्यते । प्रतियोगिभूतसंयोगकालेऽपि घटसंयोगात्यन्ताभावस्य[१] पूर्ववदेव सत्वात् (अभावस्य विशेष्यस्य पूर्ववदेव सत्वात्-पा) घटसंयोगात्यन्ताभावस्य अनादिनित्यत्वेनामूर्तत्वेन केवलान्वयित्वेन च नाशदेशान्तरगमनाभावादित्युक्तमेव । नापि प्रतियोगिजातीयासमानाधिकरणत्वरूपविशेषणाभावप्रयुक्तो विशिष्टाभावस्तत्रास्तीति वाच्यम् । प्रतियोगिजातीयसमानाधिकरणत्वं हि प्रतियोगिभूतघटसंयोगाधिकरणाधिकरणत्वाभावरूपमेव वाच्यम् । तत्र च विवक्षितविवेकेन तद्घटसंयोगाभावरूपमेव पर्यवसितमिति किमधिकमाचरितम् ॥

एतेनैव प्रतियोगिकाले एव प्रतियोगिदेशे तदत्यन्ताभावसत्वेऽपि तद्विशिष्टप्रमाप्रतिबन्धकोऽन्वयव्यतिरेकाभ्यामङ्गीक्रियत इति निरस्तम् । उक्तदोषानिस्तारात् ॥

एतेनैव प्रतियोगिकालान्यकालत्वमत्यन्ताभावप्रमितिनियामकप्रत्यासत्तित्वेन कल्प्यते तथैवान्वयव्यतिरेकदर्शनादिति निरस्तम् । प्रतियोगिकाल एव प्रतियोगिदेशादन्यस्मिन् देशे प्रतियोगिभूतघटात्यन्ताभावप्रत्यक्षोदये तत्प्रतियोगिकालान्यकालत्वस्य तन्नियामकप्रत्यासत्तित्वाकल्पनात् । नच यदा प्रतियोगि-तदभावौ तुल्यकालौ तदा प्रतियोगिदेशान्यदेशत्वं तथा, यदा तु तौ न तुल्यकालौ तदा प्रतियोगिकालान्यकालत्वं तथेति वाच्यम् । तथाऽपि वृक्षे कपिसंयोग-तदत्यन्ताभावयोस्तुल्यदेशकालयोः विशिष्टप्रमित्यनुपपादनात् । नच तयोर्वृक्षदेशत्वमेव नेति युक्तम् । वृक्षे कपिसंयोग इत्यबाधितप्रतीतिदर्शनात् ।

---

(१) नच पूर्ववदेवसत्वात् इति ताळपत्रस्थ पाठः ॥

नच संयोगश्च तत्राऽस्तु नतु तदभाव इति शक्यमभ्युपगन्तुम् । 'वृक्षे मूले कपिसंयोगाभावः' इति तदभावस्यापि वृक्षे प्रतीतेः । नच मूलमेव तदाधारो न तु वृक्ष इति वाच्यम् । 'वृक्षे शाखायां कपिसंयोगोऽस्ति' इति प्रतीत्या शाखैव कपिसंयोगाधारो नतु वृक्ष इत्यपि सुवचत्वात् । एवमस्त्विति चेन्न । वृक्षस्य कपिसंयोगाधारत्वाश्रयणं विना तस्य शाखैकाश्रयत्वानिर्वाहात् । तर्हि तन्निर्वाहाय वृक्षे संयोगाभाव एवोऽस्त्विति चेन्न । वृक्षे मूल एव तदभावप्रतीतिनिर्वाहाय वृक्षे तदभावाभावरूपस्य संयोगस्यापि अवश्याश्रयणात् वैपरीत्याश्रयणीयत्वात् विशेषहेत्वभावात् । अन्यथा 'वृक्षे शाखाभ्यामेव कपिसंयोगो नतु मूले, वृक्षे मूल एव कपिसंयोगाभावो नतु शाखायामिति' प्रतीत्यनुरोधेन वृक्षस्य शाखा-मूलयोरेव तत्र तदभावाश्रयत्वमङ्गीकृत्य वृक्षस्य तदुभयानाधारत्वप्रयोजकं तदुभयाविरोध्य-भावान्तरमङ्गीकार्यं स्यात् । नचैवंविधस्थले गत्यन्तरं सम्भवत् दृश्यते ॥

नन्वेवं प्रतियोगितदभावयोरेकाश्रयाश्रितत्वे विरोधमात्रोच्छेदप्रसङ्ग इति चेन्न । मदुक्त-रीत्याश्रयणे प्रमाणसिद्धविरोधमात्रोच्छेदाप्रसरात्, मदुक्तरीत्याऽऽश्रयणस्यावश्यकत्वात् । अन्यथा एकस्मिन्नपि धर्मिणि प्रतियोगितदभावावङ्गीकृत्य विरोधमात्रोच्छेदे शङ्किते तत्रैका-वच्छेदेनैव तयोर्विरोधः । तत्रापि प्रतिपत्तिविषयीभूत(विफलीभूत-पा)सम्बन्धेनैवेति प्रतिवचन-सम्भवात् । शुक्तिरूप्यस्य वियदादिप्रपञ्चस्य चैककालावच्छेदेनैव[१] प्रत्यक्षश्रुतिप्रतिपन्न-सम्बन्धेनैव तत्तदत्यन्ताभावयोर्विरोधो नत्वन्यथेत्यङ्गीकर्तुं शक्यत्वेन तत्तदत्यन्ताभाव-गोचरप्रत्यक्षजन्य-निर्दोषश्रुतिप्रतीतिद्वयप्रामाण्यनिर्वाहात् निषेधबलेन प्रातिभासिकशुक्ति-रूप्यादेर्वियदादिप्रपञ्चस्य च मिथ्यात्वाङ्गीकारो निर्मूल एव स्यात् । 'मिथ्यैव रजतमभात्' इति प्रतीतेरर्थे लोक इव स्वोचितार्थक्रियासामर्थ्याविधुरगोचरविषयत्वोपपत्तेः, न तदनुरोधेन रजतमिथ्यात्वसिद्धिरित्युक्तम् ॥

एतेन वृक्षे कपिसंयोग-तदभावयोरविशेषेण शाखामूलरूपावच्छेदभेदेनोपलम्भात्, मूले कपिसंयोगो नास्तीति प्रतीतिरेव कपिसंयोगो मूलावच्छिन्ने नेत्यर्थविषयत्वं कल्पनीयम् इत्येतत् कुत इति शङ्का परास्ता । प्रतियोगिभूतकपिसंयोगस्य वृक्षे प्रथमं सत्त्वप्रतीतिं

(१) कालावच्छेदेचैव इति ताळपत्रस्थ पाठः ॥

विना तदभावप्रतीतेरेवानुदयात् तत्र प्रतियोगिप्रतीतेरुपजीव्यत्वेन प्रबलत्वात् उपजीवकाभाव-प्रतीतेरेव दुर्बलत्वात्, विषयान्यथात्वकल्पनमुखेनान्यथयितव्यत्वात्(अन्यथायितव्यत्वात्-पा) ॥

ननु घट-तत्संयोगादेरत्यन्ताभावप्रतियोगित्वाङ्गीकारे नृशृङ्गादेरिवासत्वापत्तेः । नहि नृशृङ्गादेरप्यत्यन्ताभावप्रतियोगित्वादन्यदसत्वं नामास्ति इति चेन्न । त्रिकालसर्वदेशीय-निषेधप्रतियोगित्वस्यैवात्यन्तासत्त्वरूपत्वेन घटतत्संयोगादेश्च स्वदेशकालयोः सतोरतथात्वेना-त्यन्तासत्त्वानापातात् ॥

एतेनैव आनीतापसारितघटादिस्थले 'अत्र भूतले घटो नास्तीति' प्रतीतिर्न घटा-भावगोचरा । तत्र घटाभावो हि भवन्न न तत्प्रागभावः । प्रतियोगिकालीनस्य प्रागभावत्वा-योगात् । प्रतियोगिन एव प्रागभावनाशरूपत्वाभ्युपगमाच्च । नापि तत्प्रध्वंसः । तस्य प्रतियोगितुल्यकालत्वविरोधात् । नापि तदत्यन्ताभावः । तस्य प्रतियोगिदेशादन्यदेशत्व-नियमात्, प्रतियोगितुल्यदेशत्वे च गोत्वस्याश्वादाविव 'गव्यपि नास्ति नासीन्न भविष्यति' इति प्रतीतिप्रसङ्गात् । नच समयविशेषसंसर्ग्यत्यन्ताभावस्य प्रतियोगिकालेन विरोधेऽपि न तदन्यकाले विरोध इति वाच्यम् । प्रतियोगिकालेन विरोधस्य प्रतियोगिकालसत्वे एव पर्यवसानेन त्रैकालिकनिषेधत्वरूपात्यन्ताभावत्वस्यैव तत्राभावापत्तेः, त्रैकालिकनिषेधस्यैवा-त्यन्ताभावत्वात् । नापि तदन्योन्याभावः । तथासति 'इदं भूतलं घटो ने'त्येव प्रतीति-प्रसङ्गात्, नचेयं प्रतीतिस्तथा 'अत्र भूतले घटो नास्ति' इत्येवमाकारत्वादस्याः इति निरस्तम् । आनीतापसारितघटादिस्थले तत्प्रतियोगिकाभावस्यैव मयाऽनभ्युपगमात् ॥

नन्वेवं सति 'तत्र घटो नास्तीति' प्रतीति(प्रतीते-पा)र्निरालम्बनैव स्यादिति चेन्न । तस्य घटसंयोगात्प्राक् तत्प्रागभावालम्बनत्वोपपत्तेः । तद्ध्वंसानन्तरं ध्वंसस्यैव तदा-लम्बनत्वात् । घटसंयोगकालेच घटो नास्तीति प्रतीतेरेवाभावात् । भावे वा बाधित-विषयतया तस्याः भ्रमत्वेन घटाभावासाधकत्वात् । नचैवं सति तत्प्रतीत्या घटसंयोगस्यैव प्रतियोगित्वमुल्लिख्येत नतु घटस्येति वाच्यम् । संयोगेन घटवति भूतले समवायेन 'अत्र घटो नास्तीति' प्रतीतेर्विवक्षितविवेकेन समवायमात्रप्रतियोगिकत्वाद् 'अत्र भूतले घटो नास्तीति' प्रतीतेरपि विवेकेन घटसंयोगमात्रप्रतियोगिकत्वात् । नहि 'घटो नास्ती'ति

प्रतीतिर्निरधिकरणकघटाभावगोचरा । येन तत्प्रती(ति)तेर्घटमात्रप्रतियोगित्वं स्यात् । किन्तु 'अत्र भूतले घटो नास्ती'तिसाधिकरणकघटाभावगोचरा । नचाधिकरणताशरीरप्रविष्ट-घटभूतलनिरूपितसंयोगाभाने तत्प्रतीतिगोचरस्याभावस्य प्रसज्यप्रतिषेधत्वं युक्तम् । नच 'भूतले घटो नास्ती'ति प्रती(ति)तेर्घटप्रतियोगिकाभावो भूतल इति तत्प्रतियोगिकाभावस्य भूतलाश्रितत्वमेव गोचरयतीति वाच्यम् । तथासत्यन्योन्याभावात्यन्ताभावयोः प्रतियोगि-प्रतियोगितावच्छेदकयोरैक्येनाभेदप्रसङ्गात् । प्रतियोग्यधिकरणसंसर्ग प्रतीतिपूर्वकस्य 'अत्र घटो नास्तीति' प्रतीतेरङ्गीकारे च प्रतीतितावच्छेकरूपतादात्म्यलक्षणसंसर्गप्रतीति पूर्वका-न्योन्याभावप्रतीतिरूपकार्यवैलक्षण्यसत्त्वेन तद्भेदोपपत्तेः । अन्योन्याभावात्यन्ताभावयोरत्य-न्ताभेदे च सामग्रीभेदप्रयुक्त-वैलक्षण्यताक-प्रतीतिगोचरत्वाभावप्रसङ्गात् । अत एव हि 'इदमिदं न' इत्येवान्योन्याभावप्रतीतिरत्यन्ताभावप्रतीतिस्तु 'इदमत्र नेत्येव' इति ॥

ननु नास्त्येवात्यन्ताभावातिरिक्तोऽन्योन्याभावः, प्रतियोगितावच्छेदकात्यन्ताभावस्यैवा-न्योन्याभावत्वादिति चेन्न । तथासति घटत्वेन घटोपस्थित्यनन्तरमेव 'भूतलं घटो नेति' घटान्योन्याभावप्रतीत्यभावप्रसङ्गात् । नच घटत्वत्वेन घटत्वोपस्थितिविलम्बकृतो विलम्बो 'भूतलं घटो नेति' घटप्रतियोगिकभूतलानुयोगिकान्योन्याभावप्रतीतौ दृश्यते ॥

अपि च घटत्वं घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपैव वाच्या नतु घटत्वेना-हितावृत्तित्वे सति सकलघटवृत्तित्वरूपा । तथासति घटत्वात्यन्ताभावज्ञाने घटत्वात्यन्ता-भावज्ञानं कारणमापतितमित्यात्माश्रयप्रसङ्गात् । एवं च अतिरिक्तान्योन्याभावो दुर्वारः । नच घटेतरावृत्तित्वघटितत्वपक्षेऽपि तुल्योऽयं दोषः । अत्रापि पक्षे घटत्वता ज्ञाने घटात्यन्ताभावज्ञानस्य कारणत्वेऽपि तज्ज्ञानस्य घटेतरावृत्त्यत्यन्ताभावत्वेन तत्र कारणत्वेन आत्माश्रयदोषाप्रसरात् । नहि पटात् ये स्तम्भाद्यत्यन्ताभावो नेत्यस्ति ।(घटेतरावृत्त्य-न्ताभावन्ताभावो नेत्यस्ति-पा)

किञ्चैवं सति अन्योन्याभावोद्देशापरनामा घटप्रतियोगिक एव न स्यात् । त्वदुक्तरीत्या तस्य घटनिष्ठघटत्वप्रतियोगिकत्वात् । नचानन्यथासिद्धप्रतीतिसिद्धमन्योन्याभावं प्रति घटस्य प्रतियोगित्वं त्यागार्हम् । अपि च समनियतेनैव केनचित् तत्प्रतीतिव्यवहारावङ्गीकृत्य

प्रमाणसिद्धपदार्थापलापे तमोरूपं पदार्थान्तरमपि न स्यात् । तत्समनियतःतेजःप्रतियोगिक-तादृशाभावेनैव तत्प्रतीत्यादिनिर्वाहात् । तस्मात् प्रतियोग्यधिकरण संसर्गज्ञानपूर्वकप्रतीति-गोचरत्वम् अत्यन्ताभावस्याप्यकामेनाप्यङ्गीकार्यम् । एवं च आनीतापसारित घटादिस्थले 'अत्र घटो नास्ति' इति प्रतीतेः संसर्गप्रतीतिपूर्वकत्वावश्यम्भावेन, तदुपनीतसंसर्ग-विषयत्वावश्यम्भावात्, तथोल्लेखाच्च । तस्य च संसर्गस्य संयोगरूपस्य 'प्रागभाव प्रध्वंसौ स्त' इति तद्विषयत्वेनैव सा प्रतीतिरुपपदानीया नतु प्रकारान्तरेण तस्य निरस्तत्वादिति सिद्धम् ॥

नन्वेवं सति घटप्रतियोगिकत्वेन भूतले'अत्र घटो नास्ति'इति प्रतीतिसिद्धोऽभावः तत्संसर्गकप्रतियोगिकश्चेदुत्पत्तेः पूर्वम् 'अयं घटो नासीत्' इति घटप्रतियोगिकत्वेन सिद्धोऽपि प्रागभावः घटसंसर्गप्रतियोगिक एवास्तु, नतु घटप्रतियोगिकः ॥

एवं ध्वंसोऽपि न घटप्रतियोगिकः स्यात् किन्तु तत्संसर्गप्रतियोगिक एव स्यादिति चेन्न । यस्याः प्रतीतेर्दोषजन्याया यं विषयमादाय सविषयत्वानिर्वाहः तं विषयं परित्यज्य तस्या एव प्रतीतेः क्लृप्तानतिप्रसङ्गविषयान्तरमादाय सविषयत्वस्य सर्वैरपि निर्वाह्यत्वेना-नीतापसारितघटादिस्थले चोक्तरीत्या 'अत्र घटो नास्ति' इति प्रतीतेः तदत्यन्ताभावमादाय सविषयत्वानिर्वाहे अनन्यगत्यैव तत्र क्लृप्तघटसंयोगप्रागभावप्रध्वंसाभावे वाऽनतिप्रसक्तावा-दाय त्वयाऽपि सविषयत्वस्य निर्वाह्यत्वात् । अन्यथा 'पाकेन श्यामं नष्टं रक्तमुत्पन्नम्' इति प्रतीतेः 'अलङ्कृतपूर्वश्चैत्रो नास्तीति' प्रतीतेः 'सुप्तावनुभूतं सुखमिदानीं नास्ति' इति प्रतीते'र्घटज्ञानं नष्टं पटज्ञानमुत्पन्नम्' इत्यादिप्रतीतेश्च श्यामत्वादिमात्रनाशादि विषयत्वा-भावप्रसङ्गात्, प्रत्युत विशिष्टनाशादिविषयत्वप्रसङ्गात् ॥

नह्यानीतापसारितघटादिस्थले 'घटोऽत्र नासीन्नास्ति न भविष्यति' इति कदाचिदपि प्रतीतिरस्ति । येन 'तत्र घटो नास्ति' इति प्रतीतिर्घटात्यन्ताभावमादायैव सविषयत्वम-स्त्वित्युच्येत । नच 'तत्र घटो नास्ति' इति प्रतीतिरत्यन्ताभावविषयैव, नतु घटसंयोग प्रागभावादिविषया । घटप्रतियोगित्वोल्लेखित्वात् तत्संयोगप्रतियोगित्वानुल्लेखित्वाच्च, किन्तू-क्तरीत्याऽत्यन्ताभावरूपविषयाबाधात्, शुक्तिरूप्यादि प्रतीतिवत् सा भ्रान्तिरेवास्त्विति

वाच्यम् । तथासति 'पाकेन श्यामं नष्टं रक्तमुत्पन्नम्' इत्यादिप्रतीतेरपि भ्रान्तित्वप्रसङ्गात् । अबाधेनैवोपपत्तौ बाधस्यान्याय्यत्वात्, भ्रमत्वाङ्गीकारे च बाधाङ्गीकारावश्यम्भावात् । 'अत्र भूतले घटो नास्ति' इति प्रतीतेः प्रतियोग्यधिकरणसंसर्गप्रतीतिपूर्वकत्वेन घटसंयोग-प्रतियोगित्वोल्लेखित्वार्हत्वाच्च । काठिन्यस्य संयोगमात्रधर्मत्वेऽपि 'कठिनो हस्तः' इति परम्परासम्बन्धेन तस्य हस्तगतत्वेनैव प्रतीतिस्वभावादुदाहृतघटादिस्थले घटसंयोगप्राग-भावप्रध्वंसाभावप्रतियोगित्वस्य तत्संयोगमात्रधर्मत्वेऽपि तत्र 'भूतले अत्र घटो नास्ति' इति परम्परासम्बन्धेन तस्य संयोगनिरूपक घटगतत्वेनैव प्रतीतिस्वभावोपपत्तेश्च । नहि 'कठिनो हस्तः' इत्यादिप्रतीतिरपि भ्रान्तिः । तस्मात् यत्र कदाचिदपि प्रतियोगिसत्वं प्रमितं तत्र तस्य प्रतियोगिनोऽत्यन्ताभावो नास्ति इति सिद्धम् । एवं च आनीतापसारित-घटादिस्थल इव घटादिप्रध्वंसस्थलेऽपि तदत्यन्ताभावसत्वमुपेयम् । तथा च तत्र घट-निवृत्त्यनन्तरम् 'अत्र घटो नास्ति' इति प्रतीयमानमपि घटसत्त्वं न तदत्यन्ताभावरूपम् । उक्तरीत्या प्रमाणाभावेन तत्र तदसम्भवात् किन्तु वृत्तिरूपमेव स्वीकार्यम् ॥

एवं च सति निवृत्तेः कथं चरमसमयमात्रसंसर्गित्वमभ्युपगमार्हम् । नच निवृत्तेश्चर-मसमयमात्रसंसर्गित्वे घटनिवृत्तिस्थले समयान्तरे तमादाय 'अत्र भूतले घटो नास्ति' इति वा 'इदानीमिदं भूतलमघटम्'इति वा प्रतीतिरुपपादयितुं शक्यते । यद्यपि घटनिवृत्तिस्थले तत्संयोगनिवृत्तिरपि सम्भवति । तथाऽपि न तमादायाप्युक्तरीत्या उपपादननिवृत्तिक्षणिक-तामादायेति निवृत्तिस्थायित्वं दुर्वारमिति किमनुपपन्नम् ॥

नन्वानीतापसारितघटादिस्थल इव घटनिवृत्तिस्थलेऽपि न निवृत्तिर्घटस्य किन्तु तत्संयोगस्यैव । नचैवं घटे निवृत्तिप्रतियोगित्वोल्लेखिं प्रतीत्यनुपपत्तिः । आनीतापसारित-घटस्थल इव तदुपपत्तेः । एवं घटोत्पत्तिस्थलेऽपि न घटस्योत्पत्तिः प्रागभावो वाऽस्ति । किन्तु तदुभयमपि तत्सन्निकर्षस्यैवेति न कस्यापि सम्बन्धिनः प्रागभावो निवृत्तिः उत्पत्तिर्वा स्यात् । घटप्रागभावादिप्रतीतेरुक्तरीत्या तत्सन्निकर्षप्रागभावादिविषयत्वेनान्यथासिद्धेः सुव-चत्वात् । अनन्यथासिद्धप्रतीतेरेवार्थसाधकत्वादिति चेत् । भवेदेवं तदानीतापसारित-घटस्थल इव घटोत्पत्तिनिवृत्तिस्थले घटोत्पत्तिनिवृत्तिप्रागभावप्रतीतीनां तत्संयोगोत्पत्ति-

निवृत्त्यादि विषयतयाऽन्यथासिद्धत्वशङ्का यदि[१], तर्हि तत्र तत्काल इव घटोत्पत्तिनिवृत्त्यादि स्थलेऽपि तत्काले घटस्यान्यत्रेव तत्र च सत्त्वं प्रामाणिकं स्यात् । नच स्वरूपेणासतो घटस्य भूतलादिना संयोगः सम्भवति । संयोगस्यान्यतरोभयकर्मजत्वनियमात् । नचासतो घटादेः कर्मसम्भवति । उत्पत्तेः प्राक्कालेऽपि 'घटश्चलतीति'प्रतीतिप्रसङ्गात् । नच भूतलं कर्मवत्तदा । येन तत्कृतोऽपि संयोगः सम्भवतीति उच्येत । तस्मात् वर्तमानस्यैव कर्म-संयोगादिकं नान्यस्येत्यकामेनापि वाच्यम् । तथा च घटस्यैव तत्रोत्पत्तिनिवृत्तिप्रागभावाः अवश्यमङ्गीकार्या इति कथं तदीयोत्पत्तिनिवृत्तिप्रागभावप्रतीतीनां तत्संयोगोत्पत्तिनिवृत्त्या-दिविषयत्वेनान्यथासिद्धिरिति यत्किञ्चिदेतत् ॥

ननु घटादेः प्रागभाव एव किं मानमिति चेदुच्यते । 'मुद्गरपातानन्तरं घटो ध्वस्तः' इतिवत् 'दण्डचक्रादिसामग्रीसम्पत्तेः पूर्वमिदानीं घटो नास्ति इतः पूर्वमपि नासीत् अथ च सामग्र्यनन्तरं भविष्यतीति' प्रतीतिस्तावत् सर्वसिद्धा । तथा 'गोत्वमश्वे नास्ति नासीन्न भविष्यति' इति । एवं प्राक् सन्नेव घटः इदानीमेव मुद्गरपातेन निवृत्तो न भविष्यति चेति प्रतीतिश्च । नचेयं प्रतीतिरघटं भूतलं भूतले घटाभाव इतिवद्विशेषणविशेष्यभाव-व्यत्यासमात्रेण विलक्षणा किन्तु सर्वात्मना विषयवैलक्षण्येन । नह्येकस्यैवाभावस्य प्रति-योगिविषये भविष्यतीति व्यवहारकारिकत्वं न भविष्यतीति व्यवहारकारित्वं च युज्यते । यद्यपि प्रागभावस्याप्यत्यन्ताभाववत् प्रतियोगिनि नासीदिति व्यवहारकारित्वमस्ति । तथाऽप्यत्यन्ताभाववत् प्रागभावस्य प्रतियोगिनि न भविष्यतीति व्यवहारकारित्वं नास्तीति तयोर्भेद आवश्यक इति ।।

नन्वेक एवात्यन्ताभावः समयविशेषसंसर्गी सन् विलक्षणव्यवहारप्रयोजकाङ्गीकार्यः लाघवात्, अन्यथा भावद्वयाङ्गीकारेण गौरवमिति चेन्न । तथासति तस्यैवात्यन्ताभावस्य समयविशेषसंसर्गितयैव त्वदभ्युपगतप्रध्वंसनिर्वाह्यविलक्षणव्यवहारादिकार्यकारित्वाङ्गीकारेऽतीव लाघवसत्वात् चरमसमयमात्रसंसर्गिभावविकारात्मकानन्तध्वंसानङ्गीकारप्रसङ्गात् ॥

किञ्च शुष्कलाघवादरेण विलक्षणव्यवहारसिद्धप्रागभावापलापे आवश्यकसमयविशेषै-

---

(१) 'यदी'त्यस्य 'भवेदेवम्' इति पूर्ववाक्येनान्वयः ।

रेवात्यन्ताभावनिर्वाह्य-व्यवहारादिकार्योपपत्तेस्तत्संसर्ग्यत्यन्ताभावरूपपदार्थान्तरमपि अतीव-लाघवादस्वीकार्यं स्यात् ॥

अपि चैवमतीवलाघवादनिर्वचनीयस्य शुक्तिरूप्यादेरधिष्ठानान्यानुपलब्धाभावेनैवैकेन भूतलादिनिष्ठेनाधिष्ठानेऽपि विद्यमानेनाधिष्ठानरूपात्यन्ताभावकार्यनिर्वाहात् तदधिष्ठानस्याप्य-निर्वचनीयरजताद्यत्यन्ताभावरूपत्वमङ्गीकार्यं स्यात् । नचाधिष्ठानस्याध्यस्तात्यन्ताभावरूपत्वं न कुलधर्मतया अङ्गीक्रियते, किन्तु बाधधीसिद्धात्यन्ताभावस्याधिष्ठानरूपस्य प्रतियोगि-स्वरूपसहिष्णुत्वदर्शनात् भूतलादिगतस्यानुपलब्धात्यन्ताभावस्यतु तदसहिष्णुत्वदर्शनात्, एकस्मिन् अभावे च प्रतियोगिस्वरूपसहिष्णुत्व-तदसहिष्णुत्वरूपविरुद्धधर्मद्वयसमावेशा-योगात् । अध्यस्तस्यात्यन्ताभावे भेद आवश्यक इति चेन्न । प्रागभावात्यन्ताभावयोरपि विरुद्धधर्माक्रान्ततया तद्भेद आवश्यक इति साम्यात् ॥

एतेनैक अनुपलब्धो भूतलादिगत एवारोपितरजतस्यात्यन्ताभावोऽधिष्ठानगतः । नचैक-स्मिन् विरुद्धधर्मद्वयसमावेशानुपपत्तिः । अध्यासाधिष्ठान तदनधिष्ठानरूपावच्छेदभेदेन तद्द्वय-समावेशोपपत्तेरिति निरस्तम् ॥

भावाभावयोर्भिन्नसत्ताकयोरपि विरोध इति अङ्गीकारापत्त्याऽपसिद्धान्तापातात् । त्वया समसत्ताकयोरेव तयोर्विरोध इत्यङ्गीकारात् । यद्यप्यारोपितस्य रजतादेरत्यन्ताभावद्वयाङ्गी-कारेप्येषदोष तुल्यस्तथाऽपि शुष्कलाघवादेरसमयविशेषेणैवावश्यकेन सर्वस्यात्यन्ताभाव-कार्यस्य निर्वाहसम्भवात् । तत्संसर्ग्यत्यन्ताभावपर्यन्तपदार्थाङ्गीकारे बहुगौरवमिति दोषभया-दत्यान्ताभावोऽप्यतिरिक्तो नाभ्युपेय इत्यापादनीयमिति ॥

अपि चावश्यकसमयविशेषैरेव विचित्रसर्वजगद्व्यवहारोपपत्तेरिति लाघवात् समयविशेषा-तिरिक्तविचित्रजगदनभ्युपगमप्रसङ्गश्चेति । तस्मादत्यन्ताभावातिरिक्तप्रध्वंसवत्तदतिरिक्तः प्रागभावोऽपि विलक्षणव्यवहारादिकार्यनिर्वाहाय परेणापि स्वीकार्य इति किमनुचितम् ॥

अत एव 'धर्मिकल्पनातो वरं धर्मकल्पनेति' न्यायात् क्लृप्तसमयविशेषाणामेवा-भावानेकत्वाङ्गीकारे गौरवादधिकरणभेदेनाभावभेदे मानाभावात् । प्रतियोगितावच्छेदकादि-तद्भेदप्रयोजकाभावाच्च । अन्यत्रेवानीतापसारितघटस्थले 'घटोऽत्र नास्तीति' प्रतीतिव्यवहार-

निर्वाहाय तदालम्बनतया अन्यत्र क्लृप्तात्यन्ताभावस्यैव तत्रापि सत्वमङ्गीकृत्य घटवत्ता-दशायामपि तर्हीन्द्रियसंयुक्त[१] विशेषणतायाः प्रत्यासत्तेः सत्त्वात् तद्विशिष्टप्रमितिप्रसङ्गे तत्परिहाराय तत्प्रमितिनियामकप्रत्यासत्तित्वं कल्प्यत इति निरस्तम् ॥

तथासति लोकवेदयोः विरोधपदार्थस्यैवोच्छेदप्रसङ्गात् । पदार्थानां गोत्वाश्वत्वादिरूपाणां तेजस्तिमिरादिरूपाणां च सहानवस्थानलक्षण विरोधस्य सर्वसिद्धत्वात् । तथाऽध्यस्त शुक्तिरूप्यादेरनधिष्ठानभूतभूतकालाद्याश्रितानुपलब्धात्यन्ताभावस्य च सहानवस्थालक्षण-विरोधस्य सत्वाच्च । घटनिवृत्त्योरन्यतरसत्त्वकालेऽन्यतरासत्त्वदर्शनेन विरोधस्य सर्व-सिद्धत्वाच्च । मूषकमार्जालादीनामपि वध्यघातकभावरूपविरोधस्य सत्वाच्च । अन्यथा गोत्वाश्वत्वतदभावानां परस्परविरहरूपत्वेनैव सहानवस्थाननियमलक्षणविरोध इत्यनङ्गीकारे तत्कृतस्य गोत्वाश्वत्वादीनां परस्परविरहव्याप्यत्वरूपविरोधस्याप्यभावापत्तेः ॥

एवं दूरे गत्वा अवध्यवध्ययोः परस्परविरहरूपत्वाभावे तत्कृतस्य मूषकमार्जालादीनां वध्यघातक-भावलक्षण-विरोधस्याभावापत्तेश्च ॥

अपि चैवं प्रतियोगि-तदत्यन्ताभावयोरविरोधाङ्गीकारोऽस्तु । नचैवं सति गोत्वादेरश्वा-दावपि सत्वेन च गवीवाधिष्ठानभूतशुक्तिकादाविव च सन्निकर्षदशायां सर्वदा प्रतीतिप्रसङ्गः, तत्र जायमानापि तत्प्रतीतिः प्रमा च स्यादिति वाच्यम् । तत्र गोत्वादेः शुक्तिरूप्यादेश्च सत्वेऽपि तत्प्रमितिनियामकस्य समयविशेषरूपस्य संसर्गस्याभावादेव तत्प्रमित्यभाव इति सुवचत्वात् । नहि समयविशेषोऽत्यन्ताभावस्यैव प्रमितिनियामकः सन्निकर्षो नतु गोत्वादेः प्रमितिनियामकः सन्निकर्ष इत्यत्र विशेषहेतुरस्ति ।।

अपि च नात्र 'धर्मिकल्पनातो वरं धर्मकल्पनेति' न्यायः । क्लृप्तव्यवस्थानिर्वाहाय हि कल्पनाश्रीयते नतु कुलधर्मतया । नचैवं तन्न्यायेन कल्पनायामाश्रितायां क्लृप्ता व्यवस्था-निरूढा । नचातिप्रसङ्गापादको न्यायो भवितुमर्हति । तस्य न्यायाभासत्वात् । अन्यथा वह्नौ साध्ये धूम इव धूमे साध्ये वह्निरपि न्यायः स्यात् । तस्माद्यत्किञ्चिदेतत् ॥

---

(१) तदिन्द्रियसंयुक्त इति पाठः स्यात् ॥

अपि च प्रागभावात्यन्ताभावप्रध्वंसानां परस्परव्यावृत्तलक्षणसत्वे कथं तेषामभेदः सम्भवेत्?। प्रतियोगिविहरात्मकत्वे सति प्रतियोगिकारणभूतोऽभावः प्रागभावः, प्रतियोगिजन्याभावः प्रध्वंसाभावः, प्रतियोगिवृत्तिरभावोऽत्यन्ताभावः, प्रतियोग्यसमानाधिकरणाभावो वाऽत्यन्ताभावः निरवधिकत्वे सति प्रतियोग्यवृत्तिरभावो अन्योन्याभावः इति हि परस्परव्यावृत्तलक्षणानि ।।

यद्यपि भावमात्रे भावत्ववदभावमात्रे अभावत्ववच्च घटादिरूपप्रतियोगित्वादिवच्च प्रागभावत्व-प्रध्वंसत्व-अत्यन्ताभावत्वान्यखण्डरूपाणि । तथाऽपि घटत्वादीनामखण्डधर्मत्वेऽपि कम्बुग्रीवादिमत्वादीनां तत्समनियतोपाधीनां सम्बन्धानां प्रमाणसिद्धत्वात् दुस्त्यजत्वम् । एवं प्रागभावादीनामुक्तरीत्या सम्बन्धानामपि प्रमाणसिद्धत्वाद्दुस्त्यजत्वमिति दिक् ।।

एवं च प्रागभावाधारकालः पूर्वकालः, प्रध्वंसाधार-उत्तरकालः, इति निर्वचनमपि सम्भवति । यद्यपि काले पूर्वोत्तरादिव्यवाहारः, प्रागभावादिषु प्रागभावत्वाद्यखण्डधर्मालम्बनतद्व्यवहारवत्(तद्व्यवहारः सन्-पा) पूर्वोत्तरत्वादिरूपाऽखण्डधर्मालम्बन एव सम्भवतीति न तदर्थं निर्वचनमपेक्षितम् । तथाऽपि निरुक्तसम्बन्धधर्माणां प्रमाणसिद्धत्वात् तन्निर्वचनमिति न किञ्चिदनुचितम् ।।

अपि च अस्त्वत्यन्ताभावातिरिक्तः प्रागभावो मा वा भूत् । तद्विचारस्य प्रकृतानुपयुक्तत्वाद्यत्र घटनिवृत्तिर्जातो तत्र तन्निवृत्त्यनन्तरम् 'अघटमिदानीमिदं भूतलमिदानीमिदं भूतलमत्र भूतले नेदानीं घटोऽस्ति इतः पूर्वमासीदिति' प्रमितं घटासत्वं तन्निवृत्तिरूपमेव न तदत्यन्ताभावरूपमिति प्रतिपादितमधस्तात् । नच निवृत्तेश्चरमसमयमात्रसंसर्गभावविकारत्वे उक्तप्रतीतिव्यवहारावुपपद्येते । नहि 'इदं भूतलमिदानीमघटमिति' वा 'इदानीमत्र भूतले घटो नास्ती'ति वा घटनिवृत्त्यनन्तरं जायमाना घटासत्वधीस्तदसत्वस्योक्तरीत्या तन्निवृत्तिरूपत्वेन परिशेषापर्यवसितस्यास्थायित्वे तद्वर्तमानत्वगोचराप्रमितिरूपोपपद्यते । नच सा भ्रान्तिः । बाधकाभावात् ।।

किञ्च 'मुद्गरपातानन्तरमत्र घटो निवृत्तः' इति घटनिवृत्तिस्तावत् प्रत्यक्षेऽप्यनुभवसिद्धम् । अन्यथा 'चक्षुषा अत्र घटनिवृत्तिं जानामी'त्यनुभवविरोधापत्तेः । नच घटनिवृत्तेः क्षणिकत्वे क्रियाक्रियातोविभाग इत्यादिक्रमेण अनेकक्षणसाध्यचक्षुर्भूतलसन्निकर्षोत्तरभाविघटनिवृत्तिगोचरप्रत्यक्षमुदेतुमर्हति । नचैवं सामग्र्यन्तरमिदानीमेव घट उत्पन्न इति प्रत्यक्षदर्शनात्, उक्तानुपपत्तेस्तत्रापि तुल्यत्वात्, निवृत्तिवत् घटोत्पत्तिरपि प्रथमसमयमात्रसंसर्गाभावविकारो न स्यादिति वाच्यम् । इष्टापादनात् । नह्युत्पत्तिः क्षणमात्रसंसर्गीत्यत्र किमपि मानमस्ति ॥

किञ्च चरमसमयमात्रसंसर्गिभावविकारो निवृत्तिरिति वदता 'चरमसमय'शब्देन क्षणमात्रं विवक्षितम् किं ? वा उक्त प्रत्यक्षनिर्वाहाय शब्दबुद्धिकर्मवदनेकक्षणाः? नाद्यः । उक्तप्रत्यक्षानुपपत्तेः । नच साऽनुमितिः । तथासति 'निवृत्तिमनुमिनोमि' इति कदाचित् तदनुभवप्रसङ्गात् । नच योग्यानुपलब्धिजातिनिवृत्तिप्रतीतिः । तथाऽप्युक्तरीत्या भूतलचक्षुषः सन्निकर्षस्यावश्यकत्वात् । अन्यथाऽतिप्रसङ्गात् ॥

एतेन निवृत्तेः क्षणिकत्वे यथापूर्वं पश्चाच्च घट उत्पत्स्यते उत्पन्न इति भाविभूतभावेन व्यवह्रियमाणाया प्रथमसमयमात्रे उत्पद्यत इति वर्तमानत्वव्यवहारस्तथा, पूर्वं पश्चाच्च निवर्तिष्यते निवृत्त इति भाविकृतभावेन व्यवह्रियमाणा या निवृत्तिश्चरमसमयमात्रे निवर्तते, नश्यति ध्वस्तः इति वर्तमानत्वव्यवहार उपपद्यते । निवृत्तेरनुवृत्तौ तु चिरशकलकलितेऽपि 'घटे इदानीं निवर्तते' इत्यादिव्यवहारः स्यात् । आख्यातानां प्रकृत्यर्थवर्तमानत्वाद्यर्थाभिधायित्वादिति निरस्तम् ।

प्रथम'चरमसमय'शब्दाभ्यां क्षणरूपकालोक्तौ व्यवहर्तव्यज्ञानसामग्रीबाधात् व्यवहर्तव्यज्ञानस्यैव बाधितत्वात् व्यवहारमात्रस्यैव अभावप्रसङ्गात् । ताभ्यामनेकक्षणोक्तौ च निवृत्तेस्तावात् क्षणानुवृत्तिप्रयोजकोपादानानुवृत्त्यवश्यम्भावेन अविद्यानिवृत्तिस्थलेऽप्यविद्यानुवृत्तिप्रयोजकतः उपादानभूताऽविद्यानुवृत्त्यवश्यम्भावेनानिर्मोक्षापत्तेः । अत एव न द्वितीयः । अपि च निवृत्तेः क्षणिकत्वमङ्गीकुर्वता तत्क्षणिकत्वं किमुत्पत्तिलक्षणाव्यवहितोत्तर क्षणवर्तिध्वंसप्रतियोगित्वरूपमङ्गीक्रियते? किं वा शब्दबुद्धिकर्मणामिवानेकक्षणानन्तरकालवर्तिध्वंस-

प्रतियोगित्वरूपम्? न द्वितीयः । उक्तदोषानिस्तारात् । तस्याऽपि ध्वंसस्य ध्वंसत्वेन तादृशक्षणिकत्वावश्यम्भावेन तत्क्षणिकत्वनिर्वाहाय स्वीकृतस्य ध्वंसस्यापि ध्वंसत्वेन तथाविधक्षणिकत्वावश्यम्भावेन तत्क्षणिकत्वप्रविष्टध्वंसस्याप्येवमित्यप्रामाणिकनिरवधिक-ध्वंसाङ्गीकारप्रसङ्गात् । अत एव न प्रथमः । अपि च निवृत्तेः क्षणिकत्वमभ्युपगच्छता-ऽनिवृत्तेरपि निवृत्तिरवश्यमभ्युपेया । अन्यथा शब्दबुद्धिकर्मणामपि क्षणिकत्वं स्यात् ॥

अपि च निवृत्तेर्निवृत्तिं विनाऽपि क्षणिकत्वे दिन-दिनद्वय-पक्षमाससंवत्सरादिमात्र-संसर्गिपदार्थानामपि निवृत्तिं विनैव तत्तत्कालमात्रसंसर्गित्वनिर्वाहात् तेषामपि निवृत्तिर्न स्यात् । नच तेषां निवृत्तिरनुभवसिद्धानिवृत्तेस्तु निवृत्तिर्न तथेति वाच्यम् । तथा सति निवृत्तेर्निवृत्तावेव मानाभावेन ब्रह्मवत् तत्स्थायित्वस्य दुर्वारत्वात् । नहि नित्यत्वशब्दितं स्थायित्वं ध्वंसाप्रतियोगित्वादन्यत् सम्भवति ॥

किञ्च चरमसमयमात्रसंसर्गित्वं तदितरासंसर्गित्वे सति चरमसमयसंसर्गित्वरूपमेव वाच्यम् । नान्यत् । चरमसमयसंसर्गित्वे च निवृत्तेः तत्समये प्रतियोगिनि सत्त्वेन तदितरा-वृत्तित्वघटितमूर्तिभावविकारत्वस्यैवायोगात् निवृत्तावुक्तरूपत्वासम्भवः । नच तदितर-समयसंसर्गित्वे सति इति विवक्षितम् । तथाऽप्युक्तरीत्या प्रत्यक्षत्वान्यथाऽनुपपत्त्याऽनिवृत्तेः समयान्तरसत्त्वावश्यम्भावेन असम्भव तादवस्थ्यात् ॥

एतेन उत्पत्तेरुत्पत्त्यभावेऽपि यथा क्षणिकत्वमेवं निवृत्तेर्निवृत्त्यभावेऽपि क्षणिकत्वमिति निरस्तम् । उत्पत्तेरुत्पत्त्यभावेऽपि स्वक्षणव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगित्वेनैव क्षणिक-त्वनिर्वाहात् 'इदानीमेव घटोत्पत्तिर्जाते'ति प्रतीतिबलेनोत्पत्तेरप्युत्पत्त्यवश्यम्भावात्, उत्प-त्तेराद्यक्षणसम्बन्धरूपतया तस्या आगन्तुकताया दुर्वारत्वाच्च । नचैवमनवस्था । बीजाङ्कुरा-नवस्थावत् सिद्धविषयत्वेनास्यादोषत्वात् । नचैवं 'घट उत्पद्यते' इतिवत् 'घटोत्पत्तिरुत्पद्यते' इति प्रतीतिव्यवहारप्रसङ्गः । तथा नैयायिकप्रतीत्यापादनस्येष्टत्वात् । अत एव 'कदाचित् घटोत्पत्तिर्जायते' इति व्यवहारोऽपि ॥

* * * * *

## ।। अथ निवृत्तेरस्थायित्वमिति प्रक्रियानिरसनम् ।।

यच्चोक्तं निवृत्तेरस्थायित्वे चिरचूर्णितेऽपि 'घटे इदानीं निवर्तते' इति व्यवहारप्रसङ्ग इति । तन्न । वर्तमाननिवृत्तिप्रतियोगी घट इति तद्व्यवहारविषयीभूतार्थस्य तदा बाधाभावेन तथाविधमर्थमनुसन्दधानं प्रति तादृश व्यवहारापादनस्येष्टत्वात् । अन्यथा 'ग्रामं गत्वा गृहमागत्योपविष्टे देवदत्ते तिष्ठतीति' अविगीत व्यवहाराभावप्रसङ्गात् । तिष्ठतेर्गतिर्निवृत्त्यर्थत्वात् । तन्निवृत्तेरवर्तमानत्वे तिष्ठतीति तद्वर्तमानत्वव्यवहारायोगात् ।।

एवं निवृत्तेरस्थायित्वे –

**'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते'**
**'क्षीयन्ते चास्य कर्माणि'**
**'तरति शोकमात्मवित्'**
**'धर्मेण पापमपनुदति'** (म-ना-उ-७९-७)
**'धर्मः क्षरति कीर्तनात्'**
**'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति'**

इति निवृत्तिवर्तमनात्वप्रतिपादकश्रौतस्मार्तव्यवहारायोगाच्च । किञ्च निवृत्तेरस्थायित्वे 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति 'पापविधूनन'शब्दितनिवृत्तिविशिष्टस्य परमसाम्यप्रतिपादनानुपपत्तिः 'सह वा आत्मया जीयो वेद इदं मे अन्नेनाङ्गं संस्क्रियते अतो मे अनेनाङ्गमुपधीयत' इति शातपथश्रुत्या पापनिवृत्तिलक्षणसंस्कारस्य वर्तमानत्वप्रतिपादनानुपपत्तिश्च ।।

।। इति निवृत्तेः स्थायित्वमितिप्रक्रियानिरसनम् ।।

किञ्च निवृत्तेः क्षणिकत्वे 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणा' इति स्मृतिः पापनिवृत्तेर्ज्ञानहेतुत्वावेदिका प्रमाणं न स्यात् । कालान्तरभाविज्ञानं प्रति क्षणिकपापनिवृत्तेर्हेतुत्वस्य बाधितत्वात् । नच पापनिवृत्तिः सत्वशुध्यात्मिका व्यापारान्तरमुत्पाद्य ज्ञानहेतुरिति न स्मृतेरप्रामाण्यमिति वाच्यम् । सत्वापरनामकान्तःकरणशुध्यात्मिकायाः कर्मसाध्यायाः पापनिवृत्तेर्वैराग्यद्वारा ज्ञाने जनयितव्ये संस्कारस्य योग्यायोग्यात्मकस्या-

नित्याशुचिदुःखरूपत्वावबोध एव व्यापारान्तरं वाच्यं नत्वन्यत् । सचावबोधः प्रत्यक्षोपपत्तिभ्यामेव जायत इति वाच्यम् । तथा च प्रत्यक्षोपपत्तिप्रवृत्तिपर्यन्तावस्थायि-पापनिवृत्तेः सत्वशुध्यात्मिकायाः अक्षणिकत्वमकामेनापि स्वीकार्यमिति निवृत्तेः स्थायित्वस्येन्द्रेणापि निवारयितुमशक्यत्वात् ॥

अपि च 'चिरसंयुक्ते चिरबद्धे च संयुक्तो बद्धः' इत्येव व्यवहारात् 'संयुनक्ति बध्यते' इति व्यवहाराभावेन संयोगबन्धयोरप्यस्थायित्वप्रसङ्गः । प्रत्युत चिरशंकलितेन 'घटे निवर्तते' इति व्यवहाराभावेन घटनिवृत्तेः क्षणिकत्ववत् क्षणिकत्वप्रसङ्गः । अपि चात्र पक्षे निवृत्तिमात्रस्यापि क्षणिकत्वात् 'तरति शोकमात्मवित्' इत्यादिश्रुत्या ब्रह्मज्ञानफलत्वेन प्रतिपन्ना दुःखनिवृत्तिर्नित्यपुरुषार्थो न स्यात् ॥

ननु मुद्गरप्रहारादिना घटस्य ध्वंसो नाम कश्चिदभावस्तत्प्रतियोगिकः स्थायीभूतलाद्याश्रितो यदि प्रत्यक्षः स्यात् तदा कपालमालापसरणे तदनपसरणेऽपि क्षणिकशरीरादि कपालव्यावृत्तकपालसंस्थानविशेषादर्शनेऽपि प्रत्यक्षः किन्न स्यात्? तस्मात् घटादिध्वंसो न प्रत्यक्षः किन्तु कपालसंस्थानविशेषादिनाशाऽनुमेय एव । एवं घटादिध्वंसो न भूतलाद्याश्रितः । नच तथा सति 'इह भूतले घटो ध्वस्तः' इति भूतलाश्रितत्वेन ध्वंसप्रत्ययो न स्यादिति वाच्यम् । 'इह भूतले घट उत्पन्न' इतिवत् तत्प्रत्ययस्य भावविकारयुक्तप्रतियोग्यधिकरणविषयत्वोपपत्तेः । घटध्वंसानन्तरं 'भूतले घटाभावः' इति व्यवहारस्य घटापसरणानन्तरं तदभावव्यवहारवत् समयविशेषसंसर्ग्यत्यन्ताभावालम्बनत्वेनोपपत्त्या ध्वंसविषयत्वासिद्धेरिति चेन्न । 'इदानीमहं दुःखनिवृत्तिमानस्मीति' दुःखनिवृत्तिप्रत्यक्षवत् 'मुद्गरप्रहारादिदानीमत्र भूतले घटध्वंसो जातः' इति घटध्वंस-प्रत्यक्षस्यानुभवसिद्धत्वेन दुरपह्नवत्वात्, तत एव प्रत्यक्षात् दुःखनिवृत्तेरहमर्थाद्याश्रितत्ववत्, तत एव प्रत्यक्षात् घटध्वंसस्य भूतलाद्याश्रितत्वसिद्धेश्च ॥

नचैवं भूतले घटोत्पत्तिर्जातेतिप्रत्यक्षात् घटोत्पत्तेरपि भूतलाश्रितत्वप्रसङ्ग इति वाच्यम् । 'दण्डी गृहे तिष्ठतीति' प्रत्यक्षाद्विशिष्टस्य गृहाश्रितत्ववत् 'भूतले घट उत्पन्न' इति प्रत्यक्षादुत्पत्तिविशिष्टस्य घटस्य भूतलाश्रितत्वं सिद्ध्येत् । विशेषणभूतोत्पत्तेरपि विशेषणभूत-

दण्डस्य गृहाश्रितत्वमादायैव भूतलाश्रितत्वमादाय पर्यवस्यतीति । इष्टापत्तेः । 'भूतले घट -ध्वंसो जातः' इति प्रत्यक्षवद् 'भूतले घटोत्पत्तिर्जातेति' प्रत्यक्षे ध्वंसस्येवोत्पत्तेरपि भूतलाश्रितत्वमिष्टमेव ॥

यदुक्तं कपालमालापसरणे भूतले घटध्वंसः प्रत्यक्षः स्यादिति । तन्न । कपालमालाया-स्तदभिव्यञ्जकत्वोपगमात् । नहि ब्राह्मण्यजातिर्घटत्वादिजातिर्वा विशिष्टमातापितृजन्यत्व-व्यङ्ग्या संस्थानविशेषव्यङ्ग्येत्येतावता न प्रत्यक्षा । अत एव कपालमालानपसरणेऽपि मणिकशरावादिकपालव्यावृत्तकपालसंस्थानविशेषादर्शनेऽपि घटादिध्वंसः प्रत्यक्षः स्यादिति परास्तम् ॥

विशिष्टमातापितृजन्यत्वादिविशेषादर्शनकाले ब्राह्मण्यजातेरिवानपसारितकपालमालायां मणिकशरावादिकपालव्यावृत्तकपालसंस्थानविशेषादर्शनकालेऽपि भूतलनिष्ठघटध्वंसस्य प्रत्यक्ष -विषयत्वाभावोपपत्तेरिति ॥

यत्तूक्तम् – घटध्वंसानन्तरम् 'इह भूतले घटो नास्तीति' व्यवहारस्य समयविशेष-संसर्गत्यन्ताभावालम्बनत्वेनोपपत्तेः न घटध्वंसालम्बनत्वमित्यादि । तन्न । घटापसरणस्थले इव घटध्वंसस्थले 'घटोऽत्र नास्तीति' व्यवहारस्य समयविशेषसंसर्गत्यन्ताभावालम्बन-त्वाङ्गीकारे तद्वदेव 'नेह नानाऽस्ति' इत्यादि श्रौतव्यवहारस्यापि समयविशेषसंसर्गत्यन्ता-भावालम्बनत्वस्य सुवचत्वेन तादृशात्यन्ताभावप्रतियोगिनो घटादेरिव तादृशात्यन्ताभाव-प्रतियोगिनः प्रपञ्चस्याप्यमिथ्यात्वप्रसङ्गात् । नहि सोऽत्यन्ताभावो मिथ्यात्वव्यवहारप्रयोजको दृष्ट इति ॥

एतेनैव घटादिनिवृत्तिवदविद्यानिवृत्तेः क्षणिकत्वे मोक्षः स्थिरपुरुषार्थो न स्यादिति यद् दूषणम् । तन्न । अविद्यानिवृत्तेर्मया स्वतःपुरुषार्थत्वानङ्गीकारात् । नचैवं ज्ञानेन तत्सिद्धि-रप्रार्थनीयेति वाच्यम् । तस्याः सुखदुःखाभावेतरत्वेन स्वतः पुरुषार्थत्वेनाप्रार्थनात् । तर्हि किमर्थमविद्यानिवृत्तिः प्रार्थ्यत इति चेत् । शृणु । अखण्डानन्दावरकसंसारदुःखहेत्वविद्योच्छेदे अखण्डानन्दस्फुरणं संसारदुःखोच्छेदश्च भवतीति तस्यास्तत्वज्ञानेन प्रार्थनोपपत्तेरिति निरस्तम् । अविद्यानिवृत्तेः स्वतःपुरुषार्थत्वाभावे सुखदुःखाभावेतरत्वं हेतुं कुर्वता दुःखा-

भावस्यापि सुखस्य सुखत्वेनेव दुःखाभावत्वेन स्वतः पुरुषार्थत्वोपगमात् । तावता को दोष इति चेत् । अविद्यानिवृत्तेरिव सांसारिकदुःखोच्छेदस्यापि निवृत्तित्वेन क्षणिकत्वावश्यम्भावात् । मोक्षः स्थिरपुरुषार्थो न स्यादिति दोष इति गृहाणेति दिक् ॥

**॥ इति अद्वैतविद्याचार्योक्तपरममुक्तिस्वरूपनिरसनम् ॥**

(१)केचित्तु निवृत्तेश्चरमसमयमात्रसंसर्गिभावविकारत्वाङ्गीकारे घटादिनिवृत्तिवदविद्यानिवृत्तिवच्च संसारदुःखनिवृत्तेर्निवृत्तित्वात् तथात्वस्य दुर्निवारतया क्षणिकत्वापातेन स्थिरपुरुषार्थत्वरूपमोक्षरूपत्वाभावप्रसङ्गः ॥

किञ्च संसारदुःखनिवृत्तेः 'तरति शोकमात्मवित्'इत्यादि श्रुत्या ज्ञानस्य साध्यत्वावगमाल्लोकतःस्वतःपुरुषार्थत्वावगमाच्च न क्षणिकत्वाभ्युपगमो युक्तः । तथासति अनित्यपुरुषार्थत्वप्रसङ्गात् । उत्पत्तिक्षणाव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगित्वस्यैवानित्यत्वरूपत्वात् ध्वंसप्रतियोगिकत्वस्यैव चानित्यत्वात् । अपि चैवं क्षणिकत्वस्य ध्वंसघटितमूर्तित्वेन तद् घटकध्वंसस्यापि क्षणिकत्वावश्यम्भावेनानवधिक-अप्रामाणिकध्वंसाङ्गीकारप्रसङ्गः ॥

किञ्च क्षणिकत्वप्रविष्टध्वंसानामुक्तरीत्या ध्वंसक्षणिकत्वपक्षेऽनवधिकत्वस्य दुर्वारतया तथाऽनिर्वचनीयत्वस्यापि अद्वैतश्रुतिविरोधपरिहारायावश्यकतया चानिर्वचनीयानां तेषां सादित्वेन तदुपादानतया अविद्यास्वीकारस्यावश्यकत्वेनानिर्मोक्षप्रसङ्गतादवस्थ्यम् । साद्यनिर्वचनीयस्य सोपादानत्वनियमात् । नचान्यदेव तदुपादानम् । तथाऽपि दूरे गत्वा तदुपादानत्वेन अनाद्यनिर्वचनीयाऽविद्यास्वीकारस्यावश्यकत्वात् ॥

अपि चाऽविद्यानिवृत्तेः संसारदुःखनिवृत्तेश्च न क्षणिकत्वाङ्गीकारो युज्यते । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि । तरति शोकमात्मवित्' इत्यादि श्रुत्या तयोर्वर्तमानकालसम्बन्धाऽवेदनात् । नच क्षणिकत्वे वर्तमानकालसम्बन्धः सम्भवति । नच तदसम्भवे तदावेदकश्रुतिप्रामाण्यं युज्यते । शब्द-बुद्धि-कर्मवन्निवृत्तेः क्षणिकत्वाङ्गीकारेऽपि चैवमेव दोषप्रसङ्गो द्रष्टव्यः ॥

---

(१) केचित्तु इत्यस्य 'पारमार्थिकत्वापत्त्या अद्वैतक्षतिर्वज्रलेपायितः' इति वदन्ति पृ.५५६ इत्यनेनान्वयः ॥

अपि चोक्तरीत्या आपतिताया निवृत्तिपरम्परायाज्ञाननिवृत्त्यभ्युपगमे ज्ञानसामग्री-रूपान्तःकरणादेरावश्यकतयाऽनिर्मोक्षप्रसङ्गः । ब्रह्मज्ञानादन्यत एव निवृत्त्यभ्युपमगे चाबाध्यत्वप्रसङ्गः । ज्ञाननिवर्त्त्यत्वस्यैव परेण बाध्यत्वरूपत्वाङ्गीकारात् । नच ज्ञानानन्तरं निवर्तकं सम्भवति । अविद्यानिवृत्त्यादेर्व्यावहारिकत्वात् ॥

अपि च निवृत्तेश्चरमसमयमात्रसंसर्गिभावविकारत्वे एव न किञ्चन मानम् । नच मुद्गरप्रहारानन्तरम् 'अत्र घटो निवृत्तः' इति प्रत्यक्षं घटनिवृत्तेश्चरमसयमात्रसंसर्गित्वे मानमिति शक्यमभ्युपगन्तुम् । तस्य घटनिवृत्तिभूतलाश्रितत्वमात्रविषयत्वेन तत्रौदासीन्यात् । नापि घटनिवृत्तिरेतद्भूतलनिष्ठत्वेन प्रत्यक्षप्रतिपन्ना, चरमसमयमात्रवृत्तिर्निवृत्तित्वात्, 'यन्नैवं तन्नैवं यथाऽघ' इति व्यतिरेकानुमानं तत्र मानम् । चरमसमयमात्रसंसर्गित्वरूपसाध्यस्यैवाप्रसिद्धतया तदनुमानस्यैव तत्र अनवतारात् ॥

किञ्च 'घटोऽत्र निवृत्तः' इति प्रतीतिः प्रत्यक्षैव वाच्या । चक्षुरन्वयव्यतिरेकानुविधानात् । मुद्गरशकलितघटस्थले तदवयवभूतकपालमालां पश्यतो 'अत्र घटध्वंसमिदानीमेव चक्षुषा पश्यामि' इत्यनुव्यवसायदर्शनाच्च । नच घटध्वंसस्य चरमसमयमात्रसंसर्गित्वे चाक्षुषप्रत्यक्षविषयत्वमुपपद्यते । घटध्वंसाधिकरणभूतलेन चक्षुःसंयोगस्य क्रिया, क्रियातो विभाग इत्यादि प्रणाड्या बहुक्षणसाध्यत्वात् । अन्यथा संयुक्तविशेषणतारूपेन्द्रियप्रत्यासत्त्यभावात् । 'चरमसमय'शब्देन चक्षुःप्रवृत्त्युपयुक्तबहुक्षणविवक्षायां च 'तावत् कालस्थायिनो ध्वंसस्य तावत्कालं स्थिरं वैनकः पश्चान्नाशयिष्यतीति [१]न्यायात् । घटध्वंसवत् तद्ध्वंसध्वंसस्य 'घटध्वंसो ध्वस्तः' इति कदाप्यनुभवाच्च ध्वंसानुवृत्तिर्दुर्वारा । एवं घटज्ञानं तज्ज्ञानान्निवृत्तम् । सम्प्रत्येव 'भेषजपानान्मासमात्रमरोगोऽस्मि' इत्याद्यनुभवबलादज्ञानादिध्वंसस्यापि स्थायित्वं दुर्वारम् ॥

किञ्च –

'त्वं हि नः पिता योऽस्माकमविद्यायाः परंपारं
तारयसि तरति शोकमात्मवित्'

---

(१) स्थिरं विनैक पश्चान्नश्यति इति पाठः स्यात् ॥

'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'
'तथा विद्वान् नामरूपाद्विमुक्तः '
'परात्परं पुरुषमुपैति दिव्यम्'

इत्यादिश्रुतिप्रतिपन्नस्य अविद्यानिवृत्त्यादेर्वर्तमानकालसम्बन्धित्वस्य अनिवारणेन ध्वंसस्य चरमसमयमात्रसंसर्गित्वमयुक्तम् । निवृत्तिस्थैर्यप्रमाणमुपन्यस्य तदुपपादनतया अविद्यामावश्यकत्वेनापाद्यऽनिर्मोक्षमापादयन्तं मां प्रत्येतदापादनस्यादोषत्वात् । नच तत्र श्रुतावविद्यानिवृत्त्यादेः वर्तमानत्वमविवक्षितम् । अन्यथासाध्यनिर्वचनीयाऽविद्यानिवृत्तेरुपादानतया अविद्यासापेक्षत्वेन अनिर्मोक्षप्रसङ्ग इति वाच्यम् ॥

किञ्च ज्ञानफलत्वेन श्रुताविद्यानिवृत्तेरपि क्षणिकत्वे तन्निवृत्तिजन्यसंसारदुःखनिवृत्तेरपि ज्ञानफलत्वेन श्रुतायाः क्षणिकत्वापातेन स्थिरपुरुषार्थत्वाभावप्रसङ्गः । नच अविद्यानिवृत्तिवत् संसारदुःखनिवृत्तिरपि स्वतः पुरुषार्थभूतानवच्छिन्नब्रह्मानन्दानुभवं प्रति प्रतिबन्धकाभावत्वेनोपयुक्ततया[१] न मुख्यपुरुषार्थः किन्त्वमुख्यपुरुषार्थ एव । स्थिरपुरुषार्थस्त्वनवच्छिन्नब्रह्मानन्दानुभव एवेति तस्याः स्थिरपुरुषार्थत्वाभाव इष्ट इति वाच्यम् । संसारदुःखस्यानवच्छिन्नानन्दानुभवं प्रति प्रतिबन्धकत्वे एव मानाभावात् । नह्यविद्यानिवृत्तिकाले संसारदुःखसत्वप्रयुक्तोऽनवच्छिन्नब्रह्मानन्दानुभवाभावः प्रमाणसिद्धः । येनाविद्यावत् संसारदुःखमप्यनवच्छिन्नब्रह्मानन्दानुभवे प्रतिबन्धकमिति स्वीक्रियेत । नच सुप्तावनुभूयमानो वा जाग्रद्दशायां स्रक्चन्दनादिविषयसम्बन्धानन्तरमनुभूयमानो वा अनवनिच्छन्नब्रह्मानन्दः । येन सत्यामप्यविद्यायां तदनुभवस्य सत्त्वेन तस्यास्तदनुभवं प्रति प्रतिबन्धकत्वमेव न स्यात्, सुप्तिः स्रक्-चन्दनादिविषयसम्बन्धो वा, उत्तेजक इति वा, उच्येत । तदा अनुभूयमानस्यानन्दस्यानवच्छिन्नत्वेन जीवानन्दतया अब्रह्मानन्दत्वात् ॥

अपि च सुखस्येव दुःखनिवृत्तेरपि 'सुखमेव मे स्यात् दुःखं मनागपि माभूत्' इति तुल्यवत् सकलकामनागोचरत्वाविशेषे तत्र दुःखनिवृत्तेः, प्रतिबन्धकत्वाभावेनोपयोगः । सुखानुभवेन तु सुखस्य प्रतिबन्धकाभावत्वेन दुःखनिवृत्तौ तदनुभवे वा नोपयोग इत्यत्र विशेषहेत्वभावेन सुखस्येव दुःखनिवृत्तेरपि स्वतः पुरुषार्थत्वं दुस्त्यजम् ॥

(१) प्रतिबिम्बकाभावत्वेनोपयुक्ततया इति पाठान्तरम् ॥

नन्वस्त्वविद्यानिवृत्तिः संसारदुःखनिवृत्तिश्च ब्रह्मज्ञानफलत्वादुक्तरीत्या स्थिरा । तत्र अविद्यानिवृत्ति अमुख्यपुरुषार्थः संसारदुःखनिवृत्तिश्च (निवृत्तिस्तु-पा) मुख्यपुरुषार्थ इत्यपि । नच मुक्तिकालेऽप्यविद्यानिवृत्तेः संसारदुःखनिवृत्तेश्च ब्रह्मवत् स्थिरत्वाभ्युपगमे अद्वैतक्षतिः । तयोरनिर्वचनीयत्वाभ्युपगमात् । नच साध्यानिर्वचनीयाविद्यानिवृत्त्यादेरुपादानसापेक्षत्वेन तदुपादनत्वेनाविद्यायाः आपातेन अनिर्मोक्षप्रसङ्ग इति वाच्यम् । तदुभयान्यसाध्यानिर्वचनीयस्यैव सोपादानत्वमिति नियमे सङ्कोचाभ्युपगमेनानिर्मोक्षप्रसङ्गानवतारादिति चेन्न । ज्ञानजन्यनिवृत्तिप्रतियोगितावच्छेदकानवच्छिन्नत्वे अविद्यनिवृत्त्यादेः अनिर्वचनीयत्वस्यैव अभावप्रसङ्गात् ज्ञाननिवर्त्त्यत्वस्यानिर्वचनीयत्वं प्रति व्यापकत्वात् । अन्यथा ज्ञाननिवर्त्त्यत्वाविरोधात् ब्रह्मणोऽप्यनिर्वचनीयत्वप्रसङ्गः । ।

किञ्च अविद्यानिवृत्त्यादेरनिर्वचनीयत्वेऽध्यासत्वमावश्यकम् । अध्यासत्वे च तत्प्रयोजकानिर्वाच्याऽविद्याप्यवश्यमङ्गीकार्या । नच साध्याध्यासोनाद्यध्यासो वा, अविद्यां विना कृतो दृष्टचरः । अविद्यादिरूपानाद्यध्यासेऽप्यविद्याया एवाविद्यान्तरं विना भेदो भिन्न इति प्रत्यये भेदानन्तरं विना तद्भेदस्यैव स्वनिर्वाहकत्वात् ।।

किञ्चास्तु अविद्याध्यासो यथातथा, साध्याध्यासस्तु नाविद्यां विना निर्वाहमर्हतीति, अविद्यानिवृत्तेः संसारदुःखनिवृत्तेश्चाध्यासत्वमिच्छता तन्निर्वाहायोपादानतया अविद्याऽवश्यमभ्युपेया । अन्यथा रूप्याद्यध्यासेऽप्यविद्यां विनैव क्लृप्तशुक्त्यादेरेवोपादानत्वमङ्गीकार्यं स्यात् । तावतापि सादिकार्यं सोपादानमिति नियमानिर्वाहात् ।।

अपि च 'यत् यत् सादि तत्सोपादानमिति' नियमबलादप्यविद्यानिवृत्त्यादेः उपादानतया अवश्यमविद्योपेया । नचास्य नियमस्य शुष्कत्वादुक्तरीत्या नियमे सङ्कोचो अस्तु इति वाच्यम् । 'अस्मान् मायी सृजते विश्वमेतत्' 'मायामात्रमिदं द्वैतम्' इत्यादि श्रुतिसहायत्वे च नियमस्याशुष्कत्वात् । तस्मादविद्यानिवृत्त्यादेरनिर्वचनीयत्वे अध्यासत्वमविद्योपादानकत्वं च दुर्वारमिति, तदनिर्वचनीयत्वं वा त्याज्यम् । एवं च अविद्यानिवृत्त्यादेरुक्तरीत्या ज्ञानफलत्वेन स्थिरपुरुषार्थत्वादवश्यम्भावेन ज्ञाननिवर्त्त्यत्वाभ्युपगमायोगात् । ब्रह्मवदबाध्यत्वं दुष्परिहरम् । तथा च कथं नाद्वैतक्षतिरिति ? तदनिर्वचनीयत्वं वा अङ्गीकृत्य

तदुपादानतया तदनिर्वचनीयत्वप्रयुक्ततदध्यासत्वनिर्वाहकतया च अविद्यामङ्गीकृत्यानिर्मोक्षो वाऽङ्गीकार्य इति सेयमुभयतः पाशारज्जुः ।।

अपि चोक्तरीत्या स्थिरत्वेनावश्यमङ्गीकर्तव्याया अविद्यानिवृत्तेः संसारदुःखनिवृत्तेश्च भावविकारत्वमयुक्तम् । निवृत्त्यनन्तरमविद्यायास्त्वयाऽप्यनङ्गीकारेण तन्निवृत्त्यादेस्तद्विषयत्व-स्यानभ्युपेतव्यत्वात् । ब्रह्मणो वस्तुतो निर्विकारत्वे वा वास्तवविकारित्वस्य च अविद्या-प्रयुक्तत्वेन अविद्यानिवृत्तिदशायां तद्विकारत्वस्याप्यभ्युपगमानर्हत्वाच्च । अपि च ज्ञानफलत्वेन श्रुताया दुःखनिवृत्तेः अभ्युपगम्यमाने –

**'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति'**(कठ-उ-२-१-२२)

इति ज्ञानसाध्यदुःखनिवृत्तिवर्तमानत्वावेदकश्रुतिविरोधः कथं न स्यात्?

नन्वेवमुत्पत्तिरपि क्षणिकभावविकारो न स्यादिति चेन्न । इष्टापादनात् । अन्यथा सामग्रीसमवधानानन्तरं 'घट उत्पन्नः' इति तदुत्पत्तेः प्रत्यक्षत्वाभावप्रसरात् । एवमुत्पत्तिर्न भावविकारः प्रथमसमयावच्छिन्नप्रागभावनाशस्यैव उत्पत्तित्वेन तदतिरिक्तानन्तभावविकारा-ङ्गीकारे गौरवात् । नच प्रागभावनाशो नातिरिक्तो अनवस्थापातात् किन्तु प्रतियोग्येव । तथा च प्रतियोगिनो यावदवस्थानमुत्पत्तिपदार्थसत्त्वेन चिरोत्पन्नेऽपि घटे 'इदानीं घट उत्पद्यते' इति व्यवहारप्रसङ्ग इति वाच्यम् । प्रथमसमयावच्छिन्नप्रतियोगिन एवोत्पत्ति-पदार्थत्वाद्, द्वितीयसमये च प्रथमसमयरूप-विशेषणाभावप्रयुक्तविशिष्टाभावसत्वेन तथा व्यवहारालम्बनस्यैव तदा अभावात् समये प्रथमत्वादेरखण्डत्वात् । तस्मान्निवृत्तेश्चरमसमय-मात्रसंसर्गिभावविकारत्ववादः(विकारत्वादेः-पा) सर्वथा च युक्तः । तथा च अविद्यानिवृत्तेः तत्प्रयुक्तसंसारदुःखनिवृत्तेश्चोक्तरीत्या अनुवृत्तेर्दुर्वारतया तस्याश्चानिर्वचनीयत्वाङ्गीकारे तदुपा-दानत्वेनाविद्यानिवृत्तिरवश्यमङ्गीकार्यमिति तत्प्रयुक्तानिर्मोक्षप्रसङ्गो वज्रलेपायितः । अनि-र्वचनीयत्वाङ्गीकारे च अविद्यानिवृत्त्यादेर्ब्रह्मवत् पारमार्थिकत्वापत्त्या अद्वैतक्षतिर्वज्रलेपायितः इति वदन्ति ।।

अन्ये तु[१] अविद्यानिवृत्तेश्चरमसमयमात्रसंसर्गिभावविकारत्वे क्षणिकत्वापत्त्या, मोक्षः स्थिरपुरुषार्थो न स्यात् । नच अविद्यानिवृत्तिः स्वयमेव पुरुषार्थ इति नास्माभिरभ्युपेयते । तस्याः सुखदुःखाभावेतरत्वात् । किन्त्वखण्डानन्दावरकाविद्यायाः ज्ञानेनोच्छेदे सत्यखण्डानन्दस्फुरणं संसारदुःखोच्छेदश्च भवतीति स्वतःपुरुषार्थभूताखण्डानन्दस्फुरणसंसारदुःखोच्छेदोपयोगितामात्रमभ्युपगम्यत इतीष्टापत्तिरिति वाच्यम् । तथाऽपि संसारदुःखनिवृत्तेः स्वतःपुरुषार्थत्वेन त्वया स्वीकृताविद्यानिवृत्तिवत् क्षणिकत्वप्रसङ्गेन मोक्षः स्थिरपुरुषार्थो न स्यादिति दोषस्य तादवस्थ्यात् । नच संसारदुःखनिवृत्तिरपि न मोक्षः किन्त्वखण्डानन्दस्फुरणमेव मोक्ष इत्युपगमात्रोक्तदोषतादवस्थ्यमिति वाच्यम् । अखण्डानन्दस्फुरणस्येव संसारदुःखोच्छेदस्यापि तुल्यत्वात्, सकलकामनाविषयतया विशेषहेत्वभावेन च मोक्षत्वस्यावश्याभ्युपेयत्वात् । अखण्डानन्दस्फुरणस्य स्वरूपतया नित्यसिद्धत्वेन कामनाविषयत्वासम्भवाद्विवक्षितविवेकेन संसारदुःखोच्छेद एवातथाभूते कामनाविषयत्वस्य पुरुषप्रयत्नसाध्यश्रवणादिसाध्यज्ञानसाध्यत्वस्यच सम्भवेन तस्यैव पुरुषार्थताया न्याय्यत्वाच्च ।।

एतेन अखण्डानन्दस्फुरणस्यैव अभावरूपतया लघुत्वान्मोक्षशब्दार्थत्वमङ्गीकार्यम्, नतु संसारदुःखनिवृत्तेरभावरूपतया गुरुत्वादिति निरस्तम् । पुरुषार्थस्यैव मोक्षपदार्थताया अङ्गीकार्यत्वात् । उक्तरीत्या अखण्डानन्दस्फुरणस्य पुरुषार्थत्वायोगात् । संसारदुःखनिवृत्तेरेव पुरुषार्थत्वसम्भवेन गौरवस्य प्रामाणिकत्वाच्च ।।

एतेनैव तुल्यायव्ययफलत्वेन संसारदुःखनिवृत्तिमात्रस्य पुरुषार्थत्वमेवायुक्तमिति निरस्तम् । 'दुःखं मनागपि माभूत्' इति संसारदुःखोच्छेदस्य पुरुषेणार्थ्यमानत्वानुभवविरोधात् तदतिरिक्तपुरुषार्थस्यानिरुक्तेश्च । अत एव मोक्षशब्दस्य नानार्थत्वप्रसङ्गो निरस्तः । सुखावच्छिन्नसंसारदुःखमात्रोच्छेदस्य मोक्षशब्दवाच्यत्वाभ्युपगमात् । एवं च तुल्यायव्ययफलत्वशङ्कैव नोदयमासादयतीत्याहुः ।।

चित्सुखास्तु[२] दुःखाभावोऽपि मुक्तौ न स्वतः पुरुषार्थः, सर्वत्र दुःखाभावस्य स्वरूप-

---

(१) अन्येतु इत्यस्य नोदयमासादयतीत्याहुः पु.५५७ इत्यनेन अन्वयः ।।

(२) 'चित्सुखास्तु' इत्यस्य साधनमित्याहुः पु.५५८ इत्यनेनान्वयः ।

सुखाभिव्यक्तिरिति बन्धकाभावतया सुखशेषत्वात् । सुखस्यैव स्वतःपुरुषार्थत्वमन्येषां सर्वेषामपि तच्छेषत्वमिति सुखसाधनताज्ञानस्यैव प्रवर्तकत्वेन सम्भवति दुःखाभावस्यापि स्वतःपुरुषार्थत्वं प्रकल्प्य तत्साधनप्रवर्तकसङ्ग्रहायेष्टसाधनताज्ञानस्येच्छाविषयत्वप्रवेशेन गुरुघटितस्य प्रवर्तकत्वकल्पनायोगात् । नच दुःखाभाव एव स्वतः पुरुषार्थः । तच्छेषतया सुखं काम्यमिति वैपरीत्यापत्तेः (१)। बहुकालीनदुःखसाध्येऽपि क्षणिकसुखजनके निन्दित-ग्राम्यधर्मादौ प्रवृत्तिदर्शनात् । ....क्षत्रक्षणसुखकालीनदुःखाभावस्य पुरुषार्थत्वे तदर्थं बहु-कालदुःखानुभवायोगात् । नच तत्र क्षणिकसुखस्य पुरुषार्थत्वेऽपि दोषतौल्यम् । भाव-रूपसुखोत्कर्षापकर्षयोरनुभवसिद्धत्वेन क्षणमप्युत्कृष्टसुखार्थं बहुकालदुःखानुभवोपपत्तेः । दुःखाभावे च उत्कर्षासम्भवात् । तस्मात् मुक्तौ संसारदुःखमात्रनिवृत्तिरप्यविद्यानिवृत्तिवत् सुखशेषरत्यवच्छिन्नानन्दप्राप्तिरेव स्वतःपुरुषार्थः । स एव च मोक्षस्तदुपयोगितया अविद्या-निवृत्त्यादेस्तत्वज्ञानेन साधनमित्याहुः ॥

तदपि न । दुःखाभावस्यापि सुखवत् सकलकामनाविषयत्वस्य सर्वदाऽनुभवसिद्धत्वेन मुक्तावपि तस्य स्वतःपुरुषार्थतायाः सर्वैरभ्युपेयत्वात् । दुःखाभावस्य स्वरूपसुखाभिव्यक्ति-प्रतिबन्धकाभावतया तत्सुखशेषत्वे एव मानाभावात् । पुत्रभार्यादिमरणानुसन्धानप्रयुक्त-दुःखकालेऽपि परमसुहृद्दर्शनात् सुखदर्शनेन दुःखस्य प्रतिबन्धकत्वे सुखस्यैवाभावापत्तेश्च । तत्त्वज्ञानेन निवृत्ताऽविद्यस्य दुःखसत्त्वप्रयुक्तस्वरूपानभिव्यक्तौ मानाभावेन दुःखस्य तादृश-सुखाभिव्यक्तिप्रतिबन्धकत्वकल्पनस्य निर्मूलत्वाच्च । नहि सविलासाविद्यानिवृत्त्यनन्तरं दुःख-सत्वापराधेन स्वरूपानन्दाभिव्यक्तिव्यतिरेकः प्रमाणसिद्धः । येन दुःखस्य तत्र प्रति-बन्धकत्वं कल्प्यमिति स्यात् ॥

किञ्च का स्वरूपसुखाभिव्यक्तिः? यत्र दुःखं प्रतिबन्धकमिति कल्प्येत । न ताव-दुत्पत्तिः । स्वरूपसुखस्यानादित्वोपगमात् । नापि ज्ञप्तिः । जन्यज्ञप्तेर्मुक्तिसुस्योस्त्वयैवा-नभ्युपगमात् । स्वरूपभूतज्ञप्तेश्च स्वरूपवदेव सर्वदा सत्वात् । तथाऽपि 'अस्ति प्रकाशते'

---

(१) 'नच दुःखाभावस्य सुखशेषतया पुरुषार्थत्वम् । सुखस्यापि दुःखाभावशेषतया पुरुषार्थत्वमिति वैपरीत्यस्यापि वक्तुं सुकरत्वात् ॥' इति चित्सुखाचार्यकृततत्त्वप्रदीपिकाचतुर्थपरिच्छेदगतवाक्यस्य तात्पर्यतोऽ-नुवादोऽयम् ॥

इति स्वरूपज्ञप्तेर्व्यवहारे सामर्थ्यं दुःखेन विघट्यते इति तादृशव्यवहारानुकूलस्वरूपज्ञप्तिगत-सामर्थ्याकुण्ठनरूपा सा इत्यङ्गीक्रियत इति चेन्न । मुक्तौ 'अस्ति प्रकाशते' इत्यभिलापादि-रूपव्यवहारे मानाभावेन तदनुकूलस्य स्वरूपभूतज्ञप्तिगतस्य सामर्थ्यस्य सत्वे एव माना-भावात् । स्वरूपज्ञप्तेर्निर्विकल्पकतया व्यवहारानङ्गत्वाच्च ।।

नापि स्वरूपानन्दावरकाविद्यानिवृत्तिरूपा सा । सुप्तौ जाग्रदवस्थायां च कदाचित् दुःखस्वरूपप्रतिबन्धकस्याभावेऽपि तदावरकाविद्यादेरनिवृत्तेः । नच 'न वयं प्रबिन्धका-भावमात्रात्तादृशाभिव्यक्तिमङ्गीकुर्मः, किन्तु ज्ञानादिरूपसामग्रीसहितात्, नचेदानीं ज्ञानादि-रूपसामग्र्यस्ति' इति वाच्यम् । ज्ञानादिरूपसामग्रीसत्वे अविद्यारूपप्रतिबन्धकनिवृत्त्यव-श्यम्भावात् । अविद्यानिवृत्तेः आत्यन्तिकसंसारदुःखोच्छेदहेतुतयाऽपि अवश्यकत्वाच्च । तयैव स्वरूपसुखाभिव्यक्तिनिर्वाहात् । स्वातन्त्र्येण स्वरूपसुखाभिव्यक्त्यभावस्य दुःखरूपप्रति-बन्धकसत्त्वकृतस्यादर्शनेन संसार-सुख-दुःखस्य तत्र प्रतिबन्धकत्वे एव मानाभावेन तद-भावस्य स्वरूपसुखाभिव्यक्तिसम्पादनद्वारा तत्सुखशेषत्वाङ्गीकारस्य निर्मूलत्वादित्युक्तम् ।।

अपि च शेष-शेषि-भावे श्रुत्यादीनि हि प्रमाणानि । नच दुःखाभावस्य स्वरूपसुखशेषत्वे श्रुतिलिङ्गादिप्रमाणानि उपलभामहे । येन प्रमाणसिद्धतच्छेषत्व निर्वाहाय तत्प्रतियोगिनः संसारदुःखस्य स्वरूपसुखाभिव्यक्तिं प्रति प्रतिबन्धकत्वं दुर्निवारं स्यात् । ।

अपि च स्रक्-चन्दन-प्रियालिङ्गनादिरूपविषयवत् दुःखाभावस्य स्वरूपसुखाभिव्यक्तिं प्रत्यन्यथासिद्धान्वयव्यतिरेकाभावेन कथं तस्य तत्सुखाभिव्यञ्जकत्वमिति न जानीमः । नहि संसारदशायां दुःखाभावः कदाऽपि नेत्यस्ति ।।

एतेन अस्य(दुःखाभावस्य-पा) सुप्तिकाले एव स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावत्वेन शेषत्वमन्वयव्यतिरेकसिद्धमिति निरस्तम् । जाग्रदवस्थायामपि स्वरूपसुखमप्रतिबन्धमनुभूयते एव किन्तु विषयान्तरसञ्चारेणानुभूयमानमपि तज्जीवस्वरूपसुखं नानुभूयते एवेति मयाऽभ्यु-पगमात् । सौषुप्तिकजीवस्वरूपसुखाभिव्यक्तेस्तदा दुःखाभावस्य पृष्ठलग्नत्वेऽपि तदनभि-व्यङ्ग्यत्वात् । अत एव सुप्तिकाले विषयान्तरसञ्चाराभावात् सम्यक् स्वरूपसुखानुभवः सुप्तोत्थितस्य 'एतावन्तं कालं सुखमहमस्वाप्सम्' 'सुखं सुप्तोऽस्मि' इत्यौत्तरिकपरामर्श-सिद्धिः ।।

एतेन 'उत्कटदुःखकाले सतोऽपि विषयप्रयोज्यस्यास्य सुखस्य स्फुटप्रतिभासाभावात् सुप्तौ तद्व्यतिरेकेण सुखस्य स्फुटप्रतिभासाच्च । अन्वयव्यतिरेकाभ्यां सुखाभिव्यक्तिप्रतिबन्धकाभावतया दुःखाभावस्य सुखशेषत्वमुपेयमिति' निरस्तम् ॥

स्रक्चन्दनादिविषयप्रयोज्यस्य तज्जन्यस्य सुखस्य मयेव त्वयाऽनभ्युपगमात् । स्वरूपसुखस्य चानाद्यनन्तत्वेन साक्षात् परम्परया वा साधनपरातन्त्र्याभावेनाप्रयोज्यत्वात् । अनाद्यनन्तसुखे प्रयोज्यत्वस्यैवायोगात् । सौषुप्तिकसुखाभिव्यक्तिं प्रति प्रतिबन्धकाभावतया दुःखाभावस्य सुप्त्यन्वयव्यतिरेकाभ्यामन्यथासिद्धान्वयव्यतिरेकित्वेन कल्पकाभावेन सुखं प्रति शेषत्वकल्पनानुपपत्तेश्च । अन्यथासिद्धान्वव्यतिरेकयोरेव वस्तूपगमे प्रयोजकत्वात् । अन्यथाऽन्तःकरणवृत्तिमात्रभावस्य तृणाद्युदासीनभावस्य च स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया तच्छेषत्वकल्पनाप्रसङ्गोऽविशेषात् ॥

एतेन सुहृद्दर्शनप्रियापरिष्वङ्गादेरुत्तेजकत्वात् तद्विरहविशिष्टस्य दुःखस्य स्वरूपसुखाभिव्यक्तिं प्रति प्रतिबन्धकत्वं तदभावस्य च तदभिव्यक्तिप्रतिबन्धकाभावतया तत्सुखशेषत्वमिति निरस्तम् ॥

उक्तरीत्या उत्पत्त्यादेः स्वरूपसुखाभिव्यक्तिरूपत्वायोगात् । उत्तेजकविरहविशिष्टाभावस्याकार्यभूतस्वरूपसुखं प्रति हेतुत्वायोगाच्च । तुल्यन्यायतया दाहादिकार्यस्योत्तेजकाभावविशिष्टप्रतिबन्धकाभावेनेव निर्वाहादतिरिक्तशक्त्यनभ्युपगमप्रसङ्गाच्च ॥

किञ्च सुप्तिविरहविशिष्टदुःखाभावस्य (दुःखाभावरूप-पा) स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया तत्सुखशेषत्वस्य वक्तुं शक्यत्वेन प्रियापरिष्वङ्गादिवत् सुप्तेरप्युत्तेजकत्वप्रसङ्गः । अपि च अनुभवसिद्धतया दुरपह्नवत्तदुत्कृष्टसुखं प्रति स्वतन्त्रान्वयव्यतिरेकसध्रीचीनप्रत्यक्षसिद्धहेतुभावस्य प्रियापरिष्वङ्गसुहृद्दर्शनादेरुत्तेजकत्वे अविद्यानिवृत्तिं प्रति प्रमाणसिद्धहेतुभावस्यापि निर्विचिकित्साधिष्ठानतत्त्वसाक्षात्कारस्य तदनन्तरकालस्य वा ततस्तत् साक्षात्कारनिवृत्तेर्वोत्तेजकत्वस्य वक्तुं शक्यत्वेन तद्विरहविशिष्टाज्ञानाभावाधिष्ठानस्य यथावत् स्फुरणसम्भवात् तद्व्यवहारस्य 'अस्ति प्रकाशते' इत्यादिरूपस्य सम्भवाच्चाधिष्ठानतत्त्वसाक्षात्कारादज्ञाननिवृत्तेरनभ्युपगमप्रसङ्गः ॥

अपि च दुःखस्य स्वरूपसुखाभिव्यक्तिं प्रति प्रतिबन्धकत्वे एव मानाभावेन प्रिया-परिष्वङ्गादेरुत्तेजकत्वस्वीकार एवायुक्तः । अपि चोक्तरीत्या अभिव्यक्तेरेवानिरूपणात् दुःखस्य तां प्रति प्रतिबन्धकत्वोक्तिरेवायुक्ता ॥

ननु स्वरूपानन्दावारकाज्ञाननिवृत्तिरूपैवाभिव्यक्तिरिति स्वीकारात् न तदनिरूपणमिति चेन्न । तस्यास्तत्त्वज्ञानसाध्यत्वेन दुःखाभावसाध्यत्वे मानाभावात् । सुप्तावज्ञानस्य सत्वेऽपि स्वरूपसुखाभिव्यक्तेर्दर्शनेन तन्निवृत्तेरभिव्यक्तित्वस्यैवानभ्युपेयत्वाच्च । विवरणे विषयैरपि स्वरूपसुखत्वमेवाभिव्यज्यते न तु तज्जन्यं सुखमस्तीत्युक्तत्वेनाज्ञानकाल एव स्रक्-चन्दनादिरूपविषयाणां सत्वेन तदनुरोधेनापि अज्ञाननिवृत्तेरनभिव्यक्तित्वस्या-वाच्यत्वाच्च ॥

अपि च दुःखाभावस्योक्तरीत्या नाजन्यसुखशेषत्वं सम्भवति । नापि जन्यसुखशेषत्वं सम्भवति । उक्तोत्कटदुःखकालेऽपि प्रियापरिष्वङ्गादिविषयजन्यसुखस्फुरणदर्शनात् । नहि तेन दुःखाभावेन भवतः सुखस्य तं प्रति शेषत्वं वा तस्य सुखं प्रति शेषत्वं वाऽभ्युपग-मार्हम् । उत्कटदुःखकाले सुखमेव न स्फुरतीति चेत् । न । अनुभवविरोधात् । सुखदुःखा-दीनां ज्ञातैकसत्वनियमाच्च(अभ्युपगमाच्च-पा) । सम्यक् न स्फुरतीति चेन्न । सुखस्फुरणे उत्कटदुःखकालीनत्वादन्यस्यासम्यक्त्वस्यानिरूपणात् सुखस्फुरणस्यावयोर्नित्यनिर्दोषसाक्षि-रूपतया भ्रमत्वादिरूपासम्यक्त्वायोगात् तादृशदुःखकालीनत्वरूपा सम्यक्तौ च तस्य मयाऽनापलापात् ॥

ननु जन्यं सुखमेव नास्ति, मानाभावात् । अजन्यसुखस्य च काचिदभिव्यक्तिरिदानीमसता मुक्तावेव सती च त्वयाऽपि वाच्या । तथाच तत्प्रतिबन्धकाभावेनैव दुःखाभावस्य मया स्वरूपसुखशेषत्वमभ्युपेयत इति चेन्न । सम्भवद्यावत्स्वरूपसुखगोचरस्वरूपानुभवनिष्ठाया 'अस्ति प्रकाशते' इत्याद्यभिलापप्रवृत्त्यादिरूपव्यवहारानुकूलायाः स्वाभाविकायाः शक्तेरनाद्य-विद्याकामकर्मादिना प्रतिबन्धात् जाग्रत्स्वप्नमूर्च्छारूपावस्थासु न तादृशव्यवहाररूप-फलोपादानम् । सुप्तौ यत्किञ्चित्स्वरूपसुखांशस्याप्रतिबन्धस्य स्फुरणव्यवहाराभ्युपगमेऽपि सम्भवद्यावत् तत् स्फुरणव्यवहारस्य तदनुकूलशक्तेरनाद्यविद्यादिना प्रतिबन्धाच्च । न तादृश-

व्यवहाररूपफलोपादानं चेत्यभ्युपगच्छता मया मुक्तौ तादृशव्यवहारफलोपादानप्रयोजकशक्तेरकुण्ठनापरपर्यायाविघटनस्यैव अभिव्यक्तित्वेनोपगमात् । नहि मुक्तौ ममेव तव तादृशव्यवहारो वा तद्धेतुभूतं ज्ञानं वाऽस्ति(तदभ्युपगतः-पा)त्वदभ्युपगतः । ब्रह्मरूपज्ञानस्य निर्विकल्पकतया व्यवहारानङ्गत्वाच्च ।।

ननु स्वरूपसुखस्वरूपानुभववत् तादृशव्यवहारानुकूलशक्तेरप्यनादिनित्यत्वे अविद्याकामकर्मादिना प्रतिबन्धकेन विघटनीयत्वायोगात् उक्तदोषतादवस्थ्यमिति चेन्न । स्वरूपसुखानुभवव्यवहारानुकूलतन्निष्ठशक्तेः प्रसादजन्यत्वात् स्वरूपानुभवे तच्छक्तिप्रयोज्यस्य स्वरूपदुःखादिविषयत्वरूपजन्यधर्मस्य स्वीकारेणोक्तदोषतादवस्थ्याभावात् । अत एव 'तावत् कालपर्यन्तं सुखमननुभूतमिदानीं दुःखमनुभूयते' इति स्वसुखानुभवे स्वरूपरूपे कादाचित्कत्वानुभवः । नच तत् कादाचित्कत्वं विषयविहरप्रयुक्तमभ्युपगन्तुं शक्यम् । सुप्तौ स्वरूपसुखम् अनुभूय स्थितस्य केनचित् प्रबोधे कृते तस्य तस्मिन् पुंसि सुखानुभवविघटकत्वप्रयुक्तस्य महाकोपस्यानुदयप्रसङ्गात् । तत्सुख-तदनुभवयोः स्वरूपरूपत्वेन पूर्ववत् तदाऽपि वर्तमानत्वानपायात् । तथाच तयोर्विषय-विषयिभावलक्षण-सम्बन्धविशेष एव प्रबोधेन नश्यति सुप्तिलक्षणकारणेन स एव कदाचिदुत्पद्यत इति न कश्चिद्दोषः । अन्यथा घटकत्वदशायां तद् घटज्ञानान्तरं वीणाशब्दं शृण्वतोऽपि घटरूपविषयस्य सत्वात् तत्सत्वप्रयुक्तं घटज्ञानस्य सत्वं तदाऽपि स्यात् । नचेष्टापत्तिः । सुखदुःखादिवदन्तःकरणतद्वृत्तिभेदानां ज्ञानेच्छादीनां ज्ञातैकसत्वेन तदाऽपि घटज्ञानानुभवप्रसङ्गात् । ।

किञ्च ज्ञानस्य विषयसत्ताधीनसत्ताकत्वे अतीतादिगोचरज्ञानानामसत्वप्रसङ्गः । 'प्रबोधेन मम सुखानुभवो गतः' इति सुखानुभवनाशप्रतीतिश्च 'पाकेन रक्तमुत्पन्नं श्यामं नष्टमि'ति प्रतीतिवत् 'स्पर्शमणि सम्बन्धेन इदमयः सुवर्णं जातमि'ति प्रतीतिवच्च विशेषणनाशादिविषयतयोपपादनीयेति दिक् ।।

एतेन विषयिभावशब्दितं ज्ञानमेव न स्यात् । एवं च उक्तदोष-तादवस्थ्यमिति निरस्तम् । 'मम घटे ज्ञानं-घटे प्रत्यक्षं प्रमाणं त्वज्ज्ञानं घटमेव विषयीकुरुते' इत्यादिप्रतीतिव्यवहाराभ्यां ज्ञानातिरिक्तस्य तस्य ज्ञानधर्मस्याभिलापादिरूपव्यवहारवत्

ज्ञानाधीनस्य सर्वैरप्यभ्युपेयत्वात्, अन्यथा ज्ञानाधीनेच्छाप्रयत्नादिपदार्थानामपि ज्ञानेनैवा-न्यथा सिद्धिप्रसङ्गात् । एतावांस्तु विशेषः । विषयिभावो ज्ञानमात्रविकारः इच्छादयस्तु ज्ञानवत् स्वतन्त्रज्ञाननियता इति । अत एव मोक्षदशायामनाद्यविद्याप्रतिबन्धकत्वोपपादक-स्वरूपानुभवधर्मभूतस्वरूपानन्दादिविषयत्वस्य अनर्थजननानुकूलाविद्याशक्तेस्तत्वज्ञाने हि तेन भगवत्प्रसादेनोपपत्तेः । निवृत्तेरग्रे भास्वत्स्वरूपसुखानुभवेन स्वरूपसुखविषयीकरणं दुःखादि -रूपसंसारानुत्पत्तिश्चेति मुक्तिदशायाः संसारदशातो वैलक्षण्यम् । अत एव च बाह्यान्तरे-न्द्रियजयोग्यवृत्तिमात्रनिवृत्तिरूपात् प्रतिबन्धकाभावात् सुप्तावपि तत् किञ्चित् स्वरूपसुख-साक्षिशब्दितस्वरूपानुभवेन विषयीक्रियत इति सुप्त्यवस्थायाः मोक्षतुल्यत्वम् । नचैवम् । स्वरूपानुभवस्य विषयीकरणव्यापाराभावकाले घटादिवत् निर्विषयत्वेन अज्ञानत्वप्रसङ्गः । प्रतिबन्धदशायां स्वरूपस्याविषयकत्वेऽपि सर्वदा स्वरूपविषयीकारत्वप्रयुक्तज्ञानत्वसत्त्वेन अज्ञानत्वापादकाभावात् । ज्ञानत्वजात्याक्रान्तत्वेनैव घटतो वैलक्षण्यापत्तेश्च ॥

ननु मोक्षदशायामनाद्यविद्या-काम-कर्मादिरूपप्रतिबन्धकाभावस्य तत्वज्ञानज-भगवत्-प्रसादात् सुप्तौ अकुण्ठितस्वरूपानुभवनिष्ठसहजशक्तिप्रयोज्यस्वरूपसुखविषयीकरण-लक्षणस्वरूपानुभवधर्मोदये सति व्यवहर्तव्यज्ञानस्य सत्वात् 'अस्ति प्रकाशते' इत्यादि व्यवहारो भवतु । सुप्तौ तु तदावरकाज्ञानादिसत्वात् कथं स्वरूपसुखानुभवः । तदभावे च कथं सुप्तोत्थितस्यौत्तरिकतत्परामर्शिन एव हरौ [१]सर्वेन्द्रियज्ञानोपमत्त्वरूपं प्रतिबन्धका-भावसत्वेऽप्यविद्या-कामकर्मादिलक्षण-प्रतिबन्धकान्तराणां निवर्तकज्ञानजभगवत्प्रसादाभावेन जाग्रदवस्थायामिव सुप्तावपि स्वरूपसुखविषयीकरणरूपकार्यानुकूलस्वरूपानुभवनिष्ठसहज-शक्तेः कुण्ठीभावादिकारिणां सत्वादिति चेन्न । उच्यते । सुप्तिदशायां सुखानुभवोऽस्तीत्य-विवादम् । तच्च सुखं न वैषयिकमित्यपि । तदनुभवोऽपि न जन्यः तदा प्रत्यक्षादिप्रमाणाना-मवताराभावादित्यपि ॥

किञ्च तदा स्वरूपसुखविषयकानुभवाभावे संस्कारासम्भवेन सुप्तोत्थितस्य 'एतावन्तं कालं सुखं अहमस्वाप्सम्' इत्यौत्तरिकसुषुप्तिकालीनसुखविषयकपरामर्शरूपकार्यानुपपत्तिः ।

---

(१) सर्वेन्द्रियज ज्ञानोपत्वमरूप इति ताळपत्रस्थ पाठः ॥

तज्जन्याभिलापरूपकार्यानुपपत्तिः पुनस्तत् सुखानुभवाय स्वापे प्रवृत्त्यनुपपत्तिश्च । नच सोऽनुभवः दुःखाभावे सुखभ्रमात्मक इति शक्यमभ्युपगन्तुम् । बाधकाभावात् । सुप्तिकाले भ्रमोत्पादकसामग्रीविरहाच्च । तथाच कार्यान्यथानुपपत्तिरेव सामग्रीकल्पिका । एवं च अविद्यारूपप्रतिबन्धकनिष्ठप्रतिबन्धानुकूलप्राज्ञसम्बन्धेनापगमः कल्प्यत इति सुप्तिदशायामपि प्रतिबन्धकाभावो न दुर्लभः । नच तदा प्राज्ञसम्बन्धे प्रमाणाभावः ।

**'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं'**

**'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति'**

इत्यादि श्रुतेरेव जीवस्य प्राज्ञसम्बन्धे प्रमाणत्वात् ॥

## ॥ अथ 'घटसंवृतमि'ति त्रिपुरातापिन्युपनिषत् विचारः ॥

ननु –

**'घटसंवृतमाकाशं नीयमान घटे यथा ।**
**घटो नीयते नाकाशं तद् वज्जीवो नभोपमः'**(१)

**'महान्तं विभुमात्मानं मत्वा धीरो न शोचति'**

**'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः'**

इत्यादि श्रुतिस्मृतिभिर्जीवस्याकाशवत् व्यापकत्वोपन्यासपूर्वकं कर्माभावावेदनात् परिष्वङ्गादेश्च संयोगविशेषात्मकतया कर्मसापेक्षस्य जीवेऽनुपपत्तिरिति चेन्न । 'घटसंवृतमाकाशम्' इत्यादि श्रुतिद्वयस्य परमात्मपरत्वेन जीवात्मपरत्वासिद्धेः । जीववैभवस्य –

**'आराग्रमात्रो ह्यपरोपि दृष्टः बुद्धेर्गुणेनात्मगुणेन चैव ।**
**वालाग्रशतभागस्य शतधा कल्पितस्य च'**

इत्यादिजीवाव्यापकत्वपरश्रुत्यैव निषेधाच्च । अन्यथा 'आराग्रमात्र' इति श्रुतौ 'मात्र'-शब्दवैयर्थ्यप्रसङ्गात् ॥

---

(१) घटो नीयेत नाकाशं तथा जीवो नभोपमः ॥ इति इदानीन्तन पाठः ॥ त्रिपुरातापिन्युपनिषत् -५-१३॥ अद्वैतशिक्षायां 'अस्याः उपनिषदः विचारः 'घटसंवृतमितिश्रुतौ विभुत्वस्य' इत्यादिना किञ्चित् विचारितमस्ति ॥ पुट-सं–२१४॥

नच 'आराग्रमात्रत्वं जीवस्य बुध्युपाधिप्रयुक्तम् । 'बुद्धेर्गुणेनात्मगुणेन च' इति जीवाराग्रमात्रत्वस्य स्वाभाविकत्वकथनात् । अन्यथा 'बुद्धेर्गुणेन' इत्येतावता आराग्रमात्रत्वस्य बुध्युपाधिकृतत्वसिद्धेः 'आत्मगुणेन च' इत्यस्य वैयर्थ्यात् । तत् स्वाभाविकत्व(प्रतिपादनपरस्य श्रुतिभागस्य-पा) 'वालाग्रशत भागस्य' इति श्रुतिभागस्य वैयर्थ्यात् । 'आत्मगुणेन' आत्मपरिमाणलक्षणगुणेन चेत्यर्थः । 'नित्यः सर्वगतः स्थाणुः'इति स्मृतेश्च । सर्वगतश्चासावणुश्चेत्यर्थपरत्वेन जीववैभवपरत्वासिद्धेः ॥

नच 'घटसंवृतमाकाशम्' इति श्रुतेः परमात्मपरत्वे 'तद्वत् जीव' इति जीवाभिधानश्रुतिविरोधः । 'ब्रह्मैव वाचः परमं व्योम' 'वचसां वाच्यमुत्तमम्' इत्यादिसावधारणश्रुतिस्मृतिभिः ब्रह्मण एवासङ्कोचेन वाङ्मात्रमुख्यार्थत्वावेदनेन 'आत्म'शब्दव'ज्जीव'शब्दस्यापि परमेश्वरे एव मुख्यत्वेनाविरोधात् ॥

॥ इति घटसंवृतमिति त्रिपुरातापिन्युपनिषत् विचारः ॥

ननु मुक्तौ स्वरूपसुखविषयीकरणलक्षणस्य स्वरूपानुभवधर्मत्वेन त्वदभ्युपगतस्योक्तरीत्या जन्यत्वाङ्गीकारे जन्यभावस्य विनाशित्वनियमाद्विनाशापत्तौ मोक्षस्य नित्यपुरुषार्थत्वं श्रुत्यादिप्रमाणासिद्धं भज्यत इति चेन्न । श्रुतिसिद्धमोक्षनित्यपुरुषार्थत्वनिर्वाहाय यज्जन्यं तद्विनाशीत्यौत्सर्गिकत्वात् ॥

एतेन सुप्तिमुक्त्योरभिलापप्रवृत्त्यादिरूपज्ञानसाध्यव्यवहार एव मानाभावात् न तदर्थं स्वरूपानुभवधर्मत्वेन स्वरूपसुखतदनुभवादि-वस्तुविषयत्वरूपागन्तुकोऽर्थः स्वीकार्य इति निरस्तम् ।

'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति'
'कामान्नीकाम रूप्यनुसञ्चरन्'
'एतत् सामगायन्नास्ते'
'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिः'

इत्यादिश्रुतिभिः सुप्तिमुक्त्योरपि सुप्तमुक्तजीवानां प्रवृत्त्यभिलापादिव्यवहारवत्त्वावेदनात् ॥

ननु 'सदेव सोम्येदमग्र आसीत्' इति छान्दोग्ये ब्रह्मोपक्रम्य 'तत्त्वमसि' इति जीवस्योत्क्रान्तब्रह्मात्मकत्वोपसंहारात् । तथा ऐतरेये 'आत्मा वा इदमेक एव' इत्युपक्रम्य 'स एतमेव पुरुषं ब्रह्मततममपश्यत्' इति तमेव ब्रह्मात्मानमभिधाय समाप्तौ 'प्रज्ञानं ब्रह्म' इत्युपसंहारात्, तथा वाजसनेयकेऽपि 'अहं ब्रह्मास्मि'इत्युपक्रम्य 'अयमात्मा ब्रह्म'इत्युपसंहारात्, तथा आथर्वणेऽपि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति सर्वात्मकं ब्रह्मोपक्रम्य, 'ब्रह्मैवेदममृतं पुरस्तात्' इति तस्यैव निगमात् वेदान्तानां जीवब्रह्माभेदपरत्वावधारणात्, ब्रह्मसार्वात्म्यपरत्वावसायाच्च । वस्तुतो व्यापकब्रह्माभिन्नस्य जीवस्य 'तमोऽभिभूतं सुखरूपमेति' इति श्रुतिप्रतिपन्नं वास्तवं जीवप्रवृत्तिसाध्यगतिकर्मत्वमेव ब्रह्मणो न सम्भवति ॥

किञ्च जीवब्रह्मणोर्भेदेऽपि न जीवकर्तृकगतिकर्मत्वं ब्रह्मण उपपद्यते । जीववैभवपक्षे तस्य गतेरेवासम्भवात् जीवाणुत्वपक्षे, तत्सम्भवेऽपि ब्रह्मणो व्यापकत्वेन तस्य जीवेन नित्यप्राप्तत्वात् । तस्मात् न ब्रह्मणो जीवकर्तृकगतिक्रियासाध्यं प्राप्यकर्मत्वमुपपद्यते । नचोत्पाद्यकर्मत्वं विकार्यकर्मत्वं संस्कार्यकर्मत्वं वा गतिक्रियासाध्यं न तावत् ब्रह्मणि सम्भवति । तस्यानादिनित्यत्वात् अविकारित्वात् । ब्रह्मणो निर्गुणत्वपक्षेऽभिनवगुणोदयाभावेन संस्कार्यकर्मत्वस्याप्ययोगात् । 'केवलो निर्गुणश्च'इति श्रुत्यानाधेयातिशयत्वावेदनाच्च । दोषापनयलक्षणसंस्कारस्यापि 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' (ई-उ-८) इति श्रुत्या नित्यशुद्धत्वाऽऽवेदनमुखेन निरासात् । अत एव ब्रह्मणः सगुणत्वपक्षेऽप्येतन्नोपपद्यत इति ॥

नन्वेवं सति क्रियाफलत्वेन स्वीकृतानामुत्पत्तिविकारप्राप्तिसंस्काराणां कर्मत्वव्यापकानामभावे ब्रह्मणः यां कामपि क्रियां प्रति कर्मत्वमेव न स्यात् । नचैवं –

'द्रष्टव्यः सोऽन्वेष्टव्यः मन्तव्यः निदिध्यासितव्यः'
'तमेवैकं जानथ आत्मानम् अन्या वाचो विमुञ्चथ'
'तमेवं विद्वानमृत इह भवति'
'तमेव धीरो विज्ञायीत'

'परात्परं पुरिशयं पुरुषमीक्षते'
'ब्रह्मविदाप्नोति परम्'
'तथा विद्वान्नामरूपाद्विमुक्तः'
'परात्परं पुरुषमुपैति दिव्यम्'

इत्यादिश्रुतिषु ब्रह्मकर्मत्ववाचि-प्रत्ययानामानर्थक्यप्रसङ्गादिति चेन्न । उत्पत्त्यादीनां विहित-क्रियां प्रति यत्कर्मत्वं तत्कर्मत्वं प्रत्येव व्यापकत्वेनोत्पत्त्यादिचतुष्टयं व्यावर्तमानं स्वव्याप्य-भूतविहितक्रियां प्रति यत्कर्मत्वं तदेव व्यावर्तयेत् । नत्वविहितज्ञानक्रियां प्रति यत्कर्मत्वं तदपीत्युक्तदोषानवकाशात्, स एव हि अर्थो विधिविषयत्वमर्हति यो अश्वेन गमनवत् षोडशिग्रहणवच्च कर्तुम् अश्वेन गमनवत् षोडशिग्रहणवच्चाकर्तुं पद्भ्यां गमनवदुदितहोमा-नुदितहोमवच्च अन्यथा वा कर्तुमर्हः ॥

नच ज्ञानक्रिया तथाऽपरोक्षः । अपरोक्षज्ञानक्रियायाः प्रमाणवस्तुमात्रतन्त्रत्वेन पुरुष-प्रयत्नानधीनत्वात् । तथा च विहितज्ञानक्रियां प्रति ब्रह्मणः कर्मत्वमविरुद्धमिति चेन्न । 'सदेव सोम्य' इति वाक्ये सत्त्वैकत्वावधारण'अग्र'शब्दार्थकालविशेषविशिष्ट-'सत्'प्राति-पदिकार्थ ब्रह्मण उपक्रान्तत्वेन तदविरोधाय 'तत्त्वमसि' इत्युपसंहारस्यापि सद्वितीयब्रह्मो-पसंहारत्वस्य वाच्यतया तत्रोपक्रमोपसंहारयोर्जीवचैतन्यमात्रस्य ब्रह्मचैतन्यमात्राभेदपरतायां प्रमाणत्वासम्भवात् । अन्यथा 'सलिल एको द्रष्टा' इति सलिलाधारकैकत्वद्रष्टृत्वविशिष्ट-ब्रह्मसत्वपरपूर्ववाक्यविरोधात् । 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्' इति वाक्येऽपि आत्मत्वैकावधारणार्थककालविशिष्टात्मप्रातिपदिकमुख्यार्थभूतपरमात्मन उपक्रान्तत्वेन तदविरोधाय 'प्रज्ञानं ब्रह्म' इत्युपसंहारस्यापि तादृशपरमात्मपरत्वावश्य-म्भावेन जीवब्रह्मभेदपरत्वासिद्धेः । अत एव 'तत् काले नान्यत् किश्चन मिषत्' इति मिषत्वरूप व्यापारविशेषविशिष्टनिषेधः,विशेषणमात्रनिषेधः पर्यवस्यतीत्यवसीयते । स परमात्मा एतमेव= स्वात्मानमेव, पुरुषं= पुरिशयानं, ब्रह्म= गुणपूर्णं, ततं= देशतः कालतश्च व्याप्तम्, अपश्यत् नान्यमेतादृशमित्यर्थः । नत्वेतमेव जीवमित्यर्थः । 'एतत्'शब्दस्य सर्व-नामतयोपक्रान्तपरमात्मपरतायाः एव न्याय्यत्वात्। नहि प्रत्यक्षप्रतिपन्नजीवात्मोपक्रान्तः॥

किञ्च योगरूढिभ्यां परामत्मन एव 'आत्म'शब्दमुख्यार्थत्वं परेणापि स्वीकृतम् । नच 'एतत्'शब्दस्यात्मशब्दप्रकृतमुख्यार्थपरत्वं बाधकं विना त्यागार्हम् । अपि च शाब्दी ह्याकाङ्क्षाशब्देनैव पूरणीया, अन्यथा व्युत्पत्तिविरोधात् । नच प्रत्यक्षतः प्राप्तो जीवात्माऽत्र शब्दोपस्थापितः । येन व्युत्पत्तिविरोधो न स्यात् ।'अहं ब्रह्माऽस्मि' इति वाक्येऽपि 'अहं ब्रह्मास्मि' इति जीवः स्वसंहितं[१] परमात्मानं, स्थूलारुन्धतीन्यायेन बोधयितुं वदतीति तत्रापि परमात्मन एवोपक्रमत्वात् । अन्यथोपसंहारे 'अयं ब्रह्म' इत्येतावता जीवब्रह्मणोरभेदपरत्वासिद्धेः । 'अयमात्मा ब्रह्मा' इति योगरूढिभ्यां परमात्मनि मुख्य'आत्म'-शब्दोपादानस्य वैयर्थ्यात् । 'अयम्' इति सर्वनाम्नैवोपसंहारगतेनोपक्रमस्थ'अहं'शब्दोपस्थितत्वेन प्रकृतं जीवं परामृश्य तत्र 'अयं ब्रह्म' इति ब्रह्मभेदबोधनसम्भवात्, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति आथर्वणवाक्येऽप्युपक्रमस्य प्रधानवस्तुज्ञानार्थत्वेन प्रवृत्तस्य सर्वात्मकब्रह्मोपक्रमत्वासिद्धेः । प्रश्नरूपोपक्रमपर्यालोचनया 'किं वस्तु ज्ञाने जाते सर्वमिदं ज्ञातं भवति । सर्वज्ञानेन यत् फलं भवति तद्वस्तु निरूपणीयमिति' प्रधानवस्तुप्रतिपित्सालाभात् । नचैवमर्थपरत्वाश्रयणे मुख्यार्थपरत्वत्यागप्रसङ्गः । परेणापि मुख्यार्थस्य त्याज्यत्वात्, अन्यथा घटादिसाक्षात्कारेणैव ब्रह्मापरोक्ष्यप्रसङ्गात् । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति प्रश्नस्यैवानुदयप्रसङ्गात् । निश्चिते संशयविपर्ययोरयोगात् । ब्रह्मस्वरूपनिश्चयाय श्रणाद्यनुसरणाभावप्रसङ्गाच्च । ब्रह्मणः सर्वात्मकत्वे सर्वस्यापि ब्रह्मात्मकत्वावश्यम्भावात् । किञ्चैवं 'सत्यं ज्ञानम्' इति ब्रह्मस्वरूपनिश्चयाय लक्षणानुक्तिप्रसङ्गः । घटादिनिश्चयेनैव ब्रह्मस्वरूपनिश्चयात् प्रश्नस्यैवानुदयात् । तस्मात् ब्रह्मणः सर्ववस्त्वपेक्षया प्राधान्यं निश्चेतुमेव, 'कस्मिन्नुभगवो विज्ञाते' इत्युपक्रमप्रवृत्तिः नतु ब्रह्मसार्वात्म्यप्रतिपादनपरम्(सार्वात्म्यप्रतिपादनाय-पा)।।

अत एव 'ब्रह्मैवेदममृतं पुरस्तात्' इति उपसंहारे ब्रह्मणः सर्वोत्तमत्वख्यापनार्थमिदं प्रकृतम् । 'ब्रह्मैव पुरस्ताद् अमृतं= बन्धादिदोषरहितं, नत्वन्यदिति सावधारणं ब्रह्मण एव पुरस्तात् मुक्तत्वकथनम् । अन्यथा 'ब्रह्मैवेदम्' इत्येतावतैव ब्रह्मणः सर्वात्मकत्वसिद्धेः,

(१) स्वसन्निहितं इति पाठः स्यात् ।।

सर्वात्मकत्वानुपयुक्तस्य 'अमृतं पुरस्तात्' इत्यस्य वैयर्थ्यात् । तस्मात् वेदान्तानां जीवब्रह्माभेदपरत्वे सर्वात्मकत्वे वा मानाभावात्, न तेभ्यः तत्सिद्धिः ॥

एतेन 'तत्त्वमसि' इत्यादिश्रुतयोऽपि स्थूलारुन्धतीन्यायेन ब्रह्मस्वरूपप्रतिपादनपराः नतु जीवब्रह्माभेदपरा इत्यपि व्याख्याता भवन्ति । एतेनैव –

'ब्रह्मवेद ब्रह्मैव भवति'

'अभयं वै जनक प्राप्तोऽसि तदात्मानमेवावेदाहं ब्रह्मास्मीति तस्मात् सर्वमभवत्'

'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः'

इत्यादिश्रुत्या जीवब्रह्माभेदसिद्धिरिति परास्तम् ।

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद' (कठ-उ-१-२-१४)

इति श्रुत्या 'धर्मादिपदार्थेभ्यः जन्याजन्यप्रपञ्चात् सर्वस्माच्च अन्यस्मिन् परमात्मनि यं यं विशेषं तत् प्रमाणसिद्धं पश्यसि तं तं विशेषं वद' इति प्रार्थनापरतया परमेश्वरस्य जीवजडात्मकादकृतात् कृताच्च प्रपञ्चात् भेदावेदनविरोधात् । अन्यथा –

'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'

'आनन्दं ब्रह्मणो विद्वान्'

'रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति'

'स एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते'

'अशरीरं शरीरेषु अनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति'

'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि'

'श्रुतं ह्येव मे भगवद् दृषेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु'(छा-उ-७-१-३)

तस्मै मृदित कषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः'

इत्यादिश्रुतीनां जीवस्य परमेश्वरज्ञानसाध्य-कर्मक्षयादिरूपपरमेश्वरवैधर्म्यप्रतिपादनपराणा-मनर्थक्यप्रसङ्गात् । नहि सर्वस्य वस्तुनो ब्रह्मात्मकत्वे ततो वैधर्म्यमुपपद्यते ।।

किञ्च 'अशरीरम्' इति श्रुत्या परमात्मनो जीवादतीव वैधर्म्यं प्रतीयते । अशरीरं= प्राकृतशरीररहितं, शरीरेषु अप्राकृतेषु अत एव अनवस्थेषु= अस्ति-जायते-परिणमते-वर्धते-अपक्षीयते-विनश्यतीत्येवं भूतावस्थारहितेषु' इति तच्छ्रुत्यर्थात् । नच तत् सर्वम-विद्याकल्पितम् । तवाऽपि सर्वस्य परमेश्वराद्वास्तवभेदानपायात् । कल्पिताकल्पितयो-र्भेदस्यापि कल्पितत्वे तयोरभेदस्य वास्तवत्वापत्त्या ब्रह्मणोऽप्यकल्पितत्वेन सिद्धस्य कल्पितत्वापातात् । जीवस्य 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' इति श्रुतिप्रतिपन्न-भयरहितप्रतिष्ठालाभस्य 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति 'रसो वै सः' इति प्रकृते 'रस'शब्दार्थभूत परमात्मलाभकृतानन्दादेश्च अविद्याकल्पितत्वे, अविद्या-निवृत्त्यानिवृत्त्यवश्यम्भावेन तद्रूपमोक्षस्यानित्यपुरुषार्थत्वप्रसङ्गाच्च ।।

किञ्च अविद्याकल्पितमिति किमविद्याजन्यत्वमुच्यते? किं वा तदन्यत् किञ्चित्? नाद्यः । जीवब्रह्मभेदस्यानादित्वात् । तथाऽपि सत्यामविद्यायां स भेदस्तिष्ठति तस्यां निवृत्तायां च सोऽपि निवर्तत इति तत्स्थित्यधीनस्थितिकत्वेन सोऽनादिरपि तत्कल्पित इति व्यवह्रियत इति चेन्न । जीवेश्वरभेदस्य तन्निवृत्त्या निवृत्तिरित्यत्रैव मानाभावात् । प्रत्युत –

'स पर्यगात् शुक्रमकायमव्रणं अस्नाविरं शुद्धमपापविद्धम्'
'तथा विद्वान्नामरूपाद्विमुक्तः'
'परात्परं पुरुषमुपैति दिव्यम्', ' ब्रह्मविदाप्नोति परम्'

इत्यादिश्रुतिभिर्ब्रह्मणो ज्ञानिगतकर्मप्राप्ति-कर्मत्वावेदनेन तयोश्च भेदं विनाऽयोगेन तदन्य-थाऽनुपपत्त्या संसारदशायामिव मुक्तिदशायामपि जीवेश्वरयोर्भेदस्यैव सिद्धेः । न द्वितीयः । अविद्याकल्पितत्वस्य तज्जन्यत्वातिरिक्तस्य, वियदादिषु शुक्तिरूप्यादिषु वा अनिरूपणात् । नहि 'नेदं रजतमिति' बाधकज्ञानानन्तरमपि शुक्तिरजतयोर्भेदादतिरेकेणाविद्याकल्पितत्वं रजते अन्यत् प्रतीयत इत्यस्ति । 'मिथ्यैव रजतमभादिति' प्रतीतेर्मिथ्यात्वमतिरिक्तं प्रतीयते

व्यवह्रियते चेति चेन्न । प्रतीतिव्यवहारयोरर्थक्रियावैधुर्यविषयत्वोपपत्तेः । 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह' इति श्रौत मिथ्या व्यवहारस्य तदालम्बनत्वकल्पनाच्च । अत एव प्रत्यक्षसिद्धत्वेन दुरपह्नवतया तस्य नेदं रजतमिति न निषेधः । किन्तु अन्यस्यैवानाभासस्य रजतस्य निषेध इति । प्रसक्तस्यैव निषेध इति पक्षे, तस्य रजतस्य प्रत्यक्षप्रतिपन्नस्य स्वरूपेण निषेधाभ्युपगमो विरुद्ध इति विमृश्य पारमार्थिकत्वाकारेणैव तस्य निषेध इति च परस्याभ्युपगमः । पारमार्थिकत्वं च नार्थक्रियासमर्थत्वादन्यदन्विष्यमाणमुपलभ्यत इति किमधिकमाचरितम्?

नन्वेवं सति रजतं सदेव किं न स्यादिति चेत् । भ्रान्तोऽसि! शुक्तौ तदवच्छिन्नचैतन्ये वा दोषसंज्ञेन चाकचिक्यादिना सहितयाऽविद्यारजतमुत्पद्यत इति स्वीकुर्वता त्वयैव स्वात्मनः शिक्षणीयत्वात् । नह्युत्पन्नविनष्टरजते विनश्यवदवस्थागत कर्मादिना च काचनार्थक्रिया न जायत इत्येतावता तत् सत्यं नेति त्वयोपेयते । अन्यथा शुक्तिरूप्यादितुल्यतया तस्याप्यसत्यत्वप्रसङ्गः । नच तत् ज्ञानेन न निवर्तते शुक्तिरूप्यादिकन्तु ज्ञानेन निवर्तत इति वाच्यम् । मुद्गरप्रहारादिना शुक्तिशकलादेर्निवृत्त्या निवृत्तस्य शुक्तिरूप्यादेर्घटादेश्चाधिष्ठानज्ञानं विनैव निवृत्तेः सत्यत्वापातेन तत्कृतवैषम्यस्यासत्यत्वं प्रत्यप्रयोजकत्वात् । नच 'मुद्गरप्रहारादिना रजतं निवृत्तं घटो निवृत्तं घटो निवृत्त' इति नानुभव इत्यस्ति । अन्यथा 'ज्ञानेन शुक्त्यज्ञानं निवृत्तं, भ्रमो निवृत्तः' इत्यनुभवेन तन्निवृत्त्यसिद्धिप्रसङ्गात् ॥

किञ्च वैधर्म्यादुपादनोपादेययोर्भेदावश्यम्भावात् ज्ञानेनाज्ञाननिवृत्तिर्या जायते । तस्या एवाज्ञानोपादेयनिवृत्तित्वायोगादज्ञाननिवृत्तिजन्यनिवृत्तिप्रतियोगित्वस्यैव स्वीकार्यतया शुक्तिरूप्यादेरज्ञानोपादेयस्याधिष्ठान-याथात्म्यदर्शनरूप-ज्ञाननिवर्त्यत्वमेवासिद्धमिति न तस्य ज्ञाननिवर्त्यत्वेनासत्यत्वं युक्तम् । एवं वियदादिप्रपञ्चस्यापि असत्यत्वं दुर्लभमिति दिक् ॥

तस्मात् जीवेशभेदो यथाऽनादिस्तथाऽनन्तो दुरपह्नवः । नचैवं 'ब्रह्मवेद ब्रह्मैव भवति' इति ब्रह्मज्ञानिनो ब्रह्मात्मकत्वावेदकश्रुतिविरोधः । श्रुतिप्रतिपन्नब्रह्मज्ञानसाध्य-ब्रह्मात्मकस्य नित्यसिद्धत्वेन परेणाप्यनङ्गीकारात् । नहि परेणापि जीवस्य ब्रह्मात्मकत्वं ज्ञानसाध्यमित्युपेयते । नच ज्ञानेनाज्ञाने निवृत्ते भेदभ्रमादिकारणाभावादग्रे भेदादिभ्रमो नानुवर्तते ।

आत्मस्वरूपमेकमेवानुवर्तमानभेदादि-संसारभ्रमनिवृत्ताववशिष्यत इत्येव अभेदश्रुतिमात्र-तात्पर्यगोचरोऽर्थः । तथा च श्रुतयः –

**'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।**
**कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ।**

**'यथाह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्नो बहुधैकोऽनुगच्छन् ।**
**उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा'**

**'जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवति'** इति ।

**'एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।'**

**'अत्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्ति । अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति । नह्यस्ति द्वैतसिद्धिः आत्मैव सिद्धो अद्वितीयो मायया ह्यन्यदिव'**

इत्येवमादय इति वाच्यम् ।

उक्तरीत्या भेदादेर्भ्रमत्वस्यैव दुर्वचत्वात् । अविद्याकल्पितत्वादिरूपस्य विकल्प्य निरस्तत्वात् । किञ्च भेदादिभ्रमप्रयोजकाभावादपि न जीवेश्वरभेदादिभ्रम उपपद्यते ॥

ननु भ्रमप्रयोजकमभेदाज्ञानमेव तदस्तीति कथं भ्रमप्रयोजकाभाव इति चेत्? किमिह कथम् । अभेदस्य स्वप्रकाशचिदात्मकतया सदा स्फुरणात् तद्भ्रमानुपपत्तेः । नहि यथावदधिष्ठानस्फुरणे सति भ्रमः संशयो वा दुष्टचरः । सत्यमधिष्ठानस्फुरणस्यानाद्यविद्याऽऽवृतत्वात् भ्रमाद्युपपत्तिरिति चेन्न । आवृतत्वस्यैव दुर्वचत्वात् । आवृतत्वं हि चक्षुःपटलवत् न ज्ञानो-त्पत्तिप्रतिबन्धकत्वं, नित्यसिद्धस्वप्रकाशभूतात्मस्वरूपज्ञानस्योत्पत्त्यभावात् ॥

किञ्च प्रतिबन्धकत्वमविद्यायाः कार्यानुकूलकिञ्चिद्धर्मविघटकत्वमेव वाच्यम् । नतु कारणीभूताभावप्रतियोगित्वादिकं शक्तिवादित्वात् । नच संसारकारणमूलाविद्याविघटनीयम् आत्मस्वरूपे तव किमपि सम्भवति । तथा सति मूलाविद्यानिवृत्त्यनन्तरमात्मस्वरूपे

मुक्तिदशामात्रसंसर्गिकार्यमङ्गीकार्यं स्यात् । नहि तेन विना मूलाविद्यायाः प्रतिबन्धकत्व-निर्वाहः सम्भवति ॥

किञ्चैवम् अविद्यायाः प्रतिबन्धकत्वं यथास्फुरणांशे न सम्भवति एवमनवच्छिन्नानाम् आनन्दांशेऽपि तन्न स्यात् । स्फुरणांशइवानवच्छिन्नानात्मस्वरूपानन्दांशेऽप्यविद्याविघटनीय-स्याभावतौल्येन तन्निवृत्तिदशायां निवृत्तिप्रयोज्यकार्यस्यैवाभावात् । तथा चेदानीं संसार-दशायामपि स्फुरणांशवदनवच्छिन्नानन्दस्याप्यनुभवप्रसङ्गः । 'अस्ति प्रकाशः' इति तद्गोचर-व्यवहारप्रसङ्गश्च । तस्मादविद्यानिवृत्त्या कस्याऽप्युपकारस्यासम्पादनात् नाविद्यायाः स्व-रूपावरकत्वेन प्रतिबन्धकत्वं युक्तम् । तथाचेदानीमनवच्छिन्नानन्दस्फुरणं दुर्वारमिति । न-चेष्टापत्तिः । अनुभवविरोधात् ॥

किञ्च यथावदधिष्ठानस्फुरणस्येदानीमपि भेदभ्रमसंसारदुःखादिभ्रमानुपपत्तिः । नहि शुक्त्याद्यधिष्ठानस्य यथावत्स्फुरणे रजतादिभ्रमो दृष्टचर इत्युक्तमेव । तथा च जीवेश्वर-भेदादिर्न भ्रम इति सिद्धम् । उदाहृतश्रुतयश्च न जीवेश्वरभेदस्वरूपनिराकरणपरा वा तदौपाधिकत्वप्रतिपादनपरा वा, तत्पारमार्थिकत्वनिराकरणपरा वा, इति प्रतिपादित-मधस्तात् । तथा च जीवेश्वरभेदसाधकप्रमाणसहायात् अभेदे साधकाभावात् बाधकसद्भावाच्च न जीवेश्वराभेदो वास्तवः, किन्तु तद्भेद एव वास्तवो नौपाधिकश्चेति स्थिते 'ब्रह्मवेद ब्रह्मैव भवति' इति श्रुतेः अस्मद्रीत्यैव मुख्योऽर्थः स्वीकार्यः नतु पररीत्या अमुख्यार्थः । तस्याश्चायं हि मुख्यो अर्थः । यो ब्रह्मवेद स ब्रह्मैव प्राप्नोति नान्यदिति भवतिश्चात्र प्राप्त्यर्थः । परस्मैपदं च 'यदा पश्यः पश्यते' इत्यादावात्मनेपदवदत्रोपपन्नम् ॥

एवं च द्वितीयब्रह्मपदमपि प्रथमब्रह्मपदवत् द्वितीयान्तमेव सम्पद्यते प्रत्यभिज्ञा विरोधोऽपि नेति लाघवम् । अन्यथा प्रक्रमभङ्गेन प्रत्यभिज्ञाविरोध इति प्रतिपत्तिगौरव-पराहतमित्युक्तमधस्तात् ॥

एतेन 'अभयं वै जनक प्राप्तोऽसि तदात्मनमेवावेदहं ब्रह्मास्ति इति । तस्मात् सर्वम-भवत् । तत्र को मोहः कः शोकः एकत्वमनुपश्यतः' इति श्रुत्या आत्मैकत्वसिद्धिरिति परास्तम् । हे जनक! यदात्मानमेव अहं ब्रह्मास्मि इति अवेत्= स्थूलारुन्धतीन्यायेन

परमात्माधिष्ठानमहमस्मि इति ज्ञातवान्, तत्=तस्मात्, अभयं वै प्राप्तोऽसि, तत्र=परमात्मनि, एकत्वं=तत् समानजातीयद्वितीयरहितत्वं स्वस्मादन्यत्वं वा, अनुपश्यतः= अनुशास्तृ-श्रवणादिकमनुसृत्य, पश्यतः= साक्षात्कुर्वतः, को मोहः, कः शोकः, न कोऽपीति ।

ननु भेदकधर्माभावे 'आत्म'शब्दमुख्यार्थभूतस्य परमात्मनः स्वस्मादन्यत्वदर्शनमेव दुर्लभम् । तदभावे च स्थूलारुन्धतीन्यायानुसन्धानमेव स्वस्मिन् परमात्माधिष्ठानत्वज्ञानकारणं सुतरां दुर्लभमित्यत आह 'तस्मादात्मशब्दमुख्यार्थभूतात् सर्वं जगदभवत्' इति । भेदक-धर्मप्रतिपादनमित्येतच्छ्रुतेर्भेद एव मानत्वेन अतोऽप्यात्मैकत्वसिध्यनुपपत्तेरिति । तथाच जीवेश्वरयोः उक्तश्रुतिभिरिति वैलक्षण्यावेदनात्, 'द्वासुपर्णा'दिश्रुतिभिः कण्ठत एव भेदा-वेदनाच्च । तत्रापि 'आराग्रमात्रोऽह्यपरोपि दृष्टः' इत्युदाहृतश्रुत्या जीवस्याप्यव्यापकत्वा-वेदनात् । परमेश्वरस्य श्रुतं जीवकर्तृकगतिकर्मत्वं तत्कर्तृकप्राप्तिकर्मत्वं च तत्कर्तृक-ज्ञानक्रियाकर्मत्ववदेवोपपद्यत इति सिद्धम् । नत्वव्यापकं ग्रामादिकमेव गतिक्रिया- कर्म-प्राप्ति-क्रियाकर्म च भवति । परमात्मनस्तु व्यापकत्वात् गतेः प्राप्त्यर्थत्वाच्च । तस्य च नित्यप्राप्तत्वात् गतिप्राप्तिक्रियाकर्मत्वमेवानुपपन्नमिति चेन्न । उपवेलं समुद्रस्य प्राप्तत्वेऽपि मध्यदेशावच्छेदेन पोतलक्षणसाधनेन पौतिककर्तृकप्राप्तिकर्मत्ववत् निकटदेशे गगनस्य प्राप्तत्वेऽपि मेघमण्डलावच्छेदेन विहङ्गमकर्तृकगतिक्रियासाध्य तत्कर्तृकप्राप्तिक्रियाकर्मत्ववच्च विकृतदेशे परमात्मनो जीवेन प्राप्तत्वेऽपि अविकृतवैकुण्ठादिदेशावच्छेदेन जीवकर्तृक-अर्चिरादिगतिसाध्यप्राप्तिकर्मत्वोपपत्तेः ॥

तथाच श्रुतिः – यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनूत्तमेषू-त्तमेषु इत्यादिः । स्मृतिश्च–

> 'पृथिव्यां ब्रह्मणो मेरौ वैजयन्तेऽन्तरिक्षगम् ।
> तृतीयं सत्यलोके च सदनं त्रिविधः स्मृतम् ।
> तेभ्योऽनन्तासनाद्या यत् परतो विश्वतः परे ।।[१]

इति । नच तथा तत्प्राप्तेरपि सुखदुःखाभावेतरत्वात् न पुरुषार्थत्वमिति वाच्यम् । तत्स्वतः

---

(१) (बृ.उ.३-१३-७) बृहदारण्यकभाष्योदाहृतसत्तत्ववचनम् ।।

पुरुषार्थत्वस्य मयाऽप्यनभ्युपगमात् । अश्व-आन्दोलिका-पर्यङ्किका-प्रासाद-सिंह-विष्टरादि रम्यवस्तुप्राप्तिवत् अविकृतदोषपरमेश्वररूपविशेषप्राप्तेः सुखविशेषविषयीकरणलक्षणस्वरूपानुभवधर्मरूप स्वतःपुरुषार्थभूताभिव्यक्तिहेतुतयैव पुरुषार्थत्वोपगमात् ॥

ननु तवाऽपि विषयीकरणरूपकार्यानुकूलस्वरूपानुभवनिष्ठसहजशक्तेः तत्स्वरूपरूपत्वेनाकार्यतया अनाद्यविद्या-कामकर्मभिरविघटनीयत्वात् मत्पक्षे इव त्वत्पक्षेऽप्यनुपपत्तिस्तुल्येति चेन्न । स्वरूपसुखविषयीकरणलक्षणस्वरूपानुभवधर्मभूतकार्यानुकूलस्वरूपानुभवीया अनाद्यविद्या-कामकर्मादिरूपप्रतिबन्धकविघटनीयपदार्थान्तररूपशक्तेर्मयोपगमेन त्वया तथाऽनुपगमेन त्वत्पक्ष इव मत्पक्षे दोषाभावात् ॥

यत्तु ज्ञानक्रियाया अविहितत्वेनात्मनः तत्कर्मत्वमविरुद्धम् । विहितक्रियाकर्मत्वं प्रत्येवोत्पत्त्यादि (फलरूप-पा) फलचतुष्टयस्य व्यापकत्वेन तन्निवृत्त्याऽन्यत्र कर्मत्वस्य निवृत्तिरुचिता, नत्वविहितज्ञानक्रियाकर्मत्वस्यापि तन्निवृत्त्याऽनिवृत्तिः, तत्कर्मत्वं प्रत्युत्पत्त्यादिफलचतुष्टयस्य अव्यापकत्वादिति । तन्न । ज्ञानमात्रस्याविहितत्वेऽपि तद्विशेषभूतयोषिदालम्बनाग्निध्यानवत् तद्विशेषभूतयाग-पत्न्यवेक्षण-नमस्कारादिवच्च, परमात्मज्ञानविशेषस्य बन्धनिवृत्तिपर्यन्तस्य श्रवणादिसाक्षात्कारान्तस्य विधेयत्वसम्भवात् । अन्यथा ज्ञानरूपत्वापराधेन यागादेरप्यविधेयत्वप्रसङ्गात् ॥

ननु प्रमाणवस्तुतया प्रमाणज्ञानस्य पुरुषप्रयत्नाधीनत्वेन विधिविषयत्वायोग इति चेन्न । अलौकिकश्रेयःसाधनत्वस्यैव विध्यर्थतया, तस्य च मोक्षरूपालौकिकश्रेयःसाधनत्वस्य परमेश्वरसाक्षात्कारगतस्य मानान्तराप्राप्तत्वेन 'आत्मा द्रष्टव्यः'इत्यादि विधिना बोधनीयत्वात् । नच अविद्यानिवृत्तेर्मुक्तित्वे तां प्रति ज्ञानस्य हेतुताया लोक एवागतत्वेन तद् बोधार्थं शब्दानपेक्षणमिति वाच्यम् । परमेश्वरस्य परमात्मत्वेन[१] विष्णुशर्मात्मनः चैत्रात्मवत् अयोग्यत्वनिश्चयात् परमेश्वरसाक्षात्कारस्यैव सामग्रीबाधात् बाधेन संसारहेतुभूतपरमेश्वर विषयाज्ञाननिवृत्तिरूपमोक्षफलकसाक्षात्कारार्हता-व्यतिरेकनिश्चयेन तदर्थमलभमानं पुरुषं प्रति परमेश्वरस्य 'द्रष्टव्यः' इति मात्रवत् परमाप्ततया श्रुत्या तदर्हताया बोधनीयत्वात् ॥

(१) परमाप्तत्वेन इति पाठः स्यात् ॥

किञ्च पूर्वदृष्टविषयकभावनैव लौकिकप्रमाणेन तत्साक्षात्कारहेतुतयाऽवधारितः नत्वन्यथा -श्रुत-मत-ध्यात-धर्म-अधर्मादेरपि, साक्षात्कारप्रसङ्गात् । तथाच 'आत्मा द्रष्टव्यः' इति नित्यनिर्दोषतया परमाप्ततया श्रुत्या परमेश्वरस्य दर्शनार्हतामावेद्य तदुपायभूतभावनार्हतावेदनाय 'निदिध्यासितव्यः' इति परमेश्वरस्य भावनार्हतयाऽप्यवश्यम्बोधनीयत्वेन 'द्रष्टव्यो निदिध्यासितव्यः' इत्यनयोः श्रुत्योरवश्यमपेक्षा वाच्या । ।

अपि च लोकतो नाविद्याया आत्यन्तिकोच्छेदं प्रति विषयसाक्षात्कारस्य हेतुभावो दृष्ट इति श्रुत्या तद्बोधनमावश्यकम् । 'शुक्तिसाक्षात्कारेण तदज्ञानं नष्टमिति' तन्नाशहेतुत्वावधारणे सत्यपि तदात्यन्तिकनाशहेतुत्वस्य तत्रैव विषय उत्तरकालं तदज्ञानकृतभ्रमदर्शनेनानवधारणात् ।।

किञ्च साक्षात्पुरुषप्रयत्नसाध्यत्वं न विधिविषयत्वे तन्त्रम् । तथा सति करशिरःसंयोगादिरूपनमस्कारादेस्तथात्वाभावेनाविधेयत्वप्रसङ्गात् । किन्तु साक्षात्परम्परासाधारणयत्नसाध्यत्वमात्रम् । तच्च परमेश्वरसाक्षात्कारोऽप्यविशिष्टमिति कथं तस्याविधेयत्वम्? नचैतत्स्थलेऽतिप्रसक्तं कथं विधेयत्वे प्रयोजकमिति वाच्यम् । कृतिसाध्यस्य सत इष्टसाधनत्वं विधेयत्वे प्रयोजकमिति उपगमेनातिप्रसङ्गानवकाशात् । एतच्च अस्माभिः सप्रपञ्चं प्रतिपादितम् 'श्रवणविधिविलासे'(१)। तस्मात् ज्ञानविधिर्नेति परेषां वाचो युक्तिमात्रमिति स्थितम् ।।

ननु–

'स एतस्मिन्नदृश्येऽनात्म्येऽनिलयनेऽभयं प्रतिष्ठां विन्दते'
'अन्यदेव तद्विदितादथो अविदितादधि'
'येनेदं सर्वं विजानाति तं केन विजानीयात्'

इत्यादिश्रुत्या विधिकर्मत्वं निषिध्यते । एवं 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्यादिश्रुत्योपासनाकर्मत्वं निषिध्यते ।

(१) इदानीन्तन अनुपलब्ध विजयीन्द्रस्वामिभिः कृत स्वतन्त्रग्रन्थः ।

एवं –

'यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम्' (के-उ-२-३-३)
'न दृष्टेर्द्रष्टारं पश्येत् न मतेर्मन्तारं मन्वीथ'

इत्यादि श्रुत्या वेद्य-वेदितृ-वेदनादिभेदो निषिध्यते । एवं 'यत्रत्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादि श्रुत्या क्रियाकारकफलनिराकरणं क्रियते । तथाच परमेश्वरस्य ज्ञानोपासना कर्मत्वादिकमेव दुर्लभम् । विहितज्ञानादिक्रियाकर्मत्वं सुतरां दुर्लभमिति चेन्न । उदाहृतश्रुतीनां साकल्येनेश्वरस्य स्वेतरज्ञानादिगोचरत्वाभावपरत्वात् । अन्यथा –

'मनसैवानुद्रष्टव्यः',
'एषोऽणुरात्मा चेतसा वेदितव्यः'
'दृष्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः'
'तस्मिन् दृष्टे परावरे',
'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'

इत्यादि श्रुत्या तत्कर्मत्वादिविधिविरोधात् । नचोदाहृतश्रुतिभिर्निषेधार्थमेतच्छ्रुतयः तदनुवादकाः(श्रुतिरनुवादकाः-पा) । तथासति 'ब्राह्मणो न हन्तव्यः' इत्यादिश्रुत्या निषेधाय 'ब्रह्मणे ब्राह्मणमालभते' इत्यादिश्रुतिरपि ब्राह्मणहननाद्यनुवादिनीत्यापत्तेः । 'अन्यदेव तद्विदितात्' इति श्रुतेः तत्= ब्रह्मविदितात् साकल्येन ज्ञानात् प्रपञ्चात्, अन्यदेव । तत् कुत इत्यत आह 'अथो अविदितात्' इति । ल्यब्लोपनिमित्ता पञ्चमी । अविदितांशमादाय तत् ब्रह्म यतः अधि= अधिकम् इदं सर्वं प्रपञ्चम् । विजानाति = विशेषतः साकल्येन जानाति, तत् ब्रह्म केन विजानीयात्? विशेषतः साकल्येन जानीयात्, न केनाप्युपायेन परमात्मा ज्ञातुं शक्य इत्यर्थपरत्वात् । 'तदेव ब्रह्म त्वं विद्धि नेदम्' इति श्रुतेरपि इदं यत्= परमेश्वराधिष्ठानभूतं प्रतिमादिकं प्रत्यक्षसिद्धम्, उपासका= मन्दप्रज्ञा उपासते, तत् इदं= प्रत्यक्षसिद्धं प्रतिमादिकं, ब्रह्म, न, विद्धि, त्वं, किन्तु तदेव= तदधिष्ठितमेव, ब्रह्म, त्वं, विद्धि' इति अधिष्ठानभूतप्रतिमादितदधिष्ठितपरमात्मनोरभेदोपासनानिषेधपरत्वेनोपास्यतां च ब्रह्मणो निषेधतीयं श्रुतिरित्यभ्युपगमेन ब्रह्मोपास्यतो निषेधपरत्वाभावात् ॥

यद्वा इदम्= अधिष्ठानभूतप्रतिमादौ सन्निहितं यत्परमात्मरूपम्, उपासकः ज्ञानिन उपासते, तदेव ब्रह्म त्वं विद्धि नेदमधिष्ठानभूतप्रतिमादिकम् इत्यर्थपरैवेयं श्रुतिरिति ॥

तथाच स्मृतिः–

**'यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौमइज्यधीः ।**
**यस्तीर्थबुद्धिः सलिलेषु कर्हिचित् जनेष्वभिज्ञेषु स एव गोचरः'** इति ।

तथा च अनया श्रुत्या ब्रह्मण एवोपास्यत्वं सिद्ध्यति नतु तन्निषेध इति ।

'यस्यामतं तस्य मतं मतं यस्य न वेद सः' इति श्रुतेरपि 'येन ब्रह्म मन्मतिगोचर इत्युच्यते तस्य ब्रह्म न मतं= न मतिगोचरः, येन ब्रह्म मन्मतिगोचरो नेत्युच्येत । गुणपूर्णत्वात् तस्य ब्रह्म मतम् । तेन तद्विषये अहङ्कारस्य त्यागात् मतं = ब्रह्म तन्मतिगोचर इत्यर्थः ॥

अत एव 'सः ब्रह्म न वेद' इत्याह । एवं 'अविज्ञातं विजानताम्' इति वाक्यस्याप्यर्थो द्रष्टव्यः । तथाच अनया ब्रह्मणो महामहिमत्वमेव सिद्ध्यति नतु वेद्यवेदितृवेदनादिनिषेधः । तथा सति वेद्यवेदितृवेदिनां वेदान्तानां निर्विषयत्वेन प्रेक्षावदुपादेयत्वरूपारम्भणीयत्वमेव न स्यादिति । नचैवं ब्रह्मणो ज्ञानविषयत्वे स्वप्रकाशत्वमेव न स्यात् स्वप्रकाशत्वं च तस्यावेद्यत्वमेव वाच्यम् । 'अन्यदेव तद्विदिताद्' इति श्रुत्या ब्रह्मणो वेद्यान्यत्व(वेदाद्यन्यत्व-पा) प्रतिपादनादिति वाच्यम् । तथा सति ब्रह्मणो दोषजन्यज्ञानगोचरत्वे नृशृङ्गादिवदलीकत्वापत्तेः ॥

नचोदाहृतश्रुतिबलेन तस्यावेद्यत्वमावश्यकमिति वाच्यम् । 'तुरीयं तत्सर्वदृक् सदा' 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुत्या ब्रह्मणोऽपि स्वरूपानुभवगोचरत्वस्य दुर्वारत्वात् । नच 'सर्व'शब्दस्य ब्रह्मव्यतिरिक्तत्वेन सङ्कोचे मानमस्ति । अन्यथा 'अथोऽविदितादधि' (के-उ-१-४) इत्युत्तरवाक्येन अधिकं यथा भवति तथा तद् ब्रह्म अविदितादन्यदेव' इति प्रतिपादनेनावेद्यत्वरूप-त्वदभिमतस्वप्रकाशत्वस्यापि श्रुतिनिषिद्धत्वापत्तेः । नच स्वेनैव स्वस्य वेद्यत्वे वृत्तिविरोधः दृश्यत्वापत्त्या शुक्तिरूप्यादिवत् मिथ्यात्वं च स्यादिति वाच्यम् । स्वविषयत्वसत्यत्वाऽऽवेदकश्रुतिबाधितत्वेनानयोः त्वदुद्भावितानुमानयोरनवतारात् ॥

किञ्च 'विदितात् तदन्यदेवे'ति सावधारणश्रुतिबलेन अवेद्यत्वलक्षणस्वप्रकाशत्वाङ्गीकारे सावधारणाविदितादन्यत्वावेदकश्रुतिबलेनावेद्यान्यत्वरूपस्वप्रकाशत्वमपि घटादिवत् ब्रह्मणः किन्न स्यात्? नच विरोधादेकत्र तदुभयं न सम्भवतीति वाच्यम् । अस्यानुमानतया तदुभयावेदकश्रुत्यपेक्षया दुर्बलत्वात् । किञ्च श्रौत'स्वयं ज्योतिःशब्द'प्रतिपाद्यतावच्छेदकत्वेन स्वीकार्यं स्वप्रकाशत्वं स्वविषयत्वरूपमेव वाच्यम् । लाघवात् नत्ववेद्यत्वरूपं गौरवात् । 'ज्ञानमात्रं स्वविषयं ज्ञानत्वात्' 'सर्वं ज्ञानं गुणेत्यादिशब्दज्ञानवद्' इत्यनुमानबलादपि, स्वविषयत्वरूपमेव तदङ्गीकार्यम् । नच तत्र ज्ञानत्वमप्रयोजकम् । ज्ञानस्य स्वविषयत्वे लाघवेन ज्ञानत्वस्यैव तन्त्रत्वात् ॥

किञ्च घटव्यवहारवत् घटज्ञानव्यवहारवच्च 'घटं जानामि' इति घटानुव्यवसायव्यवहारस्यापि व्यवहर्तव्यज्ञानसाध्यत्वावश्यम्भावेन तत्र ज्ञानान्तराङ्गीकारात् तत्राप्येवम् इत्यनवस्थानात् दूरे गत्वा कस्यचित् ज्ञानस्य स्वविषयत्वेन स्वप्रकाशत्वमावश्यकमिति । नच ज्ञानान्यव्यवहारे तद्विषयकज्ञानस्यातिप्रसङ्गपरिहाराय विशेषसामग्रीत्वेनापेक्षितत्वेऽपि ज्ञानत्वेन व्यवहारत्वेन तत्तज्ज्ञानत्वेन तत्तज्ज्ञानविषयकव्यवहारत्वेनेति कार्यकारणभावाङ्गीकारादेव सर्वसामञ्जस्यात् ज्ञाने ज्ञानविषयत्वमपि न व्यवहारहेतुतावच्छेदकतया स्वीकार्यम् गौरवादिति वाच्यम् । वर्तमानज्ञानस्थले अस्य प्रकारस्य कथञ्चित् वक्तुं शक्यत्वेऽपि अतीतज्ञानव्यवहारस्थले तत्ज्ञानविषयकज्ञानं विना तद्व्यवहारस्यानिर्वाहेण तत्रैव ज्ञानव्यवहारे ज्ञानविषयकज्ञानस्य हेतुत्वकल्पनात् ज्ञानमात्रव्यवहारेप्यवैरूप्याय ज्ञानमात्रगोचरज्ञानस्यावश्यकत्वात् ।

नच विषयाङ्कितज्ञानव्यवहारे ज्ञानविषयकज्ञानापेक्षायामपि न ज्ञानमात्रव्यवहारे ज्ञानज्ञानं हेतुः किन्तु अज्ञातमेव प्राथमिकज्ञानमिति वाच्यम् । ज्ञानमात्रव्यवहारस्य योग्यानुपलब्धिबाधितत्वात् । अपि चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं हि परस्य स्वप्रकाशत्वमभिमतम् । इदं च ब्रह्मणि कदापि नास्तीति तस्य श्रौतं स्वप्रकाशत्वं साधुसमर्थितम् । आसंसारं तस्याज्ञानावृतत्वेनेदानीमपरिच्छिन्नानन्दस्वरूपे तादृशज्ञानस्वरूपे च आपरोक्ष्यव्यवहाराभावात् । सविलासमज्ञानानिवृत्तौ तु मुक्तिरेव जातेति तदा सुतरां तदभावाच्च । तस्मात् स्वप्रकाशत्वं स्वविषयत्वरूपमेवाङ्गीकार्यं नान्यदिति स्थितम् । किञ्च

भवतु स्वप्रकाशत्वमात्मनो यत्किञ्चिद्वेदान्तजन्यज्ञानविषयत्वे, तत् कुतो न स्यात्, अविरोधात् । नचात्मनो ज्ञानकर्मत्वातिरिक्तं ज्ञानविषयत्वं नास्त्येव तच्चोदाहृतश्रुतिभिर्निषिध्यत इति वाच्यम् । श्रुतिनिषिद्धप्रपञ्चवत् ज्ञानादिक्रियाकर्मत्वस्याप्यात्मन्युपपत्तेः ॥

किञ्च ब्रह्मविषयकं ज्ञानं त्वयाऽवश्यं स्वीकार्यम् । अन्यथा स्वसमानविषयकविरोधिज्ञानस्यैव(ज्ञानात्-पा) आत्मविषयकसंसारहेत्वज्ञानस्योच्छेदाभावप्रसङ्गात् । किञ्च वेदान्तानां न साक्षात् ब्रह्मविषयता किन्तु प्रतिपत्त्यनुबन्धितया, प्रतिपत्तेरात्मविषयत्वे सैव कुतः इति निर्विषयत्वेन तेषामनारम्भणीयत्वप्रसङ्ग इत्युक्तम् । तस्मान्निषेधश्रुतीनामस्मदुक्त एवार्थ इति । आत्मनो ज्ञानकर्मत्वं श्रौतमनिवार्यमिति सिद्धम् । ।

ननूक्तरीत्या आत्मनो भवतु ज्ञानं प्रत्युपासनाक्रियाकर्मत्वं प्राप्तिकर्मत्वं च न सर्वथा युज्यते[१] । **'तद्यथा हि निर्लयनी वल्मीके मृता प्रत्यस्ताशयीत एवमेवेदं शरीरं शेते अथाऽयम् अशरीरो मृतो प्राणो ब्रह्मैव तेजस एवेति स चक्षुरचक्षुरिव सकर्णो कर्ण इव सा वागवागिव स मनोऽमना इव स प्राणोऽप्राण इवेति इदं सर्वं यदयमात्मा यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् तत् केन कं जिघ्रेत् तत् केन कं विजानीयात् विज्ञातारमरे केन विजानीयात् अयमात्मा ब्रह्म'** इति 'आत्मानं चेद्विजानीयादयमस्मीति पुरुषः, किमिच्छन् कस्य कामाय शरीरमनुसंहरेत्' इति च बह्व्यः श्रुतयो जीवस्य ब्रह्मात्मकत्वमाचक्षते । नचैकस्यैव प्राप्तिक्रियाकर्तृत्वं तत्कर्मत्वं च सम्भवति विरोधादिति चेन्न । 'तद्यथा हि निर्लयनी' इति श्रुतिर्मुक्तस्य शारीराभिमानाभावेन तत्प्रयुक्तदुःखाभावं सूचयन्ती ब्रह्मसादृश्यमावेदयतीति तद्बलेन जीवस्य ब्रह्माभिन्नत्वासिद्धेः । अत एव 'अथाऽयमशरीरो मृतो प्राण' इति तत्र श्रुतौ ब्रह्मसादृश्यप्रयोजनकधर्मोपन्यासपूर्वकं 'ब्रह्मैव तेज एव' इति जीवस्य ब्रह्मसादृश्यप्रतिपादनम् । 'न ह्ययं माणवकः सिंह एव' इत्याप्तवाक्यात् माणवकस्य सिंहसादृश्यादन्यत् प्रतीयते ॥

एतावांस्तु विशेषः । पौरुषेयवाक्यस्थले सादृश्यप्रयोजको भेदः प्रत्यक्षादिमानान्तरेणैव सिद्धः । प्रकृतेतु प्रत्यक्षादिमानान्तरेण 'द्वासुपर्णा' 'तयोरन्यः' 'अन्यदेव तद्विदिताद्'

(१) प्राप्तिकर्मत्वं च न सर्वथा न युज्यते इति ताळपत्रस्थ पाठः ॥

इत्यादि श्रुत्या च सिद्ध इति 'स चक्षुरचक्षुरिव' इत्यादिश्रुतिश्च ज्ञानिनो 'निगृहीतेन्द्रियग्रामत्वम् आहेति' न तद्बलेन जीवेश्वराभेदसिद्धिः । तस्यापदार्थत्वादवाक्यार्थत्वाच्च ॥

'यत्र त्वस्य सर्वमात्मैवाभूत्' इति श्रुतेरपि सर्वस्य ब्रह्मात्मकत्वाभावप्रतिपादनपरत्वावसायात् । अन्यथा सर्वस्य ब्रह्मात्मकत्वप्रयुक्तसाधनव्यतिरेकप्रयुक्तदर्शनादिइष्टाभावापादनमुखेन सर्वस्याब्रह्मात्मकत्वप्रतिपादनपरत्वावधारणानुपपत्तेः । न तस्या अपि श्रुतेः सर्वस्य ब्रह्मात्मकत्वमर्थः ।

'आत्मानं चेद्विजानीयादयमहमस्मीति' श्रुतेरपि, आत्मानं= स्वात्मानं चेद्यदि विजानीयात्= बुध्येत्, कं स्वात्मानं, विजानीयात्' इत्यतः तत् प्रकारप्रदर्शनार्थमाह- 'अयमहमस्मि' इति । अयं= मुक्त इत्यर्थः । इदानीं 'मुक्तोऽहमस्मि' इति स्वात्मानं= पुरुषो जीवः, यदा निश्चिनुयात् तदा । किं लौकिकं प्रयोजनमिच्छति ? न किमपि कृतार्थत्वात् । कस्य कामाय= कस्मै प्रयोजनाय, शरीरं= स्वशरीरम्, अनुसञ्चरेत् । 'पूर्वं मुक्त्यर्थमेव बहु तप्तं पुनस्तप्तं कुर्यात् उत्तरसिद्धौ किं पूर्वेणे'ति न्यायादित्यर्थपरत्वेन ततोऽपि जीवब्रह्माभेदासिद्धेरिति ॥

किञ्च मुक्तस्य प्राकृतं शरीरमेव नास्ति इति स किं शरीरमनुसञ्चरेत् तथा च श्रुतिः 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति । नच संसारस्य अनित्यत्वे एव मानाभावात्, सशरीरत्वस्यैव च संसारत्वात् न तपोविषयाभावप्रयुक्तो वक्तव्यः, किन्तु प्रयोजनाभावप्रयुक्त एव वाच्य इति वाच्यम् । 'न ह वै शरीरस्य प्रियाप्रिययोरपहतिरस्ति' इति श्रुत्या यावत् शरीरसत्त्वं सुखदुःखाभावाभावाऽवेदनात् संसारानित्यतायाश्च 'अशरीरं वाव सन्तम्'इत्यादिश्रुत्यैव सिद्धत्वादिति । तस्मात् जीवेश्वरभेदेनैता अपि श्रुतयो मानम् । तथा च नेश्वरस्य जीवकर्तृकप्राप्तिक्रियाकर्मत्वे बाधकं किमपि नास्तीति सिद्धम् ॥

ननु यदुक्तम् अनाद्यविद्यावृतत्वेन प्रतिबद्धत्वान्नेदानीमनवच्छिन्नस्वरूपानन्दो न प्रकाशत इति पक्षे दूषणम् । तत् नास्मत् पक्षेऽस्ति । अविद्यायाः आवरकत्वेन तत्र प्रतिबन्धकताया एवास्माभिरनभ्युपगमात् । अविद्याप्रतिबन्धकत्वाऽन्यथानुपपत्त्या तद्विघटनीय किञ्चिद्धर्मभूतस्वरूपानुभवनिष्ठपदार्थान्तररूपशक्तिरविद्यानिवृत्त्यनन्तरं मुक्तिदशायामङ्गीकार्ये-

त्यनिष्टप्रसङ्गानवकाशात् । नचैवमविद्याया आवरकत्वेन प्रतिबन्धकत्वानभ्युपगमे संसार-दशायामपि अनवच्छिन्नस्वरूपानन्दप्रकाशापत्तिरिति वाच्यम् । इष्टापत्तेः । नचैवमविद्याभ्यु-पगमोऽप्यर्थः ।

**'तम आसीत् तमसा गूळमग्रे'**
**'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'**
**'अजामेकां लोहितशुक्लकृष्णाम्'**

इत्यादिश्रुतिभिर्जगत्संसारदुःखादिहेतुत्वेन सिद्धायास्तस्यादुरपह्नवत्वादिति चेन्न । अस्य पक्षस्यातीव दुष्टत्वात् । तथा हि । यथावदिदानीमात्मस्वरूपस्य स्फुरणाङ्गीकारे तस्य 'अस्ति प्रकाशते' इति व्यवहारागोचरत्वप्रसङ्गः । जगदुपकार्यस्य शुक्तिरूप्यादिवदनध्यासत्व-प्रसङ्गश्च । नह्यधिष्ठानस्य यथावत् प्रकाशेऽध्यासोऽनुपाधिको दृष्टचरः । 'तम आसीत् तमसा गूळम्' इति 'अन्यद्युष्माकमन्तरं बभूव' 'अनृतेन हि प्रत्यूढाः' इति श्रुतिष्वात्मस्वरूपस्या-वृतत्वाद्यनुक्तिप्रसङ्गश्च । 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' (भ-गी-५-१५) इत्यादि स्मृतावात्मस्वरूपज्ञानस्यावृतत्वानुक्तिप्रसङ्गश्चेति । तस्मादनाद्यविद्याया आत्मस्वरूपाऽ-वारकत्वेन प्रतिबन्धकत्वं दुर्वारम् ॥

तत्प्रतिबन्धकत्वान्यथाऽनुपपत्त्या तन्निवृत्तिदशायां मुक्तौ संसारदशायां तद्विघटनीय-स्वरूपानुभवधर्मभूतपदार्थान्तररूपधर्माविर्भावः तत्प्रयोज्यकार्यं च दुर्वारम् । नचेष्टापत्तिः । त्वया निष्प्रपञ्चनिर्विशेषचैतन्यस्य स्वरूपेणावस्थानं मुक्तिरित्युपगमात् ॥

एतेन अविद्यकार्यानुकूल किञ्चिद्धर्मविघटकत्वेन वा कारणीभूताभावप्रतियोगित्वेन वा न क्वापि कार्ये सम्पादनीये प्रतिबन्धिका । अपितु अनर्थभूतसंसारदुःखादिप्रपञ्चा-पादिकोपेयते । तत्त्वज्ञानात् तन्निवृत्तिश्च अनर्थसंसारदुःखात्यन्तिकोच्छेदरूपस्वतःपुरुषार्थ-हेतुतया सम्पद्यते । 'हेतूच्छेदे पुरुषव्यापारादिति' तदुपगमात् । नचैवमिदानीं संसारदशाया-मप्यनवच्छिन्नस्वरूपानन्दप्रकाशप्रसङ्गः । इष्टापादनात् । प्रकाशत एवेदानीमपि किन्तु संसारदुःखौत्कट्यानुभवात् । प्रकाशमानोऽप्यनवच्छिन्नस्वरूपानन्दो न प्रकाशत इवास्तीति निरस्तम् ।

'स एको मानुष आनन्दः' इत्यादिना 'स एको ब्रह्मण आनन्दः' इत्यतः प्राक् मनुष्याद्यानन्दानामियत्तामुक्त्वा ततः परं 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति ब्रह्मानन्दस्येयत्तानवच्छिन्नत्वमुक्त्वा 'आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचन' इत्यादिना ब्रह्मानन्दज्ञानिनः श्रुत्या सांसारिकभयाभावरूपफलसङ्कीर्तनादिदानीमपि तादृश-ब्रह्मानन्दप्रकाशे सांसारिकदुःखमात्रस्यैव अभावप्रसङ्गात् । नच स्वरूपभूत-आनन्दप्रकाशो न अज्ञान-तत्कार्यभूतसांसारिकदुःखविरोधी किन्तु वेदान्तश्रवणाद्यापादितवृत्तिरूपतज्ज्ञान-मेव तद्विरोधीति वाच्यम् । वृत्तेर्जडत्वेन त्वयैव तस्याज्ञानत्वानभ्युपगमात् । लाघवेन ज्ञानत्वेनैव अज्ञानविरोधिता वाच्या नतु साधनविशेषजन्यापरोक्षज्ञानत्वेन गौरवात् ॥

किञ्च स्वरूपापरोक्ष्यस्याज्ञानाविरोधित्वे स्वरूपस्फुरणांशेऽप्यज्ञानप्रसङ्गः । नचैवम् । जगदान्ध्यप्रसङ्गात् । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुत्या प्रपञ्चप्रकाशस्य ब्रह्मप्रकाशरूपत्वाऽऽवेदनात् । किञ्च अज्ञानस्य ब्रह्मविषयकत्वाभावे कथं वृत्तिरूपब्रह्मापरोक्षज्ञानेनापि तदज्ञाननिवृत्तिः? ज्ञानाज्ञानयोः समानविषयतयैव विरोधा-वधारणात् । नचाज्ञानस्य स्वप्रकाशत्वेन नित्यसिद्धात्मस्वरूपविषयत्वमुपपद्यते । तद्विषयत्वं हि अज्ञानस्य तद्विषयकप्रकाशप्रतिबन्धकत्वेन वा तज्जन्य-तद्विषयकव्यवहारप्रतिबन्धकत्वेन वा वाच्यम् । आद्यपक्षेऽपि तद्विषयकस्वरूपप्रकाशप्रतिबन्धकत्वेन वा तद्विषयवृत्तिरूप-प्रकाशप्रतिबन्धकत्वेन वा तस्य तत् स्यात् । तत्राद्यं सर्वथा न युक्तम् । परेण स्वरूप-प्रकाशस्य वृत्तिविरोधेन स्वरूपविषयत्वानभ्युपगमात् । द्वितीयपक्षोऽप्यनुपपन्नः । अज्ञान-रूपप्रतिबन्धकसत्वेनात्मविषयकवृत्तेः कदाऽप्यनुदयप्रसङ्गात् । एवं तद्विषयकम् 'अस्ति प्रकाशते' इति व्यवहारप्रतिबन्धकत्वेन अज्ञानस्य आत्मस्वरूपविषयत्वमयुक्तं द्रष्टव्यम् ॥

वेदान्तप्रतिपाद्यानवच्छिन्नानन्दस्वरूपे ब्रह्मणि 'अस्ति प्रकाशते' इति अप-रोक्षव्यवहारस्य परपक्षे कदाऽप्यसम्भवादित्युक्तम् । तथाच अज्ञानमात्मस्वरूपविषयकमित्येव अयुक्तम् । एवं च सति कथं तस्य समानविषयकवृत्तिरूपापरोक्षज्ञानेनापि निवृत्तिरभ्युपगन्तुं शक्येति च विद्मः ॥

किञ्च 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतिप्रतिपन्नापरोक्षैकरस-ब्रह्मचैतन्याभेदाध्यासं विना

वृत्तेरनन्यस्य[१] वा परोक्ष्यमेवायुक्तम् । तथाच तदध्याससम्पत्त्यर्थं शङ्खे पीतत्वाध्यासं प्रति श्वैत्याज्ञानवत् वृत्तावपरोक्षाभेदाध्यासं प्रति ब्रह्मचैतन्ये अपरोक्षाभेद-अज्ञानमवश्यं स्वीकार्यम् । नचैवं सति वृत्तावपरोक्षाभेदाध्यासः सुघटः प्रत्युत परोक्षाभेदस्यैव वृत्तावध्यासापत्तेरिति ॥

एतेन ज्ञानाज्ञानयोः न समानविषयत्वेन विरोधः किन्तु मूषकमार्जारयोरिव समानाधिकृतत्वेनेति निरस्तम् । घटज्ञानेन घटाज्ञानस्यापि निवृत्तिप्रसङ्गाच्चैत्रात्मनि तयोः समानाधिकृतत्वात् । तस्मात् ज्ञानाज्ञानयोर्विरोधे समानविषयत्वं समानाधिकृतत्वं चावश्यकम् । समानविषयत्वं च अज्ञानस्योक्तरीत्याऽनवच्छिन्नानन्दात्मस्वरूपे दुर्घटम् ॥

किञ्च इदानीमपि वेदान्तप्रतिपाद्यात्मस्वरूपस्य यथावत् स्फुरणे तत्र 'नास्ति न प्रकाशते' इत्यपरोक्षव्यवहाराभावप्रसङ्गः(इत्यपरोक्षव्यवहारप्रसङ्ग-पा) । प्रत्युत 'अस्ति प्रकाशते' इत्यपरोक्षव्यवहारप्रसङ्गः । नहि व्यवहर्तव्यापरोक्षज्ञाने सति व्यवहारजिहीर्षायां च सत्यां व्यवहारविलम्बो दृष्टचरः । तस्मादविद्याया आवरकत्वेनैव कार्यानुकूलशक्तिविघटकत्वेनैव प्रतिबन्धकत्वं वाच्यमिति सिद्धम् ॥

नन्वविद्याया अन्यस्य वा मण्यादेर्न कार्यानुकूलशक्तिविघटकत्वेन प्रतिबन्धकत्वमुपपादनीयम् । शक्तावेव पदार्थान्तररूपायां मानाभावात्, किन्तु कारणीभूतक्लृप्ताभावप्रतियोगित्वेनैव तदुपपादनीयमिति चेन्न ।

**'परास्य शक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञान बलक्रिया च'**

**'विचित्रशक्तिः पुरुषः पुराणो नचान्येषां शक्तयस्तादृशाः स्युः'**

**'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।**
**यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः'** इत्याद्यागमानाम्,

'अयं पिण्डीभूतो वह्निर्दाहानुकूलातीन्द्रियादिनिष्ठधर्मसमवायी दाहकारणत्वादात्मवत्' इत्याद्यानुमानानां मण्यादेर्दाहप्रतिबन्धकत्वान्यथानुपपत्तेश्च शक्तौ मानत्वात् ।

---

(१) वृत्तेरन्यस्य वा इति पाठः स्यात् ॥

नच मण्यादिरूपप्रतिबन्धकाभावेनैव दाहादिकार्यमात्रोपपत्तेः अनुमानादेरप्रयोजकता । 'परास्य शक्तिः' इत्याद्यागमानामपि प्रतिबन्धकाभावमादाय सालम्बनत्वमिति न ततोऽतिरिक्तशक्तिसिद्धिरिति वाच्यम् । श्रुतौ शक्तेः स्वाभाविकत्वकथनाद् 'विविध-विचित्र'-शब्दाभ्यामतिशयानन्त्यकथनात् 'सर्गाद्याभावशक्तयः' इत्याद्यागमेन तस्या भावरूपत्वकथनात्, 'नचान्येषां शक्तयस्तादृशाः स्युः' इति श्रुत्या परमेश्वरशक्तेस्तदितरशक्त्यपेक्षया बहुवैलक्षण्यप्रतिपादनाच्च । प्रतिबन्धकाभावस्य श्रौतस्मार्तशक्तिपदार्थत्वाङ्गीकारे तदयोगात् । नच 'सर्गाद्या भावशक्तयः' इति वाक्ये 'सर्गाद्याश्च ता अभावशक्तयश्चेति' विग्रहसम्भवात् शक्तेरभावरूपत्वं शाब्दमेवेति वाच्यम् । नञानुमानिकत्वेन 'भावशक्तयः' इति पदविभागस्य प्रत्यक्षत्वेनास्यैव पदविभागस्य आनुमानिकपदानुमानापेक्षया प्रबलत्वात् । नचातिरिक्तशक्तिपक्षे तस्याः पदार्थान्तरत्वेन तत्स्वीकारे गौरवम्, उभयसम्प्रतिपन्नप्रतिबन्धकाभावेनैव कार्यनिर्वाहादिति वाच्यम् । उत्तेजकसमवधानदशायां प्रतिबन्धकाभावं विनाऽपि कार्यदर्शनेन व्यभिचारेण तस्य हेतुत्वायोगात् । नच तत्राप्युत्तेजकविरहरूपविशेषणाभावप्रयुक्तस्तदभावावच्छिन्न-मण्यादिप्रतिबन्धकाभावोऽस्तीति न व्यतिरेकव्यभिचार इति वाच्यम् । विशेषणाद्यभावेनैव विशिष्टाभावप्रतीतिव्यवहारोपपत्तेस्तदतिरिक्तविशिष्टाभावाङ्गीकारे गौरवात् । प्रतीति व्यवहारयोरन्यथासिद्धत्वात् ॥

किञ्चात्यन्ताभावस्य प्रतियोगिसामानाधिकरण्यमयुक्तम् । अन्यथा भावाभावयोर्विरोधो दत्तजलाञ्जलिरेव स्यात् । नचाभावस्य प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिनैव समानदेशता विरुद्धा न प्रतियोगिमात्रेणेति वाच्यम् । लाघवेन अभावस्य प्रतियोगिनश्च प्रतियोगितदभावत्वेनैव समानदेशे विरोधस्य स्वीकार्यत्वात् । नचैवं संयोगेन सम्बन्धान्तरेण प्रतियोतिम् अति[१]प्रतीतिसिद्धो घटाद्यभावो न स्यादिति वाच्यम् । इष्टापादनात् । तत्र विवक्षितविवेके सम्बन्धाभावस्यैव प्रतीतिव्यवहारालम्बनत्वात् । अनन्यथासिद्धप्रतीतिव्यवहारयोरेव वस्तूपगमे प्रमाणत्वादित्याद्युक्तमधस्तात् ॥

अपि च यथा हिंसाया अधर्मसाधनत्वमुत्सर्गतः प्राप्तं यागीयहिंसायाः शास्त्रेणापोद्यते ।

(१) प्रतियोगिं प्रति प्रतीति सिद्धो इति पाठः स्यात् ॥

तथा कारणेषु कार्यानुकूला शक्तिरुत्सर्गतः प्रामाण्यादिसमवधानेनापोद्यते । नहि तावता मण्याद्यभावो दाहादिकार्ये कारणमित्यभ्युपगन्तुं शक्यते । तथासति अपवादभूतस्य विहित-हिंसात्वस्याभावोऽप्यधर्मे कारणं स्यात् । अत एव ज्ञानसामान्यसामग्रीतः प्रमेत्युत्सर्गो दोषसमवधानेन आपोद्यत इत्यङ्गीकारेपि दोषाभावो न प्रमाहेतुरिति स्वीकारः ।।

अपि च न नियतपूर्ववर्तित्वमात्रेण प्रतिबन्धकाभावस्य कार्यं प्रति हेतुत्वम् अभ्यु-पगमार्हम् । तथा सति यागध्वंसस्यापि स्वर्गं प्रति हेतुत्वाभ्युपगमापत्तेः । किन्तु अनन्यथा-सिद्धनियतपूर्ववर्तित्वेनैव प्रतिबन्धकाभावश्च शक्त्यकुण्ठनसम्पादनेनैव अन्यथासिद्ध इति । तस्य प्रकृतकार्यं प्रति हेतुत्वं युक्तम् । अपि च मण्याद्यभावाङ्गं न तत्तदभावत्वेन हेतुता अननुगमात् । प्रतिबन्धकाभावत्वेन अनुगममङ्गीकृत्य कारणत्वाङ्गीकारे च अन्योन्याश्रयः । शक्तिम् अनभ्युपगच्छता कारणीभूताभावप्रतियोगित्वमेव प्रतिबन्धकत्वमिति स्वीकारात् । दाहादिकार्ये मण्याद्यभावस्य प्रतिबन्धकाभावत्वेन कारणत्वम् अगृहीत्वा मण्यादेः प्रतिबन्धक-ताया एव गृहीतुम् अशक्यत्वात् ।।

यद्यपि मण्याद्यभावानां मण्यभावत्त्वादिना कारणताग्रहोत्तरकालं मण्यादिषु प्रतिबन्धक-त्वव्यवहारालम्बनतया कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमिति स्वीकारे अन्योन्या-श्रयानवकाशः । तथाऽपि मण्यादिसमवधाने मण्यभावत्त्वाद्यवच्छिन्नमण्याद्यभाव एव अस-म्भवी । अभावस्य प्रतियोगिदेशे स्वविरोधिप्रतियोगिसत्त्वेनैव विरोधावधारणात् ।

'मणिरत्रास्ति तदभावः' इत्यबाधितप्रत्ययेन तत्र मण्यभावस्यैवासिद्धेश्च । उत्तेजकदशायां 'तद् विरहविशिष्टो मणिरत्र नास्तीति' यद्यप्यनुभवव्यवहारौ स्तः । तथाऽपि तावुत्तेजक-विरहविषयत्वेन अन्यथासिद्धाविति न तद्बलेन तत्र मण्याद्यभावानामेव सिद्ध्यति । एवञ्च तत्र मण्याद्यभावस्य दुर्लभत्वेन तद्धेतुताऽभ्युपगम एव सर्वथा न युज्यते ।।

एतेन प्रतिबन्धकाभावकूट एव कारणमित्युपक्रमात् कारणतावच्छेदकावच्छिन्न-यत्किञ्चित् सत्त्वप्रयुक्तं कार्यं दुर्वारमिति न शक्तिवाद्युक्त्यवकाश इति निरस्तम् ।। मण्यादि-प्रतिबन्धकसत्त्वस्थले तदभावगन्धस्यैवायोगेन प्रतिबन्धकाभावकूटस्यातीवायोगात् । किञ्च प्रतिबन्धकाभावकूटसकारणत्वस्वीकारापेक्षया मण्यादियत्किञ्चित्समवधानविघटनीयाभाव-

नियताभावप्रतियोगियत्किञ्चिद्भावरूपधर्मस्वीकारः एव क्लृप्तकारणानां करतळानलसंयोगादीनामेवोचितः ॥

किञ्च कारणीभूताभावप्रतियोगित्वं न प्रतिबन्धकपदप्रतिपाद्यानवच्छेदकमङ्गीकर्तुं शक्यम् । घटध्वंसं प्रति कारणीभूतनाशप्रतियोगिनोः कपाल-कपालद्वयसंयोगयोरपि तं प्रति प्रतिबन्धकत्वप्रसङ्गात् । किन्तु संसर्गाभावत्वावच्छिन्न कारणताकाभाव प्रतियोगित्वमेव तथेति वाच्यम् । तच्चायुक्तम् । शक्तिनाशकत्वस्यैव लघुभूतस्य प्रतिबन्धकपदप्रतिपाद्यतावच्छेदकत्वात् । यद्यपि 'नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजे'त्यभ्युपगमात्, नित्यकारणगतशक्तिः प्राभाकरादिमते निरुक्तं प्रतिबन्धकत्वम् असम्भवि । तथाऽपि तथाऽस्माभिरनभ्युपगमात् । नास्माकं मते काप्यनुपपत्तिः । पराधीनविशेषावाप्तिलक्षणोत्पत्तेर्नित्यपदार्थेष्वप्यस्माभिरुपगमादिति दिक् ॥

तथा च अविद्यादेः स्वरूपसुखविषयीकरणलक्षण-कार्यानुकूलस्वरूपानुभवनिष्ठ-शक्त्युत्पत्तिप्रतिबन्धकत्वमुक्तरूपमप्रत्यूहमिति । नचैवं परमते सम्भवति । परेण मोक्षदशायां कार्यमात्रस्यैवानभ्युपगमेन तदनुकूलाविद्यानिवृत्त्यादिप्रयोज्यशक्तेः अभ्युपगमे कारणस्यैव अभावादिति । तथा च अविद्यायाः, संसारदुःखस्य वा, मोक्षे कार्यस्यैवाभावेन तदनुकूलशक्तेरप्यभावात् विघटकत्वरूपप्रतिबन्धकत्वमेव दुर्लभमिति । संसारदुःखस्याभावस्य न अनवच्छिन्नस्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया तत्सुखशेषत्वं परोक्तं सर्वथाऽयुक्तमिति ।

अपि च संसारदुःखात्यन्तिकाभावस्तया स्वरूपसुखशेष इति नाङ्गीकार्यम् । सत्यामविद्यायां संसारदुःखात्यन्तिकाभावस्यैव असम्भवात् । अविद्यायां निवृत्तायां संसारदुःखात्यन्तिकाभावस्य तन्निवृत्तिर्नान्तरीयकतया तत्सम्पाद्याभिव्यक्त्यभावेन च संसारदुःखस्य स्वरूपसुखाभिव्यक्तिप्रतिबन्धकत्वे मानाभावेन प्रतिबन्धकाभावतया तत्सुखशेषत्वायोग इत्युक्तम् ॥

किञ्च कतिपयदुःखाभावस्य जाग्रत्-स्वप्नयोः सत्त्वेन तदाऽप्यनवच्छिन्नस्वरूपसुखाभिव्यक्तिप्रसङ्गः । अपि च सुप्तिदशायां सांसारिकदुःखमात्राभावस्य सत्त्वेन अनवच्छिन्नब्रह्मानन्दाभिव्यक्तिप्रसङ्गः ॥

एतेन संसारदुःखमात्राभावो न तदभिव्यक्तिहेतुः । जीवब्रह्मभेदभावसहितः सत्यपि परास्तम्[१] । तथा सत्यावश्यकजीवब्रह्मभेदाभावस्यैव तदभिव्यञ्जकत्वापत्त्या संसारदुःखाभावस्य तदभिव्यञ्जकत्वापातेन तच्छेषत्वापत्तेः ॥

एतेनैव अविद्योच्छेद एव अनवच्छिन्नस्वरूपानन्दाभिव्यक्तिप्रतिबन्धकाभावतया तत्सुखशेषः । नचात्र पक्षे पूर्वोक्तपक्ष इव तत्प्रयोज्याभिव्यक्त्यसम्भवः । आत्यन्तिकसंसारदुःखोच्छेदकस्यैव तदभिव्यक्तिरूपत्वोपगमादिति निरस्तम् । तथाऽप्यात्यन्तिकसंसारदुःखोच्छेदस्य तादृशस्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया तादृशस्वरूपसुखशेषत्वमित्यस्य अनिर्वाहात्॥

किञ्च शेष्युपकारं कुर्वत एव तच्छेषत्वं नान्यथा । नह्यविद्यानिवृत्तिर्वा, आत्यन्तिकसंसारदुःखोच्छेदो वा, अनवच्छिन्ननिर्विशेषब्रह्मस्वरूपानन्दे कञ्चनोपकारं कुरुते । एवं च कथं तयोः तच्छेषत्वमिति न विद्मः । एतेन जन्यसुखशेषत्वं दुःखाभावस्येति निरस्तम् ।

दुःखे सत्यपि सुहृद्दर्शनप्रियापरिष्वङ्गादिकृततरतमभावापन्न-सुखविशेषस्योत्पत्तिदर्शनेन तदुत्पत्तौ वा, तदभिव्यक्तौ वा, दुःखस्य प्रतिबन्धकत्व एव मानाभावेन तद्भावस्य तदुत्पत्त्यभिव्यक्तिप्रतिबन्धकाभावतया तत्सुखशेषत्वानुपपत्तेः ॥

एतेन 'जन्यं सुखमेव नास्ति । विषयैरपि स्वरूपसुखमेव अभिव्यज्यत' इति निरस्तम् । जन्यसुखाभावे प्रेक्षावतां तत्तदुत्कृष्टसुखोद्देशेन तत्तत्साधनविशेषसम्पादनेनोत्कृष्ट-तत्तत्सुखाननुभव प्रसङ्गात् । नहि स्वरूपसुखे परेणोत्कर्षः स्वीक्रियते । तस्य निर्विशेषत्वेन स्वतः परतो वा उत्कर्षासम्बन्धित्वात् । तस्मात् दुःखाभावः सुखशेष इत्ययुक्तम् । नच बहुदुःखध्वंसोऽपि निन्दितग्राम्यधर्मेण क्षणिकोत्कृष्टसुखसम्पादनदर्शनाद् दुःखाभावस्य सुखशेषत्वमिति वाच्यम् । कस्यचित् सिद्धबहुग्रामाधिपत्यस्य क्षुद्रप्रभोः स्वापेक्षया प्रबलात् कुतश्चित् राज्ञः सकाशादपराधप्रयुक्तशृङ्खलाबन्धनादिहेतुकदुःखप्रसक्तौ तदाधिपत्यप्रयुक्तबहुदुःखं त्यक्त्वा ततो निर्गमनदर्शनात्, सुखस्यापि दुःखाभावशेषत्वप्रसङ्गात् । तस्माद् विनिगमनाविरहात् सुखवत् दुःखाभावोऽपि नान्यशेष इत्युभयोरपि तुल्यवत् स्वतःपुरुषार्थत्वं दुर्वारम् ॥

---

(१) भेदाभावसहितः सत्यपि इत्यादि परास्तम् इति पाठः स्यात् ॥

यत्तु ''दुःखाभावोऽपि मुक्तौ न स्वतःपुरुषार्थः । सर्वत्र दुःखाभावस्यस्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया सुखशेषत्वात् सुखस्यैव स्वतः पुरुषार्थत्वमन्येषां सर्वेषामपि तच्छेषत्वमिति सुखसाधनता ज्ञानस्यैव प्रवर्तकत्वं सम्भवति । दुःखाभावस्यापि स्वतःपुरुषार्थत्वं प्रकल्प्य तत्साधनप्रवर्तकसङ्ग्रहायेष्टसाधनताज्ञानस्येच्छाविषयत्वप्रवेशेन गुरुघटितस्य प्रवर्तकत्वकल्पनमयुक्तमि''ति, तन्न । उक्तरीत्या सुखस्येव दुःखाभावस्यापि स्वतःपुरुषार्थत्वावश्यम्भावेनान्यशेषत्वे प्रमाणसिद्धे दुःखाभावसाधनताज्ञानस्यापि प्रवर्तकत्वात् । सुखसाधनताज्ञानस्यैव प्रवर्तकत्वं सम्भवतीत्यस्यैव असिद्धत्वात् । तदुभयसाधनप्रवर्तकसङ्ग्रहायेष्टसाधनता ज्ञानस्येच्छाविषयत्वप्रवेशेन गुरुघटितस्यापि प्रवर्तकत्वस्य अवश्यमङ्गीकार्यत्वात् गौरवस्य प्रामाणिकत्वादिति सर्वमनवद्यम् ॥

।। इति दुःखाभावस्य चित्सुखोक्त सुखशेषत्वनिरसनं स्वतः पुरुषार्थत्वसमर्थनञ्च ।।

केचित्तु अनवच्छिन्नानन्दः प्रत्यग्रूपतया नित्यप्राप्तो यद्यपि, तथाऽपि अविद्या नित्यप्राप्तमप्यनवच्छिन्नमानन्दमावृत्य तद्विपरीतमनर्थं प्रदर्शयति । संसारदशायां तमसत्कल्पं कुरुत इत्यकृतार्थतायां प्राप्तायां तस्यां चाविद्यायां तत्त्वज्ञानेन निवृत्तायां निरस्तनिखिलानर्थविक्षेपः, स्वकण्ठगतविस्मृतकनकाभरणवदनवच्छिन्न[१] प्रत्यग् ब्रह्मानन्दः प्राप्यत इवेति स्वीकारादौपचारिकी तस्य प्राप्तव्यतेत्याहुः । तन्न । 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतेरमुख्यार्थत्वप्रसङ्गात् । नहि अस्मद्रीत्या मुख्यार्थत्वसम्भवे श्रुतेरुपचरितार्थत्वाश्रयणमुचितम् ।।

किञ्च स्वप्रकाशतया नित्यसिद्धब्रह्मानन्दे अविद्यावरणशक्तिरुक्तरीत्या अकिञ्चित्करी । किञ्च आवरणशक्तिमत्या अविद्यायानवच्छिन्नब्रह्मस्वरूपानन्द आव्रियत[२] इति कोऽर्थः? न तावदन्धकारेण चाक्षुषज्ञानेनोत्पत्तिप्रतिबन्धवदविद्याया तादृशानन्दानुभवोत्पत्तिः प्रतिबध्यते । तादृशानन्दानुभवस्याप्यनाद्यनन्तब्रह्मात्मस्वरूपत्वेन चाक्षुषरूपादिज्ञानवत् साधनपारतन्त्र्याभावेन प्रतिबाध्यत्वाऽयोगात् । नाऽप्यस्मद्रीत्या अन्यत्परेण स्वीकृतम् । येन अविद्यायाः कार्यानुकूलकिञ्चिद्धर्मविघटकत्वेन प्रतिबन्धकत्वमुपपन्नं स्यात् । नच पराभिमत-

---

(१) कण्ठगतचामीकर न्यायः सर्वसिद्धान्तसारासारविवेके १०३पुटे विजयीन्द्रतीर्थैः उदाहृतम् ।।

(२) आनन्द आप्रियत इति ताळपत्रस्थ पाठः ।।

मुक्तिदशायां किञ्चित्कार्यं तदनुकूलस्वरूपानुभवधर्मभूतशक्त्युत्पत्तिर्वा अविद्यानिवृत्तिप्रयोज्या परेणाभ्युपगम्यते । नचानर्थापादकत्वं स्वरूपावरणमकृत्वा अविद्याया उपपद्यते । स्वरूपावरणं चायुक्तम्, इत्युक्तमिति यत्किञ्चिदेतत् ॥

अन्ये तु 'संसारदशायां नास्ति न प्रकाशते' इति व्यवहारयोग्यत्वरूपाज्ञानावरणप्रयुक्तस्य 'मम निरतिशयानन्दो नास्ती'ति प्रत्ययस्य सर्वसिद्धत्वात् तदालम्बनभूतः कश्चित् ब्रह्मानन्दभावः काल्पनिको यावदविद्यामनुवर्तते । अविद्यानिवृत्तौ च निवर्तते कुतस्तन्मूलत्वादिति 'यस्मिन् सत्यग्रिमलक्षण' इत्यादिलक्षणानुरोधेन तादृशब्रह्मानन्दस्य मुख्यमेव प्राप्यत्वमित्याहुः । तदपि न ।

अविद्यया विषयावरणं विना मम निरतिशयानन्दो नास्तीति प्रत्ययालम्बनभूतब्रह्मानन्दभावसाध्यासत्त्वरूपकाल्पनिकत्वस्यैवायोगात् । नचावरणं स्वरूपस्फुरणतिरस्कारादन्यत् सुवचम् । नच तत्तिरस्कारः सम्भवतीत्युक्तमेव ॥

किञ्च स्वप्रकाशतया नित्यसिद्धे ब्रह्मानन्दे स्फीतालोकमध्यवर्तिसमनस्कघटतया अपरोक्षभूते घट इव 'नास्ति न प्रकाशते' इति व्यवहारयोग्यत्वरूपाज्ञानावरणमेवायुक्तमिति कुतस्तत् प्रयुक्तो मम निरतिशयानन्दो नास्तीति प्रत्ययः स्यात् । येन तदालम्बनभूतः कश्चिद् ब्रह्मानन्दभावः काल्पनिको यावदविद्यामनुवर्तत इति स्यात् ॥

अपरे तु अवेद्यस्यापुरुषार्थत्वात् संसारदशायां सदप्यनवच्छिन्नसुखमापरोक्ष्याभावात् न पुरुषार्थः । नच स्वरूपज्ञानेन अपरोक्ष्यं तदाऽप्यस्ति । तस्य सर्वदा स्वरूपसुखस्याभिन्नत्वात्, वृत्तिज्ञानेनापरोक्ष्यं तु न मुक्तावपि इति वाच्यम् । नहि स्वव्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यम् । घटावच्छिन्नचैतन्याभिव्यक्तौ तदभिन्नघटगन्धस्याप्यापरोक्ष्यापत्तेः । किन्तु अनावृतार्थस्य तदभेदः । तथाच अनावृतत्वांशस्तत्वसाक्षात्कारे सत्येवेति निरतिशयसुखापरोक्ष्यस्य पुरुषार्थस्य विद्याप्राप्यत्वमुक्तमित्याहुः ॥ तदपि न । अविद्यायास्तत्प्रकाशत्वेन नित्यसिद्धे स्फुरणांशे आनन्दागोचरावरणस्य कर्तुमशक्यत्वेन अनावृतानन्दांशस्यानावृतस्फुरणांशभेदः सर्वदाऽस्तीति शब्दप्रयोज्य-तत्त्वसाक्षात्कारं विनैव अनवच्छिन्नब्रह्मानन्दापरोक्ष्यप्रसङ्गात् ॥

ततश्च 'अस्ति प्रकाशते' इति तादृशानन्दगोचरव्यवहारप्रसङ्गः । नच 'नास्ति न प्रकाशते' इति व्यवहारयोग्यत्वरूपमावरणमविद्यायाः कर्तुं शक्यत इति वाच्यम् । उक्तरीत्या स्वप्रकाशसिद्धानन्दस्फुरणसत्वेन 'नास्ति न प्रकाशते' इति व्यवहारयोग्यत्वरूपावरणं प्रत्यपि अविद्यायाः प्रयोजकत्वानुपपत्तेः । प्रत्युत'अस्ति प्रकाशते' इति तादृशानन्दगोचर-व्यवहारापत्तेः ।।

एतेन स्फुरणांशानन्दांशयोः कल्पितभेदस्य सत्त्वात् स्फुरणांशइवानन्दांशस्यानावृतत्वा-भावात् स्वभावत आनन्दस्यानावृतापरोक्षसंविदभेदसत्वेऽपि न तादृशव्यवहार इति निरस्तम् । अनावृतापरोक्षसंविदभेदस्यैव विषयापरोक्ष्यं प्रति लाघवेन प्रयोजकत्वात् तस्य चानवच्छिन्नब्रह्मानन्दांशेऽपि सत्त्वेन 'नास्ति न प्रकाशते' इति व्यवहारयोग्यत्वरूपाज्ञाना-वरणस्यैवानुपपत्तेः ।।

एतेन स्फुरणांशानन्दांशयोः कल्पितभेदोऽस्ति इत्येतदपि प्रत्यूढम् । अनावृतापरोक्षसंविदभेदे भेदकल्पनाया एवायोगात् । नच घटावच्छिन्नापरोक्षचैतन्याभिव्यक्तिदशायां तादृशचैतन्या-भिन्नतया योऽपरोक्षो घटस्तदभिन्नत्वे सत्यपि तद्घटगन्धो नापरोक्षो दृश्यते, अतस्तादृश-चैतन्याभेदमात्रमर्थापरोक्ष्ये प्रयोजकं न किञ्चनावृतत्वमप्यर्थस्येति वाच्यम् । घटात् गन्धयोर्भेदेन दृष्टान्तस्यैवासम्प्रतिपत्तेः । अन्यथा घट-तद्गन्धयोरभेदे प्रतिनियतेन्द्रिय-ग्राह्यत्वाभावप्रसङ्गात् ।।

किञ्च घटरूपवत् घटगन्धस्य घटाभिन्नत्वे घटावच्छिन्नचैतन्याभिव्यक्तिदशायां तच्चैतन्या-भिन्नघटाभिन्नरूपवत् तद्गन्धोऽपि तथात्वाविशेषेण अपरोक्षः किन्न स्यात्? तथा च स्फुरणांशानन्दांशयोर्वास्तवाभेदे स्वप्रकाशत्वेन स्फुरति सत्यज्ञानप्रयुक्तावृतत्वांशकल्पित-तद्भेदयोरेवासम्भवात् अनावृतत्वांशस्तत्वसाक्षात्कारे सत्येव भवति नान्यथेति परोक्तेरन-वकाशात् । निरतिशयसुखापरोक्ष्यस्य पुरुषार्थस्य परोक्तविद्याप्राप्यत्वमेवायुक्तमिति दिक् ।।

इतरेतु 'अस्तु स्वव्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यम् । तथाऽप्यज्ञानमहिम्ना जीवभेदवत् चिदानन्दभेदोऽप्यध्यस्त इति संसारदशायां पुरुषान्तरस्य पुरुषान्तर-चैतन्यापरोक्ष्यवदनवच्छिन्नसुखापरोक्ष्यमपि नास्ति । अज्ञाननिवृत्तौ तु चिदानन्दभेद-प्रविलयात् तदापरोक्ष्यमिति तस्य विद्यासाध्यत्वमित्याहुः । तदपि न ।।

वास्तवभेदस्फुरणे सत्यज्ञानस्यैव असम्भवेन जीवभेदस्य चिदानन्दभेदस्य च अध्यास-व्यापकाभावेन तयोरध्यस्तत्वस्यैवायोगात् । तद्दृष्टान्तेन चिदानन्दभेदस्याध्यस्तत्वसाधनानुपपत्तेः । संसारदशायां पुरुषान्तरचैतन्यस्य पुरुषान्तरचैतन्याद्वास्तवभेदसत्वेन तदपरोक्ष्याभावात् । तद् दृष्टान्तावष्टम्भेनाप्यनवच्छिन्न परमात्मसुखापरोक्ष्याभावसाधनानुपपत्तेश्च ।

अत एवाज्ञाननिवृत्तौ तु चिदानन्दभेदप्रविलयात् तदापरोक्ष्यमिति तस्य विद्या साध्यत्वमिति प्रत्युक्तम् ॥ स्वप्रकाशत्वेन नित्यसिद्धचिदानन्दात्मके ब्रह्मस्वरूपे अज्ञानस्यैव अयोगेन तन्निवृत्त्यर्थं परेण विद्याया एव अनपेक्षणीयत्वात् । अत एव अनवच्छिन्नानन्दापरोक्ष्यं विद्यासाध्यमिति पराङ्गीकारः प्रत्यूढः ॥ ब्रह्मानन्दस्य 'यत्साक्षादपरोक्षाद्ब्रह्म' इत्यादिश्रुत्या अपरोक्षस्वप्रभावत्वेन प्रतिपन्नब्रह्मस्वरूपमात्रत्वेन तस्य विद्यासाध्यत्वानुपपत्तेरिति ॥

॥ इति ब्रह्मानन्दस्य परोक्तव्याप्यत्वप्रकारभेदनिरसनम् ॥

अपि च जीवस्य विद्योदये सति मुक्तिर्भवन्तीति किं, शुद्धचैतन्यमात्ररूपेणावस्थान-रूपा भवति? किं वा ईश्वरभावापत्तिरूपा? आद्येऽपि किं 'शुद्धचैतन्यमात्र'शब्देन आनन्द-रूपत्वतद्धर्मकत्व-ज्ञानधर्मकत्वव्यवच्छेदोऽभिप्रेतः? किं वा जडरूपत्व-तद्धर्मकत्वव्यवच्छेदः तत्वानन्दरूपत्व-तद्धर्मकत्व-ज्ञानधर्मकत्वव्यवच्छेदः । नाद्यः । मुक्तेः अपुरुषार्थत्वापत्तेः । न द्वितीयः । आनन्दरूपत्वमात्रेण पुरुषार्थत्वादर्शनात् ।

'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति'
'आनन्दं ब्रह्मणो विद्वान्'

इत्यादिश्रुत्यनुसारेण 'सुखमेव मे स्यात्' 'अहं सुखी स्याम्' इतीच्छानुरोधेन 'अहं ज्ञानी स्यामिति' इच्छानुरोधेन च 'अहं सुखं स्याम्' 'ज्ञानं स्याम्' इति कदापीच्छाया अदर्शनेन सुखज्ञानयोः स्वसम्बन्धित्वेनैव पुरुषार्थत्वदर्शनेन मुक्तावप्यानन्दज्ञानधर्मत्वयोरावश्यकत्वेन सविशेषत्वप्रसङ्गात् । नचैवं निर्विशेषत्वश्रुतिविरोधः । श्रुतिमात्रस्य अध्ययनविद्ध्यापादित-पुरुषार्थपर्यवसायित्वावधारणात् । 'साक्षी चेता केवलो निर्गुणश्च' इत्यादि श्रुतेरपि पुरुषार्थ-पर्यवसायित्वनिर्वाहाय यत् सुखज्ञानादिरूप-पुरुषार्थभूतधर्मनिषेधरूपत्वस्यानभ्युपेयत्वात्, जडरूपत्वराहित्य-तद्धर्मकत्वराहित्यनिष्प्रपञ्चत्वरूपाभावभूतधर्माणां निषेधे श्रुतीनां व्याहत-

भाषित्वप्रयुक्ताप्रामाण्यपरिहाराय अतन्निषेधपरत्वस्याकामेनाप्यङ्गीकर्तव्यतया भावरूपधर्मानादाय सविशेषत्वस्य दुर्वारत्वाच्च । आनन्दज्ञानरूपतयाऽवस्थानं मुक्तिरित्यभ्युपगमेऽपि मुक्तेः पुरुषार्थत्वनिर्वाहायेच्छापूर्वकं तदनुभवितुः कस्यचिदवश्यमङ्गीकार्यतया चैतन्यमात्ररूपेणावस्थानासम्भवाच्च । नहि ज्ञानानन्दादौ तत्त्वेन स्वात्मानं प्रतीव पुरुषार्थौ ।

'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः'

इत्यादिश्रुतिषु 'चिन्मात्र'शब्दस्य साक्षित्व-अहंत्व-सदाशिवत्व-भोग्यत्वादिविलक्षणत्व-विशिष्टे एव प्रयोगदर्शनम् । 'मात्र'शब्देन धर्ममात्रव्यवच्छेदस्य श्रुतिविरुद्धतया तन्निषेधस्यानभ्युपेतव्यत्वाच्च । नचाभावरूपधर्मा ब्रह्ममात्रतया न तत्सविशेषत्वापादक इति वाच्यम् । ज्ञानादिसाधनपरतन्त्राणामविद्यानिवृत्त्याद्यभावानामनाद्यनन्तभूतब्रह्ममात्रत्वायोगात् । तत्कृत-ब्रह्मसविशेषत्वस्य तादवस्थ्यात् । नच –

'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते'
'प्रपञ्चोपमशिवः शिवोऽद्वैतः'

इत्यादिश्रुत्या जन्याविद्याद्यभावानां ब्रह्मस्वरूपरूपत्वाऽऽवेदनात् नोक्तदोष इति वाच्यम् । अविद्यानिवृत्त्यादेर्ज्ञानसाध्यत्वाऽऽवेदकश्रुत्यबाधाय 'प्रपञ्चोपशमम्' इति श्रौतपदे बहुव्रीहेरेवाश्रयितव्यत्वात् । अन्यथा –

'स एव अधस्तात् स एवोपरिष्टात् स एवेदं
सर्वमात्मैवाधस्तादात्मैवोपरिष्टादात्मैवेदं सर्वं इदं सर्वं यदयमात्मा'
'ब्रह्मवैदममृतं पुरस्तात्'
'सर्वं ह्येतत् ब्रह्म'

इत्यादिसावधारणश्रुत्या प्रपञ्चमात्रस्य ब्रह्ममात्रत्वाऽवेदनात् प्रपञ्चसृष्टि-स्थितिलयादिप्रतिपादनपरश्रुतीनां तत्परत्वेन प्रामाण्याभावप्रसङ्गात् । प्रत्युत अनाद्यनन्तब्रह्ममात्रत्वेन श्रुत्याऽऽवेदितस्य प्रपञ्चस्य ब्रह्मवदुत्पत्त्यादेर्बाधितत्वात् तस्य तत्प्रतिपादकानाम् 'आत्मनः आकाशः सम्भूतः' इत्यादीनामप्रामाण्यप्रसङ्गात् । एवं च 'यतो वा इमानि भूतानि जायन्ते' इति प्रतिपादितं जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणमलीकमेव स्यात् ॥

किञ्चोदाहृतश्रुत्या भावाभावात्मकप्रपञ्चमात्रस्य ब्रह्ममात्रत्वाऽवेदनादभावरूपधर्मवदेव भावरूपधर्मैरपि ब्रह्मणो न निर्विशेषत्वहानिरिति सुवचम् ॥

किञ्च किं बहुना सकललोकसिद्धविलक्षणानन्तपदार्थतद्गोचरज्ञानेच्छाफलपर्यन्तैहिकामुष्मिकप्रवृत्तिनिवृत्तीनां प्रमाणाभासतत्फलभूतभ्रम-प्रमातत्प्रयोजकदोष-तदभावानां च सर्वेषां ब्रह्ममात्रत्वेनानाद्यनन्तत्वप्रसङ्गः । तस्माद् अद्वैतवादे कथं? कथमपि न ब्रह्मणो निर्विशेषचैतन्यत्वनिर्वाह इति चैतन्यमात्ररूपेणावस्थानमेव जीवस्य मुक्तिरित्ययुक्तमिति ॥

एतेन जीववादे विद्योदये सत्युपाधिविलयात् अपेतजीवभावस्य शुद्धचैतन्यमात्ररूपेणावस्थानमेव मुक्तिः । तथाहि । तत्र तदेकाज्ञानकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयात् निर्विशेषचैतन्यरूपेणैवावस्थानमित्युपगमादिति निरस्तम् ।

नापि द्वितीयः । जीव इवेश्वरोऽपि प्रतिबिम्बविशेष इति पक्षे मुक्तस्य तादृशेश्वरभावापत्तेर्मुक्तित्वप्रसङ्गात् तथा त्वयाऽनभ्युपगमात् ॥

ननु एकजीववादे बद्धमुक्तव्यवस्थासत्त्वात् यस्य कस्यचिद्विद्योदये तदविद्याकृतप्रपञ्चविलय एव भवति, नतु बद्धपुरुषान्तरस्य तदविद्याकृत-जीवेश्वरविभागादि-प्रपञ्चविलयहेतुविद्याऽनुदयात् । तथा च तदविद्याकृतो जीवेश्वरविभागादिप्रपञ्चोऽनुवर्तत एव ॥

यदुक्तं जीवइवेश्वरोऽपि प्रतिबिम्बविशेष इति पक्षे मुक्तस्य तादृशेश्वरभावापत्तिः मुक्तिः स्यादिति । तन्न । विष्णुमित्रादि-जीववदीश्वरस्यापि प्रतिबिम्बविशेषत्वेन मुक्तस्य प्रतिबिम्बभूतजीवान्तरत्वापत्त्यसम्भववत् प्रतिबिम्बविशेषभूतेश्वरभावापत्त्यसम्भवेन बिम्बभूतशुद्धचैतन्यभावापत्तेरेवाभ्युपगमात् । लोके अनेकोपाधिकेष्वेकस्य प्रतिबिम्बे सति तत्रैकोपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनैवावस्थानदर्शनात् प्रतिबिम्बान्तरत्वापत्त्यदर्शनाच्च । प्रकृते तथैव कल्पनात् कल्पनाया दृष्टानुसारित्वात् । अत एवानेकजीववादे अवच्छेदपक्षो नादृतः । यदवच्छेदेन मुक्तिस्तदवच्छेदेनान्तःकरणान्तरसंसर्गे मुक्तस्य पुनरपि बन्धापत्तिरिति दोषस्य तत्रावतारात् ॥

किञ्च प्रतिबिम्बविशेषभूतेश्वरभावापत्तिं मुक्तस्य वदता जीवरूपप्रतिबिम्बान्तरत्वापत्तिः किमिति नापाद्यते । अविशेषात् । उपाधिविगमे प्रतिबिम्बस्य बिम्बरूपेणैवावस्थानमुचितं

दर्शनादिति यदि, तदा प्रतिबिम्बभूतेश्वरभावापत्तिरपि मुक्तस्य नापादनीया तथा अदर्शनादिति समम् । नह्युपाधिविलये प्रतिबिम्बस्य प्रतिबिम्बान्तरत्वापत्तिर्दृष्टचरीति चेन्न । [१]जीववदीश्वरस्य प्रतिबिम्बविशेषत्वे एव मानाभावात् । एवं जीवेश्वरौ प्रतिबिम्बभूतं शुद्धचैतन्यमस्ति इत्यत्र न किञ्चिन्मानं पश्यामः । प्रत्युत –

'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्नो बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा'।।

'एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'।।

'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते'

इत्यादिश्रुतिभिः देव-अज-आत्म-भूतात्म-इन्द्रादिशब्दानां योगरूढिभ्यां मुख्यार्थस्य विशिष्टस्योपहितस्य वा चैतन्यस्य बिम्बत्वमावेद्यत इति शुद्धचैतन्यस्य कथं बिम्बत्वलाभः? 'यथा ह्ययं ज्योतिरात्मा विवस्वान्' इत्यादिदृष्टान्तानुसारेण सविशेषचैतन्यस्यैव बिम्बत्वौचित्याच्च।।

**'निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम्'** इत्यादिश्रुतेरनुमानमात्रगम्यत्वनिषेधपरत्वाभिमतचैतन्ये अप्रमाणत्वात् । 'अथ तस्याऽयमादेशो नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमलक्षणमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इत्यादिश्रुतेरपि ब्रह्मणो लोकसिद्धचेतनज्ञानविलक्षणज्ञानादिरूपविशेषवत्वप्रतिपादनपरत्वेन तस्य निर्विशेषत्वेऽप्रमाणत्वाच्च ।

अत एव तत्रैव श्रुतौ 'अलक्षणमचिन्त्यम्' इत्यादिना लोकविरुद्धासाधारणधर्मवत्वप्रतिपादनम् । अत एव साकल्येन अचिन्त्यत्वाव्यपदेश्यत्वादिप्रतिपादनम् । अन्यथा 'अथ तस्याऽयामदेशः' इत्याद्युपक्रमस्य ब्रह्मव्यपदेशत्वाभावप्रसङ्गात् । 'निदिध्यासितव्यः' इत्यादिना ब्रह्मणश्चिन्तार्हत्वाप्रतिपादनप्रसङ्गाच्च ।।

---

(१) .. न जीववदीश्वरस्य इति ताळपत्रस्थ पाठः ।।

## ।। अथ प्रसङ्गात् कार्योपाधिरयं जीवेति श्रुत्यर्थकथनम् ।।

एतेन –

**'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।**
**कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते'**

इति श्रुतिरेवेश्वरस्य प्रतिबिम्बविशेषत्वे शुद्धचैतन्यस्य बिम्बत्वे च प्रमाणमिति निरस्तम् ।।

तस्यापदार्थत्वादवाक्यार्थत्वाच्च । जीवः कः? ईश्वरश्च कः? इति शिष्यप्रश्ने अयम् अपूर्णबोधत्वेनानुभवसिद्धः कार्योपाधिः= कर्तुमर्हं प्रयोजनमुपाधिः प्रवृत्तिहेतुर्यस्य स तथोक्तः, तथाविधः सन् जीव इत्युच्यते । कारणम् ऐहिकामुष्मिकं मोक्षरूपं च यत् कार्यं= प्रयोजनं सर्वाभिलषितं तत्प्रति कारणं सुकृतसहकृतं स्वेच्छारूपम् उपाधिर्जगत्सृष्ट्यादिगोचर-प्रवृत्तिहेतुर्यस्य स तथोक्तः, तथाविधः सन् पूर्णबोधोऽशेषविश्वविषयकज्ञानवान् चेतनविशेष-ईश्वर इत्युच्यते । य ईश्वर इत्युच्यते 'पूर्णबोधः सः' इति शिष्यशिक्षणार्हता इतरकार्य कारणताम्= उक्तप्रयोजनसाधकतां, त्वा= त्वां, हित्वा, च, अव= अवताद् इत्यर्थपरतया आचार्यप्रतिवचनरूपत्वेनऽस्याः श्रुतेः तदुक्तार्थपरत्वासिद्धेश्च । अवेत्यवतादित्यर्थे पुरुष-व्यत्ययो द्रष्टव्यः ।।

किञ्चात्र श्रुतौ 'कार्यकारण'शब्दाभ्याम् अन्तःकरणमाययोर्ग्रहणमेव वाच्यम् ।।

**'मन एव मनुष्याणां कारणं बन्धमोक्षयोः'**
**'अस्मान्मायी सृजते विश्वमेतत्'**
**'मायिनन्तु महेश्वरम्' 'मायां तु प्रकृतिं विद्यात्'**

इत्यादिश्रुतिवाक्यपर्यालोचनया तयोरेवावश्यकत्वलाभात् उपाधित्वं चोच्यमानं तयोर्न तावत् दर्पणवदुपाधित्वं वक्तुं शक्यम् । तथा सति 'दर्पणे मुखमितिवदन्तःकरणेऽपूर्णबोधः मायायां पूर्णबोधश्चेति' प्रतीतिव्यवहारप्रसङ्गात् । नहि कस्यापि तथाप्रतीतिव्यवहारौ अनुभवसिद्धौ । नापि घटादिवदुपाधित्वम् । तथासति 'घटाकाशोऽयं मठाकाशोऽयं' इतिवत् 'अन्तःकरणा-पूर्णबोधः मायापूर्णबोधोऽयम्' इति च प्रतीतिव्यवहारप्रसङ्गात् । नापि जपाकुसुमवदु-पाधित्वम् । तयोस्तथा सति 'लोहितः स्फटिक' इतिवदिदं लोहितमितिवच्चान्तःकरणमपूर्णबोधः

अन्तःकरणम् इति वा, माया पूर्णबोधः मायेऽयम् इति वा प्रतीति व्यवहारप्रसङ्गादिति । तस्मादुपाधित्वमस्यागमनमध्ययनोपाधिकम् इत्यादाविवोक्तरीत्या अस्मदुक्तमेवात्र विवक्षितमिति यत्किञ्चिदेतत् ॥

तथा च श्रुतयः । 'न तस्य कार्यं करणं च विद्यते' 'पुण्येन पुण्यं लोकं नयति' इत्येवमाद्याः । सूत्रं च 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति ॥

॥ इति प्रसङ्गात् कार्योपाधिरयं जीवेति श्रुत्यर्थ कथनम् ॥

एतेनैव ईश्वरस्य जीववत् प्रतिबिम्बविशेषत्वान्मुक्तस्य न तद्भावापत्तिरापादनीया । उक्तरीत्या आपादकाभावात् किन्तु बिम्बभावापत्तिरेव । तत्र बिम्बस्थानीयं शुद्धचैतन्यमेवेति शुद्धचैतन्यमात्ररूपेणावस्थानरूप तद्भावापत्त्यापादने च इष्टापत्तिरिति परास्तम् ॥

शुद्धचैतन्यमात्ररूपेणेति मात्रशब्दव्यच्छेद्यस्योक्तरीत्या विकल्प्य दूषणीयत्वात् । प्रतिबिम्बो जीव एव बिम्बस्थानीयः ईश्वरः घटाकाशमठाकाशानुस्यूताकाशवदुभयानुस्यूतं शुद्धचैतन्यमिति । अनेक जीववादिनामेव पक्षे तु मुक्तस्य यावत् सर्वमुक्तिसर्वज्ञत्वसर्वकर्तृत्व-सर्वेश्वरत्व- सत्यकामत्वादिगुणक-परमेश्वरभावापत्तिरिष्यत एव । यथाऽनेकदर्पणेष्वेकस्य मुखस्य प्रतिबिम्बे सत्येकदर्पणापनये तत् प्रतिबिम्बो बिम्बभावेनावतिष्ठते नतु मुखमात्ररूपेण तदानीमपि दर्पणान्तरसन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात् । तथा एकस्य ब्रह्मचैतन्यस्यानेकेषूपाधिषु प्रतिबिम्बे सत्येकस्मिन् प्रतिबिम्बे विद्योदयेन तदुपाधिविलये तत्-प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यम्भावात् ॥

नच मुक्तस्याविद्याभावात् सत्यकामत्वादिगुणविशिष्टसर्वेश्वरत्वानुपपत्तिरिति वाच्यम् । तदविद्याभावेऽपि तदानीं बद्धपुरुषान्तराविद्यासत्वात् । नहीश्वरस्येश्वरत्वं सत्यकामत्वादिगुणवैशिष्ट्यं च स्वाविद्याकृतम् । तस्य निरञ्जनत्वात्, किन्तु बद्धपुरुषान्तराविद्याकृतमेव तत्सर्वमिति किमनुपपन्नम् ॥

क्रमेण सर्वोपाधिविलये सति प्रतिबिम्बभूतजीवबिम्बभूतेश्वरानुस्यूतचैतन्यमात्ररूपेणावस्थानस्येश्वरोऽपि प्रतिबिम्बविशेष इति पक्ष इवास्मिन्नपि पक्षेऽनपायादिति चेन्न । जीवेश्वरयोर्बिम्बप्रतिबिम्बभावे जीवेश्वरयोश्चैतन्यानुस्यूतचैतन्ये च मानाभावात् । दर्पणजलाद्युपाधौ

निमग्नस्य मुखादेः प्रतिबिम्बस्यैवादर्शनेन व्यापकतया अविद्याद्युपाधिनिमग्नस्य शुद्धचैतन्य-स्येश्वरचैतन्यस्य वा बिम्बवत्वस्यैव अयोगात् ।।

किञ्च रूपादिहीनस्येश्वरचैतन्यस्य रूपादिरहिताविद्याद्युपाधौ प्रतिफलनमदृष्टमेव कल्प-नीयम् । नच व्यापकस्य रूपादिहीनस्यापि आकाशशब्दादेः साभ्रनक्षत्रस्य जलाद्युपाधौ रूपादिहीनगुहाद्युपाधौ च प्रतिफलनं दृश्यत इति वाच्यम् । साभ्रनक्षत्रस्याकाशस्य परि-च्छिन्नत्वेन रूपवत्त्वेन च तद् दृष्टान्तेनेश्वरचैतन्यस्य प्रतिफलनसाधनानुपपत्तेः । नच आकाशस्य रूपवत्वे मानाभावः । 'आकाशे नीलिमोदेति' इति श्रुतेरेव तत्र मानत्वात् । नच आकाशस्य रूपवत्वे निकटदेशेऽपि रूपोपलब्धिप्रसङ्गः । नैकट्यदोषादेव तत्र तदनुप-लब्ध्युपपत्तेः । अत एवाऽकाशे दूरदेशे रूपोपलब्धिरनुभवसिद्धा । दोषस्य च प्रकृतकार्य-प्रतिबन्धकत्वं सर्वसिद्धम् । नचोदाहृतश्रुतिः प्रत्यक्षप्राप्तरूपानुवादिनी । प्रत्यक्षस्य सम्भा-वितदोषतया आकाशरूपवत्वानवधारणरूपत्वात् । अन्यथा यथाकथञ्चित्प्राप्तत्वेन श्रुते-रनुवादकत्वे निरुपाधिप्रेमास्पदत्वलिङ्गप्राप्तात्मानन्दानुवादिनी 'नित्यं विज्ञानमानन्दं ब्रह्म' इति श्रुतिः किन्न स्यात्?।।

किञ्च रूपादिहीनाकाशादेरपि उपाधौ प्रतिफलने दिक्कालादेरपि नियामकाभावेनाकाशवदेव तत्र तत्रोपाधौ प्रतिफलनप्रसङ्गः ।।

एतेन रूपादिहीनशब्दस्य तद्रहितगुहायां प्रतिशब्ददर्शनात् द्रव्यप्रतिफलने रूपादि-मत्वमेव प्रयोजकमिति निरस्तम् । प्रत्युक्तिवत् प्रतिसूर्यवच्च प्रतिशब्दस्यापि प्रत्यग्रोत्पन्न-कार्यान्तरत्वेनाप्रतिबिम्बत्वात्, अन्यथा शब्द-प्रतिशब्दयोर्बिम्बप्रतिबिम्बभावे शब्दं प्रति प्रतिशब्दस्याभिमुख्यनियमप्रसङ्गः ।।

अपि च शुद्धचैतन्यमीश्वरचैतन्यं वा बिम्बः, तदतिरिक्तचैतन्यं तु प्रतिबिम्बमिति पक्षद्वयमप्ययुक्तम् । तथाहि । तत्राद्यपक्षे, प्रतिबिम्बदृष्टशुद्धचैतन्यमित्यास्थेयम् । द्वितीये तद्दृष्टेश्वरचैतन्यमिति । अचेतने प्रतिबिम्बदृष्टत्वस्यैवादर्शनेन चैतन्यस्यैव तत्वे वाच्ये जीवचैतन्यस्य स्वस्वरूपभूतप्रतिबिम्बदृष्टत्वाङ्गीकारे प्रतिबिम्बद्रष्टृजीवस्य सर्वस्यापि विशेष-हेत्वभावात् स्वबिम्बभूतशुद्धचैतन्यदर्शनं स्वबिम्बभूतेश्वरचैतन्यदर्शनं च प्रतिबिम्बदर्शनाविना-

भूतं दुर्निवारमिति । नहीदानीं प्रतिबिम्बभूतजीवस्य तादृशबिम्बचैतन्यसाक्षात्कारोऽनुभवसिद्धः । तस्मात् प्रतिबिम्बद्रष्टृबिम्बभूतचैतन्यमेव वाच्यम् । नहि बिम्बप्रतिबिम्बभूतचैतन्याभ्यामन्यत् तत् द्रष्टृचैतन्यं तदुभयोदासीनमस्तीत्यत्र मानमस्ति । येन तद्दर्शनमादायैव पराभिमतबिम्बप्रतिबिम्बभावो निर्व्यूढः स्यात् ॥

अपि च जीवेश्वरयोर्बिम्बप्रतिबिम्बभावः सोपाधिकाध्यास इति स्वीकुर्वता कथमिव द्वयोश्चैतन्ययोरन्यतरस्य तद् द्रष्टृत्वं न वाच्यम् । एवं च शुद्धचैतन्येश्वरचैतन्ययोर्नित्यभ्रान्तत्वप्रसङ्गः । बिम्बद्रष्टृत्वं जीवस्येत्यभ्युपगमे च स्वतः तदभेदसाक्षात्कार आवश्यक इति सद्यो मोक्षप्रसङ्गः, ईश्वरवददुःखित्वादिप्रसङ्गश्च । नहि दर्पणे मुखमस्येति बिम्बप्रतिबिम्बदर्शिनस्तयोरभेदसाक्षात्कारो नेत्यस्ति । तस्मात् न जीवेश्वरयोर्दृष्टानुसारेण बिम्बप्रतिबिम्बभावो वाच्यः, किन्तु परस्परसदृशत्वेनैवेति कथं जीवस्य पक्षद्वयेऽपि तादृशशुद्धचैतन्यतादृशेश्वरभावापत्तिरुपपद्यते ॥

अपि च प्रतिबिम्बस्य बिम्बात् भिन्नत्वेनोपाधिविलये स्फटिकलौहित्यत्स्येव नाश एव न्याय्यः दर्शनात्, नतु तस्य बिम्बाभावेनावस्थानमिति दर्पणाद्युपाधिसन्निधिप्रयुक्तबिम्बप्रतिबिम्बवत् जीवेश्वरयोरपि बिम्बप्रतिबिम्बभावाङ्गीकारे आत्महानमेव मुक्तिरित्यापातः ।

अपि च जीवेश्वरविभागस्यानादित्वेनोपाध्यन्वयव्यतिरेकदर्शनात् तयोर्लोकावगतबिम्बप्रतिबिम्बवत् बिम्ब-प्रतिबिम्बत्वमसिद्धम् । नहि 'यथा ह्ययं ज्योतिरात्मा' इत्यादि श्रुतिः बिम्बप्रतिबिम्बयोर्भेदवत् आत्मभेदस्यौपाधिकत्वमाऽवेदयतीत्येतावता जीवेश्वरयोर्बिम्बप्रतिबिम्बत्वेऽपि समानमित्यत्र विशेषहेतुरस्ति ॥

नन्वेवं सति जीवेश्वराभेदसिद्धिरविकला उपाधिविलये औपाधिक-तद्भेदस्य विलयावश्यम्भावादिति चेन्न । श्रौतोपाधिशब्दस्य कारणविशेषपरत्वेन भेदस्फुटतरप्रतिभासरूपाभिव्यक्तिरूपकार्यविशेषं प्रति हेतुविशेषो यः सर्वज्ञत्वरूपोऽल्पज्ञत्वरूपश्चोपाधिस्तस्य जीवेश्वरस्वाभाविकधर्मतया तन्निवृत्तावेव मानाभावेन तद्भेदविलयोपपत्तेः । तद्भेदस्य विलयनाशावश्यम्भावात् । तथा च श्रुतिः । 'जीवेशावभासेन करोति मायाचाविद्या च स्वयमेव भवति' इति । आभासेन= समन्तात् भासेन= सर्वज्ञेनाभासेन ईषद्भासेन अल्पज्ञत्वेन

चेत्यर्थः । आभासाभ्याम् इति द्विवचनस्य 'आभासेन' इत्येकवचनमादेश इत्युक्तम् श्रुत्यर्थनिरूपणप्रस्तावे[१] । नच व्यञ्जकरूपकारणविशेषविलये व्यङ्ग्यरूपवस्तुविशेषविलय नियमोऽस्ति ॥

अपि च श्रौतोपाधिशब्दस्य बिम्ब-प्रतिबिम्बभावप्रयोजकोपाध्यर्थत्वेन उपाधिविलये प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यम्भावेन 'कार्योपाधिरयं जीवः' इत्यादि श्रुत्यनुसारेण प्रतिबिम्बभूतजीवोपाधित्वेन [२]स्वीयकार्यस्य कार्यशब्दितस्यान्तःकरणस्य 'सुषुप्तिकाले सकले विलीने तमोऽभिभूतं सुखरूपमेति' इत्यादि श्रुत्याऽऽवेदित विलयस्यावश्यमङ्गीकार्यतया मुक्तिदशायामिव सुप्तावपि अनेकजीववादे जीवस्येश्वरभावापत्तिप्रसङ्गः । नचेष्टापत्तिः । ईश्वरवत् जीवस्यापि सुप्तावीश्वरभावापत्तिप्रयुक्तसर्वज्ञत्व-सर्वेश्वरत्व-सर्वशक्तित्वादिगुणवत्तया स्वात्मानुसन्धानप्रसङ्गात् । नचैवम् । तथा सति सुप्तोत्थितस्य सुख्यादिपरामर्शवत् 'एतावन्तं कालं सर्वज्ञ आसं सर्वेश्वर आसम्' इत्यादिप्रकारेण परामर्शप्रसङ्गात् ॥

किञ्च अविद्यान्तःकरणादेर्दर्पणवदुपाधित्वे 'कार्योपाधिः' इति श्रुतौ जीवोपाधिः कार्यम्, ईश्वरोपाधिः कारणमिति, जीवेश्वरोपाध्योर्भेदेनानुक्तिप्रसङ्गः । 'जीवेश्वर'शब्दाभ्यां बिम्बप्रति-बिम्बविशेषोरभिप्रेत-तत्प्रयोजकतया नैकोपाध्युपन्यासवैयर्थ्यात् ॥

एतेन घटाकाश-मठाकाशानुस्यूताकाशवत् बिम्ब-प्रतिबिम्बविशेषभूतजीवेश्वरानुस्यूतं शुद्धचैतन्यमस्ति इत्ययं पक्षः । तत्र यावत् सर्वमुक्तिमुक्तस्य सर्वज्ञत्व-सर्वकर्तृत्व-सर्वेश्वरत्व-सत्यकामत्वादिगुणकपरमेश्वरभावापत्तिरिष्यत इत्यपि (इत्यादि-पा) निरस्तम् ॥

घटाकाशाद्यनुस्यूताकाशे जीवेश्वरानुस्यूतशुद्धचैतन्ये च मानाभावात् । 'नीलघट पीतघटा-दिघटेष्वयं घटः अयमपि घटः' इति प्रतीतिव्यवहारवद् 'अयं घटाकाशोऽयं मठाकाशोऽयम्' इति प्रतीतिव्यवहारयोरप्यनुस्यूतधर्मविषयत्वात् । अन्यथा नीलघटपीतघटयोरपि घटाकाश-मठाकाशयोरनुस्यूताकाशवत् जीवचैतन्येश्वरचैतन्ययोरनुस्यूतशुद्धचैतन्यवच्चानुस्यूत-घटमात्र-स्यापि स्वीकारप्रसङ्गः । नच नीलघट-पीतघटयोर्घटत्वातिरिक्तं घटमात्रं नामास्ति ।

(१) प्रथम परिच्छेदे निरूपितमित्यर्थः ॥

(२) स्वीयकार्यस्य कार्यस्य कार्य शब्दित इति ताळपत्रस्थ पाठः ॥

घटाकाश-मठाकाशयोराकाशत्वातिरिक्तं जीवचैतन्येश्वरचैतन्ययोश्चैतन्यत्वातिरिक्तमनुस्यूतमाकाशमात्रं चैतन्यमात्रं वा अस्तीत्यत्र विशेषप्रमाणमस्ति । येन नीलघटपीतघटयोर्घटत्वातिरिक्तं घटमात्रं तदुभयानुस्यूतं नास्ति प्रकृते तु आकाशत्वाद्यतिरिक्तं घटाकाश-मठाकाशाद्यनुस्यूतमाकाशमात्रं चैतन्यमात्रं वा अस्तीत्यङ्गीक्रियेत ॥

अपि च उपाधिविगमे प्रतिबिम्बस्य बिम्बभावेन अवस्थानवत् प्रतिबिम्बभूते जीवे विद्योदये सति तस्य मुक्त्यवस्थायां बिम्बभूतेश्वरभावेन अवस्थानाङ्गीकारे मुक्तेः सगुण-विद्याफलाविशेषप्रसङ्गः । सगुणोपासकानामपि 'यथाक्रतुरस्मिन् लोके पुरुषो भवत्येवमितः प्रेत्य भवति तं यथा यथोपासते तत्तथैव भवति' इत्यादिश्रुतिषु ईश्वरसायुज्यं प्रतिपाद्यत इति परेणाङ्गीकारात्, अभेद एव सायुज्यशब्दार्थ इत्यङ्गीकाराच्च ।

ननु सगुणोपासकानामखण्डसाक्षात्काराभावात् न अविद्याया निवृत्तिर्नवा, तन्मूलाहङ्कारादेर्विलयः आवरणानिवृत्तेर्नाखण्डानन्दस्फुरणम् । 'जगद्व्यापारवर्ज्यम्' 'प्रकरणादसन्निहितत्वाच्च' 'भोगमात्रसाम्यलिङ्गाच्च' इत्यादिसूत्रोक्तन्यायेन तेषां परमेश्वरेण भोगसाम्येऽपि सङ्कल्पमात्रात् स्वभोगोपयुक्त-दिव्य-देहेन्द्रिय-वनितादिसृष्टिसामर्थ्येऽपि सकलजगत्सृष्टि-संहारादिस्वातन्त्र्यलक्षणं न निरवग्रहमैश्वर्यं, मुक्तानां तु निस्सम्बन्धिबन्धमीश्वरभावं प्राप्तानां तत्सर्वमिति महान् विशेषोऽस्ति इति चेत्, तर्हीश्वरवत् मुक्तानामागन्तुकाखण्डसाक्षात्कारधीः नाविद्यानिवृत्तितन्मूलाहङ्कारादि-विलयवत्वादागन्तुक-सकलजगत् सृष्टिसंहारादि-स्वातन्त्र्य-लक्षणवत्वात्, तत एव निरवग्रहैश्वर्यवत्वाच्च । निस्सम्बन्धिबन्धेश्वराभावस्यैव दुर्लभत्वात् । ईश्वरात् तेषामपि सगुणोपासकानामिव महतो विशेषस्य दुर्निवारत्वेनाविशेषात् । नहीश्वरस्य तथात्वमागन्तुकम् । नचागन्तुकानागन्तुकधर्मोपहितयोरेकान्तेनाभेदो युज्यते । नच परमेश्वरवत् तदभिन्नत्वात् जीवानां संसारदशायामपि सार्वज्ञत्वादिकमस्त्येवानागन्तुकं, तच्च विद्यमानमप्यविद्यावशात् संसारदशायामविद्यमानमिव निवृत्तायान्तु तस्यामविद्यायामप्रति-बन्धात् स्फुरतीति स्वीक्रियत इति वाच्यम् । एवमप्यागन्तुकाविद्यानिवृत्ति तदधीनाहङ्कारादि विलयोपहितत्वकृतमुक्तेश्वरभेदस्य दुर्निरासत्वात् ॥

किञ्च जीवानां विरुद्धधर्माक्रान्तत्वेन ईश्वराभिन्नत्वमेव युक्तम् । अन्यथेश्वरवदेव चैतन्यै-

क्यानुसन्धानं सार्वज्ञादिधर्मवत्वानुसन्धानं च संसारदशायामपि स्यात् । एवमज्ञसंसारिजीवाभिन्नत्वेनेश्वरस्य तदनुसन्धानप्रसङ्गः ॥

किञ्चोक्तरीत्याऽगन्तुकाविद्यानिवृत्त्याद्युपहितत्वात् जीवानामनागन्तुकतदत्यन्ताभावोपहितेश्वरादत्यन्तभेदआवश्यक इति तदभेदस्यैवासिद्धौ संसारिजीवेषु ईश्वरइवागन्तुकसर्वज्ञत्वादेव न मानाभावः । अन्यथेश्वरभिन्नत्वे जीवानां सिद्धे तेषु अनागन्तुकसर्वज्ञत्वादीश्वरधर्मसिद्धिः, तत्सिद्धौ च तेषां तदभेदसिद्धिरित्यन्योन्याश्रयः ॥

एतेन संसारिणां विद्योदये सत्यविद्यानिवृत्त्या आगन्तुकधर्मवत्त्वेऽपि स्वाभाविकेश्वराभेदप्रयुक्तसार्वज्ञादीनामनपाय एव 'अधिकं प्रविष्टं नतु तद्धानिः'इति न्यायादिति निरस्तम्।

जीवेषु ईश्वर इवानागन्तुकसार्वज्ञादीनामीश्वरात् भेदसिद्ध्यधीनत्वेनान्योन्याश्रयादागन्तुकधर्मोपहितत्वप्रयुक्तस्या तथा विश्वेश्वरात् भेदस्य तथाऽप्यनिवारणाच्च ॥

किञ्च बिम्बे मुखे दर्पणाद्युपाधिप्रयुक्तभेदस्य यथा न अभेदप्रत्ययविरोधित्वमेवं बिम्बे ईश्वरे अविद्यान्तःकरणोपाधिप्रयुक्तभेदस्य नाभेदप्रत्ययविरोधित्वं स्यात् । नचेष्टापत्तिः । तथा सति दर्पणे 'अहं श्यामः' इति बिम्बस्यैव अविद्यान्तःकरणादेः 'अहं दुःखी कर्ता भोक्ते'ति बिम्बेश्वरस्य भ्रमप्रसङ्गात् । ईश्वरनिरञ्जनत्वश्रुतेर्निर्विकारत्वादि श्रुतिवद्वास्तव-तदभावपरत्वोपपत्तेः ॥

एतेन वह्निनिष्ठदाहकशक्तेरेकस्या एव पुरुषविशेषं प्रति तथाऽभिप्रायेण मन्त्रप्रयोगाद्यथा अदाहानुकूलत्वं तदन्यपुरुषविशेषं प्रति दाहानुकूलत्वं च एवमेकस्यैव चैतन्यस्याज्ञत्वमनज्ञत्वादि चेति व्यवस्थेति निरस्तम् । तत्र दाह्यभेदवत्प्रयुक्ते अनुसन्धातृचैतन्यभेदाभावेन वैषम्यात् । 'तुरीयं तत् सर्वदृक् सदा' इति तुरीयविशेषणसामर्थ्यात् परमेश्वरस्यैव सदा सर्वदृक्त्वं नतु तदन्यस्येति जीवेश्वरयोः वैधर्म्यस्यैव श्रुतत्वाच्च । नहि तुरीयान्यस्य उदाहृतश्रौतार्थान्यथानुपपत्तिबलायात्तं कादाचित्क-सर्वदृक्त्वं वृथैव त्यक्तुमर्हम् ॥

अपि च दाहानुकूलत्व-तदननुकूलत्व-लक्षण-विरुद्धधर्माक्रान्तत्वात् वह्निनिष्ठा शक्तिरनेकैवोपेयत इति न तद्दृष्टान्तेनैकस्यैव चैतन्यस्य सार्वज्ञादिधर्मानुसन्धातृत्वं च इति साधनं युक्तम् । अन्यथा दहन-तुहिनयोरपि अभेद इति सुवचः ॥

अपि च निस्सम्बन्धिबन्धमीश्वराभावावाप्तिर्मुक्तानां पुरुषार्थ इति परमेश्वरस्य दुःखि-जीवाभिन्नत्वं वदता परेणानभ्युपगन्तुं शक्यते । तथा च परमेश्वरभावं प्राप्तेषु रामकृष्णाद्यवतारेषु तपस्वित्व-दुःखित्वच्छेदभेदादिश्रवणात् मुक्तानामपि तदभिन्नपरमेश्वरभावं प्राप्तानां दुःखाद्यवश्यम्भावात् ।।

एतेन विप्रशापामोघत्वादिस्वीकृतमर्यादापरिपालनाय कथञ्चित् भृगुशापादिसत्यत्वं प्रत्याययितुं नटवत् परमेश्वरः तथा तथा अचेष्टत[१] । तस्य तत्र दुःखित्वादिश्रवणमप्युक्तार्थपरमत एवेति निरस्तम् ।

परमेश्वरस्य वस्तुतो दुःखकर्मकर्तृतत्फलभोक्तृजीवाभिन्नत्वाङ्गीकारे तद्दुःखित्वादिश्रवणस्य तथा नटनादिकर्तृपरताया एव कल्पनार्हत्वात् । **'विद्धवन्मुग्धवच्चैव केशवो वेद नार्तवत्'** इत्याद्यागमस्य नटवत् तथा तथाऽभिनयकर्ता परमेश्वर इत्यर्थपरत्वस्य दहन-तुहिनयोरिव दुःखिजीवेश्वरयोरनौपाधिके भेदे सिद्ध एव स्वीकारार्हत्वात् ।।

एतेनैव परमेश्वरस्य नित्यमुक्तत्व-निरवग्रह-स्वातन्त्र्य-समाभ्यधिकराहित्यादि- श्रुति-विरोधाच्च देवतादेः रामकृष्णादिदुःखित्व-तपस्वित्वादिश्रवणात् नटवत् तथा तथा अभि-नयकर्ता परमेश्वर इत्यर्थ परमिति निरस्तम् ।।

किञ्च लोके स्वमुखमवदातमेवेति समीचीनदर्पणाद्युपायेन अन्येन वा केनचित् प्रमाणेन निश्चिन्वतः असमीचीनदर्पणाद्युपाधिसन्निधाने 'तदेव स्वमुखं स्वीयमिदं मुखं श्यामं वक्रमन्यादृशं च पश्यतः' यथा तच्छामत्वादिदर्शनकृतं दुःखं नास्ति तत्परिहारार्थमिच्छा वा प्रयत्नो वा, तथा परमेश्वरस्य यथावत् सर्वज्ञस्य स्वप्रतिबिम्बभूतेषु जीवेषु संसार-दुःखादिकमेव नास्तीति पश्यतः अस्तीति पश्यतो वा, विशेषदर्शित्वेन तद्दर्शनत्वप्रयुक्त-दुःखाभावात् वस्तुत 'इदमसत् मिथ्यैवेति' निश्चयसत्वाच्च तत्परिहारार्थमिच्छा वा, प्रयत्नो वा न स्यात् । नच परमेश्वरः स्वप्रतिबिम्बभूतं जीवं नित्यमुक्त-निरवग्रह-स्वतन्त्र-समाभ्यधिकरहित-स्वाभिन्नत्वेन साक्षात्कुर्वंस्तथा प्रत्येतीति सम्भवति । नच तदसम्भवे तद्विरोधिविद्यार्थं स्वप्रतिबिम्बभूतजीवस्य तदीयानिष्टसम्पादने तदनुभवसम्पादनाद्यर्थं

(१) अस्य विचारस्य 'तुरीयशिवखण्डने'विजयीन्द्रस्वामिभिः विस्तारेण विचारितम् ।। पुट-सं-३४-४२ ।।

परमेश्वरस्य इच्छाप्रयत्नो वा, सम्भवति । नच निवरवग्रहस्वतन्त्रस्य परमेश्वरस्य सर्वज्ञस्य सर्वशक्तेः अनिष्टसम्पादने इच्छाप्रयत्नौ सम्भवतः । नहि कोऽपि स्वानिष्टपरिहारे सामर्थ्य-बलात् सम्पादने प्रवर्तत इति दृष्टचरम् ॥

नच प्रतिबिम्बभूतो जीवः परमेश्वरेण स्वभिन्नत्वेन अस्मदादिवत् ज्ञायते । किन्तु स्वाभिन्नत्वेनैवान्यथाऽस्मदादिवत् परमेश्वरस्यापि भ्रान्तत्वप्रसङ्गात् इत्युक्तम् । नह्यवास्तवं स्वप्रतिबिम्बभूतजीवभेदं स्वस्मिन् जानन् परमेश्वरो न भ्रान्त इति शक्यमभ्युपगन्तुम् । अन्यथा शुक्तिरूप्यादिकमपि विधिमुखेन जानन् अपि परमेश्वरो न भ्रान्त इत्यङ्गीकार-प्रसङ्गः । अपि च लोके दर्पणाद्युपाध्यकल्पितस्यैव बिम्बत्वदर्शनात् । 'कार्योपाधिरयं जीवःकारणोपाधिरीश्वरः' इति श्रुतिप्रतिपन्नकार्यकारणरूपोपाध्यकल्पितस्यैव शुद्धचैतन्यस्य बिम्बत्वमुचितम्, नतूपाधिकल्पितयोः जीवेश्वरयोः, कल्पनाया दृष्टानुसारित्वात् । नहि ईश्वर एव बिम्बः, जीव एव प्रतिबिम्ब इत्यपि श्रुत्यन्तरमस्ति । येन श्रुतार्थपरित्यागोऽश्रुतार्थ-स्वीकार इति दोषः स्यात् ॥

यद्यपि प्रतिबिम्बस्यापि प्रतिबिम्बो दृश्यत इति उपाध्यकल्पितस्यैव निर्बिम्बत्वमिति नियमस्तथाऽपि, प्रथमं येनोपाधिना बिम्बप्रतिबिम्बभावः कल्पितस्तदकल्पितस्यैव बिम्बत्वमिति नियमोऽस्त्येवेति । तस्मात् बिम्बस्थानीय ईश्वरः प्रतिबिम्बस्थानीयो जीवः । तदुभयानुस्यूतं शुद्धचैतन्यमिति यावत्, सर्वमुक्तिपरमेश्वरभावो मुक्तस्येति पक्षोऽप्ययुक्तः ।

अत एव समन्वयाऽध्याये 'दहर उत्तरेभ्यः'(ब्र-सू-१-३-१४) इत्यधिकरणे 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः' इत्यादि श्रुतिनिर्दिष्टो दहराकाशः, न भूताकाशः, नापि जीवः, किन्तु परमेश्वरः । कुतः? उत्तरेभ्यः= वाक्यशेषे 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते । यावान्वाऽयमाकाशः तावानेषोऽन्तर्हृदय आकाशः एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सो पिपासः सत्यकामः सत्यसङ्कल्पः' इत्यादिना प्रतिपाद्यमानेभ्यो द्यावापृथिव्याद्याधारत्वलक्षणगुणेभ्य उत्तरेभ्यः हेतुभ्यः इति, जीवान्यः परमेश्वर इत्यस्मिन् अर्थे निर्णायकान् जीवव्यावृत्तान् गुणानुक्त्वा 'उत्तराच्चेदाविर्भूतस्वरूपस्तु'(ब्र-सू-१-३-१९) इति सूत्रान्तरे दहरविद्यानन्तरम् इन्द्र-प्रजापति

संवादे, ननु 'य आत्माऽपहतपाप्मा' इत्युक्तम्, अपहतपाप्मत्वादि गुणाष्टकं न दहराकाशस्य परमेश्वरत्व निर्णायकम्, मुक्तजीवेऽपि तस्य सत्त्वादित्याशङ्क्य 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इत्याद्युत्तरवचने परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यत इति मुक्तजीवस्य परमेश्वरप्रसादादाविर्भूताऽपहतपाप्मत्वादिगुणकत्वं, परमेश्वरस्य नु तत्स्वतः सिद्धमिति स्वतःसिद्धाऽपहतपाप्मत्वादिगुणाष्टकं जीवव्यावृत्तं भवत्येव । दहराकाशस्य परमेश्वरत्वनिर्णायकमित्युक्तं भगवत्पादैः । तथा च स्मृतिः ॥

**'नित्यतीर्णाशनायादिरेक एव हरिः स्वतः ।**
**अशनायादिकानन्ये तत् प्रसादात् तरन्ति हि'** इति ।[१]

अत एव च **'इतरपरामर्शात् स इति चेन्न असम्भवात्'**(ब्र-सू-१-३-१८) इति पूर्वसूत्रे 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' 'एष आत्मेति होवाच' इति जीवपरामर्शात् जीव एव तच्छब्दार्थ इत्याशङ्क्य स जीवो न, कुतः? तस्य स्वतोऽपहतपाप्मत्वादि-गुणासम्भवात् इति प्रतिपादितम् ॥

अत एव च 'एष ह्येव साधुकर्म कारयति यं यमेभ्यो लोकेभ्यः उन्निनीषते । एष उ एवासाधुकर्मकारयति तं यमधो निनीषते' इति श्रुतिः परमेश्वरसाध्वसाधुकर्मद्वारा जीवोर्ध्व-गत्यधोगतिसम्पादने परमस्वातन्त्र्यमाहेति ॥

ननु 'य एष सम्प्रसादोऽस्मात् शरीरादुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यते' इति श्रुतौ 'द्युभ्वाद्यायतनं स्वशब्दात्'(ब्र-सू-१-३-१) इति सूत्रे 'आत्म'शब्द-पर्यायत्वेन निर्णीतेन 'स्व'शब्देन जीवस्य मुक्तिदशायामभिनिष्पत्तिकथनात् तदन्यथाऽनुपपत्त्या आगन्तुकधर्मनिषेधप्रतीतेश्च, मुक्तजीवस्य परमेश्वरभावेनैव अवस्थानं यावत् सर्वमुक्ति सर्वेणापि स्वीकार्यम् । तथा च सूत्रम् 'सम्पद्याविर्भाव स्वेनशब्दात्'[२](ब्र-सू- ४-४-१) इति । अन्यथा श्रुतौ 'स्वेन'शब्दवैयर्थ्यापत्तिः । येन रूपेणागन्तुना स्वयमभिनिष्पद्यते तस्यानात्मीयत्वशङ्कानुदयेन तन्निरासाय आत्मीयत्वस्य शब्देन वक्तव्यत्वात्, तस्मादात्म-

---

(१) दहराधिकरणसूत्रभाष्योदाहृतपाद्मस्मृतिवचनम् ॥

(२) सम्पद्याविहाय स्वेनशब्दात् इति आचार्यमध्वसम्मत पाठः । सम्पद्याविर्भाव इति शाङ्करसूत्रभाष्यपाठः ॥

वाचि 'स्व'शब्दोपादानात्, नित्यसिद्धेन स्वस्वरूपेणैव अभिनिष्पत्तिर्विवक्षिता नतु केनचिदागन्तुना धर्मेणेत्येव वाच्यम् ।

नच जीवस्य मुक्तस्य सच्चिदानन्दस्वरूपत्वस्यानागन्तुकत्वेऽप्यपहतपाप्मत्वादिगुणकत्वमागन्तुकमेव स्वीकार्यमिति वाच्यम् । तथा सति 'सम्पद्याविर्भाव' इति मुक्तावागन्तुकरूपनिषेधानुपपतेः । **'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'**(ब्र-सू- ३-२-५) **'उत्तराच्चेदाविर्भूतस्वरूपस्तु'** इति सूत्राभ्यामपहतपाप्मत्वादेर्बन्धमुक्त्यो स्थिरोभाव-आविर्भावप्रतिपादनानुपपत्तेश्च । तथाच तदपि नित्यसिद्धमेव वाच्यम् । नहि संसारस्य मिथ्यात्वे तद्विशेषभूतपाप्म-जरा-मृत्यु-शोकादिकं सत्यं सम्भवति । नच मिथ्याभूतस्य पाप्मादेरपहत्यादिशब्दार्थभूतो निषेधः आगन्तुकः । तस्य त्रैकालिकत्वात् । अपहतपाप्मत्वादिकं हि सर्वदा पाप्मादिरहितत्वमिति नित्यसिद्धमुच्यते । नच वस्तुतः सर्वदा पाप्मरहिते जीवे पाप्मसम्बन्धस्तन्मूलकर्तृत्वभोक्तृत्वसम्बन्धो वा, पारमार्थिकः सम्भवति । एवं च जीवस्येश्वराभेदोऽपि दुर्वारः । श्रुतिबोध्यतदभेदविरोधिबन्धसत्यत्वाभावात् । अन्यथा संसारिणि नित्यसिद्धसत्यसङ्कल्पतिरोधानोक्त्ययोगाच्च । नहि जीवस्य संसारदशायामप्यनुवर्तमानो यत्किञ्चिदर्थगोचरः सङ्कल्पः कश्चिदस्ति अवितथस्तिरोहित इत्यन्यैरपि इष्यते । किन्तु ईश्वरस्य यन्नित्यसिद्धं निरवग्रहं सत्यसङ्कल्पत्वं तदेव जीवस्य संसारदशायामीश्वराभेदानभिव्यक्त्या स्वीयत्वेनानवभासमानं तं प्रति तिरोहितमित्येव स्वीकार्यमिति 'घट्टकुट्टीप्रभातवृत्तान्त' इति चेत् । अपहतपाप्मत्वं हि पापध्वंसः । पाप्महेतुकर्माचरणेऽपि पाप्मोत्पत्तिप्रतिबन्धकशक्तियोगित्वं चेत्युपगमात् । नहि परमेश्वरज्ञानसाध्य-तत्प्रसादजन्यपाप्मध्वंसः पाप्महेतुकर्माचरणेऽपि तदुत्पत्तिप्रतिबन्ध-परमेश्वरप्रसादकृतशक्तियोगित्वं वा, मुक्तस्यानागन्तुकः । नच तस्यागन्तुकत्वे तत्प्रतियोगिपाप्मादिरूपस्य बन्धस्य मिथ्यात्वं शक्याभ्युपगमम् । एवं सत्यसङ्कल्पत्वादिकमपि मुक्तस्य परमेश्वरप्रसादकृतमिति न तस्य स्वतः सिद्धसत्यकामादिगुणकेन परमेश्वरेणाभेद इति ।।

नचैवं शब्दार्थकल्पने प्रमाणाभावः । 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय' इति । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते । तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवाऽस्य

सर्वे पाप्मनः प्रदूयन्ते' इति च श्रुतेरेव तत्र मानत्वात् । तथा च सूत्रम्– **'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'** इति । नचैवमपि पापोत्पत्ति-प्रतिबन्धिका शक्ति-रश्रुतैव कल्पनीया । नह्युदाहृतश्रुतौ तदुत्पत्तिप्रातेबन्धिका शक्तिः प्रतीयते । तस्या अपदार्थ-त्वादवाक्यार्थत्वाच्च । किन्तु ब्रह्मदर्शनवतः पापध्वंस तदश्लेषौ प्रतीयेते ॥

किञ्च संसारपरिभ्रमणदशायां पापानुत्पत्त्यर्थं तथाविधशक्तिस्तावन्न कल्प्या इदानीं (तदानीं-पा)तदुत्पत्तेरिष्टत्वात् । विद्योदयप्रभृति तु विद्यामाहात्म्यादेव तदश्लेषविनाशोपपत्तेः । 'तदधिगम'इति सूत्रस्याप्युक्तार्थप्रतिपादकत्वस्य स्फुटप्रतिभास।चेति वाच्यम् । द्वैतिनोऽद्वैतिनो वा, प्रारब्धकर्मफलानुभवं विना विद्योदयमात्रेणेश्वरसारूप्यादिरूपस्य वा, बिम्बाभावापत्त्यादि लक्षणस्य वा, मोक्षस्याभावात् । तत्त्वज्ञानित्वदशायां पापोत्पादककर्माचरणकाले विद्यायाः क्षणिकत्वेन सर्वदा तत्सत्त्वे मानाभावात् । विद्यातिरिक्तस्य पापोत्पत्ति-प्रतिबन्धकस्यावश्य-कत्वात् । नच तथाऽपि शक्तिर्नाङ्गीकार्या । विद्याजन्यसंस्कारादेव पापोत्पत्ति- प्रतिबन्धोप-पत्तेरिति वाच्यम् । तथासति पापोत्पत्तिप्रतिबन्धकस्थायिसंसाराङ्गीकारे तदुपादानतया तन्निमित्ततया चान्तःकरणाविद्यादेरप्यङ्गीकारप्रसङ्गात् । नचेष्टापत्तिः । विद्याऽविद्ययो-रविरोधापत्त्या विद्योदयानन्तरमपि स्वर्गिवत् संसारित्वापत्तेः । नच द्वैतिनोऽपि तवैषदोष-स्तुल्य इति वाच्यम् । द्वैतिनो विद्याजन्यभगवत्प्रसादादस्यैवात्यन्तिकदुःखहेत्वनाद्यविद्याकाम-कर्मादिरूपबन्धनिवर्तकत्वोपगमेनातुल्यदोषत्वात् । विद्यया भगवत्प्रसादोदये सति 'अविद्या'शब्दितप्रकृतिसम्बन्धरूपबन्धस्य प्रारब्धकर्मरूपप्रतिबन्धकाभावसहकृतादेव ततो भगवत्परमप्रसादात् निवृत्त्यभ्युपगमात् । नचाद्वैतिनेव मया घटाद्यर्थे भावरूपमज्ञानं स्वी-कृतम् । येन ज्ञानाज्ञानयोर्विरोधस्य तत्रैव क्लृप्तत्वात्, अनाद्यविद्यया निवृत्तौ कर्तव्यतायां (कर्तव्यायां-पा) विद्यायाः भगवत् प्रसादसापेक्षत्वं न स्यादित्युच्येत । घटाद्यर्थे आवश्यक-ज्ञानप्रागभावरूपस्यैवाज्ञानस्य मयोपगमात्, प्रागभावानभ्युपगमे तुल्यन्यायतया ध्वंसादेरप्य-नभ्युपगमप्रसङ्ग इत्युक्तम् ॥

किञ्च पापोत्पत्तिप्रतिबन्धकतया विद्यासंस्काराङ्गीकारे विद्याजन्याविद्यानिवृत्तिभेदभ्रम-निवृत्तिपापादिनिवृत्त्यङ्गीकारे च, आगन्तुकतादृशधर्मोपहितस्य मुक्तजीवस्य तथाविध-

बिम्बेश्वरभावोपपन्नः आगन्तुकोपाधेः । स्वोपहितस्य मुक्तजीवस्य विद्यावशादनागन्तुका-विद्यापाप्माद्यभावोपाध्युपहितबिम्बभूतेश्वरात् भेदकत्वस्य दुर्निवारत्वात् । अत एव 'एष सम्प्रसादो अस्माच्छरीरादुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमः पुरुषः' इति वाक्ये परमात्मनि योगरूढिभ्यां मुख्यो य आत्मशब्दः तत्पर्यायस्य 'स्व'शब्दस्य वैयर्थ्यमिति प्रत्यूढम् ॥

केवल'स्व'शब्दस्य तथाविध'आत्म'शब्दपर्यायत्वेऽपि प्रकृते रूपशब्दसमभिव्याहारेण स्वशब्दस्यात्मीयपरत्वावश्यम्भावात् । अन्यथा 'स्वेन'= परमात्मना, रूपेणेति सामाना-धिकरण्येनान्वयानुपपत्तेः । नच 'रूप'पदं स्वरूपपरम् । तथाच परमात्मना 'स्वरूपेणा-भिनिष्पद्यते= आविर्भवति' इत्यन्वयोपपत्तिरिति वाच्यम् । 'रूप'पदवैयर्थ्यतादवस्थ्यात् । 'रूप'पदं विनाऽपि 'सह ब्रह्मणा विपश्चिता' इत्यत्रेव, स्वेन= परमात्मरूपेण इत्यन्वय-सम्भवात् । किञ्च 'रूप'पदस्यागन्तुकानागन्तुकसाधारणधर्ममात्रपरत्वेन 'रूपेणाभिनिष्प-द्यते' इत्युक्ते अपहतपाप्मत्वाद्यागन्तुकरूपेणोत्पद्यत इति वाक्यस्यार्थः प्रतीयते । स्वरूपेण जीवोत्पत्तेस्तदनादिनित्यत्वाऽवेदकश्रुतिविरोधात् । 'स्वेन= स्वीयेन रूपेण परमात्मवत् सच्चिदानन्दादिस्वरूपेण अभिनिष्पद्यते' इत्युक्ते तु पुरुषार्थभूतस्वस्वरूपभूताऽनन्दादिधर्म-वत्तया अभिव्यज्यते' इति वाक्यस्यार्थः प्रतीयत इति विवक्षितवाक्यार्थलाभाय 'स्वेन'शब्दो-पादानस्यावश्यकतया तदवैयर्थ्योपपत्तिः ॥

यद्वा 'अभिनिष्पत्ति'शब्दो अभिव्यक्तिवचनो 'रूपेणाभिनिष्पद्यते' इत्युक्ते 'रूप'शब्द-स्यागन्तुकापहतपाप्मत्वादिरूपधर्मपरतया अपहतपाप्मत्वादेरभिव्यक्तिहेतुत्वमात्रं लभ्यते । तत्र किं रूपविशिष्टस्याभिव्यक्तिर्भविष्यतीत्यपेक्षिते 'स्वेन'इत्युक्तम् । 'स्वेन' अनौपाधि-काकारेणेत्यर्थः ।

यद्वा 'स्व'शब्दः समभिव्याहृतपरत्वेन व्युत्पत्तिसिद्ध इत्यविवादम् । एवं च 'एष सम्प्रसादोऽस्मात् शरीरादुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति वाक्ये पदान्तरसमभिव्याहारसत्वेऽपि उपसम्पत्तिक्रियाकर्तुः जीवस्य प्रथमान्तपदोपस्थाप्यतया शब्दतः प्राधान्यसत्त्वेन तत्परत्वमेव न्याय्यम् । तथा च 'स्वेन रूपेण'= स्वस्वरूपेणैव

अभिनिष्पद्यते नतु स्वान्यपरमात्मस्वरूपेणेति व्यावर्त्त्यसत्वात् न 'स्वेन'इत्यस्य वैयर्थ्यमिति ॥

किञ्चानेन वाक्येन परञ्ज्योतिःसम्पत्त्या जीवस्यानौपाधिकस्वस्वरूपेणाभिव्यक्तिः अभूतपूर्वोच्यत इति न तस्य परमेश्वराभेदो युज्यते । नह्यागन्तुकस्वरूपाभिव्यक्तिमतो जीवस्यानागन्तुकाभिव्यक्तिरिति न ईश्वराभेदो युक्तः । अपिच 'पराभिध्यानात्तु तिरोहितम्' 'उत्तराच्चेदाविर्भावस्वरूपस्तु' इति सूत्राभ्यामपहतपाप्मत्वादेर्बन्धमोक्षयोस्तिरोभावाविर्भावयोः परमेश्वरप्रसादात् जीवकथनमयुक्तम् । तस्य स्वतः सिद्धापहतपाप्मत्वादिगुणकपरमेश्वराभिन्नत्वात् । अपि च सत्यकामत्वादिकमीश्वरवत् जीवस्य स्वतःसिद्धं चेत् तद्वदेव जीवः संसार्येव न स्यात् । नचेष्टापत्तिः, संसारित्वस्याध्यासमात्रत्वादिति वाच्यम् । स्वतःसिद्धापहतपाप्मत्वादिगुणकपरमेश्वराभिन्नतयोर्जीवस्येश्वरवत् संसाराध्यासाभावप्रसङ्गात् । अनाद्यनिर्वचनीयाऽविद्यासम्बन्धवशात् जीवो भ्राम्यतीति चेन्न । स्वतःसिद्धापहतपाप्मत्वादिगुणकपरमेश्वराभिन्नत्वे तद्वदेव जीवस्य भ्रान्त्यभावप्रसङ्गात् । वस्तुतो न भ्राम्यतीति चेन्न । जीवस्य वस्तुतः तादृशेश्वराभिन्नत्वे तद्वदेव अवास्तवसंसारभ्रान्तेरप्यभावप्रसङ्गात् तादृशाविद्यासम्बन्धाभावप्रसङ्गाच्च । तस्मात् जीवस्य तादृशपराद्वास्तव एवानौपाधिकभेदोऽभ्युपेयः । एवं बन्धोऽपि तस्य वास्तव एवेति । अन्यथा –

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'

'ब्रह्मविदाप्नोति परम्'

'तदेव ब्रह्म परमं कवीनाम्'

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्'

'तस्माद्धान्यं न परं किञ्चनास'

'यस्मात् परं नापरमस्ति किञ्चित्'

'द्वे ब्रह्मणी वेदितव्ये परं चापरं च'

इत्यादिश्रुतिषु परमेश्वरे जीवाद्यावर्तकपर'परम'विशेषणानुपादानवैयर्थ्यात् ॥

एतेन जीवपरमेश्वरयोः प्रतिबिम्बभावस्य प्रमाणसिद्धत्वात्, बिम्ब-प्रतिबिम्बभावप्रयोजकोपाधेश्च दर्पणादेः प्रतिबिम्ब एव पक्षपातदर्शनात्, जीवेश्वरबिम्ब-प्रतिबिम्बभाव-

प्रयोजकोपाधेरविद्यान्तःकरणादेः प्रतिबिम्बभूते जीवे एव पक्षपातानाङ्गीकारात्, तस्मिन्नेव संसारादिभासकत्वं न बिम्बभूतेश्वरे इति परास्तम् । दर्पणादिवदविद्यान्तःकरणादेर्बिम्बोद्ग्राहित्वेनोपाधित्वे मानाभावात् ।

किञ्च दर्पणादिवदुपाधित्वे बिम्बस्य देवदत्तादेः 'दर्पणे देवदत्तः' 'जले यज्ञदत्तः' इति प्रत्यक्षप्रतीतिव्यवहारवत् 'कृपणो यज्ञदत्तः' 'श्यामो दीर्घ' इति प्रतीतिव्यवहाराच्च 'अविद्यान्तःकरणयोः 'ईश्वरः सर्वज्ञः सर्वकर्ता' 'तत्रेश्वरो दुःखी, तत्रेश्वरो बद्धः, तत्रेश्वरो सर्वज्ञोऽल्पश्चेति' प्रत्यक्षप्रतीतिव्यवहारप्रसङ्गः । देवदत्तत्वादेरिवेश्वरत्वस्यापि बिम्बधर्मत्वात् । तत्प्रकारकत्वनियमाच्च बिम्बप्रत्यक्षप्रतीतेर्दर्पणाद्युपाधिनिष्ठतया प्रतीतेरप्यपरोक्षत्वस्यानुभवसिद्धत्वात् ॥

किञ्च जीवस्येश्वरप्रतिबिम्बत्वमुपाधिसन्निधिकृतं चेत् प्रतिबिम्बभूतजीववत् बिम्बभूतेश्वरस्यापि यावदविद्याद्युपाधिसत्त्वं संसारदशायां सदा प्रत्यक्षत्वप्रसङ्गः । प्रतिबिम्बभूतजीववत् बिम्बभूतेश्वरस्याविद्यान्तःकरणोपाध्याभिमुख्यप्रयुक्तप्रत्यक्षत्वस्य दुर्वारत्वात् ।

किञ्च जीवोऽयं मत्प्रतिबिम्बत्वेन वस्तुतो मदभिन्नः संसारदुःखाद्यनुभवतीति किमीश्वरो जानाति किं वा न जानाति । आद्ये ईश्वरोऽपि जीववत् कथं भ्रान्तो न स्यात् । नचेश्वरो भ्रान्तः । निरञ्जनत्वश्रुतिविरोधात् । तस्याऽवास्तव-तन्निरञ्जनत्वपरत्वे च रामकृष्णादि-ईश्वरावतारेषु दुःखित्वादिश्रवणस्याप्यवास्तवदुःखित्वादिपरत्वेनाविरोधात् जीवस्य दुःखित्वादिना स्वतुल्येश्वरभावापत्तेरनुद्देश्यतया तद्भावापत्तेरनिष्टत्वप्रसङ्गात् । द्वितीये दुःखित्वादिरूपेणेश्वरं प्रति स्वाभिन्नजीवादेरेवानुपस्थितत्वेन संसारदुःखग्रहणेच्छया तन्मूलाविद्यानिवृत्तिप्रयोजनकज्ञानानुकूलजीवप्रवृत्तिहेतुरीश्वरप्रवृत्तिरेव दुर्लभेत्यापतितं स्यात् ॥

अपि च आहार्यज्ञानात् सर्वथा न प्रवृत्तिः, अन्यथा 'शङ्खः श्वेतः' इत्यानुमानिकविशेषज्ञानवतोऽपि प्रबलदोषापादितशङ्खपीतत्वज्ञानात् तच्छ्वेतत्वज्ञानात् तत्र तदर्थिन इव पीतार्थिनोऽपि निःशङ्कप्रवृत्तिप्रसङ्गात् । एवं च नित्यनिर्दोषतया निश्चितप्रामाण्यादुपक्रमाद्यवधारिततात्पर्यात् तस्माद् वेदान्तभागादीश्वरप्रभृतिसर्वप्रपञ्चो मदज्ञानकल्पित एव, न वास्तव इत्युत्पन्नाप्रामाण्यशङ्काशून्यज्ञानवतो जीवस्यानेकस्य सत्त्वात् तस्य सर्वस्य जीवस्य

प्रबलदोषापादित-तत्तत्-भ्रमसत्वेऽपि तस्य विशेषदर्शनपूर्वकत्वेनाहार्यत्वात्, प्रवृत्त्यादि-स्वकार्याक्षमत्वप्रसङ्गात्, ईश्वरभावापत्त्यर्थमयत्नप्रसङ्गः । नह्यपुरुषार्थभूतकुड्यादिभावा-पत्तितो अविशेषमीश्वरभावापत्तेर्जानतः तद्भावापत्त्यर्थमिच्छाप्रयत्नौ सम्भवतः । अन्यथा रज्जौ सर्पभ्रमदशायामिव 'नाऽयं सर्प' इत्याद्याप्तवाक्यादिप्रमाणोत्थ-प्रामाण्यशङ्कनास्कन्दिता सर्पत्वज्ञानसत्वेऽपि सर्पभ्रमकार्यप्रसङ्गः ॥

अपिच जीवेश्वरयोर्बिम्बप्रतिबिम्बभावाध्यासो नापरो जीवस्य सम्भवति । अस्मदादि-जीवेषु तस्यानुभवबाधितत्वात् । नहि कोऽपि जीवोऽहमीश्वरस्य प्रतिबिम्ब इति स्वात्मानं पश्यतीत्यस्ति । किन्तु सोऽध्यासः परोक्ष एव । तत्रापि शाब्द इत्येव वाच्यम् । एवं च शब्दाभासजन्यवह्विज्ञानवत् जीवेश्वरयोर्बिम्ब-प्रतिबिम्बभावाध्यासोऽन्यथाख्यात्यात्माख्यात् नानिर्वचनीयख्यात्याऽत्माख्यात्, क्षुभिताऽविद्याया एवानिर्वचनीयार्थकारणत्वाङ्गीकारात् । नचापरोक्षाध्यास स्थल एव[१] परोक्षाध्यासस्थले अविद्याक्षोभकारणमस्ति । दोषवत् सम्प्र-योगादेरपि तत्क्षोभकारणत्वस्यावधारणात् । नच परोक्षस्थले सम्प्रयोगोऽस्ति । तत्र च नित्यनिर्दोषत्ववेदजन्यत्वेनानध्याससवीकार एव श्रेयान् । अबाधेनैवोपपत्तौ बाधस्य अन्या-य्यत्वात्[२] अल्पासत्वाङ्गीकारे च बाधस्य दुर्वारत्वात् ॥

अपिचानेकजीववादे 'यावन्ति ज्ञानानि तावन्त्यज्ञानानीति' पक्षे तत्तदज्ञानकार्यैक-शुक्त्यधिष्ठानकानेकरूप्याध्यासवत् ईश्वराध्यासोप्यनेको दुर्वार इति तत्तज्जीवाज्ञानस्य विद्याया विलये तत्तदज्ञानकल्पितस्तत्तदीश्वरौपाधिकत्वात् तदैव विलीयते इति तत्तज्जीवस्य स्वाज्ञानकल्पितेश्वरभावापत्तिरेव दुर्लभेति । अस्मिन्नपि पक्षे ईश्वरः प्रतिबिम्बविशेष इति पक्ष इव मुक्तस्य चिन्मात्ररूपेणावस्थानमित्येवापतितमिति पक्षैकप्रसङ्गः ॥

किञ्चैवमनेकेश्वरवादप्रसङ्गः । कल्पकानेकाज्ञानकल्पितेश्वरस्याप्यनेकत्वं रूप्याध्यास-भेदवत् दुर्वारम् । नहि शुक्तिरूप्यानेकत्वे अज्ञानानेकत्वात् अन्यत् कारणमस्ति । नचानेकेश्वरत्वं प्रामाणिकम् । 'द्यावाभूमी जनयन् देवः एकः' इत्यादिना तदैकत्वस्यैव

---

(१) स्थल इव इति पाठः स्यात् ॥

(२) अन्यत्वात् इति ताळपत्र पाठः

प्रामाणिकत्वात् । नच श्रुतेरीश्वरैकत्वनिर्वाहायानेकैरप्यज्ञानैरेकेश्वरकल्पनमेवाङ्गीक्रियत इति वाच्यम् । तदेकत्वश्रुतेश्चैतन्याभेद एव वास्तव इत्यर्थ परत्वेनैवोपपत्तेः । अन्यथा 'एकमेवाद्वितीयम्' इत्यादिश्रुतेरवास्तव सजातीय-विजातीय-भेदोऽपि नास्तीत्यर्थपरत्व-प्रसङ्गात् । नचेष्टापत्तिः । व्यावहारिकभेदस्य परेण स्वीकारात् । अपिचेश्वरत्वं जीवत्वातिरिक्ते किं तत् बिम्बत्व-प्रतिबिम्बत्वे किं? वा तदनतिरिक्ते? नाद्यः । दर्पणादौ 'देवदत्तः प्रति-बिम्बितः' इतिवत् अविद्यान्तःकरणयोरुपाध्योः 'ईश्वरं प्रतिबिम्बितः' इति प्रत्यक्षप्रतीति-प्रसङ्गात् । सोपाधिकाध्यासस्य प्रत्यक्षत्वनियमात् । नच सोपाधिकाध्यासोऽननुवादात्मा प्रत्यक्षो नेति दृष्टचरम् । तथा च प्रत्यक्षत्वं ततो व्यावर्तमानं तदध्यासत्वमपि व्यावर्तयतीति जीवेश्वरबिम्बप्रतिबिम्बभावो वास्तव एव स्यात् ॥

एतेन बिम्बेश्वरोपाधिरज्ञानसमष्टिरित्यङ्गीकारात् नोक्तदोष इति निरस्तम् । अनेकजीववादे विद्योदयेन क्वचित् क्वचित् जीवे बिम्बेश्वरोपाधिभूताज्ञानसमष्टिगतस्य कस्यचित् कस्यचि-दज्ञानस्य नाशात् मुक्तजीवस्य कस्यचित् कस्यचिदीश्वरभावापत्तिर्भवतीत्यङ्गीकुर्वता परेण कतिपयव्रीहिनाशप्रयुक्तव्रीहिनाशवत् समष्टिभावप्रयोजककतिपयाज्ञाननाशप्रयुक्ताज्ञानसमष्टि-नाशस्यावश्यमङ्गीकर्तव्यत्वेन तस्मिंश्च सति बिम्बभूतेश्वरोपाधिविलयात् प्रतिजीवमुक्तीश्वर-नाशप्रसङ्गात् ।

अपिच अज्ञानस्य तत्समष्टेर्वा बिम्बेश्वरोपाधित्वाङ्गीकारे ईश्वरत्व-तन्नियत-सर्वज्ञत्व-सर्वकर्तृत्व-सर्वेश्वरत्वादीश्वरासाधारणधर्माणां तन्नियतायाः ईश्वरे जीवात् व्यावृत्तेश्च स्वाभा-विकत्वं दुर्वारम् । उपाधेः स्वधर्मासञ्जकत्वस्वाभाव्यात् । नचेश्वरत्वादिधर्माणामुपाधिभूता-ज्ञानधर्मत्वे मानमस्ति । येनेश्वरत्वाभिमत चैतन्ये अज्ञानोपाधिना तेषामासञ्जनापरपर्याय-माधानं क्रियेत । स्वधर्मासञ्जकत्वस्यैवोपाधिशब्दार्थत्वात् । अन्यथा लोकवेदयोरौपाधिकानौ-पाधिकवस्तुव्यवस्थाभावप्रसङ्गात् । न द्वितीयः । ईश्वरो बिम्बो जीवस्तत्प्रतिबिम्ब इति सहप्रयोगाभावप्रसङ्गात् ॥

अपि चैवं 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति श्रुतौ पृथक् तदनुपाद्यनुक्ति-प्रसङ्गः । बिम्ब-प्रतिबिम्बभावस्यानेकोपाध्यप्रयोज्यत्वात् । अपि च बिम्बप्रतिबिम्बमात्रेऽपि

जीवेश्वरव्यवहारप्रसङ्गात् न तत्वमीश्वरत्वं जीवत्वं वा, किन्तु बिम्बत्वविशेष एवेश्वरत्वं प्रतिबिम्बत्वविशेष एव जीवत्वं वाच्यम् । स च विशेषः सार्वज्ञादिविशिष्टचैतन्यत्वम् अल्पज्ञत्वादिविशिष्टचैतन्यत्वं वा, इति स्थिते, सर्वज्ञत्वादिकमनौपाधिकमेव स्वीकार्यम् । नच तदविद्योपाधिकम् । तथात्वे अविद्याया एव स्वाभाविकसर्वज्ञत्वादिप्रसङ्गात् । नहि तस्यास्तथात्वे किमपि मानमस्ति । सर्वज्ञत्वादेः स्वाभाविकत्वे चाग्निजलादेरौष्ण्यादिवत् यावद्धर्मिसत्वावश्यम्भावेनेश्वरस्य जीवात् तादृशव्यावर्तकधर्मनियतभेदापरनामक व्यावृत्तिरपि स्वाभाविकी समापतितेति किमधिकमाचरितम् । नच निर्विशेषत्वश्रुतिविरोधः एवं सति स्यादिति वाच्यम् । विशेषनिषेधश्रुत्या सार्वज्ञादीनां प्रतिपन्नोपाधिस्थत्रैकालिकनिषेध-प्रतियोगित्वरूपमिथ्यात्वेऽपि वह्न्यौष्ण्यादीनामिवेश्वरे सर्वज्ञत्वादीनां यावद्धर्मिसत्वस्य दुर्निरासत्वात् । तादृशव्यावर्तकधर्मसत्त्वप्रयुक्तयावद्धर्मिसत्वप्रयुक्ताया परमेश्वरस्य जीवाद् व्यावृत्तेरपि यावद्धर्मिसत्वस्य 'नान्योऽतोऽस्ति द्रष्टृ' इत्यादिश्रुतिनिषिद्धतया मिथ्याभूताया अप्यापाताच्च । सत्यभूत-द्वितीयवस्तुसत्त्वस्याद्वैतश्रुतिविरोधित्वात् । 'स्वाभाविकी ज्ञान-बलक्रिया च' इति ईश्वर-बल-ज्ञानक्रियाणां स्वाभाविकत्वस्य कण्ठरवेणैव श्रुतत्वाच्च । 'ज्ञानबलाभ्यामविनाभूता क्रिया ज्ञानबलक्रिये'ति 'मुखनासिकावचनोऽनुनासिक' इतिवत् समासाश्रयणेनैकवचनाद्यनुपपत्त्यभावात् । 'सुपां सुलुक्' इति बहुवचनस्यैकवचनोपपत्तेर्वा 'आपोऽशनाय' इत्यादिवत् । नच 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी' इतिश्रुत-स्वाभाविकत्वस्य शक्तावेवान्वय इति वाच्यम् । 'ज्ञानबलक्रिया च' इति 'च'शब्दमहिम्ना ज्ञानादावपि तदन्वयस्य वक्तव्यत्वात् । नच ज्ञानमेव यद्बलं तेन या क्रिया= जगन्निर्माणक्रिया, इत्येव वाक्यार्थ इति 'ज्ञानबलक्रिया च' इति एकवचनोपपत्तिरिति वाच्यम् । तथा सति 'बल'शब्दवैयर्थ्यप्रसङ्गात् । नच सार्वज्ञादीश्वरधर्माणां मिथ्यात्वे निवृत्तिः स्यादिति वाच्यम् । 'सत्यः सो अस्य महिमा' 'एष नित्यो महिमा ब्राह्मणस्य' इत्यादिश्रुत्या तेषां नित्यत्वावेदनेन 'यन्मिथ्या-तज्ज्ञाननिवर्त्त्यमिति नियमस्य सर्वज्ञत्वादीश्वरधर्मान्यविषयत्वा-श्रयणात् । नच सर्वज्ञत्वादिधर्मो 'महिम'शब्दार्थो नेत्यस्ति । नच तदतिरिक्तो महिमा सुवच इत्यलम् । तस्मात् जीवस्य मुक्तिदशायामपि नेश्वरभावापत्तिः कथम्? कथमपि सङ्गच्छत इति ।।

अपि च निग्रहानुग्रहसामर्थ्यं हि लोके 'महिमा' उच्यते । उदाहृतश्रुत्या तन्नित्यत्वावश्यम्भावे निग्रहानुग्रहसामर्थ्यस्य निग्राह्यानुग्राह्यरूपविषयाविनाभावनियमेन कथमीश्वरस्य निग्राह्यानुग्राह्यजीववर्गाभावे तद्गोचरनिग्रहानुग्रहसामर्थ्यरूपश्रुतिसिद्धनित्यमहिमनिर्वाहः? तन्निर्वाहार्थं निग्राह्यानुग्राह्येश्वरभिन्नजीववर्गस्य सदा सत्त्वमकामेनापि स्वीकार्यमिति न कथं कथमप्यद्वैतनिर्वाहः? श्रुतिनिषिद्धतया मिथ्याभूतस्य 'द्वैत'शब्दितस्य भेदस्य सदा सत्वेऽपि मम किमनिष्टमिति चेन्न । श्रुत्यादिनिषिद्धत्वमात्रेण कलञ्जभक्षणेष्टसाधनत्वादौ मिथ्यात्वव्यवहारदर्शनेन, पराभिमतमिथ्यात्वस्य परिभाषामात्रत्वेनानिर्वाच्यत्वात् । नहि 'यूस्त्र्याख्यौ नदी'ति परिभाषा केनचिन्निर्वाच्यते । स्वरूपेण त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वं हि मिथ्यात्वप्रयोजकमिति, तदभावे शुक्तिरूप्यादेरिव कलञ्जभक्षणेष्टसाधनत्वादेर्मिथ्यात्वमेवानुपपन्नमित्युक्तमधस्तात् । तस्मादीश्वरधर्मभूतनिग्रहानुग्रहसामर्थ्यादिरूपमहिम्नस्तन्नियतस्येवेश्वरे जीवप्रतियोगिकभेदस्य च श्रुतिनिषिद्धत्वमात्रेण न त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वरूपमिथ्यात्वसिद्धिरिति किमनुपपन्नम् । एवमेव जीवेश्वरभेदस्यौपाधिकत्वं निरसनीयम् । निरस्तं चैतदधस्तात् ॥

तथा चानेकजीववादे जीवानेकत्ववत् ईश्वरानेकत्वप्रसङ्गः । शुक्तिरूप्यवदनन्तजीवाज्ञानकल्पितत्वेनेश्वरानन्त्यस्य दुर्वारत्वात् तदज्ञानसमष्टिकल्पितत्वाङ्गीकारे चेश्वरस्य कस्यचित् जीवस्य विद्योदयेन तदाश्रितोपाधिभूताज्ञानस्य विलयात् तज्जीवस्येव तत्कल्पितत्वात् विलयापत्तिः । एकज्ञानविलयेऽपि तत्कृताज्ञानसमष्टिविलयात् । अत एव प्रतिमुक्तिपरमेश्वरस्य विलायपत्तिश्चेति दोषा दुर्घटा इति बिम्बेश्वरवादपक्षः सर्वेषामयुक्त इति ॥

एतेन चरमजीवाश्रिताज्ञानमेव बिम्बेश्वरोपाधिरिति नोक्तदोषावकाश इति परास्तम् । तथा सति तदितरजीवानामीश्वरप्रतिबिम्बत्वे मानाभावात् । येषां विद्योदयेनेश्वरेण बिम्बप्रतिबिम्बभावप्रयोजकाविद्योपाधिविलयस्यैवासम्भवात् यावत् सर्वमुक्तिबिम्बभूतेश्वरभावेन अनवस्थानं क्रमेण भवति मुक्तानामिति पराङ्गीकारस्यैव निर्मूलत्वेन अनुपपत्तेः ॥

अपि च दर्पणाद्युपाधिसान्निध्यबलात्, मुख्य एव अधिष्ठाने यथा तदुपाधिस्थत्वं तदुपाधिगतश्यामत्व-वक्रत्वादिकं बिम्बत्वं प्रतिबिम्बत्वं स्वनिष्ठमुखप्रतियोगिकभेदश्चा-

रोप्यते । एवमविद्याद्युपाधिसान्निध्यबलात् मुख्यस्थानीयेश्वर एवाधिष्ठाने तदुपाधिस्थत्वं तदुपाधिगतावरकत्वं विक्षेपकारित्वादिकं बिम्बत्वं-प्रतिबिम्बत्वं-स्वनिष्ठेश्वरप्रतियोगिक भेद-स्तन्नियतं जीवत्वं-तन्नियत-संसारदुःखादिकं चारोप्यं स्यात् । नचेष्टापत्तिः । तदारोपो जीवस्य वा स्यात्, ईश्वरस्य वा स्यात्, अनुस्यूतचैतन्यस्य वा स्यात्, प्रकारान्तरा-भावात् । तत्र तावज्जीवस्य अस्मदादेरीश्वररूपाधिष्ठानसम्प्रयोग-तत्साक्षात्कारादि-सामग्री-विरहात् तदधिष्ठानकोक्तार्थारोपरूपफलविरहाच्च नोपपद्यत इति । तादृशारोपः ईश्वरस्य वाऽनुस्यूत शुद्धचैतन्यस्य वाऽपतितेतीश्वरस्येश्वरत्वं नित्यभ्रान्तत्वमादाय पर्यवस्येदिति सोपाधिकारोपश्च सर्वोप्यपरोक्ष इति नियमादीश्वरस्य च 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' इत्यादि श्रुत्या सर्वज्ञत्वावेदनात्, स एवापरोक्षभ्रमवानङ्गीकार्यः । नच सर्वं नास्ति इति जानन् सर्वज्ञ इत्युच्यते । नहि घटो नास्ति इति जानन् घटज्ञोऽसौ इत्युच्यते । ततश्चेश्वरस्य नित्यभ्रान्तत्वं वज्रलेपायितम् ॥

अपि च 'तमसा गूळमग्रे' 'मायिनं तु महेश्वरम्' 'माया चाविद्या च स्वयमेव भवति' इति श्रुतिवाक्यपर्यालोचनया परमेश्वरस्यैवाज्ञानाश्रयत्वं तदावृतत्वं च लभ्यत इति, स एव भ्रान्त इति स्वीकारोऽयुक्तः । उदाहृतश्रुत्या तस्यैव सर्वसत्त्वावेदनेन सर्वविषयकापरोक्ष-भ्रमवत्त्वासम्भवात् । नहि जीवस्य सर्वज्ञत्वे मानं श्रुतिरस्ति । प्रत्युताल्पज्ञत्वमेव तस्या-नुभूयते । येन जीव एवाविद्याद्युपाधिः ईश्वरस्य बिम्बत्वं स्वस्य प्रतिबिम्बत्वं तन्नियतं तयोर्भेदं भेदकांश्च धर्मान् अध्यस्यतीति स्वीकारो युक्तः स्यादिति ॥

यद्यपि 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'अनृतेन हि प्रत्यूढाः' इत्यादि वाक्यपर्यालोचनया जीवानामप्यज्ञानाश्रयत्वं तदावृतत्वं च प्रतीयते । तथाऽपि तावन्मात्रेण जीवेश्वरयोः सोपाधिकप्रतिबिम्बभावादिगोचरापरोक्षाध्यासो जीवाश्रितमिति नोपपादयितुं शक्यः । तस्य संसारदशायामीश्वरगोचरसाक्षात्कारवत्त्वस्यैवानुभवबाधितत्वान्निश्रितस्यैव फलस्य सामग्री-कल्पकत्वात् ।

अपि चेश्वरोऽपि जीवाज्ञानकल्पित इति पराभ्युपगमः एवायुक्तः । 'यत् यदज्ञानकल्पितं तत् तं प्रत्यपरोक्षं यथा देवदत्ताज्ञानकल्पितं शुक्तिरूप्यं तं प्रत्यपरोक्षमिति' नियमेन जीवाज्ञानकल्पितत्वे संसारदशायामपि तं प्रतीश्वरस्यापरोक्षत्वप्रसङ्गात् ॥

किञ्चैवं धर्माधर्मादिकमपि जीवाज्ञानकल्पितत्वे तं प्रत्यपरोक्षं स्यात् । ईश्वरज्ञान-कल्पितत्वाङ्गीकारेतु नैष दोषः । तत्रेष्टापत्तेः । कर्तुं शक्यत्वादीश्वरस्य सर्वज्ञत्वात् । तस्मात् बिम्बस्थानीय= ईश्वरः, प्रतिबिम्बस्थानीयो= जीवः, दर्पणाद्युपाधिस्थानीयम् अज्ञा-नादिकमिति पक्षो न युज्यते । तथा च पराभिमतमुक्तिरयुक्तेति स्थितम् ॥

नन्वेवमपि(नन्वेमेव-पा) स्वपक्षेऽपि मुक्तिस्वरूपं दुर्वचनीयमिति चेन्न । तस्य सालोक्य-सारूप्य-सामीप्य-सायुज्यरूपतया सुवचत्वात् । नच सालोक्यादीनां सुखदुःखाभावेतरत्वे-नापुरुषार्थत्वमिति वाच्यम् । स्वतः पुरुषार्थत्वाभावेऽपि तेषां तदुपायत्वेन पुरुषार्थत्वोप-पत्तेः । नच तेषां तदुपादेयत्वे मानाभावः ।

**'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा'**
**'ब्रह्मविदाप्नोति परम्'**
**'सोऽश्नुते सर्वान् कामान् सह'**
**'कामान्नी कामरूप्यनुसञ्चरन् । एतत् सामगायन्नास्ते'**
**'अस्य महिमानमिति वीतशोकः'**
**'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति'**

इत्यादि श्रुतिपर्यालोचनया

**'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तम पुरुषः'**
**'तथा विद्वान् नामरूपाद्विमुक्तः'**
**'परात्परं पुरुषमुपैति दिव्यम्'**
**'ब्रह्मणः सायुज्यं सलोकतामाप्नोति'**
**'परमं साम्यमुपैति'**
**'यो वैतां ब्रह्मणो वेद अमृतेनावृतां पुरीं ।**
**तस्मै ब्रह्म च ब्रह्मा चायुष्कीर्तिं प्रजां ददुः'**
**'तरति शोकमात्मवित्'**
**'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः'**

'यमेवैष वृणुते तेन लभ्यः'
'सम्पद्याविर्भूतः'
'स्वेन शब्दात्'
'उत्तराच्चेदाविर्भूतस्वरूपस्तु'
'श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः'

इत्यादि श्रुति-सूत्र-स्मृति-वाक्यपर्यालोचनया च मुक्तानां लोकविशेषादिकं प्राप्तानां लब्ध-परमेश्वरपरमप्रसादतया अभिव्यक्तस्वस्वरूपपरमेश्वरस्वस्वरूपाणां विचित्रविहारादिमात्राव-गमात्, दुःखमात्रस्पर्शराहित्यवगमात्, सुखप्राप्त्यवगमाच्च ।

'नच पुनरावर्तते न च पुनरावर्तते'
'सर्वान् कामानाप्त्वाऽमृतः समभवत्'
'स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न हीयते न म्रियते न वर्द्धते'
'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।।'
'अनावृत्तिश्शब्दादनावृत्तिःशब्दात्' (ब्र-सू-४-४- २३)

इत्यादि पर्यालोचनया मुक्तानां स्वर्गिणामिव संसारसम्बन्धराहित्यवगमाच्च, अपहतपाप्मत्वादि गुणाष्टकसम्पन्नत्वाच्च । नचेदं सर्वमुपासना फलमेव न ज्ञानफलमिति वाच्यम् । 'विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद' इत्यादावुपासनानामपि ज्ञानात्मकत्वा-वगमेन तेषां ज्ञानविशेषत्वस्यैव न्याय्यत्वात् । नचैवं तद्विधेयत्वानुपपत्तिः । ज्ञानमात्रस्या-विधेयत्वेऽपि तद्विशेषाणां याग-दान-आज्यावेक्षण-नमस्काराणां विधेयत्वदर्शनात् । प्रपञ्चितमेतदन्यत्रेत्यलम् ।।

### ।। अथ मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ।।

ननु मुक्तानन्दानामुपासनाफलत्वे उपासनानां विचित्रत्वेन आनन्दतारतम्यप्रसङ्गः । ज्ञानफलत्वे तु नैषदोषः । भगवज्ज्ञानानां श्रवणोपासनादिनानासाधनसाध्यत्वेऽपि पर-मेश्वरस्य सविशेषत्वपक्षे निर्विशेषत्वपक्षेऽपि च 'नावेदविन्मनुतेदं बृहन्तं सर्वानुभूमात्मानं

साम्पराये' इत्यादेर्ब्रह्मज्ञानत्वेनैव मुक्तानन्दहेतुत्वाभ्युपगमात् । किञ्च मुक्तौ तारतम्याङ्गीकारे 'परमं साम्यमुपैति' इति साम्यश्रुतिविरोधः । सातिशयत्वेन मुक्ते स्वर्गादिवदनित्यत्व-प्रसङ्गः । अधिकदर्शनेन न्यूनस्य दुःखद्वेषादिप्रसङ्गश्चेति । मुक्तौ तारतम्यमेव कथमुपपद्यत इति चेदुच्यते । मुक्तावतारतम्यं किं तत्र भेदभोगादेरेवासत्वात्, किं वा तस्य सत्वेऽपि साम्यात् । नाद्यः । भेदसाधनप्रस्तावोक्तश्रुत्यादिभिस्तत्सिद्धेः । अन्त्येऽपि किं मुक्तजीवेशयो-रप्यतारतम्यं किं वा मुक्तजीवानामेव । नाद्यः । त्वन्मतेऽपि तयोर्विभुत्व-अणुत्व- शेषि-शेषत्व-स्वातन्त्र्य-पारतन्त्र्यादिना तारतम्यात् । अनेकेश्वरापत्त्या जगत्प्रवृत्त्ययोगाच्च । 'अल्पशक्तिरसार्वज्ञम्' इत्यादिभेदसाधनप्रस्तावोक्तश्रुतिभिः,

**'ब्रह्मेशानादिभिर्देवैः यत्प्राप्तुं नैव शक्यते ।**
**तद्यत्स्वभावः कैवल्यं स भगवान् केवलो हरिः'**

इत्यादि स्मृतिभिः,

**'जगद्व्यापारवर्ज्यम्'** (ब्र-सू-४-४-१७) इत्यादिसूत्रैः,

'मुक्तजीवभोगः ईश्वरभोगान्निकृष्टः जीवभोगत्वात्संसारिभोगवत्' एवं मुक्तजीवज्ञानादिकमपि पक्षीकृत्य प्रयोक्तव्यम् । 'ईश्वरानन्दो जीवानन्दादुत्कृष्टः तदवश्य तन्नियामकानन्दत्वात् । यदेवं तदेवम् । यथा सेवकानन्दात् सेव्यानन्दः' 'ईश्वरो जीवस्वभावानन्दादितः उत्कृष्ट-स्वाभाविकानन्दादिमान् । तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् । यो यत्प्रेप्सुत्वे सति यत्र शक्तः स तद्वान् यथासम्मत' इत्याद्यनुमानैश्च विरोधाच्च । न द्वितीयः । त्वन्मतेऽपि जीवान्प्रति शेषिणोऽपि लक्ष्मीतत्वात् तान् प्रति नियामकाद्विष्वक्सेनादिभिश्चेतरजीवानां निकृष्टत्वात् ।

**'सैषाऽऽनन्दस्य मीमांसा भवति । ते ये शतं मानुषा आनन्दाः।**
**स एको मनुष्यगन्धर्वाणामानन्दाः श्रोत्रियस्य चाकामहतस्य'**

इत्यादि तैत्तिरीयश्रुत्या,

**'अथ ये शतं कर्मदेवानामानन्दाः । स एकअजानजा देवानामानन्दः ।**
**यश्च श्रोत्रियोऽवृजिनोऽकामहतः'**

इति वाजसनेयश्रुत्या,

'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः'

इत्याद्यैतरेयश्रुत्या,

नृपाद्याः शतधृत्यन्ताः मुक्तिगा उत्तरोत्तरम् ।
सर्वैर्गुणैः शतगुणा मोदन्त इति हि श्रुतिः ।
मुक्तानामपि सिद्धानां नारायण परायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने (भा-६-१४-५) ।।

इत्यादिस्मृतिभिः,

'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' (ब्र-सू-३-२-२०)

इत्यादि सूत्रैरुक्तवक्ष्यमाणश्रुतितर्कानुगृहीतैः,

'अस्मदादिमुक्तभोगः मुक्तचतुर्मुखभोगान्निकृष्टः अस्मदादिभोगत्वात् संसारस्थास्मदादिभोगवत्' । एवमस्मदादिज्ञानादिकं च पक्षीकृत्य प्रयोक्तव्यम् । 'जीवस्वरूपानन्दः परतन्त्रानन्दत्वसाक्षाद्व्याप्यधर्मेण स्वसजातीयानन्दप्रतियोगितारतम्यवान् । जीवानन्दत्वात् । तदीयवैषयिकानन्दवत्' 'प्रकृतिबन्धनिवृत्तिः स्वसजातीयबन्धनिवृत्त्याश्रय प्रतियोगिकतारतम्यवन्निष्ठा बन्धनिवृत्तित्वात् निगडबन्धनिवृत्तिवत्' इत्याद्यनुमानैश्च विरोधाच्च । स्वरूपसुखानां प्रत्येकमेकत्वेनाणुत्वेन सङ्ख्यापरिमाणकृतवैषम्याभावेऽपि जलसुधापानजन्यसुखयोरिव मधुरमधुरतरत्वादिवत् स्वरूप(सुख-पा)कृतवैषम्यं युक्तम् । प्रसिद्धं च सालोक्यादिमुक्तितः सायुज्यादेरुत्कृष्टत्वम् । नच सायुज्यमैक्यम् । सारूप्यादिमति सालोक्यादिवत् सायुज्यवत्यपि सारूप्यादेः सत्त्वात् । 'चन्द्रमसः सायुज्यं सलोकतामाप्नोति' इत्यादिश्रुतौ 'सायुज्यं चेदिभूभुजः' इत्यादिस्मृतौ च भेदे सत्यपि सायुज्योक्तेश्च । 'सयुजः परमात्मानं प्रविश्य च बहिर्गताः' इत्यादिस्मृतौ सयुजां प्रवेशमात्रोक्तेश्च । सयुजोर्भावः सायुज्यमिति तच्छब्देन सम्बन्धस्यैवोक्तेश्च । 'सालोक्यमथ सामीप्यं सारूप्यं योग एव च' इति स्मृतौ सायुज्ये सम्बन्धार्थ'योग'पदप्रयोगाच्च । तस्मात् सायुज्यंनाम क्षीरनीरवदन्यदेहाविष्टग्रहदेवतादिवच्च संश्लेषमात्रम् । नत्वैक्यम् ।

'हरौ नियतचित्तत्वाद्ग्रहवत्तत्प्रवेशनात् ।
मोक्षं तादात्म्यमित्याहुर्न तु तद्रूपतः क्वचित्' इति स्मृतेः ।

नचोक्ततारतम्यश्रुतिरमुक्तविषया । प्रकृते मनुष्यगन्धर्वादावप्रकृतेऽन्यस्मिन् वा संसारिणि तैत्तिरीयोक्तस्याकामहतत्वस्य वाजसनेयोक्तयोरवृजिनत्वाकामहतत्वयोश्चायोगात् । अकाम-हतत्वं हि कामकृतोपद्रवाभावः नत्वकामत्वम् । 'हत'शब्दवैयर्थ्यात् । स च सत्यकामस्य मुक्तस्यैव । 'सोऽश्नुते सर्वान् कामान्' 'कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि' इत्यादि श्रुतेः । 'स हि मुक्तोऽकामहतः' इति ब्रह्माण्डोक्तेश्च । अवृजिनत्वमप्यदुःखत्वम-पापत्वं वा। उभयमपि मुक्तस्यैव। अपरोक्षज्ञानिन्यपि प्रारब्धपापतत्कार्यदुःखयोः सत्त्वात् । नचाबाधे मुख्यार्थस्त्यागार्हः । श्रोत्रियत्वं च मुक्तस्यैव मुख्यम् ।

'प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः ।
त एव चाप्तकामत्वात्तथाऽकामहता मताः' इति भारतोक्तेः ।

किञ्च प्रकृतमनुष्यगन्धर्वादिपरत्वे 'श्रोत्रियस्य' इत्यत्र 'यश्च श्रोत्रियः' इत्यत्र चैकवचनं समुच्चयार्थ'च'शब्दायुक्तः । नहि सम्भवति वसिष्ठो ब्रह्मिष्ठोऽरुन्धतीपतिश्च तथेति । अप्रकृतसंसारिपरत्वे तु बाधः । चतुर्मुखाद्यानन्दस्यास्मिन्संसारिण्यदर्शनात् । अपि च प्रकृतश्रोत्रियः सर्वत्राप्येकश्चेन्मनुष्यादिभ्यः सावधारणं शतगुणितमनुष्यगन्धर्वाद्यनेकानन्दा एकस्मिन् विरुद्धाः । भिन्नश्चेदकामहतत्वादेरेकरूपतया श्रुतस्याव्यवस्थापकत्वादानन्दव्यवस्था-ऽयोगः । अथ व्यवस्थार्थं तत्र तत्र तत्तत्पदकामः तदितरपदकामश्च विवक्ष्यते तदाऽश्रुतकल्पना बाधश्च । नहीन्द्रादिपदे राजपदे वा निष्कामस्य भिक्षुकस्येन्द्राद्यानन्दानुभवोऽस्ति । उक्तं हि -

'कुत्रचित्कामिनः पुंसः कामाभावात्क्वचिक्वचित् ।
इन्द्रादिसुखभोगोऽस्तीत्यनुभूतिर्हि कुप्यति ।।' इति ।।

नचाबाधे वैराग्यप्रशंसामात्रपरत्वं युक्तम् । तस्मात् श्रुत्या पूर्ववाक्येनामुक्तानां तार-तम्यमुक्तम् । 'श्रोत्रियस्य च' इत्यादिना 'यश्च श्रोत्रिय' इत्यादिना चोत्तरवाक्येन मुक्तस्य तदुच्यते । अपि च 'मुक्तसुखं परपस्परं तारतम्यवत् परस्परं तारतम्यवत्साधनसाध्यत्वात् सम्मतवत्' । नचासिद्धिः । मुक्तिः प्रयागमरणभगवद् द्वेषभक्त्यादिना ज्ञानकर्मसमुच्चयेन वा साध्येति मते प्रयागमरणादीनां वर्णाश्रमकर्मणां च विषमत्वात् । ज्ञानैकसाध्येति सिद्धान्तेऽपि

'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति'

'सर्वे गुणा ब्रह्मणैव समुपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः'

इत्यादिश्रुत्या,

'ब्रह्माऽपि यं वेद नैवेह सम्यगन्ये कुतो देवमुनीन्द्रमर्त्याः'

इत्यादिस्मृत्या देवर्षिमनुष्यादिस्थमुक्तिहेतुर्ब्रह्मज्ञानगतस्य बह्वल्पाल्पतरशाखा श्रवणादि-साध्यत्वस्य बह्वल्पाल्पतरब्रह्मगुणविषयकत्वं विनाऽयोगेनार्थापत्त्या च तत्सिद्धेः । चरम-देहेऽपि हि मर्त्यादिरेव ।

'यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ।
स वै स्वामी स वै भृत्यो गुणलुब्धौ न कामुकौ ।। (भा-७-१०-५)

'मुमुक्षोरमुमुक्षोस्तु वरो ह्येकान्तभक्तिमान्'।[१]

इत्यादिस्मृत्या मुमुक्षुभक्तादमुमुक्षोर्निरुपाधिक भक्तस्याधिक्योक्तेश्च । तदाधिक्यस्य लोकरीति-सिद्धत्वाच्च । 'भक्तिः सिद्धेर्गरीयसि' इत्यादि स्मृत्याऽल्पभक्तिसाध्यमुक्तितोऽधिकमुक्तिहेतु-भक्तेराधिक्योक्तेश्च ।

'अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः' (भ-गी-१३-२६)

इत्यत्र 'अपि' शब्देन,

'स्त्रियो वैश्यस्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।
किं पुनर्ब्राह्मणाः पुण्याः' (भ-गी-९-३२)

इत्यत्र कैमुत्येन च साधनतारतम्येन साध्ये तत्प्रतीतेश्च ।

'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुताः । इति ब्राह्मे ।।

---

(१) गीताभाष्योदाहृतनारदस्मृतिवचनम् (७/२९)

'अधिकं तव विज्ञानमधिका च गतिस्तव' इति मोक्षधर्मे च साधनतारतम्येन साध्ये तदुक्तेश्च । 'विकल्पो विशिष्टफलत्वात्'(ब्र-सू-३-३-६१) इति सूत्रे त्वया विकल्पेन मोक्षहेतुत्वेनोक्तानां च दहराक्षरादिविद्यानामधिकाल्पगुणविषयत्वेन तारतम्याच्च । त्वद्रीत्या प्रत्येकं मोक्षहेत्वोर्निरन्तरचिन्ताभरन्यासरूपयोर्भक्तिप्रपत्त्योः स्वरूपतः कर्मापेक्षानपेक्षाभ्याम् आवृत्त्यनावृत्तिभ्यां च विषमत्वाच्च । नच तयोरुक्तरीत्याऽधिकाल्पत्वेऽपि विश्वासाल्पत्वाधिक्याभ्यां साम्यमिति वाच्यम् । विश्वासस्यावर्तनीयायां भक्तावेव यावदावृत्त्यपेक्षितत्वेनानावर्तनीयप्रपत्तितोऽधिकत्वात् । यदि च फलसाम्येन साधनसाम्यार्थं प्रपत्तावधिकविश्वासः कल्प्येत, तर्हि अन्योन्याश्रयः । साधनवैषम्येऽपि साध्यसाम्ये च अधिकविधात्र्याः श्रुतेरनुवादेयत्वं फलप्रदातुरीश्वरस्य वैषम्यादिकं च स्यात् । नच देवमनुष्यादीनां तत्र शक्त्यशक्तिमात्रेण शक्ताशक्तानुष्ठितनित्यकर्मण इव न फलवैषम्यमिति वाच्यम् । अशक्तार्जितस्य ज्ञानस्य अन्धपङ्ग्वादिकृतकाम्यकर्मण इव विकलत्वे काम्यमोक्षसाधनत्वायोगेन तत्साधनत्वाय स्वोचितमुक्तिफलं प्रत्यविकलताया वक्तव्यत्वात् ॥

एतेन प्रपत्त्योर्विषमत्वेऽपि शक्ताशक्तविषयत्वात् फलसाम्यमिति निरस्तम् । तथाऽश्रवणात् । कल्पने चातिप्रसङ्गात् । तस्मात् साधनतारतम्यात् मुक्तितारतम्यम् ॥

अत एव –

**'कर्मणामल्पमहतां फलानां च स्वगोचरे ।**
**विभागस्थानसामान्यादविशेषेऽपि चोदित'**

इति वार्तिकेन अविशेषेण स्वर्गसाधनत्वेन श्रुतयोरपि ज्योतिष्टोमाग्निहोत्रयोस्तारतम्यात् । तत्साध्यस्वर्गेऽपि तदुक्तम् ॥

उक्तं च –

**'युक्तं च साधनाधिक्यात् साध्याधिक्यं सुरादिषु ।**
**नाधिक्यं यदि साध्ये स्यात् प्रयत्नः साधने कुतः'** इति ॥

किञ्च 'तस्य तावदेव चिरं यावन्न विमोक्ष्येत अथ सम्पत्स्यते' इत्यादि श्रुत्या 'तस्य कार्यं न विद्यते' इत्यादि स्मृत्या च यस्य स्थितप्रज्ञस्य मोक्षाय कर्तव्यान्तराभाव उक्तः,

यस्य अपरोक्षज्ञानिनो भक्तस्य प्रपन्नस्य वा शुकादेर्नित्यादिकर्मब्रह्मध्यानादिकं च । न तावदज्ञस्येव विविदिषादिद्वारा वा पापक्षयादिद्वारा वा ज्ञानादेः सन्निपत्त्यङ्गम् । तस्य सिद्धत्वात् । नापि फलोपकार्यङ्गम् । मुक्तौ ज्ञानकर्मणोः समुच्चयापातात् । कर्मणां विचित्रत्वेन मोक्षवैचित्र्यापाताच्च । मोक्षाय कर्तव्यान्तराभावपरोक्तश्रुत्यादिविरोधाच्च । नापि फलान्तरार्थम् । नित्यत्वात् ज्ञानिनोऽनिष्टत्वाच्च । नापि लोकसङ्ग्रहार्थमीश्वराज्ञा पालनार्थं वा । तयोरपि स्वतो फलत्वात् । नपि ईश्वरप्रीत्यर्थम् । भक्त्यादिनैव मोक्षहेतुप्रतीतेः सिद्धेः । नापि तत्प्रतीत्यतिशयार्थम् । फलातिशयाभावे तस्य पारिभाषिकत्वापातात् । तद्वैयर्थ्याच्च । नापीश्वरवत् लीलार्थम् । 'आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यन् शान्तो भवेत् दान्तो भवेत्' 'पश्यन्नपीममात्मानं कुर्यात् कर्माविचारयन्' इत्यादिना अपरोक्षज्ञानिनः,

**'मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।**
**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु'** (भ-गी-११-५५)

इत्यादिना भक्तिप्रपत्तिमतश्च तद्विधानात् ।

**'शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः ।**
**वर्षायुतं च सूर्येण तपोऽर्वाक् शिरसा कृतम्'** (अनु-व्या-३-४-स्तुत्यधिकरणम्)

इत्यादिस्मृतिषु क्लेशेनानुष्ठानोक्तेश्च । सूर्यादयश्चापरोक्षज्ञानिनः । **'न देवपदवीं प्राप्त ब्रह्म-दर्शनवर्जिताः'** इत्यादिस्मृतेः । अद्वैतिभिः 'यावदधिकारम्'(ब्र-सू-३-३-३३) इति सूत्रे क्लेशेन कर्मानुष्ठातृवसिष्ठादीनामपरोक्षज्ञानित्वोक्तेश्च[१]। तस्मात् अपरोक्षज्ञानोत्तरं कर्मादिकं मुक्तावा-नन्दातिशयार्थमेव ॥

ब्रह्माण्डे च–

**'ज्ञानान्मोक्षो भवत्येव सर्वकार्यकृतोऽपि तु ।**
**आनन्दो ह्रसतेऽकार्यात् शुभं कृत्वा च वर्धते '[२] इति ॥**

---

(१) ' एवं प्रारब्धाधिकारलक्षणफलविद्याकर्मपुरुषोवसिष्ठादिर्विद्वानपि तत्क्षयं प्रतीक्षमाणो युगपत्क्रमेण वा तत्तद्देहपरिग्रहपरित्यागौ कुर्वन्' इत्यादि भामती वाक्यतात्पर्यम् ॥

(२) सूत्रभाष्य-३-४-४ उदाहृत ब्रह्माण्डस्मृतिः ॥

स्मर्यते च –

'सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासयाकर्मभिश्च भक्त्या चानन्दचित्रता' इति [१]।।

अत एव 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्मक्षीयते' इति श्रुतौ ज्ञानिकृतस्य कर्मणो मोक्षान्वयादक्षयफलत्वमुक्तम् । नहि मोक्षादन्यत्राक्षयत्वम् । परमसाम्यश्रुतिस्तु दुःखाभाव-सत्यकामत्वादिना सरस्सागरयोरिव स्वयोग्यानन्दपूर्त्या च साम्यात् । 'लिङ्गभेदः परानन्दो दुःखाभावः समा मताः'[२] इति स्मृतेः । अन्यथा मुक्तस्येश्वरवत् जगत्स्रष्टृत्वादिकं स्यात् । तच्च 'जगद्व्यापारवर्जम्'(ब्र-सू-४-४-१७) इति सूत्रे[३] त्वयापि निषिद्धम्[४]। अत्र 'जगद्व्यापार'शब्दः उपलक्षणार्थ इति तवापि सम्मतम् । अन्यथा मुक्तस्य स्वातन्त्र्याद्यपि स्यात् । 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र-सू-४-४-२२) इति सूत्रस्थ'मात्र'शब्दस्य तु मन्मते भोगसामान्य एव साम्यं नतु तद्विशेष इत्यर्थः । त्वन्मतेऽपि भोगमात्रे मुक्तस्य ब्रह्म-साम्याल्लिङ्गात् 'जगद्व्यापारवर्जम्' इति व्याख्यातत्वादवधारणार्थो 'मात्र'शब्दो नतु कार्त्स्न्यार्थः [५]। सत्यकामत्वं च जगत्स्रष्टृत्वादाविवाधिकानन्देऽपि वा कामस्यैवाभावा-द्युक्तम् । वाराहे च-

'स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि ।
मुक्तानां नैव कामः स्यादन्यान् कामांस्तु भुञ्जते' इति ।।

अतिशयत्वेऽपि नित्यत्वं चेश्वरादपकृष्टत्व इव मुक्तान्तरेण साम्य इव च श्रुत्यादि-बलाद्युक्तम् । अन्यथोत्कर्षस्याप्यनित्यत्वव्याप्तेर्ब्रह्मानन्दोऽप्यनित्यः स्यात् । नच द्वेषेर्ष्यादि-प्रसङ्गः ।

---

(१) सूत्रभाष्य-३-४-४ उदाहृत बृहत्तन्त्र स्मृतिः ।।

(२) गीताभाष्य २ अध्याये उदाहृतनारायणाष्टाक्षरकल्पवचनम् ।।

(३) 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' इति शाङ्करब्रह्मसूत्रपाठम् ।।

(४) 'जगदुत्पत्त्यादिव्यापारंवर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति, जगद्व्यापारस्तु नित्य-सिद्धस्यैवेश्वरस्य' इति शाङ्करसूत्रभाष्यम्

(५) 'साक्षाद्भेदमात्रेण तेन परमेश्वरेण साम्याभिधानादपि व्यपदेशलिङ्गादिति' इति भामतीवाक्यम् ।।

'निश्शेषगत दोषाणां वहुभिर्जन्मभिः पुनः ।
स्यादापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादि ततः कुतः ।।

भवेयुर्यदि चेर्ष्याद्याः समेष्वपि कुतो न ते ।
तप्यमानः समान् दृष्ट्वा द्वेषेर्ष्यादियुता अपि ।।

दृश्यन्ते बहवो लोके दोषा एवात्र कारणम् ।
यदि निर्दोषता तत्र किमाधिक्येन दूष्यते' इत्युक्तेः ।।

नच मुक्तिः स्वरूपाविर्भावमात्ररूपा, स्वरूपाणि चैकरूपाणि इति कथं तारतम्यमिति वाच्यम् । 'यो यद्रूपः स तद्रूपः निसर्गोह्येष भवति' इत्यादिश्रुत्या –

'अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम् ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।।

महात्मनस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।।(भ-गी-९-११.१३)

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्विकी राजसी चैव तामसी चेति तां श्रुणु ।।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव स ।। (भ-गी-१७-२.३)

इत्यादि स्मृत्या चतुर्मुखादेरितरेभ्य उत्कर्षस्य दृष्टेनादृष्टेन वाऽऽगन्तुकहेतुना साध्यत्वे तत्रापि हेत्वन्तरान्वेषणेनाऽनवस्थापत्त्याऽनादियोग्यता हठापरपर्यायः स्वभावो हेतुर्वाच्यः इत्यादि युक्त्या च तारतम्य स्वभावत्वात् ।

'तद्यथा पेशस्करी पेशसो मात्रमुपादायान्यन्नवतरं कल्याणं रूपं तनुते । एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणं रूपं कुरुते । पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वा अन्येषां भूतानाम्'

इति श्रुतौ लिङ्गशरीराविद्यानिवृत्तेः ऊर्ध्वमपि पितृत्वाद्युक्तेश्च । नच मुक्तस्य देहाद्यस्ति चेत्

दुःखादि स्यात् न चेद्भोगायोग इति वाच्यम् । ईश्वरवच्चिदात्मकस्य वा कर्मानारब्धस्यैच्छिकस्य प्राकृतदेहस्य वा सत्त्वात् । अस्ति हि तावत् चिद्रूपं शरीरम् ।

**'चिदानन्दशरीरेण सर्वे मुक्ता यथा हरिः ।**
**भुञ्जते कामतो भोगांस्तदन्तर्बहिरेव च'** इतिश्रुतेः ।

न्यायविवरणे 'नच मुक्तस्य चिदात्मकदेहोऽपि नास्तीति वाच्यम् । अकृत्रिमत्वेन तस्यानपगमात्' इत्युक्तेश्च[१] । अस्ति च जडशरीरम् ।

**'स्वेच्छया वा शरीराणि तेजो रूपाणि कानिचित् ।**
**स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन'** इति ब्रह्मवैवर्तोक्तेः ।

तत्वप्रदीपे तु 'शुद्धप्रकृतिमयानि ज्योतीरूपाणि सुखैकतानानि शरीराण्यनुप्रविश्य' इत्युक्तत्वाच्च[२] । [३]'चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथानन्दी ह्येष भवति' इति देहद्वयश्रुतेश्च । मोक्षधर्मे च-

**प्रकृतिं चाप्यतिक्रम्य गच्छन्त्यात्मानमव्ययम् ।**
**परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम् ।**
**इन्द्रियाण्यनुबुध्यन्ति स्वदेहं योगिनो नृप ।**
**करणान्यात्मनस्तानि सूक्ष्मैः पश्यति तैस्तु सः ।**
**स जिघ्रति यथा न्यायं स्पर्शान् स्पृशति च प्रभोः'** इति ।

नच प्राकृतदेहयोगे दुःखाद्यापत्तिः । मुक्तस्य वश्यप्रकृतित्वेन प्रकृतिवशत्वाभावात् ।

---

(१) 'नच पारंगतत्वान्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीति वाच्यम् । अकृत्रिमत्वात्तस्य देहस्यानपगमात्'इति न्यायविवरणे चितिमात्राधिकरणे(ब्र-सू-४-४-६)उक्तम् इत्यर्थः ॥

(२) 'प्रदीपवशा इति सूत्रभाष्ये' नित्यशुद्धचिदानन्दज्योतिरात्मनो मुक्ता युगपन्नानाभूरिभोगेच्छया शुद्ध-प्रकृतिमयानि ज्योतीरूपाणि सुखैकायतनानि शरीराण्यनुविश्येच्छानुसारेण प्रविश्य पुनरात्मज्योतिषोऽति-प्रकाशयन्तः सुखमेवानुभवति'इति पूर्णवाक्यम् ॥

(३) 'स एव एष एवंवित्परमभिपश्यत्यभिशृणोतिज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽआनन्दी ह्येवैष भवति नानानन्दं कश्चिदुपस्पृशति' इति 'ॐ भावं जैमिनिर्विकल्पाम्नानात्ॐ' (ब्र.सू. ४-४-११) इति सूत्रभाष्योदाहृतऔद्दालकश्रुतिः ॥

नहि यस्य वह्न्यादिर्वश्यस्तस्य तद्योगजं दुःखम् । उक्तं हि न्यायविवरणे 'मुक्तानां वशिता यतः' इति[१]।

तत्त्वप्रदीपे च 'वश्य प्रकृतीनाम्' इति[२]। भाष्ये च 'शरीरमनुप्रविश्य पुण्यानेव भोगाननुभवति नतु दुःखादीन् । यथा प्रदीपो(प्रकाशो-पा) दीपिकादिषु प्रविष्टस्तत्स्थं तैलाद्येव भुङ्क्ते । नतु कार्ष्ण्यादि' इति । सूत्रितं च 'प्रदीपवदावेशस्तथा हि दर्शयति' (ब्र-सू-४-४-१५) इति । 'न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतिस्तु कर्मारब्धदेहविषया । मुक्तस्याशरीरत्वश्रुतिरपि तन्निरुक्त्यभावात् । नहि तानि शीर्यन्ते । तच्छरीरस्य लोकविलक्षणत्वाच्च अभावोक्तिः । अप्रहर्षमनानन्दमित्यादिवत् । उक्तं च 'ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जनाः' इति । कथमन्यथा सदेहेष्वेव जयादिषु 'देहेन्द्रियासु हीनानाम्' इत्युक्तिः । तस्मात्तरतमभावापन्नमुक्तामुक्तब्रह्मरुद्रादिनियामको भगवान् श्रीनृहरिः सर्वोत्तमः इति सिद्धम् ॥

॥ इति मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ॥

**॥ चतुर्थपरिच्छेदसमाप्तिः ॥**

**नमो निरस्तदोषाय कल्याणगुणशालिने ।**
**प्रह्लादवरदायास्मै श्रीनृसिंहाय सर्वदा ॥१॥**

**मत्प्रेरकेण हरिणा या पूजा स्वस्य कारिता ।**
**वाग्यज्ञरूपा नृहरिस्तया प्रीणातु मन्मुदे ॥२॥**

**धर्मोज्जीवनमात्रलोलुपतया कर्णाटसिंहासने**
**स्थित्वापि क्षितिरक्षणं विदधतः श्रीरङ्गरायस्य यः ।**

(१) 'देहाभावाच्च भावाच्च निर्भोगित्वं च दुःखिताम् । यान्त्यमुक्ता नोभयं च मुक्तानां वशिता यतः' इति पूर्णपाठः ॥

(२) 'तथाऽपि वश्यप्रकृतीनां वैचित्र्यकौतुकवता शरीरयोगेनच सुशक इति गुण एव ''ॐ प्रदीपवशावेशस्तथाहि दर्शयति' इत्यत्रोक्तम् ॥

प्राणो रायसनारसिंहसचिवस्तेनार्थितस्तन्मुदे
अकार्षीत् श्रीविजयीन्द्रसंयमिवरः श्रुत्यर्थसारं सुधीः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां पद-वाक्य-प्रमाण-पारावार-पारीण-धुरीणानां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण-सर्वतन्त्रस्वतन्त्रेण श्रीमद्विजयीन्द्रभिक्षुणा विरचिते श्रुत्यर्थसारे परोक्तमोक्षस्वरूपनिरसनपूर्वकं स्वाभिमतमोक्षस्वरूपसमर्थनं नाम चतुर्थः परिच्छेदः[१] ।।

श्रीनृसिंहाय नमः । श्रीहरये नमः । श्रीकृष्णायनमः ।।

- - - - -

(१) नमामि नारायणपादपङ्कजं करोमि नारायणपूजनं सदा ।
वदामि नारायणनामनिर्मलं स्मरामि नारायणतत्त्वमव्ययम् ।। (लिपिकारलिखितश्लोकम्)

लिपिकारैः तुळुताळपत्रान्ते लिखितस्वीयवाक्यानि –

श्रीमद्विश्वेन्द्रपूज्यपादशिष्यस्य विबुधवन्द्याह्वयस्य इदं पुस्तकम् । पुस्तकान्तरं मठे स्थापनार्थं; मठे एकं पुस्तकं तिष्ठति । नन्दनसंवत्सर ।

श्रीविबुधवन्द्यतीर्थास्तु काणियूरुमठाधीशाः, ४२० अथवा ३६० वर्षात् पूर्वं (प्रायशः क्रि.श. १५३२ अथवा क्रि.श. १५९२) तत्पीठमलङ्कृतवन्तः । तेषां समये श्रुत्यर्थसारमिदं पुस्तकान्तरेण लेखयित्वा अध्ययनार्थं काणियूरुमठे स्थापितवन्तः । तैः लेखयितताळपत्रस्तु सोदामठाधीश श्रीविश्वोत्तमतीर्थश्रीपादैः सङ्गृहीतमासीत् । तदनुसारेणेदं लिप्यन्तरं कृतमिति विज्ञापयितुं मोदामहे।

# अथ श्रुत्यर्थसारे उदाहृतप्रसिद्धश्रुत्यादीनां सङ्ग्रहः

१. 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः'
पृथगुपदेशात्(ब्र-सू-२-३-२८)इति सूत्रभाष्योदाहृत कौशिकश्रुतिः ।।

२. 'भेदव्यपदेशात् (ब्र-सू-१-३-५)

३. 'भेदव्यपदेशाच्चान्यः'(ब्र-सू-१-१-२१)

४. 'पृथगुपदेशात्'(ब्र-सू-१-२-२०)

५. 'स्वाहाकारं यजति'(तै-सं-२-५-११)

६. 'सप्तदशप्राजापत्यान् पशूनालभते'(जै-सू-२-२-२१)

७. 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः'(जै-सू-२-२-२२)

८. 'वाजिभ्यो वाजिनम्'(जै-सू-२-२-१३)

९. 'गगनं गगनाकारम्'सागरः सागरोपमः इत्यादिवत्–
इति भगवद्गीतातात्पर्यद्वितीयाध्यायोदाहृतवचनम् ।।

१०. 'क्षेत्रज्ञं चापि मां विद्धि'(भ-गी-१३-३)

११. 'सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ।
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः (भ-गी-१८-४०)

१२. द्रव्यासुव्यवसायेषु सत्वमस्त्री तु जन्तुषु'(अ-को-वा-वर्ग)

१३. 'एवं वेत्थ नु त्वं काप्येतमन्तर्यामिणम्'(बृ-उ-५-७-९)

१४. 'अम्बुवदग्रहणात्'(ब्र-सू-३-२-१९)

१५. 'विधिर्वा स्यादपूर्वत्वाद्वेदिमात्रं ह्यनर्थकम्'(जै-सू-३-४-१२)

१६. 'छन्दोभिधानानान्नेति चेत्'(ब्र-सू-१-१-२५)

१७. 'नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात्'(जै-सू-२-४-८)

१८. 'सौमिकं हि(तु) प्रणयनमवाच्यं हीतरत्'(जै-सू-७-३-८)

१९. 'बहुप्रमाण संवादश्च दार्ढ्यहेतुरेव' विष्णुतत्त्वनिर्णये प्रथमपरिच्छेदे उक्तम् ।।

२०. 'तत्प्रतिषिध्य प्रकृतिर्नियुज्यत सा चतुःत्रिंशद्वाच्यत्वात् '(जै-सू-९-४-१८)

२१. 'मृडमृदगुधकृशक्लिशवदवसःक्त्वा'(पा-सू-१-२-७(३३२३)

२२. 'नत्त्वासेट्'(पा-सू-१-२-१८(३३२२)

२३. 'अग्निर्हिमस्य भेषजम्'(तै-सं-७-४-१८)

२४. 'तदर्थशास्त्रात्'(जै-सू-१-२-३१)

२५. वाचस्पतिवाक्यम् 'यत्र तु प्रमाणान्तर संवादः तत्र प्रमाणान्तरादिना- अर्थवादादपि सोऽर्थः प्रसिध्यति । द्वयोः परस्परानपेक्षयोः प्रत्यानुक्षानुमानयोरिव एकत्रार्थे प्रवृत्तेः । प्रमात्रपेक्षया त्वननुवादत्वं (त्वनुवादत्वम्-पा) । प्रमाता हि अव्युत्पन्नः प्रथमं यथा प्रत्यक्षादिभ्यो अर्थमवगच्छति न तथा आम्नायते । तत्र व्युत्पत्त्यपेक्षत्वात् 'इति ।।

२६. 'प्रकरणन्तु पौर्णमास्यां रूपावचनात्' (जै-सू-२-२-३)

२७. प्रकरणं पौर्णमास्यां तु रूपावचनात्'(जै-सू-२-२-३)

२८. 'यदाग्नेयोऽष्टाकपालोऽमावास्यायांच पौर्णमास्यांचाच्युतो भवति (तै-सं-२-६-३)

२९. तस्माद् बर्हिषि रजतं न देयम्'(तै-सं-१-५-१-२)

३०. 'अकः सवर्णे दीर्घः'(पा-सू-६-१-१०१(८५)

३१. 'आदित्यो यूपः' (तै-ब्रा-२-१-३५)

३२. तत्सिद्धिः जातिः सारूप्यप्रशंसाक्रमभूमिलिङ्गसमवायगुणाश्रयाः' (जै-सू-१-४-(२३)

३३. सत्यं वद,धर्मंचर'(तै-उ-१-२३)

३४. 'सत्यवाक्यो दृढव्रत' 'भूतभव्यभविष्यज्ञ सत्यवादी दृढव्रतः'
इति महाभारते मोक्षधर्मे चतुरशीत्युत्तरशततमोऽध्याये-३९ श्लोकम् ।।

३५. यूस्त्र्याख्यौ नदी (पा-सू-१-४-३(२६६)

३६. 'वाचं धेनुमुपासीत'(बृ-उ-७-१०-१)

३७. 'सोऽरोदीद् यदरोदीत्'(तै-सं-१-५-१-१)

३८. 'मन्त्रोहीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह'– शिक्षाग्रन्थे,महाभाष्ये पस्पशाह्निकोदाहृतवाक्यम् ।।

३९. 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्चतत्सर्वंव्याप्य नारायणः स्थितः' (म-ना-उ)

४०. 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति'(भ-गी-६-३०)

४१. 'यदेवेह तदमुत्र यदमुत्र तदनु इह'(कठ-उ-२-१)

४२. 'तदधिगमउत्तरपूर्वाघयोरश्लोषविनाशौ तद्व्यपदेशात्' (ब्र-सू-४-१-१३)

४३. 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति । तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यम् इति । तद् यत्सत् तदमृतं । अथ यत् ति तन्मर्त्यम् । अथ यत् यं तेनोभे'(छां-उ-८-३-५)

४४. 'माया चाविद्या'(नृ-उ-ता-उ-९)

४५. 'पदे जुहोति'(तै-सं-६-१-८-१)

४६. 'गार्हपत्ये पत्नीसंयाजां जुहोति'(तै-ब्रा-१-१-१०-३९)

४७. 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये'(भ-गी-७-३)

४८. 'तेन रक्तं रागात्'(पा-सू-४-२-१(१२०२)

४९. 'उद्धृतासि वराहेण कृष्णेन शतबाहुना'(म-ना-उ-१-३९)

५०. 'मृगं न भीममुपहत्नुमुग्रम्'(ऋ-सं-२-३३-११)

५१. 'आनन्दमयोऽभ्यासात्'(ब्र-सू-१-१-१२)

५२. 'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान् विष्णुरैश्वर्यात् पुरुषोत्तमः' तैत्तिरीयोपनिषद्भाष्योदाहृतब्रह्माण्डपुराणस्मृतिः ॥

५३. 'द्यावाभूमी जनयन् देव एकः'(श्वे-उ-३-३)

५४. 'अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयमात्मा मे शुद्ध्यन्ताम्'(म-ना-उ-६६-१०)

५५. 'अङ्गुष्ठमात्रः पुरुषो मध्ये'(म-ना-उ-७१-१)

५६. 'वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः' – कृष्णामृतमहार्णवोदाहृतश्लोकम् ॥

५७. 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्''पतिं पतीनां परमम्'(श्वे-उ-६-७)

५८. 'किं कारणं ब्रह्म कुतस्म जाता । जीवाम केन क्व च सम्प्रतिष्ठा'(श्वे-उ-१-१)

५९. 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मनावीशते देव एकः'(श्वे-उ-१-१०)

६०. धर्मावहं पापनुदं भगेशं ज्ञात्वाऽत्मस्थममृतं विश्वधाम'(श्वे-उ-६-६)

६१. 'सर्वे वेदाः सर्वे घोषाः एक एव व्याहृतिः'(ऐ-उ-२-२-२)

६२. 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्'(ब्र-सू-३-३-४३)

६३. 'ममैवांशो जीवलोके'(भ-गी-१५-७)

६४. 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्तिच '(भ-गी-४-१२)

६५. 'न यत्र माया किमुतापरे हरेरनुव्रताः यत्र सुरासुरार्चिताः ।

'श्यामावदाताः शतपत्रलोचनाः पिशङ्गवासाः(वस्त्रा)सुरुचः सुपेशसः' (भा-२-९-१०,११)

६६. 'अग्रेरापः'(तै-उ- २-३)

६७. 'नावेदविन्मनुतेदं बृहन्तम् '(तै-आ-३-१२-९)

६८. 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' विष्णुतत्त्वनिर्णयप्रथमपरिच्छेदाहृत स्मृतिः ॥

६९. 'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदापि विपरीतत्वं शिष्टाकोपेयथोदितम्' जैमिनूसूत्रं -१-३-४-पदार्थप्राबल्याधिकरणोक्त-न्यायेनेत्यर्थः ॥

७०. 'जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते ॥
अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेत् '(अनु-३-२-१)

७१. 'व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।
भेदज्ञानेऽपि चाङ्गावरवह्निवत् स्वाविविक्तवत् ॥१॥

७२. भवन्ति व्यवहाराश्च नहि प्रत्यक्षगानपि ।
अर्थान् यथानुभवतः प्रतिपादयितुं क्षमाः '(अनु-३-२-१)

७३. 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुः'

७४. 'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।

७५. सर्वतः श्रुतिमल्लोके'(श्वे-उ-३-१६)

७६. 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'(ब्र-सू-४-१-३)

७७. 'परीक्ष्य लोकान् कर्मचितान्'(आ-उ-२-११)

७८. यत्साक्षादपरोक्षात् ब्रह्म'(बृ-उ-३-४-१

७९. 'ज्ञाज्ञौ'(श्वे-उ-१-९)

८०. 'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति' (श्वे-उ-१-९)

८१. 'अनृतेन हि प्रत्यूढाः'(छां-उ-८-३-२)

८२. 'तम आसीत् तमसा गूळमग्रे'(ऋ-सं-१०-१२९-३)

८३. 'आनीदवातं स्वधया तदेकम्'(ऋ-सं-१०-१२९-२)

८४. 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्'(तै-उ-२-१२)

८५. 'नान्योऽतोऽस्ति द्रष्टा'(बृ-उ-५-८-११)

८६. 'यदाग्नेयोऽष्टाकपालो भवति' (तै-सं-३-६-३)

८७. असद्वा इदमग्र आसीत्' (तै-उ-२-१५)

८८. 'नायमात्मा प्रवचनेन लभ्यः' (कठ-उ-१-२-२३)

८९. 'सदेव सोम्येदमग्र आसीत्' (छा-उ-६-२-१)

९०. 'कथमसतः सज्जायेत' (छां-उ-६-२-२)

९१. असन्नेव स भवति ।असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो विदुरिति' (तै-उ-२-१२)

९२. 'इदं वा अग्रे नैव किञ्चनासीत्' (तै-आ-२-२-९)

९३. 'अलक्षणमव्यपदेश्यमव्यवहार्यम्' (मा-उ-२-१)

९४. 'सत्यं ज्ञानम्' (तै-उ-२-२)

९५. 'नेह नानाऽस्ति किञ्चन' (कठ-उ-२-११)

९६. 'अस्तीत्येवोपलब्धव्यम्' (कठ-उ-३-१३

९७. 'नोसदासीत्' (ऋ-सं-१०-१२९-१)

९८. 'जुष्टं यदा पश्यत्यमीशं अस्य महिमानमिति वीतशोकः' (आ-उ-५-२)

९९. 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे-उ-१-६)

१००. 'अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनि मुक्ताः' (श्वे-उ-१-७)

१०१. 'तत्वमसि' (छां-उ-३-८-७)

१०२. 'तमेवं विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय' (श्वे-उ-३-८)

१०३. 'ब्रह्मवेद ब्रह्मैव भवति' (आ-उ-६-९)

१०४. 'यदापश्यःपश्यतेरुग्मवर्णम्' (मु-उ-३-३-२)

१०५. 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे-उ-६-८)

१०६. 'अथ समं सर्वम्' अमर-कोश-विशेष्यनिघ्नवर्गः

१०७. 'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः' (ई-उ-७)

१०८. 'अशब्दम् ' (कठ-उ-१-२-१५).

१०९. 'केवलो निर्गुणश्च' (श्वे-उ-६-११)

११०. 'नेन्द्रियाणि नानुमानं वेदाह्येवैनं वेदयन्ति' पिप्पलादश्रुतिः ॥

१११. 'सर्वे वेदा यत्पदमामनन्ति'(कठ-उ-१-१-५२)

११२. 'सर्वे वेदा यत्रैकं भवन्ति'(तै-आ-३-११)

११३. 'वेदैश्च सर्वैरहमेववेद्यः'(भ-गी-१५-१५)

११४. 'एतमेव ब्रह्मेत्याक्षते'(ऐ-उ-२-२-१२)

११५. 'यमिन्द्रमाहुः तदुसत्यमाहुः'(तै–ब्रा-३७-९-३)

११६. 'तदेव ब्रह्मपरमं कवीनाम्'(म-ना-उ-१-६)

११७. 'ब्रह्मैव वाचः परमं व्योम'(तै-सं-७-४-१८-४६)

११८. 'एकमेवाद्वितीयम्'(छां-उ-६-२-१)

११९. 'यस्मिन् द्यौः'(आ-उ-२-२-५)

१२०. 'सत्यकामः सत्यसङ्कल्पः'(छां-उ-३-८-७)

१२१. 'यः सर्वज्ञः सर्ववित्'(आथ-उ-१-१-९)

१२२. 'सर्वगन्धः सर्वरसः'(छां-उ-३-१४-४)

१२३. 'परास्य शक्तिर्विविधैव श्रूयते'(श्वे-उ-६-८)

१२४. 'नित्यं विज्ञानमानन्दं ब्रह्म'(बृ-उ-)

१२५. 'एष नित्यो महिमा ब्राह्मणस्य '(बृ-उ-६-४-२३)

१२६. 'यन्मनसा न मनुते'(केन-उ-१-६)

१२७. 'मनसैवानुद्रष्टव्यम्'(कठ-उ-१-२-९)

१२८. 'दृश्यतेत्वग्र्या बुध्या'(कठ-उ-१-१२

१२९. 'अवचनेनैव प्रोवाच' बाष्कलश्रुतिः

१३०. 'वचसां वाच्यमुत्तमम्' 'कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्' जितन्तेस्तोत्रम् ॥(४-७)

१३१. 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्'(म-ना-उ-१२-१)

१३२. 'आदित्यवर्णं तमसः परस्तात्'(श्वे-उ-३-८)

१३३. 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' (श्वे-उ-४-२०)

१३४. 'आकाशस्तल्लिङ्गात्'(ब्र-सू-१-१-२२)

१३५. 'त आप ऐक्षन्त'(छां-उ-६-१-४)

१३६. 'मृदब्रवीत्'(श-त-ब्रा-६-१-३)

१३७. 'अस्मान्मायी सृजते विश्वमेतत्' (श्वे-उ-४-९)
१३८. 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति' (छा-१-१-१०)
१३९. 'आत्मन आकाशः संभूतः' (तै-उ-२-३)
१४०. 'अव्यक्तात्पुरुषःपरः' (कठ-उ-१-११)
१४१. 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य,सच्च त्यच्चाभवत्' (तै-उ-२-१४)
१४२. 'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं संप्राविशत् प्राश्चोऽहं प्रत्यश्चोऽहम्' (अथ-शि-उ-१)
१४३. 'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' (भ-गी-१०-४१)
१४४. 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन' (बृ-उ-६-४-२२)
१४५. 'सर्वकर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते' (भ-गी-४-३३)
१४६. 'भिद्यते हृदयग्रन्थिः' (आ-उ-४-१०)
१४७. 'कश्छन्दसां योगमावेद धीर' (ऋ-सं-१०-१९-९)
१४८. 'नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्'
जिज्ञासाधिकरणसूत्रभाष्योदाहृतभाल्लवेयश्रुतिः ॥
१४९. 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'
१५०. 'यो देवानां नामधा एक एव ' (ऋ-सं-१०-१९-९)
१५१. 'यमन्तः समुद्रे कवयो वयन्ति' (म-ना-उ-१-३)
१५२. 'तत्तु समन्वयात्' (ब्र-सू-१-१-४)
१५३. 'अथातो ब्रह्म जिज्ञासा' (ब्र-सू-१-१-१)
१५४. 'जन्माद्यस्य यतः' (ब्र-सू-१-१-२)
१५५. 'तमीश्वराणां परमं महेश्वरम्' (श्वे-उ-६-७)
१५६. 'तस्य नाम महद्यशः' (म-ना-उ-१-१०)
१५७. अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वे-उ-३-१९)
१५८. 'अन्तस्तद्धर्मोपदेशात्' (ब्र-सू-१-१-२०)
१५९. 'ज्योतिश्चरणाभिधानात्' (ब्र-सू-१-१-२४)
१६०. 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र.सू-१-१-२४)

१६१. 'अन्तर उपपत्तेः'(ब्र-सू-१-२-१३)

१६२. 'भूमा संप्रसादादध्युपदेशात्'(ब्र-सू-१-३-८)

१६३. 'दहर उत्तरेभ्यः'(ब्र-सू-१-३-१४)

१६४. 'वाक्यान्वयात्'(ब्र-सू-१-४-२०)

१६५. 'सरूपाणामेकशेष एकविभक्तौ'(पा-सू-२-२-६४-(१४)

१६६. 'सुपां सुलुक्'(७-१-३९(३४१)

१६७. 'पुनस्तस्यार्थवित्तये चकार ब्रह्मसूत्राणि' ब्रह्मसूत्रभाष्यजिज्ञासाधिकरणोदाहृतस्कान्दवचनम् ।।

१६८. 'ईक्षतेर्नाशब्दम्'(ब्र-सू-१-१-५)

१६९. 'आनन्दमयोऽभ्यासात्'(ब्र-सू-१-१-१२)

१७०. 'एतेन सर्वे व्याख्याता व्याख्याताः'(ब्र-सू-१-४-२९)

१७१. 'सर्वधर्मोपपत्तेश्च'(ब्र-सू-१-१-३८)

१७२. 'अर्धमन्तर्वेदि अर्धं बहिर्वा' जै-सू-३-२-६ अधिकरणे चिन्तितन्यायम् ।।

१७३. 'असंगोऽह्ययं पुरुषः'(बृ-उ-४-३-१५)

१७४. 'नोसदासीद्'(ऋ-सं-१०-१२९-१)

१७५. 'अलक्षणम्' 'नप्रज्ञानघनं'(मा-उ-३-२-१)

१७६. 'अदुःखमसुखसमम्' अनुव्याख्यानोदाहृतश्रुतिः ।।

१७७. 'सर्व प्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते'

१७८. 'कालाय नमः कलविकरणाय नमः'(म-ना-उ-१७-२)

१७९. 'स एवाधस्तात् स एवोपरिष्टात्'(छां-उ-७-२५-१)

१८०. 'कालः कलयतामहम्'(भा-११-१६-१०)

१८१. 'ब्रह्मैवेदममृतं पुरस्ताद्'(आ-उ-४-१३)

१८२. 'तदधिगम उत्तरपूर्वाघयोरश्लेशविनाशौ तद्व्यपदेशात् '(ब्र-सू-४-१-१३)

१८३. 'स्वे महिम्नि प्रतिष्ठितः'(छां-उ-७-२४-१)

१८४. 'सप्तदशारत्निर्वाजपेयस्य यूपः'(तै-सं-१-८-१३-१)

१८५. 'एक शतं षष्ठ्यर्था' व्याकरणमहाभाष्योदाहृतवचनम् ।।

१८६. 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च'(मै-उ-६-२२)

१८७. 'ब्रह्म सम्पद्यते तदा'(ब्र-बि-उ-६)

१८८. 'परात्परं पुरुषमुपैति दिव्यम्'(आ-उ-६-८)

१८९. 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशम्'(श्वे-उ-१-८)

१९०. शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः, 'हरः स्मरहरः' 'व्योमकेशो भवो भीमः' अमरकोश-दिग्वर्गः ॥

१९१. 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास पूर्वम्'(श्वे-उ-३-३)

१९२. 'यस्मात् परं नापरमस्ति किञ्चित्'(श्वे-उ-३-९)

१९३. 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः'(श्वे-उ-३-१२)

१९४. 'धर्मावहं पापदनुदं भवेशम्'(श्वे-उ-६-६)

१९५. तं ये यथोपासते तथैव भवति यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छां-उ-३-१४-१)

१९६. 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम' (कठ-उ-३-२-१५)

१९७. 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति'(आ-उ-६-७)

१९८. 'प्रतितिष्ठन्ति' जै-सू-४-३-१७ इत्यत्रोक्त अर्थवादमित्यर्थः ॥

१९९. 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्मचेद्वेद'(तै-उ-२-११)

२००. 'तथा विद्वान् नामरूपाद्विमुक्तः' (आ-उ-६-८)

२०१. 'आत्माह्येषां संभवति'(बृ-उ-१-४-१०)

२०२. 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति'(म-ना-उ-११-२)

२०३. 'नच रमन्त्यहो असदुपासनयाऽत्माहनः' (भा-१०-९४-२४

२०४. 'अप्राप्ते शास्त्रमर्थवत्' (जै-सू-६-२-१८)

२०५. 'अस्ति भाति प्रियं रूपं नाम चेत्यंश पञ्चकम् ।
आद्यत्रयं ब्रह्मरूपम् 'इति अद्वैतकारिका ॥

२०६. 'अयमात्मा ब्रह्म'(मा-उ-१-१)

२०७. 'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः'(कै-उ-१८)

२०८. 'आत्मानं द्विविधं विद्यात् परापरविभेदतः ।
द्वेब्रह्मणी वेदितव्ये इति च आथर्वणी श्रुतिः'॥(बृ-ना-पु)

२०९. 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः'(भ-गी-१५-७)

२१०. 'नात्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्ति अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति'(नृ-उ-ता-उ-८)

२११. 'भयं द्वितीयाभिनिवेशतः स्यात्'(भा-११-२-३७)

२१२. 'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्' ब्रह्मसूत्रभाष्ये गुहाधिकरणोक्तस्मृतिवाक्यम् ।

२१३. 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्'(आ-उ-२-११)

२१४. 'अतोऽन्यदार्तम्'(बृ-उ-३-४-२)

२१५. 'अन्यद्युष्माकमन्तरं बभूव'(ऋ-सं-१०-८२-७)

२१६. 'स वृक्षकाला कृतिभिः परोऽन्यो यस्मात् प्रपञ्चः परिवर्ततेऽयम् ।
धर्मावहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम'(श्वे-उ-६-६)

२१७. 'ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि'(श्वे-उ-२-८)

२१८. 'प्राणान् प्रपीड्येह संयुक्तचेष्टः'(श्वे-उ-२-९)

२१९. 'एवमेतान् लोकानात्मवान्येव प्रतितिष्ठितान् वेदात्मैव भवति इति वेदानुशासनम्' (सौ-उ-१०)

२२०. 'ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद'(सौ-उ-३)

२२१. 'बालाग्रशतभागस्य शतधाकल्पितस्य च ।
भागो जीवस्सविज्ञेयः सचानन्त्याय कल्प्यत'(श्वे-उ-५-९)

२२२. 'वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात्'(श्वे-उ-३-२१)

२२३. 'ब्रह्मैव सन् ब्रह्माप्येति'(नृ-उ-ता-उ-५)

२२४. 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवतीति'(आ-उ-६-९)

२२५. 'यस्मात् परं नापरमस्ति किञ्चित्'(श्वे-उ-३-८)

२२६. 'यत्र हि द्वैतमिवभवति तदितर इतरं पश्यति'(बृ-उ-४-५-१५)

२२७. 'यो वेद निहितं गुहायां परमे व्योमन् । सोश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चितेति'(तै-उ-२-२)

२२८. 'कालोऽस्मि लोकक्षयकृत् प्रवृत्तः'(भ-गी-११-३२)

२२९. 'द्रव्यं कर्मच कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ।। (भा-२-१०-१२)

२३०. 'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विश्चितेति'(तै-उ-२-२)

२३१. 'अथ यदल्पं भिन्नं तन्मर्त्यम्'(छां-उ-७-२४-१)

२३२. 'इत्थम्भावे'(पा-सू-२-३-२१)

२३३. 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।
पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्' सूत्रभाष्यगुहाधिकरणोदाहृतपाद्मस्मृतिः ।।

२३४. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्'(ब्र-सू-१-२-११)

२३५. 'ऋतं पिबन्तौ सुकृतस्य लोके '(कठ-उ-१-३-१)

२३६. 'यदाहवनीये जुहोति'(तै-ब्रा-१-१-१०-३९)

२३७. 'जगद्व्यापारवर्जम्'(ब्र-सू-४-४-१७)

२३८. 'प्रकरणात्'(ब्र-सू-१-४-६)

२३९. 'एतेन सर्वे व्याख्याताः व्याख्याताः'(ब्र-सू-१-४-२९)

२४०. तत्र कोमोहः कः शोकः एकत्वमनुपश्यतः'(ई-उ-७)

२४१. 'यन्मदन्यन्नास्ति कस्मान्नु बिभेमि'(बृ-उ-३-४-२)

२४२. 'तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति'(बृ-उ-३-४-१०)

२४३. 'अहं मनुरभवम्'(ऋ-सं-३-६-५ )

२४४. 'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति'(तै–उ-२-१६)

२४५. 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति'इति (म-ना-उ-१३-२)

२४६. 'पुरुष एवेदं सर्वं यद्भूतं यच्चभव्यम् (श्वे-उ-३-१५)'

२४७. 'सोमेन यजेत'(तै-ब्रा-१-४-२)

२४८. 'सूर्यो यथा सर्वलोकस्य चक्षुर्नलिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः'(कठ-उ-२-११)

२४९. 'एषोऽस्य परम आनन्दः'(बृ-उ-६-३-३३)

२५०. 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्'(ब्र-सू-२-१-१४)

२५१. 'तदैक्षत बहुस्यां प्रजायेयेति'(छां-उ-६-२-३)

२५२. 'हन्ताहमिमास्तिस्रो देवता' (छां-उ-६-३-२)

२५३. 'सलिल एकोद्रष्टा' (बृ-उ-४-३-३२)

२५४. 'अणोरणीयान् महतो महीयान्' (म-ना-७-८-३)

२५५. 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' (म-ना-उ-९-४)

२५६. 'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरोऽयं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरं यस्सर्वाणि भूताऽन्यतरो यमयति' (बृ-उ-३-७-१५)।

२५७. 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ताद्' (म-ना-उ-१-५)

२५८. 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ-उ-२-५-१९)

२५९. 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' (ब्र-बि-उ-१-१२)

२६०. 'तान् यज्ञस्य मायया सर्वानव यजामहे' (तै-ब्रा-३-१०-८-१४)

२६१. 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते'॥(बृ-उ-५-१-१)

२६२. 'शब्दान्तरात्' जै-सू -८-४-१२

२६३. 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' (कठ-उ-३-९)

२६४. 'किं कारणं ब्रह्म कुत स्म जाता जीवाम केन क्व च संप्रतिष्ठिताः ।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्' (श्वे-उ-१-१)

२६५. 'काल स्वभावो नियतिर्यदृच्छया भूतानि देवः पुरुष इति चिन्त्या ।
संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखदुःख हेतोः' (श्वे-उ-१-२)

२६६. अनीशश्चात्मा मुह्यमीशत (बुध्यते-पा)भोक्तृभावात्' (श्वे-उ-१-८)

२६७. 'तिलेषु तैलं दधिनीव सर्पिरापःस्रोतःस्वरणीषुचाग्निः
'एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति' (श्वे-उ-१-१५)

२६८. 'यः पृथिव्यामन्तरो' (बृ-उ-५-७-३)

२६९. 'योऽद्भ्योऽन्तरः' 'य आत्मानोऽन्तरो' 'यो विज्ञानादन्तर' (बृ-उ-५-७-२२)

२७०. 'स एष संप्रसादोऽस्मात् शरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छां-उ-८-३-४)

२७१. 'स उत्तमः पुरुषः तत्र पर्येति जक्षन् क्रीडन् रममाणः
स्त्रीभिर्वायानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा' (छां-उ-८-१२-३)

२७२. 'अहं विजानामि विविक्तरूपो नचास्ति वेत्ता मम चित् सदाहम् ।
वेदैरनेकैरहमेव वेद्य वेदान्तकृद्वेद विदेव चाहम्' (कै-उ-१-२२)

२७३. 'जाग्रत् स्वप्न-सुषुस्यादि प्रपञ्चः यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते' (कै-उ-१-१७)

२७४. 'मय्यैव सकलं ज्ञातं मयि सर्वं प्रतिष्ठितम् ।
मयिसर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्' (कै-उ-१-१९)

२७५. 'एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।(कै-उ-१-२२)

२७६. 'समस्तसाक्षिं सदसद्विहीनं प्रयाति नित्यं परमात्मरूपम् ' (कै-उ-२-१)

२७७. 'देवा ह वै स्वर्गं लोकमगमंस्म ते रुद्रमपृच्छत् । को भवानिति?। सोऽब्रवीत् । अहमेवैकः प्रथममासं वर्तामिच भविष्यामि च' (अथ-शि-उ-१)

२७८. 'तस्मै स होवाच पितामहश्च' (कै-उ-१-२)

२७९. 'आकाशस्तल्लिङ्गात्' (ब्र-सू-१-१-२२)

२८०. 'अस्य लोकस्य का गतिः' (छां-उ-१-९-१)

२८१. 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (कै-उ-१-१५)

२८२. 'यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्' (कै-उ-१-१६)

२८३. 'मामेव विजानीहि' (कौ-उ-३-१)

२८४. 'आत्मैवेदं अग्र आसीत् पुरुषविधः स आत्मनोऽन्यदपश्यन् सोऽहमिति व्याहरत्' (बृ-उ-३-४-१)

२८५. 'सोऽबिभेत्तस्मादेकाकी बिभेति' (बृ-उ-३-४-२)

२८६. एतज्ज्ञेयं नित्यं मत्वाऽत्मसंस्थं नातः परं वेदितव्यम् हि किञ्चित् ।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतद् ' (श्वे-उ-१-१२)

२८७. 'सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति' (श्वे-उ-१-६)

२८८. 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' (पा-सू-२-३-३२(६०३)

२८९. 'एतद् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्' (श्वे-उ-१-१२)

२९०. परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन'(आ-उ-२-११)

२९१. तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्'(श्वे-उ-३-१०)

२९२. 'तस्याभिध्यायोजनात्तत्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः'(श्वे-उ-१-१०)

२९३. 'आरभ्यकर्माणि गुणान्वितानि भावांश्च सर्वान् विनियोजयेत् यः ।
तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्वतोऽन्यः'(श्वे-उ-६-४)

२९४. ब्रह्मविदाप्नोति परम् '(तै-उ-२-२)

२९५. 'यथाह्ययं ज्योतिरात्मा विवस्वान्नपो भिन्ना बहुधैकोऽनुगच्छेत् ।
उपाधिनाक्रियते भेदरूपः देवक्षेत्रेष्वेवजोऽयमात्मा ।'

२९६. 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणतां हित्वा पूर्णबोधो विशिष्यते ।'

२९७. 'जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवति '(नृ-उ-ता-उ-९)

२९८. 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् '(ब्र-बि-उ-१२)

२९९. 'विभेदजनके ज्ञाने नाशमात्यन्तिके गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति'(वि-पु-६-७-९६)

३००. 'स तत्र पर्येति जक्षन् क्रीडन् रममाण'(छां-उ-८-१२-३

३०१. 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः'(मा-उ-२-९)

३०२. 'गौरनाद्यन्तवती'(मा-उ-५)

३०३. 'एषोऽश्वत्थः सनातनः'(कठ-उ-२-३-१)

३०४. 'सुपां सुलुक् '(पा-सू-७-१-३९)

३०५. 'विपक्षि परमात्मनोः' वैजयन्तिकोशम् ।।

३०६. अथातोऽङ्काकारादेशोऽथात आत्मादेशः' (छां-उ-७-२५-१)

३०७. 'स एवाधस्तात्'(छां-उ-७-२५-१)

३०८. 'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्येच विष्णुस्सर्वत्र गीयते'(ह-पु)

३०९. 'भूमा नारायणाख्यः स्यात् स एवाङ्कतिः स्मृतः ।
जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः' इति छान्दोग्यभाष्योदाहृत परमसारस्मृतिः ।।

३१०. 'अणुरूपोऽपि भगवान् वासुदेवः परोविभुः । आत्मेत्युक्त'
छान्दोग्यभाष्योदाहृतपरमसारस्मृतिः ॥

३११. 'यदेकमव्यक्तमनन्तरूपम्'(म-ना-उ-१-५)

३१२. 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरति-आत्मक्रीडा-आत्ममिथुन-आत्माऽनन्दः स्वरूपात् भवति तस्य सर्वेषु लोकेषु कामचारो भवति'(छां-उ-७-२५-२)

३१३. 'अविद्यायामन्तरे वर्तमानाः'(कठ-उ-१-२-५)

३१४. 'अन्यद्युष्माकमन्तरं बभूव'(ऋ-सं-१०-८२-७)

३१५. 'अहमेवेदं सर्वम्(छां-उ-७-५१-१)

३१६. 'आत्मैवेदं सर्वं'(छां-उ-७-२५-१)

३१७. 'एतावताऽलं ननु सूचितेन'(भा-१-१८-२०)

३१८. 'ब्राह्मणो वै सर्वा देवता'(तै-ब्रा-१-४-४-१८)

३१९. 'पुरुष एवेदं सर्वं'(तै-आ-३-१०)

३२०. 'पुरुषेणेवेदं सर्वं व्याप्तमातृणा दाकरीषात्' यजुर्ब्राह्मणवाक्यमेतत् ॥

३२१. 'असतश्च सतश्चैव सर्वस्यप्रभवाप्ययः ।
सर्वस्य च सदा ज्ञानात् सर्वमेनं प्रचक्षते ॥
पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदीयत्वान्नतु सर्वस्वरूपतः ॥' इति भारते ।

३२२. 'सर्वं समाप्नोषि ततोऽसि सर्वम्'(भ-गी-११-४०)

३२३. 'यत्र नान्यत्पश्यति नायत् शृणोति नान्यत् विजानाति स भूमा'(छां-उ-७-२४-१)

३२४. 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'(भा-६-४-४८)

३२५. 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परं तप'(भ-गी-४-५)

३२६. 'स भगवः कस्मिन् प्रतिष्ठितः'(छां-उ- ७-२४-१)

३२७. 'स होवाचान्योह्यन्यस्मिन् प्रतिष्ठित'

३२८. 'व्यत्ययो बहुलम्'(पा-सू-३-१-८५)

३२९. 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति'(बृ-उ-४-४-१२)

३३०. 'अविनाशी वा अरेऽयमात्मा अनुच्छित्तिःधर्मा'(बृ-उ-६-५-१३)

३३१. 'न प्रेत्य संज्ञाऽस्ति'(बृ-उ-४-४-१३)

३३२. 'यो वै भूमा तत्सुखम्'(छां-उ-७-२३-१)

३३३. 'यत्र नान्यत् पश्यति'(छां-उ-७-२४-१)

३३४. 'शोकहर्षभयक्रोधलोभमोहस्पृहादयः । अहङ्कारस्य दृश्यन्ते'

३३५. 'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः'(छा-उ-८-१-३)

३३६. 'एतत्सर्वं मन एव'(बृ-उ-३-६-९)

३३७. 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय'(छां-उ-८-१-३)

३३८. 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्यम्'(छां-उ-८-१-१)

३३९. 'किं तदत्र विद्यते'(छां-उ-८-१-२)

३४०. य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्यवशी सर्वस्येशानः'(बृ-उ-६-४-२१)

३४१. 'य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषः'(तै-उ-१-१६)

३४२. 'दहं विपाप्मवरवेश्मभूतं हृत्पुण्डरकिं पुरमध्यसꣳस्थम् ।
तत्रापि दहं गहनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्'(म-ना-उ-१०-७)

३४३. 'तस्यान्ते सुषिरꣳसूक्ष्मं सस्मिन् सर्वं प्रतिष्ठितम्'(म-ना-उ-११-९)

३४४. 'तस्याः शिखायाः मध्ये परमात्मा व्यवस्थितः'(म-ना-उ-११-१३)

३४५. 'मञ्जूषास्थोऽपि हि मणिर्गेहस्थ इति गीयते' इति श्रीव्यासराजकृततात्पर्यचन्द्रिकायां दहराधिकरणेउदाहृतश्लोकः ।

३४६. 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च'(तै-उ-२-५)

३४७. 'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽनन्दमयः'(तै-उ-२-१२)

३४८. 'द्व्यचच्छन्दसि'(पा-सू-४-१-१५०)

३४९. 'विकारशब्दान्नेति चेन्न प्राचुर्यात्'(ब्र-सू-१-१-१३)

३५०. 'विश्वतश्चक्षुः'(श्वे-उ-३-३)

३५१. 'अकायमव्रणम्'(ई-उ)

३५२. 'आप्रणखात्सर्व एव आनन्द आप्रणखात्सर्व एव सुवर्णः' (बृ-उ-)

३५३. 'पूर्णमदः पूर्णमिदम्'(बृ-उ-५-१)

३५४. 'नित्यो नित्यानां चेतनश्चेतनानाम्' (श्वे-उ-६-१३)

३५५. 'विज्ञानं यज्ञं तनुते' (तै-उ-२-५)
३५६. 'ब्रह्म पुच्छं प्रतिष्ठा' (तै-उ-२-५)
३५७. 'इदं पुच्छं प्रतिष्ठा' (तै-उ-२-१)
३५८. 'असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेतिचेद्वेद' (तै-उ-२-६)
३५९. 'रसो वै सः' (तै-उ-२-७)
३६०. 'असन्नेव स भवति' (तै-उ-२-६)
३६१. 'विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्मचेद्वेद' (तै-उ–२-५)
३६२. येऽन्नं ब्रह्मोपासते' (तै-उ-२-२)
३६३. 'ये प्राणं ब्रह्मोपासते' (तै-उ-२-३)
३६४. 'आनन्दं ब्रह्मणो विद्वान्' (तै-उ-२-४)
३६५. 'आनन्दो ब्रह्मेति व्यजानात्' (तै-उ-३-३)
३६६. 'तपसा ब्रह्म विजिज्ञासस्व' (तै-उ-३-२)
३६७. 'स तपस्तप्त्वा । आनन्दो ब्रह्मेति व्यजानात्' (तै-उ-३-३)
३६८. 'विज्ञानं ब्रह्मचेद्वेद' (तै-उ-२-११)
३६९. 'अन्नं ब्रह्मेति व्यजानात्' (तै-उ-३-२)
३७०. 'अन्नाद् भूतानि जायन्ते' (तै-उ-२-५)
३७१. 'यतो वाचो निवर्तन्ते' (तै-उ-२-९)
३७२. 'अन्नाद्ध्येव खल्विमानिभूतानि जायन्ते' (तै-उ-३-२)
३७३. 'सैषाऽनन्दस्य मीमांसा' (तै-उ-३-१७)
३७४. 'विश्वतश्चक्षुरुतविश्वतोमुखः' (श्वे-उ-३-३)
३७५. 'उद्बबर्हात्मनः केशौ' (वि-पु-अं-५)
३७६. 'व्याप्तं त्वयैकेन दिशश्च सर्वाः' (भ-गी-११-२०)
३७७. 'कृष्णकेशो हि यादवः' (महानारायणश्रुतिगीताभाष्य१३ अध्यायः ।।)
३७८. 'कृष्णस्तु भगवान् स्वयम्' (भा-१-३-२८)
३७९. 'सैषाऽऽनन्दस्य' (तै-उ-३-१७)
३८०. 'स वा' (तै-उ-२-४)

३८१. 'अन्नात्पुरषः' (तै-उ-२-३)

३८२. 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वमिति' (जै-सू-१२-२-२२) ।

३८३. 'एतमन्नमयमात्मानमुपसङ्क्रामति' (तै-उ-२-२१)

३८४. 'एतमन्नमयमात्मानमुपसङ्क्रम्य' (तै-उ-३-१०)

३८५. 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' (तै-उ-३-१०)

३८६. 'अस्माल्लोकात् प्रेत्य' (तै-उ-३-१०)

३८७. 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' (भ-गी-१०-८)

३८८. 'स हि स्वप्नो भूत्वेमं लोकमनुसञ्चरति' (बृ-उ-६-३-७)

३८९. 'अजो ह्येको जुषमाणोऽनुशेते' (श्वे-उ-४-५)

३९०. 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (कठ-उ-३-४)

३९१. 'समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' (बृ-उ-६-३-७)

३९२. 'आत्माप्यनीशः सुखदुःखहेतोः' (श्वे-उ-१-२)

३९३. 'कालःस्वभावो नियतिर्यदृच्छा भूतानि देवःपुरुषः
संयोग एषां नत्वात्मभावात्' (श्वे-उ-१-२)

३९४. 'यत्राऽन्योऽन्यत् पश्यति यच्चाऽन्योऽन्यत् श्रृणोति' (छां-उ-७-२४-१)

३९५. 'तर्ह्यव्याकृतमासीत्' (बृ-उ-१-४-७)

३९६. 'अजो ह्येको भोक्तृभोगार्थ युक्ता'

३९७. 'अनन्तश्चात्मा विश्वरूपोऽ ह्यकर्ता त्रयं यदाविन्दते ब्रह्ममेतत् (श्वे-उ-१-९)

३९८. मन एव मनुष्याणां कारणं बन्धमोक्षयोः' (ब्र-बि-उ-२)

३९९. 'ये पूर्वे देवा ऋषयश्च तं विदुस्ते तन्मयो अमृतो वै बभूवुः' (श्वे-उ-५-६)

४००. 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरं ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥' (श्वे-उ-४-१०)

४०१. 'निष्कलं निष्क्रियं शान्तम्' (श्वे-उ-६-१९)

४०२. 'अकायमव्रणम्' (ई-उ-८)

४०३. 'अपाणिमादो जवनो गृहीता' (श्वे-उ-३-१९)

४०४. 'सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमत्' (श्वे-उ-३-१६)

४०५. 'आकाश शरीरं ब्रह्म'(तै-उ-१-१७)

४०६. 'तस्यैष आत्मा विवृणुते तनूं स्वाम्'(कठ-उ-२-१३)

४०७. 'यदात्मको भगवान् तदात्मिका व्यक्तिः किमात्मको भगवान् ज्ञानात्मक' ब्रह्मसूत्रभाष्ये पत्त्युरधिकरणे(२-२-४१) उदाहृत श्रुतिः ॥

४०८. 'वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् ।
जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम्'(श्वे-उ-३-२१)

४०९. 'सूर्य आत्मा जगतस्तस्थुषश्च'(ऋ-सं-१-११५-१)

४१०. 'विश्वं सत्यम्'(ऋ-सं-२-२४-१२)

४११. रूपं रूपं प्रतिरूपो बभूव रूपं तदस्य प्रतिचक्षणाय'(ऋ-सं-६-४७-१८)

४१२. 'उपदेशादयं वादः'(मा-उ-२-१०)

४१३. 'परस्तु निर्गुणः प्रोक्तः अहङ्कारयुतो परः ।
तयोरभेदविज्ञानं योग इत्यभिधीयते ।
एकः शुद्धःपरो नित्यः परमात्मा जगन्मयः ।
नृणां विज्ञानभेदेन भेदवानिव लक्ष्यते ।
एकमेवाऽद्वितीयं तत् परं ब्रह्मसनातनम् ।
गीयमान च वेदान्तैस्तस्मान्नास्ति परं द्विज' ॥

४१४. 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायापतौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः'(कठ-उ-१-३-१)

४१५. 'यूस्त्र्याख्यौ नदी'(पा-सू -१-४-३(२६६)

४१६. 'पुरुषान्नपरं किञ्चित् सा काष्ठा सा परागतिः'(कठ-उ-१-३-११)

४१७. 'सोऽकामयत बहुस्यां प्रजायेयेति'(तै-उ-२-१४)

४१८. 'तदात्मानं स्वयमकुरुत'(तै-उ-२-१५)

४१९. 'अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुः'(बृ-उ-३-५-४)

४२०. उता विद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य ।
कश्चित्समश्नुता'(तै-उ-२-१३)

४२१. स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । (तै-उ-२-२१)

४२२. 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे अविहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषं याति दिव्यम्' इति (आ-उ-६-८)

४२३. अथ तस्यायमादेशो नान्तः प्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं नप्रज्ञा नघनं नप्रज्ञं नाप्रज्ञमदृष्ट-मव्यवहार्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्य प्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः'(मा-उ-२-१)

४२४. 'अन्नेन सोम्य शुङ्गेनाऽपो मूलमन्विच्छद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छत्तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सदायतनाः सत्प्रतिष्ठाः सोम्येमाः सर्वाः प्रजा'(छां-उ-६-८-४)

४२५. 'तेजोऽस्तथाह्याह'(ब्र-सू-२-३-१०)

४२६. 'आपः'(ब्र-सू-२-३-११)

४२७. 'पृथिव्याधिकाररूपशब्दान्तरादिभ्यः'(ब्र-सू-२-३-१२)

४२८. 'वायुर्वाव संवर्गः'(छा-उ-४-३-१)

४२९. 'सर्वं ह्येत् ब्रह्माऽयमात्मा ब्रह्म'(मा-उ-१-२)

४३०. 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय'(मा-उ-२-१)

४३१. 'वर्तमानसामीप्ये वर्तमानवद्वा'(पा-सू-३-३-१३१(२७८९)

४३२. 'वसन्तादिभ्याष्ठक्' (पा-सू-४-२-८६(१२७६)

४३३. 'समर्थः पदविधिः'(पा-सू-२-१-१(६४७)

४३४. 'इग्यणः सम्प्रसारणम् '(पा-सू-१-१-४५(३२८)

४३५. 'बहुगण'(पा-सू-१-१-२३(२५८); 'बहुगणवतुडति सङ्ख्या' इति हि सूत्रम् ॥
'बहुगणवतुडयः सङ्ख्यावत्संभवन्ति अन्तरेणापि वतिमतिदोषो गम्यते । अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन वयं मन्यामहे ब्रह्मदत्तवदयं भवतीति' महाभाष्योक्तेः,

४३६. 'सारूप्यादिति'(जै-सू-१-४-२३)

४३७. 'तद्गुणसारत्वात्तु तद्व्यपदेशःप्राज्ञवत्'(ब्र-सू-२-३-२९)
'भिन्नाः जीवाः परो भिन्नस्तथापि ज्ञानरूपतः ।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः ॥' भविष्यत्पर्वम् (ब्र-सू-भा. २-३-२९) ।

४३८. 'ब्राह्मणो वै सर्वा देवताः'(तै-सं-१-४-४-१८)

४३९. 'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः' (जै-सू-३-५-२३)

४४०. 'प्रयाजशेषेणहवींष्यभिघारयति'(जै-सू-४-१-३३)

४४१. 'सः स्रष्टा चैव संहर्ता नियन्ता रक्षिता हरिः।
तेन व्याप्तमिदं सर्वं ऐतदात्म्यमतो विदुः' ।।(३-५४)बृहदारण्यकभाष्योदाहृतब्रह्माण्डवचनम् ।।

४४२. 'स्वातन्त्र्यात् स्व इति प्रोक्त आत्माऽयं चाततत्वतः ।
ब्रह्माऽयं गुणपूर्णत्वाद् भगवान् विष्णुरव्ययः' विष्णुतत्त्वनिर्णयोदाहृतपरमोपनिषद्वाक्यम् ।।

४४३. 'स्वं कुलायं यथापीतःपक्षी स्यादेवमीश्वरम् ।
अप्येति जीवः प्रस्वापे' इति विष्णुतत्वनिर्णयोदाहृतपरमोपनिषत् वाक्यम् ।।

४४४. 'सुषुप्त्युत्क्रान्त्योर्भेदेन'(ब्र-सू-१-३-४२)

४४५. 'ता एवापो ददौ तस्य स मुनिः संशितव्रतः' भगवद्गीताभाष्य२अध्यायोदाहृतमहाकौर्मवचनम् ।।

४४६. 'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् ।
नचैतदेव भवति यतो वृद्धिः प्रदृश्यते' ।। भोक्त्रधिकरणसूत्रभाष्योदाहृतस्कान्दपुराणवाक्यम् ।।

४४७. 'अवस्थितेरितिकाशकृत्स्नः'(ब्र-सू-१-४-२३)

४४८. 'यथा पक्षी च सूत्रं च नानावृक्षरस यथा ।
यथानद्यः समुद्रश्च शुद्धोदलवणे यथा ।।
यथा स्तेनापहार्यौ च तथा पुंविषयावपि ।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ' – विष्णुतत्वनिर्णयोदाहृतपरमोपनिषद्वाक्यम् ।।

४४९. 'यदा प्राणान् ददातीशः तदा चेतनकोऽखिलम् ।
जानाति ग्रस्तकरणस्तेन वेत्ति न किञ्चन' – विष्णुतत्त्वनिर्णयोदाहृतस्मृतिवाक्यम् ।।

४५०. 'यदाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तेनात्मेति भण्यते' – महाभारते ।।

४५१. 'नानुमानमतच्छब्दात्'(ब्र-सू-१-३-३)

४५२. 'प्राणभृच्च'(ब्र-सू-१-३-४)

४५३. 'विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात्' – विष्णुतत्त्वनिर्णयोदाहृतस्मृतिवाक्यम् ।।

४५४. 'इष्टापूर्तं मन्यमाना वरिष्ठम्'(आ-उ-२-९)

४५५. 'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाभिधीयते ।
एषोऽहं त्वमसौचेति ननु सर्वस्वरूपतः' सूत्रभाष्ये आनन्दमयाधिकरणोदाहृतस्मृतिः ।।

४५६. 'अहं भूमिमददामार्याय'(ऋ-सं-४-२६-२)

४५७. 'अहन्नामाहरिर्नित्यं अहेयत्वात्प्रकीर्तितः' विष्णुतत्त्वनिर्णयोदाहृतनारायणश्रुतिः ।।

४५८. 'यो सावसौ पुरुषः सोऽहमस्मि वायुः' (ईश-उ-१६)

४५९. 'अग्ने नय सुपथा राये अस्मान्' (ई-उ-१०)

४६०. 'तद्योऽहं सोऽसौ योऽसौ सोऽहमस्मि' 'चक्षुर्मित्रस्य वरुणस्याग्नेः'(ऐ-उ-२-२-४)

४६१. 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवाऽवेद अहं ब्रह्मास्मि' इति बृहदारण्यकवाक्यम्

४६२. 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणाम्'(बृ-उ-३-५-४

४६३. अहं हरिः सर्वमिदं जनार्दनः'(वि-पु-१-२२-८७)

४६४. 'ब्रह्माणि जीवा सर्वेऽपि परब्रह्माणि मुक्तिगाः' भगवद्गीतातात्पर्योदाहृतश्रुतिवाक्यम् ॥

४६५. 'सम्पूज्य ब्राह्मणो भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्' विष्णुतत्त्वनिर्णयोदाहृतस्मृतिः ॥

४६६. 'अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।
एकीभावस्तथा प्रोक्ता नैकीभावः स्वरूपयोः' आथर्वणोपनिषद्भाष्योदाहृतमहावाराहस्मृतिः ॥

४६७. उक्तं हि समानमितरच्छ्येनेनेत्यत्र; समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् । (जै-सू-७-१-२)

४६८. 'समानाद्धिभयं भवेत्'; कस्माद्भयं भवेत्तस्य समानाद्धि भयं भवेत् इति पूर्णवाक्यम् । बृहदारण्यकभाष्योदाहृतब्रह्मतर्कवचनम् ॥

४६९. एको देवः सर्वभूतेषु गूढः'(श्वे-उ-६-११)

४७०. 'एकः एवहि भूतात्मा भूतेभूते व्यवस्थितः' बृहदारण्यकभाष्योदाहृतब्रह्मतर्कवचनम् (३-४-२)

४७१. 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत'(भ-गी-१३-३)

४७२. 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।
तत्क्षेत्रं यच्च यादृक् च,तत्समासेन मे शृणु'(भ-गी-१३-२,४)

४७३. 'महाभूतान्यङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रिय गोचराः'(भ-गी-१३-६)

४७४. 'एतत् क्षेत्रं समासेन सविकारमुदाहृतम्'(भ-गी-१३-७)

४७५. 'क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते' महाभारतमोक्षधर्मे

४७६. 'प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम् ॥

४७७. अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि (छां-उ-८-१३-१)

४७८. 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म तदमृतम्'(छां-उ-८-१४-१)

४७९. 'प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवानि ब्राह्मणानां यशो राज्ञां यशो विशां
यशोऽहमनुप्रापत्सि स हाहं यशसाहं यशः'(छां-उ-८-१४-१)

४८०. 'श्वेतमदत्कमदत्कं श्वेतम्'(छां-उ-८-१४-१)

४८१. 'लिन्दुमाऽभिगां लिन्दुऽमाभिगाम्'(छां-उ-८-१४-१)

४८२. 'श्यामं प्रपद्ये शबलं प्रपद्ये श्यामात् शबलं प्रपद्ये'(छां-उ-८-१३-१)

४८३. एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः । (कठ.उ.)

४८४. 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाःश्रिताः सर्वे तदुनात्येति कश्चनैतद्वैतद्' (कठ-उ-२-२-८)

४८५. अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च'(कठ-उ-२-२-९)

४८६. 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्' (कठ-उ- २-२-१३)

४८७. 'मोनो धातोः' (पा-सू-८-२-६४(३४१)

४८८. 'कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन
एव'(बृ-उ-३-६-९)

४८९. 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (आ-उ-४-१०)

४९०. 'तदाविद्वान् पुण्यपापे विधूय'(आ-उ-६-८)

४९१. तद्यो यो देवानां प्रत्यबुध्यत स एव(ष) तदभवत्'(बृ-उ-३-५-४)

४९२. शारीरश्चोभयेऽपि हि भेदेनैनमधीयते(ब्र-सू-१-२-२०)

४९३. 'आत्मेत्येवावसीयते तत् पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मीति कृतकृत्यो भवति'
इति परमहंसोपनिषत्

४९४. 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरःसर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमःपुरुषस्त्वन्यः' (भ-गी-१५-१६-१७)

४९५. 'स ब्रह्मा स हरिः सेऽन्द्रः सोऽक्षरः परमः स्वराट् ।
स विष्णुः सः प्राणः स कालोऽग्निः स चन्द्रमाः' (कै-उ-१-८)

४९६. 'तत्परं ब्रह्मसर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ (कै-उ-१-१६)

४९७. 'स एव माया परिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादि विचित्र भोगैः स एव जाग्रत्परितृप्तिमेति' (कै-उ-१-१२)

४९८. 'नारायणाद् ब्रह्मा जायते । नारायणादिन्द्रो जायते' (ना–अथ-उ-१)

४९९. 'चक्षोः सूर्यो अजायत' (ऋ-सं-९०-१०-१३)

५००. 'वालाग्रशतभागस्य' (श्वे-उ-५-९)

५०१. 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मनाऽवीशते देव एकः' (श्वे-उ-१-१०)

५०२. 'तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवलमाप्तकामः' (श्वे-उ-१-११)

५०३. 'स विश्वरूपस्त्रिगुणः स्त्रिवर्त्मा प्रणाधिपः सञ्चरति स्वकर्मभिः' (श्वे-उ-५-७)

५०४. 'एष हि देवः प्रदिशोनु सर्वाः पूर्वो हि जातः स उ गर्भेऽन्तः ।
स विजायमानः स जनिष्यमाणः प्रत्यङ् मुखस्तिष्ठति विश्वतो मुखः' (श्वे-उ-२-१६)

५०५. 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतो मुखः' (श्वे-उ-४-३)

५०६. 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्ठः ।
हृदामनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ।(श्वे-उ-३-१३)

५०७. 'अन्तः प्रविष्टः शास्ता जनानाम्' (तै-आ-३-११-२१)

५०८. पूर्वमीमांसोदाहृतचित्राधिकरणम् (जै-सू-३-१-३)

५०९. 'अन्धो मणिमविन्दत्' (तै-आ-१-१-५५)

५१०. पूर्वमीमांसे उपांशुयाजाधिकरणम्(जै-सू-२-२-४) ॥

५११. 'एकेमुख्यान्यकेवला' - अमरकोष -नानार्थवर्गः-नान्तवर्गः ॥

५१२. 'ष्णान्ताषट्' (पा-सू-१-१-२४(३६९)

५१३. 'सुडनपुंसकस्य' (पा-सू-१-१-४३(२२९)

५१४. 'नार्षेयं वृणीते' जै-सू-१०-८-९ इत्यत्र चिन्तितन्यायम् ॥

५१५. 'यथा चोलनृपः सम्राडद्वितीयोऽस्ति भूपतिः ।

इति तत्तुल्यनृपति निवारणपरं वचः ।
नतु तद् भ्रातृतत्पुत्रकलत्रादि निवारकम्' इति । न्यायामृते उदाहृतश्लोकम् ।।

५१६. 'यत्तद्यतस्ततो हेतौ असाकल्येचिच्च न' – अमरकोष-अव्ययवर्गः ।

५१७. 'विनञ्भ्यां नानाञौ न सह'(पा-सू-५-५-२७(१८२८)

५१८. 'पृथग्विनान्तरेणर्ते हिरुङ् नानाच वर्जने' – अमरकोश अव्ययवर्गः ।

५१९. 'न तदस्ति विना यस्मान्मयाभूतं चराचरम्'(भ-गी-१०-३९)

५२०. 'तस्मिन् शुक्लमुतनीलमाहुः पिङ्गलं हरितं लोहितं च'(बृ-उ-६-४-९)

५२१. 'यस्मिन् पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः'(बृ-उ-६-४-१७)

५२२. 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वरः एष सर्वाधिपतिः एष भतूपालः एष सेतुर्विधरणं एषां लोकानामसंभेदाय'(बृ-उ-६-४-२२)

५२३. द्व्येकयोर्द्विवचनैकवचने(पा-सू-१-४-२२(१८६)।।

५२४. 'तं देवाः सर्वे अर्पितास्तादुनात्येति कश्चन'(कठ-उ-२-१-९)

५२५. 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतो विशेष्यबाधः' इति न्यायम् ।।

५२६. 'ईशानो भूतभव्यस्य'(कठ-उ-२-१-५)

५२७. 'पश्यार्थैश्चानालोचने'(पा-सू-८-१-२५(४०९)

५२८. 'मग्नस्य हि परेऽज्ञाने किंन दुःखतरं भवेत्' महाभारते शान्तिपर्वणि-३०१-८३ ।।

५२९. 'उपमार्थे तथाल्पत्वे इव शब्दः प्रयुज्यते' बृहदारण्यकभाष्योदाहृत(६-३-३०)शब्दनिर्णय वाक्यम् ।।

५३०. 'तस्यैतदेव निरुक्तं हृदयम्'(छां-उ-८-३-३)

५३१. 'आनन्तर्यमचोदना'(जै-सू-३-१-२४)

५३२. यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्यश्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियते एवममेवाऽयं पुरुषः'(बृ-उ-६-३-१९)

५३३. 'स यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं एवमेवाऽयं पुरुषः'(बृ-उ-६-३-२१)

५३४. 'न वेति विभाषा'(पा-सू-१-१-४४(२४)

५३५. 'नास्य जरयै तज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरम्'(छां-उ-८-१-५)

५३६. 'अव्ययात्त्यप्'(पा-सू-४-२-१०४(१३२४)

५३७. 'आतो धातोः'(पा-सू-६-४-१४०(२४०)

५३८. 'बहुलं छन्दसि'(पा-सू-२-२-३९)

५३९. 'अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगत्वात्' इति जैमिनिसूत्रे विचारितम् ।।

५४०. 'शशासपृथिवीं सर्वां सशैलवनकाननम् ।
नाशिता पृथिवी सर्वा धार्तराष्ट्रेण दुर्नयैः' बृहदारण्यकभाष्योदाहृत(३-५-४) वाक्यम् ।।

५४१. यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृण्मयाः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ।।
अनन्याधीन विज्ञानादन्याधीनं तथैव च ।।
मृदयोलोहनाम्नां हि ज्ञानात्साङ्केतिकं यथा'।। – छान्दोग्यभाष्योदाहृतसामसंहितावाक्यम् ।।

५४२. 'सर्वेषु भूतेष्वेतम्'(ऐ-आ-३-२-३)

५४३. 'न ऋते त्वत्क्रियते किञ्चन'(ऋ-सं-१०-११२-९)

५४४. 'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः ।
सर्वस्य च सदा ज्ञानात् सर्वमेनं प्रचक्षते ।
पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदधीनत्वात् (तदीयत्वात्-पा)नतु सर्वस्वरूपतः' महाभारते -उद्योगपर्व -७०-११

५४५. 'यस्मात् परं नापरमस्ति'(श्वे-उ-३-९)

५४६. 'पुरुषान्न परं किञ्चित्'(कठ-उ-१-३-११)

५४७. 'तेनेदं पूर्णं पुरुषेण सर्वम्'(श्वे-उ-३-९)

५४८. 'ततो यदुत्तरतरम्'(श्वे-उ-३-१०)

५४९. 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः'(मा-उ-२-९)

५५०. 'विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते'(मा-उ-२-१०)

५५१. 'भुक्तभोगामजोऽन्यः'(श्वे-उ-४-५)

५५२. 'विष्णोरिच्छावशत्वात्तु मायामात्रमितीरितम्' – भागवततात्पर्यनिर्णयोदाहृतमायावैभव-
वाक्यम् ११-८) ।।

५५३. 'स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता'(मा-उ-१-१३)

५५४. 'इच्छामात्रं प्रभोः सृष्टिः'(मा-उ-१-१४)

५५५. 'प्रभवः सर्वभावानां सतामिति विनिश्चयः'(मा-उ-१-१२)

५५६. 'अद्वैतः सर्वभावानाम्'(मा-उ-२-२)

५५७. 'अनादिमायया सुप्तो यदाजीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा'(मा-उ-२-८)

५५८. 'अद्वैतं परमार्थो हि द्वैतिनो तथ्यदर्शनः'

५५९. 'ओं इत्येतदक्षरं । इदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति । सर्वं ओंकार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव । सर्वं ह्येतद् ब्रह्म अयमात्मा ब्रह्म'(मा-उ-१-२) 'तस्याऽयमादेशो नान्तः प्रज्ञम्'(मा-उ-२-१)

५६०. 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत'(मा-उ-४-१)

५६१. 'संविशत्यात्मनाऽऽत्मानं य एवं वेद' (मा-उ-४-१)

५६२. अर्हेकृत्यतृचाश्च(पा-सू-३-३-१६९(२८२२)

५६३. 'सोऽयमात्मा चतुष्पात्'(मा-उ-१-३)

५६४. 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमःशिवोऽद्वैत'(मा-उ-४-१)

५६५. 'आण्णद्याः'(पा-सू-७-३२-११२(२६८)

५६६. 'तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्'जै-सू-१-३-८ इत्यत्रोक्तन्यायम् ॥

५६७. 'सोऽयं सत्योह्यनादिश्च सादिश्चेन्नशमाप्नुयात् ।
नच नाशं प्रयात्येष नचासौ भ्रान्तिकल्पितः ॥
कल्पितश्चेन्निवर्तेत नचासौ विनिवर्तते ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्'॥ – विष्णुतत्त्वनिर्णयोदाहृतपरमश्रुतिः ॥

५६८. 'अम्बुवदग्रहणात्'(ब्र-सू-३-२-१९)

५६९. 'इन्द्रो मायाभिः पुरुरूप'(बृ-उ-४-५-१९)

५७०. 'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानिच'(बृ-उ-४-५-१९) 'तदेतत् ब्रह्मापूर्वमनपरम्'(४-५-१९)

५७१. 'अतोऽन्यदार्तम्'(बृ-उ- ५-५-१)

५७२. 'आर्तो जिज्ञासुरर्थार्थी'(भ-गी-७-१६)

५७३. 'ऋतं पिबन्तौ सकृतस्य लोके'(कठ-उ-१-३-१)

५७४. 'उपसर्गादृतिधातौ' (पा-सू-६-१-९१(७४)

५७५. 'सद्भावे साधुभावे च सदित्येतत् प्रयुज्यने ' (भ-गी-१७-२६)

५७६. 'अश्रद्धया हुतं दत्तं तपस्पस्पं कृतं च यत् ।
असदित्युच्यते पार्थ नच तत्प्रेत्य नो इह' (भ-गी-१७-२८)

५७७. यत्तु कालान्तरेणाऽपि नान्यं संज्ञामुपैति वै ।
परिणामादिसद्भूतं (सम्भूतां)तद्वस्तु नृप तच्च किम् ।
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते' (वि-पु)

५७८. 'मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति' (भ-गी-१८-५९)

५७९. मिथ्योपपदात्कृञोऽभ्यासे (पा-सू-१-३-७१(२७४०)

५८०. 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र-सू-२-२-१९)

५८१. 'कविर्मनीषी परिभूः स्वयम्भूः याथातथ्यतोर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः' (ई-उ-८)

५८२. 'यच्चिकेत सत्यमित्तन्नमोघम्' (ऋ-सं-१०-५५-६)

५८३. 'विश्वं सत्यं मघवानायुवोरिदापश्च न प्रमिनन्ति व्रतं वाम्' (ऋ-सं-२-२४-१२)

५८४. धाता यथा पूर्वमकल्पयत्' (ऋ-सं-१०-१९०-३)

५८५. 'हारेत्वा शूद्रा' (छा-उ-४-२-३)

५८६. 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥

५८७. एतां दृष्टिमवष्टभ्य नष्टात्मनोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोहिता ' (भ-गी-१६(८,९)( १परिच्छेदोहहृतानां सङ्ग्रहः)॥

५८८. विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्त । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभि संविशन्तीति' (तै-उ-३-३)

५८९. आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता' (तै-उ-३-३)

५९०. 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' स्वभावो ब्रह्मवर्ष्मच । इति इदानीन्तन पाठः ॥
अमरकोष नानार्थवर्ग नान्तः ॥

५९१. 'अस्मान् मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' (श्वे-उ-४-९)

५९२. 'लोकवत्तु लीलाकैवल्यम्' (ब्र-सू-२-१-३४)

५९३. 'मुखनासिकावचनोऽनुनासिक' (पा-सू-१-१-८-(९)

५९४. 'एतां विभूतिं योगं च तत्त्वतो वेत्ति' (भ-गी-१०-७)

५९५. 'सर्वमेतदृतं मन्ये' (भ-गी-१०-१४)

५९६. 'अहमादिर्हि देवानाम्' (भ-गी-११-२)

५९७. 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफल संयोगं स्वभावस्तु प्रवर्तते ॥
नादत्ते कस्यचित्पापं नचैव सुकृतं विदुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' (भ-गी-५-१५)

५९८. 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (२-१-१०)

५९९. 'स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानः ।
देवस्यैष महिमा लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' (श्वे-उ-६-१)

६००. 'कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मनावा प्रकृतिस्वभावात्' (भा-११-२-३६)

६०१. 'अनुपपत्तेस्तु न शारीरः' (ब्र-सू-१-२-३)

६०२. 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वत' (भ-गी-१०-७)

६०३. 'सर्वमेतदृतं मन्ये यन्मां वदसि केशव' (भ-गी-१०-१४)

६०४. 'सत्यकामः सत्यसङ्कल्पः' (छां-उ-३-१४-२)

६०५. 'एष सर्वेश्वरः एष भूताधिपतिरेषभूतपालः एष सेतुर्विधारण एषां लोकानामसम्भेदाय' (बृ-उ-६-४-२२)

६०६. 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' (बृ-उ-६-४-२२)

६०७. 'तदेतत् ऋचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य' (बृ-उ-६-४-२३)

६०८. 'कामादितरत्र तत्रचाऽऽयतनादिभ्यः' (ब्र-सू-३-३-४०)

६०९. 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तर आकाशस्तस्मिन् यदन्तरस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छां-उ-८-१-१)

६१०. 'अनादिमध्यान्तमनन्तवीर्यम्' (भ-गी-११-१९)

६११. 'विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' (ऋ-सं-१-१५४-१)

६१२. 'न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप' (ऋ-सं-७-९९-२)

६१३. 'तत्त्वायामि सुवीर्यम् तत् ब्रह्म पूर्वचित्तये' (ऋ-सं-८-३-९)

६१४. 'इन्द्रे सूर्यमरोचयत्' 'इन्द्रे ह विश्वा भुवनानि येमिरे' (ऋ-सं-८-३-६)

६१५. 'य एवं वेद स विष्णुरेव भवति' (ना-अथ-उ)

६१६. 'सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्' (कठ-उ-१-३-९)

६१७. 'विष्णुक्रमान् क्रमते विष्णुरेव भूत्वेऽमान् लोकानभिजयति' (तै-सं)

६१८. 'स विष्णुरेव भवति' 'स विष्णुरेव भवति' (ना-अथ-उ)

६१९. पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु–अकरकोश नानार्थवर्गः -थान्तः ॥

६२०. 'आप्नोति स्वाराज्यम्, आप्नोति मनसस्पतिम्' (तै-सं-१-१६)

६२१. 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान'

६२२. 'ब्रह्मा देवानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः'

६२३. 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' (भा-२-१०-१२)

६२४. 'मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माऽद्वयमस्म्यहम्' (कै-उ-१-१९)

६२५. 'एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।
समस्त साक्षिं सदसद्विहीनं प्रयाति नित्यं परमात्मरूपम्'

६२६. 'स्थिरैरङ्गैः पुरुरूप उग्रः' (ऋ-सं-२-३३-९)

६२७. अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्

६२८. 'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ॥

६२९. तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन दृष्टपूर्वम्' (भ-गी-११-४७)

६३०. 'अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे' (म-भा-अनु-प)

६३१. 'नान्तोऽस्ति यस्य नच यस्य समुद्भवोऽस्ति वृद्धिर्नयस्य परिणामविवर्जितस्य ।
नापक्षयं च समुपैत्यविकल्पवस्तु यस्तं नतोऽस्मि पुरुषोत्तममीशमीड्यम् ॥'

६३२. 'स्थिरैरङ्गैस्तुष्टवाँसस्तनूभिर्व्यशेम देवहितं यदायुः' (ऋ-सं-१-८९-८)

५९२. 'लोकवत्तु लीलाकैवल्यम्' (ब्र-सू-२-१-३४)

५९३. 'मुखनासिकावचनोऽनुनासिक' (पा-सू-१-१-८-(९)

५९४. 'एतां विभूतिं योगं च तत्त्वतो वेत्ति' (भ-गी-१०-७)

५९५. 'सर्वमेतदृतं मन्ये' (भ-गी-१०-१४)

५९६. 'अहमादिर्हि देवानाम्' (भ-गी-११-२)

५९७. 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफल संयोगं स्वभावस्तु प्रवर्तते ॥
नादत्ते कस्यचित्पापं नचैव सुकृतं विदुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' (भ-गी-५-१५)

५९८. 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (२-१-१०)

५९९. 'स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानः ।
देवस्यैष महिमा लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' (श्वे-उ-६-१)

६००. 'कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मनावा प्रकृतिस्वभावात्' (भा-११-२-३६)

६०१. 'अनुपपत्तेस्तु न शारीरः' (ब्र-सू-१-२-३)

६०२. 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वत' (भ-गी-१०-७)

६०३. 'सर्वमेतदृतं मन्ये यन्मां वदसि केशव' (भ-गी-१०-१४)

६०४. 'सत्यकामः सत्यसङ्कल्पः' (छां-उ-३-१४-२)

६०५. 'एष सर्वेश्वरः एष भूताधिपतिरेषभूतपालः एष सेतुर्विधारण एषां लोकानामसम्भेदाय' (बृ-उ-६-४-२२)

६०६. 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः  स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' (बृ-उ-६-४-२२)

६०७. 'तदेतत् ऋचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य' (बृ-उ-६-४-२३)

६०८. 'कामादितरत्र तत्रचाऽऽयतनादिभ्यः' (ब्र-सू-३-३-४०)

६०९. 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तर आकाशस्तस्मिन् यदन्तरस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छां-उ-८-१-१)

६१०. 'अनादिमध्यान्तमनन्तवीर्यम्' (भ-गी-११-१९)

६११. 'विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' (ऋ-सं-१-१५४-१)

६१२. 'न ते विष्णो जायमानो न जातो देवमद्भिः परमन्तमाप' (ऋ-सं-७-९९-२)

६१३. 'तत्त्वायामि सुवीर्यम् तत् ब्रह्म पूर्वचित्तये' (ऋ-सं-८-३-९)

६१४. 'इन्द्रे सूर्यमरोचयत्' 'इन्द्रे ह विश्वा भुवनानि येमिरे' (ऋ-सं-८-३-६)

६१५. 'य एवं वेद स विष्णुरेव भवति' (ना-अथ-उ)

६१६. 'सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्' (कठ-उ-१-३-९)

६१७. 'विष्णुक्रमान् क्रमते विष्णुरेव भूत्वेऽमान् लोकानभिजयति' (तै-सं)

६१८. 'स विष्णुरेव भवति' 'स विष्णुरेव भवति' (ना-अथ-उ)

६१९. पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु–अकरकोश नानार्थवर्गः -थान्तः ॥

६२०. 'आप्नोति स्वाराज्यम्, आप्नोति मनसस्पतिम्' (तै-सं-१-१६)

६२१. 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान'

६२२. 'ब्रह्मा देवानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः'

६२३. 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' (भा-२-१०-१२)

६२४. 'मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माऽद्वयमस्म्यहम्' (कै-उ-१-१९)

६२५. 'एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।
समस्त साक्षिं सदसद्विहीनं प्रयाति नित्यं परमात्मरूपम्'

६२६. 'स्थिरैरङ्गैः पुरुरूप उग्रः' (ऋ-सं-२-३३-९)

६२७. अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्

६२८. 'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ॥

६२९. तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन दृष्टपूर्वम्' (भ-गी-११-४७)

६३०. 'अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे' (म-भा-अनु-प)

६३१. 'नान्तोऽस्ति यस्य नच यस्य समुद्भवोऽस्ति वृद्धिर्नयस्य परिणामविवर्जितस्य ।
नापक्षयं च समुपैत्यविकल्पवस्तु यस्तं नतोऽस्मि पुरुषोत्तममीशमीड्यम् ॥'

६३२. 'स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः' (ऋ-सं-१-८९-८)

६३३. 'अपि सर्वं जीवितं मर्त्यमेव'(कठ-उ-१-१-२६)

६३४. 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यत् भूतयोनिं परिपश्यन्ति धीराः'(आ-उ-१-१-६)

६३५. 'योऽयं विज्ञानमयः'(बृ-उ-६-३-७)

६३६. 'प्राणेष्वनन्तरोऽबाह्यः कृत्स्नः' 'विज्ञानघन'(बृ-उ-४-४-१२)

६३७. 'नमेऽस्तिपूर्वं नपरं नचान्तरं न बाह्यमस्यैव सदामुनीश्वराः ।

६३८. यथैव सिन्धूत्थ घनोरसात्मस्तथैव विज्ञान घनोऽहमस्तिका'

६३९. 'मूर्तौघनः' काशिकायाम्(३-३-७७)

६४०. 'अचिन्त्यमव्यक्तमनन्तरूपम्'(कै-उ-१-१६)

६४१. 'तमादि मध्यान्त विहीनमेकं विभुं चिदानन्दम- रूपमद्भुतम्'(कै-१-७)

६४२. 'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नाना वर्णाकृतीनि च'(भ-गी-११-५)

६४३. 'नाहं वेदैर्नतपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ।
भक्त्यात्वनन्यया शक्या अहमेवं विधोर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप'(भ-गी-११-५३,५४)

६४४. 'एष उ एव वामनिः एष ह्येव वामनि नयति' 'एष उ एव भामनिः एष ह्येव भामनि नयति'(छा-उ-४-१५-२,३,४)

६४५. 'मनोमयः प्राणशरीरो भारूपःसत्यसङ्कल्पः आत्मा'(छा-उ-३-१४-२)

६४६. 'भूमानं भगवो विजिज्ञासो यो वै भूमा तत्सुखम्'(छां-उ-७-२३-१)

६४७. 'येनावृतं नित्यमिदं हि सर्वं यः कालकालो गुणी सर्वविद्यः'(श्वे-उ-६-२)

६४८. 'अनन्वावगतं पुण्येनानन्वावगतं पापेन तीर्णो हि तदा हृदयस्य शोकान् भवति'(छां-उ)

६४९. 'पुरमेकादशद्वारमजस्यावर्जचेतसः।अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते'(कठ-उ-२-२-१)

६५०. 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः'(भ-गी-५-१५)

६५१. 'शब्दादेव प्रमितः'(ब्र-सू-१-३-२४)

६५२. 'अङ्गुष्ठमात्रः पुरुषो मध्यः' (कठ-उ-२-१-१३)

६५३. 'विचित्र शक्तिःपुरुष पुराणो नचान्येषां शक्तयस्तादृशास्स्युः' 'आत्मनिचैवं विचित्राश्च हि' भाष्योदाहृतश्वेताश्वतरश्रुतिवाक्यम् (ब्र-सू-२-१-२९)

६५४. 'वालाग्रशत भागस्य शतधा कल्पितस्यच ।
भागो जीवः स विज्ञेयः' (श्वे-उ-३-५)

६५५. 'तदेवर्तं तदुसत्यमाहुः' (म-ना-उ-१-६)

६५६. 'अथ न स पुनरावर्तते न स पुनरावर्तते' (छा-उ-८-१५-१)

६५७. 'स शान्तमचलमद्वयविज्ञानघन एवास्मि ।

६५८. तदेव परमं धाम तदेव शिखा' (प-हं-उ-१)

६५९. 'दृष्टाऽस्य सत्वमसत्वं च दर्शयति' (नृ-उ-ता-उ-९)
'नाविद्याऽनुभवात्मनि' (नृ-उ-ता-उ-९)

६६०. 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ' (ऋ-सं-१-२२-२०)

६६१. 'कामान्यः कामयते मन्यमानः स कामभिर्ज्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः' (आथ-उ-३-२-२)

६६२. 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिस्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते' (कठ-उ-२-३-१४)

६६३. 'योऽकामो निष्काम आप्तकाम आत्मकामो नास्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' 'ब्रह्मैवसन् ब्रह्माऽप्येति' योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रमन्ति ब्रह्मैव सन् ब्रह्माप्येति (बृ-उ-६-४-६) ॥

६६४. 'स सामभिरुन्नीयते ब्रह्मलोकं' (ष.प्र.-उ-५-५) 'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' (ष.प्र.उ-५-६)

६६५. 'इहैव सन्तोऽथविद्मः तद्वयं नचेदिहावेदीन्महतीविनष्टिः' (बृ-उ-६-४-१४)

६६६. 'प्रतितिष्ठन्ति ह वै एता रात्रीरूपयन्ति' जै-सू-(४-३-१७)

६६७. 'सत्यधर्माय दृष्टये' (ई-उ-१५)

६६८. 'आधारमानन्दमखण्डबोधम्' (कै-उ-१-१४)

६६९. 'निर्विकल्पमनन्तं च हेतुदृष्टान्त वर्जितम्' (त्रिपु-ता-उ-५-९)

६७०. 'सोऽकामयत बहुस्यां प्रजायेयेति' (तै-उ)

६७१. 'द्यावाभूमी जनयन् देव एकः' (श्वे-उ)

६७२. 'य उ त्रिधातु पृथिवीमुतद्यामेको दाधार भुवनानि विश्वा' (ऋ-सं-१-१५४-४)

६७३. 'सप्तमी-विशेषणे-बहुव्रीहौ' (पा-सू-२-२-३५(८९८)

६७४. 'त इमे सत्याः कामा अनृतापिधाना' (छां-उ-८-३-१)

६७५. 'सत्य'पदेन 'स यदि पितृलोक कामो भवति सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति तेन ह पितृलोकेन सम्पन्नो महीयते' (छां-उ-८-२-१)

६७६. 'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्'

६७७. 'पश्यार्थेश्चानालोचने' (पा-सू-८-१-२५(४०९)

६७८. 'अर्हेकृत्यतृचश्च' (पा-सू-३-३-१६९(२८२२)

६७९. 'अत्रैव मा भगवान्नमूमहदिति । याज्ञवल्क्यः समाधत्ते ।'न वा अरे मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' (बृ-उ)

६८०. 'सङ्कल्पादेवाऽस्यपतिरः समुत्तिष्ठन्ति' (छां-उ-८-२-१)

६८१. अदृश्येनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' (तै-उ-२-१६)

६८२. 'मायाधारो निराधारः'– स्मृतिवाक्यम् ।

६८३. 'यो अनधीत्य द्विजो वेदान् अन्यत्र कुरुतेश्रमं ।
स जीवन्नेव शूद्रत्वमाशुगच्छति सान्वयः'–(स्मृतिवाक्यम्)

६८४. 'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न नि वर्तन्ते तद्धाम परमं मम' (भ-गी-१५-६)

६८५. 'सन्ध्ये सृष्टिराह हि' (ब्र-सू-३-२-१)

६८६. 'यद्येतेषां किञ्चित् पश्येत्(ऐ-उ-३-२-४)

६८७. 'अथाऽपि यत्र भूमिं ज्वलन्तीमिव पश्येत' (ऐ-उ-३-२-४)

६८८. 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र-सू-२-२-२९)

६८९. 'आदित्यवर्णं तमसः परस्तात्' (तै-आ)

६९०. 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' (म-ना-उ-२४-१)

६९१. 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्' (म-ना-उ-१३-१)

६९२. 'एतन्नानावताराणां निदानं बीजमव्ययम्' (भा-१-३-५)

६९३. 'सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ।
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' (म-ना-उ-२४-१)

६९४. 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्'(म-ना-उ-१३-१)

६९५. 'पश्यन्त्यदो रूपमदभ्र चक्षुषः सहस्रपादोरु भुजाननाद्भुतः'

६९६. 'एको नारायणः आसीत् न ब्रह्मा नच शङ्करः'– गीतातात्पर्य१ अध्यायोदाहृत श्रुतिः ।।

६९७. 'तस्मात् यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्मात्'

(ऋ-सं-१०-९०-९)

६९८. 'वाचा विरूप नित्यया'(ऋ-सं-८-६४-६)

६९९. 'यावद् ब्रह्मविष्ठितं तावती वाक्'(ऋ-सं-१०-११४-८)

७००. नाचिकेतमुपाख्यानं मृत्यु प्रोक्तं सनातनम्'(क-उ-१-३-१६)

७०१. 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्'(तै-उ-१-२३)

७०२. 'तेन प्रोक्तम्'(पा-सू-४-३-१०१(१४८१)

७०३. 'धर्मिणो हि प्रतिष्ठाग(ह)ममृताप्ययस्य च' –इति श्रुतिवाक्यम् ।

७०४. 'धर्म संस्थापनार्थाय सम्भवामि युगे युगे'(भ-गी-४-८)

७०५. 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवात्र पुण्यचितो लोकः क्षीयते'

७०६. 'विष्णोर्लोके महीयते'–ऋग्वेदखिले नवममण्डलान्ते पठितसूक्तवाक्यम् ।।

७०७. ब्रह्मणः सायुज्यं सलोकतां यन्ति –म.ना.उ.

७०८. 'यो वै तां ब्रह्मणो वेद अमृतेनावृतां पुरीम् ।
तस्मै ब्रह्मच ब्रह्माच आयुःकीर्तिं प्रजां ददुः'(तै-आ-१-११५)

७०९. 'नचेदन्यं प्रकल्पयेत्प्रक्लृप्तार्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च'(जै-सू-१०-८-७)

७१०. 'अहमेवैकः प्रथममासं वर्तामिच भविष्यामिच नान्यः कश्चिन्मत्तोऽभ्यतिरिक्तः'(अथ-शि-उ-१)

७११. 'एष हि देवः प्रदिशोनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।
स विजायमानः स जनिष्यमाणः प्रत्यङ् मुखस्तिष्ठति विश्वतो मुखः' (अथ-शि-उ-५)

७१२. 'प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन् क्रोधो यत्र तृष्णा क्षमा च । तृष्णां छित्वा हेतुजालस्य मूलं बुध्या सञ्चिन्त्य स्थापयित्वातु रुद्रे रुद्र एकत्वमाहुः'(अथ-शि-उ-४)

७१३. 'अपाम सोमममृतामभूम । अगन्म ज्योतिरविदाम देवान्'

७१४. देवा ह वै स्वर्गं लोकमागमस्य ते देवा लोकमायन् ते रुद्रमपृच्छन् को भावानिति ।
सोऽब्रवीत्' (अथ-शि-उ-१)

७१५. 'अङ्गान्यन्या देवताः'(तै-उ-१-१३)

७१६. 'आकाश शरीरं ब्रह्म'(तै-उ-१-१७)

७१७. 'प्रजापतिश्चरति गर्भे अन्तः अजायमानो बहुधा विजायते' (तै-सं-३-१३-३९)

७१८. 'तस्य धीराः परिजानन्ति योनिम्'(तै-सं-३-१३-४०)

७१९. 'अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् ।
शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः'(म-ना-उ-१-१)

७२०. 'तदेव ब्रह्मपरमं कवीनामाहुः'

७२१. 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' 'दिवं च पृथिवीं च'(म-ना-उ-१-६६)

७२२. 'तस्य प्रकृति लीनस्य यः परः स महेश्वरः'(म-ना-उ-१२-१३)

७२३. 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवम्' (म.ना.उ.)

७२४. 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः'(म-ना-उ-२४-१)

७२५. स संज्ञां याति भगवान् एक एव जनार्दनः'(वि-पु-१-६६)

७२६. 'सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक एव ।

७२७. इहास्य धत्ते स्थित्यादये(यो) हरिविरिञ्च हरेति संज्ञाः । (भा.)

७२८. श्रेयांसि तत्र खलु सत्व तनौ नृणां स्युः'(भा-१-२-२४)इत्याद्याः ।

७२९. 'गो नदी यत्स्वा आहे'ति – व्याकरणमहाभाष्यवचनम् ॥

७३०. 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति । नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते'(ना-अ-शि-उ-१)

७३१. हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्'(ऋ-सं-१०-१२१-१)

७३२. 'अथ कस्यादुच्यते एकः यः सर्वान् लोकान् गृह्णाति सृजति विसृजति वासयति तस्मात् उच्यते एक'(अ.शिख.उ.४)

७३३. 'एको ह वै नारायण आसीत् न ब्रह्मा नेशान'(म-उ-१-१)

७३४. 'सर्वमिदं ब्रह्मविष्णुरुद्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्नकारणं कारणानां ध्याता ध्याता रुद्रः कारणात्तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्य'(अ-शिख-उ-१-२)

७३५. 'आपो नारा इति प्रोक्तः आपो वै नरसूनवः ।

७३६. ताः अस्यायनं पूर्वं तेन नारायणः स्मृतः'– सूत्रभाष्ये अन्तःस्थत्वाधिकरणे उदाहृत-व्यासस्मृतिः ॥

७३७. 'विष्णुर्नारायणःकृष्णः' अ-को-स्व-व ।।

७३८. 'पूर्वपदात्संज्ञायामगः'(पा-सू-८-४-३(८५७)

७३९. 'सोऽन्यत्कामो मनसाऽध्यायीत तस्य ध्यानान्तस्थस्य ललाटात् स्वेदोऽपतत् । स्वेदात् बुद्बुधमभवत् । बुद्बधात् त्र्यक्षः शूलपाणिः पुरुषो जायते'(म-उ-१-१)

७४०. 'पदिन्यायः(जै-सू-४-१-२५)

७४१. 'अपरिमिताधिकरणन्यायः (जै-सू-६-७-१०)

७४२. 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां-समवाये-पारदौर्बल्यमर्थविप्रकर्षात्'(जै-सू-३-३-१४)

७४३. सुबालोपनिषद्–त्र्यक्षं बन्धपरशुमजीजनत्'(सु-उ-१-१)

७४४. आथर्वण ब्राह्मणम्–संवत्सरे कुमारो जायत ।।

७४५. शतपथ ब्राह्मणम्–'इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमः ।।

७४६. सामवेदे प्रपदनामके मन्त्रम्–'विरूपाक्षाय दन्तात् जयेसमुद्राय विश्व व्यचसे'।।

७४७. 'यो देवानां प्रभवश्चोद्भवश्चविश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्'(श्वे-उ)

७४८. 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः'(ऋ-सं-९-९६-५)

७४९. 'अवतं तेषामितरार्थं प्रयुज्यते' इति अपरिमिताधिकरणम्–(जै-सू-६-७-१०)

७५०. 'यो देवानां प्रथमं पुरस्तात् । विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत्यजायमानम्'(म-ना-उ-१२-१२)

७५१. ब्रह्माधिपतिः ब्रह्मणोधिपतिः ब्रह्मा शिवो मेऽस्तु सदाशिवोम्'(म-ना-उ-२२-१)

७५२. 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्।(म.ना.उ.)

७५३. अम्बिकापतय उमापतये पशुपतये नमो नमः'(म-ना-उ-२३-१)

७५४. 'विश्वं नारायणं देवमक्षरं परमं पदम्'(म-ना-उ-१३-१)

७५५. 'विश्वं नारायणं'(श्वे-उ)

७५६. 'तस्याः शिखायाः मध्ये परमात्मा व्यवस्थितः'(म-ना-उ-१३-१२)

७५७. निषाधस्थपत्त्यधिकरणम्(जै-सू-६-१-५१)

७५८. 'तेने ब्रह्महृदाय आदि कवये'(भा-१-१-१)

७५९. 'स्रवत्यनोङ्कृतं ब्रह्म'– सप्तदशाध्यायगीततात्पर्योदाहृतश्रुतिवाक्यम् ।।

७६०. अथ कस्मादुच्यते ब्रह्मेति । बृहन्तोऽह्यस्मिन् गुणाः ।।

७६१. 'सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु'(म-ना-उ-२५-१)

७६२. 'विश्वं भूतं चित्रं बहुधा जातं जायमानं च यत्'(म-ना-उ-२५-२)

७६३. 'तस्याः शिखायाः मध्ये परमात्मा व्यवस्थितः । स ब्रह्मा स ईशान'(म-उ-१-१)

७६४. 'सृष्टिस्थित्यन्तरकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः'

७६५. 'क्षरं प्रधानममृताक्षरं हरम्'(श्वे-उ-१-१०)

७६६. 'सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्म विद्या तपो मूलं तद्ब्रह्मोपनिषत् पदम्'(श्वे-उ-१-१६)

७६७. 'वेदैश्च सर्वैरहमेव वेद्यः'(कै-उ)

७६८. 'सर्वे वेदाः यत्पदमामनन्ति'(कठ-उ)

७६९. 'तत्त्वौपनिषदं पुरुषं पृच्छामि'(तै-आ)

७७०. 'सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव'(ऐ-उ)

७७१. 'ब्रह्मैव वाचः परमं व्योम'इति(तै-आ)

७७२. 'तासां सर्व वचसां प्रतिष्ठा यत्र शाश्वती'

७७३. 'वचसां वाच्यमुत्तमम्'

७७४. 'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः ।
न विद्म न विजानीम (के-उ-१-३)

७७५. 'न शब्द गोचरो यस्य योगि ध्येयं परं पदम् ।

७७६. 'इन्द्रं मित्रं वरुणमग्निमाहुः'

७७७. 'अथ कस्मादुच्यते ब्रह्मेति तस्मादुच्यते परं ब्रह्मेति'

७७८. 'तदेवर्तं तदु सत्यमाहुः तदेव ब्रह्म परमं कवीनाम्'

७७९. 'यद्वाचानभ्युदितम्'(के-उ-१-५)

७८०. 'तमेकं परमात्मानमादिकर्तारमीश्वरम् ।
ईयुबर्हुर्विधं त्वज्ञा इन्द्रमित्रमिति श्रुतेः'(सौरपुराणम्)

७८१. अश्वत्थः सर्व वृक्षाणाम्'(भ-गी-१०-२६)

७८२. 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः'(म-ना-उ-१०-७)

७८३. 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवं अक्षरं परमं पदम्'
'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' (म.ना.उ.)

७८४. ओङ्कारो वेद पर ईशः शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्येति श्रवणं सर्वं अन्यत् परित्यज्य शिव एकः शिवङ्करः ध्येय'(अ-शिख-उ-२)

७८५. 'उमा सहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वामुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमसः परस्तात् । ।

७८६. 'स ब्रह्मा स शिवः सेऽन्द्रः सोऽक्षरः परम स्वराट् ।
स एव विष्णुः सः प्राणः स कालोऽग्निस्सचन्द्रमाः'(कै-उ-१-७,८)

७८७. 'सर्वं च मामेव यो वेद स सर्वान् देवान् वेद'–इतिश्रुत्यन्तरम् ॥

७८८. 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः'(म-ना-उ-१२-१)

७८९. 'यो रुद्रः सः स्वयं विष्णुर्योविष्णुः स महेश्वरः ।
इति मत्वा भजेद्देवं स याति परमां गतिम्'

७९०. 'नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा'- हरि-वं-भ-प-८८-६१)

७९१. 'यस्मात्परं नापरमस्ति किञ्चित्'(श्वे-उ-३-९)

७९२. 'यस्मान्नाणीयो न ज्यायोऽस्ति'(श्वे-उ-३-९)

७९३. 'अथ कस्मादुच्यतेऽनन्त यस्मादुच्चार्यमाण एवाद्यन्तं नोपलभते तिर्यगूर्ध्वमधस्तात्
तस्मादुच्यतेऽनन्त' (अ-शि-उ-१-४)

७९४. 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते'(ई-उ-६)

७९५. 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ।(भ-गी-४-३४)

७९६. यज्ज्ञात्वा न पुनर्मोहंमेवं यास्यसि च पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि'(भ-गी-४-३५)

७९७. 'पञ्चविधं सामोपासीत'(छां-उ-२-३-१)

७९८. 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्'(म-ना-उ-१२-१३)

७९९. 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।
इत्याह हि परा साध्वी श्रुतिः सत्यार्थवादिनी'स्मृतिवाक्यम् ॥

८००. 'माया चाविद्या च स्वयमेव भवति'(नृ-उ-ता-उ-९)

८०१. 'विद्यां चाविद्यां च'(ई-उ-११)

८०२. 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्'(श्वे-उ-४-२०)

८०३. 'सत्यं चानृतं च सत्यमभवत् '(तै-उ-२-१४)

८०४. जीव इशो विशुद्धा चित् भेदस्तस्यास्तयोर्द्वयोः ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥ इति॥

८०५. 'बुद्धेर्गुणेनात्मगुणेन चैवमाराग्रमात्रो ह्यपरोऽपि दृष्टः' श्वे.उ.

८०६. 'तत्सत्यमित्याचक्षते । यदिदं किञ्च'(तै-उ-२-१४)

८०७. 'समानकर्तृकयोःपूर्वकालेक्त्वा'(पा-सू-३-४-२९(३३२०)

८०८. 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्'(छां-उ-६-१-१)

८०९. 'भूवादयो धातवः'(पा-सू-१-३-१(१८)

८१०. वर्णागमाद् ध्वंसः सिंहो वा विपर्ययात् । - स्मृतिवाक्यम् ।

८११. 'एकः शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुक् भवति''व्याकृता वागुद्यत'(स्मृतिवाक्यम्)

८१२. 'या वै प्रज्ञा स प्राणो यः प्राणः सा प्रज्ञा'

८१३. 'सह ह्येतौ शरीरे वसतः सहोत्क्रामत'

८१४. हेतुवन्निगदाधिकरणम् (जै-सू-१-२-३)

८१५. 'शौनको ह वै महाशालोऽङ्गिरस विधिवदुपसन्नः पप्रच्छ कस्मिन् खलु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'(मु-उ-१-१-३)

८१६. 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्'(आ-१-१-७)

८१७. 'तदेतत् सत्यम् । यथा सुदीप्तात् पावकाद्विष्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति'(आ-उ-१-१-१)

८१८. 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतंब्रह्मैवेदं विश्वमिदं वरिष्ठम्'(आ-उ-२-२-१३)

८१९. दिग्च्छब्देभ्यः ससमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्ताति इतिसूत्रम् ॥
(पा-सू- ५-३-२७(१९७४)

८२०. 'आत्मनस्तु कामाय सर्वं प्रियं भवति'(बृ-उ-६-५-११)

८२१. 'ब्रह्म तं परादाद्योन्यत्रात्मनो ब्रह्म वेद सर्वं तं परादाद्योऽन्यत्र आत्मनः सर्वं वेद'(बृ-उ-६-५-११)

८२२. 'इदं सर्वं यदयमात्मा'(बृ-उ-६-५-११)

८२३. उपक्रमाधिकरणन्यायनम्(जै-सू-३-३-१)

८२४. 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्'(बृ-उ-४-४-५)

८२५. 'कथं नु भगवः स आदेशो भवति । यथा खलु सोम्येकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयम् मृत्तिकेत्येव सत्यम्'(छां-उ-६-१-१)

८२६. 'यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'(के-उ-१-६)

८२७. (ब्र-सू-१-३-१३)-- ''ईक्षणाध्ययनयोरेकः कार्यकारणभूतयोः ।

८२८. 'पश्चात्मकः स भगवान् द्विषडात्मकोऽभूत् '(म-भा-ता-नि-१-१०)

८२९. 'वाचा विरूपा नित्यया'(ऋग्वेदसंहिता–८-७५-६)

८३०. 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्'(भा-११-२१-१७)

८३१. 'यत्किञ्चिद्व्यभिचारस्यादृर्शनं मानसं हि तत्'(अ-३-४-५,६)

८३२. पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावविशिष्यते'(बृहदारण्यकश्रुतिवाक्यम्)

८३३. 'कृष्ण केशो हि यादव'–गीतातात्पर्ये (१३-३) उदाहृतनारायणश्रुतिः ॥

८३४. 'भावाभावस्वरूपत्वात् नान्योन्याभावता पृथक्'इति–तत्त्वविवेके' श्रीमदाचार्यैः उदाहृत श्लोकम् ॥

८३५. 'भेदस्य च स्वरूपत्वे ये वदन्ति च शून्यताम् ।
अद्भुतास्ते यतोऽन्यस्य प्रतियोगित्वमिष्यते ॥

प्रतियोगिनो हि भेदोऽयं नतु स्वस्मात्कथञ्चन ।
विभागेनाल्पतैवस्यात् कुत एव च शून्यता ॥
न शून्यानां हि संयोगाद् भावो वस्तुन इष्यते ।
विदारणार्थो धातुश्च विभागगुणवाचकः॥
अविदारणेऽपि ह्यास्यस्य भिनावोष्ठौ तु तस्य हि ॥
इति– समयपादे वैशेषिकाधिकरणे अनुव्याख्यानोदाहृतवाक्यम् ॥

८३६. सर्वं सामान्यतो यस्मात् सर्वैरप्यनुभूयते ।
तस्मात् व्यावृत्तता सर्वैः सर्वस्मादनुभूयते '
–तैत्तिरीयभाष्योपनिषदिब्रह्मवल्ल्यां 'तत्त्वनिर्णय'वाक्यमेतत् ॥

८३७. 'धर्मित्वप्रतियोगित्व तद्भावा युगपद्यदि
विशेषणं विशेष्यं च तद्भावस्यैव गृह्यते ॥
को विरोधः स्वरूपेण गृहीतो भेद एव तु ।
अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यत । इति ॥(अनु-२-२-८)

८३८. 'विशेषणत्वं भेदेन ज्ञानं नापेक्षतेऽन्यथा ।
न स्याद्विशेषणं ह्यैक्यं ब्रह्माभिन्नं विरोधतः ॥
'अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः ।
अन्यत्वं यदि सिद्धं स्यात् कथमन्योन्यसंश्रयः ॥(अनु-२-२-९)

८३९. 'एतादृशस्य वक्तारौ उभौ जात्युत्तराकरौ ।
मायी माध्यमिकाश्चैव तावुपेक्ष्यौ बुभूषुभिः'(अनु-२-२-८)

८४०. 'भेदहीनेऽप्यपर्याय शब्दान्तर नियामकः ।
विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः(अनु-१-१-२)इति ।

८४१. 'येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् । (अनु-२-२-६)

८४२. 'जिज्ञासाकारणीभूतगुणपूर्तिप्रसिद्धये ।
जीवादिभेदकं विष्णोर्विश्वकर्तृत्वमुच्यते ॥
–व्यासराजकृतश्रीमत्तात्पर्यचन्द्रिकायां जन्माधिकरणे प्रारम्भे उदाहृतश्लोकोऽयम् ॥

८४३. 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्'
'तत्प्रीणनान्मोक्षमाप्नोति सर्व'-विष्णुतत्त्वविनिर्णयोदाहृतश्रुतिवाक्यम् ॥

८४४. धर्मेणपापमपनुदति । धर्मे सर्वं प्रतिष्ठितं । तस्मात् धर्मं परमं वदन्ति'(म-ना-उ-७९-७)

८४५. 'सिताऽसिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति'
'ये वै तन्वं विसृजन्ति धीरास्ते जनासोऽमृतत्वं भजन्ते– ऋग्वेदखिलसूक्तम् ॥

८४६. 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (भ-गी-३-२०)

८४७. न कर्मणा न प्रजया धनेन' (म-ना-उ-१२-१४)

८४८. 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' (भ-गी-४-३३)

८४९. 'विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' (आ-उ-३-१-८)

८५०. देवैः सकृतकर्मभिस्तत्र माममृतं कृधीन्द्रायेन्द्रो परिस्रव ।
यत्र तत्परमाप्यं भूतानामधिपतिम् ।
भावभावीच योगीच तत्र माममृतं कृधीन्द्रायेन्द्रो परिस्रव– ऋग्वेदखिलसूक्तम् ॥

८५१. 'पृथिव्यां ब्रह्मणो मेरौ वैजयन्तेऽन्तरिक्षगम् ।
तृतीयं सत्यलोके च सदनं त्रिविधः स्मृतम् ।
तेभ्योऽनन्तासनाद्या यत् परतो विश्वतः परे ॥

–३-१३-७- बृहदारण्यकभाष्योदाहृतसत्तत्ववचनम् ॥

८५२. अविज्ञातं विजानतां विज्ञानमविजानताम्' (के-उ-२-३-३)

८५३. 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' (भ-गी- ५-१५)

८५४. 'नित्यतीर्णाशनयादिरेक एव हरिः स्वतः ।
अशनायादिकानान्ये तत् प्रसादात् तरन्ति हि'

–दहराधिकरणसूत्रभाष्योदाहृतपाद्मस्मृतिवचनम् ॥

८५५. 'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' (भ-गी-१५)

८५६. नृपाद्याः शतधृत्यन्ताः मुक्तिगा उत्तरोत्तरम् ।
सर्वैर्गुणैः शतगुणा मोदन्त इति हि श्रुतिः ।
मुक्तानामपि सिद्धानां नारायण परायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने (भा-६-१४-५) ॥

८५७. 'प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः ।
त एव चाप्तकामत्वात्तथाऽकामहता मताः' महाभारतम् ॥

८५८. 'अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः' (भ-गी-१३-२६)

८५९. 'स्त्रियो वैश्यस्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।
किं पुनर्ब्राह्मणाः पुण्याः'(भ-गी-९-३२)

८६०. 'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुताः'- ब्राह्मपुराणम् ।।

८६१. 'अधिकं तव विज्ञानमधिका च गतिस्तव'-मोक्षधर्मवाक्यम् ।।

८६२. 'शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः ।
वर्षायुतं च सूर्येण तपोऽर्वाक् शिरसा कृतम्'(अनु-व्या-३-४-स्तुत्यधिकरणम्)

८६३. 'ज्ञानान्मोक्षो भवत्येव सर्वकार्यकृतोऽपि तु ।
आनन्दो ह्रसतेऽकार्यात् शुभं कृत्वा च वर्धते'– सूत्रभाष्य-३-४-४ उदाहृतब्रह्माण्डस्मृतिः ।।

८६४. 'सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासयाकर्मभिश्च भक्त्या चानन्दचित्रता' इति सूत्रभाष्ये-३-४-४ उदाहृतब्रह्माण्डस्मृतिः ।।

८६५. 'लिङ्गभेदः परानन्दो दुःखाभावः समा मताः'
– गीताभाष्य २ अध्याये उदाहृतनारायणाष्टाक्षरकल्पवचनम् ।।

८६६. 'स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादि व्यापृतिष्वपि ।
मुक्तानां नैव कामस्यादन्यान् कामांस्तु भुञ्जते'-वाराहपुराणम्

८६७. 'अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम् ।(भ-गी-९-११)

८६८. राक्षसीमासुरीं चैव प्रकृतीं मोहिनीं श्रिताः ।।

८६९. महात्मनस्तु मां पार्थ देवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।।

८७०. त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्विकी राजसी चैव तामसी चेति तां श्रुणु ।।(भ-गी-१७-२.३)

८७१. श्रद्धामयोऽयं पुरुषो यच्छ्रद्धः स एव स ।।

८७२. 'स्वेच्छया वा शरीराणि तेजो रूपाणि कानिचित् ।
स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन'-ब्रह्मवैवर्तम् ।।

८७३. प्रकृतिं चाप्यतिक्रम्य गच्छन्त्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वन्दं प्रकृतेः परम् ।

इन्द्रियाण्यनुबुध्यन्ति स्वदेहं योगिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मैः पश्यति तैस्तु सः ।
स जिघ्रति यथा न्यायं स्पर्शान् स्पृशति च प्रभोः –मोक्षधर्मवाक्यम्

८७४. विद्वन्मुग्धवच्चैव केशवो वेद नार्तवत् – स्मृतिवाक्यम्

८७५. ज्ञानमुत्पद्यते क्षयात् पापस्य कर्मणा - स्मृतिवाक्यम्

८७६. धर्मक्षरति कीर्तनात् – स्मृतिवाक्यम्

८७७. सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति

८७८. घटसंवृतमाकाशं नीयमानघटे यथा - त्रि.ता.उ. ॥

८७९. मृगं न भीममुपहत्नुमुग्रम् (ऋ.सं.)

८८०. तद्देहात्मानमनुविद्य व्रजन्त्वन्यांश्च सत्यान् कामान्

८८१. प्रजापतिरात्मनो वपामुदखिदत् ।

॥ श्रीमध्वेशार्पणमस्तु ॥

* * * * *

## ।। सर्वतन्त्रस्वतन्त्र श्रीमद्विजयीन्द्रस्वामिभिः श्रुत्यर्थसारे उदाहृतश्रुतीनां स्मृतीनां च सङ्ग्रहः ।।

### ।। अथ श्वेताश्वतरोपनिषत् ।।

।। १ अध्यायः ।।

ॐ ब्रह्मवादिनो वदन्ति ।

किं कारणं ब्रह्मकुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ।।१।।
कालस्वभावो नियतिर्यदृच्छया भूतानि योनिः पुरुषः इतिचिन्त्यम् ।
संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःख हेतोः ।।२।।
ते ध्यानयोगाऽनुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम् ।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ।।३।।
सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन्हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ।।६।।
उद्गीतमेतत्परं तु ब्रह्म तस्मिन् त्रयं सुप्रतिष्ठाक्षरं च ।
अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ।।७।।
संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्मा बुद्ध्यते भोक्तृभोगान् ज्ञात्वा देवं मुच्यते सर्वपाशैः ।।८।।
ज्ञाज्ञौ द्वावजावीशानीशावजाह्येका भोक्तृभोगार्थयुक्ता ।
अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ।।९।।
क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते यस्तु सोऽन्यः ।
तस्माभिध्यानाद्योजनात्तत्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः ।।१०।।
ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ।। ११।।
एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि कश्चित् ।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।१२।।

तिलेषु तैलं दधिनीव सर्पिरापस्रोतः स्वरणीषु चाग्निः ।
एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥१५॥
सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परम् । तद्ब्रह्मोपनिषत्परम् ॥१६॥

॥इति १ अध्यायः ॥

॥ अथ २ अध्यायः ॥

युक्तेन मनसा देवस्य सवितुः सवे । सुवर्गेयाय शक्त्या ॥२॥
त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निरुह्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि ॥८॥
यदात्मातत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेवेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥१५॥
एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ् जनांस्तिष्ठति सर्वतो मुखः ॥ १६॥

॥इति २अध्यायः ॥

॥ अथ ३ अध्यायः ॥

य एको जालवानीशत ईशनीभिः सर्वान् लोकान् ईशत इशनीभिः ।
य एवैक इहोद्भवे सम्भवे च य एतद्विदुरमृतास्ते भवन्ति ॥१॥
एको हि रुद्रो न द्वितीयातस्थुर्य इमांल्लोकानीशत ईशिताभिः ।
प्रत्यङ् जनास्तिष्ठति सञ्चुकोचान्तकाले संसृज्यविश्वा भुवनानि गोपाः ॥२॥
विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥३॥
यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महिर्षिः ।
हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ॥४॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥८॥

यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवितिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९॥
ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥ १०॥
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ।
हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥१३॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥१४॥
पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥१५॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१६॥
अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥१९॥
अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥२०॥
वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् ।
जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥२१॥

॥ अथ ४ अध्यायः॥

तदेवाग्निस्दादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म तदापस्तत्प्रजापतिः ॥२॥
त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥३॥
अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥५॥
द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥६॥

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्यमहिमानमिति वीतशोकः ॥७॥
ऋचोअक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तं न वेद किमृचा करिष्यति य एतद्विदुस्त इमे समासते ॥८॥
छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः ॥९॥
मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥१०॥
यो देवानां प्रभवश्चोद्भश्च विश्वधिपो रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु ॥१२॥
यो देवानामधिपो यस्मिंल्लोका अधिश्रिताः ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥१३॥
सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥१४॥
स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः
यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥१५॥
घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥१६॥
एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्टः ।
हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥१७॥
नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ॥१९॥
न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥२०॥
मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः ।
वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तः सदमित्वा हवामहे ॥२२॥

।। अथ ५-अध्यायः।।

यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः ।
ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ।।२।।
गुणान्वितो यः फलकर्ता कृतस्य तस्यैव स चोपभोक्ता ।
स विश्वरूपस्त्रिवर्त्मा प्रणाधिपः सञ्चरति स्वकर्मभिः ।।७।।
अङ्गुष्ठमात्रो रवितुल्यः रूपः सङ्कल्पाहङ्कारसमन्वितो यः ।
बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोऽपिदृष्टः ।८।।
वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते ।।९।।
नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स रक्ष्यते ।।१०।।

।। इति ५-अध्यायः ।।

।। अथ ६-अध्यायः ।।

स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानः ।
देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ।।१।।
येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकारो(कारी) गुणी सर्वविद्यः ।
तेनेशितं कर्म विवर्तते ह पृथिव्यप्तेजोऽनिखिलानि चिन्त्यम् ।।२।।
तत्कर्म कृत्वा विनिवर्त्त्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् ।
एकेन द्वाभ्यां त्रिभिरष्टिभिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः ।।३।।
आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान्विनियोजयेद्यः ।
तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वोऽन्यः ४।।
स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयम् ।
धर्मावहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम ।।६।।
तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ।।७।।

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच ।८।।
न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।।९।।
यस्तन्तु नाभ इव तन्तुभिः प्रधानजैः स्वभावतो देव एकः स्वमावृणोत् ।
स नो दधाद्ब्रह्माप्ययम् ।।१०।।
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।।११।।
एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ।।१२।।
नित्यो नित्यानां चेतनश्चतनानामेको बहूनां यो विदधाति कामान् ।
तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ।।१३।।
न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्यतो भाति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।।१४।।
यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
त१ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।।१८।।
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परंसेतुं दग्धेन्धनमिवानलम् ।।१९।।
यस्य देवे पराभक्तिः यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।। प्रकाशन्ते महात्मनः ।।२३।।

।। इति श्वेताश्वतरश्रुतिः ।।

।। अथ आथर्वणोपनिषत् ।।

।।१-खण्डः ।।

तस्मै स होवाच । द्वेविद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति । पराचैवापराच ।।१-४।।

तत्रापरा ऋग्वेदो यजुर्वेदो सामवेदोऽथर्ववेदः शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ।।१- ५।।

यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः ।।१-६।।

यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ।।१-९।।

।।अथ द्वितीयखण्डः।।

अविद्यायामन्त्तरे वेष्ट्यमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढाः अन्धेनैव नीयमाना यथान्धाः ।।२-७।।

परीक्ष्य लोकान् चितान् कर्मचितान् ब्राह्मणोनिर्वेदमायात् नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।। २-११।।

।।अथ तृतीयखण्डः ।।

एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणिच ।
खं वायुर्ज्योतिरापः पृथिवीविश्वस्य धारिणी ।।३-३।।

।। इति तृतीयखण्डः ।।

।।अथ चतुर्थखण्डः।।

पुरुष एवेदं विश्वं कर्म तपो ब्रह्मपरामृतम् ।
एतद् यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरति ह सोम्य ।।४-१।।

यदर्चिमद् यदणुभ्योऽणु च यस्मिंल्लोका निहिता लोकिनश्च ।
तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः ।
तदेतत् सत्यं तदमृतं तद् वेद्धव्यं सोम्यविद्धि ।।४-२।।

यस्मिन् द्यौः पृथिवीचान्तरिक्षं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानं अन्यावाचो विमुञ्चथ अमृतस्यैष सेतुः ॥४-५॥
अरा इव रथनाभौ संहता यत्र नाड्यः ।
स एषोऽन्तश्चरते बहुधा जायमानः ॥४-६॥
मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।
तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति ॥४-९॥
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥४-१०॥
न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भाति कुतोऽयमग्निः ।
तमेव भान्तमनुभातिसर्वं तस्य भासा सर्वमिदं विभाति ॥४-१२॥
ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्मपश्चाद् ब्रह्मदक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं विरष्ठम् ॥४-१३॥

॥ अथ पञ्चमखण्डः ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥५-१॥
समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥५-२॥
यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।५-३॥
एषोऽणुरात्मा चेतसा वेदितव्या यस्मिन् प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥५-९॥
यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥५-१०॥

॥अथ षष्ठखण्डः ॥

नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥६-३॥

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ।।६-६।।
गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ।।६-७।।
यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय ।
तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम् ।। ६-८।।
स यो ह वेद तत् परमं ब्रह्मवेद ब्रह्मैव भवति । नास्याब्रह्मविद् कुले भवति ।
तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ।।६-९।।

इत्याथर्वणोपनिषत् ।।

## अथ माण्डूकोपनिषत् ।।

ओमित्येतदक्षरमिदं सर्वम् ।
तस्योपव्याख्यानं भूतं भवद् भविष्यदिति ।।१-१।।
सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव ।
सर्वं ह्येतद् ब्रह्म । अयमात्मा ब्रह्म ।।१-२।।
त्रिषुधामसु यद् भोज्यं भोक्ता यश्च प्रकीर्तितः ।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ।।१-११।।
विभूतिं प्रसवंत्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।
स्वप्नमाया सरूपेति सृष्टिरन्यैर्विकल्पिता ।।१-१३।।
इच्छामात्रं प्रभोस्सृष्टिरिति सृष्टौ विनिश्चिताः ।
कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ।।१-१४।।
भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा इति ।।१-१५।।
नान्तः प्रज्ञं नबहिप्रज्ञं न प्रज्ञानघनं नप्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्य-प्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः ।।२-१।।
कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ।। २-३।।

नाऽऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ।। २-४।।
द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।
बीज निद्रायुतः प्राज्ञः साच तुर्ये न विद्यते ।।२-५।।
स्वप्न निद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ।।२-६।।
अनादिमायया सुप्तो यदा जीवःप्रबुद्ध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ।।३-८।।
प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।।३-९।।
विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ।।३-१०।।
अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत ।
ओङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद ।।४-१।।
अमात्रोऽनन्तमात्रश्च द्वैतस्यपशमश्शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ।।४-६।।

इति माण्डूकोपनिषत् ।।

**अथ काठकोपनिषत् ।।**

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः ।
दन्द्रम्यमाणाः परियन्तिमूढा अन्धेनैव नीयमाना यथाऽन्धाः ।।१-२-५।।
नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।
यांत्वमापः सत्यधृतिर्बतासि त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ।।१-२-९।।
सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण ब्रवीमि । ओमित्येतत् । १-२-१५।।
एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छसि तस्य तत् । १-२-१६।।

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमानेऽपि देहे ॥ १८
अणोरणीयान् महतो महीयान् आत्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ २०
ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः ॥१-३-१॥
यः सेतुरीजानामक्षरं ब्रह्मतत् परम् ।
अभयं तितीर्षतां पारं नाचिकेतं शकेमसि ॥३
एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मयासूक्ष्मदर्शिभिः ॥१२
अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥१५
यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥१०
मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।
मृत्योस्समृत्युं गच्छति य इह नानेव पश्यति ॥११
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ॥१४
यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥ २-१-१५॥
य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन । एतद् वैतत् ॥ ८
नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वतीः नेतरेषाम् ॥१३

ऊर्ध्वमूलोऽवाक् शाख एषोऽश्वत्थ सनातनः।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥१-३-१३॥
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ॥२-३-१७॥

इति काठकोपनिषत्।

### अथ ईशावास्योपनिषत् ॥

ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद् धनम् ॥१॥
अग्नेनय सुपथा राये अस्मान् वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥१८॥

### अथ तैत्तिरीयोपनिषत् ॥

ओमिति ब्रह्म । ओमितीदं सर्वम् । ओमित्येतदनुकृति ह स्मा वा अप्यो श्रावयेत्या श्रावयन्ति ॥१-१

ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता । सत्यं ज्ञानमन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता ॥२-२॥

तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद् वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः ॥

अद्यते अत्तिच भूतानि । तस्मादन्नं तदुच्यत इति ॥२-५॥

तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥२-९॥

तदप्येष श्लोको भवति । असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥२-१२॥

सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्च भवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं च विज्ञानंच । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्याचक्षते ॥२-१४॥

तदप्येष श्लोको भवति । असद् वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानं स्वयमकृत । तस्मात् तत् सुकृतमुच्यत इति । यद्वै तत् सुकृतम् । रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति ॥२-१५॥

यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत् त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति । भीषाऽस्माद् वातः पवते । भूषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च ।मृत्युर्धावति पञ्चम इति ॥२-१६॥

सयश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवं वित् । अस्माल्लोकात् प्रेत्य । एतमन्नयमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानम्यमात्मानमुपसङ्क्रमाति । एतमानन्दमयमात्मानमुपसङ्क्रामति ॥२-२१॥

तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतं ह वाव न तपति । किमहं साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मनं स्पृणुते । उभे ह्येवैष एते आत्मानं स्पृणुते । य एवं वेद । इत्युपनिषत् ॥२२॥

इति द्वितीयावल्ली ॥

अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुश्श्रोत्रं मनो वाचमिति । तं होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयत्यन्त्यभिसंविशन्ति । तद् विजिज्ञासस्व । तद्ब्रह्मेति ॥३-१॥

स तपो तप्यत । स तपस्तप्त्वा । अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्मविजिज्ञासस्व ॥३-२॥

सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।३-४॥

एतत् सामगायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽहमन्नादो२ऽहमन्नादः । अहंश्लोककृदहंश्लोककृदहंश्लोककृत् ॥३-१०॥

अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भाइ । यो मा ददाति स इदमेव मा३वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवाम् । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ॥३-११॥

## अथ छान्दोग्योपनिषत् ।।

### १ अध्यायम् ।।

ओमित्येतदक्षरमुद्गीतमुपासीतेति ह्युद्गायति तस्योपव्याख्यानम् । १।।

एषां भूतानां पृथिवीरसः आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋचः साम रसः साम्न उद्गीथो रसः स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः ।।२।।

### ३ अध्यायः ।।

मनोमयः प्राणशरीर भारूपः सत्यकामः सत्यसङ्कल्पः आकाशआत्मा सर्वकर्मा सर्वकामः सर्वगन्धःसर्वसरः सर्वमिदमभ्यायत्तोऽवाक्यनादरः ।।३-१४-२।।

आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्तिवासरम् ।

परो यदिद्यते दिवा । उद्वयं तमसस्परि ज्योतिष्पश्यन्तः उत्तरम् ।।३-६-१६।।

स्वः पश्यन्तः उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तरम् । इत्यगन्म ज्योतिरुत्तममिति ।।३-१७-१७।।

मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्वं चाधिदैवतंच।।१८-१।।

जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुवाक्य आस । स ह सर्वत आवसथान् मापयाश्चक्रे सर्वत एव मेऽत्स्यन्तीति ।।४-१-१।।

अथ ह ह सा निशायामतिपेतुस्तद्धैव हं सो हंसमभ्युवाद होहोयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत् त्वा मा प्रधाक्षीरिति ।।४-१-२।।

प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च खं च तु न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ।।४-५-१०।।

इदमिति ह प्रतिजज्ञ लोकान् वावा किल सोम्यतेऽवोचन्नहं तु ते तद् वक्ष्यामि यथा पुष्करपलाशा आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्यमै होवाच ।४-३-१४।।

य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मैतस्मिन्नकिञ्चन श्लिष्यति तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ।४- १५-१।।

एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ।२।।

एष उ एव वामनिरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ।।३

एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ।।४।।

य एनान् ब्रह्मगमत्येष देवपथो ब्रह्मपथ एतेन खलु प्रतिपद्यमाना इमं मानवमावर्तं नाऽवर्तन्ते नाऽवर्तन्ते ॥६-१५॥

अथ ह प्राणा अहं श्रेयांसि व्यूदिरेहं श्रेयानस्म्यहं श्रेयामस्मीति ॥ ५-१-६॥

सर्वकर्मा सर्वकामः सर्वगन्धः सर्वमिदमभ्यायत्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदये एतद् ब्रह्मैतमितः प्रेत्याभिसम्भावितऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥४॥

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥६-१-१॥

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत इति ॥६-२-१।

तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृतज तत्तेज ऐक्षत बहुस्यां प्रजायेयेति तदपोऽसृतज तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥२-३॥

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥६-२-३॥

उद्दालको हाऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सतो सोम्य तदा सम्पन्नो भवति स्वयमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति ॥८-१॥

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ६-७-८॥

तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवाहाऽचार्यवान् पुरुषोवेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्यस्यत इति ॥६-१४-२॥

पुरषं सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥६-१५-१॥

एष तु वा अतिवदति यः सत्येनातिवदित सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमितिसत्यं भगवो विजिज्ञास इति ॥७-१६-१॥

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥७-१-२३॥

यत्र नान्यत् पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत् पश्यत्यन्यत् शृणोति

अन्यद् विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यं स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नि इति ।।७-२४-१।।

स एवाधतस्तात् स उपरिष्टात स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वमिति ।। ७-२५-१।।

अथातोऽङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वमिति । अथात आत्मादेश एवाऽत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषांसर्वेषु लोकेषुकामचारो भवति ।।७-२५-२।।

ॐअथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यमिति ।।८-१-१।।

स ब्रूयान्नास्य जरयैतज्जीर्यते न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामो भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ।।८-१-५।।

तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते तद्य इहाऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवत्यथ य इहाऽत्मानमनुविद्यव्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति ।।८-१-६।।

स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ।।१-२-१।।

यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठन्ते तेन सम्पन्नो महीयते ।।८-२-१०।।

त इमे सत्याः कामा अनृतापिधानास्तेषां सत्यानां सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ।।८-३-१।।

अथ ये चास्येह जीवा येच प्रेता यच्चान्यदिच्छन् न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरिसञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्यनृतेन हि प्रत्यूढाः ।।८-३-२।।

स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्यमिति तस्माद् हृदयम् अहरहर्वा एवंवित् स्वर्गं लोकमेति ।।३।।

अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ।४

तानि ह वा एताहि त्रीण्यक्षराणि सत् ति यमिति तद् यत् सत् तदमृतमथ यत् ति तन्मर्त्यमथ यद् यं तेनोभे यच्छति तदनेनोभे यच्छति तस्माद् यमहरहर्वा एवंवित्स्वर्गं लोकमेति ।८-३-४।।

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्नशोको न सुकृतं न दुष्कृतं सर्वे पाप्मनोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ।८-४-१

तस्माद्वा एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतं सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यतेऽसकृद्विभातो ह्येवैष ब्रह्मलोकः ।८-४-२

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति स सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ।८-७-१

तौ ह प्रजापतिरुवाच य एषोऽन्तरक्षिणिपुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैष सर्वेष्वन्तेषु परिख्यायत इति होवाच ।८-४-७।।

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति स ह शान्तहृदयःप्रवव्राज स हाप्राप्यैव देवानेतद् भयं ददर्श तद्यदपीदं शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ।।८-१०-१।।

मघवन् मर्त्यं वाव इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्याऽत्मनोऽधिष्ठानमात्तो वै स शरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्याशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ।।८-१२-१।।

एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेनाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वायानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा नोपजनं स्वरन्निदं शरीरं स यथा प्रायोग्य आचरणे युक्त एवमेवायमस्मिन् शरीरे प्राणोयुक्तः ।।८-१२-३।।

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति ।।८-१३-१ ।।

आकाशो वै नामरूपयोनिर्वहिता ते यदन्तरा तद् ब्रह्म तदमृतं स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवानि ब्राह्मणानां यशो राज्ञां विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दुमाऽभिगां लिन्दुमाऽभिगाम् ।।१-१४।।

तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्यहिं सन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्तते नच पुनरावर्तते ।।८-१५-१ ।।

इति छान्दोग्योपनिषत् ।।

## अथ ऐतरेयोपनिषत् ।।

एष उ एव बिभ्रद्वाजः प्रजावै वाजस्ता एष बिभर्ति .......एतमेवसन्तं ता वा एताः सर्वाः ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् ।।२-२।।

आत्मा वा इदमेक एवाग्र आसीन्नान्यकिञ्चन मिषत्स ईक्षत लोकान्नु सृजा ...२-४।।

अथातः संहिताया उपनिषत्पृथिवीपूर्वरूपं द्यौरुत्तररूपं ............मनसा गा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं ..........

योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषामन्तरपुरुषः स म आत्मेति विद्यात् ।।३-२-४ ।।

इत्यैतरेयोपनिषत् ।।

## अथ बृहदारण्यकोपनिषत् ।।

नैवेहकिञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया अशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति ।३-२-१

सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माध्यद्यभैष्यद् द्वितीयाद् वै भयं भवति ।।३-४-२

स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधाऽपादयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रियापूर्यत एव तां समभवत्ततो मनुष्या अजायन्त ।।३-४-३।।

तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूप इति तदिदमप्येत्तर्हि

नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायामिदं रूपं इति स एष इह प्रविष्ट आनखाग्रेभ्यो यथाक्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यन्कृत्स्नो हि स प्राणन्नेव प्राणनामा भवति वदन् वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्रह्येते सर्व एकं भवति तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिंश्लोकं विन्दते य एवं वेद ।।३-५-१

ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यते स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्माहमस्मि इति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां भवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमाने प्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ।।३-५-४।।

तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषुब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यश्शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्यां रूपाभ्यां ब्रह्माभावादथ यो ह वा अस्माल्लोकास्त्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथावेदो वाऽनूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवं विन्महत्पुण्यं कर्मकरोति तद्धास्यान्ततः क्षीयत एवमात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपासस्ते न हास्य कर्मक्षीयतेऽस्माध्द्येवात्मनो यद्यत्कामयते तत्तत्सृजते ।।३-५-९ ।।

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सैषा ह्यन्तमायत्तैषा हिनः प्राणोऽपानो व्यान उदान समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वाऽयमात्मा वाङ्मयो मनोमयः प्राणमयः ।३-६-९।।

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद् गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ।।४-१-१७।।

स यत्रैतत्स्वप्नया चरति ते ह्यस्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चवचं निगच्छति स यथा महाराजो जनपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ।।४-१-१८

सयथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्रा विस्फुलिङ्ग व्युच्चरन्त्येवमेवास्मादात्मनः सर्वेप्राणाः सर्वेलोकाः सर्वे

देवाः सर्वाणि भूतानि व्युच्चरन्ति । तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वैसत्यं तेषामेष सत्यम् ॥२०
द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं च मृतं स्थितं च यच्च सच्च त्यच्च ॥४-३-१॥
मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन् वा अरऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्त्तं करवाणीति ॥४-४-१॥

स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥४-४-४

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रियो भवत्यात्मनस्तु कामाय जाया प्रियो भवति । न वा अरे पुत्राणां कामाय पुत्राः भवन्ति । नवा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । नवा अरे ब्रह्मणः कामाय ब्रह्मप्रियं भवति आत्मनः कामाय ब्रह्मप्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यामनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । नवा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ॥४-४-५॥

ब्रह्मतं परादाद् योऽन्यत्रात्मनो ब्रह्मवेद क्षत्रं तं परादाद् योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा ॥४-४-६॥

य यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छन्दाच्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्यवा शब्दो गृहीतः ॥४-४-७

स यथा शङ्खस्य ध्मायमानस्य न बाह्यांच्छब्दाच्छक्नुयाद् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥४-४-८

स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानि व्याख्यानान्यस्यैवैतानि निःश्वसितानि ॥४-४-१०॥

स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहाणायैव स्याद्यतो यतस्त्वाददीत

लवणमेवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञाऽस्तीत्यपरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥४-४-१२

सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्यसंज्ञाऽस्तीति स होवाच न वा अरे अहं मोहं ब्रवीमीत्यलं वा अर इदं विज्ञानाय ॥४-४-१३

यत्र ह द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरं शृणोति तदितर इतरमभिवदति तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कं शृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयाद् विज्ञातारमरे केन विजानीयादिति ॥४-४-१४

इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधुयश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शरीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥४-५-१

इदं वैतन्मधु दध्यङ्ङाथर्वाणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् ।
रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूपईयते युक्ताह्यस्य हरयः शता दश ॥

इत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥४-४-१९॥

अथ हैनं कहोलः कौषीतकेयः पप्रच्छ । याज्ञवल्क्येति होवाच । यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तमेव मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति एतं वै तमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा या वित्तैषिणा सा लोकैषणोभे ह्येते एषणे एवभवतस्तस्माद् ब्रह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं निर्विद्याथ मुनिरमौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवाऽतोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ॥५-५-१

अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच । मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवान् वेदेति सोऽब्रवीत्यपतञ्चलं

काप्यं याज्ञिकांश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्सलोकवित् स देववित् स भूतवित् स आत्मवित् स सर्ववित् इति तेभ्योऽब्रवीत्तदहं वेदतच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चिद् ब्रूयाद्वेद वेदेति यथावेत्थ तथा ब्रूहीति ।।५-७-१

यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यमयति यं पृथिवी न वेद यस्य पृथिवीशरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ।।५-७-३

योऽप्सु तिष्ठन् ...५-७-४

योऽग्नौ तिष्ठन्...५-७-५

योऽन्तरिक्षेतिष्ठन् ...५-७-६

यो वायौ ...

य आदित्ये ...

योदिक्षु....

यश्चन्द्र....

य आकाशे

यस्तेजसि ... ५-७-१४

यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यः सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः इत्यधिभूतम् ।।५-७-१५।।

स होवाचैतद् वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वानकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽते जस्कमप्राणममुखममात्रमगोत्रमजरमभयममृतमरजोऽशब्दमविवृतमसंवृतमपूर्वमनपरमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ।। ५-८-८

तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्तिमन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ।।५-८-११।।

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठितः इत्यपान इति कस्मिन्न्वपान प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इति उदान इति कस्मिन्नु उदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि

सज्यतेऽसितोन व्यथते न रिष्यत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरूह्य प्रत्यूहात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे विवक्ष्यसि मूर्धा ते विपतिष्यति तं ह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजुह्रुरन्यन्मन्यमानाः ॥ ५-९-२६॥

जात एव न जायते कोऽन्वेनं जनयेत् पुनः ।
विज्ञामानन्दं ब्रह्मरातिर्दातुः परायणम् ॥
तिष्ठमानस्य तद्विद इति ॥५-९-३४

कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तज्योर्तिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव सहि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥६-३-७

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानम् तस्मिन् सन्ध्ये स्थाने यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दाश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहृत्य स्वयं निर्माय स्वेन भासा ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति ॥३-३-९

न तत्र रथा रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिण्यः सृजते सहि कर्ता ॥६-३-१०

स्वप्नेन शारीरमभिप्रहृत्यासुप्तः सुप्तानभिचाकशीति ।
शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एक हंसः ॥११॥

तद् वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तः न बाह्यं किञ्चन वेद नान्तरं तद् वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम् ॥६-३-२१

अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालो पौल्कलसःऽपौल्कलसः श्रमणोऽश्रमणस्तापसोऽस्तापसोऽनन्वागतं पुण्येनानन्वगतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति ॥६-३-२२

यद् वै तन्न यद् द्वैतं न पश्यन् वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत्पश्येत् ॥६-३-२३

सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राळिति हैनमनुशशास याज्ञवल्क्य एषाऽस्य परमा

गतिरेषाऽस्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥६-३-३२

तद् यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायं शरीरआत्मा प्राज्ञेनात्मनाऽन्वारूढं उत्सर्जद्याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥६-३-३६

एकीभवति नपश्यतीत्याहुरेकी भवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति स विज्ञानमेवान्वक्रामति तं विद्यात्कर्मणी समन्वारभेते पूर्वप्रज्ञाच ॥६-४-२

स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयस्सर्व-मयस्तद्यदेतदिदं मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेनाथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते ॥६-४-५

..........................ब्रह्मैव सन् ब्रह्माप्येति ॥६-४-६

सवा एष महानज स आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूपाल एष सेतुर्विधरण एषांलोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छतः प्रव्रजन्त्येतद्ध स्म वैतत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषाणायाश्च वित्तैषणायाश्च लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणासा वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे हैवैष एते तरति नैनं कृताकृते तपतः ॥२-४-२२॥

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥५-१-१॥

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमावृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥६-५-५॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दां च्छक्नुयाद् ग्रहणाय दुन्दुभेस्तुग्रहणे न दुन्दुभ्यायास्तस्य वा शब्दो गृहीतः ॥६-५-८॥

स यथाऽऽर्द्रेधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानि व्याख्यानानीष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥६-५-११॥

स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां गन्धानां नासिकैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वानां पादावेकायनमेवं सर्वेषां देवानां वागेकायनं स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यकृत्स्नः प्रज्ञानघनः एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविशन्ति न प्रेत्यसंज्ञाऽस्तीत्यपरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१२

सहोवाच मैत्रेय्यैव माभगवन् मोहान्तमापीपिपन्न वा अहमिमं विजानातीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वाऽरेयमात्मा अनुच्छित्तिधर्मा ॥१३॥

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं रसयते तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं स्पृशति तदतिर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कं रसयेत्तत्केनकमभिवदेत्तत्केन कं शृणुयात्तत्केन कं मन्वीत तत्केन कं स्पृशेत्तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सृज्यतेऽसितो न व्यथते न रिष्यति न विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥६-५-१४॥

खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदेनैन यद्वेदितव्यम् ॥७-१-१॥

वाचं धेनुमुपासीत । तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्ताकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥७-१०॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥७-२०-१॥
योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिलं अमृतमथेदं भस्मान्तं शरीरम् ॥७-३।
पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावविशिष्यते'(बृहदारण्यकशान्तिपाठमन्त्रः)

॥ इति बृहदारण्यकोपनिषत् ॥

॥ ब्रह्मबिन्दूपनिषत् ॥

नैव चिन्त्यं न वाचिन्त्यमचिन्त्यं चिन्त्यमेव च । पक्षपातविनिर्मुक्तं ब्रह्म सम्पद्यते तदा ॥ १-६
एक एव तु भूतात्मा भूते भूते व्यवस्थितः । एकधा वहुधा चैव दृश्यतेजलचन्द्रवत् ।१-१२॥

कैवल्योपनिषत् ॥

स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके ।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥१-१३॥
त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणःसाक्षी चिन्मात्रोऽहं सदाशिवः ॥१-१८॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥१-१९॥
अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम् ।१-२१॥
वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेद विदेव चाहम् ।
न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरस्ति ॥१-२२

महानारायणोपनिषत् ॥

अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् । ..
अथः परं नान्यदणीयसंहि परात्परं यन्महतो महान्तम् ।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥१-५
अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥९-२
'धर्मेणपापमपनुदति । धर्मे सर्वं प्रतिष्ठितं । तस्मात् धर्मं परमं वदन्ति'(म-ना-उ-७९-७)

## मैत्रायण्युपनिषत् ।।

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्मपरं च यत् ।।६-२२।।

## नृसिंहउत्तरतापनीयोपनिषत् ।।

ओङ्कारोऽद्वितीयत्वादेव चिन्मयो ह्ययमोङ्कारस्तस्मात्परमेश्वर एवैकमेव तद्भवत्यविकल्पो नाविकल्पोऽपि नात्र काचन भिदाऽस्ति नैवात्रकाचन भिदाऽस्ति अस्त्यत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योर्मृत्युमाप्नोति तदेतदद्वयं स्वप्रकाशं महानन्दमात्मैवैतदमृतमभयमेतद् ब्रह्मायं वै ब्रह्माभयं हि वै ब्रह्मभवति य एवं वेदेति रहस्यम् ।।८।।

तत्र तत्र पूर्णं सत्तिष्ठेत्येवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्याच स्वयमेव भवति ........९।।

## मान्त्रिकोपनिषत् ।।

गौरनाद्यन्तवती सा जनित्री भूतभाविनी । सितासिता च रक्ता च सर्वकामदुघाविभोः ।।१-५।।

## ।। त्रिपाद्विभूतिमहानारायणोपनिषत् ।।

कार्यकारणोपाधिभेदाजीवेश्वरभेदोऽपि दृश्यते ।

कार्योपाधिरयंजीवः कारणोपाधिरीश्वरः ।

ईश्वरस्य महामाया तदाज्ञावशवर्तिनी ।।४-८।।

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।

कार्यकारणतां हित्वा पूर्णबोधो विशिष्यते ।। ।।

## जावालदर्शनोपनिषत् ।।

विभेदजनके ज्ञाने नाशमात्यन्तिके गते ।

आत्मनो ब्रह्मणो भेदमस्सन्तं कः करिष्यति ।।४-६३।।

(विष्णुपुराणे च)।।

विभेदजनके ज्ञाने नाशमात्यन्तिके गते ।

आत्मनो ब्रह्मणो भेदमस्सन्तं कः करिष्यति ।। २अध्याय-१३अं-७९श्लो

## अथ कौशीतकिब्राह्मणोपनिषत् ।।

सत्यं हीन्द्रः स होवाच । मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये । ३-१ ।।

दृष्ट्वैव तं मुच्यते नापरेण (विद्याधिकरणे भाष्योदाहृतकौशिकश्रुतिः ।।)

